# प्रस्तावना।



अद्य सानन्दं निवेद्यते सर्वेषामपि सज्जनानां पुरतो नितान्तरम्यं पुरातनविषयमपि नूतनायितं पुराणपुरुषोत्तममाहात्म्यकथानकोपनिबद्धविचित्रचरित्रचातुरीधुरीणतया सार्वजनीनं वृत्तम् । विदितमेव खल्वस्ति समस्तवैदिकधर्मानुयायिनां सज्जनानाम्—यदिह भगवता शब्दब्रह्मस्वरूपिणाऽनिरुद्धांशस्वरूपेण सकलवाङ्मयमाविर्भावयांचक्रे वेदस्वरूपस्वरूपपरिणामेनेति । ततश्च सुस्पष्टमेव सिद्धं सर्वं वाङ्मयं भगवत्स्वरूपमेवेति । एतदेवाभिप्रेत्योक्तं श्रीमद्भागवत एकादशस्कन्धे—"स एष जीवः परमात्मसंज्ञकः प्राणेन घोषेण गुहां प्रविष्टः । मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥" इति । अत एव 'वेदो नारायणः' इत्यप्युच्यते । वेदस्वरूपत्वं सकलवाङ्मयस्य प्रथमः परिणामः प्रोक्तप्राक्तनभागवतवचनतः सिध्यति । ततश्च—"यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतिवचनतः परमेष्ठिनः प्रजापतेः प्राक्तनत्वं नत्वेतावदेव अपि तु सनातनत्वमेव वेदानाम् । अत एवेदं प्रकृत्य मनुस्मृतावप्युच्यते—"अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥" इति । नचात्र दोहनेन नव्यकल्पनाशङ्कायाः कथङ्कारमवसरः, धेनूधसि सिद्धस्थितेरेव पयसो दोहनौचित्यवत्सनातनस्यापि वेदस्य शतपथब्राह्मणप्रोक्तदिशाऽध्यात्मस्थिताग्निवायुरविभ्य औदरजातवेदऔरसप्रश्वासमास्तिष्कसूर्याभितपनतः प्रादुर्भावस्य समुचितं प्रादुर्भावनम् । सैषा सनातनी वेदरूपा वाङ्मयी भगवतोऽनादिरनन्ता मूर्तिरिति सुबहुप्रमाणतः सिद्धोऽयं विषयः श्रीमन्माधवाचार्यादिभिर्ऋग्वेदभाष्यादौ सम्यग्विवेचित एव । अथ चैवं स वेदपुरुषो भगवान्निखिलजीवजैवातृकतयैहिकामुष्मिकानर्थान्संप्रदर्श्य कृतार्थयन्भव्यभाविकजनान्यथोचितकर्मज्ञानोपासनात्मककाण्डत्रयप्रतिपादितभव्यभावुकसंप्रदर्शनेन विराजतेतराम् । अथ च तदर्थोपबृंहणाय पुराणेतिहासानां प्रथमतः प्रादुर्भावो बभूव । तान्येतानि पुराणानि—पुराणानि तु वैदिकान्येवासन्ब्राह्मणादिरूपाणि । अथ कालमहिम्ना मनुजबुद्धिमान्द्यमवलोकयता भगवता जगतीतले चातुर्वर्ण्यव्यवस्थायां च सप्रचारायां तत्र च केषांचिद्वेदानधिकारं च विमृश्य तदर्थस्योपलब्ध्यै प्राचीनतरवैदिकसंप्रदायतत्त्वस्य नवीनतया स्वोपज्ञत्वमुपनिर्वर्ण्योविश्चिकीर्षया श्रीव्यासावतारं धृत्वाऽष्टादशमहापुराणप्रबन्धरचनया स्वकीयवेदवागुपनिबद्धं रहस्यार्थकदम्बकं क्रमेणाविर्भावितम् । तदेतदुक्तं गारुडमहापुराणे २२७ तमेऽध्याये—"पुराणमेकमेवासीत्सर्वकल्पेषु मानद ॥ चतुर्वर्गस्य बीजं च शतकोटिप्रविस्तरम् ॥ प्रवृत्तिः सर्वशास्त्राणां पुराणादभवत्ततः ॥ कालेनाग्रहणं दृष्ट्वा पुराणस्य महामतिः ॥ हरिर्व्यासस्वरूपेण जायते च युगेयुगे ॥ चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ॥ तदष्टादशधा कृत्वा भूर्लोके निर्दिशत्यपि ॥ अद्यापि देवलोके तु शतकोटिप्रविस्तरम् । अस्त्यैत्र तस्य सारस्तु चतुर्लक्षेण वर्ण्यते ॥" इति । तानि चैतानि सुप्रसिद्धानि तावन्महापुराणानि—"ब्राह्मं पाद्मं वैष्णवं च वायवीयं तथैव च ॥ भागवतं नारदीयं मार्कण्डेयं च कीर्तितम् ॥ आग्नेयं च भविष्यं च ब्रह्मवैवर्तलैङ्गके ॥ वाराहं च तथा स्कान्दं वामनं कौर्मसंज्ञकम् ॥ मात्स्यं च गारुडं तद्वद्ब्रह्माण्डाख्यमिति त्रिषट् ॥" इति । एतेषु पुराणेषु सर्ववेदार्थोऽनुस्यूतः सूत्ररूपेण । तस्यैव चोपबृंहणार्थं पुराणोपयोग इति च—"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति वचनेनैव सिद्धमिति च सर्वविद्वज्जनविदितमेव । अथ च प्रकृते किञ्चित्प्रस्तूयते—

एतेषु महापुराणेषु च तावत्त्रयोदशं स्कान्दं महापुराणम् । तत्र चैकाशीतिसाहस्रसंहितात्मके स्कान्दमहापुराणे हि सप्त खण्डानि सन्ति । तानि चोक्तानि नारदमहापुराणोक्तानुसारेण—"माहेश्वरो वैष्णवब्राह्मयकाश्यास्त्ववंतिका नागरमत्र षष्ठम् ॥ प्राभासिको विप्रवरेण खण्डाः स्कान्दे पुराणे कथिताः सुपुण्याः॥" इति कैश्चिदभियुक्तैः। एवं चैकाशीतिसाहस्रसंहितात्मकं श्रीस्कान्दमहापुराणं विद्यते । यच्च पञ्चाशत्खण्डमण्डितं स्कान्द

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पुराणं विद्यते तच्चोपपुराणान्तर्गतमेव । नारदीयमहापुराणे तु सप्तखण्डात्मकमेवैतत्स्कान्दमहापुराणं समस्तखण्डानुक्रमणिकोपेतं महापुराणत्वेन परिगण्यते । अतः सप्तखण्डात्मकमेव स्कान्दं महापुराणम्—इति सर्वसंमतम् । एतद्विषये विशेषं तु समस्तस्कान्दमहापुराणप्रस्तावनायामस्माभिर्विविच्य निदर्शितं पश्यन्तु विद्वांस इत्यभ्यर्थ्य प्रकृतमनुसरामः । तच्च श्रीस्कान्दमहापुराणमस्माभिः स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशयितु मुपक्रान्तमस्ति । इदं च श्रीस्कान्दमहापुराणान्तर्गतं चतुर्थं श्रीकाशीखण्डं शताध्यायात्मकं पूर्वार्धोत्तरार्धविभेदभिन्नं सविस्तरश्रीकाशीक्षेत्रमाहात्म्यसंसूचकं वरीवर्ति । अत्र श्रीमदविमुक्तक्षेत्रस्थसकलदेवतीर्थक्षेत्रतपःस्थलमहिमा लोकोत्तरसच्चरित्रसंदर्भसमुपबृंहितः सकलसांसारिकजनोद्दिधीर्षया जागर्ति सद्वृन्दैः—"शिवः काशी शिवः काशी शिवः काशी शिवः शिवः ॥ शिवः काशी शिवः काशी काशीकाशी शिवः शिवः ॥" इत्यादितन्नाम निर्देशपुरःसरं जोघुष्यमाणः । अत एवेदं श्रीकाशीखण्डं श्रीकाशीक्षेत्रमाहात्म्यसूचकं सर्वजनसमादरणीयतामर्हति । एतस्य रचनाचातुर्यं श्रीव्यासमहर्षेः संस्कृतसरस्वतीसौन्दर्यं प्रकाशयति । एतस्य श्रीकाशीखंडस्य सुस्पष्टार्थबोधाय परममान्यविद्वद्वरिष्ठश्रीमत्परमहंसपरिव्राजकाचार्यभगवत्पूज्यपादशिष्यश्रीरामेन्द्रवनशिष्यश्रीरामानन्दमुनीन्द्रवर्यैः सरला सुबोधाऽनेकप्रमाणैरुपबृंहिता विद्वज्जनमनोरञ्जनी व्युत्पित्सुजनसाहाय्यकारिणी टीका निर्मितास्ति । अथ च पृथक्तया केवलसटीककाशीखण्डजिघृक्षूणां सज्जनानां केवलकाशीखण्डलब्धये पृथगपि मुद्रयित्वेदं प्रकाशमानीयत । अतश्च संप्रार्थयामः समस्तसज्जनान्—येषां श्रीस्कान्दमहापुराणं समग्रं संजिघृक्षितं ते समग्रस्कान्दमहापुराणसंग्रहाय स्वाभिप्रायं निवेदयेयुः । येषां केवलं श्रीकाशीखण्डमेव संग्रहणीयं स्यात्त एतत्सटीकमतिशुद्धमास्माकीन "श्रीवेङ्कटेश्वर" मुद्रणालये पुष्टचिक्कणपत्रेषु मुद्रयित्वा प्रकाशितं संगृह्य सफलयन्तु मे मुद्रणपरिश्रममिति सविनयमभ्यर्थयते—

**श्रीमतां कृपाकांक्षी—क्षेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम्—मुद्रणालयाध्यक्षः—मुंबई.**



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

# अथ श्रीस्कान्दमहापुराणान्तर्गतकाशीखण्डपूर्वार्द्धोत्तरार्द्धाध्यायस्थितविषयानुक्रमणिका ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥काशीखंडस्थविषयानुक्रमोऽयं यथामति ॥ विरच्य श्रीविश्वनाथपदयोरर्पितो मया ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्रीगणेशायनमः ॥ श्रीपरमात्मनेनमः ॥ ॥ सच्चिदानंदसंदोहंभक्तैकामोदमंदिरम् ॥ सादरंप्रणुवेभक्त्याश्रीगोपीजनवल्लभम् ॥ १ ॥ संहारस्वेदादिवयःस्वयंप्रभुःश्रितोऽविमुक्तंभगवान्स होमया ॥ दिशत्यभीक्ष्णंपरमात्मतारकंभजेतमानंदवनेतनुत्यजाम् ॥ २ ॥ माधवंगिरिजांढुंढिंभैरवंदंडनायकम् ॥ मणिकर्णींगुहांकाशीमुदक्स्रोतोवहांनुमः ॥ ३ ॥ अद्वैताब्जविकास कैकतरणिहार्दांधकारच्छिदंशांत्यादेर्निलयंदयैकशरणंवैराग्यवन्मूर्तिकम् ॥ हृत्कांतारमहाटवीसुविलसत्कामेभपंचाननंश्रीरामेंद्रवनाभिधंगुरुमहोभक्त्यानमामस्तराम् ॥ ४ ॥ यत्पादांबुरुहध्या नाद्धार्दमेगलितंतमः ॥ परमंतंगुरुंभक्त्याश्रीदेवेंद्रवनंनुमः ॥ ५ ॥ व्यासोक्तेस्कांदसंज्ञेऽयंपुराणेकाशिकाह्वयः ॥ खंडोयस्तस्यटीकेयंरामानंदेनरच्यते ॥ ६ ॥ श्रीवासुदेवाभिधभूसुरेंद्रगुणैकरत्ना मलसत्त्ववार्द्धेः ॥ वाक्याग्रहेणाहमिहप्रवृत्तःक्षंतव्यमस्मच्चपलंकृतींद्रैः ॥ ७ ॥ अध्यायानांशतंप्रोक्तंव्यासेनात्रतदादितः ॥ विंध्यनारदसंवादोवर्ण्यतेतिमनोहरः ॥ ८ ॥ तत्रादौतावच्चिकीर्षितस्य पुराणस्यनिष्प्रत्यूहपरिसमाप्तिप्रचयाभ्यांनानेतिहासपुराणशास्त्रप्रबंधसंबंधाविष्कृतलीलावतारोभगवान्द्वैपायनोविघ्नाधिराजंपूजयति ॥ तंमन्महइति ॥ तत्रसर्वनाम्नस्तावदौत्सर्गिकंप्रसिद्धार्थत्वम् ॥ यथाहुः ॥ सर्वनामप्रसिद्धार्थंप्रसाध्यार्थविधानकृदिति ॥ नचयदाग्नेयोऽष्टाकपालोभवतीत्यत्रव्यभिचारः ॥ वचनानित्वपूर्वत्वादितिन्यायेनतदर्थस्यतत्रान्यतोऽलब्धत्वात्प्रसिद्धार्थत्वंसर्वनाम्नोबला दुपलभ्यते ॥ अत्रतुतदपवादाभावेपुनरुत्सर्गस्यस्थितिरेवेत्यभिप्रेत्यप्रसिद्धार्थमाह ॥ तमिति ॥ तंप्रसिद्धंपारमेश्वरंरूपंमन्महेध्यायामःचिंतयामेत्यर्थः ॥ मन्महइतिमनुअवबोधनइत्यस्मात्तना देर्धातोर्लडुत्तमपुरुषबहुवचनं लोपश्चास्यान्यतरस्यांम्वोरित्युकारलोपः ॥ सर्वनाम्नापरामृष्टंविशेष्यंदर्शयति ॥ करिगणेशाननमिति ॥ करःशुंडादंडोविद्यतेयेषांतेकरिणोहस्तिनइतियावत्

## श्रीगणेशायनमः ॥ ॥ तंमन्महेमहेशानंमहेशानप्रियार्भकम् ॥ गणेशानंकरिगणेशाननमनामयम् ॥ १ ॥

गणाःसमूहाः करिणांगणाःकरिगणास्तेषामीशानईश्वरःश्रेष्ठइत्यर्थः ॥ तस्येवाननंतस्याननमिवाननंयस्यसतथातम् ॥ एवंहिपाद्मेश्रूयतेचक्रेश्वरमाहात्म्यप्रसंगे ॥ विघ्नाधिराजेजातेतदवलोक नायब्रह्मादयोमिलिताअभूवन्शनैश्चरस्तुनागतोभूत् ॥ ततोऽबिकायांरुष्टायामागतेचतस्मिन्गणेशस्यमौलिरपतत् ॥ ततोमहादेवेनहस्तिवृंदेंद्रशिरइछित्त्वायोजितमिति ॥ कदाचिद्गात्रोद्वर्त्तनंकृत्वा तज्जनितमलेनगणेशप्रतिकृतिंविधायजीवंचतस्यांसंचार्ययावन्मयास्नायतेतावदत्रकोप्यागंतुंनदेयइतिगौरीतंव्याजहार ततश्चतस्मिन्द्वारिस्थितेकुतश्चिदागतोमहेशस्तेनप्रतिरुद्धोंऽतःपुरंप्रवेष्टमलभमानः क्रुद्धःसन्बहुयुद्धंकृत्वापश्चात्तस्यमौलिमुज्जहार पश्चाच्छोकरोषाभ्यामाविष्टायांपार्वत्यांकरिगणेंद्रशिरइछित्त्वायोजितमितिचभविष्ये ॥ गजीभूयक्रीडतोर्भगवतोर्जातत्वाद्वागजाननइतिपुराणांतरम् ॥ तथाहि॥गजासुरः किललीलयास्वर्गमाक्रम्यदेवान्व्याजहार हेदेवामयासार्द्धंयुद्धंचध्वंयद्वात्रिदिवंविहायपलायध्वं अथवाकरंप्रयच्छतेति ॥ ततोदेवैःकःकरोदेयइत्युक्ते तेनोक्तं स्वकर्णौधृत्वास्वशिरोधून नंस्वशिरःकुट्टनंचमदग्रेकर्त्तव्यमिति ततोदेवाब्रह्माणंप्रतितदुक्तंन्यवेदयन् कथंतस्यासुराधमस्याग्रेऽस्माभिरेवंकर्तव्यमिति ततोब्रह्माविष्णुश्चविश्वनाथंगत्वातदेतत्सर्वंविज्ञापितवंतौ ततईश्वरेणगजीभूय क्रीडतोरावयोर्गजाननःपुत्रोजातोस्तितेनसमारणीयइत्युक्त्वागणेशमाहूयतत्सर्वंनिवेद्यत्वमपिगजाननःसोपिताद्दशइतित्वमेवतस्यप्रतियोद्धेत्यादिप्रोत्साह्यत्वयैवहंतव्यइत्युक्तेनगणेशेनोक्तं तदामयासमा रणीयोयदितेनप्रार्थितोदंडोमह्यंदीयतइति तदादेवैरुक्तं भवानस्माकंस्वामीत्वय्यग्रेक्रियमाणेऽस्माकंखेदोनास्ति यदुच्यतेतत्कर्तव्यमिति ततोगजाननोगजासुरंहतवानित्यतएवेदानीमपिगणेशस्याग्रे

१ भावप्रधाननिर्देशाच्चापलमित्यर्थः । २ विघातकृदित्यपिक्वचित्पाठः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्रीसार्वभौमभट्टाचार्य्यदाक्षिणात्याश्चस्वकर्णौधृत्वाशिरोधूननंशिरःकुट्टनंचकुर्वंतीति ॥ उक्तंच ॥ विनायकंवंदकमस्तकाहतिसन्नादसंघुष्टसमस्तविष्टपम् ॥ नमामिनित्यंप्रणतार्त्तिनाशनंकविंकवी
नामुपमश्रवस्तममिति ॥ कदाचिदीश्वरंद्रष्टुंकैलासंगतेनभार्गवेणरामेणगणेशप्रतिरुद्धेनाभ्यंतरंगंतुमलभमानेनतज्जनितप्रचंडकोपानलेनगणेशस्यहस्तात्परशुंबलात्कारेणगृहीत्वागणेशस्याशिरोऽ
च्छेदि ततोज्ञाताशेषवृत्तांतेनेश्वरेणरामायाभ्यधायित्वमद्यारभ्यानेनपरशुनापरशुरामोभविष्यसीतिगजेंद्रस्यशिरश्छित्त्वागणेशस्यमौलौयोजितमितिचपौराणिकाः ॥ क्रियाशक्तिमत्सूत्रात्मत्वाद्धला
धिक्यमाह ॥ गणेशानमिति ॥ नन्दिभृंगिप्रमुखागणास्तेषांतेषुवाईशानमीश्वरंनियंतारमितियावत् ॥ गणश्चासावीशानश्चतंवेत्यर्थः ॥ योनितोपिश्रैष्ठ्यमाह ॥ महेशानप्रियार्भकमिति ॥
महांश्चासावीशानश्चेतिमहेशानोमहेश्वरइत्यर्थस्तस्यप्रियावल्लभाउमाचिद्रूपाशक्तिस्तस्याअर्भकस्तयोर्वाऽर्भकोमहेशानप्रियार्भकइतिवा ॥ प्रियश्चासावर्भकश्चेतिप्रियार्भकः ॥ यद्वाप्रसिद्धत्वेहेतु
माह ॥ महेशानप्रियार्भकमिति ॥ ननुपरमात्मनःसर्वात्मत्वादन्येषामपितदीयानांरूपाणांभूयसांभावादिदमेवपारमेश्वरंरूपंकस्मादादावनुस्मर्यतेतत्राह ॥ महेशानमिति ॥ विरोधिलक्षणया
पुण्यजनोराक्षसइतिवन्महांतोत्राकारप्रश्लेषाद्वाऽमहांतोहिंस्रस्वभावाविघ्नाःश्रेयोविघातकत्वात्तेचतेस्वकार्येप्रभुत्वादीशाश्चतानानयतिचेष्टयतिप्रवर्त्तयतीतितथातम् ॥ अथवानविद्यतेमहउत्सवोयेभ्यस्तेऽमहा
विघ्नास्तेषामीशानं विघ्नप्रोत्सारणायैवविघ्नानामधिष्ठातारमितियावत् ॥ तत्प्राप्तिस्तुप्राणिनांस्वदोषवशादितिभावः॥महांश्चासावीशानश्चेतिवा महत्त्वंचात्रविघ्नाधिष्ठातृत्वेनैव॥एतदिहाकूतम् ॥सर्वात्मकोपि
परमात्माविघ्नाधिराजोपाधिरेवविघ्नान्जरीहर्ति॥तदुक्तं सजयतिसिंधुरवदनोदेवोयत्पादपंकजस्मरणं।वासरमणिरिवतमसांराशिंनाशयतिविघ्नानामिति॥ महोदयेचपुराणारंभेविघ्नानांसंभवात्तन्निरासाययुक्तं
परस्य प्रकृतदेवतात्मकस्यैवानुसंधानमितिभावः ॥ यद्वा ननुकृष्णद्वैपायनंविद्धिसाक्षान्नारायणंप्रभुम् । कोह्यन्यः पुंडरीकाक्षान्महाभारतकृद्भवेदितिवैष्णवाद्युक्तेर्व्यासस्येश्वरत्वावगमाद्विघ्नाएवनसं
भाव्यंतेऽतःकथंतन्निवृत्त्यर्थंगणेशानुस्मरणमित्याशंकायामाह॥ महेशानमिति ॥ महांश्चासावीशानश्चेतिमहेशानस्तम् ॥ अत्रापिमहत्त्वंब्रह्मादिनियंतृत्वेनैवबोद्धव्यम् ॥ तथाचायमर्थःसम्पद्यते॥ महतां
ब्रह्मादीनामीशानंनियंतारम् अपूजितंसंतंतत्कार्याणांप्रतिबद्धारमसिद्धिप्रदमित्यर्थः ॥ तदुक्तंसंक्षेपशारीरके ॥ आरंभाःफलिनःप्रसन्नहृदयोयश्चेत्तिरश्चामपिनोचेद्विश्वसृजोप्यलंविफलतामायांत्युपायो
द्यमाः । विश्वैश्वर्यमतोनिरंकुशमभूद्यस्यैवविश्वप्रभोःसोऽयंविश्वहितेरतोविजयतेविघ्नेश्वरोविश्वकृत् ॥ अत्रापिचवक्ष्याति ॥ जयसृष्टिकृतांवन्द्य त्वद्दुष्टदृष्टिविशिखैर्निहतान्निहन्मिदैत्यान्पुरांधकजलं
धरमुख्यकांश्च । कस्यास्तिशक्तिरिहयस्त्वदृतेपितुच्छंवांछेद्विधातुमिहासिद्धिदकार्य्यजातामित्यादि ॥ इदमत्रतत्त्वम् ॥ गणेशव्यासादीनामीश्वरत्वाविशेषेपिसेव्यसेवकत्वंबाध्यबाधकत्वं च । यथोभेशरमे
शयोर्यथावारामपरशुरामयोरिति ॥ तदुक्तंवैष्णवे सर्वंविष्णुमयंजगदित्युपक्रम्य ॥ तथाप्यनेकरूपस्यतस्यरूपाण्यहर्निशं। बाध्यबाधकतांयांतिकल्लोलाइवसागरइति ॥ नन्वसिद्धंमहेशानत्वंगणेशस्य
शनैश्चरावलोकमात्रेणशिरःपाताद्यवगमादित्याशंक्याहानामयमिति ॥ आमयोरोगस्तेनतापत्रयंलक्ष्यते ॥ ततश्चायमर्थः ॥ नविद्यतेआमयस्तापत्रयंयस्ययस्मादितिवासतथातम् ॥ अयंभावः ॥
नशिरःपातादिकमनीश्वरत्वेकारणमवश्यंभाविनोऽर्थस्येश्वरस्यापिदुष्परिहरत्वात् ॥ तदुक्तम् ॥ अवश्यंभाविनोभावाभवंतिमहतामपि । नग्नत्वंनीलकण्ठस्यमहाहिशयनंहरेरिति ॥ यद्वा शिरः
पातादिकंतुलीलामात्रंयथा।निकुंभपरिघप्रहारेणमोहःश्रीकृष्णस्य यथाचेंद्रजित्प्रयुक्तनागपाशबंधनंश्रीदाशरथेर्यथावाबलेरध्वरेयाच्ञाश्रीविष्णोरिति ॥ तदुक्तंहरिवंशे ॥ नूनमारंभेच्छयाकृष्णस्त
थाचक्रेसुरोत्तमः कोहिशक्तोमहात्मानंयुद्धेमोहयितुंहरिम् ॥ भागवतेच ॥ कोवेत्तिभूमन्भगवन्परात्मन्योगेश्वरोतीर्भवतस्त्रिलोक्याम् ॥ क्वाहोकथंवाकतिवाकदेतिविस्तारयन्क्रीडसियोगमायामिति ॥
श्रुतौचाविष्णोः शिरःप्रचिच्छिदतुरिति ॥ यद्वा ग्रंथारंभेमंगलायपञ्चायतनदेवतानुसंधानमनुविधत्ते ॥ तमिति ॥ तंप्रसिद्धम् ॥ अत्राऽकारप्रश्लेषात् अःवासुदेवश्चासौमहेशानश्चतंमन्महे
ध्यायामइतिसर्वत्र ॥ तत्रअमित्युक्तेअक्षराणामकारोस्मिइतिभगवद्वचनादकाराक्षरेगच्छतितद्वारणायमहेशानमित्युक्तम् ॥ तावत्युक्तेविश्वनाथेगच्छतितद्वारणायअकारोवासुदेवःस्यादितिवचनाद
मित्युक्तम् ॥ महेशानप्रियार्भकं ॥ विश्वनाथभवानीगणेशेतिद्वंद्वैकवद्भावेनत्रयंनिर्दिष्टम् ॥ तत्रार्भकमित्युक्तेशाखविशाखादावतिव्याप्तिःस्यात्तद्वारणायगणेशानमित्युक्तम् ॥ तथापिस्वा



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मिकार्तिकेयेगच्छतितद्वारणायकरिगणेशाननामिति ॥ अत्रसमासनिष्ठस्यार्भकपदस्यविशेष्यत्वंछांदसम् ॥ तत्कथ्यतांमहाभागयादिविष्णुकथाश्रयम् अथवास्यपदांभोजमकरन्दलिहांसता
मिति तथाप्राचीनबर्हिर्भगवान्पातालतलचारिणः समुद्रतनयायातुकृतदारोऽभवत्प्रभुरितीत्यादिवद्बोद्धव्यम् ॥ अनामयंनविद्यतेआमयोरोगमात्रंयस्मात्तंसर्वरोगनाशकंसूर्यविरंचिनारायणशंकरा
त्मकम् ॥ आरोग्यंभास्करादिच्छेदितिवचनादित्यर्थः ॥ १ ॥ एवंविघ्नाधिराजंप्रपूज्यजगन्निःश्रेयसमाशासानःपुराणार्थाश्रयभूतमविमुक्तंप्रस्तौति ॥ भूमिष्ठेति ॥ साकाशीअपायाज्जगत्पायादि
त्यन्वयः ॥ सेतिप्रसिद्धेत्यर्थः ॥ प्रसिद्धत्वंचास्याःसोऽविमुक्तेउपास्योयएषोऽनंतोऽव्यक्तआत्मासोऽविमुक्तेप्रतिष्ठितइत्याद्ययाश्रुत्याबोद्धव्यम् ॥ अविमुक्तंकाशीत्यनर्थांतरम् ॥ तत्त्वग्रेवक्ष्यति ॥
काशीति ॥ अनाख्येयंस्वप्रकाशंचैतन्यंप्रकाशतेस्यामितिकाशी ॥ तथाचवक्ष्यति ॥ काशतेऽत्रयतोज्योतिस्तदनाख्येयमीश्वरः ॥ अतोनामापरं चास्तु काशीति प्रथितं प्रभो ॥ यद्वा काशंतेराजंते
स्वप्रकाशतयाऽस्यांतनुत्यागमात्रेणप्राणिनइतिकाशी ॥ एतदप्युक्तमत्रैव ॥ कीटाःपतंगामशकाश्चवृक्षाजलेस्थलेयेविचरंतिजीवाः ॥ मंडूकमस्त्याःकृमयोपिकाश्यांत्यक्त्वाशरीरंशिवमाप्नुवंतीत्यादि ॥
अत एवोक्तंअपायाज्जगत्पायादिति ॥ अपगतोऽयनमयोज्ञानम् ॥ सर्वेगत्यर्थाज्ञानार्थाइतिन्यायाद्यस्मिन्नित्यपायमज्ञानंतत्कार्यंतस्मात् ॥ गच्छतिजन्मादिषड्भावविकारान्प्राप्नोति ॥ सर्वेगत्यर्थाः
प्राप्त्यर्थाइतिन्यायाज्जगत्समष्टिव्यष्टिजीवजातमित्यर्थः ॥ पायान्मोचयत्वित्यर्थः ॥ यद्वासर्वाभ्योऽयोध्यादिपुरीभ्योऽधिकतयाकाशतेराजतइतिकाशी ॥ वक्ष्यतिहि । अन्यानिपुण्यक्षेत्राणि
काशीप्राप्तिकराणिवै । काशींप्राप्यविमुच्येतनान्यथाकल्पकोटिभिरिति ॥ अधिकत्वेजगन्मोचकत्वेचहेतुंवदन्विरोधाभासालंकारलक्षणैश्चतुर्भिर्विशेषणैर्विशिनष्टि ॥ भूमिष्ठेत्यादियस्यांमृताजंतवइत्यं

भूमिष्ठापिनयात्रभूस्त्रिदिवतोप्युच्चैरधःस्थापियायाबद्धाभुविमुक्तिदास्युरमृतंयस्यांमृताजंतवः ॥
यानित्यंत्रिजगत्पवित्रतटिनीतीरेसुरैःसेव्यतेसाकाशीत्रिपुरारिराजनगरीपायादपायाज्जगत् ॥ २ ॥

तेन ॥ भूमिष्ठापिनयात्रभूरितिविरोधाभासःसर्वत्रस्पष्टएव ॥ भूमौतिष्ठतीतिभूमिष्ठा ॥ अंबांबगोभूमिसव्येत्यादिनाषत्वम् ॥ भूमिष्ठत्वेनभूम्यवयवत्त्वेनायोध्यादिक्षेत्रवत्प्रतीयमानापियाकाशीअत्रभूमौ
भूर्नभवति भूम्यधिकरणिकाभूर्नभवति भूमौनतिष्ठतीतियावत्॥अन्यैवेयंकाचिद्भूरित्यर्थः॥ईश्वरस्यत्रिशूलाग्रेस्थितत्वात् ॥ वक्ष्यतिच ॥ क्षेत्रमेतत्त्रिशूलाग्रेशूलिनास्तिष्ठतिद्विज अन्तारिक्षेनभूमिष्ठंनेक्षंते
मूढबुद्धयःभूर्लोकेनचसंलग्नमंतारिक्षेममालयम् विमूढास्तंनपश्यंतिमुक्ताःपश्यंतिचेतसेत्यादि ॥ त्रिदिवतोप्युच्चैरधःस्थापियेति॥अधस्तिष्ठतीत्यधःस्थाभुवर्लोकादीनांषण्णांमध्यस्थापियाकाशीत्रिदिवतोप्यु
च्चैस्त्रिदिवतोप्युपरितिष्ठतीत्यर्थः ॥ प्रलयसमयएवत्रिशूलाग्रेणोर्ध्वीकृत्यविश्वनाथेनधृतत्वात् ॥ तत्रदैनंदिनप्रलयेत्रिदिवतःस्वर्लोकादित्येव ॥ प्राकृतप्रलयेतुत्रयोब्रह्मविष्णुमहेश्वरादीव्यंतिक्रीडं
त्यस्मिन्निति त्रिदिवंब्रह्मांडंतस्मादितिव्याख्येयम्॥तथाचवक्ष्यति॥अहोजनानांजडताविहायकाशींयदन्यत्रनयंतिचेतः ॥ परिस्फुरद्गांगजलाभिरामांकामारिशूलाग्रधृतांलयेपि॥महासंवर्तसंवृत्ततापाद्विश्वे
शपालिताम् स्वर्धुन्याहारयष्टेचवराजितांकण्ठभूमिषु ॥ सनत्कुमारसंहितायांच ॥ गतेपरार्द्धद्वितयेविलीनेजगत्यशेषेमयिदेविसर्वे रक्षंतिसर्वैर्विविधायुधौघैर्वाराणसींकाशितसूक्ष्मसिद्धिमिति ॥ ननुदैनंदिन
प्रलयेत्रिशूलाग्रेणमहेशेनोर्ध्वीकृत्यधृतत्वात्कथंचित्काशीतिष्ठतुनाम प्राकृतेतुप्रलयेप्रकृतिकार्यमात्रस्यसर्वस्यविलयात्कथंकाशीतिष्ठेत्कुतस्तरांगणाःकुतस्तमांत्रिशूलमिति ॥ किंचधर्तुर्विश्वनाथस्या
प्यभावःश्रूयते ॥ तथाचोक्तवान्वासिष्ठेभगवान्रामः ॥ परमेष्ठ्यपिनिष्ठावान्हियतेहरिरप्यजः भवोप्यभावमायातिकैवास्थामादृशेजनेइति ॥ तस्मात्तदेतत्सर्वमर्थवादमात्रमिति न भूर्लोकेनचसंलग्नंतत्क्षे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्रेत्वंतरिक्षगं अयोगिनोनवीक्षंतेपश्यंत्येवचयोगिनः अविमुक्तमिदंक्षेत्रमपिब्रह्मांडमध्यगम् ब्रह्मांडमध्येनभवेत्पंचक्रोशप्रमाणतः यथायथाहिवर्द्धेतजलमेकार्णवस्यच तथातथोन्नयेदीशस्तत्क्षेत्रंप्रलया
दपि क्षेत्रमेतत्त्रिशूलाग्रेशूलिनस्तिष्ठतिद्विजाः अंतरिक्षेनभूमिष्ठंनेक्षंतेमूढबुद्धयः यावंतोभास्वतःस्पर्शाद्भासंतेसैकताःकणाः तावंतोद्रुहिणाजग्मुर्नैत्येषामणिकर्णिका तामसींप्रकृतिंप्राप्यकालोभूत्वाचराचरम
ग्रसामिलीलयादेविकाशींरक्षामियत्नतः सामाणिकर्णिकेतीयंनाभिर्गांभीर्यभूमिका ब्रह्मांडगोलकंसर्वयस्यामेतिलयोदयम् नयदाभूमिवलयंनयदापांसमुद्भवः तदाविहर्तुमीशेनक्षेत्रमेतद्विनिर्मितम् अभावः
कल्प्यतेमूढैर्यदाचशिवयोस्तयोः क्षेत्रस्यास्यतदाभावः कल्प्योनिर्वाणकारिणेत्याद्यभ्यासदर्शनात्॥अभ्यासेहिअर्थस्यभूयस्त्वंदूरतस्तूपचरितार्थत्वम्॥यथाअहोरमणीयारमणीयालक्ष्मीरिति ॥ पुराणेष्व
र्थवादत्वंयेवदंतिनराधमाः तैरर्जितानिपुण्यानितद्वदेवभवंतिहि समस्तकर्मनिर्मूलसाधनानिनराधमः पुराणान्यर्थवादेनमृतोनरकमश्नुते यावद्ब्रह्मासृजत्येतज्जगत्स्थावरजंगमम् तावत्सपच्यतेपापीनरकां
तेषुसंततम् अहोहिवाक्येचतुरक्षरेद्वेपुण्यस्यपापस्यनिदानभूते उच्चारणादेवनृणांमुनीन्द्रानारायणश्चेतितथार्थवादः॥ पुराणेषुद्विजश्रेष्ठाःसर्वधर्मप्रवक्तृषु प्रवदन्त्यर्थवादत्वंयेतेनरकभाजनाइत्यादीनांचभूय
सामर्थवादवक्तृनिंदापराणांबृहन्नारदीयेदर्शनात् ॥ शैवेच वेदाःप्रतिष्ठितादेविपुराणेनात्रसंशयः पुराणमन्यथाकृत्वातिर्यग्योनिमवाप्नुयात् सुशांतोपिसुदांतोपिनगतिंप्राप्नुयात्क्वचिदित्यादे ॥ अत्रापि
चवक्ष्यति॥उदाहरंतियेमूढाःकुतर्कबलदर्पिताः काश्यांसर्वार्थवादोयंतेविट्कीटायुगेयुगइत्यादि ॥ तर्हियुक्तिविरोधस्यकागतिरितिचेद्यैवगतिस्सैवगतिरितिब्रूमः ॥ नहिश्रुतिस्मृतीहासपुराणात्माभगवान्
वराकेणयुक्तिविरोधेनास्माभिरनुयोक्तव्यः ॥ तथाचश्रुतिः॥नैषामतिस्तर्केणापनेयेति॥ननुग्रावाणःप्लवंते यजमानःप्रस्तरइत्यादीनां वेदवाक्यानामप्यर्थवादोदृश्यतेतद्वदत्रापिभविष्यतीतिचेद्दृश्यतांनाम
पुराणानांतुतदपवादस्योक्तत्वादिति ॥ किंचप्राकृतप्रलयेब्रह्मांडतदन्तर्वर्तिनांलयेनभवितव्यं नचकाशीब्रह्मांडगा ॥ तथाचात्रैववक्ष्यति दर्शितमेवतत्पूर्वम् ॥ अविमुक्तमिदंक्षेत्रमपिब्रह्मांडमध्यगं ब्रह्मां
डमध्येनभवेत्पञ्चक्रोशप्रमाणतः यथायथाहिवर्द्धेतजलमेकार्णवस्यच तथातथोन्नयेदीशस्तत्क्षेत्रंप्रलयादपीत्यादि ॥ अतोब्रह्मांडाद्बहिःस्थितायाःकाश्याःकुतोनाशावकाशोभुशुंडवत् ॥ तथाच
वासिष्ठेनिर्वाणप्रकरणेभुशुंडाख्यानेभुशुण्डवाक्यम् ॥ ब्रह्मांडपारमासाद्यतत्वांतेविमलेपदे सुषुप्तावस्थयातावत्तिष्ठामिप्रलयेसति यावत्पुनःकमलजःसृष्टिकर्मणितिष्ठति तत्रप्रविश्यब्रह्मांडंतिष्ठामि
विहगालयइति ॥ श्लोकद्वयस्यायमर्थः ॥ प्रलयेप्राकृतप्रलयेसतिब्रह्मांडस्यपारंबहिर्मार्गमासाद्यतत्वांतेब्रह्मांडावरणभूतानामप्तेजोवाय्वाकाशाहंकारमहत्प्रकृतिरूपाणांसप्तानामंतेविमलेपदेसुषुप्तावस्थ
यासमाध्यवस्थयातावत्तिष्ठामियावत्कमलजःपुनःसृष्टिकर्मणितिष्ठति ॥ तदापुनःसृष्टौब्रह्मांडंप्रविश्यविहगालयेतिष्ठामीति ॥ अन्यथाब्रह्मांडमावरणानिचभित्वालिंगशरीरेणवैकुंठंगतानामपिवि
देहकैवल्यप्रसंगात् ॥ यत्त्वत्रब्रह्मांडपारमासाद्येत्यत्रमहाप्रलयसंपत्ताविति पाठंप्रकल्प्यमहाप्रलयसंपत्तावित्यादिचिरजीवित्वातिरेकार्थवादः ॥ ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे । परस्यांतेकृतात्मानः
प्रविशंतिपरंपदम् तेब्रह्मलोकेषुपरांतकालेपरामृताःपरिमुच्यंतिसर्वेइत्याद्यागमाज्जीवन्मुक्तानामधिकारिणांमहाप्रलयेविदेहमुक्त्यवगमादित्यद्वयारण्यश्रीचरणैरुक्तम्॥तन्न ॥ तेषामागमानांब्रह्मांडांतरव
स्थितजीवन्मुक्तविषयत्वाद्ब्रह्मांडबहिर्गतानांतदभावात् ॥ एतेननाहोनरात्रिर्नभोनभूमिर्नासीत्तमोज्योतिरभून्नचान्यत् श्रोत्रादिबुद्ध्याद्युपलभ्यमेकंप्राधानिकंब्रह्मपुमांस्तदासीत् तद्वेदंतर्ह्यव्याकृतमा
सीत्सदेवसोम्येदमग्रआसीत् इत्यादिश्रुतिस्मृतीनांविरोधाभावोपिव्याख्यातः ॥ विशेषतोविरोधाभावमग्रेव्याख्यास्यामः ॥ यत्तुदैनंदिनेथप्रलयेत्रिशूलकोटौसमुत्क्षिप्यपुरींहरःस्वाम् बिभर्त्तिसंवर्त्तमहा
स्थिभूषणस्ततोहिकाशीकलिकालवर्जितेति ॥ तत्तुनप्राकृतप्रलयव्यावृत्त्यर्थम् ॥ अप्यर्थेनाथशब्देनमहाप्रलयस्यसमुच्चीयमानत्वात् ॥ अतएवसंवर्त्तमहास्थिभूषणइतिविशेषणम् ॥ अन्यथामहापद
वदितस्यैतस्यास्थिशब्दस्यैवैयर्थ्यापातात् ॥ कलिकालवर्जितत्वेवास्यतात्पर्यम् ॥ किंचप्राकृतेप्रलयेप्राकृतानांप्रकृत्यधीनानामेवलयेनभवितव्यम् नचकाश्यादिकंप्राकृतंकिंत्वचिंत्यशुद्धसत्त्वात्मक
मेवेश्वरेच्छयाव्यक्तीभावमापन्नंश्रीकृष्णशरीरवत् ॥ नचासिद्धोदृष्टांतः ॥ नराकृतिपरंब्रह्मेत्यादिबहुतरवचनविरोधात् तेषामर्थांतरकल्पनायांकारणाभावात् भक्तानुग्रहार्थंब्रह्मणएवस्वाधीनयामाय
यादेहाकारतोपपत्तेश्च ॥ तथाचस्कांदेस्वामिकार्त्तिकेयवाक्यम् ॥ कैवल्यंयत्परंब्रह्मनिराकारमगोचरं तच्चमूर्त्यापरिणतंभक्तानांभक्तिहेतुतइति॥विष्णुपुराणेच॥नाकारणात्कारणाद्वाकारणाकारणान्नच



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शरीरग्रहणंव्यापिन्धर्मत्राणायतेपरमिति अतएवोक्तंश्रीधरस्वामिना ॥ जीवस्यानाद्यविद्ययामिथ्याभूतदेहसंबंधः ईश्वरस्यतुचिद्घनलीलाविग्रहाविर्भावइतिमहान्विशेषइति ॥ तथाचमहतांवचनमुप
निषदर्थमूलखलेनिबद्धामिति ॥ किंच कृष्णशरीरस्यजगत्कारणत्वात्तन्नाशेदाहेवाजगतोपिनाशदाहप्रसंगात् ॥ कृष्णशरीरस्यजगत्कारणत्वंचित्सुखाचार्येणब्रह्मस्तुतौतनुभूतमयस्येत्यत्रतनुभिः
सूक्ष्मरूपैरा ब्रह्मस्तंबपर्यंतंभूतैर्व्याप्तस्यकारणशरीरस्येत्युक्तत्वात् ॥ अतएवतन्नपांचभौतिकं तेषांततएवोत्पत्तेः ॥ नचशरीरत्वात्पांचभौतिकत्वमनुमेयम् ॥ तत्रस्वकर्मजन्यत्वस्योपाधित्वात्
नचपुत्रादिकर्मजन्यशरीरेव्यभिचारः ॥ आत्मावैजायतेपुत्रः अर्द्धोवाएषआत्मनोयत्पत्नीतिश्रुतेस्तत्रापिस्वकर्मजन्यत्वसत्त्वात् नचधर्तुरभावोब्रह्मविष्णुशंकरभावमापन्नस्यैवेक्षणमात्रेणधारकत्वात् ॥
ससेतुर्विधृतिरेषांलोकानामसंभेदायेतिश्रुतेः ॥ नचब्रह्मादिदेहानामंतर्द्धानवत्काश्यादिशरीराणामप्यंतर्द्धानेनभवितव्यमितिवाच्यम् ॥ ईश्वरेच्छायाःस्वतंत्रत्वात् ब्रह्मादिदेहानतर्द्धायापिकाशी
गणास्त्रिशूलंचरक्षणीयामित्येतादृश्याअपीच्छायाःसमृक्षादिवत्संभवात् ॥ नचब्रह्मादिदेहानामप्यंतर्द्धानमस्ति तेषांदेहानामप्रलीयमानत्वात् ॥ तथाचोक्तं पंचात्मकस्यविष्णोरहमेवाग्र
इतिसाधारणलक्षणात्मकेपद्येकैवल्यदीपिकाकारेण ॥ नापिसाकारेषुचतुर्ष्वव्याप्तिस्तेषामाकारातिरोहितत्वादिति ॥ नचैककालीनाःसर्वेपरमाणवःसमग्रोपादेयप्रबंधशून्याःआरंभकत्वात्
नष्टपवनारंभकपरमाणुवदित्यादिनैयायिकादिसमयसिद्धप्रलयसाधकानुमानात्काश्यादिदेहानामप्यंतर्द्धानेनभवितव्यमितिवाच्यम् ॥ नरशिरःकपालानुमानवत्स्मृत्यातस्यबाधितविषयत्वादितिसंतो
ष्टव्यमलमितिविस्तरेण ॥ सनत्कुमारसंहितादिवचनानुसारेणैतद्व्याकृतमास्माभिरतःस्वसिद्धांतरोषकषायीकृतनयनैर्नैयायिकादिभिःशिरःकुट्टनंनविधेयमिति ॥ पंचानांयच्छब्दानांसेत्यने
नान्वयः ॥ यावद्धाभुविमुक्तिदेति ॥ याकाशीभुविबद्धापिभूमंडलेबद्धत्वेनप्रतीयमानापिमुक्तिदाभवतीतिपूर्वस्यापरेणुषंगः ॥ मनुष्यत्वेनप्रतीयमानोपिदाशरथिर्यथामुक्तिदइत्यभिप्रायः ॥
अत्रहिजंतोःप्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टेयेनासावमृतीभूत्वामोक्षीभवतितस्मादविमुक्तमेवनिषेवेताविमुक्तंनविमुंचेदित्यादिश्रुतेः ॥ नचात्रभूमिष्ठेत्यनेनपुनरुक्तिर्विरोधाभासभेदेनार्थभेदो
पलंभात् ॥ अतएवस्युरमृतंयस्यांमृताजंतवइति ॥ यस्यांकाश्यांमृताजंतवःप्राणिनोऽमृतंकैवल्यंस्युः कैवल्यभाजोभवंतीत्यर्थः ॥ यद्वाकेनप्रकारेणमुक्तिदास्यादितिपृच्छायामाह
स्युरमृतंयस्यांमृताजंतवइति ॥ यद्वाऽतिप्रसंगंवारयति स्युरमृतंयस्यांमृताजंतवइति ॥ अथवायेभुविबद्धाःस्वभूमौसंबद्धाःकृतवसतयइत्यर्थः ॥ तेषांमुक्तिदाजीवन्मुक्तिदेत्यर्थः ॥ अत्रा
ध्याहृत्ययोजनासोढव्या ॥ तथाचोक्तंपाद्मे ॥ काश्यांतिष्ठंतियेकेचित्तान्पश्यंतिसुरोत्तमाः चतुर्भुजांस्त्रिनयनान्गंगोद्भासितमूर्द्धजानिति ॥ अत्रापिचवक्ष्यति ॥ येवसंतिसदाकाश्यामापंचत्व
विनिश्चयाः जीवन्मुक्तास्तुतेज्ञेयावंद्याःपूज्यास्तएवहीति ॥ एवंजीवन्मुक्तिमभिधायविदेहमुक्तिमाह ॥ स्युरमृतमिति ॥ समानमन्यत् ॥ स्युरमृताइतिक्वचित्पाठस्तदाम्रियंतइति
मृतानमृताअमृताः ॥ मरणमित्युपलक्षणं जन्मादिषड्भावविकाररहिताभवंतीत्यर्थः ॥ गंगाश्रितत्वाच्चास्याःश्रेष्ठत्वमाह ॥ यानित्यंत्रिजगत्पवित्रतटिनीतीरेइति ॥ त्रीणिचतानिजगंतिचे
तित्रिजगंतितानिपवित्रयतीतित्रिजगत्पवित्रागंगा ॥ तदुक्तंभागवते ॥ यस्यामलंदिवियशःप्रथितंरसायांभूमौचतेभुवनमंगलदिग्वितानं मन्दाकिनीदिविचभोगवतीतिचाधोगंगेतिचेहचरणांबुपुनाति
विश्वमिति ॥ तटंतीरंवर्त्ततेऽस्याइतितटिनीत्रिजगत्पवित्राचासौतटिनीचत्रिजगत्पवित्रतटिनीगंगातस्यास्तीरेयाकाशीवर्त्तते ॥ त्रिजगत्पवित्रतटिन्यागंगयायानित्यमाश्रितेत्यर्थः ॥ एवंहिश्रूयते
सनत्कुमारसंहितायाम् ॥ यत्संपर्कात्पवित्रत्वंगंगायात्येवसर्वतः पूर्वविनिःसृतादेविममरमौलिमहालयात् अत्रागत्यपुनर्देविगंगापुण्यतमाभवत् पवित्रमाद्यंस्वयमेवगंगापुनश्च्युताविष्णुपदात्ततोपि
ब्रह्मादिलोकादपिमूर्ध्निशंभोर्निपातनाद्भूतिसुपांडुरांगा उन्मथ्यमार्गंचभगीरथस्यकाशींप्रविश्याथविमुक्तमंतारित्यादि ॥ पारावारविहारेणविश्लेषशंकांवारयति ॥ नित्यमिति ॥ ब्रह्मादिभिःसेव्य
त्वादपिश्रेष्ठतामाह ॥ सुरैःसेव्यते इति ॥ येत्यनुषंजनीयंनित्यमितिच ॥ कादाचित्कसेवांवारयति ॥ नित्यमिति ॥ यानित्यंत्रिजगत्पवित्रतटिनीतीरेसुरैःसेव्यतइत्येकंवाक्यम् ॥ अयमभि
प्रायः ॥ अस्माभिःसेव्यमानापीयंसुरनदीत्रिजगत्पुनानापिस्वर्गालयापिकेनापिसुखनिमित्तेनकाशीमधितिष्ठत्यतोऽसौसांद्रानंदखनिरितिनिश्चित्यदेवैर्नित्यंसेव्यतइति ॥ अधिष्ठात[illegible]रापिश्रेष्ठच

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

माह ॥ त्रिपुरारिराजनगरीति ॥ त्रयाणांपुराणांस्वर्णरूप्यलोहत्रयनिर्मितानांअरिस्त्रिपुरारिः ॥ अथवास्थूलसूक्ष्मकारणशरीरलक्षणानांत्रयाणांपुराणांवृत्त्यारूढःसन्नरिस्त्रिपुरारिःसचासौस्वयं राजतेइतित्रिपुरारिराजस्तस्यनगरीत्रिपुरारिराजनगरी ॥ त्रिपुरारेःराजधानीतिवा ॥ अथवैवंगणेशोपाधिभगवंतंस्तुत्वाऽशेषविशेषाश्रयभूतांप्रत्यगदृशिंस्तौति ॥ भूमिष्ठेति ॥ पूर्ववदेवान्वयः ॥ तत्र काशतेस्वप्रकाशतयाराजतइतिकाशीप्रत्यक्चैतन्यम् ॥ अत्रायंपुरुषःस्वयंज्योतिरितिश्रुतेरित्येतावान्विशेषः ॥ ननुपंचक्रोशावच्छिन्नायाभुवःकाशीत्वेनप्रसिद्धेःकथंप्रत्यग्दृशिपरतयासाव्याक्रियतेत त्राह ॥ भूमिष्ठापिनयात्रभूरिति ॥ भूमिशब्दोत्रभावप्रधानः ॥ तथाचायमर्थः ॥ भूमिष्ठापिभूमित्वेनस्थितापिप्रतीतापियाकाशीअत्रतत्त्वनिरूपणदशायांभूर्नभवति ॥ स्वप्रकाशप्रत्यग्ब्रह्म रूपत्वात् ॥ यथादेहित्वेनप्रतीयमानोपिश्रीकृष्णोदेहीनभवतितद्वदित्यर्थः ॥ अस्थूलमनणु अथातआदेशोनेतिनेतीत्यादिश्रुतेः ॥ वक्ष्यतिचात्रापि ॥ अविमुक्तंमहाक्षेत्रंपंचक्रोशपरीमितम् ॥ ज्योतिर्लिंगांहितत्क्षेत्रंपरंविश्वेश्वराभिधम् ॥ तथापाद्मेच ॥ यल्लिंगंदृष्टवंतौतौनारायणपितामहौ तदेवलोकेवेदेचकाशीतिपरिगीयतइति ॥ एवंभूमिप्रतीतेरभावमुक्त्वापरिच्छिन्नप्रतीतेरप्यभावमाह ॥ त्रिदिवतोप्युच्चैरधःस्थापियेति ॥ अपित्रयंसमुच्चयार्थम् ॥ याकाशीभुवर्लोकादीनांषण्णामधःस्थापित्रिदिवतोप्युचैस्त्रयोब्रह्मविष्णुमहेश्वरादीव्यंतिक्रीडंतियस्मिन्नितित्रिदिवंब्रह्मांडंतस्मादप्युच्चैरुपरि सर्वव्यापिकेत्यर्थः ॥ सत्यज्ञानानंतब्रह्मरूपत्वात् ॥ यथादेवक्याउदरस्थत्वेनप्रतीयमानोपिश्रीकृष्णस्तत्स्थोनभवति किंतुसर्वव्यापकस्तद्वदित्यर्थः ॥ सभूमिंविश्वतोवृत्वाऽत्यतिष्ठद्दशांगुलम् सत्यं ज्ञानमनंतमित्यादिश्रुतेः ॥ ननुतत्सृष्ट्वा तदेवानुप्राविशदितिश्रुत्याचैतन्यस्यकार्येप्रवेशश्रवणात्परिपूर्णस्यचप्रवेशासंभवात्कथमस्यपरिपूर्णत्वमित्याशंकायामाह ॥ यावद्धाभुवीति ॥ भुवीत्यनेनभूत भौतिकमुपलक्ष्यते ॥ ततश्चायमर्थः ॥ याकाशीभुविभूतभौतिकेकार्येप्रपंचेबद्धाप्रविष्टेत्यर्थः ॥ प्रागेवकारणतयाविद्यमानत्वात् ॥ तदुक्तंसदृष्टांतंभागवते ॥ यथेमेऽविकृताभावास्तथातेविकृ तैस्सहेत्यादिना ॥ प्रवेशश्रवणंत्वौपचारिकम् ॥ तथाचोक्तंबृहदारण्यकभाष्येभगवत्पादैः ॥ कार्यस्थस्योपलभ्यत्वमेवप्रवेशइति ॥ भागवतेच ॥ सएवस्वप्रकृत्येदंसृष्ट्वाग्रेत्रिगुणात्मकम् ॥ तदनुत्वंह्यप्रविष्टःप्रविष्टइवभाव्यसइति ॥ द्विविधोहिपरःपुरुषार्थः सर्वानर्थनिवृत्तिःपरमानंदावाप्तिश्च ॥ तत्राद्यतःसर्वानर्थनिवृत्तिरूपतामाह ॥ मुक्तिदेति ॥ मुक्तिमाध्यात्मिकादितापत्रयोच्छि त्तिंददातिप्रयच्छतीतिमुक्तिदा ॥ याहिसर्वाननर्थानन्येषांनिवर्त्तयतिसासुतरांसर्वानर्थविनिर्मुक्ताभवति ॥ यथालोकेयोऽन्यानधनिनोधनिनःसंपादयतिसतेभ्योऽतिशयेनधनीतिगम्यतेतद्वदिति ॥ परमानन्दरूपतामाह ॥ स्युरमृतंयस्यांमृताजंतवइति ॥ यस्यांप्रत्यक्चैतन्यलक्षणायांकाश्यांमनननिदिध्यासनांगकश्रवणजनितब्रह्मात्मैकत्वसाक्षात्कारेणमृतास्त्यक्तप्राणेंद्रियदेहाःसंतोजंतवः प्राणिनोऽमृतंकैवल्यंपरमानंदसुखमितियावत् ॥ आनंदंब्रह्मणोरूपंतच्चमोक्षेप्रतिष्ठितमित्युक्तेः ॥ स्युर्भवेयुः॥यस्याःप्रत्यग्दृशेस्तादात्म्यज्ञानेनजीवाःपरमानंदस्वरूपाभवंतीत्यर्थः ॥ तत्त्वमस्यहंब्रह्मास्मि सएषपरमआनंदएतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीत्यादिश्रुतेः॥एवंभूताप्रत्यग्दृशिरेवाज्ञानतत्कार्ययोर्हंत्रीत्यत्रसदाचारंदर्शयंस्तांविशिनष्टि॥यानित्यंत्रिजगत्पवित्रतटिनीतीरेसुरैःसेव्यतइति॥ त्रिजगत्पवित्रागंगातटिन्योन्यागौतमीप्रमुखास्तासांतीरेयाकाशीसुरैरित्यसुरादीनामुपलक्षणम् सुरासुरैरिंद्रविरोचनप्रभृतिभिर्ब्रह्मचर्य्यादिपुरःसरंश्रवणमनननिदिध्यासनाद्युपायैःसेव्यतेचिंत्यतेभाव्यतइ त्यर्थः॥इंद्रोहवैदेवानामभिप्रवव्राजविरोचनोसुराणांतौसंदिहानावेवसमित्पाणीप्रजापतिसकाशमाजग्मतुस्तौहद्वात्रिंशतंवर्षाणिब्रह्मचर्यमूषतुरित्यादिश्रुतेः ॥ननुप्रत्यग्दृशिरज्ञानंतत्कार्य्यंचहंतीत्यनुपपन्नम् तस्याअज्ञानाश्रयत्वविषयत्वोपलंभात् अन्यथातदयोगात्संसारप्रतीतेरभावप्रसंगाच्चेत्याशंक्यस्वरूपसत्त्वेनयद्यपितयोरनिवर्तिकाऽपितुसाधिकैवतथापितत्त्वमस्यादिवाक्योत्थबुद्धिवृत्त्याभिव्यक्तासतीप्रत्य ग्दृशिरज्ञानंतत्कार्य्यंचहंतीत्यभिप्रेत्यप्रत्यग्दृशिंविशिनष्टि ॥ त्रिपुरारिराजनगरीति ॥ त्रयाणांपुराणांस्थूलसूक्ष्मकारणशरीराणांयोऽरिराजःशत्रुराजस्तत्त्वमस्यादिवाक्योत्थसम्यग्बोधःसएवअभिव्यक्ति स्थानत्वेननगरमिवनगरमाश्रयोयस्याःसातथासाऽपायाज्जगत्पायादिति ॥ तथाचोक्तं[illegible]सम्यग्धीजन्ममात्रतः ॥ अविद्यासहकार्येणनाभूदस्तिभविष्यतीति॥२॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्रेयांसिबहुविघ्नानिभवंतिमहतामपीतिन्यायात्प्रपंचितंमंगलंविघ्ननिरासद्वाराचिकीर्षितस्यपुराणस्यनिष्प्रत्यूहपरिसमाप्तिप्रचयाभ्यामलमितिमत्वापुनःसवितृरूपापन्नजगत्सृष्टिस्थितिसंहारकर्तृब्रह्मनमस्कारलक्षणंमंगलमाचरति ॥ नमस्तस्मैइति ॥ तस्मैप्रसिद्धायापरिमितगुणायेतियावत् ॥ महेशायमहांश्चासावीशश्चेतिमहेशः सूर्यः ॥ अविचिन्त्यवपुःश्रेष्ठोमहायोगीमहेश्वरइतिभविष्यपुराणांतर्गतसूर्यसहस्रनामोक्तेः ॥ तस्मैनमोस्तु ॥ करोमीतिवाशेषः ॥ महेशत्वमेवदर्शयति ॥ यस्येति ॥ यस्यमहेशस्यसूर्यस्यसंध्यात्रयच्छलात्संध्यात्रयस्यप्रातर्मध्याह्नसायंलक्षणस्यच्छलाद्व्याजात्कापट्यादित्यर्थः॥ अहोरात्रादीनांतत्रकल्पितत्वात् ॥ तदुक्तंभागवते ॥ तरणाविवाहनीइति ॥ त्रिजगत्पतयोब्रह्मविष्णुरुद्रेंद्रादयोऽनिशंयातायातंप्रकुर्वंतिनिरंतरमात्रवृत्त्याआविर्भावतिरोभावमासाद्यसृष्ट्यादिकंरचयन्तीत्यर्थः ॥ तदुक्तंभागवते ॥ गुणाभिमानिनोदेवाःसर्गादिष्वस्ययद्भयात् वर्त्ततेऽनुयुगंयेषांवशएतच्चराचरमिति ॥ सूर्यगत्याहिअहरादीनांसृष्ट्यादिकंभवतीतिप्रसिद्धंलोकेशास्त्रेच ॥ तथाचश्रुतिः ॥ अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइति ॥ स्मृतिश्च नमःसवित्रेजगदेकचक्षुषेजगत्प्रसूतिस्थितिनाशहेतवे त्रयीमयायत्रिगुणात्मधारिणेविरञ्चिनारायणशंकरात्मनेइति ॥ अथवानमस्तस्मैमहेशायेत्यनेनांतर्यामित्वेनपरमात्मैवस्तूयते ॥ तदामहांश्चासावीशश्चेतिमहेशईश्वरस्तस्मै ॥ तथापूर्वमध्यापरत्वसाम्यात्संध्यात्रयंसृष्टिस्थितिप्रलयरूपंतच्छलात्यातायातंगमनागमनंकुर्वंतीतिव्याख्येयम् ॥ अन्यत्समानम् ॥ अथवापूर्वमपायाज्जगन्मोचकतयाप्रत्यग्द्दशिंस्तुत्वापुनः सृष्ट्यादिहेतुमायाश्रयत्वेनस्तौति ॥ नमस्तस्मैमहेशायेति ॥

**नमस्तस्मैमहेशाययस्यसंध्यात्रयच्छलात् ॥ यातायातंप्रकुर्वंतित्रिजगत्पतयोऽनिशम् ॥ ३ ॥**
**अष्टादशपुराणानांकर्त्तासत्यवतीसुतः ॥ सूताग्रेकथयामासकथांपापापनोदिनीम् ॥ ४ ॥**

अत्रचध्यानंध्यासम्यग्ध्यासंध्यातस्याअत्तृभक्षकंविरोधीतिसंध्यात्तृ ॥ अयतेगच्छतिस्वकार्यंव्याप्नोतीत्ययम् ॥ संध्यात्तृचतदयंचेतिसंध्यात्रयमज्ञानंतच्छलादितिच्छलयतीतिच्छलंसंध्यात्रयंचतच्छलंचेतिसंध्यात्रयच्छलंतस्मादितिव्याख्येयम् ॥ अन्यत्समानमिति ॥ ३ ॥ एवंमंगलमारचय्यश्रोतृप्ररोचनार्थंचिकीर्षितपुराणस्येश्वरकर्तृतांदर्शयन्नुपोद्घातसंगतिमाह ॥ अष्टादशपुराणानामिति ॥ सत्यवतीसुतोव्यासःसूताग्रेकथांकथयामासेतिसंबंधः ॥ सूतस्याग्रेसूतोरोमहर्षणाख्यस्तस्याग्रे ॥ रोमहर्षणनामानंमहाबुद्धिंमहामुनिः ॥ सूतंजग्राहशिष्यंसइतिहासपुराणयोरितिवैष्णवोक्तेः ॥ सूतोनामब्राह्मण्यांक्षत्रियादुत्पन्नः ॥ तदुक्तम् ॥ ब्राह्मण्यांक्षत्रियाज्जातः सूतइत्यभिधीयतइति ॥ कथंभूतोव्यासः ॥ अष्टादशपुराणानांकर्त्ता ॥ अष्टादशपुराणानिब्राह्मादीनि ॥ तदुक्तंवैष्णवे ॥ ब्राह्मंपाद्मंवैष्णवंचशैवंभागवतंस्मृतम् तथान्यन्नारदीयंचमार्कंडेयंचसप्तमम् आग्नेयमष्टमंप्रोक्तंभविष्यंनवमंतथा ॥ दशमंब्रह्मवैवर्त्तंलैंगमेकादशंस्मृतम् ॥ वाराहंद्वादशंचैवस्कांदंचात्रत्रयोदशम् चतुर्दशंवामनंचकौर्मंपंचदशंस्मृतम् मात्स्यंचगारुडंचैवब्रह्मांडंचततःपरमिति ॥ तेषांकर्त्तेति ॥ कर्त्तेतितृच्प्रत्ययांतंरूपम् ॥ अतोऽनिर्दिष्टार्थाः प्रत्ययास्त्रिष्विकालेषुभवंतीतिन्यायात्आसमाप्तेर्वर्त्तमानत्वाच्चातीतवर्त्तमानभविष्यत्पुराणानांकर्तृत्वमविरुद्धमितिभावः ॥ कथंभूतांकथाम् ॥ पापापनोदिनीम् पापानिमहापातकोपपातकसंकरीकरणापात्री

---

१ तथेत्यपिपाठः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

करणमलिनीकरणजातिभ्रंशकरादीन्यपनोदितुंशीलंयस्याःसातथातामिति ॥ ४ ॥ यदर्थमुपोद्घातआरचितस्तांकथामाह ॥ कदाचिदिति ॥ एकदानारदोविष्णोर्नरांशाज्जातंयन्नारंजलंमाणिक
णिकास्थंतत्पितृभ्योदत्तवानितिनारदः ॥ तदुक्तंसनत्कुमारसंहितायाम् ॥ याभ्यःपराद्ध्यःपितृणांनतृप्तिस्तादत्तवांस्त्वंपितृभक्तवर्यनारंददासीतिहिनारदोसीति ॥ विंध्यंविंध्यनामानंपुरोऽग्रेविलो
कयांचक्रेददर्शेत्यग्रिमेणान्वयः ॥ कथंभूतः ॥ श्रीमान् ब्रह्मवर्च्चसवान् ॥ किंकुर्वन् श्रीनर्मदांभसिश्रीयुक्तेनिर्मलेरेवायाअंभसिस्नात्वा ॥ नार्मदेंभसीतिक्वचित् ॥ श्रीगौरी शंकरोभगवान्
विष्णुर्लक्ष्मीर्गौरीद्विजोत्तमेतिवैष्णवोक्तेः सावर्त्ततेयस्यासौश्रीमान् श्रीमांश्चासावोंकारश्चेतिश्रीमदोंकारस्तंगौरीसहितमोंकाराख्यमीश्वरंअमरकंटकक्षेत्राधिष्ठातारमितियावत् ॥ अभ्यर्च्यपूजयित्वा
॥ ५ ॥ व्रजन्गच्छन् ॥ लिंगविशेषणत्वाच्छ्रीमदितिपृथक्पदंवा ॥ प्राकृतंव्याख्यानंस्पष्टम् ॥ कथंभूतम् ॥ सर्वदमिति ॥ सर्वदेहिनामशेषप्राणिनांधर्मार्थकाममोक्षपूरकमित्यर्थः ॥
विंध्यंविशिनष्टि धराधरमित्याद्यक्षरचतुष्टयाधिकसार्द्धत्रिशताश्लोकैः ॥ कथंभूतंविंध्यम् ॥ धराधरंधरांपृथ्वींधरतीतिधराधरस्तंपर्वतमितियावत् पुनःकथंभूतम् ॥ संसारेतापंसंसारतापमाध्या
त्मिकाधिभौतिकाधिदैविकलक्षणंतंसंहर्तुंशीलंयस्यतत्तथातच्चतद्रेवावारिनर्मदाजलंचतेनपरिष्कृतमाश्रितंसेवितंरेवातीरस्थमितियावत् ॥ यद्वा परिष्कृतंदर्शनादेवपावयितृपवित्रतममित्यर्थः ॥ तदुक्तम् ॥
त्रिभिःसारस्वतंतोयंसप्ताहेनचयामुनं सद्यःपुनातिगांगेयंदर्शनादेवनार्मदमिति ॥ ६ ॥ पुनःकथंभूतम् ॥ द्विरूपमेवद्वैरूप्यम् ॥ स्वार्थेष्यञ् तेनद्वैरूप्येणद्विरूपेण ॥ अपिश्चार्थेसमुच्चयवाची ॥ इमां
वसुमतींपृथ्वींयथार्थाख्यांयथासहशोवाधितोर्थोयस्याःसायथार्थाआख्यायस्याःसायथार्थाख्यातामेवंविशिष्टामुच्चैरतिशयेनकुर्वतंसम्पादयन्तमिति ॥ किन्तद्द्वैरूप्यमितिपृच्छायामाह ॥ स्थावरे

श्रीव्यासउवाच ॥ ॥ कदाचिन्नारदःश्रीमान्स्नात्वाश्रीनर्मदांभसि ॥ श्रीमदोंकारमभ्यर्च्यसर्वदंसर्वदेहिनाम् ॥ ५ ॥ व्रजन्विलोकयांचक्रे
पुरोविंध्यंधराधरम् ॥ संसारतापसंहारिरेवावारिपरिष्कृतम् ॥ ६ ॥ द्वैरूप्येणापिकुर्वंतंस्थावरेणचरेणच ॥ साभिख्येनयथार्थाख्यामुच्चैर्वसु
मतीमिमाम् ॥ ७ ॥ रसालयंरसालैस्तैरशोकैःशोकहारिणाम् ॥ तालैस्तमालैर्हितालैःसालैःसर्वत्रशालितम् ॥ ८ ॥

णचरेणचेति ॥ स्थावरेणस्वस्मिन्नुत्पन्नरत्नप्रवालादिनेत्यर्थः ॥ चरेणस्वशृंगेनिरंतरंक्रीडितुमागतेनवस्वग्न्यादिनेत्यर्थः ॥ वस्वग्निरश्मिरत्नधनानिवसुशब्दवाच्यानिविद्यन्तेयस्याःसावसुमतीति
हितस्यायथार्थाख्याम् ॥ यदाहामरः ॥ देवभेदेऽनलेरश्मौवसुरत्नेधनेपिचेति ॥ अतएववक्ष्यतिचात्रापि ॥ तुच्छाश्रियः स्वर्गभूमीःपरिहायागतैरिव नानासुरनिकायैश्चविष्वग्भोगेच्छयो
षितामितिअतएवोक्तमुच्चैरिति ॥ प्राकृतंव्याख्यानंस्पष्टम् ॥ कथंभूतेनस्थावरेणजंगमेन साभिख्येनअभिख्याशोभा ॥ अभिख्यानामशोभयोरित्यमरः ॥ तयासहवर्त्ततइतिसाभिख्यंतेन ॥ ७ ॥
पुनःकथंभूतम् ॥ रसालयमिति ॥ तैःप्रसिद्धैरसालैराम्रैः ॥ आम्रश्चूतोरसालोसावित्यमरः ॥ रसालयम् षण्णांरसानामालयमाश्रयमित्यर्थः ॥ पुनःकथंभूतम् ॥ काकाक्षिन्यायेनत
च्छन्दस्योभयत्रसंबंधात्तैःप्रसिद्धैरशोकैर्वंजुलैः ॥ वंजुलोऽशोककइत्यमरः ॥ शोकहारिणंशोकांगारविपच्यमानानांशोकंहर्त्तुंशीलंयस्यसशोकहारीतंशोकहारिणम् ॥ नविद्यतेशोकोयैस्तेऽशोका
इत्यशोकपदव्युत्पत्तिरतस्तैःशोकहारित्वंयुक्तमितिभावः ॥ तदुक्तम् ॥ अशोककलिकाश्चाष्टौयेपिबंतिपुनर्वसौ ॥ चैत्रेमासिसिताष्टम्यांनतेशोकमवाप्नुयुरितित ॥ पुनःकथंभूतं ॥ सर्वत्र
समंततःशालितंशोभितम् ॥ कैः ॥ तालैस्तृणराजैः ॥ तृणराजाह्वयस्तालइत्यमरः ॥ तथातमालैःकालस्कंधैः ॥ कालस्कन्धस्तमालःस्यादित्यमरः ॥ तथाहितालैस्तृणद्रुमविशेषैः ॥
खर्जूरःकेतकीतालीखर्जूरीचतृणद्रुमाइत्यमरः ॥ तद्विशेषैः ॥ तथासालैःसर्जैः ॥ सालेतुसर्जकार्श्याश्वकर्णिकाइत्यमरः ॥ ८ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पुनः कथंभूतम् ॥ खपुरैः पूगैः गुवाकैरितियावत् ॥ घोंटातुपूगः क्रमुकोगुवाकः खपुरइत्यमरः ॥ खमाकाशं पूरयतीतिखपुरः ॥ ह्रस्वत्वमार्षम् ॥ खपुरआकारआकृतिर्यस्यसखपुराकारस्तम् ॥ अत्युच्छ्रितैः पूगवृक्षैराकाशं छादयंतमित्यर्थः यद्वा खपुरमाकाशगृहं तद्वदाकारोयस्यसखपुराकारस्तम् ॥ अत्युच्छ्रितैः पूगवृक्षैराकाशगृहमिवशोभमानामित्यर्थः ॥ पुनः कथंभूतम् ॥ श्रीफलै बिल्वैः ॥ बिल्वेशांडिल्यशैलूषौमालूरश्रीफलावपीत्यमरः ॥ श्रियंशोभांफलयतिनिष्पादयतीतिश्रीफलस्तम् ॥ फलनिष्पत्तावितिधातुः ॥ श्रीफलैर्वृक्षैरत्यंतशोभांसंपादयंतमित्यर्थः ॥ यद्वा श्रीफलैर्वृक्षैः कृत्वाश्रीफलंश्रियायुक्तानिफलानिअर्थतोनामतश्चयत्रसतथातम् ॥ बिल्ववृक्षाणांफलैः श्रीफलाख्यैर्लोकप्रसिद्धैः प्रपूरितमित्यर्थः ॥ किलेत्युत्प्रेक्षायांप्रसिद्धौवा ॥ पुनः कथंभूतम् ॥ अगुरुभिः कालागुरुभिः कालागुर्वगुरुः स्यादित्यमरः ॥ गुर्वीमहतीश्रीः सौगंध्यसंपत्तिः शोभासंपत्तिर्वायस्यतथातम् ॥ तुशब्दश्चार्थः समुच्चयवाची ॥ पुनः कथंभूतम् ॥ कपित्थैर्दधित्थैः ॥ अथकपित्थेस्युर्दधित्थग्राहिमन्मथाइत्यमरः ॥ कपिपिंगंवानरवत्पिंगलम् कडारः कपिशः पिंगापिशंगौकद्रुपिंगलावित्यमरः ॥ यद्वा कपिपिंगंश्रेष्ठपिंगम् ॥ कपिर्वराहः श्रेष्ठश्चेतिवचनात् ॥ ९ ॥ पुनः कथंभूतम् ॥ लकुचैर्लिकुचैः ॥ लकुचोलिकुचोडहुरित्यमरः ॥ मनोहरंसुन्दरम् ॥ बकुलैरितिक्वचित्पाठः ॥ कथंभूतैः ॥ वनश्रीर्वनलक्ष्मीर्वनदेवीतियावत् ॥ तस्याः कुचाकारैः स्तनाकारैः ॥ चकारः समुच्चये ॥ पुनः कथंभूतम् ॥ सुधाऽमृतंतत्सदृशानियानिफलानितैः समारम्भः संबंधोवर्ततेयासांतास्तथाताश्चतारंभाश्चकदल्यः ॥ कदलीवारणबुसारंभेत्यमरः ॥ ताभिः परिभासितंप्रकाशितम् ॥ १० ॥ पुनः कथंभूतमिव ॥ सुरंगैश्चेति ॥ नारंगैर्नागरंगैः ॥ गकारलोपआर्षः ॥ ऐरावतैरित्येतत् ॥ ऐरावतोनागरंगोनादेयीभूमिजंबुकाइत्यमरः ॥ प्रकृत्यंतरंवा ॥

**खपुरैः खपुराकारंश्रीफलंश्रीफलैः किल ॥ गुरुश्रियंत्वगुरुभिः कपिपिंगंकपित्थकैः ॥ ९ ॥ वनश्रियः कुचाकारैर्लकुचैश्चमनोहरम् ॥ सुधाफलसमारंभिरंभाभिः परिभासितम् ॥१०॥ सुरंगैश्चापिनारंगैरंगमंडपवच्छ्रियः ॥ वानीरैश्चापिजंबीरैर्बीजपूरैः प्रपूरितम् ॥ ११ ॥ अनिलालोलकंकोलवल्लीहल्लीसकायितम् ॥ लवलीलवलीलाभिर्लास्यलीलालयंकिल ॥ १२ ॥**

नारंगः पिप्पलीरसे यमजप्राणिनिविडेनागरंगद्रुमेपिचेतिमेदिनीकारः ॥ श्रियोलक्ष्म्यारंगमण्डपमिवनृत्यस्थलमिव ॥ रंगमण्डपवच्छ्रियमितिपाठेरंगमण्डपस्येवश्रीः शोभायस्यतमित्यर्थः ॥ कथंभूतैर्नारंगैः ॥ सुरंगैः शोभनोरंगोरागोहर्षोवायेभ्यः रक्तवर्णोयेषामितिवातेसुरंगास्तैः ॥ पुनः कथंभूतम् ॥ वानीरैर्वेतसैः ॥ अथवेतसे रथाभ्रपुष्पविदुलश्वेतवानीरवंजुलाइत्यमरः ॥ समुच्चयवाचीचशब्दः सर्वत्रसंबध्यते ॥ जंबीरैः समीरणैः ॥ समीरणोमरुवकः प्रस्थपुष्पः फणिज्जकः जंबीरइत्यमरः ॥ बीजपूरैः फलपूरैः ॥ फलपूरोबीजपूरइत्यमरः प्रपूरितंखचितं व्याप्तमितियावत् ॥ प्रपूरकैरितिपाठेप्रपूरकैरेतैश्चश्रियोरंगमण्डपवदितिपूर्वेणैवान्वयः ॥ ११ ॥ अनिलेति ॥ पुनः कथंभूतमिव ॥ अनिलेनालोलाश्चपलायाः कंकोलवल्ल्यः कंकोलनाम्न्योलताः ॥ वल्लीतुव्रततिर्लतेत्यमरः ॥ ताभिर्हल्लीसकायितम् हल्लीसकंनामएकस्यपुंसोबह्वीभिः स्त्रीभिः सहक्रीडनं नारीणांमण्डलीनृत्यबंधोवा ॥ तदुक्तं ॥ नारीणांमण्डलीनृत्यबंधेहल्लीसकंविदुरिति ॥ एषवरासक्रीडा ॥ तल्लक्षणमिदं ॥ पृथुंसुवृत्तंमसृणंवितस्तिमात्रोन्नतंकौविनिखन्यशंकुम् ॥ आक्रम्यपद्भ्यामितरेतरंतुहस्तैर्भ्रमोयंखलुरासगोष्ठीति ॥ तद्वदाचरितम् ॥ नारीस्थानीयाभिर्गोपीस्थानीयाभिर्वानिलालोलकंकोलवल्लीभिः सहहल्लीसकंपुरुषोत्तमादौफाल्गुइतिप्रसिद्धंनृत्यंकुर्वतामिवेत्यर्थः ॥ अथवाअशोकापरपर्यायस्यकंकेलिशब्दस्यकंकोलशब्देनाभिधानम् कंकोलककोशफलापरपर्यायस्यकंकोलशब्दस्यवा उभयत्रार्षत्वात्साधुत्वम् ॥ मंजुलोवंजुलोशोकः कंकेलिर्दोहदप्रियइतिरत्नमाला ॥ अथकोलकंकंकोलकंकोशफलमित्यमरः ॥ सुकाशितामितिक्वचि

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्पाठःसचिन्त्यः ॥ क्यङ्प्रत्ययांतरूपमिदम् ॥ पुनःकथंभूतम् ॥ लवलीवल्ली ॥ लवलीवल्लिद्दोर्वल्लीत्यग्रेवक्ष्यमाणत्वात् ॥ तस्यायालवलीला अल्पक्रीडामृदुपवनाल्पांदोलनरूपास्ताभिर्लास्यलीलालयं॥ लास्यंनृत्यं॥लास्यंनृत्यंचनर्तनमित्यमरः॥तदेवलीलातस्याआलयस्थानम्॥किलेतिप्रसिद्धौ॥यद्वा लवल्योवृक्षभेदाः॑लवावल्लीतिगौडेप्रसिद्धाः॥मुक्ताफलंतुकर्पूरेमौक्तिकेलवलीफलइतिविश्वप्रकाशः १२॥ पुनःकथंभूतमिव ॥ अध्वगानाहूयंतमिवआकारयंतमिव ॥ कथंभूतानध्वगान् ॥ श्रमापन्नान्मार्गजनितंक्लेशंप्राप्तानित्यर्थः ॥ किमर्थमित्याकांक्षायामाह ॥ विश्रमाय ॥ श्रमाभावायेत्यर्थः ॥ कया मन्दांदोलितानियानिकर्पूरकदलीदलानिसुराभिरंभापत्राणि ॥ पत्रंपलाशंछदनंदलंपर्णंछदःपुमानित्यमरः ॥ अथवामंदंयथास्यात्तथांदोलिताःप्रकंपितायाःकर्पूरकदल्यःकर्पूरनाम्न्यःकर्पूरोत्पादिन्योवाकदल्यस्तासांदलानितत्संज्ञयातद्व्याजेनतत्संकेतेनेतिवा ॥ १३ ॥ पुनःकथंभूतमिव ॥ पुन्नागपल्लवैः पुन्नागस्यदेववल्लभस्य ॥ पुन्नागेपुरुषस्तुंगःकेसरोदेववल्लभइत्यमरः ॥ पल्लवैः किसलयैः ॥ पल्लवोऽस्त्रीकिसलयमित्यमरः ॥ पुन्नागमिवपुंगजमिव ॥ यद्वा पुमांश्चासौनागश्चेतिपुन्नागः पुरुषश्रेष्ठइत्यर्थः ॥ सिंहशार्दूलनागाद्याःपुंसिश्रेष्ठार्थवाचकाइत्युक्तेस्तमिव ॥ पुनः कथंभूतमिव ॥ मल्लिकायामालतीतिगौडेप्रसिद्धायास्तवकोमल्लिकास्तवकः ॥ स्तबकोगुच्छः ॥ गुच्छस्तुस्तबकइत्यमरः ॥ सएवस्तनस्तंकरपल्लवैःकररूपाःपल्लवाःकरपल्लवास्तैःकलयंतमिव

मंदांदोलितकर्पूरकदलीदलसंज्ञया ॥ विश्रमायश्रमापन्नानाहूयंतमिवाध्वगान् ॥ १३ ॥ पुन्नागमिवपुन्नागपल्लवैःकरपल्लवैः ॥ कलयंतमिवाऽलोलैर्मल्लिकास्तवकस्तनम् ॥ १४ ॥ विदीर्णदाडिमैःस्वांतंदर्शयंतंतुरागवत् ॥ माधवींधवरूपेणश्लिष्यंतमिवकानने ॥ १५ ॥ उदुंबरैरंबरगैरनंतफलमालितैः ॥ ब्रह्मांडकोटीर्बिभ्रंतमनंतमिवसर्वतः ॥ १६ ॥

मर्दयंतमिवस्पर्शयंतमिववावृक्षानितिशेषः ॥ कलधातोश्चुरादित्वात्स्पृशंतमिववार्थः ॥ कथंभूतैःकरपल्लवैरालोलैश्चंचलैः ॥ १४ ॥ विदीर्णेति ॥ पुनःकथंभूतं ॥ स्वांतंस्वस्यअन्तंस्वांतम् मुखमध्यमित्यर्थः ॥ दर्शयंतम् ॥ कथंभूतम् ॥ रागवत्रागयुक्तम् ॥ स्वांतंमनइतिवा ॥ स्वांतंहृन्मानसंमनइत्यमरः ॥ कैर्विदीर्णदाडिमैःस्फुटितकरकैः ॥ समौकरकदाडिमावित्यमरः ॥ तुःसमुच्चये ॥ रागिवदितिक्वचित् ॥ पुनःकथंभूतमिव ॥ माधवींवासंतींलतांधवरूपेणकांतरूपेणकाननेवनेश्लिष्यंतमिवालिंगंतमिव ॥ अतिमुक्तःपुण्ड्रकःस्याद्वासंतीमाधवीलतेत्यमरः ॥ १५ ॥ पुनःकथंभूतमिव ॥ उदुंबरैरिति ॥ सर्वतोब्रह्मांडकोटीर्विभ्रंतमिवधारयंतमिवेतियावत् ॥ कैरुदुंबरैर्जंतुफलैः ॥ उदुंबरोजंतुफलोयज्ञांगोहेमदुग्धकइत्यमरः ॥ कथंभूतैः ॥ अंबरगैः अत्युच्छ्रितैरित्यर्थः ॥ अगवैरैरितिपाठेमखांगत्वादेववृक्षश्रेष्ठत्वंज्ञातव्यम् ॥ पुनःकथंभूतैरनंतफलमालितैरपरिमितफलसंजातमालैरित्यर्थः ॥ शालितैरितिपाठेशोभितैरित्यर्थः ॥ कमिव ॥ अनंतमिव ॥ इवशब्दस्यकाकाक्षिन्यायेनोभयत्रसम्बन्धः ॥ तमोमहदहंकारखचराग्निवार्भूसंवेष्टिताऽविगणितब्रह्मांडपरमाणुपरिभ्रमणवाताध्वरोमविवरंपरमात्मानमिवेत्यर्थः ॥ १६ ॥

---

१ लवलीतिप्रसिद्धाइत्यपिक्वचित्पाठः ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पनसैरिति ॥ पुनःकथंभूतम् ॥ आवृतम् ॥ कैःपनसैःकंटकिफलैः ॥ पनसःकंटकिफलइत्यमरः ॥ कथंभूतैर्वननासाभैर्वनस्यनासानासिकातद्वदाभायेषांतेतथातैर्वनदेवीनांनासापुटैरिवेत्युत्प्रेक्षा ॥ वनना
गाभैरितिपाठेऽरण्यगजसदृशैःस्थूलैरित्यर्थः ॥ तथापलाशकैःकिंशुकैः ॥ पलाशेकिंशुकःपर्णोवातपोतइत्यमरः ॥ कथंभूतैः ॥ शुकनासैः ॥ शुकस्यपक्षिणोनासेवनासिकायेषांतेतथातैः ॥
शुकनासिकायारक्तवक्रत्वात्पलाशकुसुमस्यापितथात्वात्तत्साम्यम् ॥ यद्वा शुकनासैरंकुशाकारैःस्वपुष्पैर्विरहिणांपलाशनादितिव्यधिकरणेवातृतीया ॥ अथवाशुकनासैःश्योनाकवृक्षैरित्यर्थः ॥
श्योनाकशुकनासर्क्षदीर्घवृंतकुटंनटाइत्यमरः ॥ पुनःकथंभूतैः ॥ भर्तृभिःसहस्त्रीभिर्वाविरहोविश्लेषोयेषांजनानांतेविरहिणस्तेषांपलाशनात्पलस्यामिषस्यमांसस्येतियावत् ॥ अथःस्वरूपयोरस्त्री
तलंस्याच्चामिषेपलमित्यमरः ॥ अशनाद्भोजनान्नाशनादित्यर्थः ॥ पत्रत्यक्तैःपत्राणित्यक्तानियैस्तेतथा ॥ यद्वा पत्रैस्त्यक्ताः पत्रत्यक्तास्तैरित्यर्थः ॥ अयंभावः ॥ योददातिपरेदुःखंध्रुवं
दुःखंसविंदतीतिन्यायात्परेषांमांसादनात्स्वयमपिगतपत्रैरिवेत्युत्प्रेक्ष्यतइति ॥ पात्रत्यक्तैरितिवापाठः ॥ तत्रपात्रंअरणिः ॥ १७ ॥ कदंबेति ॥ पुनःकथंभूतम् ॥ कदंबकानांप्रियकाणां ॥
नीपप्रियकदंबास्तुहलिप्रियइत्यमरः ॥ कदंबकाःसमूहास्तैःसर्वतोभ्राजमानंराजमानम् ॥ कैरिव ॥ कंटकितैरिवउद्गतरोमांचैरिवेत्यर्थः ॥ किंकृत्वा ॥ कदंबवादिनोनीपान्दृष्ट्वा ॥ अयमर्थः ॥
स्थूलसूक्ष्मभेदेनद्विविधास्तावद्धलिप्रियाः नीपाःकदंबाश्च ॥ तेषांनीपादारत्वेनोत्प्रेक्ष्यंते ॥ कंग्राम्यसुखंददातीतिकदंकलत्रंतदतिशयेनवदितुंशीलंयेषांतेकदंबवादिनः ॥ बकारस्यपरतःश्रवणंछां
दसंविभक्तेर्लोपाभावश्च ॥ तान्कदंबवादिनोनीपान् ॥ दारान्दृष्ट्वेत्यर्थः ॥ यद्वाऽकदंबाएववयंकदंबाइतिवक्तुंशीलंयेषांतेकदंबवादिनस्तान्नीपान्दृष्ट्वाक्रोधेनोत्पुलकितैरिव ॥ यथालोकेऽधमानुत्तमवा

पनसैर्वननासाभैःशुकनासैःपलाशकैः ॥ पलाशनाद्विरहिणांपत्रत्यक्तैरिवावृतम् ॥ १७ ॥ कदंबवादिनोनीपान्दृष्ट्वाकंटकितैरिव ॥ समंततो
भ्राजमानंकदंबककदंबकैः ॥ १८ ॥ नमेरुभिश्चमेरूच्चशिखरैरिवराजितम् ॥ राजादनैश्चमदनैःसदनैरिवकामिनाम् ॥ १९ ॥ तटेतटेपटुवटैरुच्चैःपटकुटी
वृतम् ॥ कुटजस्तबकैर्भांतमधिष्ठितबकैरिव ॥ २० ॥ करमर्दैःकरीरैश्चकरंजैश्चकरंबकैः ॥ सहस्रकरवद्भांतमर्थिप्रत्युद्गतैःकरैः ॥ २१ ॥

दिनोदृष्ट्वाक्रोधादुत्पुलकिताभवंतिप्राणिनस्तद्वदित्यर्थः ॥ कदंबपातिनोभृंगानितिक्वचित् ॥ १८ ॥ नमेरुभिरिति ॥ पुनःकथंभूतम् ॥ विराजितं ॥ कैर्नमेरुभीरुद्राक्षवृक्षैः ॥ तथाचोक्तं
कुमारे ॥ दृष्टिप्रपातंपरिहृत्यतस्यकामंपुरःशुक्रमिवप्रयाणे ॥ प्राणेषुसंसक्तनमेरुशाखंध्यानास्पदंभूतपतेर्विवेशेति ॥ नमेरुशाखंरुद्राक्षशाखम् ॥ व्याख्यातंचतथातट्टीकाकृद्भिः ॥ कथंभूतैः ॥
मेरूच्चशिखरैर्मेरुच्चानियानिशिखराणिशृंगाणितैरिवेत्युत्प्रेक्षा ॥ चकारःसमुच्चये ॥ राजादनैःप्रियालैः ॥ राजादनःप्रियालःस्यात्सन्नकद्रुर्धनुष्पटइत्यमरः ॥ समुच्चयेचकारः ॥ मदनै
र्धत्तूरैः ॥ उन्मत्तःकितवोधूर्तोधत्तूरःकनकाह्वयः मातुलोमदनश्चेत्यमरः ॥ कथंभूतैः ॥ कामिनांसदनैरिवेत्युत्प्रेक्षा ॥ मदनसदनैरितिपाठेराजादनैरित्यस्यविशेषणम् ॥ १९ ॥
तटेतटेइति कथंभूतम् ॥ उच्चैःपटकुटीवृतं उच्चैर्महतीभिःपटकुटीभिर्वस्त्रगृहैर्वृतमावृतमिव ॥ इवशब्दोत्रद्रष्टव्यः ॥ कैः तटेतटेउच्चोच्चप्रदेशेपटुवटैःपटवोमनोहराश्चतेवटान्यग्रोधाश्च ॥ न्यग्रोधोबहुपाद्व
टइत्यमरः ॥ तैःपटुवटैरित्यस्यवाविशेषणमुच्चैरिति ॥ पुनः कथंभूतम् ॥ कुटजानांशक्राख्यानांवृक्षाणाम् ॥ जयोथकुटजः शक्रोवत्सकोगिरिमल्लिकेत्यमरः ॥ स्तवकागुच्छास्तैर्भांतंशोभमा
नम् ॥ कैरिव ॥ अधिष्ठिताअधिश्रितास्तेबकाःकह्वाः ॥ अथबकःकह्वइत्यमरः ॥ तैरिव ॥ २० ॥ करमर्दैरिति ॥ पुनःकथम्भूतम् ॥ अर्थिप्रत्युद्गतैःकरैः अर्थिनोयाचकान्प्रतिउद्गतैरूर्ध्वी
कृत्यधृतैराकारणार्थकरैर्हस्तैः सहस्रकरवद्भांतम् अनेकहस्तमिवस्फुरंतमित्यर्थः ॥ कैः करमर्दैःकृष्णपाकफलैः ॥ कृष्णपाकफलाविग्रसुषेणाःकरमर्दकइत्यमरः ॥ तथाकरीरैःक्रकरैः ॥ करीरेतु
क्रकरग्रंथिलावुभावित्यमरः ॥ तथाकरञ्जैःचिरिबिल्वैः ॥ चिरिबिल्वोनक्तमालःकरजश्चकरञ्जकइत्यमरः ॥ तथाकरम्बकैःकलम्बैः ॥ करम्बकःकलंबःस्यात्तैलपायिकमेवचेतिधरणिः ॥ २१ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नीराजितमिति ॥ पुनःकथम्भूतम् ॥ चम्पकश्चांपेयः भण्डिलोप्यथचांपेयश्चम्पकोहेमपुष्पकइत्यमरः ॥ चम्पकएवराजचम्पकस्तस्यकोरकैःकलिकाभिः गन्धफलीभिरिति यावत् ॥ क्षारकोजालकंक्लीवेकलिकाकोरकःपुमानित्यमरः ॥ कीदृशैः ॥ उद्दीपैःउत्कृष्टकांतिभिः ॥ तैर्नीराजितन्नीराजनामारार्त्तिक्यम्प्रापितमिव ॥ पुनःकथम्भूतम् ॥ जितपद्माकरश्रियम् ॥ जिताअभिभूतापद्मानामाकराउत्पत्तिस्थानानिपद्माकराःसरोवरादयस्तेषांश्रीःशोभायेनतथातम् ॥ कैः सपुष्पशाल्मलीभिः ॥ पुष्पेणसहवर्तंतइतिसपुष्पास्ताश्चताःशाल्मल्यश्चपिच्छिलाः ॥ पिच्छिलापूरणीमोचास्थिरायुःशाल्मलीद्वयोरित्यमरः ॥ तास्ताभिः ॥ समुच्चयेचकारः ॥ २२ ॥ क्वचिदिति ॥ पुनःकथम्भूतम् ॥ क्वचिच्छोभमानम् ॥ कैः चलदलैरश्वत्थैः ॥ बोधिद्रुमश्चलदलःपिप्पलःकुञ्जराशनः अश्वत्थइत्यमरः ॥ तथाक्वचित्कांचनकेतकैःस्वर्णकेतकीभिः ॥ तथाक्वचित्कृतमालैःआरग्वधैः ॥ आरग्वधेराजवृक्षशम्याकचतुरंगुलाःआरेवतव्याधिघातकृतमालसुवर्णकाइत्यमरः ॥ तथाक्वचिन्नक्तमालैःकरञ्जैश्च ॥ उपमाभेदान्नकरंजैरित्यनेनपुनरुक्तिः ॥ २३ ॥ कर्कंधिवति ॥ पुनःकथम्भूतम् ॥ विराजितम् ॥ कैः कर्कंधवोवदर्यः ॥ कर्कंधूर्बदरीकोलिरित्यमरः ॥ बन्धुजीवारक्तकाश्च ॥ रक्तकस्तुबन्धूकोबन्धुजीवकइत्यमरः ॥ चःसमुच्चये ॥ पुत्रजीवाजीवपुत्राः ॥ जीवापोताइतिगौडेप्रसिद्धाः ॥ अंगुल्याजपसंख्यानमेकमेवमुदाहृतम् रिष्टयाष्टगुणंविद्यात्पुत्रजीवैर्दशाधिकामितिशास्त्रप्रसिद्धाश्च उभयप्रकृतिकावापुत्रजीवाइतिचतैः ॥ तिन्दुकाःशितिसारकाः तिन्दुकःस्फूर्जकःकालस्कन्धश्चशितिसारकइत्यमरः ॥

नीराजितमिवोद्दीपैराजचंपककोरकैः ॥ सपुष्पशाल्मलीभिश्चजितपद्माकरश्रियम् ॥ २२ ॥ क्वचिच्चलदलैरुच्चैःक्वचित्कांचनकेतकैः ॥ कृतमालैर्नक्तमालैःशोभमानंक्वचित्क्वचित् ॥ २३ ॥ कर्कंधुबंधुजीवैश्चपुत्रजीवैर्विराजितम् ॥ सतिंदुकेंगुदीभिश्चकरुणैःकरुणालयम् ॥ २४ ॥ गलन्मधूककुसुमैर्धरारूपधरंहरम् ॥ स्वहस्तमुक्तमुक्ताभिरर्चयंतमिवानिशम् ॥ २५ ॥ सर्जार्जुनांजनैर्बीजैर्व्यजनैर्वीज्यमानवत् ॥ नारिकेलैःसखर्जूरैर्धृतच्छत्रमिवांबरे ॥ २६ ॥

तैःसहयाइंगुद्यस्तापसतरवः ॥ अथद्वयोः इंगुदीतापसतरुरित्यमरः ॥ तैश्चविराजितमितिपूर्वेणैवान्वयः ॥ पुनःकथंभूतम् ॥ करुणैर्वृक्षभेदैः ॥ तरुणःस्यान्नवेयूनिकुन्दपुष्पोपवृंदयोः ॥ करुणोवृक्षभेदेस्याद्रसेचकरुणावर्तीतिधरणिः ॥ तेषामालयमाश्रयम् ॥ यद्वा करुणैः करुणावद्भिःस्वस्मिंस्तिष्ठद्भिः करुणालयंदयायाअधिष्ठानमित्यर्थः ॥ अर्शआद्यच् ॥ २४ ॥ गलदिति ॥ पुनःकथंभूतमिव ॥ अनिशंसततम् ॥ सततानारताश्रांतसंततावितरतानिशमित्यमरः ॥ हरंमहेशमर्चयंतंपूजयंतमिव ॥ कथंभूतंहरम् ॥ धरारूपधरंधरायारूपंधरतीतिधरारूपधरस्तम् ॥ सर्वात्मकत्वात्सापृथिव्यभवदितिश्रुतेश्च ॥ अत्रवक्ष्यमाणसूर्येंदुवाय्वग्निपयोवकाशपृथिव्यात्माष्टमूर्तित्वाद्वैष्णवोक्तसूर्याम्महीवायुवह्न्याकाशयजमानचंद्राष्टमूर्तित्वाद्वाधरारूपधरमिति ॥ सूर्योजलंमहीवायुर्वह्निराकाशमेवच दीक्षितोब्राह्मणःसोमइत्येतास्तनवःक्रमादितिवैष्णववचनम् ॥ कैः ॥ गलन्मधूककुसुमैर्गलंतिचतानिमधूककुसुमानिचतानितथातैः ॥ उपमैवतिरोभूतभेदारूपकमिष्यत इतिन्यायाद्रूपकतामाह ॥ स्वहस्तमुक्तमुक्ताभिर्गलन्मधूककुसुमान्येवस्वसंसद्गुडपुष्पाण्येवस्वहस्तमुक्तमुक्ताःपर्वतकरत्यक्तमौक्तिकानिताभिरित्यर्थः ॥ २५ ॥ सर्जेति ॥ पुनःकमिव ॥ वीज्यमानवत्वीज्यमानमिवव्यजनमारुतैःसेव्यमानमिव ॥ कैः सर्जार्जुनांजनैः ॥ शालसर्जयोरवांतरभेदः ॥ अतएवशालैःसर्वत्रशालिनभित्यनेनापौनरुक्त्यम् उपमाभेदेनवा ॥ सर्जःशालः ॥ अर्जुनोनदी

१ जियायोताइत्यपिपाठः ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सर्जः ॥ नदीसर्जोवीरतरुरिंद्रद्रुःककुभोर्जुनइत्यमरः ॥ अंजनः शिग्रुः ॥ शिग्रुःशोभांजनोंऽजनइत्युत्पलिनी ॥ बीजैस्तरुविशेषैः ॥ बीजैरेतसितत्त्वेचहेतावंकुरकारणे बीजस्तरुविशेषेचतथाव्यजनमारुत इतिविश्वप्रकाशः ॥ सर्जार्जुनासनैरितिक्वचित्पाठः ॥ तत्रासनःपीतसालः ॥ अथपीतसालके सर्जकासनबंधूकपुष्पप्रियकजीवकाइत्यमरः ॥ एतैरेवव्यजनैस्तालवृंतैरित्यर्थः ॥ व्यजनंतालवृंतकमित्य मरः ॥ पुनःकमिव ॥ अंबरेआकाशेधृतंछत्रं यस्मैयेनेतिवासधृतच्छत्रस्तमिव ॥ कैर्नारिकेलैर्लांगलिभिः ॥ नारिकेरस्तुलांगलीत्यमरः॥कथंभूतैः॥सखर्जूरैः खर्जूरास्तृणद्रुमविशेषास्तैःसहितैः॥ २६॥ अमंदैरिति ॥ पिचुमंदैर्निंबैः ॥ पिचुमंदश्चनिंबेथेत्यमरः ॥ चःसमुच्चये ॥ मन्दारैःपारिजातकैः ॥ पारिभद्रेनिंबतरुर्मंदारःपारिजातकइत्यमरः ॥ कोविदारैश्चमरिकैः ॥ कोविदारेचमरिकः कुद्दालोयुगपत्रकइत्यमरः ॥ कथंभूतैः ॥ अमंदैःशोभमानैरितिसर्वेषांविशेषणम् ॥ पाटलेत्यादितृतीयांतपदानामपिधृतच्छत्रमित्यनेनैवान्वयः ॥ तत्रपाटलापाटलिः ॥ अथद्वयोः पाटलिः पाटलामोघाकाचस्थालीफलेरुहा कृष्णवृंताकुबेराक्षीत्यमरः ॥ तिंतिणीचिंचा ॥ तिंतिणीचिंचाम्लिकेत्यमरः ॥ घोंटाबदरम् ॥ बदरंघोंटेत्यमरः ॥ कर्कंधुघोंटयोरवांतरभेदः प्रकृतिभेदोवा ॥ अतएवकर्कंध्वित्यनेनापौनरुक्त्यम् ॥ शाखोटःपिशाचवृक्षः ॥ शाखोटोमल्लिकात्रिपुटामतेतिधरणिः ॥ बहुवचनांतैर्वाएतैरिति ॥ करहाटकैःपिंडीतकैः ॥ पिंडीतकोमरुबकःश्वसनःकरहाटकः शल्यश्चमदनइत्यमरः ॥ २७ ॥ उद्दंडैरिति ॥ पुनःकथंभूतमिव ॥ उद्दंडैर्बहुलैःअनेकैरितिसर्वेषांविशेषणम् ॥ शेहुंडैःशीहुंडैः ॥ ईकारस्यैकारआर्षः ॥ वज्रद्रुभिः ॥ अथशीहुंडोवज्रद्रुः स्नुकूस्नुहीगुडेत्यमरः ॥ एरंडैरुरुबूकैः ॥ एरंडउरुबूकश्चरुचकश्चित्रकश्चसइत्यमरः ॥ गुडपुष्पकैर्मधूकैः ॥ मधूकेतुगुडपुष्पमधुद्रुमावित्यमरः ॥ बकुलैःकेसरैः ॥ अथकेसरे बकुलइत्य

**अमंदैःपिचुमंदैश्चमंदारैःकोविदारकैः ॥ पाटलातिंतिणीघोंटाशाखोटैःकरहाटकैः ॥ २७ ॥ उद्दंडैश्चापिशेहुंडैरेरंडैर्गुडपुष्पकैः ॥ बकुलैस्तिलकैश्चैव तिलकांकितमस्तकम् ॥ २८ ॥ अक्षैःप्लक्षैःशल्लकीभिर्देवदारुहरिद्रुमैः ॥ सदाफलसदापुष्पवृक्षवल्लीविराजितम् ॥ २९ ॥ एलालवंगमरिचकुलं जनवनावृतम् ॥ जंब्वाम्रातकभल्लातशेलुश्रीपर्णिवर्णितम् ॥ ३० ॥**

मरः ॥ पुनःकथंभूतमिव ॥ तिलकेनललाटस्थगोपीचन्दनाद्येनअंकितंचिह्नितंमस्तकंयस्यसतथातमिव ॥ इवशब्दोत्रद्रष्टव्यः ॥ कैः तिलकैःक्षुरकैः ॥ तिलकःक्षुरकःश्रीमानित्यमरः ॥ चः समुच्चये ॥ २८ ॥ अक्षैरिति ॥ पुनःकथंभूतम् ॥ विराजितम् ॥ कैः ॥ अक्षैर्बिभीतकैः ॥ त्रिलिंगस्तुबिभीतकः ॥ अक्षद्रुमःकर्षफलोभूतावासःकलिद्रुमइत्यमरः ॥ प्लक्षैःकर्कटिभिः ॥ प्लक्षोजटीकर्कटीस्यादित्यमरः ॥ शल्लकीभिःगजभक्ष्याभिः ॥ गन्धिर्नागजभक्ष्यातुसुवहासुरभीरसा महेरणाकुंदुरुकीशल्लकीह्लादिनीतिचेत्यमरः ॥ देवदारुहरिद्रुमैः ॥ देवदारवःशक्रपादपाः ॥ शक्रपादपःपारिभद्रकः भद्रदारुद्रुकिलिमंपीतदारुचदारुच पूतिकाष्ठंचसप्तस्युर्देवदारुणीत्यमरः ॥ हरिद्रुमाःपीतद्रवः ॥ अथपीतद्रुःकालेयकहरिद्रुमाइत्यमरः ॥ तेचतेचतैर्देवदारुहरिद्रुमैर्विरा जितमिति ॥ समासस्थमपिविराजितपदंपृथग्योजनीयम् ॥ यद्वा अक्षादिभिःसहसदाफलानिपुष्पाणिचयासांवृक्षवल्लीनांताभिर्विराजितमिति ॥ २९ ॥ एलेति ॥ पुनःकथंभूतम् ॥ एला पृथ्वीका ॥ पृथ्वीकाचंद्रवालैलानिष्कुटिर्बहुलेत्यमरः ॥ लवंगानिलवंगलताकुसुमानिदेवकुसुमानिचेत्येतत् ॥ यदाहजयदेवः ॥ ललितलवंगलतापरिशीलनकोमलमलयसमीरेइति ॥ लवंगं देवकुसुमंश्रीसंज्ञमित्यमरः ॥ मरिचानिकोलकानिच ॥ अथवेल्लजं मरिचंकोलकंकृष्णमूषणंधर्मपत्तनमित्यमरः ॥ कुलंजनाश्चकुद्दालावेतसाइतिवा ॥ कुलंजनस्तुकुद्दालःकोविदारोपिसस्मृत इतिरत्नमाला ॥ कुलंजनोवेतसेस्याद्भ्रहुपुत्रःकुलंजनइतिचहारावली ॥ तेषांवनैरावृतंव्याप्तम् ॥ पुनःकथंभूतम् ॥ जंब्वश्चवृक्षविशेषाः यासांफलंजंबूइतिप्रसिद्धम् ॥ फलेजंब्वाजंबूस्त्रीजंबुजां



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

बवमित्यमरः ॥ जंबूःसुमेरुहरितिद्वीपद्रुमविशेषयोरितिचविश्वः ॥ आम्रातकाःपीतनाः ॥ द्वौपीतनकपीतनौ आम्रातकइत्यमरः ॥ भल्लाताश्चभल्लातकावीरवृक्षाइतियावत् ॥ वीरवृक्षोऽरुष्करोग्निमुखीभल्लातकीत्रिष्वित्यमरः ॥ शेलवःश्लेष्मातकाः ॥ शेलुःश्लेष्मातकःपीतउद्दालोबहुवारकइत्यमरः ॥ श्रीपर्ण्यश्चगंभार्यः ॥ गंभारीसर्वतोभद्राकाश्मरीमधुपर्णिका श्रीपर्णीभद्रपर्णीचकाश्मर्यश्चेत्यमरः ॥ तैर्वर्णितंकथितंलक्षितमित्यर्थः ॥ ३० ॥ शाकेति ॥ पुनःकथंभूतम् ॥ शाकाःपत्रपुष्पाद्याः ॥ शाकाख्यंपत्रपुष्पादीत्यमरः ॥ अंतःखरस्पर्शानिबहिर्मृदुस्पर्शानिपत्राणियेषांतेशाकवृक्षाइतिवा ॥ शंखा श्चशुक्तयः ॥ शुक्तिःशंखःखुरःकोलदलंनखमित्यमरः ॥ तेषांवनैः ॥ चन्दनैश्चगंधसारैः ॥ गन्धसारोमलयजोभद्रश्रीश्चंदनोस्त्रियामित्यमरः ॥ रक्तचन्दनैश्चतिलपर्णीभिः ॥ तिलपर्णीतुपत्रांगरंजनंरक्तचंदनं कुचंदनंचेत्यमरः ॥ रम्यंसुन्दरम् ॥ पुनःकथंभूतम् ॥ हरीतक्यश्चाभयाः ॥ अभयात्वव्यथापथ्यावयस्थापूतनामृता हरीतकीहैमवतीचेतकीश्रेयसीशिवेत्यमरः ॥ कर्णिकाराद्रुमोत्पलाः ॥ अथद्रुमोत्पलः कर्णिकारःपरिव्याधइत्यमरः ॥ धात्र्यश्चामलक्यः ॥ धात्रीस्यादुपमातापिक्षितिरप्यामलक्यपीत्यमरः ॥ तासांवनैर्वनमेववाभूषणंशोभायस्य वनानिवाभूषयतीतिसतथातम् ॥ ३१ ॥ द्राक्षेति ॥ पुनःकथंभूतम् ॥ द्राक्षावल्लयश्चमृद्वीकावल्लयः ॥ मृद्वीकागोस्तनीद्राक्षास्वाद्वीमधुरसेतिचेत्यमरः ॥ नागवल्लयश्चतांबूलवल्लयः ॥ तांबूलवल्लीतांबूलीनागवल्ल्यपीत्यमरः ॥ कणावल्लयश्चजीरकवल्लयः ॥ जीरकोजरणोजाजीकणेत्यमरः ॥ यद्वा कणावल्लयःपिप्पलीलताः ॥ कृष्णोपकुल्या

शाकशंखवनैरम्यंचंदनैरक्तचंदनैः ॥ हरीतकीकर्णिकारधात्रीवनविभूषणम् ॥ ३१ ॥ द्राक्षावल्लीनागवल्लीकणावल्लीशतावृतम् ॥ मल्लिकायूथिकाकुंदमदयंतीसुगंधिनम् ॥३२॥ भ्रमद्भ्रमरमालाभिर्मालतीभिरलंकृतम् ॥ अलिच्छलागतंकृष्णंगोपीरंतुमनेकशः ॥३३॥ नानामृगगणाकीर्णंनानापक्षिविनादितम् ॥ नानासरित्सरःस्रोतःपल्वलैःपरितोवृतम् ॥३४॥ तुच्छश्रियःस्वर्गभूमीःपरिहायागतैरिव ॥ नानासुरनिकायैश्चविष्वग्भोगेच्छयोषितम् ॥३५॥

वैदेहीमागधीचपलाकणा ऊषणापिप्पलीशौंडीकोलेत्यमरः ॥ तासांशतैरावृतम् ॥ पुनःकथंभूतम् ॥ मल्लिकाश्चतृणशून्यानि ॥ तृणशून्यंतुमल्लिकेत्यमरः ॥ यूथिकाश्चमागध्यः ॥ अथमागधीगणिकायूथिकांबष्ठेत्यमरः ॥ कुंदानिचमाघ्यानि ॥ माघ्यंकुंदमित्यमरः ॥ मदयंत्यश्चज्योतिष्मत्यः ॥ मदयंतीमादयंतीपिन्याज्योतिष्मतीमितोतिधराणेः ॥ ताभिःसुगंधोवर्ततेयस्यसतथातम् ॥ सुगंधितामितिक्वचित् ॥३२॥ भ्रमद्भ्रमरेति ॥ पुनःकथंभूतम् ॥ मालतीभिर्जातीभिरलंकृतम् ॥ कथंभूताभिः ॥ भ्रमतांभ्रमराणांमालाःसमूहायासुतास्तथाताभिः ॥ अतएवअलिच्छलेनभ्रमरव्याजेनानेकशोबहुरूपं विधायगोपीर्गोपांगनाःक्रीडितुमागतंकृष्णमिवेत्युत्प्रेक्षा॥३३॥नानेति॥ पुनःकथंभूतम् ॥ विविधमृगसमूहैर्व्याप्तम् ॥ पुनःकथंभूतम् ॥ विचित्रविहगैःशब्दितम् ॥ पुनःकथंभूतम् ॥ परितः सर्वतोवृतमावृतम् ॥ कैः नानाऽनेकानियानिसरितांसरसांचस्रोतांसिपल्वलानिचअल्पोदकजलाशयास्तैः ॥ अत्रसरसांस्रोतस्त्वंनामनिर्झरत्वमेव ॥ ३४ ॥ तुच्छश्रियइति ॥ पुनःकथंभूतम् विविधदेवनिकायैर्विष्वक्समंततोभोगेषु सर्वभोगेष्वित्यर्थः ॥ विष्वग्भोगानांवाइच्छयाउषितमध्युषितमाश्रितमितियावत् ॥ आश्रयणेहेतुंवदन्कारणगर्भयोत्प्रेक्षयासुरनिकायान्विशिनष्टि ॥ तुच्छाश्रीःशोभायासांतास्तथाविधाःस्वर्गभूमीःस्वर्गस्थानानिपरिहायपरित्यज्यागतैरिवेति॥ अयंभावः ॥ स्वर्गभुवामपुण्यहेतुत्वात्तच्छ्रियोपितथात्वेनापुण्यहेतुत्वात्तत्प्रतियोगित्वाच्चविंध्यस्यतच्छ्रियश्चनानासुरनि



१ सज्जातवर्णमितिवा ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कायानामध्युषितत्वामिति ॥ तदुक्तम् ॥ आर्यावर्त्तःपुण्यभूमिर्मध्यंविंध्यहिमालयोरिति ॥ इहापिचसंसारतापसंहारिरेवावारिपरिष्कृतामित्यादि ॥ ३९ ॥ उत्सृजंतमिति ॥ पुनःकथंभूतमिव ॥
इतस्ततःसर्वत्रपत्रपुष्पैःपतद्भिरितिशेषः ॥ पतत्पुष्पैरितिवापाठः ॥ अर्घ्यमुत्सृजंतमिवप्रयच्छंतमिवआत्मानंप्रतिअध्वगान्वाप्रति ॥ पुनःकथंभूतमिव ॥ केकामयूरस्यध्वनिः ॥ केकावाणी
मयूरस्येत्यमरः ॥ सावर्त्ततेयस्यसतथातस्यकेकिनोमयूरस्यकेकारवैःकेकाशब्दैर्दूरान्नारदमन्यान्वाऽध्वगान्प्रतिस्वागतंसुष्ठुआगतमागमनंकृतमितिकुर्वंतंकिलकुर्वंतमिवेत्युत्प्रेक्षा ॥ शाब्दीह्याकांक्षा
शब्देनैवपूर्यतइतिन्यायात्केकिशब्दःप्रयुक्तः ॥३६॥ एवंनारदस्यविंध्यदर्शनमुक्त्वाविंध्यस्यापिनारददर्शनमाह॥अथेति ॥ अथनारदेनस्वस्यदर्शनानंतरंनभसिशैलोनारदंददर्श॥दूराद्दूरतएवतंप्रत्युज्जगा
मचेत्यन्वयः ॥ ३७ ॥ ब्रह्मसून्विति ॥ हिरण्यगर्भतनयशरीरकांत्याविनाशितगुहातिमिरोमानसंतमोहृत्स्थमज्ञानमुज्जहौत्यक्तवान् ॥ ३८ ॥ ब्रह्मतेजइति ॥ ब्राह्मणोनारदस्यतेजसःप्रभा
वात्समुत्पन्नंसाध्वसंसंभ्रमोयस्यसतथा ॥ साधुयथास्यात्तथासतीसन्मार्गगाक्रियायस्य साधूनामिववासतीक्रियायस्यसतथा ॥ कठिनोपिपाषाणस्वभावोपिपरित्यज्यकाठिन्यमितिशेषः ॥ काठिन्यं

उत्सृजंतमिवार्घ्यंवैपत्रपुष्पैरितस्ततः ॥ केकिकेकारवैर्दूरात्कुर्वंतंस्वागतंकिल ॥ ३६ ॥ अथसूर्यशताभासंनभसिद्योतितांबरम् ॥ नारदंदृष्ट्वाञ्छैलो
दूरात्प्रत्युज्जगामतम् ॥ ३७ ॥ ब्रह्मसूनुवपुस्तेजोदूरीकृतदरीतमाः ॥ तमागच्छंतमालोक्यमानसंतमउज्जहौ ॥ ३८ ॥ ब्रह्मतेजःसमुद्भूतसाध्वसःसाधुस
त्क्रियः ॥ कठिनोपिपरित्यज्यधत्तेमृदुलतांकिल ॥ ३९ ॥ दृष्ट्वामृदुलतांतस्यद्वैरूप्येपिसनारदः ॥ मुमुदेसुतरांसंतःप्रश्रयग्राह्यमानसाः ॥ ४० ॥
गृहानायांतमालोक्यगुरुंवाऽगुरुमेववा ॥ योऽगुरुर्नम्रतांधत्तेसगुरुर्नगुरुर्गुरुः ॥ ४१ ॥ तंप्रत्युच्चैःशिराःसोपिविनम्रतरकंधरः ॥ शैलस्त्विलामिलन्मौलिः
प्रणनाममहामुनिम् ॥४२॥ तमुत्थाप्यकराग्राभ्यामाशीर्भिरभिनंद्यच ॥ तदुद्दिष्टासनंभेजेमनसोपिसमुच्छ्रितम् ॥४३॥ सदध्नामधुनाज्येननीराद्राक्षतदूर्व
या ॥ तिलैःकुशैःप्रसूनैस्तमष्टांगार्घ्यैरपूजयत् ॥ ४४ ॥ गृहीतार्घ्यंकिलश्रांतंपादसंवाहनादिभिः ॥ गतश्रममथालोक्यबभाषेऽवनतोगिरिः ॥ ४५ ॥

चेतिक्वचित्पाठः मृदुलतांकोमलताम् ॥ किलेतिनिश्चितम् ॥ कापट्यमकृत्वेत्येतत् ॥ धत्तेआधत्त ॥ ३९ ॥ दृष्ट्वेति ॥ द्विरूपमेवद्वैरूप्यंतस्मिन्नुभयरूपेपीत्यर्थः ॥ सुतरामातिशयेन ॥ युक्तमे
वैतदित्याह ॥ सन्तइति ॥ प्रश्रयेणविनयेनग्राह्यमायत्तंमानसमंतःकरणंयेषांतेतथा ॥ ४० ॥ गृहानिति ॥ अगुरुरितिपदच्छेदः ॥ गुरुरत्रगुरुतरोमहान्वा ॥ ४१ ॥ तंप्रतीति ॥ उच्चैरूर्ध्वंशिरोयस्य
उच्चैःशिराः ॥ अपिर्भिन्नक्रमे ॥ सशैलःउच्चैःशिराअपिविनम्रतरकंधरोऽतिप्रणतग्रीवःसंस्तंमहामुनिंप्रतिप्रणनामेत्यन्वयः ॥ प्रकृत्युच्चैरितिक्वचित् ॥ महांश्चासौमुनिश्चेतिमहामुनिस्तम् ॥ तत्रमहत्त्व
मप्रतिहतेच्छत्वनिवृत्तत्वसर्वतत्त्वज्ञत्वादित्वम् ॥ तदुक्तम् ॥ निवृत्तःसर्वतत्त्वज्ञःकामक्रोधविवर्जितः ध्यानस्थोनिष्क्रियोदांतस्तुल्यमृत्कांचनोमुनिरिति ॥ तुशब्दोभक्तिश्रद्धावद्योती ॥ तदवद्योतकमाह ॥
इलायांपृथिव्यांमिलतिपततिमौलिर्मस्तकंयस्यसतथोक्तः ॥४२॥ अभिनंद्यसमर्धयित्वा॥४३॥सदध्नेति ॥ नीरेणजलेनार्द्राःप्रक्षालिताइत्यर्थः॥ तेचतेअक्षताश्चेतिनीरार्द्राक्षतास्तैःसहदूर्वयेति४४॥४५॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अघेति ॥ रजोरजःस्वभावोगुणोवा ॥ महसातेजसा ॥ अपिर्भिन्नक्रमे ॥ अंतरेअंतःकरणेभवतीत्यांतरमज्ञानंतदपिपरिहृतमित्यर्थः ॥ ४६ ॥ सफलेति ॥ सुकृतैःपुण्यैःकर्तृभिःफलितमफलि ॥ ४७ ॥ धराधरत्वमिति ॥ कुलिषुपर्वतेषुमान्यंमानयोग्यंपूजार्हमित्येतत् ॥ किंचिदुच्छ्वस्यकिंचिद्यथास्यात्तथोच्छ्वासंमुक्त्वा ॥ ४८ ॥ कुलिवरःपर्वतेषुश्रेष्ठः ॥ मुनिवरमितिक्वचित्पाठः ॥ संभ्रमापन्नमानसःभयप्राप्तांतःकरणः ॥ ४९ ॥ अदृष्टमिति ॥ विष्टपत्रयेभुवनत्रयेयदिष्टमभिलषितंतत्त्वादृष्टमितिनदृष्टंपुराणैरितिशेषः ॥ यद्वा नोस्माकमदृष्टंभावितत्त्वदृष्टंगोचरइत्यर्थः ॥ अनुक्रोशो दया ॥ ५० ॥ त्वदिति ॥ मेदुरोमंथरः ॥ आनन्दगद्गदआरवआरावःशब्दोयस्यममसोहमसकृद्वक्तुंनसमर्थस्तथाप्येकंकथयामीत्यर्थः ॥ मेदुरारावत्वेहेतुमाह ॥ त्वदिति ॥ मेदुरोदरइति क्वचित्पाठः ॥ ५१ ॥ धरेति ॥ मेर्वादौधराधरणसामर्थ्यंपूर्वपूरुषैर्यद्वर्ण्यतेतत्तेषांसमुदायादेकीभावादहमेकःकेवलोऽन्यनिरपेक्षोधरांदधेइतिस्वस्योत्कर्षोक्तिः ॥ ५२ ॥ एवंसामान्येनविनिंद्यप्रत्येकंविनिंदति ॥ गौरीगुरुत्वादिति ॥ गुरुरत्रपिता ॥ आदिपत्यादादिपतित्वात् ॥ आधिपत्यादितिक्वचित्पाठः ॥ यदाहकालिदासः ॥ हिमालयोनामनगाधिराजइति ॥ सम्बन्धित्वात्श्वशुरत्वात् ॥

अघसद्यःपरिहृतंत्वदंघ्रिरजसारजः ॥ त्वदंगसंगिमहसासहसाऽप्यांतरंतमः ॥ ४६ ॥ सफलर्धिरहंचाद्यसुदिवाद्यचमेमुने ॥ प्राक्कृतैःसुकृतैरद्यफलितंमेचिरार्जितैः ॥ ४७ ॥ धराधरत्वंकुलिषुमान्यंमेऽद्यभविष्यति ॥ इतिश्रुत्वातदाकिंचिदुच्छ्वस्यस्थितवान्मुनिः ॥ ४८ ॥ पुनरूचेकुलिवरःसंभ्रमापन्नमानसः ॥ उच्छ्वासकारणंब्रह्मन्ब्रूहिसर्वार्थकोविद ॥ ४९ ॥ अदृष्टंतवनोदृष्टंयदिष्टंविष्टपत्रये ॥ अनुक्रोशोत्रमयिचेदुच्यतांप्रणतोस्म्यहम् ॥ ५० ॥ त्वदागमनजानन्दसंदोहैर्मेदुरारवः ॥ अलंनवक्तुमसकृत्तथाप्येकंवदाम्यहम् ॥ ५१ ॥ धराधरणसामर्थ्यंमेर्वादौपूर्वपूरुषैः ॥ वर्ण्यतेसमुदायात्तदहमेको दधे धराम् ॥ ५२ ॥ गौरीगुरुत्वाद्धिमवानादिपत्याच्चभूभृताम् ॥ संबंधित्वात्पशुपतेःसएकोमान्यभृत्सताम् ॥ ५३ ॥ नमेरुःस्वर्णपूर्णत्वाद्रत्नसानुतयाथवा ॥ सुरसद्मतयावापिक्वापिमान्योमतोमम ॥ ५४ ॥ परंशतंनकिंशैलाइलाकलनकेलयः ॥ इहसंतिसतांमान्यामान्यास्तेतुस्वभूमिषु ॥ ॥ ५५ ॥ मन्देहदेहसंदेहादुदयैकदयाश्रितः ॥ निषधोनौषधिधरोऽप्यस्तोप्यस्तमितप्रभः ॥ ५६ ॥

राजादिगुणरहितत्वात् ॥ स्वतोमान्योनभवतिगौरीपितृत्वादिपतित्वादिहेतुभिःसएकोमान्यइतिवक्रोक्त्यानिन्दा ॥ नाधिपत्याच्चेतिपाठेसाक्षादपिखण्डमण्डलाधिपत्यवन्मुख्याधिपत्याभावादिति ॥ मान्यभृत्सतांशिष्टानांमाननाधारी ॥ मान्यभूःसतामितिक्वचित्पाठः ॥ ५३ ॥ ननुसएकएवमान्यइतिकथमुच्यतेस्वर्णपूर्णत्वादिनासुमेरोरपिमान्यत्वादित्यतआह ॥ नमेरुरिति ॥ तस्याल्पसारत्वादितिभावः ॥ ५४ ॥ परमिति ॥ शतात्परंपरंशतम् ॥ परःशतमितिपाठेशतात्परंपरःशतंअसंख्यातमित्यर्थः ॥ इलाकलनकेलयः पृथ्वीधरणलीलाः ॥ ५५ ॥ मंदेहेति ॥ मन्देहाराक्षसास्तेषांदेहसंदेहादेहनाशंप्राप्यालोच्यउदयैकदयाश्रितः उदयःउदयगिरिः सचएकदयाश्रितश्चएषांमन्देहानांसूर्योदयेजीवनलक्षणांदयामाश्रितश्चसः ॥ मन्देहानामराक्षसाब्रह्मणःशापाद्रात्रौम्रियन्तेसूर्योदयेउदयपर्वतेपुनर्जीवन्तीतिवैष्णवादौप्रसिद्धम् ॥ उदयैकदयाश्रिताइतिपाठेस्पष्टएवार्थः ॥ निर्गताऔषधयोओषधयोवायस्मादसौनिषधः ॥ ओकारौकारेकाराणामश्रवणमार्षम् ॥ एवमुत्तरत्रापियथायथंसाधुत्वमवसेयम् ॥ तदुक्तम् ॥ पदज्ञैर्नातिनिर्बंधःकर्त्तव्योमुनिभाषणे अर्थस्मरणतात्पर्यान्नाद्रियंतेहिलक्षणम् ॥ किंच ॥ यान्युज्जहारमाहेशाद्व्यासोव्याकरणार्णवात् तानिकिंपदरत्नानिमां



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तिष्ठाणानिगोष्पदेइत्यादि ॥ ५६ ॥ नलिश्चेति ॥ नीलीनीलिमागुणस्तस्यानिलयःअन्धकाराश्रयइत्यर्थः ॥ अर्शआद्यच्प्रत्ययेनतथाप्रतीतेः ॥ मन्दलोचनःमन्दप्रकाशः ॥
मन्दंरोचतइतिमन्दलोचनः ॥ रायंधनम् ॥ ५७ ॥ हेमकूटइति ॥ कूटःकूटइतिशब्दउत्तरपदंयेषांतेतथा ॥ एवार्थेतुशब्दः ॥ कूटोत्तरपदाएवतइत्यर्थः ॥ किष्किंधेति ॥ आदिपदेन
मैनाकादयोगृह्यंते ॥ क्षुद्रत्वात्तेषामितिभावः ॥ ५८ ॥ इतिअखर्वगर्वसंसर्गोमहाभिमानसंश्लेषइत्यर्थः ॥ ५९ ॥ श्रीशैलेति ॥ श्रीशैलोमुख्यःप्रधानोयेषाम् ॥ मन्दरमधु
सूदनोगौडेप्रसिद्धः ॥ मन्दरादीनांतेतथा ॥ तदुक्तम् ॥ वीरचन्दनयोर्मध्येमन्दरोनामपर्वतः ॥ यस्यारोहणमात्रेणनरोनारायणोभवेदित्यादि ॥ अत्रापिचवक्ष्यति ॥ श्रीशैलशिखरंश्रीम

नीलश्चनीलीनिलयोमन्दरोमन्दलोचनः ॥ सर्पालयःसमलयोरायंनावैतिरैवतः ॥ ५७ ॥ हेमकूटत्रिकूटाद्याःकूटोत्तरपदास्तुते ॥ किष्किंधक्रौं
चसह्याद्याभारसह्यानतेभुवः ॥ ५८ ॥ इतिविंध्यवचःश्रुत्वानारदोऽचिन्तयद्धृदि ॥ अखर्वगर्वसंसर्गोनमहत्त्वायकल्पते ॥ ५९ ॥ श्रीशैलमुख्याः
किंशैलानेहसंत्यमलश्रियः ॥ येषांशिखरमात्रादिदर्शनंमुक्तयेसताम् ॥ ६० ॥ अथास्यबलमालोक्यमितिध्यात्वाब्रवीन्मुनिः ॥ सत्यमुक्तंहिभवतागि
रिसारंविवृण्वता ॥ ६१ ॥ परंशैलेषुशैलेंद्रोमेरुस्त्वामवमन्यते ॥ मयानिःश्वसितंचैतत्त्वयिचापिनिवेदितम् ॥ ६२ ॥ अथवामादृशानांहिकेयं
चिंतामहात्मनाम् ॥ स्वस्त्यस्तुतुभ्यमित्युक्त्वाययौसव्योमवर्त्मनि ॥ ६३ ॥ गतेमुनौनिनिंदस्वमतीवोद्विग्नमानसः ॥ चिन्तामवापमहतींविंध्यो
वंध्यमनोरथः ॥ ६४ ॥ विंध्यउवाच ॥ ॥ धिग्जीवितंशास्त्रकलोज्झितस्यधिग्जीवितंचोद्यमवर्जितस्य ॥ धिग्जीवितंज्ञातिपराजितस्यधिग्जीवितं
व्यर्थमनोरथस्य ॥ ६५ ॥ कथंभुनक्तिसदिवाकथंरात्रौस्वपित्यहो ॥ रहःशर्मकथंतस्ययस्याभिभवनारिपोः ॥ ६६ ॥ अहोदवाग्निदवथुस्तथामां
नसबाधते ॥ बाधतेतुयथाचित्तेचिन्तासंतापसंततिः ॥ ६७ ॥ युक्तमुक्तंपुराविद्भिश्चिन्तामूर्तिःसुदारुणा ॥ नभेषजैर्लंघनैर्वानचान्यैरुपशाम्यति ॥ ६८ ॥
चिन्ताज्वरोमनुष्याणांक्षुधांनिद्रांबलंहरेत् ॥ रूपमुत्साहबुद्धिंश्रींजीवितंचनसंशयः ॥ ६९ ॥

दिदन्तद्यद्विलोकनात् ॥ पुनर्भवोमनुष्याणांभवेत्रनभवेत्कचिदिति ॥ आदिपदेनसानुमात्रादीनिगृह्यंते ॥ ६० ॥ आलोक्यंज्ञातव्यम् ॥ सत्याभिति ॥ गिरिसारंपर्वतानांसामर्थ्यंविवृण्वतादर्श
यताउपहासपरोहिशब्दः ॥ ६१ ॥ ६२ अथवेति ॥ महात्मनामुदारचित्तानाम् ॥ अथवामहतिब्रह्मणिआत्मायेषांतेतथातेषाम् ॥ हिशब्दोऽरुचौ ॥ ६३ ॥ गतइति ॥ वंध्यमनोरथोव्यर्था
भिलाषः ॥ ६४ ॥ धिगिति ॥ कलालेशोविद्यावा ॥ ६५ ॥ कथमिति ॥ दिवादिवसे ॥ भुनक्तिभुंक्ते ॥ रहइतिग्राम्यधर्मोक्तिः ॥ अथवारहःशर्मएकांतवासजन्यंसुखम् ॥
॥ ६६ ॥ अहोइति ॥ दवाग्निदवथुर्वनाग्निकंपः ॥ बाधतेतुबाधतएव ॥ पादपूरणेवातुशब्दः ॥ तुहिचस्महवैपादपूरणइत्यमरः ॥ एवमन्यत्रापि ॥ ६७ ॥ ६८ ॥ चिन्ताज्वरइति ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

उत्साहवुद्धिं उत्साहेनसहितांबुद्धिम् ॥ उत्साहबुद्धिश्रीरितिवापाठः ॥ ६९ ॥ ज्वरइति ॥ नवतांतरुणताम् ॥ ७० ॥ धन्यइति ॥ चरकश्चरकाचार्यआयुर्वेदप्रवर्त्तकः ॥ इह चिंताज्वरे ॥ नवरतिनप्रभवतीत्यर्थः ॥ नासत्यौअश्विनीकुमारावपिनासत्यौनआईषदपिसमर्थौ ॥ यथार्थावित्यर्थः ॥ नशब्दोनिषेधे ॥ अभावेनह्यनोनेत्यमरः ॥ ७१ ॥ जयोपायंविमृशति ॥ किंकरोमीति ॥ जयोपायंविनिश्चित्यस्वयमेवस्वात्मानमाह ॥ अतइतःस्थानात्तस्यशिरस्युत्प्लुत्योत्फालंकृत्वापतामीति ॥ स्वयमेवनिराकरोति ॥ नपतामीति ॥ ७२ ॥ किमित्याकांक्षायामाह ॥ शक्रंकोपयतेति ॥ यत्रजये ॥ यस्माद्वापक्षस्यममचेष्टितंधिक् ॥ धिगित्यधिक्षेपे ॥ धिग्गर्हितमित्यर्थः ॥ ७३ ॥ मेरोःस्पर्धास्वस्मिन्विघटयति ॥ अथवेति ॥ स्पर्धायांकारणाभावादित्यर्थः ॥ पुनःस्पर्धासंभावयति ॥ भूमिभारभृतइति ॥ महाभारंदधानाःप्रायःप्रायशोभ्रांतिभूमयोऽज्ञानाश्रयाभवंतीत्यर्थः ॥ भूमभर्मेतिपाठेबहुस्वर्णानिबहुधनानिदधतइत्यर्थः ॥ तपनीयंशातकुंभंगांगेयंभर्मकर्बुरमित्यमरः ॥ ७४ ॥ स्पर्धायांहेत्वंतरमुद्भावयाति ॥ अलीकवाक्कमिति ॥ अलीकवाक्कासंभवेहेतुंवदन्नारदंविशिनष्टि ॥ ब्रह्मेति ॥ ब्रह्मणिपरमात्मनिश्रवण

ज्वरोव्यतीतेषडहेजीर्णज्वरइहोच्यते ॥ असौचिन्ताज्वरस्तीव्रःप्रत्यहंनवतांव्रजेत् ॥ ७० ॥ धन्योधन्वंतरिर्नात्रचरकश्चरतीहन ॥ नासत्यावपिनाऽसत्यावत्रचिन्ताज्वरेकिल ॥ ७१ ॥ किंकरोमिक्वगच्छामिकथंमेरुंजयाम्यहम् ॥ उत्प्लुत्यतस्यशिरसिपतामिनपताम्यतः ॥ ७२ ॥ शक्रंकोपयतापूर्वमस्मद्गोत्रेणकेनचित् ॥ पक्षहीनःकृतोयत्रधिगपक्षस्यचेष्टितम् ॥ ७३ ॥ अथवासकथंमेरुस्तथोच्चैःस्पर्द्धतेमया ॥ भूमेर्भारभृतःप्रायोभवंतिभ्रांतिभूमयः ॥ ७४ ॥ अलीकवाक्कमथवासंभाव्यंनारदेकथम् ॥ ब्रह्मचारिणिवेदज्ञेसत्यलोकनिवासिनि ॥ ७५ ॥ युक्तायुक्तविचारोथमादृशेनोपयुज्यते ॥ पराक्रमेष्वशक्तानांविचारंगाहतेमनः ॥ ७६ ॥ अथवाचिन्तनैरेतैःकिंव्यर्थैर्विश्वकारकम् ॥ विश्वेशंशरणंयायांसमेबुद्धिंप्रदास्यति ॥ ७७ ॥ अनाथनाथःसर्वेषांविश्वनाथोहिगीयते ॥ क्षणंमनसिसंचिंत्यभवेदित्थमसंशयम् ॥ ७८ ॥ एतदेवकरिष्यामिनेष्टंकालविलंबनम् ॥ विचक्षणैरुपेक्ष्यौनवर्द्धमानौपरामयौ ॥ ७९ ॥ मेरुंप्रदक्षिणीकुर्यान्नित्यमेवदिवाकरः ॥ सग्रहर्क्षगणोनूनंमन्यमानोबलाधिकम् ॥ ८० ॥ इतिनिश्चित्यविन्ध्याद्रिर्ववृधेसमृधेक्षणः ॥ अनंतगगनस्यांतंकुर्वद्भिःशिखरैरिव ॥ ८१ ॥

मननादिपूर्वकंचरितुंशीलंयस्यसतथातस्मिन् ॥ अतएववेदनंवेदःस्वप्रकाशश्चिदात्मातंजानातीतितथातस्मिन् ॥ अतएवसत्यःकालत्रयाऽबाध्यःपरमात्मासएवलोक्यतेमुमुक्षुभिःप्राप्यतइतिलोकस्तस्मिन्निवसितुमद्वैतब्रह्मात्मैक्यानुभवेनस्थातुंशीलंयस्यसतथातस्मिन् ॥ प्राकृतंव्याख्यानंस्पष्टम् ॥ ७५ ॥ अतोनारदस्यालीकवाक्कंयुक्तमयुक्तंवाऽयंविचारोवामयिनोपयुज्यतइत्याह ॥ युक्तायुक्तेति ॥ तर्हिकिमुपयुज्यतेउद्यमएवेत्याह ॥ पराक्रमेष्विति ॥ ७६ ॥ करोतुनामनीतिज्ञोव्यवसायमितस्ततः ॥ फलंपुनस्तदेवास्ययद्विधेर्मनसिस्थितमितिन्यायादुद्यमोनैकांतिकफलइतिहृदिनिधायाह ॥ अथवेति ॥ ७७ ॥ अन्तर्यामिप्रेरितोनिश्चयंविदधाति ॥ क्षणमितिश्लोकेन ॥ ७८ ॥ कालाविलंबनेहेतुमाह ॥ विचक्षणैरिति ॥ परामयौशत्रुरोगौ ॥ ७९ ॥ ८० ॥ इतिनिश्चित्येति ॥ सविंध्यइत्येवंनिश्चित्यववृधइत्यन्वयः ॥ मृधेक्षणः मृधेसंग्रामेस्पर्धायामित्येतत्तुईक्षणंदर्शनंअभिनिवेशोयस्यसतथा ॥ समृधेषणइत्येकपद्यपाठेसम्यक्ऋध्सऋधःसम्यग्वृद्धिरिति

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यावत् ॥ तत्रैषणाइच्छायस्यसतथा ॥ ८१ ॥ सम्यग्वृद्धीच्छयाभिवृद्धौपरामर्शपूर्वकंहेतुमाह ॥ कैश्चिदिति ॥ ८२ ॥ निरुद्धयेतिव्यासोक्तिः ॥ अत्रअनंतगगनस्यांतंकुर्वद्भिरिवशिखरैर्ववृध
इतिवचनात् ॥ निरुध्यब्राध्नमध्वानंकृतकृत्यइव स्वस्थोभवदित्युक्तेश्चदक्षिणोत्तरमार्गयोरवरोधोवगम्यते ॥ अतएवाग्रेवक्ष्यति ॥ क्रमंतःसर्वमर्वतोहेलयाहेलिकस्यखम् ॥ नशेकुरग्रतोगन्तुमतोनू
रुर्व्यंजिज्ञपदित्यादि ॥ ननुप्रबलतरवैरिणिसतिसुस्थताऽयुक्तेत्यतआह ॥ भवाधीनेति ॥ भवत्यस्मादितिभवोऽदृष्टंतदधीनातदायत्तेत्यर्थः ॥ भवईश्वरस्तदधीनावा ॥ ८३ ॥ ननुसूर्यमार्गा
वरोधेकथंकृतकृत्यतातत्राह ॥ यमद्येति ॥ यमकर्तासूर्यः ॥ महितःपूजितः ॥ ८४ ॥ ननुशक्तस्यपरानुपद्राव्यस्वसामर्थ्यदर्शनेनकिंतत्राह ॥ यावदिति ॥ सामर्थ्यादर्शनेलंघनेदृष्टांतो
ज्वलनइति ॥ दारुगःकाष्ठगः ॥ ८५ ॥ ८६ ॥ ॥ इतिश्रीकाशीखंडेरामानंदकृतायांटीकायांप्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ द्वितीयेतरणेर्याननिरोधोनिमिषद्दृशाम् ॥ सत्यलोक
स्यसंप्राप्तिःप्रभावश्चनिगद्यते ॥ १ ॥ विंध्यावरोधेनसूर्यगमननिरोधंवक्तुमादौतावत्तस्योदयमाह ॥ सूर्यआत्मेति ॥ सूर्यउदयागिरौ ॥ अत्रउदयगिरिरस्तगिरिरितिचज्योतिःशास्त्रप्रक्रिययाब्रह्म

कैश्चित्सार्द्धंविरोधोनकर्तव्यःकेनचित्क्वचित् ॥ कर्तव्यश्चेत्प्रयत्नेनयथानोपहसेज्जनः ॥ ८२ ॥ निरुध्यब्राध्नमध्वानंकृतकृत्यइवाद्रिराट् ॥ स्वस्थोऽ
भवद्भवाधीनाप्राणिनांहिभविष्यता ॥ ८३ ॥ यमद्ययमकर्तासौदक्षिणंप्रक्रमिष्यति ॥ सकुलीनःसचश्रीमान्समहान्महितः सच ॥ ८४ ॥ यावत्स्वश
क्तिंशक्तोपिनदर्शयतिकर्हिचित् ॥ तावत्सलंघ्यःसर्वेषांज्वलनोदारुगोयथा ॥ ८५ ॥ इतिचिन्तामहाभारंत्यक्त्वातस्थौस्थिरोद्यमः ॥ आकांक्षमाणस्तरणे
रुदयंब्राह्मणोयथा ॥ ८६ ॥ इति श्रीस्कान्देमहापुराणे एकाशीतिसाहस्र्यां संहितायां चतुर्थेकाशीखंडेपूर्वार्धेविन्ध्यवर्धनंनामप्रथमोऽध्यायः ॥ १ ॥
व्यासउवाच ॥ सूर्यआत्मास्यजगतस्तस्थुषस्तमसोरिपुः ॥ उदियायोदयगिरौशुचिप्रसृमरैः करैः ॥ १ ॥ संवर्धयन्सतांधर्मान्न्यक्कुर्वंस्तामसींस्थि
तिम् ॥ पद्मिनींबोधयंस्त्विष्टांरात्रौमुकुलिताननाम् ॥ २ ॥ हव्यंकव्यंभूतबलिंदेवादीनांप्रवर्तयन् ॥ प्राह्णापराह्णमध्याह्नक्रियाकालंविजृंभयन् ॥ ३ ॥

सिद्धांतशिरोमण्याद्युक्तयाज्ञेयः ॥ तत्रहि पातालादुद्गच्छन्सूर्योयत्रयैर्दृश्यतेसतेषामुदयाचलः ॥ भूमेःपातालंगच्छन्यत्रादृश्योभवतिसोस्ताचलः ॥ तथापुराणप्रक्रियायांच ॥ यैर्यत्रदृश्यतेभा
स्वान्सतेषामुदयःस्मृतः ॥ यत्रचादर्शनंयातितत्रैवास्तमनंविदुः ॥ नैवास्तमनमर्कस्यनोदयःसर्वदासतः ॥ उदयास्तमनाख्यंहिदर्शनादर्शनंरवेरित्युक्तत्वात्प्रथमदर्शनोपलक्षितःप्रदेशउदयागिरिः ॥
प्रथमादर्शनोपलक्षितःप्रदेशोस्तगिरिरिति ॥ उदियायउदगादुदितइतियावदित्यन्वयः ॥ किंभूतः ॥ जंगमस्यस्थावरस्यचात्माफलरूपः ॥ योसावादित्येपुरुषःसोसावहमितिश्रुतेः ॥ फल
रूपत्वेहेतुमाह ॥ तमसोरिपुरिति ॥ तमसोऽज्ञानस्यतत्त्वमस्यादिवाक्योत्थबुद्धिवृत्त्यभिव्यक्तःसन्रिपुर्नाशकइत्यर्थः ॥ प्राकृतंव्याख्यानंस्पष्टम् ॥ किंकुर्वन् ॥ शुचिप्रसृमरैःशुचयश्चतेपावित्र्य
हेतुत्वात्प्रसृमराश्चप्रसरणशीलास्तैःकरैरश्मिभिः ॥ १ ॥ सतांसन्मार्गवर्तिनांधर्मान्वैदिकीःक्रियाःसंवर्धयन्तमसइयंतामसीतमोगुणयुक्तानांतामसानांवाइयंतामसीतांतामसींस्थितिंनिष्ठांन्यक्कुर्व
स्तिरस्कुर्वन्निति ॥ इष्टामभिप्रेताम् ॥ अभिप्रेतत्वंचास्याःकरैर्धृतत्वात् ॥ तुश्चार्थेसमुच्चयवाचीबोधयंश्चेत्यर्थः ॥ २ ॥ हव्यंदेवेभ्योदेयम् ॥ कव्यंपितृभ्योदेयम् ॥ भूतबलिंभूतेभ्योदेयम् ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विजृंभयन्कुर्वन्निति ॥ ३ ॥ असतामिति ॥ तमसस्तमोगुणस्य ॥ यामिनीरात्रिःसैवकालस्तेनकलितंगिलितम् ॥ ४ ॥ यस्मिन्निति ॥ पुण्यजनोदयः पुण्यजनामंदेहाख्याराक्षासाः ॥ यातुधानःपुण्यजनोनैर्ऋतोयातुरक्षसीत्यमरः ॥ सूर्योदयात्पूर्वंतेषामुत्पत्तेः ॥ पुण्यजनाधार्मिकालोकाइतिवा ॥ तेषामुदयउत्कर्षः ॥ अनुदितइतिपाठेपुण्यजनाःसामान्यराक्षसाः ॥ उदयास्तमनेदिनरात्रित्वेनानिरूपयन्परोपकारस्यसद्यःफलवत्त्वमाह ॥ अहोइति ॥ अहोइत्याश्चर्ये ॥ ५ ॥ सायमिति ॥ प्राचींपूर्वांदिशमाश्वास्यसांत्वयित्वातथाग्नेयींदिशांनाथःदक्षिणांदिशं प्रतिप्रस्थितवानप्रयाणंकृतवानितिषष्ठेनान्वयः ॥ आश्वास्येत्यनेनाकांक्षितंहेतुमाह ॥ सानुरागेति ॥ अनुरागोऽनूरुकिरणस्तेनसार्धंवर्त्तमानायेकराररश्मयस्तेषांस्पर्शास्तैः ॥ कथंभूतांप्राचीम् ॥ खण्डितांप्रातःकालेप्राप्तात्मनाथाम् ॥ तदुक्तम् ॥ निद्राकषायमुकुलीकृतचारुनेत्रोनारीनखव्रणचयेनचचर्चितांगः ॥ यस्याःकुतोपिपतिरेतिगृहेप्रभातेसाखंडितेतिकथिताकविभिःपुराणैरिति ॥ तत्रनितरांद्रातिस्वकार्यंव्याप्नोतीतिनिद्राअविद्यासैवकषायःतत्त्वज्ञानमंतरेणदुस्त्यजत्वात्तेनमुकुलीकृतमाच्छादितंचारुनेत्रमुत्तमज्ञानंयस्यसानिद्राकषायमुकुलीकृतचारुनेत्रः ॥ तथामंदेहानांराक्षसानांनारीनखनामानोनारीनखतुल्यावायेबाणास्तैर्योव्रणचयःक्षतसमुदायस्तेनचर्चितानिचिह्नितानिअंगानियस्येत्येतदपिविशेषणद्वयंसूर्यपक्षेयोजनीयम् ॥ ६ ॥ ननुप्रणयकोपितायाःकांतायाःसानुरागकरस्पर्श

असतांहृदिवक्रेषुनिर्दिशंस्तमसःस्थितिम् ॥ यामिनीकालकलितंजगदुज्जीवयन्पुनः ॥ ४ ॥ यस्मिन्नभ्युदितेजातःसम्यक्पुण्यजनोदयः ॥ अहोपरोपकरणंसद्यःफलतिनेतिचेत् ॥ ५ ॥ सायमस्तमितःप्रातःकथंजीवेद्रविःपुनः ॥ सानुरागकरस्पर्शैःप्राचीमाश्वास्यखंडिताम् ॥ ६ ॥ यामंभुक्त्वा तथाग्नेयींज्वलंतींविरहादिव ॥ लवंगैलामृगमदचंद्रचंदनचर्चिताम् ॥ ७ ॥ तांबूलीरागरक्तोष्ठींद्राक्षास्तबकसुस्तनीम् ॥ लवलीवल्लिदोर्वल्लींकंकोलीपल्लवांगुलिम् ॥ ८ ॥ मलयानिलनिःश्वासांक्षीरोदकवरांबराम् ॥ त्रिकूटस्वर्णरत्नांगींसुवेलाद्रिनितंबिनीम् ॥ ९ ॥ कावेरीगौतमीजंघांचोलचोलांशुकावृताम् ॥ सह्यदर्दुरवक्षोजांकांतीकांचीविभूषणाम् ॥ १० ॥

मात्रेणांकितत्राह ॥ यामंभुक्त्वेति ॥ यामंप्रहरमात्रंचभुक्त्वा ॥ भोगोऽत्रतस्यास्तमआद्युत्सारणेनपालनमेव ॥ आग्नेय्याविशेषणंविरहादिति ॥ विरहाद्विरहजन्यखेदादित्यर्थः ॥ ज्वलंतीमग्निवत्प्रस्फुरंतीम् ॥ अतएवोक्तमाग्नेयीमिति ॥ उभयोर्वाविशेषणम् ॥ पक्षांतरेव्याख्यानंस्पष्टम् ॥ इदानींदक्षिणांदिशंविशेषयन्स्त्रीसाम्यार्थानिविशेषणान्याह ॥ लवंगैलामृगमदेत्यादिचतुर्भिः ॥ चन्द्रःकर्पूरः ॥ अथकर्पूरमस्त्रियाम् घनसारश्चंद्रसंज्ञइत्यमरः ॥ ७ ॥ तांबूलीति ॥ तांबूलीनागवल्ल्याख्यालता ॥ द्राक्षामृद्वीका ॥ स्तबकोगुच्छः ॥ सुस्तनीमित्यत्रस्तनशब्देनस्तनाग्रंलक्ष्यते ॥ सह्यदर्दुरवक्षोजामित्यनेनस्तनयोर्वक्ष्यमाणत्वात् ॥ लवलीवल्लिर्लवलीलतासैवदोर्वल्लीबाहुलतायस्याःसातथाताम् ॥ कंकोलीअशोकस्तस्याःपल्लवाःकिसलयान्येवांगुलयोयस्याःसातथाताम् ॥ ८ ॥ त्रिकूटस्थानियानिस्वर्णरत्नानितान्यंगेषुयस्याःसातथाताम् ॥ रक्तांगीमितिपाठेत्रिकूटस्वर्णैरक्तानिरंजितानिभूषितान्यंगानियस्यास्ताम् ॥ सुवेलश्चासावद्रिश्चेतिसुवेलाद्रिस्सएवनितंबःस्त्रीकट्याःपश्चाद्भागःसवर्त्ततेयस्याःसातथाताम् ॥ ९ ॥ कावेरीति ॥ जंघाप्रसृताजानुनोरधोभागइतियावत् ॥ चोलचोलौदेशविशेषौतावेवांशुकम् ॥ यद्वा चोलदेशएवचोलःकूर्पासकःकंचुकीतियावत चोलःकूर्पासकोस्त्रियामित्यमरः ॥ यद्वा भामासत्यभामेतिवन्निचोलएवचोलःप्रच्छदपटः ॥ निचोलःप्रच्छदपटइत्यमरः ॥ तेनावृतां कांतीपुर्येवकांचीमेखला ॥ स्त्रीकट्यांमेखलाकांची



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्यमरः ॥ सेवतयावाविभूषणंयस्याःसातथाताम् ॥ कांचीतिक्वचित्पाठः ॥ कांचीस्यान्मेखलादाम्निप्रभेदेनगरस्यचेतिमेदिनीकारः ॥ १० ॥ सुकोमलेति ॥ वाग्विलासोवाक्यविशेषोवाचा तुर्यमितियावत् ॥ यांदाक्षिणांदिशं ॥ महालक्ष्मीःकोलापुराधिष्ठात्री ॥ ११ ॥ सुदक्षेति ॥ सुदक्षाचासौदक्षिणाचेतिसुदक्षदक्षिणाताम् ॥ सुदक्षताचास्याःश्राद्धादिकर्मणिप्रशस्तत्वात् ॥ हेसुदक्षेतिसूतसंबोधनंवा ॥ क्रमंतइति ॥ हेलिकस्यसूर्यस्य ॥ रश्चुतेर्लश्रुतिरितिवचनात् हेआकाशेरिंगतिगच्छतीतिव्युत्पत्तेः ॥ हेलिकश्चित्रभानुश्चेतिसूर्यनामसप्ततिमध्येवक्ष्यमाणत्वाच्च ॥ क्रमेणसर्वंखमाकाशंक्रमंतोगच्छंतोऽर्वंतोऽश्वाअग्रेगंतुंयदानशेकुस्तदातदनंतरमितिवाअनूरुःसूर्यरथयंता ॥ सूरसूतोऽरुणोऽनूरुःकाश्यपिर्गरुडाग्रजइत्यमरः ॥ व्यजिज्ञपत्विज्ञापयामाससूर्योमितिशेषः क्रमंतोच्चैर्हयास्तस्येतिक्वचित्पाठः ॥ तदासंधिरार्षः ॥ १२ ॥ १३ ॥ विज्ञापनमेवाह ॥ भानोइति ॥ एतज्ज्ञानंचास्यापृष्टेनतेनकथनादनुमानात्सर्वज्ञत्वाद्वेतिबोद्धव्यम् ॥ १४ ॥ अनूरुवाक्यमिति ॥ अतिशयितोविस्मयोयस्यससविताहृद्यचिंतयदित्यन्वयः ॥ अत्रविस्मयइतिक्वचित्पाठः ॥ पुनरर्थेचशब्दः ॥ १५ ॥ सूरइति ॥ सूरःसूर्यःशूरोपिसमर्थोपिकिंकुर्यात् ॥ अशूरेणहतःशूरएकेनापिशतंहतामितिन्यायादित्यर्थः ॥ एकोऽसहायः ॥ १६ ॥ राहुबाहुग्रहव्यग्रइति ॥ उद्यतेकंठादधःक्रियतेभुक्तंपीतंचानेनेतिबाहुर्मुखम् ॥ विधुंतुदमुखग्रहणेनाकुलित

सुकोमलमहाराष्ट्रीवाग्विलासमनोहराम् ॥ अद्यापिनमहालक्ष्मीर्यांविमुंचतिसद्गुणाम् ॥११॥ सुदक्षदक्षिणामाशामाशानाथः प्रतस्थिवान् ॥ क्रमंतः सर्वमर्वन्तोहेलयाहेलिकस्यखम् ॥१२॥ नशेकुरग्रतोगंतुंततोऽनूरुर्व्यजिज्ञपत् ॥१३॥ अनूरुरुवाच ॥ ॥ भानोमानोन्नतोविन्ध्योनिरुद्ध्ययगगनंस्थितः ॥ स्पर्धतेमेरुणाप्रेप्सुस्त्वद्दत्तांतुप्रदक्षिणाम् ॥१४॥ अनूरुवाक्यमाकर्ण्यसविताहृद्यचिन्तयत् ॥ अहोगगनमार्गोपिरुध्यतेचातिविस्मयः ॥ १५ ॥ व्यासउवाच ॥ ॥ सूरःशूरोपिकिंकुर्यात्प्रांतरेवर्त्मनिस्थितः ॥ त्वरावानपिकोरुद्धंमार्गमेकोविलंघयेत् ॥ १६ ॥ राहुबाहुग्रहव्यग्रोयः क्षणंनावतिष्ठति ॥ शून्यमार्गेनिरुद्धःसकिंकरोतुविधिर्बली ॥ १७ ॥ योजनानांसहस्रेद्वेद्वेशतेद्वेचयोजने ॥ योजनस्यनिमेषार्धाद्यातिसोपिचिरंस्थितः ॥ १८ ॥ गतेबहुतिथेकालेप्राच्योदीच्याभृशार्दिताः ॥ चण्डरश्मेःकरव्रातपातसन्तापतापिताः ॥ १९ ॥ पाश्चात्यादक्षिणात्याश्चनिद्रामुद्रितलोचनाः ॥ शयिताएववीक्षन्तेसतारग्रहमंबरम् ॥२०॥ अहोनाहस्कराभावान्निशानैवाऽनिशाकरात् ॥ अस्तंगतर्क्षान्नभसःकःकालस्त्वेष नेक्ष्यते ॥२१॥

इत्यर्थः ॥ उक्तंच ॥ भानुर्विधुंतुदमुखाकुलितैकपार्श्वःपार्श्वांतरेण जगतांतिमिरंनिहंतीति ॥ यद्वा हस्तिरूपधारिणोराहोर्बाहुग्रहेणकराकर्षणेनव्यग्रआकुलइतिव्याख्येयम् ॥ राहुर्हस्तीभूत्वा सूर्याचंद्रमसौग्रसतीतिश्रुतेः ॥ अवतिष्ठतिअवतिष्ठते ॥ प्राकृतंव्याख्यानंस्पष्टम् ॥ विधिर्ब्रह्माईश्वरोऽदृष्टंवा ॥ १७ ॥ योजनानामिति ॥ जनस्यमनुष्यस्ययोजनानांक्रोशचतुष्टयानांसहस्रेद्वेइत्याद्यन्वयः ॥ यःसूर्यः ॥ १८ ॥ १९ ॥ पाश्चात्याइति ॥ सतारेति ॥ ताराअश्विन्यादिव्यतिरिक्तानिनक्षत्राणिनक्षत्रमात्राणिवा ग्रहामंगलादयस्तैःसार्द्धमंबरमिति ॥ २० ॥ पूर्वादिदिग्भवानांप्रजानांव्याकुलतामाह ॥ अहोइति ॥ अयमर्थः ॥ एषकःकालःकिंदिनंकिंवारात्रिर्नेक्ष्यतेनलक्ष्यतइत्यर्थः ॥ ननुदिनंभविष्यतिसूर्यस्यविद्यमानत्वादित्याशंक्याह ॥ अहोनाहस्कराभावादिति ॥ अयंकालोऽहर्दिनंनभवति ॥ कुतोहस्कराभावात् ॥ भावप्रधानोयंनिर्देशः ॥ सूर्योदयमारभ्यप्रहरचतुष्टयंहिअहरित्युच्यते ॥ तस्यचातीतत्वात्पश्चात्सूर्यस्यअहस्कर्तृत्वाभावादितिभावः ॥ तर्हिनिशाभविष्यतितत्राह ॥ निशानैवानिशाकरादिति ॥ चंद्राभावादित्यर्थः ॥ ननुचंद्राभावेपिअमावास्यादौनिशादृश्यतेतत्राह ॥ अस्तंगतर्क्षान्नभसइति ॥ अस्तमदर्शनंगतानि

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

प्राप्तानिऋक्षाणिनक्षत्राणियस्मिंस्तस्मान्नभसआकाशाद्धेतोरित्यर्थः ॥ प्राच्योदीच्यव्याकुलतायामित्थंव्याख्यातम् ॥ पाश्चात्यदाक्षिणात्यव्याकुलतायांग्रंथार्थोऽतिरोहितएव ॥ नचास्मिन्पक्षेशयिताएववीक्षंतेसतारग्रहमंबरमित्येननविरोधः अस्तंगतंगतंगमनंयेषांतान्यस्तंगतानिऋक्षाणियस्मिंस्तदस्तंगतर्क्षंतस्मान्नभसइतिव्याख्यानात ॥ ऐकपद्यपाठेछंदोभंगआर्षः ॥ एतदुक्तंभवति ॥ चंद्रसूर्ययोर्गतौस्तंभितायांसत्यां ततः प्रागगतानांग्रहर्क्षताराणामपिसंचाराभावेनरात्रिलक्षणाभावाद्रात्रिर्नभवतीत्यर्थः ॥ नचनिरस्तैतद्वीपवर्तिरविरश्मिजालःकालविशेषोरात्रिरितिरात्रेर्लक्षणस्यसद्भावात्पाश्चात्यदाक्षिणात्यानांरात्रिर्भविष्यतीतिवाच्यम् ॥ तदाएतदित्यादिविशेषणवैयर्थ्येनलक्षणस्याकिंचित्करत्वादितिभावः ॥ २१ ॥ ब्रह्मांडमिति ॥ अकांडेऽनवसरे ॥ कांडोऽस्त्रीदंडबाणार्ववर्गावसरवारिष्वित्यमरः ॥ परापतंतियातायातंकुर्वंति ॥ पारंपरतीरम् ॥ अवारंअर्वाक्तीरम् ॥ पारावारेपरार्वाचीतीरेइतिवचनात् ॥ तत्रभवास्तत्संबंधिन्योवापारावाराःप्रजाइतिशेषः ॥ २२ ॥ पंचयज्ञात ॥ देवयज्ञपितृयज्ञभूतयज्ञब्रह्मयज्ञमनुष्ययज्ञाइतिपंचतेषामनुष्ठानाभावादित्यर्थः ॥ २३ ॥ सवितातत्रकारणमिति ॥

ब्रह्मांडंकिमकांडेवैलयमेष्यतितत्कथम् ॥ परापतंतिनाद्यापिपारावाराइतस्ततः ॥ २२ ॥ स्वाहास्वधावषट्कारवर्जितेजगतीतले ॥ पंचयज्ञक्रियालोपाच्चकंपेभुवनत्रयम् ॥ २३ ॥ सूर्योदयात्प्रवर्ततेयज्ञाद्याःसकलाःक्रियाः ॥ ताभिर्यज्ञभुजांतृप्तिःसवितातत्रकारणम् ॥ २४ ॥ चित्रगुप्तादयःसर्वेकालंजानंतिसूर्यतः ॥ स्थितिसर्गविसर्गाणांकारणंकेवलंरविः ॥ २५ ॥ तत्सूर्यस्यगतिस्तंभात्स्तंभितंभुवनत्रयम् ॥ यद्यत्रतत्स्थितंतत्रचित्रन्यस्तमिवाखिलम् ॥ २६ ॥ एकतस्तिमिरात्रेशादेकतस्तुदिवातपात् ॥ बहूनांप्रलयोजातःकांदिशीकमभूज्जगत् ॥ २७ ॥ इतिव्याकुलितेलोकेसुरासुरनरोरगे ॥ आःकिमेतदकांडेभूद्दुद्रुवुर्दुद्रुवुःप्रजाः ॥ २८ ॥ ततःसर्वेसमालोक्यब्रह्माणंशरणंययुः ॥ स्तुवंतोविविधैःस्तोत्रैरक्षरक्षेतिचाब्रुवन् ॥ २९ ॥ ॥ देवाऊचुः ॥ नमोहिरण्यरूपायब्रह्मणेब्रह्मरूपिणे ॥ अविज्ञातस्वरूपायकैवल्यायामृतायच ॥ ३० ॥

अग्नौप्रास्ताहुतः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइतिश्रुतेरित्यर्थः ॥ २४ ॥ विसर्गोत्रसंहारः ॥ कारणंकेवलमिति ॥ अभिन्ननिमित्तोपादानमित्यर्थः ॥ तदुक्तम् ॥ नमःसवित्रेजगदेकचक्षुषेजगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयायत्रिगुणात्मधारिणेविरंचिनारायणशंकरात्मनेइति ॥ २५ ॥ स्तंभितत्वमेवदर्शयति ॥ यद्यत्रतत्स्थितंतत्रेति ॥ २६ ॥ कांदिशीकंभयेनद्रुतम् ॥ कांदिशीकोभयद्रुतइत्यमरः ॥ २७ ॥ लोकेभुवने लोकस्तुभुवनेजनेइत्यमरः ॥ सुरनरोरगे सुराधिष्ठात्रीदेवतावरुणात्मजावारुणतिस्याःपरिग्रहात्सुरादेवास्तस्याअपरिग्रहादसुरादैतेयाः ॥ तदुक्तंबालकांडेरामायणे ॥ वरुणस्यततःकन्यावारुणीरघुनंदन ॥ उत्पपातमहावीर्यावांछमानापरिग्रहम् ॥ दितेः पुत्रानतांरामजगृहुर्वरुणात्मजाम् ॥ अदितेस्तुसुतावीराजगृहुस्तामनिंदिताम् ॥ तेनाभवन्सुरादेवादैतेयाश्चासुरास्ततइति ॥ सुरासुरैःसहनरोरगायस्मिन्सतथातस्मिन् ॥ एतच्चान्येषामुपलक्षणम् ॥ यत्तुभागवतेविपर्ययश्रवणंतच्चकल्पभेदाभिप्रायेण ॥ आःपीडायाम् ॥ आस्तुस्यात्कोपपीडयोरित्यमरः ॥ दुद्रुवुश्चसर्वेदेवाः ॥ २८ ॥ २९ ॥ त्रैलोक्यरक्षणार्थायसगुणागुणभेदतः ॥ स्तुवंतिसत्यलोकेशंगीर्वाणाभयशंकिताः ॥ नमोहिरण्यगर्भायेत्या



१ अस्तगतर्क्षादित्येवरूपे । २ अद्यापि पारावाराः प्रलयपयोधयः इतस्ततो नपरापतंतिपृथिवीं प्लावयन्त्यतो नायं प्रलयकाल इति कथन्नार्थ ऊरुकितर्ऽयः ? ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यैर्द्वादशभिःशुभैः ॥ पद्यैः प्रसन्नगंभीरैः श्रोतृपापापनोदनैः ॥ तत्रादावाधिदैविकविराड्हिरण्यगर्भांतर्यामिरूपेणस्तुवंति ॥ तत्रब्रह्मरूपिणेविराडात्मनेनमइत्यन्वयः ॥ तपस्तप्त्वासृजद्यंतुसस्वयं
पुरुषोविराडितिमनुः ॥ हिरण्यगर्भाय हिरण्यरूपंब्रह्मांडंगर्भेयस्यसतथातस्मैब्रह्मणेपूर्णायांतर्यामिणेइत्यर्थः ॥ तदुक्तं ॥ स्वतश्चिदंतर्यामीतुमायावीसूत्रसृष्टितः ॥ सूत्रात्मास्थूलदृष्ट्यैषविराडि
त्युच्यतेपरइति ॥ सूत्रात्माहिरण्यगर्भः ॥ स्वगुणंस्तुत्वानिर्गुणंस्तुवंति ॥ अविज्ञातस्वरूपायअविज्ञातंप्रत्यक्षाद्यगम्यंस्वरूपंयस्यसतथातस्मै ॥ विज्ञातारमरेकेनविजानीयादितिश्रुतेः ॥ कैवल्या
यमोक्षस्वरूपाय ॥ कथंभूतायकैवल्याय ॥ अमृतायानंदरूपाय ॥ आनंदंब्रह्मणोरूपंतच्चमोक्षेप्रतिष्ठितमितिश्रुतेः ॥ ३० ॥ अविज्ञातस्वरूपत्वेहेतुमाह ॥ यंनदेवाविजानंतीति ॥ तस्मैचिदात्मने
नमइत्यन्वयः॥तस्मैकस्मैइत्याकांक्षायामाह॥यन्नदेवाइति ॥ देवाइंद्रियाणितदधिष्ठातारोवा ॥ मनोयत्रापिकुंठितंमनोपियत्रकुंठितंउपलप्रयुक्तक्षुरतैक्ष्ण्यवत्प्रतिहतसामर्थ्यम् ॥ नयत्रवाक्प्रसरतिप्रबोध
यितुंवागपिनसमर्थाभवतीत्यर्थः।तस्मैअपरिमितगुणगरिम्णेप्रसिद्धायवा चिदात्मनेचैतन्यघनायनमोस्तुकुर्मइतिवाशेषः ॥ सवेत्तिविश्वंनचतस्यवेत्तातमाहुरग्र्यंपुरुषंमहांतम् ॥ यतोवाचोनिवर्तंतेअप्राप्य
मनसासहेत्यादिश्रुतेः॥३१॥तर्हिप्रमाणाभावाच्छशशृंगवन्नास्तितदित्याशंक्याहुः॥योगिनोयमिति ॥ तस्मैश्रीब्रह्मणेनमइत्यन्वयः ॥ तस्मैकस्माइत्याकांक्षायामाहुर्योगिनइति ॥ हृदेवाकाशोहृदाका
शस्तस्मिन्आकाशवच्छुद्धेऽतःकरणइत्यर्थः॥प्रणिधानेनएकाग्रतयानिदिध्यासनेनेतियावत् ॥ ज्योतिःस्वप्रकाशंरूपंस्वरूपंयस्यतत्तथाप्रपश्यंति॥स्वप्रकाशसच्चिदानंदरूपेणैवावतिष्ठंतइत्यर्थः॥ श्रीःसावि

यन्नदेवाविजानंतिमनोयत्रापिकुंठितम् ॥ नयत्रवाक्प्रसरतिनमस्तस्मैचिदात्मने ॥ ३१ ॥ योगिनोयंहृदाकाशेप्रणिधानेननिश्चलाः ॥ ज्योतीरूपं प्रपश्यंतितस्मैश्रीब्रह्मणेनमः ॥ ३२ ॥ कालात्परायकालायस्वेच्छयापुरुषायच ॥ गुणत्रयस्वरूपायनमःप्रकृतिरूपिणे ॥ ३३ ॥ विष्णवे सत्त्वरूपायरजोरूपायवेधसे ॥ तमसेरुद्ररूपायस्थितिसर्गांतकारिणे ॥ ३४ ॥ नमोबुद्धिस्वरूपायत्रिधाहंकृतयेनमः ॥ पंचतन्मात्र रूपायपंचकर्मेंद्रियात्मने ॥ ३५ ॥

त्री स्रष्टाविष्णुरियंसृष्टिरितिपराशरोक्तेः॥सृज्यतेनयासृष्टिहेतुत्वाद्वासृष्टिःसावित्रीतत्सहितायब्रह्मणेसत्यलोकाधिष्ठात्रे॥यद्वा श्रयंत्येतांयोगिनइतिश्रीर्ब्रह्मविद्यातत्स्वरूपायब्रह्मणेपरमात्मनेनमइति॥३२॥
कालादिति ॥ कालान्निमेषादिद्विपरार्धांतात्परायभिन्नाय ॥ माययाकालाय तच्चेष्टारूपत्वात्कालस्य ॥ तदुक्तंभागवते ॥ योयंकालस्तस्यतेऽव्यक्तबंधोचेष्टामाहुरिति ॥ यद्वा अविद्यात्मनोः
सम्बन्धःकालस्तद्रूपाय ॥ यद्वा कालयतिनाशयतिकालादीन्सर्वानितिकालस्तस्मै ॥ सकालकालः कालमूषिकभक्षकः कालायतेनमः इत्यादिश्रुतिस्मृतिभ्यः ॥ स्वेच्छयास्वस्येच्छयाई
क्षणलक्षणयापुरुषायजीवाय ॥ सऐक्षतबहुस्यांप्रजायेय तत्सृष्ट्वा तदेवानुप्राविशदितिश्रुतेः ॥ यद्वा स्वीयानांभक्तानामिच्छयापुरुषायपूर्षुशरीरेषुशेतइतितथातस्मै ॥ मत्स्यकूर्माद्यवताराये
त्यर्थः ॥ नवद्वारेपुरेशेतेपुरुषस्तेनचोच्यतइतिस्मृतेः ॥ यद्वा स्वेच्छयास्वातंत्र्येणैवपुरुषायपुरुषाख्यावताराय ॥ तदुक्तंभागवते ॥ भूतैर्यदापंचभिरात्मसृष्टैःपुरंविराजंविरचय्यतस्मिन्
स्वांशेनविष्टःपुरुषाभिधानमवापनारायणआदिदेवइति ॥ यद्वा स्वेच्छयापूर्वमपिपुरुषुकार्येषुस्थितत्वात्पुरुषस्तस्मै ॥ तथाचश्रुतिः ॥ पूर्वमेवाहमिहासमिति ॥ तत्पुरुषस्यपुरुषत्वमित्य
लमतिविस्तरेण ॥ प्रधानत्वेननमस्यंति ॥ गुणत्रयेति ॥ गुणत्रयंसत्त्वरजस्तमउपलक्षणम् ॥ प्रकृतिःप्रधानम् ॥ ३३ ॥ गुणत्रयोपाधिविष्णवब्जयोनिरुद्ररूपेणनमंति ॥ विष्णवइति ॥
नमइत्यनुषंजनीयम् ॥ ३४ ॥ महत्तत्त्वादित्रयोविंशतितत्त्वभेदेनप्रणमन्ति ॥ नमोबुद्धिस्वरूपायेत्यादिना ॥ बुद्धिस्वरूपायमहत्तत्त्वाय ॥ त्रिधाहंकृतयेवैकारिकतैजसतामसाहंकाराय ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पंचतन्मात्ररूपायशब्दस्पर्शरूपरसगन्धतन्मात्ररूपात्मने ॥ पंचकर्मेंद्रियात्मनेपायूपस्थहस्तपादवागात्मने ॥ ३९ ॥ नमइति ॥ मनःस्वरूपायांतःकरणरूपाय ॥ पंचबुद्धींद्रियात्मनेश्रोत्रत्वक्चक्षुर्जिह्वानासात्मने ॥ क्षित्यादिपञ्चरूपायपृथिव्यप्तेजोवाय्वाकाशरूपाय ॥ विषयात्मनेस्थूलविषयरूपायपंचीकृतात्मनइतियावत् ॥ ३६ ॥ समष्टिव्यष्टिप्रबंधभेदेनप्रणमंति ॥ नमइत्यादिना ॥ ब्रह्मांडरूपायसमष्ट्यात्मकविराड्रूपायकारणरूपायेत्यर्थः ॥ तदन्तर्वर्तिनेभूतभौतिकव्यष्टिरूपायकार्यरूपायेत्यर्थः ॥ अर्वाचीनेति ॥ अर्वाचीनमिदानींतनंततःपराचीनंपूर्वकालीनंएतद्रूपंयद्विश्वंजगत्तद्रूपायतेतुभ्यंनमइत्यर्थः ॥ ३७ ॥ अनित्येति ॥ आगमापाययनित्यंकालत्रयाबाध्यंनित्यंतद्रूपाय सत्स्थूलंअसत्सूक्ष्मंकार्यकारणेवासदसतीतयोः पतयेनियंत्रेनमइति ॥ कृपालुतांदर्शयन्तःस्तुवंति ॥ समस्तेति ॥ समस्तशब्दश्चतुर्विधाविषयः ॥ चतुर्विधाभजंतेमामिमितिभगवद्वचनात् ॥ नवविधविषयोवा भक्तैर्नवभिराश्रितमितिमुक्ताफलकारवचनात् ॥ विग्रहःशरीरम् ॥ ३८ ॥ शास्त्रयोनित्वेनस्तुवन्ति ॥ तवनिःश्वसितंवेदाइति ॥ निःश्वासवदनायासेनवेदानामाविर्भावाद्वेदानिःश्वसितामित्युपचारः ॥ निःश्वसितमेतद्यदृग्वेदोयजुर्वेदःसामवेदइतिश्रुतेः शास्त्रयोनित्वादितिव्याससूत्राच्च ॥ तवस्वेदोऽखिलंजगदिति ॥ तवेश्वरस्य ॥ स्वेदशब्देनात्राप्सुनिसृष्टंवीर्यंशक्तिविशेषउच्यते तज्जातत्वादशेषस्यजगतः ॥ यद्वा स्वेदशब्देनात्रापंचीकृतंजलतत्त्वमुच्यते तच्चभूम्यादिचतुष्टयस्योपलक्षणम् तत्परिणामत्वादशेषस्यभूतभौतिकप्रपंचस्य ॥ तदुक्तंहरिवंशे ॥ ततःस्वयंभूर्भगवान्सिसृक्षुर्विविधाःप्रजाः ॥ अयएवससर्जादौतासुवीर्यमवासृजत ॥

नमोमनःस्वरूपायपंचबुद्धींद्रियात्मने ॥ क्षित्यादिपंचरूपायनमस्तेविषयात्मने ॥ ३६ ॥ नमोब्रह्मांडरूपायतदंतर्वर्तिनेनमः ॥ अर्वाचीनपराचीनविश्वरूपायतेनमः ॥ ३७ ॥ अनित्यनित्यरूपायसदसत्पतयेनमः ॥ समस्तभक्तकृपयास्वेच्छाविष्कृतविग्रह ॥ ३८ ॥ तवनिश्श्वसितंवेदास्तवस्वेदोखिलंजगत् ॥ विश्वाभूतानितेपादः शीर्ष्णोद्यौःसमवर्तत ॥ ३९ ॥ नाभ्याआसीदंतरिक्षंलोमानिचवनस्पतिः ॥ चन्द्रमामनसोजातश्चक्षोःसूर्यस्तवप्रभो ॥ ४० ॥ त्वमेवसर्वंत्वयि देवसर्वं स्तोतास्तुतिःस्तव्यइहत्वमेव ॥ ईशत्वयाऽवास्यमिदंहिसर्वंनमोस्तुभूयोपिनमोनमस्ते ॥ ४१ ॥

आपोनाराइतिप्रोक्ताआपोवैनरसूनवः ॥ अयनंतस्यताःपूर्वंतेननारायणःस्मृतइति ॥ पुरुषसूक्तेनचस्तुवंति ॥ विश्वेति ॥ तत्रपादोस्यविश्वाभूतानीत्यस्याःश्रुतेरर्थमाहुः ॥ विश्वाभूतानितेपादइति ॥ ३९ ॥ मायावच्छिन्नैकदेशइत्यर्थः ॥ विश्वाइतिशेश्छंदसिबहुलमितिशेर्लोपः ॥ शीर्ष्णोद्यौःसमवर्ततेत्यस्याःश्रुतेरर्थमाहुः ॥ शीर्ष्णइति ॥ नाभ्याआसीदंतरिक्षमित्यस्याःश्रुतेरर्थमाहुः ॥ नाभ्याइति ॥ अन्तरिक्षमंतरिक्षलोकः ॥ लोमानीति ॥ पुष्पंविनाफलवान्वनस्पतिः ॥ चन्द्रमामनसोजातइत्यस्याःश्रुतेरर्थमाहुः ॥ चन्द्रमाइति ॥ चक्षोःसूर्योअजायतेत्यस्याःश्रुतेरर्थमाहुः ॥ चक्षोःसूर्यइति ॥ चक्षोश्चक्षुषइत्यर्थः ॥ ४० ॥ उपसंहरंति त्वमेवसर्वमिति ॥ अत्रोपासनार्थंसर्वप्रपंचरूपत्वंब्रह्मणोविधीयते ॥ योयंस्थाणुःपुमानेषपुंधियास्थाणुधीरिवेत्यादिवद्बाधेसामानाधिकरण्यंवा ॥ अधिष्ठानांतरंवारयाति ॥ त्वयिदेवसर्वमिति ॥ देवहेस्वप्रकाश ॥ नन्वहंचेत्सर्वंकथंभवाद्भिःस्तोतृभिःस्तवेनाहंस्तूयेतत्राहुः ॥ स्तोतेति ॥ औपाधिकभेदमादायस्तोत्रादिव्यवहारइत्यर्थः ॥ किंबहुना ईशाईश्वरेणत्वयाइदंसर्वंजगदावास्यंवासनीयंसम्बद्धंग्रंथिततंतुनेवपटइति ॥ यद्वा आवास्यंसत्ताचैतन्याभ्यांसंव्याप्यइदंपरिदृश्यमानंसर्वमिति ॥ ईशावास्यमिदंसर्वंयत्किंचिज्जगत्यांजगत् तेनत्यक्तेनभुंजीथामागृधःकस्यचिद्धनमितिश्रुतेः ॥ ४१ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ४२ ॥ यथार्थयेति ॥ यथार्थयायथासदृशोऽबाधितोऽर्थोयस्याःसातथातया ॥ ४३ ॥ ४४ ॥ ४५ ॥ ऐहिकेति ॥ अपवर्गमोक्षम् ॥ सालोक्यादिव्यावृत्त्यर्थमक्षयमितिविशेषणम् ॥ सायुज्य मित्यर्थः ॥ ४६ ॥ तस्मादिति ॥ यतोऽभीष्टदइतिख्यातोऽतएवसर्वसिद्धिदः ॥ सर्वेषांसिद्धिदइतिवा ॥ ४७ ॥ अत्रापिसत्याख्येममलोकेपीत्यर्थः ॥ ४८ ॥ सत्यलोकस्थानांव्याकुलताभा वंदर्शयति ॥ एतेवेदामूर्तिधराइत्यादिना ॥ करुणाभारतीत्वियमित्यंतंमूर्तिधराइत्यनुषंजनीयम् ॥ अखिलाःशिक्षाकल्पज्योतिश्छंदोनिरुक्तव्याकरणमीमांसान्यायपुराणधर्मशास्त्रायुर्वेदधनुर्वेदगां धर्वार्थशास्त्रलक्षणाश्चतुर्दश ॥ यज्ञास्त्वग्निष्टोमादयः ॥ सत्यंयथार्थभाषणम् ॥ धर्मोऽदृष्टम् ॥ तपःकृच्छ्रचांद्रायणादि ॥ दमोविषयेभ्योबहिरिंद्रियनिवृत्तिरिंद्रियमात्रनिवृत्तिर्वा ॥ ४९ ॥ ब्रह्मचर्यमिति ॥ ब्रह्मचर्यमष्टांगमैथुनपरित्यागः ॥ तदुक्तम् ॥ दर्शनंस्पर्शनंकेलिःस्मरणंगुह्यभाषणम् ॥ संकल्पोध्यवसायश्चक्रियानिर्वृतिरेवच ॥ एतन्मैथुनमष्टांगंप्रवदंतिमनीषिणः ॥ विपरीतं

इतिस्तुत्वाविधिंदेवानिपेतुर्दंडवत्क्षितौ ॥ परितुष्टस्तदाब्रह्माप्रत्युवाचदिवौकसः ॥ ४२ ॥ ॥ ब्रह्मोवाच ॥ ॥ यथार्थयाऽनयास्तुत्यातुष्टोस्मि प्रणताःसुराः ॥ उत्तिष्ठतप्रसन्नोस्मिवृणुध्वंवरमुत्तमम् ॥ ४३ ॥ यःस्तोष्यत्यनयास्तुत्याश्रद्धावान्प्रत्यहंशुचिः ॥ मांवाहरंवाविष्णुंवातस्यतुष्टाःसदा वयम् ॥ ४४ ॥ दास्यामःसकलान्कामान्पुत्रान्पौत्रान्पशून्वसु ॥ सौभाग्यमायुरारोग्यंनिर्भयत्वंरणेजयम् ॥ ४५ ॥ ऐहिकामुष्मिकान्भोगानपवर्गं तथाऽक्षयम् ॥ यद्यदिष्टतमंतस्यतत्तत्सर्वंभविष्यति ॥४६॥ तस्मात्सर्वप्रयत्नेनपठितव्यःस्तवोत्तमः ॥ अभीष्टदइतिख्यातः स्तवोयंसर्वसिद्धिदः ॥४७॥ पुनःप्रोवाचतान्वेधाःप्रणिपत्योत्थितान्सुरान् ॥ स्वस्थास्तिष्ठतभोयूयंकिमत्रापिसमाकुलाः ॥ ४८ ॥ एतेवेदामूर्तिधराइमाविद्यास्तथाखिलाः ॥ सदक्षिणाअमीयज्ञाःसत्यंधर्मस्तपोदमः ॥ ४९ ॥ ब्रह्मचर्यमिदंचैषाकरुणाभारतीत्वियम् ॥ श्रुतिस्मृतीतिहासार्थचरितार्थाअमीजनाः ॥ ५० ॥ नेहक्रोधोनमात्सर्यंलोभः कामोऽधृतिर्भयम् ॥ हिंसाकुटिलतागर्वोनिंदासूयाऽशुचिःक्वचित् ॥ ५१ ॥ येब्राह्मणाब्रह्मरतास्तपोनिष्ठास्तपोधनाः ॥ मासोपवासषण्मासचातुर्मास्यादिसद्व्रताः ॥ ५२ ॥ पातिव्रत्यरतानार्योयेचान्येब्रह्मचारिणः ॥ तेचामीपश्यतसुरायेषंढाः परयोषिति ॥ ५३ ॥

ब्रह्मचर्यमेतदेवप्रकीर्तितमिति ॥ करुणाहितैषिणी ॥ इदानींसर्वेभ्यःकाश्याःश्रेष्ठत्वंवक्तुंकर्मादिभिःप्राप्तस्वलोकान्दर्शयति ॥ श्रुतिस्मृतीति ॥ श्रुतिस्मृतीतिहासानामर्थेष्वनुष्ठेयेषुप्रतिपाद्येषु चरितःकृतोऽर्थःपुरुषार्थःपुरुषकारोऽनुष्ठानंयैस्तेतथा ॥ इतिहासोमहाभारतादिः ॥ श्रुतिस्मृतिपुराणानामितिक्वचित्पाठः ॥ व्याख्यांतरंस्पष्टम् ॥ ५० ॥ नेति ॥ क्रोधःपराभिभवेच्छा ॥ मात्सर्यंपरगुणासहिष्णुता ॥ प्राप्तेऽर्थेप्रार्थनालोभः ॥ अप्राप्तेऽर्थेप्रार्थनाकामः ॥ यद्वा लोभोऽर्थमात्रविषयः ॥ कामःस्त्र्यादिविषयः ॥ अधृतिरधारणंदेहाद्यवसादेसत्यनुत्तंभनम् ॥ भयंभीः ॥ हिंसाकायवाङ्मनोभिःप्राणिमात्रपीडा ॥ कुटिलताअनृजुतावक्रतेतियावत् ॥ गर्वोऽभिमानः ॥ निंदापरापवादः ॥ असूयागुणेषुदोषाविष्करणम् ॥ अशुचिरपवित्रः ॥ ५१ ॥ ब्रह्मरताबे दरताः ॥ तपोधनाअकिंचनाविरक्ताइत्यर्थः ॥ ५२ ॥ पातिव्रत्यरताः पतिव्रतायाभावःपातिव्रत्यंतत्ररतास्तद्धर्मयोगिन्यइत्यर्थः ॥ षंढाःनपुंसकाः ॥ तृतीयाप्रकृतिःषंढःक्लीबःपंडोनपुंस



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कइत्यमरः ॥ जितेंद्रियाइत्यर्थः ॥ ५३ ॥ गोग्रहणेहताःगवांरक्षणेत्यक्तप्राणाइत्यर्थः ॥ ५४ ॥ ५५ ॥ गायत्रीति ॥ द्विमुखीप्रसूयमानागौः ॥ तदुक्तं ॥ यावद्वत्सस्यपादौद्वौमुखंयोन्यांचदृश्यते ॥ तावद्गौःपृथिवीज्ञेयायावद्गर्भंनमुंचतीति ॥ पृथिवीज्ञेयापृथिवीतुल्या ॥ समग्रायाःपृथिव्यादानेनयादृशंपुण्यंभवतितादृशमस्यादानेनेत्यर्थः ॥ शुक्लासर्वशरीरेविशेषतःपादेषुचशुक्लवर्णाकपिला ॥ तदुक्तम् ॥ सर्वतःशुक्लवर्णायापादेषुचविशेषतः ॥ कपिलासातुविज्ञेयासर्वपापप्रणाशिनी ॥ देशविशेषेपिंगलवर्णाकपिलेतिप्रसिद्धिः ॥ ५६ ॥ द्विजपादोदपाःब्राह्मणचरणोदकपातारः ॥ सारस्वते

मातापित्रोरमीभक्ताअमीगोग्रहणेहताः ॥ व्रतेदानेजपेयज्ञेस्वाध्यायेद्विजतर्पणे ॥ ५४ ॥ तीर्थेतपस्युपकृतौसदाचारादिकर्मणि ॥ फलाभिलाषिणीबुद्धिर्नयेषांतेजनाअमी ॥ ५५ ॥ गायत्रीजाप्यनिरताअग्निहोत्रपरायणाः ॥ द्विमुखीगोप्रदातारःकपिलादानतत्पराः ॥ ५६ ॥ निस्पृहाःसोमपायेवैद्विजपादोदपाश्चये ॥ मृताःसारस्वतेतीर्थेद्विजशुश्रूषकाश्चय ॥ ५७ ॥ प्रतिग्रहसमर्थाहियेप्रतिग्रहवर्जिताः ॥ तएतेमत्प्रियाविप्रास्त्यक्ततीर्थप्रतिग्रहाः ॥ ५८ ॥ प्रयागेमाघमासेयैरुषःस्नातोऽमलात्मभिः ॥ मकरस्थेरवौशुद्धास्तइमेसूर्यवर्चसः ॥ ५९ ॥ वाराणस्यांपांचनदेत्र्यहंस्नातास्तुकार्तिके ॥ अमीतेशुद्धवपुषःपुण्यभाजोतिनिर्मलाः ॥ ६० ॥ स्नात्वातुमणिकर्णिक्यांप्रीणिताब्राह्मणाधनैः ॥ तएतेसर्वभोगाढ्याःकल्पंस्थास्यंतिमत्पुरे ॥ ६१ ॥ ततःकाशींसमासाद्यतेनपुण्येननोदिताः ॥ विश्वेश्वरप्रसादेनमोक्षमेष्यंत्यसंशयम् ॥ ६२ ॥ अविमुक्तेकृतंकर्मयदल्पमपिमानवैः ॥ श्रेयोरूपंतद्विपाकोमोक्षोजन्मांतरेष्वपि ॥ ६३ ॥ अहोवैश्वेश्वरेक्षेत्रेमरणादपिनोभयम् ॥ यत्रसर्वेप्रतीक्षंतेमृत्युंप्रियमिवातिथिम् ॥ ६४ ॥ ब्राह्मणेभ्यःकुरुक्षेत्रेयैर्दत्तंवसुनिर्मलम् ॥ निर्मलांगास्तएतेवैतिष्ठंतिममसंनिधा ॥६५॥ पितामहंसमासाद्यगयायांयैःपितामहाः ॥ तर्पितात्राह्मणमुखेतेषामेतेपितामहाः ॥६६॥ नस्नानेननदानेननजपेननपूजया ॥ मल्लोकःप्राप्यतेदेवाःप्राप्यतेद्विजतर्पणात् ॥६७॥ सोपस्कराणिवेश्मानिमुसलोलूखलादिभिः ॥ यैर्दत्तानिसशय्यानितेषांहर्म्याण्यमूनिवै ॥ ६८ ॥

तीर्थंप्रभासेपृथूदकेवा ॥ ५७ ॥ ५८ ॥ उषसिस्नातःप्रातःस्नानेननीतःसमापितइतियावत् ॥ ५९ ॥ पंचनदमेवपांचनदं ॥ स्वार्थेऽण् ॥ पंचनदइतिवापाठः ॥ ६० ॥ कल्पंद्विपरार्धम् ॥ ६१ ॥ ६२ ॥ तद्विपाकस्तस्यकर्मणोविपाकःफलम् ॥ किंतदाह ॥ मोक्षमिति ॥ नपुंसकत्वमार्षम् ॥ मोक्षइत्येववापाठः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ सोपस्कराणिगृहो



---

१ पुंवद्भावाभाव आर्षः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पकरणसहितानि सभूषणानीतिवा ॥ ६८ ॥ ब्रह्मशालावेदाध्ययननिमित्तंगृहम् ॥ पुराणमितिवापाठः ॥ ६९ ॥ ७० ॥ अखंडंवसुसमग्रंधनम् ॥ वसुवर्चसःअग्निवर्चसः ॥ ७१ ॥ ७२ ॥ ७३ ॥ ॥ ७४ ॥ एकंकुलंएकः फलसाधनसमुदायः ॥ ७५ ॥ ७६ ॥ ७७ ॥ महेश्वरीब्रह्मादीनांनियंत्री ॥ गौरीमहेश्वरावितिवापाठः ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ विभावसोरग्नेः ॥ ८३ ॥

ब्रह्मशालांकारयंतिवेदमध्यापयंतिच ॥ विद्यादानंचयेकुर्युः[1]पुराणंश्रावयंतिच ॥ ६९ ॥ पुराणानिचयेदद्युः पुस्तकानिददत्यपि ॥ धर्मशास्त्राणियेदद्युस्तेषांवासोत्रमेपुरे ॥ ७० ॥ यज्ञार्थंचविवाहार्थंव्रतार्थंब्राह्मणायवै ॥ अखंडं वसुयेदद्युस्तेत्रस्युर्वसुवर्चसः ॥ ७१ ॥ आरोग्यशालांयःकुर्याद्वैद्यपोषणतत्परः ॥ आकल्पमत्रवसतिसर्वभोगसमन्वितः ॥ ७२ ॥ मुक्तीकुर्वंतितीर्थानि येच दुष्टावरोधतः ॥ ममावरे[2]धेतेमान्याऔरसास्तनयाइव ॥ ७३ ॥ विष्णोर्वाममवाशंभोर्ब्राह्मणाएवसुप्रियाः ॥ तेषांमूर्त्यावयंसाक्षाद्विचरामोमहीतले ॥ ७४ ॥ ब्राह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतम् ॥ एकत्रमंत्रास्तिष्ठंतिहविरेकत्रतिष्ठति ॥ ७५ ॥ ब्राह्मणाजंगमंतीर्थंनिर्मितंसार्वभौमिकम् ॥ येषांवाक्योदकेनैवशुद्ध्यंतिमलिनाजनाः ॥ ७६ ॥गावःपवित्रमतुलंगावोमंगलमुत्तमम् ॥ यासांखुरोत्थितोरेणुर्गंगावारिसमोभवेत् ॥ ७७ ॥ शृंगाग्रे सर्वतीर्थानिखुराग्रेसर्वपर्वताः ॥ शृंगयोरंतरेयस्याःसाक्षाद्गौरीमहेश्वरी ॥ ७८ ॥ दीयमानांचगांदृष्ट्वानृत्यंतिप्रपितामहाः ॥ प्रीयंतेऋषयःसर्वेतुष्यामो देवतैःसह ॥ ७९ ॥ रोरूयंतचपापानिदारिद्र्यंव्याधिभिःसह ॥ धा[3]त्र्यःसर्वस्यलोकस्यगावोमातेवसर्वथा ॥ ८० ॥ गवांस्तुत्वानमस्कृत्यकृत्वाचैवप्रदक्षिणाम् ॥ प्रदक्षिणीकृतातेनसप्तद्वीपावसुंधरा ॥ ८१ ॥ यालक्ष्मीःसर्वभूतानांयादेवेष्ववस्थिता ॥ धेनुरूपेणसादेवीर्ममपापंव्यपोहतु[4] ॥ ८२ ॥ विष्णोर्वक्षसियालक्ष्मीःस्वाहाचैवविभावसोः ॥ स्वधायापितृमुख्यानांसाधेनुर्वरदासदा ॥ ८३ ॥ गोमयंयमुनासाक्षाद्गोमूत्रंनर्मदाशुभा ॥ गंगाक्षीरंतुयासांवैकिंपवित्रमतःपरम् ॥ ८४ ॥ गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच ॥ ८५ ॥ इतिमंत्रंसमुच्चार्यधेनूर्वाधेनुमेववा ॥ योदद्याद्द्विजवर्यायससर्वेभ्योविशिष्यते ॥ ८६ ॥ मयाचविष्णुनासार्धंशिवेनचमहर्षिभिः ॥ विचार्यगोगुणान्नित्यंप्रार्थनेतिविधीयते ॥ ८७ ॥ गावोमेपुरतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेसंतुगवांमध्येवसाम्यहम् ॥ ८८ ॥

॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥

---

१ अत्रमूलपाठोनोपलब्धः । २ अन्तःपुरे । ३ पोषयित्र्यः । ४ दातुःपापंव्यपोहतीतिपुस्तकांतरेपाठः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नीराजयतिमोंछतिमार्जयतीत्यर्थः ॥ अंगानिस्वांगानि ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ एषांसत्यलोकादिगोलोकांतानाम् ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥ उपसंहरति ॥ इत्युद्देशादिति ॥ उद्देशात्संक्षेपात् ॥ भयार्तानांभीतिपीडितानांयदभयंतद्व्याख्यातमित्यर्थः ॥ २ ॥ एवंकाशीप्रकर्षपुरःसरानधर्मातुच्छादेवागमनकारणंस्वयमेववर्णयन्सूर्यमार्गपरिरोधाभावोपायंप्रतिजानीते ॥ स्पर्धतइति ॥ ३ ॥ अस्तीति ॥ मित्रावरुणयोरपत्यंमैत्रावरुणिः ॥ उर्वशीदर्शनात्स्कन्नंरेतस्ताभ्यां

नीराजयतियोंगानिगवांपुच्छेनभाग्यवान् ॥ अलक्ष्मीःकलहोरोगास्तस्यांगाद्यांतिदूरतः॥८९॥ गोभिर्विप्रैश्चवेदैश्चसतीभिःसत्यवादिभिः॥ अलुब्धैर्दानशीलैश्चसप्तभिर्धार्यतेमही॥९०॥ ममलोकात्परोलोकोवैकुंठइतिगीयते ॥ तस्योपरिष्टात्कौमारउमालोकस्ततःपरम् ॥९१॥ शिवलोकस्तदुपरिगोलोकस्तत्समीपतः ॥ गोमातरःसुशीलाद्यास्तत्रसंतिशिवप्रियाः ॥ ९२ ॥ गवांशुश्रूषकायेचगोप्रदायेचमानवाः ॥ एषामन्यतमेलोकेतेस्युःसर्वसमृद्धयः ॥ ९३ ॥ यत्रक्षीरवहानद्योयत्रपायसकर्दमाः ॥ नजराबाधतेयत्रतत्रगच्छंतिगोप्रदाः ॥ ९४ ॥ श्रुतिस्मृतिपुराणज्ञाब्राह्मणाःपरिकीर्तिताः॥ तदुक्ताचारचरणाइतरेनामधारकाः॥९५॥ श्रुतिस्मृतीतुनेत्रेद्वेपुराणंहृदयंस्मृतम् ॥ श्रुतिस्मृतिभ्यांहीनोंधःकाणःस्यादेकयाविना॥९६॥ पुराणहीनाद्धृच्छून्यात्काणांधावपितौवरौ ॥ श्रुतिस्मृत्युदितोधर्मःपुराणेपरिगीयते॥९७॥ तेद्ब्राह्मणायगोर्देयासर्वत्रसुखमिच्छता ॥ नदेयाद्द्विजमात्रायदातारंसोप्यधोनयेत् ॥९८॥ यस्यधर्मेऽस्तिजिज्ञासायस्यपापाद्भयंमहत्॥ श्रोतव्यानिपुराणानिधर्ममूलानितेनवै॥९९॥ चतुर्दशसुविद्यासुपुराणंदीपउत्तमः॥ अंधोपिनतदालोकात्संसाराब्धौक्वचित्पतेत् ॥१००॥ श्रोतव्यानिपुराणानिवस्तव्यंजाह्नवीतटे ॥ तर्पणीयाद्द्विजानित्यंममलोकेप्सुभिःसदा ॥ १ ॥ इत्युद्देशान्मयाख्यातासत्यलोकस्य[3]व्यवस्थितिः ॥ अभयंयद्भयार्तानांनभेतव्यंचहेसुराः ॥२॥ स्पर्धतेमेरुणाविंध्योब्रध्नाध्वपरिरोधकृत् ॥ तदर्थमागतायूयंतदुपायंदिशामिवः॥३॥ अस्त्यगस्त्यस्तप्यमानस्तप उग्रं महातपाः ॥ मैत्रावरुणिराधाय चित्तं विश्वेश्वरे विभौ ॥ ४ ॥ अविमुक्तेमहाक्षेत्रेसर्वेषांमुक्तिहेतुके ॥ तारकस्योपदेशार्थंविश्वेशाऽधिष्ठितेस्वयम् ॥ ५ ॥ याचध्वंतत्रगत्वातंसवःकार्यंविधास्यति ॥ तेनैकदावितालोकावातापील्वलभक्षणात् ॥ ६ ॥

कुंभेनिषिक्तंतस्मादगस्त्योजज्ञे ॥ तथाचश्रुतिः ॥ कुंभेरेतःसिषिचतुःसमानमिति ॥ तत्रमैत्रावरुणिरित्युक्तेवसिष्ठेपिगच्छतितद्वारणार्थमगस्त्यइत्युक्तम् ॥ तावत्युक्तेअंगानिनिष्क्रियाणिगात्राणिस्त्यायतिसंघातयतीत्यगस्त्यः अगस्त्यनामावाकश्चित्तत्रातिव्याप्तिःस्यात्तद्वारणार्थमुक्तंमैत्रावरुणिरिति ॥ ४ ॥ तारकस्यप्रणवस्यषडक्षरश्रीराममंत्रराजस्यवा ॥ ५ ॥ वोयुष्माकम् ॥ कथमृ



१ परिपठ्यतेइत्यपिक्वचित्पाठः । २ सश्रुतिस्मृतिपुराणज्ञोयोब्राह्मणस्तस्मै । ३ लोकस्यचस्थितिरित्यपिक्वचित्पाठः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पिमात्रस्यतादृग्दुर्घटकार्यकरणसामर्थ्यमित्याशंकायामाह ॥ तेनैकदेति ॥ वातापील्वलभक्षणात्इल्वलस्यसंबंधीवातापिर्वातापील्वलः ॥ राजदंतादित्वात्पूर्वनिपातः॥तस्यभक्षणात् ॥ तथाचोक्तम् ॥ वातापिर्भक्षितोयेनसमुद्रःशोषितःपुरा ॥ यद्वा वातापिश्चइल्वलश्चतयोर्भक्षणात् ॥ तत्रवातापेर्भक्षणंशरीरतःइल्वलस्यभक्षणंत्वर्थतः ॥ मनुष्यान्भक्षयिष्यंतिह्यर्थतोनशरीरतइत्यादौधननाशेपिभक्षण शब्दप्रयोगात् ॥ यद्वा भ्रातुर्भक्षणात्सोपिभक्षितइतितथोक्तम् ॥ यद्वा वातापील्वलभक्षणात्तयोर्मारणादित्यर्थः ॥ तदुक्तंरामायणेअरण्यकांडे ॥ अगस्त्येनततःक्रोधादागत्यभ्रातुराश्रमम् ॥ अनुभूयैकदाश्राद्धंभक्षितःसनिशाचरः ॥ ततःसंपन्नमित्युक्त्वादत्वाहस्तावसेचनम् ॥ भ्रातरंनिष्क्रमेत्युच्चैरिल्वलःसोभ्यभाषत ॥ तंतथाहूयमानंतुराक्षसंमेषरूपिणम् ॥ अब्रवीत्प्रहसन्धीमानगस्त्योमुनिसत्तमः ॥ कुतोनिष्क्रमितुंशक्तिर्मयाजीर्णस्यरक्षसः ॥ भ्रातुस्तेमेषरूपस्यगतस्ययमसादनम् ॥ तस्यैतद्वचनंश्रुत्वाभ्रातुर्मरणशंकितः ॥ प्रधर्षयितुमारेभेमुनिंक्रोधा

अतिमित्रंतत्रतेजोमित्रावरुणजेमुनौ॥तदाप्रभृतिलोकेषुकोगस्त्यान्नैवबिभ्यति ॥७॥ इत्युक्त्वांतर्दधेवेधास्तेपिप्रमुदिताननाः ॥ देवाःपरस्परंप्रोचुरहोधन्यतमावयम् ॥ ८ ॥ प्रसंगतोपिद्रष्टव्यौकाशीकाशीपतीशिवौ ॥ अहोअहोभिर्बहुभिःफलितोनोमनोरथः ॥ ९ ॥ उत्फुल्लपद्मनयनानिर्मिताःसुकृतार्थिनः॥ तावेवचरणौधन्यौकाशीमभिप्रयायिनौ ॥ १० ॥ येयंकथाश्रुतास्माभिर्वेधसासमुदीरिता ॥ तस्याःश्रवणजात्पुण्यात्प्राप्नुमस्त्वद्यकाशिकाम् ॥ ११॥ एकाक्रियाद्व्यर्थकरीप्राप्यतेपुण्यगौरवात् ॥ एवंवदंतोहृष्टास्याःसुराःकाशींसमाययुः ॥१२॥ व्यासउवाच ॥ इदंपुण्यतमाख्यानंयेश्रोष्यंतीहमानवाः ॥ विधूयसर्वपापानिपुत्रदारसमन्विताः ॥ १३ ॥ इहवंशंपरिस्थाप्यभुक्त्वासर्वसुखानिच ॥ सत्यलोकेचिरंस्थित्वाततोयास्यंतिशाश्वतम् ॥ १४ ॥ इति श्रीस्कान्देमहापुराणे एकाशीतिसाहस्र्यांसंहितायांचतुर्थे काशीखंडे पूर्वार्धे सत्यलोकवर्णनंनामद्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ भगवन्भूतभव्येशसर्वज्ञानमहानिधे ॥ अवाप्यकाशींगीर्वाणैःकिमकारिवदाच्युत ॥ १ ॥

निशाचरः ॥ अभ्यद्रवदगस्त्यंतुमुनिनादीप्ततेजसा ॥ चक्षुषादीप्तकल्पेननिर्दग्धःसपपातहेति ॥ नचैवंसतिरामायणभारतयोःपरस्परविरोधः ॥ कल्पभेदेनव्यवस्थोपपत्तेः ॥ तथान्यत्रापि ॥ ६ ॥ अतिमित्रंसूर्यमतिक्रम्यवर्ततइतितत्तेजस्तथा ॥ ७ ॥ ८ ॥ ९ ॥ उत्फुल्लपद्मनयनाःसुराःकाशींसमाययुरितितृतीयेनान्वयः ॥ उत्फुल्लपद्मानीवनयनानियेषांतेतथा ॥ कथंभूताः ॥ निर्मिताःनिःशेषेणमितंकाशीकाशीपतीद्रष्टव्यावित्यादिचिंतितंयैस्तेतथा ॥ काशीगमनेकृतसम्यङ्निश्चयाइत्यर्थः ॥ तत्रहेतुमाह ॥ तावेवेति ॥ १० ॥ प्राप्नुयुःप्राप्स्यामः ॥ ११ ॥ १२ ॥ श्रोतृप्ररोचनार्थमाह ॥ इदमिति ॥ १३ ॥ शाश्वतंकैवल्यम् ॥ १४ ॥ ॥ इतिश्रीरामानंदकृतायांकाशीखण्डटीकायांद्वितीयोऽध्यायः ॥ २ ॥ अगस्तेराश्रमपदेदेवतानांसमागमः ॥ तस्यचाश्रममाहात्म्यंतृतीयेध्यायईर्यते ॥ १ ॥ एवंवदन्तोहृष्टास्याः सुराःकाशींसमाययुरित्युक्तंतत्रपृच्छति ॥ भगवन्निति ॥ अच्युतनिर्विकारहेविष्णो

१ अत्रकेऽइत्यपेक्षितमितिभाति । २ व्याससंबोधनम् ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इतिवा ॥ १ ॥ नतृप्तिमधियामिअलंप्रत्ययंनाधिगच्छामि ॥ तपसांशेवधिर्निधिः ॥यथा पद्मादिनिधिर्धनानामाश्रयस्तथातपसामाश्रयःखनिरित्यर्थः ॥ २ ॥ वागमृतांभोधौवाक्सुधासमुद्रे ॥ उत्सुकमुत्कंठितम् ॥ ३ ॥ कृत्स्नंसमग्रम् ॥ प्रश्नमितिवापाठः ॥ समुपचक्रमेउपक्रांतवान् ॥ ४ ॥ संसारांगारेविपच्यमानान्संसारिणोऽज्ञानकरुणयाशोचतीतिशुकः ॥ तदुक्तंभागवते ॥ संसारिणांकरुणयाहपुराणगुह्यमिति ॥ यद्वा शुकवन्मनोज्ञंवचनंवक्तीतिशुकः ॥ तथाचब्रह्मवैवर्तेव्यासंप्रतिभगवद्वचनम् ॥ व्यासत्वदीयतनयःशुकवन्मनोज्ञंब्रूतेवचोभवतुतच्छुकएवनाम्ना । हर्म्ये नवत्स्यातितवापिनमाययासौस्पृष्टोयतोममकथाहृदिमास्यशोकामिति ॥ तथाविगतंनामोच्चारणादेवशंपायाःशतह्रदाया अयनंपतनंयस्यसाविशंपायनःसएववैशंपायनः ॥ स्वार्थेतद्धितः ॥ उक्तंच ॥ शंपांशतह्रदामाहुरयनंपतनंयतः ॥ विगतंपतनंयस्माद्वैशंपायनइत्यतइति ॥ तौशुकवैशंपायनावाद्यौयेषांतेतथा ॥ आद्यपदेनजातूकार्ण्यजैमिनिपैलसुमंतूनांसंग्रहः ॥ शृण्वंत्वन्येमहर्षयइतिक्व

अधीत्येमांकथांदिव्यांनतृप्तिमधियाम्यहम् ॥ शेवधिस्तपसांदेवैरगास्तिःप्रार्थितःकथम् ॥ २ ॥ कथंविंध्योप्यवापस्वांप्रकृतिंतादृगुन्नतः ॥ तववागमृतांभोधौमनोमेस्नातुमुत्सुकम् ॥ ३ ॥ इतिकृत्स्नंसमाकर्ण्यव्यासःपाराशरोमुनिः ॥ श्रद्धावतेस्वशिष्यायवक्तुंसमुपचक्रमे ॥ ४ ॥ पाराशरउवाच ॥ शृणुसूतमहाबुद्धेभक्तिश्रद्धासमन्वितः ॥ शुकवैशंपायनाद्याःशृण्वंत्वेतेचबालकाः ॥ ५ ॥ ततोवाराणसींप्राप्यगीर्वाणाःसमहर्षयः ॥ अविलंबंप्रथमतोमणिकर्ण्यांविधानतः ॥ ६ ॥ सचैलमभिमज्ज्याथकृतसंध्यादिसत्क्रियाः ॥ संतर्प्यतर्प्यादिपितॄन्कुशगंधतिलोदकैः ॥ ७ ॥ तीर्थवासार्थिनः सर्वान्संतर्प्यचपृथक्पृथक् ॥ रत्नैर्हिरण्यवासोभिरश्वाभरणधेनुभिः ॥ ८ ॥ विचित्रैश्चतथापात्रैःस्वर्णरौप्यादिनिर्मितैः ॥ अमृतस्वादुपक्वान्नैःपायसैश्चसशर्करैः ॥ ९ ॥ सगोरसैरन्नदानैर्धान्यदानैरनेकधा ॥ गंधचंदनकर्पूरैस्तांबूलैश्चारुचामरैः ॥ ॥ १० ॥ सतूलैर्मृदुपर्यंकैर्दीपिकादर्पणासनैः ॥ शिबिकादासदासीभिर्विमानैःपशुभिर्गृहैः ॥ ११ ॥ चित्रध्वजपताकाभिरुल्लोचैश्चंद्रचारुभिः ॥ वर्षाशनप्रदानैश्चगृहोपस्करसंयुतैः ॥ १२ ॥ उपानत्पादुकाभिश्चयतिनश्चतपस्विनः ॥ योग्यैःपट्टदुकूलैश्चविविधैश्चित्ररल्लकैः ॥ १३ ॥ दंडैःकमंडलुयुतैरजिनैर्मृगसंभवैः ॥ कौपीनैरुच्चमंचैश्चपरिचारककांचनैः ॥ १४ ॥

चित्पाठः ॥ ५ ॥ ६ ॥ तर्प्यास्तर्पणीयाश्चतेआदिपितरस्तांस्तर्प्यादिपितॄन्संतर्प्य ॥ तर्प्यान्देवपितॄनितिपाठेऽक्षराधिक्यमार्षम् ॥ सन्तर्प्यविधिवद्दिव्यापितॄन्कुशतिलोदकैरितिचक्वचित्पाठः ॥ ७ ॥ रत्नैरित्यादिसप्रदक्षिणैरित्यंतानांतृतीयांतानांतीर्थवासार्थिनः सर्वान्संतर्प्यचेत्यनेनान्वयः ॥ चकाराद्देवादीनपि ॥ ८ ॥ अमत्रैःपात्रैः ॥ पात्रामत्रंचभाजनमित्यमरः ॥ ९ ॥ १० ॥ मृदुपर्यंकैःकोमलखट्वाभिः ॥ मृदुत्वेहेतुमाह ॥ सतूलैर्हंसतूलिकाभिःसहितैरित्यर्थः ॥ यद्वा मृदुपर्यंकैः सूत्रादिनिर्मितपर्यङ्कैः ॥ शिबिकानरयानम् ॥ विमानैरथैः ॥११॥ उल्लोचैश्चंद्रातपैर्वितानैरिति यावत् ॥ अस्त्रीवितानमुल्लोचइत्यमरः ॥ १२ ॥ उपानत्पादुकाभिश्च चर्मनिर्मिताउपानहः काष्ठनिर्मिताःपादुकास्ताभिश्च ॥ चशब्दाःसमुच्चयार्थाः ॥ पट्टदुकूलैर्नूतनक्षौमैः ॥ क्षौमं दुकूलमित्यमरः ॥ पट्टदुकूलैरितिक्वचित्पाठःसाचिंत्यः ॥ चित्ररल्लकैश्चित्रकंबलैः ॥ समौरल्लककंबलावित्यमरः ॥ १३ ॥ अजिनैर्मृगचर्मभिः ॥ उच्चमंचैरुन्नतकाष्ठनिर्मितखट्वादिकैः ॥ परि



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चारककांचनैः शुश्रूषकाणांदेयैःस्वर्णैः ॥ परिचारिकैतिपाठेपिसएवार्थः ॥ १४ ॥ महापुस्तकसंभारैरनेकैःपुस्तकसमूहैः ॥ नानापुस्तकसामग्रीभिरितिवा ॥ १५ ॥ सत्रदानैर्वस्त्रदानैर्यज्ञदानैर्धनदानैरि तिवा॥ सत्रमाच्छादनेयज्ञेसदादानेधनेपिचेत्यमरः॥ हेमन्तेऽग्निष्टिकैंधनैःशिशिरर्तौशीतापनोदायलोहमृदादिनिर्मितान्यग्न्याधारपात्राणिअग्निष्टिकास्ताश्चतास्वग्निकरणार्थानींधनानिकाष्ठानिचतैः१६॥ आच्छादनिकंछदिर्गृहादिकम् ॥ १७ ॥ १८ ॥ देवालयसुधाकार्यैःदेवप्रासादचूर्णदानैः ॥ रंगमालादिमंडनैःरंगमालारंगसमूहाः आदिशब्देनसंमार्जनादीनिगृह्यंते ॥ तैर्यानिमंडनानिता न्येववामंडनानितैः ॥ मंडलैरितिपाठेमंडलंसर्वतोभद्रादि ॥ १९ ॥ नीराजनैःआरार्तिकैः बहुवर्तियुक्तदीपैरित्यर्थः ॥ तदुक्तंविष्णुभक्तिरहस्ये ॥ बहुवर्तिसमायुक्तंज्वलंतंकेशवोपरि ॥ कुर्या दारार्तिकंयस्तुकल्पकोटिदिवंवसेदिति ॥ आरार्तिकैरितिवापाठः ॥ दशांगधूपकैरिति ॥ षड्भागकुष्ठेद्विगुणोगुडश्चलाक्षात्रयंपंचनखस्यभागाः ॥ हरीतकीसर्जरसश्चमांसंभागत्रयंचैवतुशैलजस्य ॥ घनस्यचत्वारिपुरस्यचैकोदशांगधूपःकथितोमुनींद्रैरित्यनेनोक्तोदशांगधूपआदिर्येषांतेचतेसुधूपाश्चतैः ॥ कर्पूरवर्तिकाद्यैरिति ॥ कर्पूरवर्तिकायस्यसकर्पूरवर्तिकः आदौभवआद्यः कर्पूरवर्तिकोदीपआ

मठैर्विद्यार्थिनामन्नैरतिथ्यर्थंमहाधनैः ॥ महापुस्तकसंभारैर्लेखकानांचजीवनैः॥१५॥बहुधौषधदानैश्चसत्रदानैरनेकशः ॥ ग्रीष्मेप्रपार्थद्रविणैर्हेमंतेग्निष्टि कैंधनैः॥१६॥छत्राच्छादनिकाद्यर्थैर्वर्षाकालोचितैर्बहु॥रात्रौपाठप्रदीपैश्चपादाभ्यंजनकादिभिः॥१७॥ पुराणपाठकांश्चापिप्रतिदेवालयंधनैः ॥ देवाल येनृत्यगीतकरणार्थैरनेकशः ॥१८॥ देवालयसुधाकार्यैर्जीर्णोद्धारैरनेकधा ॥ चित्रलेखनमूल्यैश्चरंगमालादिमंडनैः ॥ १९ ॥ नीराजनैर्गुग्गुलुभिर्दशां गादिसुधूपकैः ॥ कर्पूरवर्तिकाद्यैश्चदेवार्चार्थैरनेकशः ॥ २० ॥ पंचामृतानांस्नपनैः सुगंधस्नपनैरपि ॥ देवार्थमुखवासैश्चदेवोद्यानैरनेकशः ॥ २१ ॥ महापूजार्थमाल्यादिगुंफनार्थैस्त्रिकालतः ॥ शंखभेरीमृदंगादिवाद्यनादैः शिवालये ॥ २२ ॥ घंटागडुककुंभादिस्नानोपस्करभाजनैः ॥ श्वेतै र्मार्जनवस्त्रैश्चसुगंधैर्यक्षकर्दमैः ॥ २३ ॥ जपहोमैःस्तोत्रपाठैःशिवनामोच्चभाषणैः ॥ रासक्रीडादिसंयुक्तैश्चलनैः सप्रदक्षिणैः ॥ २४ ॥ एवमादि भिरुद्दंडैः क्रियाकांडैरनेकशः ॥ पंचरात्रमुषित्वातुकृत्वातीर्थान्यनेकशः ॥ २५ ॥

द्योयेषांतेदीपास्तथातैः ॥ कर्पूरवर्तिकाद्यैरितिक्वचित्पाठः ॥ देवार्चार्थैर्देवपूजानिमित्तैर्धनैः ॥ २० ॥ पंचामृतानांस्नपनैर्घृतदुग्धदधिमधुशर्कराणांस्नानैः ॥ २१ ॥ गुंफनार्थैःग्रंथना र्थद्रविणैः ॥ गुंफनंग्रंथसंदर्भेदर्पेगुंफनमिष्यतइतिमेदिनीकारः ॥ २२ ॥ गडुकंभृंगारंअंगुलीयकंवा ॥ गडुकंत्वंगुलीयकमित्युत्पलिनी ॥ मड्डुकेतिपाठेमड्डुकोवाद्यभेदः ॥ तथाचमाघे जग्मुर्जलानिजलमड्डुकवाद्यवल्गुवल्गद्धनस्तनतटस्खलितानिमंदामिति ॥ वाद्यप्रभेदाडमरुमड्डुडिंडिमझर्झराइतिचामरः ॥ यक्षकर्दमैःकर्पूरागुरुकस्तूरीकंकोलैर्यक्षकर्दमइत्यमरः ॥ २३॥ ॥ २४ ॥ उपसंहरति ॥ एवमादिभिरिति ॥ उद्दंडैर्नानाप्रकारैः क्रियाकांडैःकर्मकांडप्रतिपादितैःकर्मभिरित्यर्थः ॥ यद्वा क्रियाकांडैःक्रियासमूहैरित्यर्थः ॥ पंचरात्रमुषित्वेति पंचरात्रेणयावान् कालोभवतिता वंतंकालं स्थित्वेत्यर्थः ॥ यद्वा काश्यांरात्रिदिनविभागस्यदिविष्ठचंद्रसूर्याभ्यांविनैवेश्वरेणकृतत्वाद्यथाश्रुतएवार्थः ॥ ताभ्यांदिनरात्रिविभागप्रतीतिस्तुभूम्यांकाशीतिष्ठतीतिप्रतीतिवद्भ्रांतैव ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अतएवंविंध्योन्नतेःसर्वस्मिन्जगतिभयद्रुतेपिकाशीस्थानांभयद्रवणाद्यभावाद्देवागमनतीर्थवासार्थंसंतर्पणादिकंचसर्वंसंगच्छते ॥ तथाचात्रैवस्मृत्यर्थापत्तिः ॥ क्षुब्धेषुतेषुवीरेषुचकंपेभुवनत्रयम् ॥ दुर्वाससश्चकोपाग्निज्वालाभिर्व्याकुलीकृतम् ॥ तदाविविशतुःकाश्यांसूर्याचंद्रमसावपि ॥ नगणैरकृतानुज्ञौतत्तेजःशमितप्रभावीति ॥ अनेकशःआवृत्यावृत्य बहुवारानित्यर्थः ॥ २५ ॥ २६ ॥ अगस्तिरिति ॥ अगस्तिः स्यादगस्त्यश्चेतिद्विरूपकोशादिकारांतोपि ॥ २७ ॥ २८ ॥ तंदृष्ट्वेति ॥ प्रथमतस्तमगस्त्यंदूरतोदृष्ट्वापश्चाद्गीर्वाणादेवामुनेरुटजंप्रांगणंददृशुरितिद्विसप्ततितमश्लोकेनान्वयः ॥ २९ ॥ आगाम्यष्टत्रिंशच्छ्लोकस्थितेतिशब्दपरामृष्टंकर्माहुः ॥ साक्षादित्यादि ॥ तत्रत्रयेणमुनेरुत्प्रेक्षा ॥ अवशिष्टेनाश्रमपशुपक्ष्यादिवर्णनमितिविवेक्तव्यम् ॥ सतांमनःसन्मनः ॥ ३० ॥ ॥ ३१ ॥ चपलाविद्युत् ॥ तडित्सौदामनीविद्युच्चंचलाचपलाअपीत्यमरः ॥ अचपलास्थिरेतियावत् ॥ ३२ ॥ हिंस्राःक्रूराः ॥ सत्त्वरूपाःसात्त्विकाःसत्त्वगुणप्रधानाइत्यर्थः ॥ स्वभावजंसाहजिकम् ॥ ३३ ॥ अष्टापदः ... करटःप्रशस्तगंडोऽस्यास्तीतिकरटिःहस्ती ॥ छांदसत्वात्साधुत्वम् ॥ काकेभगंडौकरटौगजगंधकटीकटावितिद्वादशसाहस्री ॥ करटोगजगंडेस्यात्कुसुंभेनिंद्यजीवनेइतिमेदिनीकारः ॥ अष्टा

दीनानाथांश्चसंतर्प्यनत्वाविश्वेश्वरंविभुम् ॥ ब्रह्मचर्यादिनियमैस्तीर्थमेवंप्रसाध्यच ॥ २६ ॥ पुनः पुनर्विश्वनाथंदृष्ट्वास्तुत्वाप्रणम्यच ॥ जग्मुःपरोपकारार्थमगस्तिर्यत्रतिष्ठति ॥ २७ ॥ स्वनाम्नालिंगमास्थाप्यकुंडंकृत्वातदग्रतः ॥ शतरुद्रियसूक्तेनजपन्निश्चलमानसः ॥ २८ ॥ तंदृष्ट्वादूरतोदेवा द्वितीयमिवभास्करम् ॥ ज्वलज्ज्वलनसंकाशैरंगैःसर्वत्रसोज्ज्वलम् ॥ २९ ॥ साक्षात्किंवाडवाग्निर्वामूर्त्यावैतप्यतेतपः ॥ स्थाणुवन्निश्चलतरंनिर्मलंसन्मनोयथा ॥ ३० ॥ अथवासर्वतेजांसिश्रित्वेमांब्राह्मणींतनुम् ॥ शीलयंतिपरंधामशांतंशांतपदाप्तये ॥ ३१ ॥ तपनस्तप्यतेऽत्यर्थंदहनोपिहिदह्यते ॥ यत्तीव्रतपसाद्यापिचपलाऽचपलाभवत् ॥ ३२ ॥ यस्याश्रमे ऽत्रदृश्यंतेहिंस्राअपिसमंततः ॥ सत्त्वरूपाअमीसत्त्वास्त्यक्त्वावैरंस्वभावजम् ॥ ३३ ॥ शुंडादंडेनकरटिः सिंहंकंडूयतेऽभयः ॥ अष्टापदांकेस्वपितिकेसरीकेसरोद्भटः ॥ ३४ ॥ सूकरःस्तब्धरोमापिविहायनिजयूथकम् ॥ चरेद्रनशुनांमध्येमुस्तान्यस्तेक्षणोबली ॥ ३५ ॥ भूदारोपिनभूदारंतथाकुर्याद्यथाऽन्यतः ॥ सर्वालिंगमयीकाशीयतस्तद्भीतियंत्रितः ॥ ३६ ॥ क्रोडीकृत्यक्रोडपोतंतरक्षुःक्रीडयत्यहो ॥ शार्दूलबालानुत्सायेंशार्दूलीमेणपोतकः ॥ ३७ ॥

पदःशरभः ॥ अष्टापदंस्यात्कनकेसारीणांफलकेपिच ॥ अष्टापदंचशरभेचंद्रमण्यांचमर्कटइतिचविश्वप्रकाशः ॥ तस्यांकेक्रोडेकेसरीसिंहः ॥ सिंहोमृगेंद्रःपंचास्योहर्यक्षःकेसरीहरिरित्यमरः ॥ कीदृशः ॥ केसरोद्भटः केसरैःस्कंधस्थैर्लोमविशेषैः ॥ किंजल्केकेसरःपुष्पपशुरोमविशेषयोरितिमेदिनीकारः ॥ उद्भटउन्नद्धः ॥ ३४ ॥ सूकरोवराहः ॥ स्तब्धरोमेतितस्यविशेषणम् अतिक्रूरतयास्तब्धानिउन्नतानिरोमाणियस्यसतथाविधोपीत्यतोनपौनरुक्त्यम् ॥ वनश्वानोऽत्रव्याघ्राः अरण्यभवाःश्वानइतिवा ॥ मुस्तासुकुरुविल्लेषु ॥ कुरुविल्लोमेघनामामुस्तामुस्तकमस्त्रियामित्यमरः ॥ मोथाइतिप्रसिद्धासुन्यस्तेदत्तेईक्षणेनेत्रेयेनसतथा ॥ ३५ ॥ भूदारइतिसार्धम् ॥ भुवंपृथ्वींदारयतीतिभूदारःसूकरस्तथाविधोपि ॥ यथान्यत्रभूविदारंकरोतितथात्रनकरोतीत्यर्थः ॥ तत्रहेतुमाह ॥ सर्वालिंगमयीति ॥ ३६ ॥ क्रोडपोतंसूकरशावकम् ॥ वराहःसूकरोघृष्टिःकोलःपोत्रीकिरिःकिटिः दंष्ट्रीघोणीस्तब्धरोमा क्रोडोभूदारइत्यपीत्यमरः ॥ तरक्षुर्मृगादनः ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तरक्षुस्तुमृगादनइत्यमरः ॥ शार्दूलबालान्व्याघ्रशावकानुत्सार्यदूरीकृत्यशार्दूलींव्याघ्रींएणपोतकोहरिणबालकः ॥ दयायांकः ॥ चलत्पुच्छंयस्यसतथा ॥ पिबति ॥ पयइतिशेषः ॥ पिबतिरत्रद्विकर्मकः ॥ लक्षणयावाशार्दूल्याःस्तनंपिबतीत्यर्थः ॥ फेनिलेनफेनयुक्तेन ॥ स्वपंतंशयानंभल्लुंऋक्षम् ॥ अथभल्लुके ऋक्षाच्छभल्लभल्लूकाइत्यमरः ॥ कथंभूतम् ॥ लोमशंबहुलोमयुक्तम् ॥ ३७ ॥ ३८ ॥ यूकालिक्षाः ॥ यूकालिक्षाकीटभेदालाक्षातुस्याद्द्रुमामयेइतिमालती ॥ समउपसर्गस्यवीक्ष्येत्यनेनाग्रेपिसंबंधः ॥ दंतकोटिभिर्दन्ताग्रैर्भक्षयेत् ॥ अत्रसाहजिकवैराभावस्याविवक्षितत्वाद्यूकाभक्षणंनदोषावहम् ॥ यद्वा मृतानामेवयूकानांभक्षणमत्रविवक्षितम् ॥ अतएवसंवीक्ष्यवीक्ष्येत्युक्तम् ॥ अथवालक्षणयांगुलीभिर्विचार्यसंवीक्ष्यदंतकोटिभिर्दूरीकरोतीत्यर्थः ॥ अथवावानरजातिस्वभावत्वाद्भक्षयेदित्येवेत्यर्थः ॥ गोलांगूलाःकापिविशेषास्तेषांविशेषणंरक्तमुखाःनीलांगाइतिच स्वतंत्रावा ॥ ३९ ॥ शशामृगविशेषाः ॥ तैःप्रसिद्धैः ॥ तेइतिपाठेपिसएवार्थः ॥ पृष्ठलुंठनैःपृष्ठसंघर्षणैः ॥ ४० ॥ आखुभुजोमार्जारस्य ॥ ओतुर्बिडालः ॥ ओतुर्बिडालोमार्जारोवृषदंशकआखुभुगित्यमरः ॥ ४२ ॥ केकिकंठेमयूरग्रीवायाम् ॥

चलत्पुच्छोथपिबतिफेनिलेनाननेनवै ॥ स्वपंतंलोमशंभल्लंवानरश्चलदंगुलिः॥३८॥यूकांसंवीक्ष्यवीक्ष्यैवभक्षयेदंतकोटिभिः ॥ गोलांगूलारक्तमुखानीलांगायूथनायकाः॥३९॥जातिस्वभावमात्सर्यंत्यक्त्वैकत्ररमंतिच ॥ शशाःक्रीडंतिचवृकैस्तैः पृष्ठलुंठनैर्मुहुः॥४०॥आखुश्चाखुभुजःकर्णंकंडूयेतचलाननः ॥ मयूरपुच्छपुटगोनिद्रात्योतुः सुखाधिकम् ॥ ४१ ॥ स्वकंठंघर्षयत्येवकेकिकंठेभुजंगमः ॥ भुजंगमफणापृष्ठेनकुलः स्वकुलोचितम् ॥ ४२ ॥ वैरंपरित्यज्यलुठेदुत्प्लुत्योत्प्लुत्यलीलया ॥ आलोक्यमूषकंसर्पश्चरंतंवदनाग्रतः ॥ ४३ ॥ क्षुधांधोपिनगृह्णातिसोपितस्माद्बिभेतिनो ॥प्रसूयमानांहरिणींदृष्ट्वाकारुण्यपूर्णदृक् ॥ ४४ ॥ तद्दृष्टिपातंमुंचन्वैव्याघ्रोदूरंव्रजत्यहो ॥ व्याघ्रीव्याघ्रस्यचरितंमृगीमृगविचेष्टितम् ॥ उभेकथयतोऽन्योन्यंसख्याविवमुदान्विते ॥४५॥ दृष्ट्वाप्युद्दंडकोदंडंशबरंशंबरोमृगः ॥ धृष्टोनवर्त्मत्यजतिसोपिकंडूयतेपितम् ॥ ४६ ॥ रोहितोऽरण्यमहिषमुद्धर्षतिनिराकुलः॥चमरीशबरीकेशैःसंमिमीतेस्ववालधिम् ॥४७॥ गवयःशल्यकश्चाऽयमुभावेकत्रतिष्ठतः ॥ तीव्रंमात्सर्यमुत्सृज्यमुनितेजोनियंत्रितौ ॥ ४८ ॥

फटाफणा ॥ फटायांतुफणाद्वयोरित्यमरः ॥ ४२ ॥ लुठेत्क्रीडेत् ॥ उत्प्लुत्योत्प्लुत्यउत्फाल्योत्फाल्य ॥ लीलयाऽवज्ञयाभयमगणयित्वेतियावत् ॥ ४३ ॥ क्षुधाबुभुक्षयार्तः पीडितइति यावत् ॥ क्षुधांधइतिपाठेपिसएवार्थः ॥ कारुण्यपूर्णदृक्करुणाव्याप्तज्ञानः ॥ ४४ ॥ अहोइत्याश्चर्येहर्षेवा ॥ ४५ ॥ उद्दंडकोदंडमत्यूर्जितचापम् ॥ अथास्त्रियौ धनुश्चापौधन्वशरासनकोदंडकार्मुकामित्यमरः ॥ शबरंभिल्लम् ॥ शंबरोनाम्ना ॥ धृष्टोदृप्तोनिर्लज्जोवा ॥ सःशबरोमृगादनोपीत्यर्थः ॥४६॥ रोहितोमृगावांतरजातिभेदः ॥ कृष्णसाररुरुन्यंकुरंकुशंबररोहिषाः गोकर्णपृषतैणर्श्यरोहिताश्चमरोमृगा इत्यमरः ॥ उद्धर्षतिसंस्पृशतिसंलुठतिनगणयतीत्यर्थः ॥ उद्धर्षतीतिपाठः ॥ निराकुलोनिःशंकः ॥ चमरीचमरस्यमृगविशेषस्यपत्नी ॥ शबरीशबरांगनाचंडालविशेषस्त्री ॥ भेदाः किरातशबरपुलिन्दाम्लेच्छजातयइत्यमरः ॥ तस्याः केशैःस्ववालधिं स्वीयवालहस्तम् केशवल्लांगूलमितियावत् ॥ वालहस्तस्तुवालधिरित्यमरः ॥ संमिमीतेपरिमिनोति ॥ ४७ ॥ गवयोमृगविशेषः । गंधर्वः शरभोरामःसृमरो गवयःशशः इत्यादयोमृगेंद्राद्याइत्यमरः ॥ शल्यकःश्वावित् ॥ शल्य एव शल्यकः ॥ स्वार्थेकः ॥ श्वावित्तुशल्यइत्यमरः ॥ ४८ ॥

---

१ निजमात्सर्यमितिप्रचुरःपाठः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

हुमितिशब्दंकृत्वायुद्धायडीयेतेइतिहुंडौमेषौतौमुण्डयुद्धायनसज्जेतेनप्रवर्त्तेते ॥ यद्वा हुंडौतीक्ष्णोग्रमौजन्तुविशेषौ ॥ हुंडस्तीक्ष्णोग्रमोहुंडावह्निघोषेतुकीर्तिताइतिरत्नमाला ॥ यद्वा हुंडौमदपूर्णौ मल्लौ ॥ हुंडास्याज्जलहस्तिन्यांमदिराजलहस्तयोः नलिन्यांशूरयोषायांहुंडःस्यान्मदनिर्भरइतिविश्वप्रकाशः ॥ मल्लयोर्मुंडयुद्धंतुशिरःशीष्णोरसोरसावितिभागवतेप्रसिद्धम् ॥ हुंडौहुंडारावितिकेचित् जयैषिणौजयकांक्षिणौ ॥ मृदुयथास्यात् ॥ ४९ ॥ तृण्वंतिभक्षयंति ॥ तृणुअदनइतिधातुः ॥ तृणगुल्मादीन्तृणानिचगुल्मानिचतान्यादीनियेषांतान् ॥ श्वापदाव्याघ्रादयः शुनांआपदोयेभ्यस्तेश्वापदाइतिव्युत्पत्तिपुरस्कारेणपुंसिश्वापदसर्पयोरित्यादिदर्शनाददन्तत्वेननिपातनात् ॥ पाठांतरेसुष्ठुआपत्येभ्यस्तेतथाइतिव्याख्येयम् ॥ किमितिमांसभक्षणंविहायतृणादीनदंतितत्राह ॥ आपदास्पदंआपदांआस्पदंस्थानम् ॥ कुतोयतोलोकद्वयेदुःखदंयन्मांसस्यभक्षणंतद्धिगस्त्वित्यर्थः ॥ आपदांपदमितिक्वचित्पाठः ॥ तत्रपदंस्थानम् ॥ ५० ॥ लोकद्वयदुःखदत्वमेवप्रपंचयाति ॥ यःस्वार्थमिति ॥ ५१ ॥ आकल्पंकल्पपर्यंतम् ॥ कल्पोत्रब्रह्मणोदिनम् ॥ तैरिति ॥ येषांप्राणदेहेंद्रियादिभिःस्वप्राणान्स्वदेहेंद्रियादीन्येपुष्णंतिपालयंतितेअमुत्रतैर्भु

हुंडौचमुंडयुद्धायनसज्जेतेजयैषिणौ ॥ एणशावंसृगालोपिमृदुस्पृशातिपाणिना॥४९॥तृण्वंतितृणगुल्मादीन्श्वापदास्त्वापदास्पदम्॥लोकद्वयेदुःखदंहिधिक्तन्मांसस्यभक्षणम् ॥ ५० ॥ यःस्वार्थंमांसपचनंकुरुतेपापमोहितः ॥ यावंत्यस्यतुरोमाणितावत्सनरकेवसेत् ॥५१॥परप्राणैस्तुयेप्राणान्स्वान्पुष्णंतिहिदुर्धियः ॥ आकल्पंनरकान्भुक्त्वातेभुज्यंतेत्रतैःपुनः ॥ ५२ ॥ जातुमांसंनभोक्तव्यंप्राणैःकंठगतैरपि ॥ भोक्तव्यंतर्हिभोक्तव्यंस्वमांसंनेतरस्यच ॥ ५३ ॥ वरमेतेश्वापदावैमैत्रावरुणिसेवया ॥ येषांनहिंसनेबुद्धिर्नतुहिंसापरानराः ॥ ५४ ॥ बकोपिपल्वलेमत्स्यान्नाश्नात्यग्रेचरानपि ॥ नमहांतोप्यमहतोमत्स्यामत्स्यानदंतिवै ॥ ५५ ॥ एकतःसर्वमांसानिमत्स्यमांसंतथैकतः ॥ स्मृतिःस्मृतेतिकिंत्वेभिरतोमत्स्याञ्जहत्यमी ॥ ५६ ॥ श्येनोपिवर्तिकांदृष्ट्वाभवत्येषपराङ्मुखः ॥ चित्रमत्रापिमधुपाभ्रमंतिमलिनाशयाः ॥ ५७ ॥ सुचिरंनरकान्भुक्त्वामदिरापानलंपटाः ॥ मधुपाएवगायंतेभ्रांतिभाजःपुनःपुनः ॥ ५८ ॥

ज्यंतइत्यर्थः ॥ तथाचमनुः ॥ समांखादयितापुत्रयस्यमांसमिहाद्म्यहम् एतन्मांसस्यमांसत्वंप्रवदंतिमनीषिणइति ॥ ५२ ॥ ५३ ॥ वरंश्रेष्ठाः ॥ ५४ ॥ बकःकह्वः ॥ पल्वलेऽल्पोदकेसरसि ॥ वेशंतःपल्वलंचाल्पसरइत्यमरः ॥ अमहतोऽणीयसः ॥ ५५ ॥ एभिर्बकादिभिः ॥ किंस्मृतेतिविमर्शः॥ तत्रस्मृतैवेतिनिश्चित्यतत्रहेतुमाह ॥ अतइति ॥ यतो मत्स्यान्जहतिअतःस्मृतःस्मृतैवेत्यर्थः॥ अथवाकिंस्मृतेतिकाकूक्त्यास्मृतैवेति ॥ अतोतःकारणात्मत्स्यान् जहतित्यजंतीति ॥ ५६ ॥ श्येनःपत्री ॥ पत्रीश्येनइत्यमरः ॥ वर्त्तिकांवर्तकाख्यंपक्षिविशेषंवनचटकामितियावत् ॥ नाववांटयीतिगौडेप्रसिद्धम् ॥ वर्तकावर्तिकादयइत्यमरः ॥ चित्रमित्यर्धमुत्तरश्लोकान्वयि ॥ ५७ ॥ सुचिरमिति ॥ सुचिरंनरकान्भुक्त्वात्रापिकाश्यामपिमलिनाशयामलिनांतःकरणाःसंतोभ्रमंतिअहोएतच्चित्रमिति ॥ तंत्रहेतुमाह ॥ मदिरेति ॥ मद्यपानासक्ताअभीक्ष्णमज्ञानमाश्रयंतोमधुपाएवभवंतीत्यर्थः ॥ वमंतिमधुनासयेतिक्वचित्पाठस्तदायमर्थः ॥ नरकजन्यंदुःखमस्माकमितःपरमास्यादि

---

१ स्वापदाइत्येवंरूपे ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तिखेदेनणीतमपि मधुनासयानासारंध्रेणवमंतित्यजन्तीति ॥ अन्यत्पूर्ववत् ॥ ५८ ॥ हेतुमेवसाधयन्ते । अतएवेति ॥ पुराणज्ञैःपुराणोविश्वेशस्तज्ज्ञैरितिवक्ष्यमाणागाथापद्यंपरिगीयतइत्यन्वयः ॥ स्फुटार्थास्पष्टार्था ॥ विश्वेश्वरस्वरूपज्ञतामेवाहुः ज्ञात्वेति ॥ प्राकृतंव्याख्यानंस्पष्टम् ॥ ५९ ॥ गाथामेवपठति ॥ क्वमांसमिति ॥ हृदिस्थितोपीतिशेषः ॥ ६० ॥ विनेति ॥ प्रसादोनाममामयंजानात्वित्येवंरूपोऽनुग्रहः ॥ शिववर्जिताःशिवतत्त्वज्ञानरहिताः ॥ ६१ ॥ तिरोंऽचंतीतितिर्यंचः द्वितीयास्थानेप्रथमा ॥ पश्वादीनित्यर्थः ॥ तिरश्चइतिवापाठः ॥ अबोधिज्ञातः ॥ तुरेवार्थे ॥ अयंप्रभावःक्षेत्रजएव ॥ ६२ ॥ ६३ ॥ ज्ञात्वेति ॥ एवार्थेनतुशब्देनतारयतीत्यनेनसंबंधः ॥ तारयत्येवेत्यर्थः ॥ ६४ ॥ अविमुक्तेति ॥ तिर्यंचोप्येतेमुच्यंतएवेत्यर्थः ॥ ६५ ॥ पक्षिकुलंपाक्षिसमूहम् ॥ ६६ ॥ सारसःपुष्कराह्वः ॥ पुष्कराह्वस्तुसारसइत्यमरः ॥ लक्ष्मणाकंठेयोषिद्विवायाम् ॥ मन्यामहइतिदेवानामुक्तिः ॥ उत्तरत्राप्येतस्ययथासंभवंसंबंधोज्ञेयः ॥ ६७ ॥ वरटाहंसस्यभार्या ॥ हंसस्ययोषिद्वरटासारसस्यतुलक्ष्मणेत्यमरः ॥ स्वचंचुपुटकोटिभिःस्वस्यचंचुःस्वचंचुःस्वत्रोटिरित्यर्थः ॥ चंचुस्त्रोटिरुभेस्त्रियामित्यमरः ॥ तस्यपुटंयुगलंतस्यकोटिभिरग्रभागैः॥

अतएवपुराणेषुगाथेतिपरिगीयते ॥ स्फुटार्था[1]पुराणज्ञैर्ज्ञात्वातत्त्वंपिनाकिनः ॥ ५९ ॥ क्वमांसंक्वशिवेभक्तिःक्वमद्यंक्वशिवार्चनम् ॥ मद्यमांसरतानांचदूरेतिष्ठतिशंकरः ॥ ६० ॥ विनाशिवप्रसादंहिभ्रांतिःक्वापिननश्यति ॥ अतएवभ्रमंत्येतेभ्रमराःशिववर्जिताः ॥ ६१ ॥ इत्याश्रमचरान्दृष्ट्वातिर्यंचोपिमुनीनिव ॥ अबोधिविबुधैरित्थंप्रभावः क्षेत्रजस्त्वयम् ॥ ६२ ॥ यतोविश्वेश्वरेणैतेतिर्यंचोप्यत्रवासिनः ॥ निधनावसरेमोच्यास्तारकस्योपदेशतः ॥ ६३ ॥ ज्ञात्वाक्षेत्रस्यमाहात्म्यंयोवसेत्कृतनिश्चयः ॥ तंतारयतिविश्वेशोजीवंतमथवामृतम् ॥ ६४ ॥ अविमुक्तरहस्यज्ञामुच्यंतेज्ञानिनोनराः ॥ अज्ञानिनोपितिर्यंचोमुच्यंतेगंतकिल्बिषाः ॥ ६५ ॥ इत्याश्चर्यपरादेवायावद्यांत्याश्रमंमुनेः ॥ तावत्पक्षिकुलंदृष्ट्वाभृशंमुमुदिरेपुनः ॥ ६६ ॥ सारसोलक्ष्मणाकंठेकंठमाधायनिश्चलः ॥ मन्यामहेननिद्रातिध्यायेद्विश्वेश्वरंकिल ॥ ६७ कंडूयमानावरटास्वचंचुपुटकोटिभिः ॥ हंसंकामयमानंतुवारयेत्पक्षधूननैः ॥ ६८ ॥ निरुद्ध्यमानाचक्रेणचक्रीकैंकितभाषणैः ॥ वदतीतिकिमत्रापिकामिताकामिनांवर ॥ ६९ ॥ कलकंठःकिलोत्कंठंमंजुगुंजतिकुंजगः॥ध्यानस्थःश्रोष्यतिमुनिःपारावत्येतिवार्यते॥७०॥केकीकेकांपरित्यज्यमौनंतिष्ठतितद्भयात्॥चकोरश्चंद्रिकाभोक्तानक्तव्रत मिवास्थितः७१

चंचुपुटस्याद्वित्वेपितदग्रावयवानांबहुत्वाद्बहुवचनम् ॥ कंडूयमानाकंडूतिंकुर्वाणाहंसंकामयमानंरतिंप्रार्थयंतंपक्षधूननैःपक्षयोश्चलनैर्वारयेदित्यर्थः ॥ ६८ ॥ निरुध्यमानेति ॥ चक्रेणचक्रवाकेन ॥ कोकश्चक्रश्चक्रवाकोरथांगाह्वयनामकइत्यमरः ॥ कैंकितभाषणैश्चक्रवाकजातिशब्दैश्चक्रीचक्रवाकीअत्यर्थंनिरुध्यमानाव्रियमाणासतीहेकामिनांवरश्रेष्ठेतिसोपहासोक्तिः ॥ अत्रापिआनंदकाननेतत्रापितत्रापिअगस्त्यस्याश्रमइत्यपिशब्दार्थः ॥ कामिताकामभावइतिवक्तीत्यर्थः ॥ ६९ ॥ कलकंठइति ॥ कलोमधुरध्वनिःकंठोयस्यासौकलकंठःकलरवः पारावतइतियावत् ॥ उत्कंठंऊर्ध्वग्रीवंमंजुमनोहरंयथाभवतितथाकुंजगोलतादिपिहितोदरस्थःसन्गुंजतिअव्यक्तं शब्दंकरोतिसपारावतपत्न्यावार्यते ॥ गुंजन्निकुंजगइतिक्वचित्पाठः ॥ किलेत्युत्प्रेक्षायाम् ॥ वार्यतइव ॥ इतिनिश्चितेर्नाक्षिद्धेवा ॥ कैःपक्षधूननैरित्यनुषंजनीयम् ॥ किमितिवार्यतेतत्राह ॥ ध्यानस्थोमुनिरगस्त्यः श्रोष्यतीतिहेतोरित्यर्थः ॥ ७० ॥ केकीमयूरः ॥ मयूरोबर्हिणोबर्ही

---

१ तत्वकलमपाइत्यपिपाठः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नीलकंठोभुजंगभुक् शिखावलःशिखीकेकीमेघनादानुलास्यपीत्यमरः ॥ केकांमयूरध्वनिम् ॥ तद्भयादगस्त्यभयात् ॥ चकोरःपक्षिविशेषः ॥ तेषांविशेषाहारीतोमद्गुःकारंडवःप्लवः तित्तिरिः
कुक्कुभोलावोजीवंजीवश्चकोरकइत्यमरः ॥ चन्द्रिकाकौमुदी ॥ चन्द्रिकाकौमुदीज्योत्स्नेत्यमरः ॥ नक्तव्रतंरात्रिभोजनम् ॥ ७१ ॥ पठंतीति ॥ सारिकापक्षिविशेषः शालिकइतिप्रसिद्धः ॥
सारंपरमार्थंपठंतीशुकंकीरम् ॥ कीरशुकौसमावित्यमरः ॥ संबोधयति ॥ किंतत्सारंकथंवासंबोधयतितत्राह ॥ अहोइति ॥ अहोहेशुकअपारावारसंसारसिंधुपारप्रदःशिवइति ॥ पारंपरतीरं
अवारमर्वाचीनंतीरम् ॥ पारावारेपरार्वाचीतीरेइतिवचनात् ॥ नविद्यतेपारावारेयस्यासावपारावारःसचासौसंसारएवासिन्धुःसमुद्रः ॥ देशेनदविशेषेब्धौसिंधुर्नासरितिस्त्रियामित्यमरः ॥ तस्य
पारंसमाप्तिंप्रददातीतिसतथा ॥ यद्वा अपारावारःसंसारसमुद्रोयेषांतान्जीवान्पारयाति मुक्तिप्रदानात्समाप्तकर्मणःकरोतीति ॥ यद्वा पारतीरसमाप्तावितिचौरादिकात्पारधातोःअपारावारसंसारपारः
परमात्मातंप्रददातीतितथा ॥ आत्मप्रदःशिवइतिसारंभोशुकइतिसंबोधयतीत्यर्थः ॥ अपारपारेतिक्वचित्पाठः ॥ तत्रअनंतपारइत्यर्थः ॥ ७२ ॥ कोकिलइति ॥ कोकिलोवनप्रियः ॥
वनप्रियःपरभृतःकोकिलःपिकइत्यपीत्यमरः ॥ काकलींसूक्ष्मध्वनिंमधुरध्वनिंवा ॥ काकलीतुकलेसूक्ष्मेध्वनौतुमधुरास्फुटइत्यमरः ॥ कलयन्नुच्चारयन् ॥ कलिकालौकलिश्चकालश्चतौकाशी

पठंतीसारिकासारंशुकंसंबोधयत्यहो ॥ अपारावारसंसारसिंधुपारप्रदःशिवः ॥ ७२ ॥ कोकिलःकोमलालापैःकलयन्किलकाकलीम् ॥
कलिकालौकलयतःकाशीस्थान्नेतिभाषते ॥ ७३ ॥ मृगाणांपक्षिणामित्थंदृष्ट्वाचेष्टांत्रिविष्टपम् ॥ अकांडपातसंकष्टंनिनिंदुस्त्रिदशाबहु ॥
॥ ७४ ॥ वरमेतेपक्षिमृगाःपशवःकाशिवासिनः ॥ येषांनपुनरावृत्तिर्नदेवानपुनर्भवाः ॥ ७५ ॥ काशीस्थैःपतितैस्तुल्यानवयंस्वर्गिणःक्वचित् ॥
काश्यांपाताद्भयंनास्तिस्वर्गेपाताद्भयंमहत् ॥ ७६ ॥ वरंकाशीपुरीवासोमासोपवसनादिभिः ॥ विचित्रच्छत्रसंछायंराज्यंनान्यत्रनीरिपु ॥ ७७ ॥
शशकैर्मशकैःकाश्यांयत्पदंहेलयाप्यते ॥ तत्पदंनाप्यतेऽन्यत्रयोगयुक्त्यापियोगिभिः ॥ ७८ ॥ वरंवाराणसीरंकोनिःशंकोयोयमादपि ॥ नवयं
त्रिदशायेषांगिरितोपीदृशीदशा ॥ ७९ ॥ ब्रह्मणोदिवसाष्टांशेपदमैंद्रंविनश्यति ॥ सलोकपालंसार्कंचसचंद्रग्रहतारकम् ॥ ८० ॥

स्थान्नकलयतः नमारयतइतिवदतीत्यर्थः ॥ ७३ ॥ मृगाणामिति ॥ अकांडपातसंकष्टंअकांडेऽअवसरेहिरण्यकशिपुप्रमुखैःपाताद्भ्रंशात्सम्यक्कष्टंदुःखंयस्मिन्तत्तथा ॥ बहुयथाभवतितथा
॥ ७४ ॥ वरमिति ॥ वरंश्रेष्ठाइत्यर्थः ॥ ननुभवंतोप्यमरत्वात्पुनरावृत्त्यभावेनश्रेष्ठाएवेतिस्वयमाशंक्यस्वयमेवानिराकुर्वंति ॥ नदेवानपुनर्भवाइति ॥ देवावयंपुनर्भवाःपुनर्भवोजन्मयेषांपुन
र्भवंतीतिवापुनर्भवानइतिनअपितुपुनर्भवाएव ॥ द्वौनञौप्रकृतार्थंगमयतइतिन्यायात् ॥ अमरत्वादिश्रवणंत्वापेक्षिकमतोवयंतुच्छाएवेत्यर्थः ॥ यद्वा देवावयंनइतिप्रथमनकारेणसंबंधमारचय्य
पश्चाद्धेत्वन्वेषणायांननपुनर्भवाइतिसम्बन्धनीयम् ॥ नदेवायेपुनर्भवाइतिपाठस्त्वातिरोहितार्थःसपुनर्भवाइतिच ॥ ७५ ॥ ७६ ॥ नीरिपुनिर्गतारिपवोयस्माद्यस्मिन्नितिवातद्राज्यंतथा ॥ ७७ ॥
योगयुक्त्यापि योगोऽष्टांगादिः ॥ युक्तिर्युंजनमनुष्ठानमितियावत् ॥ योगस्ययुक्तिस्तयापीत्यर्थः ॥ ७८ ॥ गिरितोविंध्यात् ॥ ईदृशीदशानाशदशा ॥ यज्ञादेरभावेनाप्यायना
भावादित्यभिप्रायः ॥ ७९ ॥ ब्रह्मणइति ॥ ब्रह्मणोहिरण्यगर्भस्यदिवसस्यादिनस्याष्टांऽशेष्टभागेघटिकाचतुष्टयेस्थितेसायंकालइतियावत् ॥ ऐंद्रंपदंत्रैलोक्यम् ॥ सलोकपालंलोकाश्चतत्पालाश्च



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तःसहवर्तमानम् ॥ ८० ॥ परार्धद्वयेति ॥ पराधब्रह्मणः स्वमानेनपंचाशद्वर्षपरार्धद्वयंशतवर्षंतस्य नाशोपिप्राकृतप्रलयेपि ॥ अपिःसमुच्चयार्थः ॥ यःकाशीस्थःसनविनश्यति यावज्जीवंकस्याप्युपद्रवस्याभावात् ॥ यथावसरेशरीरपातेचसांद्रानंदावबोधब्रह्मत्वेनोपस्थानात् ॥ अतएवविंध्योन्नतेः सर्वस्मिन्जगतिभयद्रुतेपिकाशीस्थानांभयद्रवणाद्यभावाद्देवागमनंतीर्थे वासार्थिसंतर्पणंपंचरात्रमुषित्वेत्यादिकंचसर्वंसंगच्छतेइतिपूर्वमेवसकारणमुक्तम् ॥ यत्त्विदानीमन्यथादृश्यतेतत्प्राणिनांपापोपचयाद्विश्वेशप्रातिकूल्याच्च ॥ तथाचात्रैवोक्तम् ॥ कलौविघ्नाभविष्यं तिकाश्यांनिवसतांकिल ॥ येपापशीलाश्चशठाश्चमूर्खाः कुर्वंतिपापान्यविशंकमार्यं ॥ तेषामनंतंभवतीहदुःखमाचंद्रतारंनहिसंशयोत्र ॥ लब्धोपिसिद्धिंनोयायाद्यादिकुद्धश्चेत्रिलोचनइत्यादि ॥ ८१ ॥ विपक्षेबाधकमाह ॥ अस्तिचेदिति ॥ काशीवासाभिलाषुकाःकाशीवासाभीप्सवः ॥ ८२ ॥ तत्पुण्येति ॥ तच्चतत्पुण्यंचेतितत्पुण्यंतस्यपरिवर्तनव्यत्ययेनविनिमयेनेत्यर्थः ॥ ८३ ॥ शरणंर क्षितारम् तंत्यक्त्वाक्कापिनगच्छेदितिभावः ॥ ८४ ॥ अखंडंसमग्रंपूर्णमितियावत् ॥ ८५ ॥ ८६ ॥ ८७ ॥ स्वर्धुनीदर्शनादित्यारभ्यपञ्चम्यंतानांपदानांतृतीयांतानांचधर्मःस्यादुत्तरोत्तरइत्याग्रि

परार्धद्वयनाशेपिकाशीस्थोयोननश्यति ॥ तस्मात्सर्वप्रयत्नेनकाश्यांश्रेयःसमाचरेत् ॥ ८१ ॥ यत्सुखंकाशिवासेत्रनतद्ब्रह्मांडमंडपे ॥ अस्तिचेत्तत्कथं सर्वेकाशीवासाभिलाषुकाः ॥ ८२ ॥ जन्मांतरसहस्रेषुयत्पुण्यंसमुपार्जितम् ॥ तत्पुण्यपरिवर्तेनकाश्यांवासोऽत्रलभ्यते ॥ ८३ ॥ लब्धोपिसिद्धिंनो यायाद्यदिकुद्धश्चेत्रिलोचनः ॥ तस्माद्विश्वेश्वरंनित्यंशरण्यंशरणंव्रजेत् ॥ ८४ ॥ धर्मार्थकाममोक्षाख्यंपुरुषार्थचतुष्टयम् ॥ अखंडंहियथाकाश्यांनतथा न्यत्रकुत्रचित् ॥ ८५ ॥ आलस्येनापियोयायाद्गृहाद्विश्वेश्वरालयम् ॥ अश्वमेधाधिकोधर्मस्तस्यस्याच्चपदेपदे ॥ ८६ ॥ यःस्नात्वोत्तरवाहिन्यांयातिविश्वे शदर्शने ॥ श्रद्धयापरयातस्यश्रेयसोंतोनाविद्यते ॥ ८७ ॥ स्वर्धुनीदर्शनात्स्पर्शात्स्नानादाचमनादपि ॥ संध्योपासनतोजप्यात्तर्पणाद्देवपूजनात् ॥८८॥ पंचतीर्थावलोकाच्चततोविश्वेश्वरेक्षणात् ॥ श्रद्धास्पर्शनपूजाभ्यांधूपदीपादिदानतः ॥ ८९ ॥ प्रदक्षिणैः स्तोत्रजपैर्नमस्कारैस्तुनर्तनैः ॥ देवदेवमहादे वशंभोशिवशिवेतिच ॥ ९० ॥ धूर्जटेनीलकंठेशपिनाकिञ्शशिशेखर ॥ त्रिशूलपाणेविश्वेशरक्षरक्षेतिभाषणैः ॥ ९१ ॥ मुक्तिमंडपिकायांचनिमेषार्धो पवेशनात् ॥ तत्रधर्मकथालापात्पुराणश्रवणादपि ॥ ९२ ॥ नित्यादिकर्मकरणात्तथातिथिसमर्चनैः ॥ परोपकरणाद्यैश्चधर्मस्स्यादुत्तरोत्तरः ॥ ९३ ॥ शुक्लपक्षेयथाचंद्रःकलयाकलयैधते ॥ एवंकाश्यांनिवसतांधर्मराशिःपदेपदे ॥ ९४ ॥

मेणसंबन्धः ॥ ८८ ॥ पंचतीर्थावलोकनात्कपालमोचनपापमोचनऋणमोचनकुलस्तंभवैतरण्यवलोकनात् ॥ यद्वा वरुणासंभेदासिसंभेदपंचनददशाश्वमेधमणिकर्णिकावलोकनात् यद्वा आदित्यद्रौपदीविष्णुदण्डपाणिमहेश्वरढुंढिविनायकज्ञानवापीनंदिकेशतारकेशमहाकालेशपुनर्दंडपाण्यवलोकनात् ॥ तथाचात्रैववक्ष्यति ॥ आदित्यंद्रौपदींविष्णुंदंडपाणिंमहेश्वरम् ॥ नम स्कृत्यततोगच्छेद्द्रष्टुंढुंढिविनायकम् ॥ ज्ञानवापीमुपस्पृश्यनंदिकेशंततोर्चयेत् ॥ तारकेशन्ततोभ्यर्च्यमहाकालेश्वरंततः ॥ पश्येत्पुनर्दंडपाणिमित्येषापंचतीर्थिका ॥ चकारादन्येषामपि ॥ उत्तरोत्तर मित्येषापंचतीर्थिकेतिपारिभाषिकपंचतीर्थविधानात् ॥ यद्वा आदित्यादिमहेश्वरांतमेकम् ढुंढिविनायकमेकम् ज्ञानवाप्येकम् नन्दिकेशादित्रयमेकम् पुनर्दंडपाणिरेकम् एवंवापंचतीर्थिका ॥ चकारादन्येषामपि ॥८९॥९०॥९१॥९२॥ उत्तरोत्तरउपर्युपरिश्रेष्ठोवा ॥ उपर्युदीच्यश्रेष्ठेष्वप्युत्तरःस्यादित्यमरः ॥ प्रतिदिनंवर्धमानइत्यर्थः ॥९३॥ धर्मवृद्धिंसदृष्टांतमाह ॥ शुक्लपक्षइति ॥ पदेपदे



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

क्षणेक्षणे ॥९४॥ वृक्षरूपेणधर्मंस्तौति ॥ श्रद्धेति ॥ अयंश्रुतिस्मृतिभ्यांप्रतिपादितोधर्मवृक्षईडचस्तुत्यस्सेव्यः तियावदित्यन्वयः ॥ कथंभूतः ॥ श्रद्धाऽऽस्तिक्यबुद्धिर्बीजंयस्यसः ॥ पुनःकथंभूतः ॥ ब्राह्मणचरणजलैःसिक्तोमीढःक्षरितइतियावत् ॥ पुनःकथंभूतः॥यस्यधर्मवृक्षस्यताःप्रसिद्धाश्चतस्रोदशचतुर्दशसंख्याकाःशिक्षाकल्पज्योतिश्छंदोनिरुक्तव्याकरणऋग्यजुःसामाथर्वमीमांसान्यायपुराण धर्मशास्त्रलक्षणाअपिशब्दादायुर्वेदधनुर्वेदगांधर्ववेदार्थशास्त्रलक्षणाश्चशाखाःस्कंधायस्यसः ॥ तदुक्तंवैष्णवे ॥ अंगानिवेदाश्चत्वारोमीमांसान्यायविस्तरः ॥ पुराणंधर्मशास्त्रंचविद्याह्येताश्चतुर्दश ॥ आयुर्वेदोधनुर्वेदोगांधर्वश्चैवतेत्रयः ॥ अर्थशास्त्रंचतुर्थंतुविद्याह्यष्टादशैवत्विति ॥ पुनःकीदृशः ॥ यस्यधर्मवृक्षस्यार्थान्यायोपार्जितधनानिपुष्पाणिकुसुमानिसः ॥ पुनःकथंभूतः ॥ यस्यधर्म वृक्षस्यस्थूलसूक्ष्मेद्वेफलेसः ॥ केतेतत्राह ॥ मोक्षःकामइति ॥ सूक्ष्मंफलंमोक्षः स्थूलंफलंकामइत्यर्थः ॥ ९५ ॥ ढुंढिर्विघ्नाधिराजः ॥ मंत्रशब्दःप्रणवविषयःषडक्षररामंत्रविषयोवा ॥ ९६ ॥ काश्यांधर्मइति ॥ सचासौचतुष्पादरूपश्चेतितथासंपूर्णइत्यर्थः ॥ तेचपादाः सत्यंतपोदयादानमिति ॥ श्रेयःकैवल्यम् ॥ ९७ ॥ नैतच्चित्रमित्याह ॥ विश्वेश्वरइति ॥ धर्मश्चार्थ श्चकामश्चामृतंकैवल्यंचतानितथातद्रूपेषुतेष्वभिमतंभातिप्रियत्वेनरूपंस्वरूपंयस्यसः ॥ तदुक्तम् ॥ अस्तिभातिप्रियंरूपंनामचेत्यर्थपंचकम् ॥ आद्यंत्रयंब्रह्मरूपंजगद्रूपंततोद्वयमिति ॥ यद्वा धर्मार्थ

श्रद्धाबीजोविप्रपादांबुसिक्तःशाखाविद्यास्ताश्चतस्रोदशापि ॥ पुष्पाण्यर्थाद्वेफलेस्थूलसूक्ष्मेमोक्षःकामोधर्मवृक्षोयमीडचः ॥ ९५ ॥ सर्वार्थानामत्रदात्री भवानीसर्वान्कामान्पूरयेदत्रढुंढिः ॥ सर्वाञ्जंतून्मोचयेदंतकालेविश्वेशोत्रश्रोत्रमंत्रोपदेशात् ॥ ९६ ॥ काश्यांधर्मस्तच्चतुष्पादरूपःकाश्यामर्थःसोप्यने कप्रकारः ॥ काश्यांकामःसर्वसौख्यैकभूमिःकाश्यांश्रेयस्तत्तुकिंनात्रयच्च ॥ ९७ ॥ विश्वेश्वरोयत्रनतत्रचित्रंधर्मार्थकामामृतरूपरूपः ॥ स्वरू परूपःसहिविश्वरूपस्तस्मान्नकाशीसदृशीत्रिलोकी ॥ ९८ ॥ इतिब्रुवाणागीर्वाणादद्दृशुस्तूटजंमुनेः ॥ होमधूमसुगंधाढ्यंबटुभिर्बहुभिर्वृतम् ॥ ९९ ॥ श्यामाकांजलियाच्चार्थमृषिकन्यानुयायिभिः ॥ धृतोपग्रहदर्भास्यैर्मृगशावैरलंकृतम् ॥ १०० ॥ सार्द्रवल्कलकौपीनैर्वृक्षशाखावलंबिभिः ॥ बद्धं विघ्नमृगान्दिक्षुवागुराभिरिवावृतम् ॥ १ ॥

कामामृतानांभक्तेभ्योरूपायरूपणायदानायरूपंशरीरंलीलाविग्रहोयस्यसः ॥ तर्हिशरीरसंबंधात्प्राप्तासंसारितातत्राह ॥ स्वरूपरूपः स्वरूपमखंडसच्चिदानंदलक्षणंरूपंस्वरूपंयस्यसः ॥ ननु तस्यप्रपंचेनसहभेदप्रतीतेःकथमखंडसच्चिदानंदात्मकत्वंतत्राह ॥ सहिविश्वरूपइति ॥ हियस्माद्विश्वंरूपंयस्यसविश्वंरूप्यतेप्रतीयतेयस्मिन्रज्ज्वामिवसर्पइतिवासः ॥ जडाजडप्रपंचस्यतत्राध्य स्तत्वान्नतेनभेदावहत्वमध्यस्तेनसर्पेणेवरज्ज्वाः ॥ तथाचश्रुतिः ॥ इदंसर्वंयदयमात्माआत्मैवेदंसर्वंब्रह्मैवेदंसर्वमित्यादिः ॥ अरूपरूपइतिपाठेवस्तुतोऽरूपरूपोमाययाविश्वरूपः ॥ त्रिलोकरूपः सहिविश्वरूपइतिक्वचित्पाठः ॥ प्रकृतमुपसंहरति ॥ तस्मान्नकाशीति ॥९८॥ ददृशुस्त्विति ॥ तुशब्दःसंभ्रमावद्योतकः॥नकेवलंमुनेरुटजंददृशुःपर्णशालांगणंपर्णशालापर्णकुटीतस्याअंगणंप्रांगणंवी क्ष्यसन्नेमुश्चेत्यग्रिमेणान्वयः ॥ भक्तिश्रद्धातिशयावद्योतकःसम्शब्दः ॥ उटजंविशिनष्टि ॥ अक्षरत्रितयाधिकैर्होमधूमैरितित्रिभिः ॥ ९९ ॥ कथंभूतैर्बटुभिर्मृगशावैर्वा ॥ ऋषिकन्यानुयायिभिःऋषि कन्याअनुयातुंअनुगंतुंशीलंयेषांतेतथातैः ॥ ऋषिकन्यानुयानंकिमर्थमितिपृच्छायामाह ॥ श्यामाकांजलियाच्चार्थंश्यामाकाख्यान्नप्रस्थयाच्चार्थमित्यर्थः ॥ कथंभूतैर्मृगशावैः ॥ धृतोपग्रह दर्भास्यैर्धृताउपग्रहरूपादर्भाःकुशाः ॥ अस्त्रीकुशंकुथोदर्भःपवित्रमित्यमरः ॥ आस्येयेषांतथातैः ॥ १०० ॥ सार्द्रवल्कलान्येवकौपीनानितैरावृतमित्यन्वयः ॥ कथंभूतैर्वृक्षशाखावलंबिभिःतरु



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्कंधाश्रयिभिः ॥ कैरिवविघ्नाएवमृगाविघ्नमृगास्तान्बद्धुंधर्तुंवागुराभिर्मृगबंधनीभिरिवेत्युत्प्रेक्षा ॥ १ ॥ पतिव्रतानांशिरोरत्नंशिरोधार्यायालोपामुद्रातस्याअंघ्रीएवमुद्रामुद्रिकातयामुद्रितंचिह्नितम् ॥ २ ॥ धृताकर्णेअक्षमालिकाजपमालिकायेनसतथातम् ॥ अधिष्ठितमाश्रितंबृस्याः ॥ यतीनामासनंबृसीत्यमरः ॥ पृष्ठमुपरिभागोयेनसतथातम् ॥ परमेष्ठिवदुत्कटंहिरण्यगर्भवच्छ्रेष्ठम् ॥ ३ ॥ एवंभूतमगस्त्यंपुरोऽग्रतःसमालोक्यप्रोच्चैर्यथास्यात्तथा ॥ जयजयेतिचेतिचकारोनुक्तसमुच्चये ॥ प्रथमतःप्रणम्यपश्चाज्जयजयेतिप्रोचुरित्यर्थः ॥ अथवापूर्वोक्तविशेषणविशिष्टंपर्णशालांगणं वीक्ष्यागस्त्यंसन्नेमुर्जजययेतिचप्रोचुरित्येववायोजना ॥ जयसर्वोत्कर्षमाविष्कुरु ॥ वीप्सादरार्था ॥ ४ ॥ अभिनंद्यवर्धयित्वाहर्षयित्वेतियावत् ॥ ५ ॥ श्रोत्रादीनांफलमाह ॥ इदमित्या दिना ॥ ६ ॥ १०७ ॥ ॥ इतिश्रीरामानन्दकृतायांकाशीखंडटीकायांतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥ ॥ पतिव्रताशिरोरत्नलोपामुद्रानुवर्णनम् ॥ चतुर्थेवर्ण्यतेशेषपापरा

पतिव्रताशिरोरत्नलोपामुद्रांघ्रिमुद्रया ॥ मुद्रितंवीक्ष्यसन्नेमुःपर्णशालांऽगणंसुराः ॥ २ ॥ विसर्जितसमाधिंचधृतकर्णाक्षमालिकम् ॥ अधिष्ठितंबृसीपृष्ठं परमेष्ठिवदुत्कटम् ॥ ३ ॥ पुरोगस्त्यंसमालोक्यसर्वेदेवाःसवासवाः ॥ प्रहृष्टवदनाःप्रोचुःप्रोच्चैर्जयजयेतिच ॥ ४ ॥ मुनिरुत्थायतान्सर्वानुपावे श्ययथोचितम् ॥ आशीर्भिरभिनंद्याथपप्रच्छागमकारणम् ॥ ५ ॥ व्यासउवाच ॥ इदंपुण्यतमाख्यानंश्रुत्वाभक्तिसमन्वितः ॥ पठित्वापाठ यित्वाचव्रतश्रद्धावतांपुरः ॥ ६ ॥ विधूयसर्वपापानिज्ञात्वाऽज्ञात्वाकृतान्यपि ॥ हंसवर्णेनयानेनगच्छेच्छिवपुरंध्रुवम् ॥ १०७ ॥ इतिश्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थे काशीखंडे पूर्वार्द्धे अगस्त्याश्रमवर्णनंनाम तृतीयोऽध्यायः ॥ ३ ॥ ❀ ॥ ॥ सूतउवाच ॥ ॥ मुनिपृष्टास्तदादेवाभगवंस्तेकिमब्रुवन् ॥ सर्वलोकहितार्थायतदाख्याहिमहामुने ॥ १ ॥ ॥ श्रीव्यासउवाच ॥ ॥ अगस्तिवचनंश्रुत्वाबहुमानपुरस्सरम् ॥ धिषणाधिपतेरास्यंविबुधाव्यालुलोकिरे ॥ २ ॥ वाक्पतिरुवाच ॥ शृण्वगस्तेमहाभागदेवागमनकारणम् ॥ धन्योसिकृतकृत्योसिमान्योसिमहता मपि ॥ ३ ॥ प्रत्याश्रमंप्रतिनगंप्रत्यरण्यंतपोधनाः ॥ किंनसंतिमुनिश्रेष्ठकाचिदन्यैवतेस्थितिः ॥ ४ ॥ तपोलक्ष्मीस्त्वयीहास्तिब्राह्मंतेजस्त्वयिस्थिरम् ॥ पुण्यलक्ष्मीस्त्वयिपरात्वय्यौदार्यंमनस्त्वयि ॥ ५ ॥

शिप्रणाशनम् ॥ १ ॥ मुनिरुत्थायतान्सर्वानुपवेश्ययथोचितम् ॥ आशीर्भिरभिनंद्याथपप्रच्छागमकारणमित्युक्तंतत्रपृच्छाति ॥ मुनिपृष्टाइति ॥ १ ॥ अगस्तीति ॥ अगस्तिरगस्त्यइत्यनर्था तरम् ॥ धिषणाधिपतेर्बृहस्पतेः ॥ व्यालुलोकिरेऽपश्यन् ॥ देवानांबहूनांमध्येएकेनवक्तव्येयोमान्योमान्येष्वपिबहुषुयोगुरुर्गुरुष्वपियःसर्वशास्त्रार्थदर्शीतेष्वपियोवक्तातेनवक्तव्यम् ॥ अतएवंभूतत्वा द्बृहस्पतेस्तदास्यंदेवाव्यालुलोकिरेइत्यर्थः ॥ लोकृलोचृदर्शनइतिधातुः ॥ २ ॥ देवागमनकारणानुवादपूर्वकमगस्तिंस्तौति ॥ शृण्विति त्रिभिः ॥ ३ ॥ प्रत्याश्रममिति ॥ आश्रममाश्रमं प्रतिप्रत्याश्रमम् ॥ एवमुत्तरत्रापि ॥ नगंपर्वतम् ॥ शैलवृक्षौनगावित्यमरः ॥ स्थितिर्मर्यादा ॥ ४ ॥ तपइति ॥ ब्राह्मंतेजोवेदवर्चसम् ॥ उदारस्यभावऔदार्यंदातृत्वं महत्त्वंच ॥ उदारे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दात्महतोरितिवचनादित्यर्थः ॥ मनआत्मविषयमननाद्यन्मनस्तादित्यर्थः ॥ ५ ॥ लोपामुद्रांस्तौति ॥ पतिव्रतेयमित्यारभ्यइदमेवव्रतमित्यतःप्राक्तनग्रंथेन ॥ सधार्मिणीपत्नी ॥ पत्नी पाणिगृहीतीचद्वितीयासहधर्मिणीत्यमरः ॥ ६ ॥ अरुंधत्यादिभिःसहकर्त्रीभिर्वायथैषालोपामुद्राश्रेष्ठावर्ण्यतेतथान्याकापिनेतिनिश्चितमित्यन्वयः ॥ अरुंधतीवसिष्ठस्यपत्नीः सावित्रीब्रह्मणः अनसूयात्रेः शांडिलीकौशिकब्राह्मणपत्नीपतिव्रताशिरोमणिः अग्निमाताच सतीश्वरपत्नी दक्षदुहितालक्ष्मीर्विष्णोःशतरूपास्वायंभुवस्यमनोः ॥ ७ ॥ मेनाहिमवतः सुनीतिर्ध्रुवजननीउत्तानपादस्य भार्या संज्ञाविवस्वतः स्वाहाअग्नेरिति ॥ ८ ॥ तादृक्पतिव्रतात्वमेवाह ॥ भुंक्तइत्यादिना ॥ प्रथमंप्रतिबुध्यते तवप्रबोधादितिशेषः ॥ ९ ॥ क्वापिकस्मिंश्चिद्देशांतरेकालेवाप्रोषितेदेशांत

पतिव्रतेयंकल्याणीलोपामुद्रासधार्मिणी ॥ तवांगच्छाययातुल्यायत्कथापुण्यकारिणी ॥ ६ ॥ पतिव्रतास्वरुंधत्यासावित्र्याप्यनसूयया ॥ शांडिल्यया चसत्या चलक्ष्म्याचशतरूपया ॥ ७ ॥ मेनयाचसुनीत्याचसंज्ञयास्वाहयातथा ॥ यथैषावर्ण्यतेश्रेष्ठानतथान्येतिनिश्चितम् ॥ ८ ॥ भुंक्तेभुक्तेत्वयिसुनेतिष्ठतित्वयितिष्ठति॥विनिद्रितेचनिद्रातिप्रथमंप्रतिबुध्यते ॥ ९ ॥ अनलंकृतमात्मानंतवनोदर्शयेत्क्वचित् ॥ कार्यार्थंप्रोषितेक्वापिसर्वमंडनवर्जिता ॥१०॥ नचतेनामगृह्णीयात्तवायुष्यविवृद्धये ॥ पुरुषांतरनामापिनगृह्णातिकदाचन ॥ ११ ॥ आक्रुष्टापिनचाक्रोशेत्ताडितापिप्रसीदति ॥ इदंकुरुकृतं स्वामिन्मन्यतामितिवक्तिच ॥ १२ ॥ आहूतागृहकार्याणित्यक्त्वागच्छतिसत्वरम् ॥ किमर्थंव्याहृतानाथसप्रसादोविधीयताम् ॥ १३ ॥ नचिरंतिष्ठतिद्वारिनद्वारमुपसेवते ॥ अदापितंत्वयाकिंचित्कस्मैचिन्नददात्यपि ॥ १४ ॥ पूजोपकरणंसर्वमनुक्तासाधयेत्स्वयम् ॥ नियमोदकबर्हींषिपत्रपुष्पाक्षतादिकम् ॥ १५ ॥ प्रतीक्षमाणावसरंयथाकालोचितंहियत् ॥ तदुपस्थापयेत्सर्वमनुद्विग्नातिहृष्टवत् ॥ १६ ॥ सेवतेभर्तुरुच्छिष्टमिष्टमन्नंफलादिकम् ॥ महाप्रसादइत्युक्त्वापरिदत्तंप्रतीच्छति ॥ १७ ॥ अविभज्यनचाश्नीयाद्देवपित्रातिथिष्वपि ॥ परिचारकवर्गेषुगोषुभिक्षुकुलेषुच ॥ १८ ॥ संयतोपस्करादक्षाहृष्टाव्ययपराङ्मुखी ॥ कुर्यात्त्वयाननुज्ञातानोपवासव्रतादिकम् ॥ १९ ॥ दूरतोवर्जयेदेषासमाजोत्सवदर्शनम् ॥ नगच्छेत्तीर्थयात्रादिविवाहप्रेक्षणादिषु ॥२०॥ सुखसुप्तंसुखासीनंरममाणंयदृच्छया ॥ आंतरेष्वपिकार्येषुपतिंनोत्थापयेत्क्वचित् ॥ २१ ॥ स्त्रीधर्मिणीत्रिरात्रंतुस्वमुखंनैवदर्शयेत् ॥ स्ववाक्यंश्रावयेन्नापियावत्स्नातानशुद्धितः ॥२२॥सुस्नाताभर्तृवदनमीक्षतेन्यस्यनक्वचित् ॥ अथवामनसिध्यात्वापतिंभानुंविलोकयेत् ॥२३॥

रंगतेत्वयिसकलभूषणरहिताभवति ॥ तदुक्तंयाज्ञवल्क्येन ॥ क्रीडांशरीरसंस्कारंसमाजोत्सवदर्शनम् ॥ हास्यंपरगृहेयानंत्यजेत्प्रोषितभर्तृकेति ॥ १० ॥ ११ ॥ १२ ॥ आगत्यचकिमर्थंव्याहृतेत्यादिवक्तिचेतिपूर्वक्रियायाअनुषंगः ॥ १३ ॥ नद्वारमुपसेवतेशयनादिनेतिशेषः ॥ १४ ॥ १५ ॥ १६ ॥ प्रतीच्छतिगृह्णाति ॥ १७ ॥ १८ ॥ संयतोपस्करासुनिर्णिक्तालंकारा ॥ १९ ॥ समाजोत्सवदर्शनंसमाजश्चउत्सवश्चतयोर्दर्शनम् ॥ दर्शनाभावमुक्त्वागमनाभावमावेदयति ॥ नगच्छेदिति ॥ २० ॥ आंतरेषुअंतरंगेषुरहस्येष्वितियावत ॥ २१ ॥ २२ ॥ अथवेति ॥ भर्तरि



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

क्वापिगतइतिशेषः ॥ २३ ॥ कूर्पासकंचोलंकंचुकीतिप्रसिद्धम् ॥ २४ ॥ नदूरयेन्नत्यजेत् ॥ २५ ॥ रजक्यावस्त्रनिर्णेजकपत्न्याउदक्ययावा ॥ प्रथमेहनिचांडालीद्वितीयेब्रह्मघातिनी ॥ तृती
येरजकीप्रोक्ताचतुर्थेहनिशुद्ध्यतीतिवचनात् ॥ यावद्रजोनुवर्त्ततेतावत्तयासखित्वंनाचरेदित्यर्थः ॥ हैतुक्यासत्कर्मसुहेतुभिःसन्देहमापादयंत्या ॥ तदुक्तम् ॥ सन्देहकृद्धेतुभिर्यःसत्कर्मसुसहैतुक
इति ॥ श्रमणयापाषंडमार्गकृताभ्यासयाकापालिक्येत्यर्थः ॥ यद्वा श्रमणयापरिव्राजिकयाबौद्धपत्न्येत्यर्थः ॥ दुर्भगयाभाग्यहीनयाप्राकृतयेत्यर्थः ॥ २६ ॥ २७ ॥ वर्धन्यांसंमार्जन्याम् ॥

हरिद्रांकुंकुमंचैवसिंदूरंकज्जलंतथा ॥ कूर्पासकंचतांबूलंमांगल्याभरणंशुभम् ॥२४॥ केशसंस्कारकबरीकरकर्णादिभूषणम् ॥ भर्त्तुरायुष्यमिच्छंतीदूरये
न्नपतिव्रता॥ २५ ॥ न रजक्यानहैतुक्यातथाश्रमणयानच ॥ नचदुर्भगयाक्वापिसखित्वंकुरुतेसती ॥ २६ ॥ भर्तृविद्वेषिणींनारींनैषासंभाषतेक्व
चित् ॥ नैकाकिनीक्वचिद्भूयान्ननग्नास्नातिचक्वचित् ॥ २७ ॥ नोलूखलेनमुसलेनवर्द्धन्यांदृषद्यपि ॥ नयंत्रकेनदेहल्यांसतीचोपविशेत्क्वचित् ॥२८॥
विनाव्यवायसमयंप्रागल्भ्यंनक्वचिच्चरेत् ॥ यत्रयत्ररुचिर्भर्त्तुस्तत्रप्रेमवतीसदा ॥ २९ ॥ इदमेवव्रतंस्त्रीणामयमेवपरोवृषः ॥ इयमेकादेवपूजाभर्त्तुर्वा
क्यंनलंघयेत् ॥ ३० ॥ क्लीबंवादुरवस्थंवाव्याधितंवृद्धमेववा ॥ सुस्थितंदुःस्थितंवापिपतिमेकंनलंघयेत् ॥ ३१ ॥ हृष्टाहृष्टेविषण्णास्याविषण्णास्ये
प्रियेसदा ॥ एकरूपाभवेत्पुण्यासंपत्सुचविपत्सुच ॥ ३२ ॥ सर्पिर्लवणतैलादिक्षयेपिचपतिव्रता ॥ पतिंनास्तीतिनब्रूयादायासेषुनयोजयेत्॥३३॥
तीर्थस्नानार्थिनीनारीपतिपादोदकंपिबेत् ॥ शंकरादपिविष्णोर्वापतिरेकोधिकःस्त्रियाः ॥ ३४ ॥ व्रतोपवासनियमंपतिमुल्लंघ्ययाचरेत् ॥ आयुष्यंहरते
भर्त्तुर्मृतानिरयमृच्छति ॥ ३५ ॥ उक्ताप्रत्युत्तरंदद्यान्नारीक्रोधतत्परा ॥ सरमाजायतेग्रामेसृगालीनिर्जनेवने ॥ ३६ ॥ स्त्रीणांहिपरमश्चैकोनियमः
समुदाहृतः ॥ अभ्यर्च्यचरणौभर्त्तुर्भोक्तव्यंकृतनिश्चयम् ॥३७॥ उच्चासनंनसेवेतनव्रजेत्परवेश्मसु ॥ नत्रपाकरवाक्यानिवक्तव्यानिकदाचन ॥ ३८ ॥
अपवादोनवक्तव्यःकलहंदूरतस्त्यजेत् ॥ गुरूणांसन्निधौक्वापिनोच्चैर्ब्रूयान्नवाहसेत् ॥ ३९ ॥ याभर्तारंपरित्यज्यरहश्चरतिदुर्मतिः ॥ उलूकीजायतेक्रूरावृ
क्षकोटरशायिनी ॥ ४० ॥ ताडिताताडितुंचेच्छेत्साव्याघ्रीवृषदंशिका ॥ कटाक्षयतियाऽन्यंवैकेकराक्षीतुसाभवेत् ॥ ४१ ॥ याभर्तारंपरित्यज्य
मिष्टमश्नातिकेवलम् ॥ ग्रामेवासूकरीभूयाद्वल्गुर्वापिस्वविड्भुजा ॥ ४२ ॥

दृषदिपेषिण्याम् ॥ अपिःसमुच्चये ॥ यन्त्रकेगोधूमादिचूर्णशिलायाम् ॥ देहल्यांगृहावग्रहण्याम् ॥ गृहावग्रहणीदेहलीत्यमरः ॥ गृहद्वाराद्बहिरुभयत्रोच्चभूम्यामित्यर्थः ॥ २८ ॥ २९ ॥ प्रसं
गात्स्त्रीधर्मानाह ॥ इदमेवेत्यादिना ॥ ३० ॥ क्लीबंवीर्यहीनम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ सरमाशुनी ॥ सरमाशुनीत्यमरः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ रहोग्राम्य
धर्मंचरतिआचरति ॥ जारेणसार्धमितिशेषः ॥ उलूकीपेचिका ॥ उलूकस्तुवायसारातिपेचकावित्यमरः ॥ ४० ॥ वृषदंशिकामार्जारीच ॥ व्याघ्रीवृषदंशिकेत्येकंपदंवा ॥ ४१ ॥ केकराक्षीतिर्यङ्ने

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्रावक्रनयनेतियावत् ॥ वल्गुर्नामोर्ध्वचरणोऽधःशिरावृक्षावलंबीपक्षिविशेषः ॥ स्वविट्भुजास्वविष्ठाभक्षिणी ॥ वल्गुलीवेतिपाठेसएवार्थः ॥४२॥ त्वंकृत्यत्वंकारंकृत्वा ॥ हुंकृत्येतिक्वचित्पाठः॥ ४३ ॥ विलुप्यवस्त्रादिनाछाद्यव्यवधायेत्येतत् ॥ भर्तृसंबंधिनीं दृष्टिंत्यक्त्वेतिवा ॥ ४४ ॥ बाह्यात्गृहबाह्यप्रदेशात् ॥ ४५ ॥ खेदसन्नोदनैर्दुःखापनोदनकर्तृभिः ॥ परैरन्यैः ॥ परैःश्रेष्ठैर्वा ॥ ४६—५० ॥ तदाशिषमित्यत्रतच्छब्दोमातृव्यतिरिक्तरंडाविषयः ॥ संन्यस्ताखिलकर्मापिपितुर्वंद्योहिमस्करी ॥ सर्ववंद्येनयतिनाप्रसूर्वंद्याप्रयत्नतइत्यत्रैववक्ष्यमाणत्वात् ॥ आशीविषोपमांसर्पोपमाम् ॥ सर्पःपृदाकुर्भुजगोभुजंगोहिर्भुजंगमः ॥ आशीविषोविषधरश्चक्रीव्यालःसरीसृपइत्यमरः ॥ ५१ ॥ ५२ ॥ भर्तेति ॥ स्त्रियाजीवन्मृतोवाभर्ताऽनुयातव्योऽनुगंतव्यइत्यर्थः ॥ अत्रानुगुणंदृष्टां

यात्वंकृत्याऽप्रियंब्रूतेमूकासाजायतेखलु ॥ यासपत्नींसदेर्ष्येतदुर्भगासापुनःपुनः ॥ ४३ ॥ दृष्टिंविलुप्यभर्तुर्याकंचिदन्यंसमीक्षते ॥ काणाचवि मुखीचापिकुरूपाचापिजायते ॥ ४४ ॥ बाह्यादायांतमालोक्यत्वरिताचजलाशनैः ॥ तांबूलैर्व्यजनैश्चैवपादसंवाहनादिभिः ॥ ४५ ॥ तथैवचाटुवचनैः खेदसंनोदनैःपरैः ॥ याप्रियंप्रीणयेत्प्रीतात्रिलोकीप्रीणितातया ॥ ४६ ॥ मितंददातिहिपितामितंभ्रातामितंसुतः ॥ अमितस्यहिदातारंभर्त्तारंपूजये त्सदा[1] ॥ ४७ ॥ भर्तादेवोगुरुर्भर्ताधर्मतीर्थव्रतानिच ॥ तस्मात्सर्वंपरित्यज्यपतिमेकंसमर्चयेत् ॥४८ ॥ जीवहीनोयथादेहःक्षणादशुचितांव्रजेत् ॥ भर्तृहीनातथायोषित्सुस्नाताप्यशुचिःसदा ॥ ४९ ॥ अमंगलेभ्यःसर्वेभ्योविधवात्यक्तमंगला ॥ विधवादर्शनात्सिद्धिःक्वापिजातुनजायते ॥ ५० ॥ विहायमातरंचैकांसर्वमंगलवर्जिताम् ॥ तदाशिषमपिप्राज्ञस्त्यजेदाशीविषोपमाम् ॥ ५१ ॥ कन्याविवाहसमयेवाचयेयुरितिद्विजाः ॥ भर्तुःसहचरी भूयाज्जीवतोऽजीवतोपिवा ॥ ५२ ॥ भर्तासदानुयातव्योदेहवच्छाययास्त्रिया ॥ चंद्रमाज्योत्स्नयायद्वद्विद्युत्वान्विद्युतायथा ॥ ५३ ॥ अनुव्रजति भर्तारंगृहात्पितृवनंमुदा ॥ पदेपदेऽश्वमेधस्यफलंप्राप्नोत्यसंशयम् ॥ ५४ ॥ व्यालग्राहीयथाव्यालंबलादुद्धरतेबिलात् ॥ एवमुत्क्रम्यदूतेभ्यःपतिंस्वर्गं नयेत्सती ॥ ५५ ॥ यमदूताःपलायंतेसतीमालोक्यदूरतः ॥ अपिदुष्कृतकर्माणंसमुत्सृज्यचतत्पतिम् ॥ ५६ ॥ नतथाबिभीमोवह्नेर्नतथाविद्युतो यथा ॥ आपतंतींसमालोक्यवयंदूताःपतिव्रताम् ॥ ५७ ॥ तपनस्तप्यतेत्यंतंदहनोपिचदह्यते ॥ कंपंतेसर्वतेजांसिदृष्ट्वापातिव्रतंमहः ॥ ५८ ॥ यावत्स्वलोमसंख्यास्तितावत्कोटयुतानिच ॥ भर्त्रास्वर्गसुखंभुंक्तेरममाणापतिव्रता ॥ ५९ ॥

तत्रयमाह ॥ देहवदितिपादत्रयेण ॥ विद्युत्वान्मेघः ॥ ५३ ॥ पतिमनुव्रजंत्यनुगच्छंतीचितारोहार्थमितिशेषः ॥ पितृवनंश्मशानम् ॥ मुदेतिबलात्कारेणगमनंवार्यते ॥ ५४ ॥ पतिव्रतामाहात्म्यमाह ॥ व्यालग्राहीत्यारभ्यशीलभंगेनेत्यतःप्राक्तनेनग्रंथेन ॥ व्यालंसर्पंग्रहीतुंशीलंयस्यसव्यालग्राहीमनुष्यःपक्षिविशेषोवा ॥ उत्क्रम्यमोचयित्वा ॥ ५५ ॥ ॥ ५६ ॥ नाविभीमःभयंनप्राप्नुमः ॥ ५७ ॥ दह्यतइतिकर्मकर्तर्यात्मनेपदम् ॥ महस्तेजः ॥ ५८ ॥ भर्त्रासहरममाणा भर्त्राकर्त्राक्रीडमानाइतिवा ॥ उक्तंच ॥ तिस्रःकोट्योऽर्धकोटीचया

[1] सर्वदापतिमर्चयेदित्यपिपाठः ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

निलोमानिमानवे ॥ तावत्कालंवसेत्स्वर्गेभर्तारंयानुगच्छतीति ॥ ५९ ॥ केतेधन्यास्तत्राह ॥ येषांगेहेपतिव्रतेति ॥ ६० ॥ ६१ ॥ विकर्मस्थांनिंदति ॥ शीलभंगेनेत्येकेन ॥ ६२ ॥ पुनरपिपतिव्रतायामाहात्म्यमाह ॥ पतिव्रतायाइत्यष्टभिः ॥ पतिव्रतायाश्चरणोयत्रयत्रभुवंभूप्रदेशंस्पृशेत्स्पृशति तत्रेत्यत्रवीप्साबोद्धव्या ॥ तत्रतत्रभूमिरितिमन्यते ॥ किंतत्त दाह ॥ नात्रममभारोस्ति किंत्वनेनपादस्पर्शेनाहंपावनीपावित्र्यकर्त्रीपवित्रेतिवा ॥ ६३ ॥ बिभ्यद्भयंकुर्वाणः ॥ अर्थात्पापेभ्यइतित्रयाणांविशेषणम् ॥ ६४ ॥ जाड्यंजडत्वंअज्ञानंवा ॥ तुशब्दोऽवधारणार्थः ॥ अन्यपावनाअन्येषांपावनकर्त्र्यः ॥ ६५ ॥ एवंभूतातुभार्यादुर्लभेत्याह ॥ गृहेगृहेइति ॥ रूपलावण्यगर्विताः ॥ रूपमंगसौष्ठवंलावण्यंकांतिस्ताभ्यांगर्विताः ॥ ६६ ॥ ६७ ॥ परेइति ॥ भार्ययाद्वयंजीयतेइतिसामान्येनान्वयः ॥ पश्चात्किंतद्द्वयमित्याकांक्षायामाह ॥ परलोकोऽयंलोकइति ॥ दैवपित्रतिथीज्यादिकर्मेत्यन्वयः ॥ ६८ ॥

धन्यासाजननीलोकेधन्योसौजनकःपुनः ॥ धन्यःसचपतिःश्रीमान्येषांगेहेपतिव्रता ॥ ६० ॥ पितृवंश्यामातृवंश्याःपतिवंश्यास्त्रयस्त्रयः ॥ पतिव्रतायाःपुण्येनस्वर्गसौख्यानिभुंजते ॥ ६१ ॥ शीलभंगेनदुर्वृत्ताःपातयंतिकुलत्रयम् ॥ पितुर्मातुस्तथापत्युरिहामुत्रचदुःखिताः ॥ ६२ ॥ पतिव्रतायाश्चरणोयत्रयत्रस्पृशेद्भुवम् ॥ तत्रेतिभूमिर्मन्येतनात्रभारोस्तिपावनी ॥ ६३ ॥ बिभ्यत्पतिव्रतास्पर्शंकुरुतेभानुमानपि ॥ सोमोगंधवहश्चापि स्वपावित्र्यायनान्यथा ॥ ६४ ॥ आपःपतिव्रतास्पर्शमभिलष्यंतिसर्वदा ॥ अद्यजाड्यविनाशोनोजातास्त्वद्याऽन्यपावनाः ॥ ६५ ॥ गृहेगृहेन किंनार्योरूपलावण्यगर्विताः ॥ परंविश्वेशभक्त्यैवलभ्यतेस्त्रीपतिव्रता ॥ ६६ ॥ भार्यामूलंगृहस्थस्यभार्यामूलंसुखस्यच ॥ भार्याधर्मफलावाप्त्यैभार्यासं तानवृद्धये ॥ ६७ ॥ परलोकस्त्वयंलोकोजीयतेभार्ययाद्वयम् ॥ देवपित्रतिथीज्यादिनाभार्यःकर्मचार्हति ॥ ६८ ॥ गृहस्थःसहिविज्ञेयोयस्यगेहे पतिव्रता ॥ ग्रसतेऽन्याप्रतिपदंराक्षस्याजरयाथवा ॥ ६९ ॥ यथागंगाऽवगाहेनशरीरंपावनंभवेत् ॥ तथापतिव्रतांदृष्ट्वाशुभयापावनंभवेत् ॥ ७० ॥ अनुयातिनभर्तारंयदिदैवात्कथंचन ॥ तत्रापिशीलंसंरक्ष्यंशीलभंगात्पतत्यधः ॥ ७१ ॥ तद्वैगुण्यादपिस्वर्गात्पतिःपततिनान्यथा ॥ तस्याः पिताचमाताचभ्रातृवर्गस्तथैवच ॥ ७२ ॥ पत्यौमृतेचयायोषिद्वैधव्यंपालयेत्क्वचित् ॥ सापुनःप्राप्यभर्तारंस्वर्गभोगान्समश्नुते ॥ ७३ ॥ विधवाकबरीबंधोभर्तृबंधायजायते ॥ शिरसोवपनंतस्मात्कार्यंविधवयासदा ॥ ७४ ॥

अन्याऽपतिव्रता ॥ प्रतिपदंप्रतिक्षणम् ॥ प्रतिदिनमितिक्वचित्पाठः ॥ जरैवराक्षसीतयाजरयाराक्षस्याग्रस्यतइतिशेषः ॥ अथवेतिपक्षांतरे ॥ यथेतिपाठे जरानाम्न्याराक्षस्यावायथेति दृष्टांतस्त्वेनव्याख्येयम् ॥ ६९ ॥ ७० ॥ सभर्तृकाणांपतिव्रतानांधर्मानुक्त्वाऽभर्तृकाणांधर्मान्वक्तुमुपक्रमते ॥ अनुयातिनभर्तारमिति ॥ शीलंपातिव्रत्यंस्वभावंसद्वृत्तंवा ॥ शीलंस्वभावे सद्वृत्तेइत्यमरः ॥ ७१ ॥ तद्वैगुण्यात्शीलवैगुण्यातभार्यावैगुण्याद्वा ॥ तथाचोक्तम् ॥ पतत्यर्धशरीरेणयस्यभार्यासुरांपिबेदिति ॥ तस्याःपित्रादयोपितथैवपतंतीत्याह ॥ तस्याइति ॥ ७२ ॥ भर्तृविहीनायाःपतिव्रतायाउभयलोककष्टशंकांशातयति ॥ पत्याविति ॥ ७३ ॥ विधवेति ॥ विधवायाःकबरीबंधः ॥ कबरीकेशवेशइत्यमरः ॥ बंधोव्यसनम् ॥ बंधकंव्यसन

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मित्यमरः ॥ सभर्तृवंधायभर्तृव्यसनायनरकायजायतइत्यर्थः ॥ ७४ ॥ ७५ ॥ चांद्रायणमथापिवेति ॥ चांद्रायणपराककृच्छ्रतप्तकृच्छ्राणांस्वरूपंचपराशरसंहितायामुक्तम् ॥ एकैकंवर्द्धये द्ग्रासंशुक्लेकृष्णेतुह्रासयेत् ॥ अमावास्यांनभुंजतिएषचांद्रायणोविधिः ॥ कुक्कुटस्यांडमात्रंतुग्रासंतुपरिकल्पयेत् ॥ अन्यथाभावदोषेणनधर्मोनचशुद्ध्यतीति ॥ यतात्मनोऽप्रमत्तस्यद्वादशाहमभोजनम् पराकोनामकृच्छ्रोयंसर्वपापप्रणोदनइति ॥ त्र्यहमुष्णंपिबेदापस्त्र्यहमुष्णंपयःपिबेत्॥ त्र्यहमुष्णंघृतंपीत्वावायुभक्ष्योदिनत्रयम् ॥ षट्पलंतुपिबेदापस्त्रिपलंतुपयःपिबेत् ॥ पलमेकंपिबेत्सर्पिस्तप्तकच्छ्रं प्रकीर्तितमिति ॥७६॥ ७७ ॥ पर्यंकेति ॥ अत्रापिचवक्ष्यति ॥ पर्यंकशायिनीखट्वाशायिनी ॥ ताच्छील्यप्रयोगात्कदाचित्कथंचिच्छयनेदोषोनास्तीतिध्वनितम् ॥७८॥७९॥८०॥८१॥८२॥

एकाहारःसदाकार्योनद्वितीयःकदाचन ॥ त्रिरात्रंपंचरात्रंवापक्षव्रतमथापिवा ॥ ७५ ॥ मासोपवासंवाकुर्याच्चांद्रायणमथापिवा ॥ कृच्छ्रंवराकंवाकुर्यात्तप्तकृच्छ्रमथापिवा ॥ ७६ ॥ यवान्नैर्वाफलाहारैःशाकाहारैःपयोव्रतैः ॥ प्राणयात्रांप्रकुर्वीतयावत्प्राणःस्वयंव्रजेत् ॥ ७७ ॥ पर्यंकशायिनीनारीविधवापातयेत्पतिम् ॥ तस्माद्भूशयनंकार्यंपतिसौख्यसमीहया ॥ ७८ ॥ नचांगोद्वर्तनंकार्यंस्त्रियाविधवयाक्वचित् ॥ गंधद्रव्यस्यसंयोगोनैवकार्यस्तयापुनः ॥ ७९ ॥ तर्पणंप्रत्यहंकार्यंभर्तुःकुशतिलोदकैः ॥ तत्पितुस्तत्पितुश्चापिनामगोत्रादिपूर्वकम् ॥ ८० ॥ विष्णोस्तुपूजनंकार्यंपतिबुद्ध्यानचान्यथा ॥ पतिमेवसदाध्यायेद्विष्णुरूपधरंहरिम् ॥ ८१ ॥ यद्यदिष्टतमंलोकेयच्चपत्युःसमीहितम् ॥ तत्तद्गुणवतेदेयंपतिप्रीणनकाम्यया ॥ ८२ ॥ वैशाखेकार्तिकेमाघेविशेषनियमांश्चरेत् ॥ स्नानंदानंतीर्थयात्रांविष्णोर्नामग्रहंमुहुः ॥ ८३ ॥ वैशाखेजलकुंभाश्चकार्तिकेघृतदीपकाः ॥ माघेधान्यतिलोत्सर्गःस्वर्गलोकेविशिष्यते ॥ ८४ ॥ प्रपाकार्याचवैशाखेदेवेदेयागलंतिका ॥ उपानद्व्यजनंछत्रंसूक्ष्मवासांसिचंदनम् ॥ ८५ ॥ सकर्पूरंचतांबूलंपुष्पदानंतथैवच ॥ जलपात्राण्यनेकानितथापुष्पगृहाणिच ॥ ८६ ॥ पानानिचविचित्राणिद्राक्षारंभाफलानिच ॥ देयानिद्विजमुख्येभ्यःपतिर्मेप्रीयतामिति ॥ ८७ ॥ ऊर्जेयवान्नमश्नीयादेकान्नमथवापुनः ॥ वृंताकंसूरणंचैवशूकशिंबिंचवर्जयेत् ॥ ८८ ॥ कार्तिकेवर्जयेत्तैलंकार्तिकेवर्जयेन्मधु ॥ कार्तिकेवर्जयेत्कांस्यंकार्तिकेचापिसंधितम् ॥ ८९ ॥ कार्तिकेमौननियमेघंटांचारुप्रदापयेत् ॥ पत्रभोजीकांस्यपात्रंघृतपूर्णंप्रयच्छति ॥ ९० ॥ भूमिशय्याव्रतेदेयाशय्याश्लक्ष्णासतूलिका ॥ फलत्यागेफलंदेयंरसत्यागेचतद्रसम् ॥ ९१ ॥

॥ ८३ ॥ ८४ ॥ प्रपाजलशाला ॥ प्रपापानीयशालिकेत्यमरः ॥ गलंतिकादेवोपरिदीयमानाकुंभस्थाजलधारा ॥ ८५ ॥८६॥ द्राक्षामृद्वीका ॥ ऊर्जेकार्तिके ॥ वृंताकंप्रसिद्धम् ॥ सूरणमर्शोघ्नम् ॥ शुकशिंबिंशुकनासाकाराशिंबिःशुकशिंबिस्तांनिष्पावमितियावत् ॥ शुकशिंबीमितिपाठेदीर्घाकारांमृदुशिंबीमित्यर्थः ॥ वापिशब्दौसमुच्चयवाचिनौ ॥ ८७ ॥ ८८ ॥ संधितंसंधानंबिल्वामलकादीनाम् ॥ चुक्रसंधितमितिपाठेचुक्रंचसंधितंच चुक्रेणवृक्षाम्लेनअम्लेनवा ॥ चुक्रंवृक्षाम्लेचांगेर्यांस्त्रीपुंस्यम्लेऽम्लवेतसइतिमेदिनीकारः ॥ ८९ ॥ प्रयच्छतिप्रयच्छेत् ॥ ९० ॥ ९१ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ९२ ॥ ९३ ॥ किंचिदभ्युदितेअरुणोदयइत्यर्थः ॥ यथाशक्त्यायथाशक्ति ॥ ९४ ॥ वटकेति ॥ इंडरिकंइंडरीतिपुरुषोत्तमेऽत्यंतंप्रसिद्धम् ॥ आदिपदेनपूरिकाघर्घरीमंडकादयोगृह्यंते ॥ ९५ ॥ घृतपक्वैरितिगर्भेशर्करयापूर्णैरितियथासंभवंबोद्धव्यम् ॥९६॥ कंचुकशब्देनात्रपुरुषपरिधेयंशीतत्राणवस्त्रंगृह्यते ॥ सूपवीतिकांशोभनप्रावरणिकाम् ॥ ९७ ॥ मंजिष्ठारक्तवासांसिमंजिष्ठयारक्तवस्त्राणि ॥ ९८॥९९ ॥ घृतकंबलपूजाभिःघृतनिर्मितकंबलपूजाभिर्बदरिकाश्रमेश्रीनारायणेप्रसिद्धाभिः ॥ कर्मधारयोद्वंद्वोवा ॥ गर्भागारेअगारस्यगर्भगर्भागारंतस्मिन्देवालयमध्येइत्यर्थः ॥ १०० ॥

धान्यत्यागेचतद्धान्यमथवाशालयःस्मृताः ॥ धेनूर्दद्यात्प्रयत्नेनसालंकाराःसकांचनाः ॥ ९२ ॥ एकतःसर्वदानानिदीपदानंतथैकतः ॥ कार्तिकेदीपदानस्यकलांनार्हतिषोडशीम् ॥ ९३ ॥ किंचिदभ्युदितेसूर्येमावस्नानंसमाचरेत् ॥ यथाशक्त्याचानियमान्माघस्नायीसमाचरेत् ॥ ९४ ॥ पक्वान्नैर्भोजयेद्विप्रान्यतिनोपितपस्विनः ॥ लड्डुकैःफेणिकाभिश्चवटकैंडरिकादिभिः ॥ ९५ ॥ घृतपक्वैःसमरिचैःशुचिकर्पूरवासितैः ॥ गर्भेशर्करयापूर्णैर्नेत्रानंदैःसुगंधिभिः ॥ ९६ ॥ शुष्कैधनानांभारांश्चदद्याच्छीतापनुत्तये ॥ कंचुकंतूलगर्भंचतूलिकांसूपवीतिकाम् ॥ ९७ ॥ मंजिष्ठारक्तवासांसितथातूलवतींपटीम् ॥ जातीफललवंगैश्चतांबूलानिबहून्यपि ॥ ९८ ॥ कंबलानिविचित्राणिनिर्वातानिगृहाणिच ॥ मृदुलाःपादरक्षाश्चसुगंध्युद्वर्त्तनानिच॥९९॥ घृतकंबलपूजाभिर्महास्नानपुरःसरम् ॥ कृष्णागुरुप्रभृतिभिर्गर्भागारेप्रधूपनैः ॥ १०० ॥ स्थूलवर्तिप्रदीपैश्चनैवेद्यैर्विविधैस्तथा ॥ भर्तृस्वरूपोभगवान्प्रीयतामितिचोच्चरेत् ॥ १ ॥ एवंविधैश्चविधवाविविधैर्नियमैर्व्रतैः ॥ वैशाखान्कार्तिकान्माघानेवमेवातिवाहयेत् ॥ २ ॥ नाधिरोहेदनड्वाहंप्राणैःकंठगतैरपि ॥ कंचुकंनपरीदध्याद्वासोनाविकृतंन्यसेत्॥३॥अपृष्ट्वातुसुतान्किंचिन्नकुर्याद्भर्तृतत्परा ॥ एवंचर्यापरानित्यंविधवापिशुभामता ॥ ४ ॥ एवंधर्मसमायुक्ताविधवापिपतिव्रता ॥ पतिलोकानवाप्नोतिनभवेत्कापिदुःखभाक् ॥५॥ नगंगयातयाभेदोयानारीपतिदेवता ॥ उमाशिवसमासाक्षात्तस्मात्तांपूजयेद्बुधः ॥६॥ बृहस्पतिरुवाच ॥ गंगास्नानफलंत्वेतद्यज्जातंतवदर्शनम् ॥ लोपामुद्रेमहामातर्भर्तृपादांबुजेक्षणे ॥ ७ ॥ इतिस्तुत्वामहाभागांराजपुत्रींपतिव्रताम् ॥ प्रणम्यचगुरुःप्राहमुनिंसर्वार्थकोविदः ॥ ८ ॥ प्रणवस्त्वंश्रुतिरियंक्षमैषात्वंस्वयंतपः ॥ सत्क्रियेयंफलंत्वंहिधन्योसीतिमहामुने ॥ ९ ॥ इदंपातिव्रतंतेजोब्रह्मतेजोभवान्परम् ॥ तत्राप्येतत्तपस्तेजःकिमसाध्यतमंतव ॥ ११० ॥

॥ १ ॥ २ ॥ अनड्वाहंबलीवर्दम् ॥ विकृतंविशेषेणकृतंचित्रमित्यर्थः ॥ न्यसेत्वसेदित्यर्थः ॥ वसेदित्येववापाठः ॥ ३ ॥ ४ ॥ उपसंहरति ॥ एवंधर्मेति ॥ ५ ॥ ६ ॥ लोपामुद्रांस्तौति ॥ गंगेति ॥ तवदर्शनंयज्जातमेतद्गंगास्नानफलंजातमितिसंबंधः ॥ तुशब्दोऽवधारणे ॥ जातमेवेत्यर्थः ॥ ७ ॥ प्रणतिपूर्वकंसभार्यमगस्त्यंस्तौति ॥ प्रणम्यचेति ॥ काकाक्षिन्यायेनप्रणम्येत्यस्योभयत्रसंबंधः ॥ चकारःसमुच्चयेसंभ्रमेवा ॥ ८ ॥ ९ ॥ कार्यविज्ञापयितुंतस्यकिमप्यसाध्यंनास्तीत्याह ॥ इदमिति ॥ तेजोविशेषणत्वात्षंढत्वम् ॥ इयमितिवापाठः ॥ पतिव्रतायाइदंपाति

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

व्रतम् ॥ ११० ॥ कार्यंनिवेदयितुंपरिपाटींरचयति ॥ तवेति ॥ ११ ॥ केतेदेवाइतिपृच्छायांप्राधान्येनाष्टलोकपालान्निर्दिशति ॥ अयमित्यादिना ॥ अयमितिभ्रूचालनेननिर्दिशति ॥ दृक्प्रसादं नेत्रावलोकप्रसादम् ॥ प्रतीक्षतेतवेतिशेषः ॥ १२ ॥ कामधेनुव्रजःकामधेनुसमूहः ॥ १३ ॥ चिंतामणिकर्कराःचिंतामणयएवातिसुलभत्वेनकर्कराःक्षुद्रपाषाणाः ॥ १४ ॥ श्रीदोधनेशः रुद्रईश एतौआदीयेषांतेतथा ॥ अमीइत्यंगुल्यानिर्दिशति ॥ तुशब्दःपादपूरणार्थः ॥ १५ ॥ याच्यएतैरितिशेषः ॥ नचतद्याच्ञापूरणंतवासाध्यमित्याह ॥ वाङ्मात्रेति ॥ १६ ॥ एवंपरिपाटींकृत्वासाक्षाद्देवकार्यंनिर्दिशति ॥ कश्चिदिति ॥ १७ ॥ ननुसन्मार्गवर्तिनस्तस्यकथंवृद्धिर्निवार्येत्यतआह ॥ येचेति ॥ वर्धितंअशुभंययासातथा ॥ १८ ॥ गुरोर्बृहस्पतेः ॥ तथेति ॥ तद्वृद्धिनिवारणंकर्तव्य

तवनाविदितंकिंचित्तथापिचवदाम्यहम् ॥ यदर्थमागतादेवास्तन्मुनेत्रनिशामय ॥ ११ ॥ अयंशतमखःश्रीमान्वृत्रहाकुलिशायुधः ॥ सिद्ध्यष्टकंहि यद्द्वारिदृक्प्रसादंसमीक्षते ॥ १२ ॥ यस्यपुर्याःपरिसरेकामधेनुव्रजश्चरेत् ॥ यत्पौराःकल्पवृक्षाणांनित्यंछायासुशेरते ॥ १३ ॥ यद्रथ्यासुचतिष्ठंतितेचिंतामणिकर्कराः ॥ अयमग्निर्जगद्योनिर्धर्मराजस्त्वयंपुनः ॥ १४ ॥ निर्ऋतिर्वरुणोवायुःश्रीदरुद्रादयस्त्वमी ॥ आराध्यंतेचचारित्रैःसर्वकामार्थमीश्वराः ॥ १५ ॥ समभ्यर्थयितारोमीत्वंयाच्यस्तुजगत्कृते ॥ वाङ्मात्रोद्यमसाध्यंतत्तवविश्वोपकारकम् ॥ १६ ॥ कश्चिच्छैलोविंध्यनामाभानुमार्गावरोधकः ॥ वर्धितःस्पर्धयामेरोस्तद्वृद्धिंत्वंनिवारय ॥ १७ ॥ येचस्वभावकठिनायेचमार्गावरोधकाः ॥ येस्पर्धयावृद्धिमंतस्तद्वृद्धिर्वर्धिताऽशुभा ॥ १८ ॥ इतिश्रुत्वागुरोर्वाक्यमविचार्यमहामुनिः ॥ क्षणंमुनिःसमाधायतथेतिप्रत्युवाचह ॥ १९ ॥ साधयिष्यामिवःकार्यंविसर्ज्येतिदिवौकसः ॥ पुनश्चिंतापरोभूत्वाऽगस्तिर्ध्यानपरोभवत् ॥ १२० ॥ ॥ वेदव्यासउवाच ॥ ॥ इमंपतिव्रताध्यायंश्रुत्वास्त्रीपुरुषोपिवा ॥ पापकंचुकमुत्सृज्यशक्रलोकंप्रयास्यति ॥ १२१ ॥ इति श्रीस्कांदे महापुराणे एकाशीतिसाहस्र्यांसंहितायांचतुर्थे काशीखंडे पूर्वार्द्धेपतिव्रताख्यानंनामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥

पराशरउवाच ॥ ॥ ततोध्यानेनविश्वेशमालोक्यसमुनीश्वरः ॥ सूतप्रोवाचतांपुण्यांलोपामुद्रामिदंवचः ॥ १ ॥ अयिपश्यवरारोहेकिमेतत्समुपस्थितम् ॥ क्वतत्कार्यंक्वचवयंमुनिमार्गानुसारिणः ॥ २ ॥ येनगोत्रभिदागोत्राविपक्षाहेलयाकृताः ॥ भवेत्कुंठितसामर्थ्यःसकथंगिरिमात्रके ॥ ३ ॥

मित्येवंरूपंप्रत्युत्तरंदत्तवानित्यर्थः ॥ तत्प्रतीतिपाठेतद्वचःप्रत्युत्तरंदत्तवान् ॥ १९ ॥ किंतत्प्रत्युत्तरंतदाह ॥ साधयिष्यामीति ॥ अन्यस्मिन्पक्षेविसर्ज्येतिपृथग्वाक्यम् ॥ २० ॥ एतदध्यायश्रवणफलमाह ॥ इममिति ॥ पापकंचुकंपापमेवकंचुकोनिर्मोकस्तम् ॥ समौकंचुकनिर्मोकावित्यमरः ॥ अयंभावः ॥ यथासर्पोज्वरजीर्णांस्त्वचंमुंचतिएवंपुण्यज्वरजीर्णपापकंचुकंत्यक्त्वेति ॥ २१ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ पंचमेवर्ण्यतेदेवैरिंद्राद्यैःस्वार्थसाधकैः ॥ अगस्त्यस्यसभार्यस्यप्रस्थानमाविमुक्ततः ॥ १ ॥ अगस्तिर्ध्यानपरोभवदित्युक्तंततःपरंकिंजातमित्याकांक्षायामाह ॥ ततइति ॥ सूतहेलोमहर्षण ॥ १ ॥ अयीतिसंबोधने ॥ वरारोहेश्रेष्ठजघने ॥ अपीतिक्वचित्पाठः ॥ २ ॥ गोत्रभिदा



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इंद्रेण ॥ विपक्षाविगतपत्राः ॥ गरुत्पक्षच्छदाःपत्रंपतत्रंचतनूरुहमित्यमरः ॥ ३ ॥ कुलिशंवज्रम् ॥ ह्रादिनीवज्रमस्त्रीस्यात्कुलिशंभिदुरंपविरित्यमरः ॥ सिद्ध्यष्टकमणिमादिकंपद्मादिकंवा ॥
॥ ४ ॥ दावाग्निनावनवह्निनामलयवह्निनावाव्याकुलीक्रियंतएव ॥ दावाग्निनापीत्यपिशब्दार्थोऽवधारणम् ॥ येशैलाइत्यन्वयः ॥ तद्वृद्धिस्तंभनेतेषांशैलानांवृद्धिनिवारणे ॥ आशुशुक्षणेर्वह्नेः ॥ ५ ॥
दंडधरोयमः ॥ ग्रावमात्रेकपर्वतैकमात्रे ॥ अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाइत्यमरः ॥ मात्रंकात्स्न्र्येवधारणइतिच ॥ ६ ॥ आदित्याविष्णुशक्राद्याद्वादश ॥ वसवआपध्रुवाद्याअष्टौ ॥ रुद्रा
अजैकपादाद्याएकादश ॥ तुषिताःषट्त्रिंशत् ॥ मरुतःपूतात्मप्रमुखाएकोनपंचाशत् ॥ विश्वेदेवाविष्कंभुप्रभृतयोदश ॥ दस्रौअश्विनीसुतौ ॥ ७ ॥ ८ ॥ समर्थैरपिदेवैर्विंध्यनिवारणेस्वस्मिन्प्रार्थिते
हेतुंनिर्धारयति ॥ आज्ञातामिति ॥ आइतिस्मृतिद्योतकमव्ययम् ॥ स्मृतमनुवदति ॥ यद्वा आइतिसांतःपीडायांखेदइतियावत् ॥ आस्तुस्यात्कोपपीडयोरित्यमरः ॥ ९ ॥ वाक्यमेवनिर्दिशति ॥
अविमुक्तमिति ॥ सतामित्यनेनश्रेयांसिबहुविघ्नानिभवंतिमहतामपीतिन्यायसूचनपूर्वकमसतांविघ्नानभविष्यंतीतिध्वनितम् ॥ तत्कस्मात्तेषामीश्वरेणाधोनिनीषितत्वात् ॥ तमसाधुकर्मकारयतियमधो
निनीषतीतिश्रुतेः ॥ अशनंवसनंवासःकाश्यांयेषाममार्गतः ॥ कीकटेनसमाकाशीसत्यंसत्यंखगेश्वरेत्यादिगरुडपुराणादिवचनदर्शनाच्च ॥ १० ॥ अंतरायोविघ्नः ॥ ११ ॥ काशीतोगंतव्यमितिकृत

कल्पवृक्षोंऽगणेयस्यकुलिशंयस्यचायुधम् ॥ सिद्ध्यष्टकंहियद्द्वारिससिद्धयैप्रार्थयेद्द्विजम् ॥ ४ ॥ क्रियंतेव्याकुलाःशैलाअहोदावाग्निनाप्रिये ॥ तद्वृ
द्धिस्तंभनेशक्तिःक्वगतासाऽऽशुशुक्षणेः ॥ ५ ॥ नियन्तासर्वभूतानांयोसौदण्डधरःप्रभुः ॥ सकिंदंडयितुंनालमेकंतंग्रावमात्रकम् ॥ ६ ॥ आदित्यावसवो
रुद्रास्तुषिताःसमरुद्गणाः ॥ विश्वेदेवास्तथादस्रौयेचान्येपिदिवौकसः ॥ ७ ॥ येषांदृक्पातमात्रेणपतंतिभुवनान्यपि ॥ तेकिंसमर्थानोकांतेनगवृद्धि
निषेधने ॥८॥ आज्ञातंकारणंतच्चस्मृतंवाक्यंसुभाषितम् ॥ काशीमुद्दिश्ययद्गीतंमुनिभिस्तत्त्वदर्शिभिः ॥९॥ अविमुक्तंनमोक्तव्यंसर्वथैवमुमुक्षुभिः ॥
किंतुविघ्नाभविष्यंतिकाश्यांनिवसतांसताम् ॥ १० ॥ उपस्थितोयंकल्याणिसोंऽतरायोमहानिह ॥ नशक्यतेऽन्यथाकर्तुंविश्वेशोविमुखोयतः ॥ ११ ॥
काशीद्विजाशीर्भिरहोयदाप्ताकस्तांमुमुक्षुर्यदिवामुमुक्षुः ॥ ग्रासंकरस्थंसविसृज्यहृद्यंस्वकूर्परंलेढिविमूढचेताः ॥ १२ ॥

निश्चयःसन् यद्यदाचरतिश्रेष्ठस्तत्तदेवेतरोजनइतिन्यायेनअन्यान्जिगमिषून्वारयन्काशींस्तौति ॥ काशीद्विजाशीर्भिरित्याद्येकोनविंशत्याश्लोकैः ॥ काशीद्विजाशीर्भिरित्यस्यायमर्थः ॥ अहोइत्याश्चर्ये
खेदेवा ॥ यदियदाकाशीद्विजाशीर्भिर्ब्राह्मणाशीर्वादैःप्राप्तालब्धातदाताम् ॥ यदित्यव्ययम् ॥ यत्योमुमुक्षुरज्ञानतत्कार्यान्मोक्तुमिच्छुःसन्मुमुक्षुस्त्यक्तुमिच्छुर्भवतिसकोनकोप्यत्यंतमूढबुद्धिरित्यर्थः ॥
यद्वा अकइत्यकारप्रश्लेषः ॥ नविद्यतेकंसुखंयस्यसतथाप्रत्यग्ब्रह्मानंदरहितइत्यर्थः ॥ अत्रदृष्टांतमाह ॥ वेत्युपमायाम् ॥ उपमायांवितर्केवेत्यमरः ॥ वायथाग्रासंकवलंकरस्थंहस्तस्थंहृद्यंहृदेहितंतृप्ति
करमित्यर्थः ॥ विसृज्यत्यक्त्वा ॥ कूर्परंकफोणिम् ॥ स्यात्कफोणिस्तुकूर्परइत्यमरः ॥ लेढिआस्वादयतिविमूढचेतामूढबुद्धिस्तद्वदित्यर्थः ॥ अत्रयायच्छब्दयोर्व्यवहितान्वयकल्पनासोढव्या ॥ यद्वा
यदाद्विजाशीर्भिःकाशीप्राप्तालब्धातदातांमुमुक्षुरमुमुक्षुर्वासंसाराद्विरक्तोऽविरक्तोवायद्यस्त्यजेत्परित्यजेदित्याग्रिमश्लोकस्थक्रियायावचनंविपरिणमय्यानुषंगः ॥ सकोनकोपीत्यर्थः ॥ सोऽकइतिवा ॥
शेषंपूर्ववत् ॥ यदिवामुमुक्षुरितिपाठेअव्ययत्वाद्वाशब्दउपमानार्थःसमुच्चयार्थोवाद्रष्टव्यः ॥ समुच्चयपक्षेपरार्थेप्रयुज्यमानाःशब्दावतिमंतरेणापिवत्यर्थंगमयंतीतिन्यायादुपमानार्थोद्रष्टव्यः ॥ यद्वा यत

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इवअमुमुक्षुरितिच्छेदः ॥ तत्रयोविमूढचेताइवतांमुमुक्षुःसोऽमुमुक्षुःसंसारान्मोक्षमनिच्छुरित्यर्थः ॥ शेषंतुल्यम् ॥ १२ ॥ अहोजनाइति ॥ अस्यायमर्थः ॥ अहोइतिखेदे ॥ बालिशवन्मूर्खवत् ॥
किंपृच्छायाम् ॥ एतांकाशींत्यजेयुः किंकिमर्थंत्यजेयुरितिपृच्छामीत्यर्थः॥जुगुप्सनेवा ॥ एतांकाशींत्यजेयुःकिम् ॥ काशींत्यजेयुरितियदेतज्जुगुप्सितमित्यर्थः ॥ किंपृच्छायांजुगुप्सनइत्यमरः ॥
त्यजेयुस्त्यक्त्वागच्छेयुः ॥ सुकृतानामेकोमुख्योराशिर्यस्यांसातथातांसुकृतैकपुंजरूपांवा ॥ ननुकाशींत्यक्त्वागतेपिपुनरागमनंभविष्यतिनेत्याह ॥ शालूककंदइति ॥ शालूकशब्देनात्र शालूकिनः
सौगंधिकादयोलक्ष्यंते ॥ तेषांकंदोमूलम् ॥ शालूकमेषांकंदःस्यादित्यमरः ॥ यद्वा शालूकंजलतृणावांतरंतस्यकंदोमूलमित्यर्थः ॥ सकिंप्रतिमज्जनंलभेतप्राप्नुयात् ॥ तद्वत्तयात्यक्त्वागमनेप्राति
वारंकिमेषासुलभासुप्राप्याऽपितुसुलभानैवेत्यर्थः ॥ इदमत्रतात्पर्यम् ॥ अतिनिकृष्टोपिशालूककंदःप्रतिमज्जनंनप्राप्नोतिकिंपुनर्वक्तव्यमेषाब्रह्मांडेऽपिदुर्लभासायुज्यैकोपायभूताप्रातिवारंत्यक्त्वागतेसाति
नप्राप्येत्यतोनत्यक्तव्येति ॥ १३ ॥ भवांतरेति ॥ अस्यायमर्थः ॥ भवांतरायसंसारांतरायावर्जितआसमंताद्वर्जितोदूरीकृतःश्रीमहेशार्पितःपुण्यराशिःपुण्यपुंजोऽर्थात्पुण्यकर्तृभिर्यस्यांसातथाताम् ॥
तस्यांक्रियमाणःपुण्यसंचयोजन्मांतरायनभवतीत्यर्थः ॥ वक्ष्यतिच ॥ ऊषरःपुण्यपापानांधन्यावाराणसीपुरीति ॥ यद्वा भवांतरेभवस्वरूपेविश्वनाथेइत्यर्थः ॥ अन्तरशब्दस्यस्वरूपवाचित्वं
रात्रौस्वप्नांतरेब्रह्मन्मयादृष्टौहराच्युतावित्यादिहरिवंशादौप्रसिद्धम् ॥ आवर्जितःअर्पितःपुण्यानांराशिर्यस्यांसातथाताम् ॥ अत्रस्थैर्जनैःपुण्यराशिरपिविश्वेश्वरेअर्प्यतेक्षुद्रफलाशयातदनुष्ठानंतत्त्यागश्च
दूरइतिभावः ॥ यद्वा भवांतंभवस्यांतम् ॥ अंतशब्दस्यस्वरूपवाचित्वात् ॥ रातिददातीतिभवांतराअविद्यातयावर्जिताःपुण्यराशयःपुण्यपुंजाःपुण्यानांवाराशिर्येषांतेतथासुकृतिनइतिवायस्यांसा

अहोजनाबालिशवत्किमेतांकाशींत्यजेयुःसुकृतैकराशिम् ॥ शालूककंदःप्रतिमज्जनंकिंलभेततद्वत्सुलभाकिमेषा ॥ १३ ॥
भवांतरावर्जितपुण्यराशिंकृच्छ्रैर्महद्भिर्ह्यवगम्यकाशीम् ॥ प्राप्यापिकिंमूढधियोन्यतोवैयियासवोदुर्गतिसुधियासवः ॥ १४ ॥
क्वकाशिकाविश्वपदप्रकाशिकाक्वकार्यमन्यत्परितोतिदुःखम् ॥ तत्पंडितोन्यत्रकुतःप्रयातिकिंयातिकूष्मांडफलंह्यजास्ये ॥ १५ ॥

तथोक्ताताम् ॥ अविद्याविनाशकत्वात्तेषामितिभावः ॥ यद्वा भवांतरेषुआवर्जितानिसंपादितानिपुण्यानितेषांराशिंराशिभूतांअनेकजन्मांतरार्जितसुकृतैकपुण्यामित्यर्थः ॥ एवंभूतांकाशींवैप्रसिद्धः
शास्त्रविद्वज्जनमुखादवगम्यज्ञात्वापश्चान्महद्भिःकृच्छ्रैर्वर्त्मश्रमशौल्किकतस्करजनिताविविधैर्दुःखैःप्राप्यापिमूढधियोलुप्तविवेकाः संतोदुर्गतिमुद्धियासवोदुःखंप्राप्तुमिच्छवोन्यत्रकिंयियासवोगंतुमिच्छवः
स्युःअपितुनस्युरेवेत्यर्थः ॥ कृच्छ्रैर्महद्भिर्विनिमय्यकाशीमितिपाठेकृच्छ्रैःकष्टसाध्यैर्महद्भिःपुण्यैर्विनिमय्यपरिवर्त्यप्राप्यापीतिव्याख्येयम् ॥ १४ ॥ क्वकाशिकेति ॥ अस्यायमर्थः ॥ काशिका
क्वकुत्र ॥ काशिकात्वमेवव्युत्पादयति ॥ विश्वपदप्रकाशिकेति ॥ विश्वस्यप्रपंचस्यपदंस्थानमधिष्ठानमिति ॥ यद्वा विश्वस्यपदंत्राणंयस्मात्सत्तास्फूर्तिप्रदत्वेनेतिविश्वपदंपरमात्मा ॥ पदंव्यव
सितत्राणस्थानलक्ष्मांघ्रिवस्तुष्वित्यमरः ॥ विश्वंचतत्पद्यतेज्ञायतइतिपदंचेतिवाविश्वपदम् ॥ सर्वेगत्यर्थाज्ञानार्थाइतिन्यायात् ॥ सर्वथापिविश्वपदंपरंब्रह्मतस्यप्रकाशिकाभिव्यंजिकास्फोरिकेतिया
वत् ॥ क्वकार्यंक्रियतइतिकार्यंव्यापारमात्रम् ॥ कथंभूतम् ॥ अन्यत्काशीस्थित्यनुकूलातिरिक्तम् ॥ पुनःकीदृशम् ॥ परितोतिदुःखं परितइहलोकेपरलोकेच ॥ यद्वा परितःसर्वदासाधनकालेफ
लकालेचातिदुःखंयस्मिंस्तत्तथा ॥ अतितुच्छमितिक्वचित्पाठः ॥ एतादृशंकार्यंक्वकुत्र ॥ तत्तस्माद्यःपंडितोभवतिसोन्यत्रकुतःप्रयातिकथंगच्छतिनगच्छत्येवेत्यर्थः ॥ विदुषोऽविमुक्तंविहाया
न्यत्रगत्यसंभावनायांदृष्टांतमाह ॥ किंयातिकूष्मांडफलंह्यजास्यइति ॥ कूष्मांडःकर्कारुलताविशेषः ॥ कूष्मांडकस्तुकर्कारुरित्यमरः ॥ तस्यफलंकूष्मांडफलंअजस्यच्छागस्यमुखेकिंयाति

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तिप्रविशतीतिनयात्येवेत्यर्थः ॥ किंमातीतिपाठेसएवार्थः ॥ यथाकूश्मांडफलस्याजमुखेप्रवेशोनसंभवतितथाविदुषःकाशींविहायगमनमपीतिभावः ॥ यद्वा ननुप्राप्तापिकाशीत्यक्ताकैश्चिद्दृश्य तेतत्राह ॥ किंयातीति ॥ अजावदल्पभाग्यस्यमुखेकिंप्रविशति ॥ शेषंसमानम् ॥ १९ ॥ काशीमिति ॥ अस्यायमर्थः ॥ हाइतिविषादे ॥ हाविषादशुगर्तिष्वित्यमरः ॥ नरोमर्त्यः काशींकिंविसृजेदित्यर्थः ॥ ननुतीर्थपर्यटनादिपुण्योपचयार्थंगच्छेदित्याशंक्यकाशींविशिनष्टि ॥ प्रकाशीकृतपुण्यराशिमिति ॥ प्रकाशीकृतःप्रकटीकृतःपुण्यानांराशिःपुंजोयस्यामर्थाद्विश्वेश्वरे णशास्त्रेणवेतिसातथाताम् ॥ अन्यतीर्थादीनांक्षुद्रपुण्यहेतुत्वात्काश्याश्चक्षणेक्षणेपुण्यराशेर्निमित्तत्वात् ॥ तथाचवक्ष्यति ॥ प्रयागेमाघमासेतुसम्यक्स्नातस्ययत्फलम् ॥ तत्फलंकोटिगुणितंवारा णस्यांक्षणेक्षणेइत्यादीनि ॥ नतदर्थंकाशींविहायान्यत्रगमनमितिभावः ॥ ननुसमुच्चयेकोविरोधइतिन्यायेनतीर्थपर्यटनादिपुण्यानिसंपाद्यपुनरत्रायास्यतीत्याशंक्यनरंविशिनष्टि ॥ शीघ्रनाशीति ॥ शीघ्रंनाशोस्यास्तीतिशीघ्रनाशी ॥ मरणस्यातिनियतत्वात्तथानकार्यमितिभावः ॥ शीघ्रनाशीमितिपाठेकाश्याविशेषणम् ॥ शीघ्रंसंसारंचंचलस्वभावत्वान्नाशयतीतिशीघ्रनाशीतामित्यर्थः ॥ अज्ञानांकाशींविहायगंतुमयोग्येपिअन्यत्रगमनेकारणमपीत्याह ॥ नूनमिति ॥ नूनंनिश्चितंएवंतर्क्यतइतिवा ॥ नूनंतर्केऽर्थनिश्चयइत्यमरः ॥ तदीयंतस्यकाशींविहायगंतुरिदंतदीयंतत्सं बंधियत्सुकृतंतत्स्वनूनंसुष्ठुयथाभवतिअनुपश्चात् ॥ पश्चात्सादृश्ययोरन्वित्यमरः ॥ ऊनंन्यूनंक्षीणमित्येवंमदीयंचेतोंतःकरणंविवृणोतिविचारयतितर्कयतीत्यर्थः ॥ एतदुक्तंभवति ॥ पूर्वं काशीप्रापकसुकृतेनकाशीप्राप्तेदानींसुकृतेपूर्णेसुकृतस्यक्षीणत्वात्काशींविसृजतीति ॥ सुनूनमितिपाठोवा ॥ तत्रापिसुसुष्ठु नुपृच्छायाम् ऊनंक्षीणमिति ॥ नुपृच्छायांविकल्पेचेत्यमरः ॥

काशींप्रकाशीकृतपुण्यराशिंहाशीघ्रनाशीविसृजेन्नरःकिम् ॥ नूनंस्वनूनंसुकृतंतदीयंमदीयमेवंविवृणोतिचेतः ॥ १६ ॥
नरोनरोगीयदिहाविहायसहायभूतांसकलस्यजंतोः ॥ काशीमनाशीसुकृतैकराशिमन्यत्रयातुंयततांनचान्यः ॥ १७ ॥

सुलूनमितिपाठेप्यएवार्थः ॥ १६ ॥ नरोनरोगीति ॥ अस्यायमर्थः ॥ अन्यत्रयातुंगंतुम् ॥ काशीतइत्यर्थात् ॥ यततांयत्नंकुर्वतांजनानांमध्येयदियदा हेतिहर्षे यद्यदाइ हजगतीतिवा ॥ काशीमविहाययोऽनाशीभवति नविद्यतेआशिषःकामायस्यसतथा ॥ इंद्रियचांचल्यंपरित्यज्यमोक्षैकपरोभवतीत्यर्थः ॥ सनरोनरोगीसंसाराख्यरोगवान्नभवतीत्यर्थः ॥ नचान्यः काशींविहायान्यत्रयातुंयत्नवान्यःसनरोरोगीनचकिंतुरोग्येव ॥ किंवक्तव्यंवाराणसींविहाययोन्यत्रगतःसरोगीभवतीतिभावः ॥ काशींविशिनष्टि ॥ सहायभूतांसकलस्यजंतोरिति ॥ जरायुजां डजस्वेदजोद्भिज्जलक्षणस्यप्राणिमात्रस्यधर्मार्थकाममोक्षेषुसाहाय्यकर्त्रीमित्यर्थः ॥ ननुकथमस्याएतादृशंसामर्थ्यंतत्राह ॥ सुकृतैकराशिमिति ॥ सुकृतंचअःवासुदेवाख्योमोक्षश्च ॥ अकारो वासुदेवःस्यादितिकोशात् ॥ सुकृतौपुण्यकैवल्येतयोरेकोमुख्योराशिःपुंजोयस्यांसातथातद्राशिरूपावाताम् ॥ प्राकृतंव्याख्यानंस्पष्टम् ॥ यद्वा यदिहेत्यनंतरोकारोनिषेधेयततामित्यनेनसंब ध्यते ॥ तथाचायमर्थः ॥ यःकाशींविहायविहातुंअयततांनयतते ॥ काशीस्थित्यनुकूलमेवचेष्टतइत्यर्थः ॥ सनरोनरोगीभवति ॥ अन्यत्पूर्ववत् ॥ किंवस्मिन्पक्षेव्यवहितयोजनालकाख्य त्ययकल्पनाचसोढव्या ॥ यद्वा यद्यदाइहसंसारे ॥ यद्वा यदियदा हइतिपादपूरणे ॥ नरोनरोगीप्राणांतिकरोगवान्नभवतितदाआईषत्कदाचित्काशींविहायकाशीस्थित्यनुकूलयोगक्षेमार्थं अन्यत्रयातुंयततांयत्नंकरोतु ॥ हाइतिखेदेवा ॥ नचान्यःप्राणांतिकरोगीत्यर्थः ॥ कथंभूतांकाशीम् ॥ अनाशीःसुकृतैकराशिंनिष्कामपुण्यैकपुंजामित्यर्थः ॥ शेषंपूर्ववत् ॥ १७ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वित्रस्तपापामिति ॥ अस्यायमर्थः ॥ मुक्ताजीवन्मुक्ताःविमुक्तांकाशींनपरित्यजंतीत्यन्वयः ॥ कायवाङ्मनोभिर्यावज्जीवमितिपरेरर्थः ॥ तत्रहेतुगर्भाणिविशेषणान्याह ॥ वित्रस्ताविध्व स्तापापापापहेतुत्वादविद्या ॥ यद्वा वित्रस्तानिपापानिकायवाङ्मनोजन्यानिदशविधानिययासातथाताम् ॥ त्रिदशैर्ब्रह्मादिभिर्दुरापामप्राप्याम् ॥ गंगैवसब्रह्मतदेवापोजलानियस्यांसातथाताम् ॥ योसौनिरंजनोदेवश्चित्स्वरूपीजनार्दनः ॥ सएवद्रवरूपेणगंगांभोनात्रसंशयइतिवचनात् ॥ गंगायाःसत्यआसमंतात्आपोयस्यामितिवा ॥ भवःसंसारःसएवपाशोबंधनरज्जुस्तस्यशापांशस्त्रींइछेत्री मित्यर्थः ॥ भवपाशपाशामितिपाठेभवपाशस्यपाशांप्रतिबंधिकांनाशिकामित्यर्थः ॥ सर्वत्रहेतुमाह ॥ शिवाविमुक्तांमहादेवेनपार्वतीपरमेश्वराभ्यांवाअत्यक्तामित्यर्थः ॥ तथाचहरिवंशेउमांप्रति ईश्वरवचनम् ॥ नाहंवेश्मविमोक्ष्यामिअविमुक्तांहिमेगृहामित्यादि ॥ अमृतस्यकैवल्यमुक्ताफलस्यएकांमुख्यांशुक्तिम् ॥ मुक्तास्फोटःस्त्रियांशुक्तिरित्यमरः ॥ विमुक्तांब्रह्मांडासंबद्धांकैवल्यरूपांवा ॥ विमुक्तश्चविमुच्यतइतिश्रुतेः ॥ मुक्ताविमुक्ताइतिपाठेमुक्ताअविमुक्ताश्चनपरित्यज्यंतीत्यर्थः॥ १८॥ हंहोकिमंहइति॥अस्यायमर्थः ॥ हंहोभोजनाःयूयमंहोनिचिताअंहोभिरघैर्निचिताव्याप्ताःकिंअपितुव्या प्ताएव ॥ अंहोदुःखव्यसनेष्वघमित्यमरः ॥ अतएवप्रलब्धावंचिताः सुकृतेनविधात्रावेतिशेषः ॥ :किमित्याकांक्षायामाह ॥ बंहीयसामहीयसा ॥ महीयसेतिवापाठः ॥ आयासभरेणदूरदेशाग

वित्रस्तपापांत्रिदशैर्दुरापांगंगांसदापांभवपाशशापाम् ॥ शिवाविमुक्तामसृतैकशुक्तिंमुक्ताविमुक्तानपरित्यजन्ति ॥ १८ ॥ हंहोकिमंहोनिचिताःप्रलब्धा बंहीयसायासभरेणकाशीम् ॥ प्रभूतपुण्यद्रविणैकपण्यांप्राप्यापिहित्वाक्वचगंतुमुद्यताः ॥ १९ ॥ अहोजनानांजडताविहायकाशींयदन्यत्रनयंतिचेतः ॥ परिस्फुरद्गांगजलाभिरामांकामारिशूलाग्रधृतांलयेपि ॥ २० ॥ रेरेभवेशोकजलैकपूर्णेपापेस्मलोकाःपतिताब्धिमध्ये ॥ विद्राणनिद्राणविरोधिपापांकाशीं परित्यज्यतरिंकिमर्थम्॥२१॥नसत्पथेनापि नयोगयुक्त्यादानैर्नवानैवतपोभिरुग्रैः ॥ काशीद्विजाशीर्भिरहोसुलभ्याकिंवाप्रसादेनचविश्वभर्तुः ॥२२॥

मदुर्गाध्वशौल्किकतस्करादिजनितश्रमस्यखेदस्यभरेणपूरेणकाशींप्राप्यापि ॥ अस्याःप्राप्तेःसंभावनैवनास्तितथापिकेनचिद्भाग्योदयेननातिमहताश्रमेणप्राप्यापीत्यपिशब्दार्थः ॥ क्वचकुत्रचिद्गं तुमुद्युक्तायतः ॥ कथंभूतांकाशीम् ॥ प्रभूतपुण्यद्रविणैकपण्यामिति ॥ प्रभूतानिबहूनिपुण्यानितैरेवैकैःकेवलैःपण्यांक्रेयांप्राप्यामित्यर्थः ॥ १९ ॥ अहोइति ॥ जडताअज्ञता ॥ लयेपिस्थितिसमयेपीत्यपिशब्दार्थः ॥ स्पष्टमन्यत् ॥ २० ॥ रेरेइति ॥ अस्यायमर्थः ॥ स्मेतिविस्मये ॥ रेरेइतिसाधिक्षेपसंबोधने ॥ रेरेजनाःकाशींपरित्यज्यकिमर्थंभवेसं सारेलोकाआलोचनकर्तारोपियूयंपतिताइत्याक्रोशतीत्यर्थः ॥ कथंभूतेभवे ॥ अब्धिमध्येसमुद्रमध्यवत्दुस्तरेइत्यर्थः ॥ पतिताब्धिमध्यइत्यत्रसंधिरार्षः ॥ पतथेतिपाठस्तुस्पष्टार्थः ॥ शोकजलेनएके नमुख्येनकेवलेनवापूर्णेव्याप्ते ॥ पापेपापरूपेपापहेतुत्वाद्वापापे ॥ विद्राणानिविद्रावितानिनिर्वाणविरोधीनिपापानिययासातथाताम् ॥ पुनःकथंभूताम् ॥ तरिंनावम् ॥ भवार्णवोत्तारणनौस्वरूपा मित्यर्थः ॥ स्त्रियांनौस्तरणिस्तरिरित्यमरः ॥ २१ ॥ नसत्पथेनेति ॥ अस्यायमर्थः ॥ सत्पथादिनाकाशीनसुलभ्याकिंकिंतुद्विजाशीर्भिर्योविश्वेश्वरस्यानुग्रहस्तेनैवेति ॥ एवार्थेवाशब्दः ॥ स्वतंत्रतावोभयोः ॥ अतोविश्वेश्वरस्यानुग्रहाभावादन्यत्रयांतीतिभावः ॥ सत्पथेनसदाचारेणवेदोक्तकर्मानुष्ठानेनेतियावत् ॥ योगयुक्त्यायोगोऽष्टांगादिस्तस्ययुक्तिर्युजनंतेनयोगाभ्यासेनेत्यर्थः



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्पष्टमन्यत् ॥ २२ ॥ ननुपुरुषार्थचतुष्टयस्यान्यत्रापिविद्यमानत्वात्किमितिकाशीनत्याज्येत्याग्रहस्तत्राह ॥ धर्मस्त्विति ॥ अस्यायमर्थः ॥ तुशब्दआशंकाव्यावृत्त्यर्थः ॥ अन्यत्रसंपत्तिभरैरर्थ समूहैर्योधर्मउह्यतेप्राप्यते ॥ तथान्यत्रबहुदानभोगकैर्बहुदानानांभोगकैराभोगैर्विस्तारैरर्थभरैःकृत्वाकामैःसहयोऽर्थउह्यतेतथान्यत्रयोमोक्षउह्यतेतत्सर्वमर्थादिकंसचमोक्षएकोमुख्यःसायुज्याख्यइत्यर्थः॥ अत्रकाश्यांयथातथान्यत्रनचेतियोजना ॥ २३ ॥ काश्यांयथाधर्मादिकंतथान्यत्रनेत्यत्रहेतुमाह ॥ क्षेत्रंपवित्रमिति ॥ अस्यायमर्थः ॥ हियस्मात्यथाऽविमुक्तंक्षेत्रंपवित्रंपवित्रयत्यविद्यातत्कार्या न्मोचयतीतितथातथानान्यत् ॥ अन्यत्क्षेत्रांतरंतथानेत्यर्थः ॥ तत्रहेतुमाह ॥ यच्छ्रुतिभिःप्रयुक्तंयद्यस्माच्छ्रुतिभिर्वेदैरेवप्रयुक्तंसर्वक्षेत्रेभ्योऽविमुक्तमधिकंप्रतिपादितमित्यर्थः ॥ श्रुतिभिःप्रयुक्तमित्यन्यस्यव्यावृत्तिमाह ॥ नचधर्मशास्त्रैरिति ॥ उपसंहरति ॥ तस्मादिति ॥ शरण्यंशरणायहितम् ॥ सदायावज्जीवम् ॥ २४ ॥ श्रुतिप्रयुक्त त्वमेवाह ॥ सहोवाचेतिसार्धद्वाभ्याम् ॥ तत्रप्रथमेनसार्धेनाविमुक्तस्यस्वरूपमुच्यतेद्वितीयेनक्षेत्रांतरेभ्यश्चाधिक्यमितिविभागः ॥ सहोवाचेत्यस्यायमर्थः ॥ सप्रसिद्धोजा बालिर्जाबालायाअपत्यंजाबालिःआरुणेहेआरुणेइतिशिष्यंसंबोध्यउवाचेत्यन्वयः ॥ किमुवाचतदाह ॥ असिरिडामतेति ॥ इडानाडीतिशेषः ॥ असिर्नामनदीवरुणापिनद्येव तदंतस्तयोर्मध्यइत्यर्थः ॥ अविमुक्तकंकाशी ॥ स्वार्थेकः ॥ सोऽविमुक्तःकस्मिन्प्रतिष्ठितइतिवरणायांवानाश्यांचमध्येप्रतिष्ठितइतिश्रुतेः ॥ २५ ॥

धर्मस्तुसंपत्तिभरैःकिलोह्यतेप्यर्थोहिकामैर्बहुदानभोगकैः ॥ अन्यत्रसर्वंसचमोक्षएकःकाश्यांनचान्यत्रतथायथात्र ॥ २३ ॥ क्षेत्रंपवित्रंहियथाऽवि मुक्तंनान्यत्तथायच्छ्रुतिभिःप्रयुक्तम् ॥ नधर्मशास्त्रैर्नचतैःपुराणैस्तस्माच्छरण्यंहिसदाऽविमुक्तम् ॥ २४ ॥ सहोवाचेतिजाबालिरारुणेसिरिडामता ॥ वरणापिंगलानाडीतदंतस्त्वविमुक्तकम् ॥ २५ ॥ सासुषुम्णापरानाडित्रयंवाराणसीत्वसौ ॥ तदत्रोत्क्रमणेसर्वजंतूनांहिश्रुतौहरः ॥ २६ ॥ तारकंब्रह्मव्या चष्टेतेनब्रह्मभवंतिहि॥एवंश्लोकोभवत्येषआहुर्वैवेदवादिनः॥२७॥भगवानंतकालेऽत्रतारकस्योपदेशतः॥अविमुक्तेस्थिताञ्जन्तून्मोचयेन्नात्रसंशयः॥२८॥

किंतदविमुक्तंतत्राह ॥ सासुषुम्णेति ॥ अविमुक्तस्यैवसुषुम्णाशब्देनोच्यमानस्यसेतिस्त्रीलिंगेनपरामर्शः ॥ ननुकावैवरणाकाचनाशीतिसर्वानिंद्रियकृतान्दोषान्वारयतितेनवरणाभवति सर्वानिंद्रियकृतान्पापान्नाशयातितेननाशीभवतीत्याथर्वणश्रुतौनाशीतिश्रूयते अत्रत्वासिरतःश्रुतिविरोधात्पुराणस्याप्रामाण्यमितिचेत्तन्न ॥ अस्यतिसर्वाणिपापानिक्षयतिनाशयतीत्यर्थैक्योपपत्तेः ॥ नामविकल्पोवा ॥ एतत्त्रयमसौवाराणसीत्यंगुल्यानिर्दिश्यते ॥ शरणे त्वियम् पुरीतिचस्थलत्रयेपाठांतरेऽयमर्थः ॥ शीर्यतेनश्यतीतिशरणंशरीरंतस्मिन्शरणेशरीरेऽध्यात्मेऽसिरिडेत्यादिपूर्ववत् ॥ अधिदैवेतुपुनरियंपुरीवाराणसीतिविशेषः ॥ अयंभावः ॥ अध्यात्मेतावदिडापिंगलासुषुम्णेत्येतत्त्रयमविमुक्तंवाराणसी ॥ आधिदैवेऽसिवरणाविमुक्तमित्येतत्त्रयंवाराणसीअविमुक्तमिति ॥ श्रुतौ दक्षिणेकर्णे ॥ मुमुक्षोर्दक्षिणेकर्णेइतिश्रुतेः ॥ २६ ॥ काशीस्थानिभूतमात्राण्यंतकालेभगवान्मोचयतीत्यत्रब्रह्मविदांसंमतिमाह ॥ एवंश्लोकइति ॥ एवमुक्तार्थप्रतिपादकएषवक्ष्यमाणः श्लोकःपद्यंभवतीति वेदवादिनोवेदनंवेदःस्वप्रकाशश्चिदात्मातद्वादिनःपरमार्थनिरूपकाआहुरुक्तवंतइत्यर्थः ॥ २७ ॥ श्लोकंदर्शयति ॥ भगवानिति ॥ भगवाञ्श्रीरुद्रस्तारकस्यप्रणवस्य श्रीरा मषडक्षरमंत्रराजस्यवा ॥ तथाचाथर्वणश्रुतौश्रीरामवाक्यंविश्वेश्वरंप्रति ॥ अथसहोवाचश्रीरामः क्षेत्रेऽत्रतवदेवेशयत्रकुत्रापिवामृताः कृमिकीटादयोप्याशुमुक्ताःसंतुनचान्यथा अविमुक्तेतवक्षेत्रेसर्वे

१ सहोवाचेतिपूर्वश्लोकार्धेजाबालिरारुणेइत्यत्रजाबालिःशरीरेइति द्वितीयश्लोकपूर्वार्धे त्रयमित्यस्यस्थानेत्वियमिति त्वसावित्यस्यस्थानेपुरीतिचेत्यर्थः ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

षांमुक्तिसिद्धये अहंसंनिहितस्तत्रपाषाणप्रतिमादिषु क्षेत्रेस्मिन्योर्चयेद्भक्त्यामंत्रेणानेनमांशिव ॥ ब्रह्महत्यादिपापेभ्योमोक्षयिष्यामिमाशुचः॥ त्वत्तोवाब्रह्मणोवापियेलभंतेषडक्षरम् ॥ जीवंतोमंत्रसिद्धाः स्युर्मुक्तामांप्राप्नुवंतिते ॥ मुमूर्षोर्दक्षिणेकर्णेयस्यकस्यापिवास्वयम् ॥ उपदेक्ष्यासिमन्मंत्रंसमुक्तोभविताशिवेति ॥ २८ ॥ गतिराश्रयः ॥२९॥ अन्यांक्षुद्राम् ॥ गवेषयेदन्वेषयेत्प्रार्थयेदित्यर्थः ॥३०॥ इत्यमितिव्यासोक्तिः ॥ पुराणात्पुरातनाद्वेदादितिवा ॥ ३१ ॥ श्रीकालराजंश्रीकालभैरवम् ॥ आपृच्छनायान्यत्रगंतुमाज्ञायाचनाय ॥ काशीश्वरात्प्रार्थयेतिचेत्तत्राह ॥ यतस्त्वमेवकाशीपुर्याः प्रभुरीश्वरइति ॥ तथाचपंचक्रोशयात्रामाहात्म्येपार्वतींप्रतिविश्वेश्वरवचनम् ॥ अस्मिन्क्षेत्रेक्षणंकाश्यांस्वातंत्र्यंनहिमेसदा ॥ श्रीकालभैरवःकाश्यांसएवप्रभुरुच्यते ॥ ब्रह्मवैवर्तेच ॥ मयापिसततंयत्रकाल राजाद्विभिम्यता ॥ स्थीयतेसावधानेनकाश्यामानंदभोगिनेति ॥ ३२ ॥ काशीत्यागखेदाद्विलपति ॥: हाकालराजेति ॥ हाकष्टे ॥ हेकालराज प्रतिभूतम् भूताचतुर्दशी भूतांभूतांप्रतिप्रति

नाविमुक्तसमंक्षेत्रंनाविमुक्तसमागतिः ॥ नाविमुक्तसमंलिंगंसत्यंसत्यंपुनःपुनः ॥ २९ ॥ अविमुक्तंपरित्यज्ययोन्यत्रकुरुतेरतिम् ॥ मुक्तिंकरतलान्मुक्त्वा सोन्यांसिद्धिंगवेषयेत् ॥३०॥ इत्थंसुनिश्चित्यमुनिर्महात्माक्षेत्रप्रभावंश्रुतितःपुराणात् ॥ श्रीविश्वनाथेनसमंनलिंगंपुरीनकाशीसदृशीत्रिकोट्याम्॥३१॥ श्रीकालराजंचततःप्रणम्यविज्ञापयामाससुमुनीशवर्यः ॥ आपृच्छनायाहमिहागतोस्मिश्रीकाशिपुर्यास्तुयतःप्रभुस्त्वम् ॥ ३२ ॥ हाकालराजप्रति भूतमत्रप्रत्यष्टमिप्रत्यवनीसुतार्कम् ॥ नाराधयेमूलफलप्रसूनैःकिंमय्यनागस्यपराधदृक्स्याः ॥ ३३ ॥ हाकालभैरवभवानभितोभयार्तान्माभैष्टचे तिभणनैःस्वकरंप्रसार्य ॥ मूर्तिंविधायविकटांकटुपापभोक्त्रींवाराणसीस्थितजनान्परिपातिकिंन ॥३४॥ हेयक्षराजरजनीकरचारुमूर्तेश्रीपूर्णभद्रसुतनाय कदंडपाणे ॥ त्वंवैतपोजनितदुःखमवैषिसर्वंकिंमांबहिर्नयसिकाशिनिवासिरक्षिन् ॥ ३५ ॥ त्वमन्नदस्त्वंकिलजीवदातात्वंज्ञानदस्त्वंकिलमोक्षदोपि ॥ त्वमंत्यभूषांकुरुषेजनानांजटाकलापैरुरगेंद्रहारैः ॥ ३६ ॥ गणौत्वदीयौकिलसंभ्रमोद्भ्रमावत्रस्थवृत्तांतविचारकोविदौ ॥ संभ्रांतिमुत्पाद्यपरामसाधून्क्षे त्रात्क्षणंदूरयतस्त्वमुष्मात् ॥ ३७ ॥ शृणुप्रभोढुंढिविनायकत्वंवाचंमदीयांतुरटाम्यनाथवत् ॥ त्वत्स्थाःसमस्ताःकिलविघ्नपूगाःकिमत्रदुर्वृ त्तवदास्थितोहम् ॥ ३८ ॥

भूतंप्रतिचतुर्दशीत्यर्थः ॥ प्रत्यष्टमि अष्टमींमष्टमींप्रतिप्रत्यष्टमि ॥ प्रत्यवनीसुतार्कम् अवनीसुतोमंगलोऽर्कःसूर्यः ॥ ताभ्यांतयोर्वासरेलक्ष्येते ॥ अवनीसुतार्कौअवनीसुतार्कौप्रतिप्रत्यवनीसुतार्कम् प्रतिमंगलवासरंप्रतिरविवासरमित्यर्थः ॥ मूलफलपुष्पैःकिमहंनाराधयेआराधनंकिंनकृतवानस्मिअपितुकृतवानेव ॥ अतोऽनागसिअपराधशून्येमयिअपराधदृक्अपराधेदृक्दृष्टिर्यस्यसतथातथाभूतः किंस्याःभवेः ॥ काकाक्षिन्यायेनकिंशब्दस्योभयत्राप्यन्वयः ॥ केनदोषेणकाशीतोमांनिष्कासयसीत्यर्थः ॥ ३३ ॥ भणनैःशब्दैः ॥ विकटांभयंकराम् ॥ कटुपापभोक्त्रींतीव्रपापनाशिनीम् ॥ विकटोत्कटपापभोक्त्रीमितिक्वचित्पाठः ॥ नपरिपातिकिंअपितुपरिपात्येवेत्यर्थः ॥ ३४ ॥ एवंश्रीकालभैरवाग्रतोविलप्यश्रीदंडपाणेरग्रतोविलपति ॥ हेयक्षेति ॥ नायकहेश्रेष्ठ ॥ ३५ ॥ अन्न दश्चतुर्विधान्नदः ॥ अतएवजीवदाता ॥ अंत्यभूषांमर्त्यदेहत्यागावसरभूषाम् ॥ ३६ ॥ संभ्रांतिंसंमोहंउद्वेगंवा ॥ अमुष्मात्क्षेत्रादित्यन्वयः ॥ दूरयतोमनुष्यानितिक्वचित्पाठः ॥ ३७ ॥ श्रीगणे



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शंप्रार्थयति ॥ शृण्विति ॥ शृणुष्वभोइतिपाठांतरेआत्मनेपदमार्षम् ॥ रटाम्प्रिलपामि ॥ विघ्नैस्त्वंदूरीक्रियसेकिंमयाशक्यमित्यतआह ॥ त्वत्स्थाइति ॥ त्वयितिष्ठंतीतित्वत्स्थास्त्वत्प्रेर्यास्त्वदधीना इत्यर्थः ॥ समस्ताःसमग्राः ॥ त्वच्छासनस्थाइतिक्वचित्पाठः ॥ विघ्नपूगा विघ्नसमूहाः ॥ अतस्तैःकिमर्थमांबहिर्निष्कासयसीत्यभिप्रायः ॥ ननुदुर्वृत्तस्यविघ्नसमूहैर्मयाअन्येनवाक्रियमाणंनिष्कासनं युक्तमेवेत्यतआह ॥ किमत्रेति ॥ दुर्वृत्तवत्किमत्राविमुक्तेऽहमास्थितःस्थितोस्मिअपितुनैवेत्यर्थः ॥ ३८ ॥ मोदादिपंचविनायकांश्चितामण्यादींश्चप्रार्थयति ॥ शृण्वंत्वमीइति ॥ अमीमोद प्रमोदामोदसुमोददुर्मोदाः ॥ चिंतामण्यादयएववापंच ॥ आशागजइत्याख्याययोस्तावाशागजाख्यौ ॥ तौप्रसिद्धौ ॥ आशागजाघोरविनायकावितिपाठेगजश्चघोरश्चगजाघोरौ ॥ देवताद्वंद्वेचेति दीर्घः ॥ तौचतौविनायकौचतथातावित्यर्थः ॥ किंत्वस्मिन्पक्षेचिंतामणिरितिकपर्दिनोविशेषणम् ॥ भक्तानांचिंतामणिरिवचिंतामणिःसर्वार्थपूरकइत्यर्थः ॥ ३९ ॥ श्रोतव्यमाह ॥ परापवादइति ॥ एषकाशीत्यागलक्षणःपाकःफलंकःकस्मात्पापाज्जातइत्यर्थः ॥ ४० ॥ ननुनिषिद्धाचरणाभावेपिविहिताकरणप्रत्यवायात्काशीत्यागइत्यतआह ॥ गंगेति ॥ सदाप्रत्यहंसर्वदावाध्यानादिनापरि सेविता ॥ त्ववगाहितेतिक्वचित्पाठः ॥ विशेषेणपापिनोनरकेषुपाचयतिविशेषेणपाकःपचनंवास्मादितिविपाकोऽत्राधर्मः ॥ ४१ ॥ विशालाक्ष्याद्यादेवताःप्रार्थयति ॥ मातरिति ॥ हेज्येष्ठेशिज्ये

शृण्वंत्वमीपंच विनायकाश्चचिंतामणिश्चापिकपर्दिनामा ॥ आशागजाख्यौचविनायकौतौशृणोत्वसौसिद्धिविनायकश्च ॥ ३९ ॥ परापवादोनमया किलोक्तःपरापकारोपिमयाकृतोन ॥ परस्वबुद्धिःपरदारबुद्धिःकृतामयानात्रकएषपाकः ॥ ४० ॥ गंगात्रिकालंपरिसेवितामयाश्रीविश्वनाथोपिसदाविलो कितः ॥ यात्राःकृतास्ताःप्रतिपर्वसर्वतःकोयंविपाकोममविघ्नहेतुः ॥ ४१ ॥ मातर्विशालाक्षिभवानिमंगलेज्येष्ठेशिसौभाग्यविधानसुंदरि ॥ विश्वेविधे विश्वभुजेनमोस्तुतेश्रीचित्रघंटेविकटेचदुर्गिके ॥ ४२ ॥ साक्षिण्यएताःकिलकाशिदेवताःशृण्वंतुनस्वार्थमहंव्रजाम्यतः ॥ अभ्यर्थितोदेवगणैःकरो मिकिंपरोपकारायनकिंविधीयते ॥ ४३ ॥ दधीचिरस्थीनिनकिंपुराददौजगत्त्रयंकिंनददेऽर्थिनेबलिः ॥ दत्तःस्मकिंनोमधुकैटभौशिरोबभूवताक्ष्योंपिच विष्णुवाहनम् ॥ ४४ ॥ आपृच्छ्यसर्वान्समुनीन्मुनीश्वरःसबालवृद्धानपितत्रवासिनः ॥ तृणानिवृक्षांश्चलताःसमस्ताःपुरींपरिक्रम्यचनिर्ययौच ॥४५॥

ष्ठाचासौईशीचेतिज्येष्ठेशि ज्येष्ठयासहईशीतिवा ॥ तत्रज्येष्ठागौरी ॥ अलक्ष्मीरितिकेचित् ॥ ईशीईशानातस्याः संबोधनेहेज्येष्ठेशिहेज्येष्ठेहेईशिइत्यर्थः ॥ ज्येष्ठेसिइतिपाठेऽकारप्रश्लेषः ॥ अस्यानद्याअधिष्ठात्री देवताऽसीतस्याःसंबोधनेहेअसीति ॥ ज्येष्ठेनेतिपाठेप्यकारप्रश्लेषः ॥ तदान्नसौभाग्ययोर्विधानेसंपादनेसुंदरियोग्येदक्षेइतिज्येष्ठायाविशेषणम् ॥ चकारादन्यासांकाशीस्थ देवतानां संग्रहः ॥ ४२ ॥ किंतत्प्रार्थ्यंतदाह ॥ नस्वार्थमिति ॥ अतोऽविमुक्तात् ॥ ननुस्वप्रयोजनंचेन्नास्तिकिमितितर्हिगच्छसितत्राह ॥ अभ्यर्थितइति ॥ नन्वभ्यर्थितेनापिकिंकाशीत्या ज्यातत्राह ॥ परोपकारायेति ॥ ४३ ॥ परोपकारार्थमकर्तव्यमपिक्रियतइत्यत्रदृष्टांतमाह ॥ दधीचिरिति ॥ यद्वा काशीतोव्रजनेहेतुद्वयंअभ्यर्थनापरोपकारश्च तत्रोभयत्राकरणीयस्यापिकरणे दृष्टांतमाह ॥ दधीचिरिति ॥ उक्तंच ॥ त्वचंकर्णःशिबिर्मांसंजीवंजीमूतवाहनः ॥ ददौदधीचिरस्थीनिकिंनदेयंमहात्मनामिति ॥ अर्थिनेविष्णवेदत्तःस्मेत्यत्राप्यस्यान्वयः ॥ शेषपादेसइतिक्वचित्पाठः संचित्यः ॥ सताक्ष्यंइतिवासंबंधः ॥ तत्राद्योदृष्टांतःप्रार्थनोपकारयोः ॥ अवशिष्टंत्रयंतुप्रार्थनामात्रेइतिभेदः ॥ ४४ ॥ उपसंहरति ॥ आपृच्छ्येति ॥ व्यासोक्तिरियम् ॥ पुरींपरिक्रम्यचक्षेत्रं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

प्रदक्षिणीकृत्य ॥ तथाचवक्ष्यतिकालराजाध्यायेऽत्रैव ॥ अतःप्रदक्षिणीकृत्यपूजनीयापुरीत्वियमिति ॥ वामनपुराणेप्रह्लादतीर्थयात्रायाम् ॥ प्रदक्षीणीकृत्यपुरींपूज्याविमुक्तकेशवौ ॥ लोलंदिवाकरं दृष्ट्वाततोमधुपुरींययाविति ॥ चकारादंतर्गृहयात्रांविधायेत्यर्थः ॥ अंतिमश्चकारः समुच्चयार्थआहचेतिसमुच्चिनोति ॥ निर्ययौबहिरितिक्वचित्पाठः ॥ ४५ ॥ यदाहतन्निर्दिशतिश्लोकद्वयेन ॥ प्रोषितस्येति ॥ चंद्रमौलिंचंद्रशेखरमवलोक्ययास्यतोगच्छतइहसंसारेकस्यजनस्यसिद्धिर्यमर्थमुद्दिश्यगच्छातितस्यार्थस्यसिद्धिर्नपरिस्फुरेन्नोल्लसेन्नभवेदपितुस्फुरेदेवेत्यन्वयः ॥ पुरःस्फुरेदिति क्वचित्पाठः ॥ कथंभूतस्य ॥ परितोलक्षणैःसर्वप्रकारैर्लक्षणैःसल्लक्षणैःशकुनादिलक्षणैर्वाप्रोषितस्यप्रदग्धस्यरहितस्येतियावत् ॥ प्रपूर्वस्यउषदाहइत्यस्यरूपम् ॥ प्रोज्झितस्येतिक्वचित्पाठः ॥ पुनःकथंभूतस्य ॥ नीचवर्त्मनिअसन्मार्गेपरिवर्तितुंशीलंयस्यसतथातस्यापीत्यर्थः ॥ वाशब्दश्चार्थेसमुच्चयवाची ॥ ४६ ॥ गुल्मोगुच्छः ॥ पापंनचरंति अन्यत्रापिनचरंतिनयांतीत्यर्थः ॥ वयंचराणांजंगमानांप्रथमाःप्रथमोत्पन्नाब्राह्मणाःश्रेष्ठाइत्यर्थः ॥ एवंभूतानप्यस्मान्धिगस्तु ॥ कीदृशानस्मान् ॥ हाकष्टे वाराणसींविहायगच्छतोऽन्यत्रगमनंकुर्वतः ॥ गच्छतइत्यत्रयामइति क्वचित्पाठःसनच्छंदोभंगभियाकक्षीकर्तव्यः ॥ ४७ ॥ असिमितिव्यासोक्तिः ॥ उपस्पृश्याचम्यस्नात्वाच ॥ हिशब्दात्संगमेश्वरंप्रपूज्यवा ॥ प्रासादमालाः प्रासादसमूहान् ॥ किमुवाचतदाह ॥

प्रोषितस्यपरितोपिलक्षणैर्नीचवर्त्मपरिवर्तिनोपिवा ॥ चंद्रमौलिमवलोक्ययास्यतःकस्यसिद्धिरिहनोपरिस्फुरेत् ॥४६॥ वरंहिकाश्यांतृणवृक्षगुल्मकाश्चरं तिपापंनचरंतिनान्यतः ॥ वयंचराणांप्रथमाधिगस्तुनोवाराणसींहाद्यविहायगच्छतः ॥ ४७ ॥ असिंह्युपस्पृश्यपुनःपुनर्मुनिःप्रासादमालाःपरितोविलो कयन् ॥ उवाचनेत्रेसरलेप्रपश्यतंकाशींयुवांक्वक्कपुरीत्वियंबत ॥ ४८ ॥ स्वैरंहसंत्वद्यविधायतालिकांमिथःकरेणापिकरंप्रगृह्य ॥ सीमाचराभूतगणा व्रजाम्यहंविहायकाशींसुकृतैकराशिम् ॥ ४९ ॥ इत्थंविलप्यबहुशःसमुनिस्त्वगस्त्यस्तत्क्रौंचयुग्मवदहोअबलासहायः ॥ मूर्च्छामवापमहतींविरही वजल्पन्हाकाशिकाशिपुनरेहिचदेहिदृष्टिम् ॥ ५० ॥

हेनेत्रेहेचक्षुषी ॥ कथंभूते ॥ सरलेस्निग्धेप्रसन्नेइतियावत् ॥ काशींप्रपश्यतंप्रकर्षेणावलोकयतम् ॥ यतोयुवांक्वइयंपुरीकाशीक्वकुत्र ॥ बतेतिखेदे ॥ पुनर्मेलनंतुदुर्घटमितितुशब्दस्यार्थः ॥ ४८ ॥ स्वैरमिति ॥ व्रजाम्यहंअहंगच्छामि ॥ व्रजत्यसावितिक्वचित्पाठः ॥ ४९ ॥ इत्थमिति ॥ सोऽगस्त्योमुनिर्मननशीलोपिबहुश इत्थंविलप्यमूर्छामवापेत्यन्वयः ॥ किंकुर्वन् ॥ हाइतिखेदे ॥ हेकाशिहेकाशिपुनरेहिदृष्टिंदर्शनंचदेहीतिजल्पन् ॥ हाक्वासीतिक्वचित्पाठः ॥ कीदृशींदृष्टिम् ॥ महतींमहत्तराम् मुक्त्यैकसाधनमित्यर्थः ॥ यद्वा मूर्छांविशिनष्टि ॥ महतीमिति ॥ महत्त्वंद्योतयन्न गस्त्यंविशिनष्टि ॥ अवलासहायइति ॥ अयंभावः ॥ अन्योपिविरहीकांताविरहादेवमूर्छांप्राप्नोति अयंतुअवलासहायोपि अतोमहतींअचिकित्स्यामित्यर्थः ॥ बहुजल्पनेदृष्टांतस्तत्क्रौंचयुग्मवदिति ॥ तच्चतत्क्रौंचयुग्मंकुङ्युग्मंचतत्तथातद्वदिति ॥ क्रुङ्क्रौंचोथेत्यमरः ॥ तच्छब्दोयंप्रसिद्धार्थाभिधायकः ॥ प्रसिद्धत्वंचास्ययत्क्रौंचमिथुनादित्यादिरामायणादौबोद्धव्यम् ॥ यथाचतत्रनिषादेनशरेण विद्धंभूमौपतितंक्रौंचंदृष्ट्वाक्रौंचीअत्यार्तस्वरंविललापतथाकाशीविरहाख्येनव्याधेनस्वोद्भूतेनशोकाख्येनशरेणपीडितंभूमौपतितंभर्तारंदृष्ट्वालोपामुद्राविललापेत्यर्थः ॥ तथाचरामायणे ॥ ततःसतमसातीरे विचरंतमभीतवत् ॥ ददर्शक्रौंचयोस्तत्रमिथुनंचारुदर्शनम् ॥ तस्माच्चमिथुनादेकमागत्यानुपलक्षितः ॥ जघानवद्धानुशयोनिषादोमुनिसंनिधौ ॥ तंशोणितपरीतांगंचेष्टमानंमहीतले ॥ दृष्ट्वाक्रौंचीरुरा



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वार्ताकरुणंखेपरिभ्रमेदिति ॥ मूर्छाप्राप्तौदृष्टांतमाह ॥ विरहीवेति ॥ ५० ॥ स्थित्वेतिव्यासोक्तिः ॥ यावोगच्छावइत्युवाचेतिशेषः ॥ कठिनतांस्मारयति ॥ किंनस्मरेरिति ॥ त्र्यक्षंप्रहित्यत्रिलोचन मुद्दिश्यमदनंप्रस्थाप्य ॥ प्रहृत्येतिपाठेकामद्वारातद्बाणैर्विद्ध्वामदनंप्रतियदकारीतिव्याख्येयम् ॥ तैर्देवैः ॥ ५१ ॥ यावदिति ॥ खेदात्त्रिचतुराणिपदानियावन्मुनिर्गच्छेत्तावद्धरापृथिवीभयभरा दिवभयमेवभरोभयभरस्तस्मादिवसंचुकोचसंकुचितासीदित्यन्वयः ॥ कथंभूतः ॥ प्रस्वेदोदकसीकरैरंचितःपूजितःशोभितोभालदेशोयस्यसः ॥ कस्मात्संचुकोचतत्राह ॥ प्रत्युद्गमेति ॥ अयंभावः ॥ एतावद्दिनंतावदयंकाश्यांस्थितवानधुनामय्यागतस्याभ्युत्थानाद्यकरणान्ममनाशोभविष्यतीतिभयभरादिवपृथ्वीसंकुचितावभूवेति ॥ तथाचमनुः ॥ ऊर्ध्वंप्राणाह्युत्क्रामंतियूनःस्थविरआयति ॥ अभ्यु

स्थित्वाक्षणंशिवशिवेतिशिवेतिचोक्त्वायावःप्रियेतिकठिनाहिदिवौकसस्ते ॥ किंनस्मरेस्त्रिजगतीसुखदानदक्षंत्र्यक्षंप्रहित्यमदनंयदकारितैस्तु ॥ ५१ ॥ यावद्व्रजेत्त्रिचतुराणिपदानिखेदात्स्वेदोदबिंदुकणिकांचितभालदेशः ॥ प्रत्युद्गमाऽकरणतःकिलमेविनाशस्तावद्धराभयभरादिवसंचुकोच ॥ ५२ ॥ तपोयानमिवारुह्यनिमेषार्धेनवैमुनिः ॥ अग्रेददर्शतंविंध्यंरुद्धांबरमथोन्नतम् ॥ ५३ ॥ चकंपेचाचलस्तूर्णंदृष्ट्वैवाग्रस्थितंमुनिम् ॥ तमगस्त्यंसपत्नीकंवाता पील्वलवैरिणम् ॥ ५४ ॥ तपःक्रोधसमुत्थाभ्यांकाशीविरहजन्मना ॥ प्रलयानलवत्तीव्रंज्वलंतंत्रिभिरग्निभिः ॥ ५५ ॥ गिरिःखर्वतरोभूत्वाविविक्षुरवनी मिव ॥ आज्ञाप्रसादःक्रियतांकिंकरोस्मीतिचाब्रवीत् ॥ ५६ ॥ ॥ अगस्त्यउवाच ॥ ॥ विंध्यसाधुरसिप्राज्ञमांचजानासितत्त्वतः ॥ पुनरागमनंचेन्मे तावत्खर्वतरोभव ॥ ५७ ॥ इत्युक्त्वादक्षिणामाशांसनाथामकरोन्मुनिः ॥ निजैश्चरणविन्यासैस्तयासाध्व्यातपोनिधिः ॥ ५८ ॥ गतेतस्मिन्मु निवरेवेपमानस्तदागिरिः ॥ पश्यत्युत्कंठमिवचगतश्चेत्साध्वभूत्ततः ॥ ५९ ॥ अद्यजातःपुनरहंनशप्तोयदगस्तिना ॥ नमयासदृशोधन्यइतिमेने सर्वैगिरिः ॥ ६० ॥ अरुणोपिचतत्कालेकालज्ञोऽश्वानकालयत ॥ जगत्स्वास्थ्यमवापोच्चैःपूर्ववद्भानुसंचरैः ॥ ६१ ॥ अद्यश्वोवापरश्वोवाप्यागमिष्य तिवैमुनिः ॥ इतिचिंतामहाभारैर्गिरिराक्रांतवत्स्थितः ॥ ६२ ॥ नाद्यापिमुनिरायातिनाद्यापिगिरिरेधते ॥ यथाखलजनानांहिमनोरथमहीरुहः ॥ ६३ ॥ विवर्धिषतियोनीचःपरासूयांसमुद्वहन् ॥ दूरेतद्वृद्धिवार्ताऽस्तांप्राग्वृद्धेरपिसंशयः ॥ ६४ ॥

त्यानाभिवादाभ्यांपुनस्तान्प्रतिपद्यतइति ॥ भरभयादिवेतिक्वचित्पाठः ॥ ५२॥ ५३ ॥ चकंपेचस्वेदरोमोद्गमादिकंचदधावितिचकारस्यार्थः ॥ ५४ ॥ तपइति ॥ पुनःकथंभूतम् ॥ त्रिभिरग्निभिर्ज्व लंतम् ॥ केतेऽग्नयस्तानाह ॥ तपइति ॥ काशीविरहाज्जन्मयस्यतेनाग्निना ॥ ५५ ॥ ५६ ॥ साधुरसिप्राज्ञेतिचोपहासः ॥ चेद्यावत् ॥ ५७ ॥ ५८ ॥ उत्कंठमूर्ध्वग्रीवंयथास्यात्तथापश्यति अपश्यत् ॥ पश्येदितिक्वचित्पाठः ॥ किमितिपश्यतितत्राह ॥ गतश्चेदिति ॥ चेद्यदि ॥ ततस्तदा ॥ उत्कंठइवचाहाद्येत्यन्यत्रपाठः ॥ ५९ ॥ यद्यस्मात् ॥ ६० ॥ अकालयत्अचालयत् प्रेरयामासेतियावत् ॥ ६१ ॥ ६२ ॥ एधतेवर्धते ॥ मनोरथ[illegible] ॥ ६३ ॥ [illegible]वृद्धिः प्रागवृद्धिरपिसंशयितेतिदृष्टांतेनाह ॥ विवर्धिषतीति ॥ विवर्धिष

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तिवर्धितुमिच्छति ॥ ६४ ॥ पूर्वसंशयमात्रमुक्तमिदानींदुष्टानांप्राक्सिद्धामनोरथानश्यंत्येवेत्याह ॥ मनोरथाइति ॥ फलितमाह ॥ तेनेति ॥ तेनखलानांमनोरथनाशनेन ॥ विश्वेशेनागस्त्या दिरूपेणरक्षितंपालितम् ॥ ६५ ॥ पूर्वोक्तमर्थंसदृष्टांतंकथयन्प्रकृतंनिगमयति ॥ विधवानामितित्रयेण ॥ यथाविगतभर्तृकाणांकुचाउच्चैर्यथास्यात्तथाहृदिवर्धित्वातत्रैवहृदिविलीयंतएवनस्वेषांपरेषां वाउपकारायभवंतितथाखलानांमनोरथाइत्यर्थः ॥६६ ॥ यथाकन्नदीकुत्सितानदीअल्पवृष्ट्याकूलंकषास्वतीरभंजिकाभवतितथाखलस्याल्पवर्षेणअल्पकामवृष्ट्यायाऋद्धिःसमृद्धिःसंपत्तिरितियावत् ॥ सास्वकुलंकषास्वकुलनाशिकाभवतीत्यर्थः ॥ कुन्नदीतिक्वचित्पाठःसंचिंत्यः ॥ ६७ ॥ योऽन्यसामर्थ्यमविज्ञायस्वसामर्थ्यंदर्शयतिसयथोपहासंप्राप्नोतितथायंविंध्योपीत्यर्थः ॥ ६८ ॥ ॥ ६९ ॥ उदीचींदिशंस्पृशतीत्युदीचीदिक्स्पृक्तम् ॥ उदीचीदिक्चरमितिक्वचित्पाठः ॥ मातरिश्वनंवायुम् ॥ ह्रस्वश्छांदसः ॥ पृच्छेत्पृच्छति ॥ ७० ॥ हेलोपामुद्रेवाराणस्याःसाप्रसिद्धामुद्रा

मनोरथानसिद्ध्येयुःसिद्धानश्यंत्यपिध्रुवम् ॥ खलानांतेनकुशलिविश्वंविश्वेशरक्षितम् ॥ ६५ ॥ विधवानांस्तनायद्वद्धृद्येवविलयंतिच ॥ उन्नम्यो न्नम्यतत्रोच्चैस्तद्वत्खलमनोरथाः ॥ ६६ ॥ भवेत्कूलंकषायद्वदल्पवर्षेणकन्नदी ॥ खलर्धिरल्पवर्षेणतद्वत्स्यात्स्वकुलंकषा ॥ ६७ ॥ अविज्ञायान्यसा मर्थ्यंस्वसामर्थ्यंप्रदर्शयेत् ॥ उपहासमवाप्नोतितथैवायमिहाचलः ॥ ६८ ॥ ॥ व्यासउवाच ॥ ॥ गोदावरीतटंरम्यंविचरन्नपिवैमुनिः ॥ नतत्याजचतं तापंकाशीविरहजंपरम् ॥ ६९ ॥ उदीचीदिक्स्पृशमपिसमुनिर्मातरिश्वनम् ॥ प्रसार्यबाहूसंश्लिष्यकाश्याःपृच्छेदनामयम् ॥ ७० ॥ लोपामुद्रे नसामुद्राकापीहजगतीतले ॥ वाराणस्याःप्रदृश्येततत्कर्तानयतोविधिः ॥ ७१ ॥ क्वचित्तिष्ठन्क्वचिज्जल्पन्क्वचिद्धावन्क्वचित्स्खलन् ॥ क्वचिचो पविशंश्चेतिबभ्रामेतस्ततोमुनिः ॥ ७२ ॥ ततोव्रजन्ददर्शाग्रेपुण्यराशिस्तपोधनः ॥ चंचच्चंद्रशताभासांभाग्यवानिवसुश्रियम् ॥ ७३ ॥ विजित्यभानु नाभानुंदिवापिसमुदित्वराम् ॥ निर्वापयंतीमिवतांस्वचेतस्तापसंततिम् ॥ ७४ ॥

मुदंहर्षंरातीतिमुद्रारचनापरिपाटीकापिनिरुपमा ॥ क्वापीतिक्वचित् ॥ यद्वा मुद्रामुद्रिकालिंगंचिह्नमितियावत् ॥ इहब्रह्मांडमध्येजगतीतलेकुत्रापिनदृश्यते ॥ यतस्तस्याःकर्ताविधिर्ब्रह्मानेत्यर्थः ॥ तथाचवक्ष्यतिब्रह्मास्वयमेव ॥ मयासृष्टानिविश्वेंद्रभुवनानिचतुर्दश ॥ अस्याःपुर्याविनिर्मातास्वयंविश्वेश्वरःप्रभुरिति ॥ ७१ ॥ ७२ ॥ ततइति ॥ ततस्तदनंतरंतत्रगोदावरीतीरप्रदेशेव्रजंस्तपोधनोऽ गस्त्योमहालक्ष्मींसुचिरंयथास्यात्तथास्थितांददृशेददर्शेतितृतीयेनान्वयः ॥ कथंभूताम् ॥ चंचच्चंद्रशताभासांचंचदुच्छलद्यच्चंद्रशतंतस्येवासमंततोभासोदीप्तिर्यस्याःसातथाताम् ॥ कांकइव ॥ सुश्रियंशोभनांलक्ष्मींभाग्यवानिव ॥ पुण्यवान्यथापश्यतितथेत्यर्थः ॥ अथवैवंयोजना ॥ ततस्तदनंतरंतपोधनोगस्त्यात्रेमेथमतःसुश्रियंशोभनप्रभांश्रीगात्रतेजःसमूहमित्यर्थः ॥ ददर्श पश्चात्तत्रतस्यांसुश्रियांदृष्टायांसत्यामाधारभूतायांवाअगस्त्योमहालक्ष्मींददर्शेति शेषंपूर्ववत् ॥ पाठांतरेस्वीयांस्वेष्टदेवतांश्रियमितिव्याख्येयम् ॥ ७३ ॥ विजित्येति ॥ पुनःकथंभूताम् ॥

१ स्वश्रियमित्येवंरूपे ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भानुनादीधित्या ॥ भानुःकरोमरीचिःस्त्रीपुंसयोर्दीधितिःस्त्रियामित्यमरः ॥ भानुंसूर्यंविजित्यविशेषेणजित्वासमुदित्वरांसम्यगुदयंतींसम्यक्प्रकाशमानामित्यर्थः ॥ तांदैत्यास्त्रजनितांस्वचेतस्ता
पसंततिंस्वमनस्तापपरंपरांनिर्वापयंतींनिराकर्तुंप्रवर्तमानामिवेत्युत्प्रेक्षा ॥ निर्वापयितुमिच्छामिदैत्यास्त्रैस्तापितांतनुमित्यग्रेवक्ष्यमाणत्वात् ॥ अगस्त्यपरोवास्वशब्दस्तदातांकाशीवियोगजांस्वचेतस्ता
पसंततिमितिव्याख्येयम् ॥ ७४ ॥ ७५ ॥ रात्राविति ॥ तत्तस्मात्कारणात्तत्रकोलापुरेऽध्युषितांस्थितामिवेतिपुनरुत्प्रेक्षा ॥ तस्मात्कस्मात् ॥ क्षीरोदेपितुर्गृहेमंदरस्यपर्वतस्यामृतोत्पत्त्यर्थं
कृतमंथानदंडस्यत्रासात्तज्जनितशब्दत्रासात्तच्चूर्णनत्रासाद्वेत्यर्थः ॥ ननुतथापिपद्मालयत्वात्पद्मेस्थास्यतितत्राह ॥ रात्राविति ॥ रात्रौरात्रिविषयेपद्मेषुसंकोचोमुद्रीभावोयतः ॥ ननुतर्हिचंद्रम
सिस्थास्यतितत्राह ॥ दर्शेष्विति ॥ दर्शेष्वमावास्यासुअब्जश्चंद्रःक्वचिद्व्रजेदहश्यतांगच्छेदित्यर्थः ॥ अब्जोजैवातृकःसोमइत्यमरः ॥ अतस्तादृक्स्थानांतराभावात्तत्राध्युषितामिवेत्युत्प्रेक्षा
॥ ७६ ॥ यदारभ्येति ॥ यदित्यव्ययं तथातदित्यपि ॥ यत्यंकालमारभ्यएनांलक्ष्मींमानतःसंमानतोवक्षसिदधारभार्यात्वेनस्वीकृतवान् ॥ तत्रमानंसूचयन्दधारेत्यनेनाकांक्षितंकर्तारमाह ॥
माधवइति ॥ मालक्ष्मीस्तस्याधवोभर्तेत्यर्थः ॥ तत्तंकालमारभ्यनूनंनिश्चितंस्थिताम् ॥ सपत्नीसरस्वती ॥ नारायणमहंवंदेगरुडोयस्यवाहनम् ॥ शंखचक्रगदाहस्तेयस्यभार्यासरस्वतीतिव
चनात् ॥ प्रोत्प्लुष्टाज्ञानकूटेहरिनिजदयितेदेविसंसारसारेइतिसरस्वतीस्तोत्रेपाद्मवचनाच्च ॥ धरणिर्वा ॥ यदाभूद्भार्गवोरामस्तदाभूद्धरणीत्वियमितिवैष्णवोक्तेः ॥ श्रियाशातकुंभद्युतिस्निग्ध

तत्रागस्त्योमहालक्ष्मींददृशेसुचिरंस्थिताम् ॥७५॥ रात्रावब्जेषुसंकोचोदर्शेष्वब्जःक्वचिद्व्रजेत्॥क्षीरोदेमंदरत्रासात्तदत्राध्युषितामिव ॥७६॥ यदारभ्यद
धारैनांमाधवोमानतःकिल ॥ तदारभ्यस्थितांनूनंसपत्नीर्ष्यावशादिव ॥७७॥त्रैलोक्यंकोलरूपेणत्रासयंतंमहासुरम् ॥ विनिहत्यस्थितांतत्ररम्येकोलापुरे
पुरे ॥७८॥ संप्राप्याथमहालक्ष्मींमुनिवर्यःप्रणम्यच ॥ तुष्टाववाग्भिरिष्टाभिरिष्टदांहृष्टमानसः ॥ ७९ ॥ अगस्तिरुवाच ॥ ॥ मातर्नमामिकमले
कमलायताक्षिश्रीविष्णुहृत्कमलवासिनि विश्वमातः ॥ क्षीरोदजेकमलकोमलगर्भगौरिलक्ष्मिप्रसीदसततंनमतांशरण्ये ॥ ८० ॥ त्वंश्रीरुपेंद्रसदने
मदनैकमातर्ज्योत्स्नासिचंद्रमसिचंद्रमनोहरास्ये ॥ सूर्येप्रभासिचजगत्त्रितयेप्रभासिलक्ष्मिप्रसीदसततंनमतांशरण्ये ॥ ८१ ॥

कांत्याधरण्याचदूर्वादलश्यामलांग्या ॥ कलत्रद्वयेनामुनातोषितायत्रिलोकीगृहस्थायविष्णोनमस्तइतिभगवत्पादीयवचनाच्च ॥ तस्याईर्ष्यावशादिवपैशून्यवशादिवेत्यर्थः ॥ मानतोवक्षसिधृता
याअपिसपत्न्योरीर्ष्यावशत्वंतयोर्भगवतामुखदंष्ट्राग्रयोर्धृतत्वादुन्नेयम् ॥ इलामितिपाठेऋजुरेवार्थः ॥ इलांपृथ्वींवाराहरूपेणदधार ॥ ७७ ॥ त्रैलोक्यमिति ॥ कोलरूपेणसूकरशरीरेण ॥
विनिहत्येति ॥ यद्यपिमंगलभूभृतैवसोसुरोघातितः ॥ तथाचोक्तंलक्ष्मीव्रतेभविष्येइंद्रंप्रतिनारदेन ॥ भल्लेनसोवधीत्क्रोडंवज्रेणाद्रिंयथाभवानिति ॥ समंगलः ॥ तथापिकल्पभेदा
भिप्रायेणैतदुक्तमित्यविरोधः ॥ कोलापुरेकोलापुरनाम्नि मंगलाख्यस्यराज्ञोमंगलपुरमेवकोलापुरम् ॥ एतदप्युक्तंलक्ष्मीव्रतेभविष्ये ॥ चोलदेवीश्रियःशापात्कोलास्यायत्रसाभवत् ॥
कोलापुरमितिख्यातंक्षितौतन्मंगलंपुरमिति ॥ ७८ ॥ ७९ ॥ पद्यैश्चित्रपदार्थैर्गिरष्टाभिःश्रवणामृतैः ॥ महामुनिर्महालक्ष्मींतुष्टावजगदंबिकाम् ॥ मातर्नमामीति ॥ हेमातर्नमामित्वा
मित्यर्थात् ॥ हेकमलेहेकमलायताक्षिहेश्रीविष्णुहृत्कमलवासिनिश्रीनारायणहृदयपद्मेवसितुंशीलंयस्यास्तत्संबोधनंतथा ॥ तदुक्तंवैष्णवे ॥ विष्णोर्वक्षस्थलाश्रयइति ॥ हेविश्वमातः हेक्षीरो
दजेहेकमलकोमलगर्भगौरिहेलक्ष्मिसततंनमतांशरण्येआश्रययोग्येप्रसीदप्रसन्नाभवप्रसादंकुर्विति ॥ ८० ॥ निखिलप्रपंचस्यतत्पारतंत्र्यंवदन्परदेवतात्वेनस्तौति ॥ त्वंश्रीरितिसार्धेन ॥ मेहं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

द्रसदनेत्वंश्रीःसंपत्तिःशोभावातद्धेतुरित्यर्थः ॥ लक्ष्मीर्वा ॥ पुनश्चपद्मादुद्भूतायद्वादित्योभवद्धरिरितिवैष्णवोक्तेः ॥ हेमदनैकमातःकामैकप्रसूःप्रद्युम्नैकहेतोहेरुक्मिणीत्यर्थः ॥ तदुक्तंवैष्णवे ॥ रुक्मिणीकृष्णजन्मनीति ॥ ज्योत्स्नाकांतिरसि चंद्रमसिहेचंद्रमनोहरास्ये सूर्येप्रभासि ॥ चःसमुच्चये ॥ किंबहुना ॥ जगत्त्रितयेयाप्रभासात्वमसि ॥ तथाचश्रुतिः ॥ नतत्रसूर्योभाति नचंद्रतारकंनेमाविद्युतोभांतिकुतोयमग्निः तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभातीति ॥ हेलक्ष्मिप्रसीदसततंनमतांशरण्येइति ॥ ८१ ॥ त्वमिति ॥ त्वंजातवेदसिवह्नौसदादहना त्मशक्तिर्दाहस्वरूपाशक्तिः ॥ वेधाब्रह्मात्वयाऽभिन्ननिमित्तोपादानभूतयाइदंजगत्विविधंविदध्याद्विदधातिकरोतीत्यर्थः ॥ विश्वंभरःश्रीविष्णुरपिबिभृयात्पालयेद्रक्षतीत्यर्थः ॥ अखिलंजगत् भव त्यात्वया ॥ हेलक्ष्मिप्रसीदसततंनमतांशरण्येइति ॥ ८२ ॥ त्वदिति ॥ हेअमलेत्वत्त्यक्तंत्वयानाधिष्ठितमेतज्जगच्छ्रीरुद्रोपिसंहराते ॥ अतस्त्वत्पारतंत्र्यात्सर्वस्यत्वमेवपासिहंसिविदधासिक रोषिवेति ॥ ननुतर्हिस्रष्टृसृज्यादिभेदस्यसत्त्वाद्द्वैतंगतमेवतत्राह ॥ परावरासि ॥ यद्वा पूर्वंनिमित्तकारणतामुक्त्वेदानीमुपादानकारणतामाह ॥ परावरासिकार्यंकारणरूपास्थूलसूक्ष्मरूपापरेऽ व्याकृतादयोऽवरेनिकृष्टायस्याइतिवाऽसि ॥ त्वद्रूपंत्वदधीनंचसर्वमितिभावः ॥ पुनःसगुणांस्तौति ॥ हेअमलेहरिरपिईडचःस्तुत्यस्त्वदाप्त्यात्वत्प्राप्त्याबभूव ॥ यद्वा अज्ञानंतत्कार्यंचहरती

त्वंजातवेदसिसदादहनात्मशक्तिर्वेधास्त्वयाजगदिदंविविधंविदध्यात् ॥ विश्वंभरोपिबिभृयादखिलंभवत्यालक्ष्मिप्रसीदसततंनमतांशरण्ये ॥ ८२ ॥ त्वत्त्यक्तमेतदमलेहरतेहरोपित्वंपासिहंसिविदधासिपरावरासि ॥ ईड्योबभूवहरिरप्यमलेत्वदाप्त्यालक्ष्मिप्रसीदसततंनमतांशरण्ये ॥ ८३ ॥ शूरः सएवसगुणीसबुधःसधन्योमान्यःसएवकुलशीलकलाकलापैः ॥ एकःशुचिःसहिपुमान्सकलेपिलोकेयत्रापतेत्तवशुभेकरुणाकटाक्षः ॥ ८४ ॥ यस्मिन्वसेःक्षणमहोपुरुषेगजेऽश्वेस्त्रैणेतृणेसरसिदेवकुलेगृहेऽन्ने ॥ रत्नेपतत्रिणिपशौशयनेधरायांसश्रीकमेवसकलेतदिहास्तिनान्यत् ॥ ८५ ॥ त्वत्स्पृष्टमेवसकलंशुचितांलभेतत्वत्त्यक्तमेवसकलंत्वशुचीहलक्ष्मि ॥ त्वन्नामयत्रचसुमंगलमेवतत्रश्रीविष्णुपत्निकमलेकमलालयेऽपि ॥ ८६ ॥

तिहरिस्तथाविधोपिवाङ्मनसयोरगोचरोपित्वदाप्त्यात्वदीक्षयात्वयिचिदाभासप्रदानेनेत्यर्थः ॥ सऐक्षतबहुस्यांप्रजायेयेतिश्रुतेः ॥ भक्तानामीडचःस्तुत्योबभूव ॥ अयंभावः ॥ भगवतस्त्वदी क्षणाभावेसृष्ट्यादेरसंभवाज्जीवानांपुरुषार्थचतुष्टयंनसिध्येत्त्वदीक्षयापुनःसृष्ट्यादेःसंभवाद्भगवतःस्तुत्यादिनातच्चतुष्टयंसिद्ध्यतीतिभावः ॥ हेलक्ष्मिप्रसीदसततंनमतांशरण्यइति ॥ ८३ ॥ शूरइति ॥ हेशुभेयत्रपुरुषेतवकरुणाकटाक्षआपतेत्सएवशूरःससमर्थःसगुणीसबुधःसधन्योधनाययोग्यः कलाविद्या कुलशीलकलानांकलापैःसमूहैःसएवमान्यःपूज्यः सकलेपिलोकेसएकोमुख्यःशुचिःसएव हिपुमान् ॥ तदुक्तंवैष्णवे ॥ सश्लाघ्यःसगुणीधन्यःसकुलीनःसबुद्धिमान् ॥ सशूरःसचविक्रांतोयस्त्वयादेविवीक्षितइति ॥ ८४ ॥ यस्मिन्निति ॥ अहोहेलक्ष्मियस्मिंस्त्वंक्षणंक्षणमात्रं वसेःवससिसकलेइहजगतितदेवास्तिनान्यदित्यन्वयः ॥ तदेवास्तीतिकुतस्तत्राह ॥ सश्रीकंत्वदधिष्ठितमित्यर्थः ॥ यद्वा अन्यदापियत्सश्रीकंतदेवास्ति ॥ यद्वा यस्मिन्वससिसश्रीकंतदेवा स्तीति ॥ यस्मिन्कस्मिन्नित्याकांक्षायामाह ॥ पुरुषइत्यादि ॥ पुरुषेयस्मिन्कस्मिंश्चिदित्यर्थः ॥ एवंगजेऽश्वेस्त्रैणेस्त्रीसमूहेतृणेसरसिदेवकुलेदेवगृहेऽन्नेरत्नेपतत्रिणिपक्षिणिपशौशयनेधराया मिति ॥ सकलेहेसर्वस्वरूपेइतिवा ॥ कमलेइतिवापाठः ॥ ८५ ॥ त्वत्स्पृष्टमिति ॥ हेलक्ष्मिइहजगतित्वत्स्पृष्टंत्वयाधिष्ठितमेवसकलंवस्त्वित्यर्थाच्छुचितांलभेत ॥ त्वत्त्यक्तमेवसकलंतु



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पुनरशुचि ॥ हेश्रीविष्णुपत्निहेकमलेकमलालये ॥ अपिःसमुच्चये ॥ अतीतिपाठेसुमंगलामित्यस्योपर्यतिशब्दोनेतव्यः ॥ यत्रचत्वन्नामातिसुमंगलमेवतत्रेति ॥ ८६ ॥ लक्ष्मीमिति ॥ इति सदाजपतांक्वदुःखंनकुत्रापिदुःखमित्यर्थः ॥ इतिशब्दपरामृष्टमीप्सिततमंदर्शयति ॥ लक्ष्मींश्रियंकमलांकमलालयांपद्मांरमांनलिनयुग्मकरांकमलद्वयहस्तांमांक्षीरोदजांअमृतकुंभकरांइराम् ॥ अमृतकुंभकरेंदिरामितिपाठेकर्मधारयः ॥ शिवामितिक्वचित् ॥ विष्णुप्रियामिति ॥ पंचचशब्दाःसमुच्चयार्थाः ॥ ८७ ॥ साष्टांगं, अष्टभिर्हस्तपादजानूरःशिरोदृङ्मनोवचोभिरंगैःसहितंयथा

लक्ष्मींश्रियंचकमलांकमलालयांचपद्मांरमांनलिनयुग्मकरांचमांच ॥ क्षीरोदजाममृतकुंभकरामिरांचविष्णुप्रियामितिसदाजपतांक्वदुःखम् ॥ ८७ ॥ इतिस्तुत्वाभगवतींमहालक्ष्मींहरिप्रियाम् ॥ प्रणनामसपत्नीकःसाष्टांगंदंडवन्मुनिः ॥ ८८ ॥ श्रीरुवाच ॥ ॥ उत्तिष्ठोत्तिष्ठभद्रंतेमित्रावरुणसंभव ॥ पतिव्रतेत्वमुत्तिष्ठलोपामुद्रेशुभव्रते ॥ ८९ ॥ स्तुत्यानयाप्रसन्नाहंव्रियतांयद्धृदीप्सितम् ॥ राजपुत्रिमहाभागेत्वमिहोपविशामले ॥ ९० ॥ त्वदंगलक्षणैरेभिःसुपवित्रैश्चतव्रतैः ॥ निर्वापयितुमिच्छामिदैत्यास्त्रैस्तापितांतनुम् ॥ ९१ ॥ इत्युक्त्वासुनिपत्नींतांसमालिंग्यहरिप्रिया ॥ अलंचकारचप्रीत्यावहुसौभाग्यमंडनैः ॥ ९२ ॥ पुनराहमुनेजानेतवहृत्तापकारणम् ॥ सचेतनंदुनोत्येवकाशीविश्लेषजोऽनलः ॥ ९३ ॥ यदासदेवोविश्वेशोमंदरंगतवान्पुरा ॥ तदाकाशीवियोगेनजातातस्येदृशीदशा ॥ ९४ ॥ तत्प्रवृत्तिंपुनर्ज्ञातुंब्रह्माणंकेशवंगणान् ॥ गणेश्वरंचदेवांश्चप्रेषयामासशूलधृक् ॥ ९५ ॥ तेचकाशीगुणान्सर्वेविचार्यचपुनःपुनः ॥ व्रजंत्यद्यापिनक्वापिताहगस्तिक्वपुरी ॥ ९६ ॥ इतिश्रुत्वाथसमुनिःप्रत्युवाचश्रियंततः ॥ प्रणिपत्यमहाभागोभक्तिगर्भमिदंवचः ॥ ९७ ॥ यदिदेयोवरोमह्यंवरयोग्योस्म्यहंयदि ॥ तदावाराणसीप्राप्तिःपुनरस्त्वेषमेवरः ॥ ९८ ॥ येपठिष्यंतिचस्तोत्रंत्वद्भक्त्यामत्कृतंसदा ॥ तेषांकदाचित्संतापोमास्तुमास्तुदरिद्रता ॥ ९९ ॥ मास्तुचेष्टवियोगश्चमास्तुसंपत्तिसंक्षयः ॥ सर्वत्रविजयश्चास्तुविच्छेदोमास्तुसंततेः ॥ १०० ॥ ॥ श्रीरुवाच ॥ ॥ एवमस्तुमुनेसर्वंयत्त्वयापरिभाषितम् ॥ एतत्स्तोत्रस्यपठनंममसान्निध्यकारणम् ॥ १ ॥

भवतितथा ॥ तदुक्तम् ॥ दोर्भ्यांपदाभ्यांजानुभ्यामुरसाशिरसादृशा ॥ मनसावचसाचेतिप्रणामोष्टांगईरितइति ॥ ८८ ॥ ८९ ॥ राजपुत्रिवैदर्भराजकन्ये ॥ ९० ॥ त्वदंगलक्षणैःत्वदंगे वर्ततेयानिलक्षणानिसल्लक्षणानिपातिव्रत्यादिसंसूचकानितैरेभिःप्रत्यक्षसिद्धैः ॥ दैत्यास्त्रैःसूकररूपदैत्यस्यायुधैः ॥ ९१ ॥ बहूनिसौभाग्यानियेभ्यस्तानिचतानिमंडनानिभूषणानिचतैः ॥ ९२ ॥ दुनोतिव्यथते ॥ ९३॥९४॥ देवान्सूर्यादीन् ॥ द्वादशादित्यभेदेनबहुवचनम् ॥ देवीरितिपाठेमातृगणमित्यर्थः ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ संततेर्वंशस्य ॥ १०० ॥ १ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कालकर्णीराक्षसीविशेषःकाकविष्ठावा ॥ २ ॥ भूर्जपत्रेचर्मिपत्रे ॥ ३ ॥ इदमिति ॥ बीजरहस्यं बीजंश्रीबीजंततोपिरहस्यंगोप्यमतिमहत्तरमित्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ॥ ८ ॥ १०९ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांपंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥ ॥ षष्ठेतीर्थप्रशंसांचभार्ययानोदितोमुनिः ॥ कथयामासकात्स्न्येंनमानसादिविभागतः ॥ १ ॥ श्रोतारंप्रोत्साहयति ॥ शृण्विति ॥ श्रुतिसहोदरांवेदतुल्यांश्रुतिसहमुदरंयस्याःसातथातांश्रुतिगर्भामित्यर्थः ॥ श्रुतिमनोहरामितिवापाठः ॥ वैनिश्चये ॥ १ ॥ श्रीदर्शनानंदएवसुधाधाराधुनीअमृतसंपातनदीताम् ॥ २ ॥ वह्निकुंडेति ॥ द्रौपदीधृष्टद्युम्नयोरग्निकुंडसमुत्पन्नयोर्द्रुपदाज्जातत्ववदाग्निकुंडसमुत्पन्नस्यापिरोमहर्षणस्यब्राह्मण्यांक्षत्रियाज्जातत्वमविरुद्धम् ॥

अलक्ष्मीःकालकर्णीचतद्गेहेनविशेत्क्वचित् ॥ गजाश्वपशुशांत्यर्थमेतत्स्तोत्रंसदाजपेत् ॥ २ ॥ बालग्रहाभिभूतानांबालानांशांतिकृत्परम् ॥ भूर्जपत्रेलिखित्वातुवध्नीयात्कंठदेशतः ॥ ३ ॥ इदंबीजरहस्यंमेरक्षणीयंप्रयत्नतः ॥ श्रद्धाहीनेनदातव्यंनदेयंचाशुचौक्वचित् ॥ ४ ॥ अन्यच्चशृणुविप्रेंद्रभविष्येद्वापरेभवान् ॥ एकोनत्रिंशकेब्रह्मन्सत्यंव्यासोभविष्यति ॥ ५ ॥ तदावाराणसींप्राप्यसिद्धिंप्राप्स्यस्यभीप्सिताम् ॥ व्यस्यवेदान्पुराणानिधर्मान्समुपदिश्यच ॥ ६ ॥ हितं चैतद्वदाम्येकंसांप्रतं तत्समाचर ॥ पश्यकिंचिदितोगत्वास्कंदमग्रेस्थितंप्रभुम् ॥ ७ ॥ वाराणस्यारहस्यंचयथावच्छिवभाषितम् ॥ तव तुष्टिकरंब्रह्मन्कथयिष्यतिषण्मुखः ॥ ८ ॥ इतिलब्ध्वावरंसोथमहालक्ष्मींप्रणम्यच ॥ ययावगस्तिर्यत्रास्तिकुमारःशिखिवाहनः ॥ १०९ ॥ ॥ इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यांसंहितायां चतुर्थेकाशीखंडेपूर्वार्द्धेअगस्त्यप्रस्थानंनामपंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ पाराशर्यउवाच ॥ शृणुसूतमहाभागकथांश्रुतिसहोदराम् ॥ यांवैहृदिनिधायेहपुरुषःपुरुषार्थभाक् ॥ १ ॥ ततःश्रीदर्शनानंदसुधाधाराधुनींमुनिः ॥ अवगाह्यसपत्नीकःपरांमुदमवापसः ॥ २ ॥ वह्निकुंडसमुद्भूतसूतनिर्मलमानस ॥ शृणुष्वैकंपुराविद्भिर्भाषितंयत्सुभाषितम् ॥ ३ ॥ परोपकरणंयेषांजागर्तिहृदयेसताम् ॥ नश्यंतिविपदस्तेषांसंपदःस्युःपदेपदे ॥ ४ ॥ तीर्थस्नानैर्नसाशुद्धिर्बहुदानैर्नतत्फलम् ॥ तपोभिरुग्रैस्तन्नाप्यमुपकृत्यायदाप्यते ॥ ५ ॥

यद्वा वह्निकुंडसमुद्भूतवैन्यस्ययज्ञाग्निकुंडात्समुत्पन्न ॥ त्वंहिस्वायंभुवेयज्ञेसुत्याहेवितते सति ॥ संभूतःसंहितांवक्तुंस्वांशेनपुरुषोत्तमः ॥ तस्यतेसर्वरोमाणिवचसात्द्दर्षितानिच ॥ द्वैपायनस्यतुभवांस्ततोसौरोमहर्षणइतिकूर्मोक्तेः ॥ स्वायंभुवेस्वयंभुवाब्रह्मणाप्रवर्तिते ॥ स्वांशेनकलया ॥ वैन्यस्यहिपृथोर्यज्ञेवर्तमानेमहात्मनः ॥ सुत्यायामभवत्सूतइतिवायूक्तेश्च ॥ ब्राह्मण्यांक्षत्रियाज्जातः सूतइत्यभिधीयते ॥ तत्साधर्म्यादसावपितथा ॥ तथाहि ॥ तत्रहिपृथोर्यज्ञेबार्हस्पत्यंहविरैंद्रेणहविषासंपृक्तमभिभूतंचऐंद्रश्चरुर्मारुतेनहविषाततःसूतमागधौजाताविति पौराणिकीकथा ॥ अतएवतस्यपुराणादिप्रवचनमविरुद्धमिति ॥ कल्पभेदकल्पनातुनचारुतरा ॥ प्रतिलोमजत्वात्प्रतिसंपराभवात्प्रातिलोम्यजं शरीरंविहायशरीरांतरंयज्ञाग्निकुंडेलोमहर्षणोवासिष्ठागस्त्याविवसाधयामासेतिमहाभारतटीकायामितिकोचेत् ॥ ३ ॥ ४ ॥ ५ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ६ ॥ ७ ॥ ८ ॥ करिकर्णाग्रचपलंहस्तिकर्णाग्रचपलम् ॥ ९ ॥ यल्लक्ष्मीति ॥ याचासौलक्ष्मीश्चेतियल्लक्ष्मीस्तस्यानाममात्राप्त्यानाममात्रोच्चारणेननरोयःकश्चिदपिनोमातिनपरिमिनोति महत्तरोभवतीत्यर्थः ॥ कृतकृत्योभवेन्नरइतिक्वचित्पाठः ॥ १० ॥ ऐक्षतदृष्टवान् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ पत्याअननुज्ञाता भर्त्राऽदत्ताभ्यनुज्ञेत्यर्थः ॥ १५ ॥ १६ ॥ ॥ १७ ॥ इष्यतेवांछ्यतेस्वामिनेतिशेषः ॥ १८ ॥ वरारोहेवरौश्रेष्ठौआरोहौजघनेयस्याः सातथातस्याः संबोधनंहेश्रेष्ठजघनेइत्यर्थः ॥ १९ ॥ २० ॥ सर्वतीर्थानांकामिकंकामायहितम् ॥

परोपकृत्यायोधर्मोधर्मोदानादिसंभवः ॥ एकत्रतुलितौधात्रातत्रपूर्वोभवद्गुरुः ॥ ६ ॥ परिनिर्मथ्यवाग्जालंनिर्णीतमिदमेवहि ॥ नोपकारात्परोधर्मो नापकारादघंपरम् ॥ ७ ॥ उपकर्तुरगस्त्यस्यजातमेतन्निदर्शनम् ॥ कृताद्दक्काशिजंदुःखंकृताद्दक्श्रीमुखेक्षणम् ॥ ८ ॥ करिकर्णाग्रचपलंजीवितं विविधंवसु ॥ तस्मात्परोपकरणंकार्यमेकंविपश्चिता ॥ ९ ॥ यल्लक्ष्मीनाममात्राप्त्यानरोनोमातिकुत्रचित् ॥ साक्षात्समीक्ष्यतांलक्ष्मींकृतकृत्यो भवन्मुनिः ॥ १० ॥ गच्छन्यदृच्छयासोथदूराच्छ्रीशैलमैक्षत ॥ यत्रसाक्षान्निवसतिदेवःश्रीत्रिपुरांतकः ॥११॥ उवाचवचनंपत्नींतदाप्रीतमनामुनिः ॥ इहस्थितैवपश्यत्वंकांतिकांततरंपरम् ॥ १२ ॥ श्रीशैलशिखरंश्रीमदिदंतद्यद्विलोकनात् ॥ पुनर्भवोमनुष्याणांभवेन्ननभवेत्क्वचित् ॥ १३ ॥ गिरिश्चतुरशीत्यायंयोजनानांहिविस्तृतः ॥ सर्वलिंगमयोयस्मादतःकुर्यात्प्रदक्षिणम् ॥ १४ ॥ ॥ लोपामुद्रोवाच ॥ ॥ किंचिद्विज्ञप्तुमिच्छामियद्याज्ञा स्वामिनोभवेत् ॥ व्रतेहियाऽननुज्ञातापत्यासापतिताभवेत् ॥ १५ ॥ अगस्त्यउवाच ॥ ॥ किंवक्तुकामादेवित्वंब्रूहितत्त्वमशंकिता ॥ नत्वादृशीनांवाक्यंहिपत्युःखेदायजायते ॥ १६ ॥ ततः पप्रच्छसादेवीप्रणम्यमुनिमानता ॥ सर्वेषांचहितार्थायस्वसंदेहापनुत्तये ॥ १७ ॥ लोपामुद्रोवाच ॥ श्रीशैलशिखरंदृष्ट्वापुनर्जन्मनविद्यते ॥ इदमेवहिसत्यंचेत्किमर्थंकाशिरिष्यते ॥ १८ ॥ अगस्तिरुवाच ॥ ॥ आकर्णयवरारोहेसत्यंपृष्टंत्वयामले ॥ निर्णीतमसकृच्चैतन्मुनिभिस्तत्त्वचिंतकैः ॥ १९ ॥ मुक्तिस्थानान्यनेकानिकृतस्तत्रापिनिर्णयः ॥ तानितेकथयाम्यत्रदत्ताचित्ताभवक्षणम् ॥ २० ॥ प्रथमंतीर्थराजंतुप्रयागाख्यंसुविश्रुतम् ॥ कामिकंसर्वतीर्थानांधर्मकामार्थमोक्षदम् ॥ २१ ॥ नैमिषंचकुरुक्षेत्रंगंगाद्वारमवंतिका ॥ अयोध्यामथुराचैवद्वारकाप्यमरावती ॥ २२ ॥ सरस्वतीसिंधुसंगोगंगासागरसंगमः ॥ कांतीचत्र्यंबकंचापिसप्तगोदावरीतटम् ॥ २३ ॥ कालंजरंप्रभासश्चतथाबदरिकाश्रमः ॥ महालयस्तथोंकारक्षेत्रंवैपौरुषोत्तमम् ॥ २४ ॥

संवत्सरार्जितपापनाशकामनाविषयत्वात् ॥ २१ ॥ गंगाद्वारंमायापुरी ॥ अमरावतीगंगा पुरीविशेषोवा ॥ अमरावतीवाऽमरावतीतिद्वारकायावाविशेषणम् ॥ २२ ॥ सिंधुर्नदीतस्याःसंगःसंगमः ॥ सागरेणेतिशेषः ॥ कांतीपुरी ॥ कांचीतिक्वचित्पाठः ॥ त्र्यंबकंब्रह्मगिरिर्महाराष्ट्रेषुप्रसिद्धोयतोगौतमीनिःसृता ॥ सप्तगोदावरीतटंआंध्रदेशेप्रसिद्धम् ॥ २३ ॥ महालयोमहास्थानंगौडेप्रसिद्धम् ॥


CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ॐकारोऽमरकंटकम् ॥ महालयइति ॐकारस्यवाविशेषणम् ॥ वैप्रसिद्धम् ॥ २४ ॥ गोकर्णेति ॥ गोकर्णोनामतीर्थविशेषोद्रविडेषुप्रसिद्धः ॥ भृगुकच्छभृगुतुंगौगुर्जरदेशेप्रसिद्धौ ॥ यस्मिंस्तीर्थे धारयाजलंस्रवतितद्धारातीर्थंद्राविडेकुमारधारेतिप्रसिद्धम् ॥ यद्वा धारानामतीर्थविशेषः ॥ तदुक्तंवनपर्वणि ॥ धारानाममहाप्राज्ञसर्वपापप्रणाशिनी ॥ तत्रस्नात्वानरव्याघ्रनशोचतिनरःक्वचिदिति ॥ धारातीर्थंयुद्धामितिकेचित् ॥ २५ ॥ मानसानिमनःसंभवानिमानसानिब्रह्मात्मैकत्वलक्षणानिज्ञानानि ॥ बहुवचनंतुसगुणनिर्गुणभेदाभिप्रायेण ॥ कथंभूतानि ॥ तीर्थानिअविद्यातत्कार्ययोर्नाशकानीतियावत् ॥ ऋषिजुष्टजलानीतिवा ॥ निपानागमयोस्तीर्थमृषिजुष्टेजलेगुरावित्यमरः ॥ ज्ञानानामपिनिर्मलत्वसाधर्म्याज्जलत्वम् ॥ सलिलएकोद्रष्टेतिचश्रुतिः ॥ सत्यादिशब्देनार्जवदयादीनि गृह्यंते ॥ हिर्निश्चितमवधारणार्थोवा ॥२६॥ पितामहानामित्युपलक्षणं पित्रादीनामित्यर्थः ॥ मुक्तास्तत्रश्राद्धकर्तारइतिशेषः ॥ तत्तनयाइत्यत्रतच्छब्देनश्राद्धकर्तारोगृह्यंते ॥ येषांपितॄणांमुक्तिदं तेषांतनयाअपिमुक्ताइतिवान्वयः ॥ २७ ॥ सधर्मिण्युवाचेति ॥ सधर्मिणीपत्नी ॥ सस्त्रीकोधर्ममाचरेदितिवचनात्तस्याअपितज्ज्ञानापेक्षत्वात्सधर्मिणीत्युक्तम् ॥ चकारात्सत्यादीनिचकानिकानीति

गोकर्णोभृगुकच्छश्चभृगुतुंगश्चपुष्करम् ॥ श्रीपर्वतादितीर्थानिधारातीर्थंतथैवच ॥ २५ ॥ मानसान्यपितीर्थानिसत्यादीनिचवैप्रिये ॥ एतानिमुक्तिदान्येवनात्रकार्याविचारणा ॥ २६ ॥ गयातीर्थंचयत्प्रोक्तंतत्पितॄणांहिमुक्तिदम् ॥ पितामहानामृणतोमुक्तास्तत्तनयाअपि ॥ २७ ॥ सधर्मिण्युवाच ॥ ॥ मानसान्यपितीर्थानियान्युक्तानिमहामते ॥ कानिकानिचतानीहह्येतदाख्यातुमर्हसि ॥ २८ ॥ ॥ अगस्त्यउवाच ॥ ॥ शृणुतीर्थानिगदतोमानसानिममानघे ॥ येषुसम्यङ्नरःस्नात्वाप्रयातिपरमांगतिम् ॥ २९ ॥ सत्यंतीर्थंक्षमातीर्थंतीर्थमिन्द्रियनिग्रहः ॥ सर्वभूतदयातीर्थंतीर्थमार्जवमेवच ॥ ३० ॥ दानंतीर्थंदमस्तीर्थंसंतोषस्तीर्थमुच्यते ॥ ब्रह्मचर्यंपरंतीर्थंतीर्थंचप्रियवादिता ॥ ३१ ॥ ज्ञानंतीर्थंधृतिस्तीर्थंतपस्तीर्थमुदाहृतम् ॥ तीर्थानामपितत्तीर्थंविशुद्धिर्मनसःपरा ॥ ३२ ॥ नजलाप्लुतदेहस्यस्नानमित्यभिधीयते ॥ सस्नातोयोदमस्नातःशुचिःशुद्धमनोमलः ॥ ३३ ॥ योलुब्धः पिशुनःक्रूरोदांभिकोविषयात्मकः ॥ सर्वतीर्थेष्वपिस्नातःपापोमलिनएवसः ॥ ३४ ॥ नशरीरमलत्यागान्नरोभवतिनिर्मलः ॥ मानसेतुमलेत्यक्तेभवत्यंतःसुनिर्मलः ॥ ३५ ॥

बोद्धव्यम् ॥ २८ ॥ २९ ॥ मानसानितीर्थानिशृण्वितिप्रतिज्ञायसूचीकटाहन्यायेनतानिविहायसत्यादीनितीर्थान्याह ॥ सत्यमित्यारभ्यज्ञानपूतइत्यतःप्राक्तनेनग्रंथेन ॥ तत्रसत्यंयथार्थभाषणम् ॥ आक्रुष्टेताडितेवासहनंक्षमा ॥ इंद्रियनिग्रहोनिषिद्धविषयेभ्योत्यंतमंतःकरणनिवृत्तिः ॥ सर्वभूतदयाप्राणिमात्रेष्वनुकंपा ॥ आर्जवमवक्रत्वम् ॥ ३० ॥ दानमर्थिषुमुक्तहस्तता ॥ दमोनिषिद्धविषयेभ्योबाह्येंद्रियाणांसर्वथानिवृत्तिः ॥ संतोषोयदृच्छयालाभेनाऽलंबुद्धिः ॥ ब्रह्मचर्यंयथायस्यविहितमष्टांगमैथुनपरित्यागादि ॥ प्रियवादितामधुरभाषिता ॥ ३१ ॥ ज्ञानंधर्माधर्मविषयंआत्माऽनात्मविवेकोवा ॥ धृतिर्देहेंद्रियाणामवसादेसत्युत्तंभनम् ॥ तपःकृच्छ्रचांद्रायणादि ॥ विशुद्धिर्विषयादिसंगराहित्यम् ॥३२॥ परत्वमेवान्वयव्यतिरेकमुखेनदर्शयति ॥ नजलाप्लुतेतित्रयेण ॥ दमस्नातः दम्यंतेइंद्रियाण्यनेनेतिदमंमनस्तत्रस्नातःनिःस्नातःप्रतिषिद्धविषयेभ्योत्यंतमनोनिग्रहरूपविशुद्धिमानित्यर्थः ॥ अतएवशुचिःरागादिरहितः ॥ अतएवशुद्धमनोमलोविगतविषयातिसंरागः॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्रद्धाशुद्धमनोमलइतिक्वचित्पाठः ॥ शुद्धाशुद्धमनोमलइत्यन्यत्र ॥ ३३ ॥ ३४ ॥ ३५ ॥ शरीरमलत्यागान्निर्मलत्वाभावेदृष्टांतमाह ॥ जायंतइति ॥ जलमोकोयेषांतेतथा ॥ ३६॥ अज्ञातमलनैर्मल्ययोस्त्यागादेयतयोरयोगात्तयोःस्वरूपमाह ॥ विषयेष्विति ॥ ३७ ॥ वक्षोंतर्गतमंतःकरणंविषयाभिरागखचितंतीर्थावगाहनान्नशुद्ध्यतीतिसदृष्टांतमाह ॥ चित्तमिति ॥ बहिर्जलैर्धौतंसुराधिकरणं भांडं अतएवापवित्रम् ॥ ३८ ॥ अन्वयव्यतिरेकाभ्यांसिद्धंमनोविशुद्धेःपरंतीर्थत्वमुपसंहरति ॥ दानमितिद्वाभ्याम् ॥ इज्यायागः ॥ शौचंमृज्जलाभ्याम् ॥ तीर्थसेवातीर्थाटनम् ॥ श्रुतंश्रवणम् ॥ सर्वाण्येतानीत्यादीनिसर्वाणीत्यर्थः ॥ अतीर्थानिपवित्रत्वासाधकानि ॥ भावोंतःकरणंनिर्मलःशुद्धोयदिचेन्नेत्यर्थः ॥ पाठांतरेभावोयदिनिर्मलएवतद्दैवतानितीर्थानीति ॥ ३९ ॥ बहुवचनांतागणस्य संसूचकाभवंतीतिन्यायात्पुष्कराणीतिबहुवचनेनगंगादीनिगृह्यंते ॥ ४० ॥ एवंविस्तरेणसत्यादीनितीर्थान्युक्त्वामानसतीर्थान्याह ॥ ज्ञानपूतइति ॥ अस्यायमर्थः ॥ यःस्नातिअवगाहतेसपरमांगतिंपरमनिवृत्तिंयातिप्राप्नोतीत्यन्वयः ॥ क्व मानसेमनसिभवंमानसंब्रह्मात्मज्ञानलक्षणंतस्मिन् ॥ कथंभूते ॥ तीर्थेऋषिभिर्जुष्टेजलेइवसेविते ॥ यद्वा तीर्थमिवतीर्थंअविद्यातत्कार्ययोर्विनाश

जायंतेचम्रियंतेचजलेष्वेवजलौकसः ॥ नचगच्छंतितेस्वर्गमविशुद्धमनोमलाः ॥ ३६ ॥ विषयेष्वतिसंरागोमानसोमलउच्यते ॥ तेष्वेवहिविरागोस्यनैर्मल्यंसमुदाहृतम् ॥ ३७ ॥ चित्तमंतर्गतंदुष्टंतीर्थस्नानान्नशुद्ध्यति ॥ शतशोथजलैर्धौतंसुराभांडमिवाशुचि ॥ ३८ ॥ दानमिज्यातपःशौचंतीर्थसेवाश्रुतंतथा ॥ सर्वाण्येतान्यतीर्थानियदिभावोननिर्मलः ॥ ३९ ॥ निगृहीतेंद्रियग्रामोयत्रैवचवसेन्नरः ॥ तत्रतस्यकुरुक्षेत्रंनैमिषंपुष्कराणिच ॥ ४० ॥ ज्ञानपूतेज्ञानजलेरागद्वेषमलापहे ॥ यःस्नातिमानसेतीर्थेसयातिपरमांगतिम् ॥ ४१ ॥ एतत्तेकथितंदेविमानसंतीर्थलक्षणम् ॥ भौमानामपितीर्थानांपुण्यत्वेकारणंशृणु ॥ ४२ ॥ यथाशरीरस्योद्देशाःकेचिन्मेध्यतमाःस्मृताः ॥ तथापृथिव्यामुद्देशाःकेचित्पुण्यतमाःस्मृताः ॥ ४३॥ प्रभावादद्भुताद्भूमेःसलिलस्यचतेजसः ॥ परिग्रहान्मुनीनांचतीर्थानांपुण्यतास्मृता ॥ ४४ ॥ तस्माद्भौमेषुतीर्थेषुमानसेषुचनित्यशः ॥ उभयेष्वपियःस्नातिसयातिपरमांगतिम् ॥ ४५ ॥

कत्वात् तस्मिन् ॥ पुनःकथंभूते॥ज्ञानपूतेज्ञानंचतत्पूतंचेतिज्ञानपूतंस्वप्रकाशासंगमित्यर्थः॥ यद्वा ज्ञानेनपूतंज्ञानपूतंतत्त्वमस्यादिवाक्योत्थबुद्धिवृत्त्यानिवृत्ताशेषविरोध्यंशमित्यर्थः ॥ तस्मिन् ॥ ध्यानपूतइतिक्वचित्पाठः ॥ तत्रविजातीयप्रत्ययतिरस्कारेणसजातीयप्रत्ययोध्यानंतेनपूतमितिव्याख्येयम् ॥ पुनःकथंभूते ॥ ज्ञानजले ज्ञानंचतज्जलंस्वच्छंचज्ञानजलम् ॥ सलिलएकोद्रष्टेतिश्रुतेः ॥ ज्ञानमेवजलंयस्मिन्निति वा ॥ पुनःकथंभूते ॥ रागद्वेषमलापहे रागद्वेषमलानपहंतीतितथातस्मिन् ॥ तथाचभागवते वेदव्यासस्यस्मरणम् ॥ ज्ञानह्रदेध्यानजलेरागद्वेषमलापहे ॥ यःस्नातिमानसेतीर्थेसयातिपरमांगतिम् ॥ आत्मानदीसंयमतोयपूर्णासत्यह्रदाशीलतटादयोर्मिः ॥ तत्राभिषेकंकुरुपांडुपुत्रनवारिणाशुद्ध्यतिचांतरात्मेति॥भगवच्छंकराचार्यस्यच यस्मिन्वेदाश्चदेवाश्चपवित्रंकृत्स्नमेकताम् ॥ व्रजेत्तन्मानसंतीर्थंयस्मिन्स्नात्वाऽमृतोभवेदिति ॥ एकवचनमेकजीवाभिप्रायंवा ॥ ४१ ॥ ४२ ॥ यथेति ॥ उद्देशाउत्कृष्टादेशाअवयवाः ॥ ४३ ॥ ४४ ॥ मानसेषुचेतिचकारा

१ तद्दैवतानितीर्थानियदिभावोस्तिनिर्मलइत्येवंरूपे ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्सत्यादिषुच ॥ उभयेष्वपीत्यपिशब्दात्तेष्वपि ॥ ४५ ॥ ४६ ॥ ४७ ॥ यस्येति ॥ यस्यहस्तादिषुसंयतंस्यात्सतीर्थफलमश्नुतइत्यन्वयः ॥ तत्रहस्तसंयमःप्रतिग्रहपरपीडनादिनिवृत्तिः ॥
पादसंयमोदृष्टिपूतमदेशेपादप्रक्षेपादिः ॥ मनःसंयमोऽनिष्टचिंतनाभावः ॥ विद्यामंत्रोपासनादिलक्षणा ॥ तपःस्वधर्मादच्युतिः ॥ कीर्तिःपरैःसाधुतयावर्णनम् ॥ एतत्त्रितयंचयस्यस्यादिति
॥ ४८ ॥ ४९ ॥ दंभोधर्मध्वजित्वम् ॥ नविद्यतेदंभोयस्यसतथा ॥ स्वार्थेकः ॥ अदांभिकइतिक्वचित्पाठः ॥ ५० ॥ ५१ ॥ तीर्थान्यनुसरन्धीरइति ॥ धीरःधर्माधर्मौविद्वान् ॥ ५२ ॥
तिर्यग्योनिमिति ॥ तिर्यग्योनिंनवैगच्छेत्तीर्थान्यनुसरन्नित्येव ॥ ५३ ॥ अश्रद्दधानइति ॥ अश्रद्दधानःश्रद्धामकुर्वाणः ॥ पापात्माबैडालव्रतिकः ॥ नास्तिकःपाखंडः ॥ अच्छिन्नसंशयः

अनुपोष्यत्रिरात्राणितीर्थान्यनभिगम्यच ॥ अदत्त्वाकांचनंगाश्चदरिद्रोनामजायते ॥ ४६ ॥ अग्निष्टोमादिभिर्यज्ञैरिष्ट्वाविपुलदक्षिणैः ॥ नतत्फलमवाप्नोतितीर्थाभिगमनेनयत् ॥ ४७ ॥ यस्यहस्तौचपादौचमनश्चैवसुसंयतम् ॥ विद्यातपश्चकीर्तिश्चसतीर्थफलमश्नुते ॥ ४८ ॥ प्रतिग्रहादुपावृत्तः संतुष्टोयेनकेनचित् ॥ अहंकारविमुक्तश्चसतीर्थफलमश्नुते ॥ ४९ ॥ अदंभकोनिरारंभोलध्वाहारोजितेंद्रियः ॥ विमुक्तःसर्वसंगैर्यःसतीर्थफलमश्नुते ॥५०॥ अकोपनोऽमलमतिःसत्यवादीदृढव्रतः ॥ आत्मोपमश्चभूतेषुसतीर्थफलमश्नुते ॥ ५१ ॥ तीर्थान्यनुसरन्धीरःश्रद्दधानःसमाहितः ॥ कृतपापो विशुद्ध्येताकिंपुनःशुद्धकर्मकृत् ॥ ५२ ॥ तिर्यग्योनिंनवैगच्छेत्कुदेशेनैवजायते ॥ नदुःखीस्यात्स्वर्गभाक्चमोक्षोपायंचविंदति ॥ ५३ ॥ अश्रद्दधानः पापात्मानास्तिकोऽच्छिन्नसंशयः ॥ हेतुनिष्ठश्चपंचैतेनतीर्थफलभागिनः ॥ ५४ ॥ तीर्थानिचयथोक्तेनविधिनासंचरंतिये ॥ सर्वद्वंद्वसहाधीरास्तेनराः स्वर्गभागिनः ॥ ५५ ॥ तीर्थयात्रांचिकीर्षुःप्राग्विधायोपोषणंगृहे ॥ गणेशंचपितॄन्विप्रान्साधूञ्छक्त्याप्रपूज्यच ॥ ५६ ॥ कृतपारणकोहृष्टोगच्छे न्नियमधृक्पुनः ॥ आगत्याभ्यर्च्यचपितॄन्यथोक्तफलभाग्भवेत् ॥ ५७ ॥ नपरीक्ष्योद्विजस्तीर्थेष्वन्नार्थीभोज्यएवच ॥ सक्तुभिःपिंडदानंचचरुणा पायसेनच ॥ ५८ ॥ कर्तव्यमृषिभिर्दृष्टंपिण्याकेनगुडेनच ॥ श्राद्धंतत्रप्रकर्तव्यमर्घ्यावाहनवर्जितम् ॥ ५९ ॥ अकालेप्यथवाकालेतीर्थेश्राद्धंचतर्पणम् ॥ अविलंबेनकर्तव्यंनैवविघ्नंसमाचरेत् ॥ ६० ॥ तीर्थंप्राप्यप्रसंगेनस्नानंतीर्थेसमाचरेत् ॥ स्नानजंफलमाप्नोतितीर्थयात्राश्रितंनच ॥ ६१ ॥

नच्छिन्नोननष्टःसंशयोयस्यसतथासंशयात्मेत्यर्थः ॥ हेतुनिष्ठोहैतुकः ॥ तदुक्तंगीतायाम् ॥ अज्ञश्चाश्रद्दधानश्चसंशयात्माविनश्यति ॥ नायंलोकोस्तिनपरोनसुखंसंशयात्मनइति ॥ वैष्णवेच ॥
पाखंडिनोविकर्मस्थान्बैडालव्रतमास्थितान् ॥ हैतुकान्बकवृत्तींश्चवाङ्मात्रेणापिनार्चयेदिति ॥ बैडालव्रतिकादीनांचेदंलक्षणम् ॥ यस्यधर्मध्वजोनित्यंसुराध्वजइवोच्छ्रितः ॥ प्रच्छन्नानिचपापानि
बैडालंनामतद्व्रतम् ॥ भ्रष्टःस्वधर्मात्पाखंडोविकर्मस्थोनिषिद्धकृत् ॥ संदेहकृद्धेतुभिर्यःसत्कर्मसुसहैतुकइत्यादि ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ मण्डरहितंभक्तंचरुः ॥ ५८ ॥ पिण्याक
मत्रतिलपिष्टम् ॥ ५९ ॥ ६० ॥ ६१ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ६२ ॥ प्रसंगेन कार्यांतराण्युद्दिश्येत्यर्थः ॥ ६३ ॥ कुशप्रतिकृतिमितिजीवतांदूरदेशस्थानां मृतानांतुतर्पणादिनाकृतार्थत्वात् ॥ ६४ ॥ ६५ ॥ श्राद्धदइति ॥ श्राद्धादिकृत्वापारणंकुर्यादित्यर्थः ॥ ६६ ॥ ६७ ॥ ६८ ॥ सर्वतश्चतुरशीतियोजनपरिमितः ॥ ६९ ॥ ७० ॥ प्राप्यापिमुच्येत ॥ अपिरेवार्थे ॥ मुच्येतैवेत्यर्थः ॥ विमुच्येतेतिवापाठः ॥ ७१ ॥ गणैरितिद्विवचनस्थानेबहुवचनंछांदसंपूजार्थंवा ॥ ७२ ॥ ७३ ॥ ७४ ॥ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांषष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥

नृणांपापकृतांतीर्थेपापस्यशमनंभवेत् ॥ यथोक्तफलदंतीर्थंभवेच्छुद्धात्मनांनृणाम् ॥ ६२ ॥ षोडशांशंसलभतेयःपरार्थंचगच्छति ॥ अर्धंतीर्थफलं तस्ययःप्रसंगेनगच्छति ॥ ६३ ॥ कुशप्रतिकृतिंकृत्वातीर्थवारिणिमज्जयेत् ॥ मज्जयेच्चयमुद्दिश्यसोष्टमांशंलभेतवै ॥ ६४ ॥ तीर्थोपवासःकर्तव्यः शिरसोमुंडनंतथा ॥ शिरोगतानिपापानियांतिमुंडनतोयतः ॥ ६५ ॥ यदह्नितीर्थप्राप्तिःस्यात्ततोह्नःपूर्ववासरे ॥ उपवासस्तुकर्तव्यःप्राप्तेह्निश्राद्धदो भवेत् ॥ ६६ ॥ तीर्थप्रसंगात्तीर्थांगमप्युक्तंत्वत्पुरोमया ॥ स्वर्गसाधनमेवैतन्मोक्षोपायश्चवैभवेत् ॥ ६७ ॥ काशीकांतीचमायाख्यात्वयोध्याद्वारवत्यपि ॥ मथुरावंतिकाचैताःसप्तपुर्योत्रमोक्षदाः ॥ ६८ ॥ श्रीशैलोमोक्षदःसर्वःकेदारोपिततोऽधिकः ॥ श्रीशैलाच्चापिकेदारात्प्रयागंमोक्षदंपरम् ॥ ६९ ॥ प्रयागादपितीर्थाग्र्यादविमुक्तंविशिष्यते ॥ यथाविमुक्तेनिर्वाणंनतथाक्काप्यसंशयम् ॥ ७० ॥ अन्यानिमुक्तिक्षेत्राणिकाशीप्राप्तिकराणिच ॥ काशीं प्राप्यापिमुच्येतनान्यथातीर्थकोटिभिः ॥ ७१ ॥ अत्रार्थेकथयिष्येहमितिहासंपुरातनम् ॥ यथाविष्णुगणैरुक्तंद्विजायशिवशर्मणे ॥ ७२ ॥ तीर्थाध्यायमिमंश्रुत्वानरोनियतमानसः ॥ श्रावयित्वाद्विजांश्चापिश्रद्धाभक्तिसमन्वितान् ॥ ७३ ॥ क्षत्रियान्धर्मनिरतान्वैश्यान्सन्मार्गवर्तिनः ॥ शूद्रान्द्विजेषुभक्तांश्चनिष्पापोजायतेद्विजः ॥ ७४ ॥ इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखण्डेतीर्थाध्यायोनामषष्ठोऽध्यायः ॥ ६ ॥ ॥ अगस्तिरुवाच ॥ ॥ मथुरायांद्विजःकश्चिद्भूद्वेदवसत्तमः ॥ तस्यपुत्रोमहातेजाःशिवशर्मेतिविश्रुतः ॥ १ ॥ अधीत्यवेदान्विधिवदर्थंविज्ञायतत्त्वतः ॥ पठित्वाधर्मशास्त्राणिपुराणान्यधिगम्यच ॥ २ ॥ अंगान्यभ्यस्यतर्कांश्चपरिलोड्यसमंततः ॥ मीमांसाद्वयमालोक्यधनुर्वेदंविगाह्यच ॥ ३ ॥

काश्ययोध्याद्वारकाचमायाकांत्यावंतिका ॥ मथुराचप्रशस्यंतेपुरःसप्तात्रसप्तमे ॥ १ ॥ अत्रार्थेकथयिष्येहमितिहासंपुरातनमित्युक्तमेवेतिहासंदर्शयति ॥ मथुरायामिति ॥ १ ॥ अधीत्य वेदानित्यादीनांद्वितीयांतपदघटितानांल्यबंतानांचिंतामवापमहतींशिवशर्माद्विजोत्तमइतिषष्ठेनान्वयः ॥ अर्थंवेदानामितिशेषः ॥ २ ॥ अंगानिशिक्षाकल्पव्याकरणनिरुक्तछंदोज्योतींषि ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तर्कान्न्यायादीन् ॥ धर्मब्रह्मलक्षणेमीमांसेद्वे ॥ ३ ॥ नाटचवेदेगांधर्ववेदे भरतादिमुनिप्रणीतनृत्यगीतादिविषये ॥ अर्थशास्त्राणिऔशनसबार्हस्पत्यादीनि ॥ अश्वगजचेष्टितंघोटकहस्तिचे ष्टाप्रतिपादकंशास्त्रमित्यर्थः ॥ ४ ॥ कलासुचतुःषष्टिकलानांमध्येउक्तावशिष्टासु ॥ मंत्रशास्त्रंगारुडादिशास्त्रमागमशास्त्रंवा ॥ लिपीर्लिवीः ॥ लिपिर्लिविरुभेस्त्रियावित्यमरः ॥ अक्ष राणीत्यर्थः ॥ ५ ॥ ६ ॥ लोकैःकथितांश्रुतिंश्रवणेंद्रियंश्रितांप्राप्तांजरांदृष्ट्वाज्ञात्वा ॥ ७ ॥ ८ ॥ ९ ॥ तमस्तोमहरोऽज्ञानपूगहरोंऽधकारसमूहहरोवा ॥ भवबंधहृत्संसारबंधनहंत्री ॥ भवबं

आयुर्वेदंविचार्यापिनाटचवेदेकृतश्रमः ॥ अर्थशास्त्राण्यनेकानिप्राप्याश्वगजचेष्टितम् ॥ ४ ॥ कलासुचकृताभ्यासोमन्त्रशास्त्रविचक्षणः ॥ भाषाश्चनाना देशानांलिपीर्ज्ञात्वाविदेशजाः ॥ ५ ॥ अर्थानुपार्ज्यधर्मेणभुक्त्वाभोगान्यदृच्छया ॥ उत्पाद्यपुत्रान्सुगुणांस्तेभ्योह्यर्थंविभज्यच ॥ ६ ॥ यौवनं गत्वरंज्ञात्वाजरांदृष्ट्वाश्रितांश्रुतिम् ॥ चिन्तामवापमहतींशिवशर्माद्विजोत्तमः ॥ ७ ॥ पठतोमेगतःकालस्तथोपार्जयतोधनम् ॥ नाराधितोम हेशानःकर्मनिर्मूलनक्षमः ॥ ८ ॥ नमयातोषितोविष्णुःसर्वपापहरोहरिः ॥ सर्वकामप्रदोनॄणांगणेशोनार्चितोमया ॥ ९ ॥ तमस्तोमहरःसूर्योनार्चि तोवैमयाक्वचित् ॥ महामायाजगद्धात्रीनध्याताभवबंधहृत् ॥ १० ॥ नश्रीणितामयादेवायज्ञैःसर्वैःसमृद्धिदाः ॥ तुलसीवनशुश्रूषानकृतापापशांतये ॥ ११ ॥ नमयातर्पिताविप्रामृष्टान्नैर्मधुरैरसैः ॥ इहापिचपरत्रापिविपदामनुतारकाः ॥ १२ ॥ बहुपुष्पफलोपेताःसुच्छायाःस्निग्धपल्लवाः ॥ पथिनारोपितावृक्षाइहामुत्रफलप्रदाः ॥ १३ ॥ दुकूलैःस्वानुकूलैश्चचोलैःप्रत्यंगभूषणैः ॥ नालंकृताःसुवासिन्यइहामुत्रसुवासदाः ॥ १४ ॥ द्विजायनोर्व रादत्तायमलोकनिवारिणी ॥ सुवर्णंनसुवर्णायदत्तंदुरितहृत्परम् ॥ १५ ॥ नालंकृतासवत्सागौःपात्रायप्रतिपादिता ॥ इहपापापहंत्र्याशुसतजन्मसुखावहा ॥ १६ ॥ ऋणापनुत्तयेमातुःकारितोनजलाशयः ॥ नातिथिस्तोषितःक्वापिस्वर्गमार्गप्रदर्शकः ॥ १७ ॥

धकृदितिपाठेअभक्तानांसंसारबंधनकर्त्री ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ चोलैःकूर्पासकैःकंचुकैरितियावत् ॥ ऊढाऽनूढावापितृगृहेस्थिताःसयौवनाःसुवासिन्यश्चिरंटचइतियावत् ॥ चिरंटीतु सुवासिनीत्यमरः ॥ सुवासिन्यांचिरंटीस्याद्द्वितीयवयसिस्त्रियामितिचरुद्रः ॥ १४ ॥ उर्वरासर्वसस्याढ्याभूमिरितिशेषः ॥ उर्वरासर्वसस्याढ्येत्यमरः ॥ १५ ॥ १६ ॥ जलाशयः जलान्या



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शेरतेऽस्मिन्निति जलाशयो वापीकूपतडागादिः ॥ १७ ॥ कुंडिका कुंडी कमंडलुरित्यर्थः ॥ अस्त्री कमंडलुः कुंडीत्यमरः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ श्रीसूक्तं हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजामित्यादि ॥ पावमानी स्वादिष्ठया मदिष्ठया पवस्व सोम धारयेत्याद्या ॥ ब्राह्मणो ब्राह्मणं अग्निर्वै देवानामवमो विष्णुः परम इत्यादि ॥ मण्डलानि यदेतन्मंडलं तपति तन्महइत्यादीनि ऋग्वेदे प्रसिद्धानि दश मंडलानि इति वा ॥ पुरुषसूक्तं सहस्रशीर्षेत्यादि ॥ शतरुद्रियं अथातः शतरुद्रियं जुहोति अत्रैष सर्वोऽग्निः संस्कृत इत्यादि ॥ पापारीति सर्वेषां विशेषणम् ॥ २६ ॥ आर्कं अर्कदिनम् ॥ भृगोर्दिने शुक्रवासरे ॥ २७ ॥ प्रतूलिका प्रकृष्टतूलिका बहुमूल्येत्यर्थः ॥ कीदृशी ॥ दीपी दीप्ता उज्ज्वलेत्यर्थः [1] ॥ दर्पणेति शयनीयविशेषणम् ॥ दीप

छत्रोपानत्कुंडिकाश्च नाध्वगाय समर्पिताः ॥ यास्यतः संयमिन्यां हि स्वर्गमार्गसुखप्रदाः ॥ १८ ॥ न च कन्याविवाहार्थं वसु क्वापि मयार्पितम् ॥ इह सौख्यसमृद्ध्यर्थं दिव्यकन्यार्पकं दिवि ॥ १९ ॥ न वाजपेयावभृथे स्नातो लोभवशादहम् ॥ इह जन्मनि चान्यस्मिन्बहुमृष्टान्नपानदे ॥ २० ॥ न मया स्थापितं लिंगं कृत्वा देवालयं शुभम् ॥ यस्मिन्संस्थापिते लिंगे विश्वं संस्थापितं भवेत् ॥ २१ ॥ विष्णोरायतनं नैव कृतं सर्वसमृद्धिदम् ॥ न च सूर्यगणेशानां प्रतिमाः कारिता मया ॥ २२ ॥ न गौरी न महालक्ष्मीश्चित्रेऽपि परिलेखिते ॥ प्रतिमाकरणे चैषां न कुरूपो न दुर्भगः ॥ २३ ॥ सुसूक्ष्माणि विचित्राणि नोज्ज्वलान्यंबराण्यपि ॥ समर्पितानि विप्रेभ्यो दिव्यांबरसमृद्धये ॥ २४ ॥ न तिलाश्च घृतेनाक्ताः सुसमिद्धे हुताशने ॥ हुता वै मन्त्रपूताश्च सर्वपापापनुत्तये ॥ २५ ॥ श्रीसूक्तं पावमानी च ब्राह्मणो मंडलानि च ॥ जप्तं पुरुषसूक्तं न पापारि शतरुद्रियम् ॥ २६ ॥ अश्वत्थसेवा न कृता त्यक्त्वा चार्कं त्रयोदशीम् ॥ सद्यः पापहरा साहि न रात्रौ न भृगोर्दिने ॥ २७ ॥ शयनीयं न चोत्सृष्टं मृदुला च प्रतूलिका ॥ दीपी दर्पणसंयुक्तं सर्वभोगसमृद्धिदम् ॥ २८ ॥ अजाश्वमहिषीमेषीदासीकृष्णाजिनं तिलाः ॥ सकरंभास्तोयकुंभा नासनं मृदुपादुके ॥ २९ ॥ पादाभ्यंगं दीपदानं प्रपादानं विशेषतः ॥ व्यजनं वस्त्रतांबूलं तथान्यन्मुखवासकृत् ॥ ३० ॥ नित्यश्राद्धं भूतबलिं तथाऽतिथिसमर्चनम् ॥ विशंत्यन्यानि दत्त्वा च प्रशस्यानि यमालये ॥ ३१ ॥

दर्पणसंयुक्तमिति क्वचित्पाठः ॥ २८ ॥ सकरंभा दध्युपसिक्तसक्तुसहिताः ॥ करंभो दधिसक्तव इत्यमरः ॥ मृदुपादुके इति ॥ छत्रोपानदित्यत्र नाध्वगाय समर्पिता इत्युक्तं इह तु साधारणेभ्य इत्यपौनरुक्त्यम् ॥ २९ ॥ वस्त्रतांबूलमित्येकवद्भावः ॥ तत्र वस्त्रं साधारणमन्यथा न सूक्ष्माणीत्यनेन पुनरुक्तेः ॥ तांबूलं गुवाकादित्रितयम् ॥ पादाभ्यंगं ब्राह्मणानामिति शेषः ॥ अन्यल्लवंगादि ॥ इत्यंतानां न चोत्सृष्टमिति पूर्वक्रिययैव संबंधः ॥ ३० ॥ नित्यश्राद्धमिति ॥ नित्यश्राद्धादीनि दत्त्वा कृत्वान्यानि च प्रशस्यानि द्रव्याणि दत्त्वा यमादीन्न पश्यंति यमालयेऽपि न विशंतीत्यर्थः ॥ कुतो यतस्ते पुण्यभाज इति ॥ यद्वा नित्यश्राद्धादीन्यन्यानि च द्रव्याणि दत्त्वा यमालये प्रशस्यानि सद्मानि विशंति ॥ यमं क्रोधाविष्टमित्यादि पूर्ववत् ॥ यामीर्यमसंबंधिनीः ॥ फलितमाह ॥ नैत

---

[1] नपश्यंतीति ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दिति ॥ ३१ ॥ ३२ ॥ कृच्छ्रेति ॥ कच्छ्रंचचांद्रायणंचतेआदीयेषामतिकृच्छ्रपराकादीनांतानितथा ॥ कृच्छ्रातिकृच्छ्रस्वरूपंचोक्तंपराशरसंहितायाम् ॥ नवाहंयतिकृच्छ्रःस्यात्पाणिपूरान्नभोजनम् ॥ त्रिरात्रमुपवासःस्यादतिकृच्छ्रंतदुच्यतइति ॥ ३३ ॥ गवाह्निकं गवांअह्निअह्निदेयमाह्निकंगवाह्निकंप्रतिदिवसदेयंगोग्रासमित्यर्थः ॥ गवानीकमितिपाठेगोसमूहमित्यर्थः ॥ ३४ ॥ प्रार्थितैर्याचितैः ॥ प्राकृतैरितिपाठेसाधारणैरपीत्यर्थः ॥ देहिदेहीतिजल्पाकःदेहिदेहिप्रयच्छप्रयच्छेतिप्रार्थनाशीलः ॥ ३५ ॥ ३६ ॥ शिवशर्माइतिएवंप्रकारेणममक्षेमतरंकल्याणतरंभवेत्स्यादितिनिश्चिकायनिश्चितवानित्यर्थः ॥ क्षेमकरमितिपाठेक्षेमकरंकर्मेत्यर्थः ॥३७॥ तमेवनिश्चयंदर्शयति ॥ यावदिति ॥ ३८ ॥ एवमेवंविचारयन्नित्यर्थः ॥ पंचषाणिपंचषड्वासराणीत्यर्थः ॥ लग्नवलेलग्नेइत्यर्थः ॥

नयमंयमदूतांश्चनयामीरपियातनाः ॥ पश्यन्तितेपुण्यभाजोनैतच्चापिकृतंमया ॥ ३२ ॥ कृच्छ्रचांद्रायणादीनितथानक्तव्रतानिच ॥ शरीरशुद्धिकारीणिनकृतानिकचिन्मया ॥ ३३ ॥ गवाह्निकं च नोदत्तंगोकंडूतिर्नवकृता ॥ नोद्धृतापंकमग्नागौर्गोलोकसुखदायिनी ॥ ३४ ॥ नार्थिनःप्रार्थितैरर्थैःकृतार्थाहिमयाकृताः ॥ देहिदेहीतिजल्पाकोभविष्याम्यन्यजन्मनि ॥ ३५ ॥ नवेदानचशास्त्राणिनार्थोदाराननोसुतः ॥ नक्षेत्रंनचहर्म्यादिमायांतमनुयास्यति ॥ ३६ ॥ शिवशर्मेतिसंचिंत्यबुद्धिंसंधायसर्वतः ॥ निश्चिकायमनस्येवंभवेत्क्षेमतरंमम ॥ ३७ ॥ यावत्स्वस्थोस्तिमेदेहोयावन्नेंद्रियविक्लवः ॥ तावत्स्वश्रेयसांहेतुंतीर्थयात्रांकरोम्यहम् ॥ ३८ ॥ दिनानिपंचषाण्येवमतिवाह्यगृहेद्विजः ॥ शुभेतिथौशुभेवारेशुभलग्नबलेद्विजः ॥३९॥ उपोष्यरजनीमेकांप्रातःश्राद्धंविधायच ॥ गणेशान्ब्राह्मणान्नत्वाभुक्त्वाप्रस्थितवान्सुधीः ॥ ४० ॥ इतिनिश्चित्यानिर्वाणपदनिःश्रेणिकांपराम् ॥ सर्वेषामेवजंतूनांतत्रसंस्थितिकारिणाम् ॥ ४१ ॥ अथपंथानमाक्रम्यकियंतमपिसद्विजः ॥ मुहूर्तंपथिविश्रम्याचिंतयत्प्राक्क्रयाम्यहम् ॥४२॥ भुवितीर्थान्यनेकानिलोलमायुश्चलंमनः ॥ ततःसप्तपुरीर्यायांसर्वतीर्थानितत्रयत् ॥ ४३ ॥ अयोध्यांचपुरींगत्वासरयूमवगाह्यच ॥ तत्तत्तीर्थेषुसंतर्प्यपितॄन्पिंडप्रदानतः ॥ ४४ ॥

स्वार्थेवलच्प्रत्ययः ॥ ३९ ॥ ४० ॥ इतिनिश्चित्येति ॥ इतितीर्थपर्यटनमेवसर्वजंतूनांनिर्वाणपदनिःश्रेणिकांकैवल्यपदसोपानपरंपरामुत्कृष्टांनिश्चित्य अवधार्यप्रस्थितवानितिपूर्वक्रिययैवान्वयः ॥ कथंभूतानाम् ॥ तत्रसंस्थितिकारिणांतत्रनिर्वाणपदेतीर्थपर्यटनेवासम्यक्स्थितिंकर्तुंशीलंयेषांतेतथातेषाम् ॥ ४१ ॥ अथेति ॥ अचिंतयदालोचितवान् ॥ चिंतयदितिक्वचित्पाठस्तत्राडभाव आर्षः ॥४२॥ भुवीति ॥ ततस्तस्मात्सप्तपुरीरयोध्याद्यामोक्षदातृत्वेनप्रसिद्धाः ॥ तदुक्तम् ॥ अयोध्यामथुरामायाकाशीकांतीअवंतिका ॥ पुरीद्वारावतीचैवसप्तैतामोक्षदायकाइति ॥ यायांगच्छेयम् ॥ आदावितिशेषः ॥ यद्यतस्तत्रतासुसर्वतीर्थानीति ॥ ४३ ॥ इतिनिश्चित्यसविप्रःपुराऽयोध्यांगत्वाप्रयागमगमदितिद्वितीयश्लोकनान्वयः ॥ मथुरातोमध्येप्रयागमुल्लंघ्यायोध्यायांगमनंमार्गशीर्षेनिर्ग



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तस्यप्रयागेमाघस्नानानुरोधार्थमितिज्ञातव्यम् ॥ तथाचाग्रेवक्ष्यति ॥ तत्रमाघमुषित्वेति ॥ ४४ ॥ ४५ ॥ प्रयागंविशिनष्टि ॥ सिताऽसितेइत्यादिकाशीत्यतःप्राक्तनेनग्रंथेन ॥ सितासितेगंगाय
मुनेस्तांभवतः ॥ सुरदुर्लभेदेवानामपिदुष्प्राप्ये ॥ तदुक्तम् ॥ प्रयागंतीर्थराजानंगच्छध्वममरोत्तमाः ॥ भवांभोजभवांभोजनयनानांसुदुर्लभमिति ॥४६॥४७॥ दमयंतींशमयंतीम्॥कलिकालंकलिं
कालंच ॥ कलिंदतनयांकलिंदःपर्वतस्तस्यतनयांततोनिःसृतामित्यर्थः ॥ ४८ ॥ प्रकृष्टमिति ॥ यज्वनांयज्ञकर्तॄणाम् ॥ यज्विनामितिक्वचित्पाठः सचिंत्यः ॥ प्रयागार्द्रवर्ष्मणांप्रयागेऽ
र्थाद्वेणीजलेनार्द्रवर्ष्मशरीरंयेषांतेतथातेषाम् ॥ ४९ ॥ ५० ॥ यमारुह्येतिकल्पभेदाभिप्रायम् ॥ यद्वा यमारुह्येतिभगवदुदरस्थितस्यवटस्थेनभगवतासहवटस्याभेदविवक्षयातथेत्युक्तम् ॥ ५१ ॥

पंचरात्रमुषित्वातुब्राह्मणान्परिभोज्यच ॥ प्रयागमगमद्विप्रस्तीर्थराजंसुहृष्टवत् ॥ ४५ ॥ सिताऽसितेसरिच्छ्रेष्ठेयत्रास्तांसुरदुर्लभे ॥ यत्राप्लुतोनरः पापःपरंब्रह्माधिगच्छति ॥ ४६ ॥ क्षेत्रंप्रजापतेःपुण्यंसर्वेषामेवदुर्लभम् ॥ लभ्यतेपुण्यसंभारैर्नान्यथाऽर्थस्यराशिभिः ॥ ४७ ॥ दमयंतींकलिंकालं कलिंदतनयांशुभाम् ॥ आगत्यमिलितायत्रपुण्यास्वर्गतरंगिणी ॥ ४८ ॥ प्रकृष्टंसर्वयागेभ्यःप्रयागमितिगीयते ॥ यज्वनांपुनरावृत्तिर्नप्रयागार्द्र वर्ष्मणाम्॥४९॥यत्रस्थितःस्वयंसाक्षाच्छूलटंकोमहेश्वरः ॥ तत्राप्लुतानांजंतूनांमोक्षवर्त्मोपदेशकः॥५०॥ तत्राऽक्षय्यवटोऽप्यस्तिसप्तपातालमूलवान्॥ प्रलयेपियमारुह्यमृकंडतनयोवसत् ॥ ५१ ॥ हिरण्यगर्भोविज्ञेयःससाक्षाद्वटरूपधृक् ॥ तत्समीपेद्विजान्भक्त्यासंभोज्याक्षयपुण्यभाक् ॥ ५२ ॥ यत्रलक्ष्मीपतिःसाक्षाद्वैकुंठादेत्यमानवान् ॥ श्रीमाधवस्वरूपेणनयेद्विष्णोःपरंपदम् ॥ ५३ ॥ श्रुतिभिःपरिपठ्येतेसिताऽसितसरिद्वरे ॥ तत्राप्लुतां गाह्यमृतंभवंतीतिविनिश्चितम् ॥ ५४ ॥ शिवलोकाद्ब्रह्मलोकादुमालोकवरात्पुनः॥कुमारलोकाद्वैकुंठात्सत्यलोकात्समंततः ॥ ५५ ॥ तपोजनमहर्भ्यश्चसर्वेस्वर्लोकवासिनः ॥ भुवोलोकाच्चभूर्लोकान्नागलोकात्तथाऽखिलात् ॥ ५६ ॥ अचलाहिमवन्मुख्याःकल्पवृक्षादयोनगाः ॥ स्नातुंमाघेसमायांतिप्रयागमरुणोदये ॥ ५७ ॥ दिगंगनाःप्रार्थयंतियत्प्रयागानिलानपि ॥ तेपिनःपावयिष्यंतिकिंकुर्मःपंगवोवयम् ॥ ५८ ॥ अश्वमेधादियागाश्चप्रयागस्यरजःपुनः ॥ तुलितंब्रह्मणापूर्वंनतेतद्रजसासमाः ॥ ५९ ॥ मज्जागतानिपापानिबहुजन्मार्जितान्यपि ॥ प्रयागनामश्रवणात्क्षीयंतेऽतीवविह्वलम् ॥ ६० ॥ धर्मतीर्थमिदंसम्यगर्थतीर्थमिदंपरम् ॥ कामिकंतीर्थमेतच्चमोक्षतीर्थमिदंध्रुवम् ॥ ६१ ॥ ब्रह्महत्यादिपापानितावद्गर्जंतिदेहिषु ॥ यावन्मज्जंतिनोमाघेप्रयागेपापहारिणि ॥ ६२ ॥

॥ ५२ ॥ परंपदंकैवल्यम् ॥ ५३ ॥ तत्रप्रमाणमाह ॥ श्रुतिभिरिति ॥ तथाचश्रुतयः ॥ सितासितेसरितेयत्रसंगथेतत्राप्लुतासोदिवमुत्पतंतीत्याद्याः ॥ ५४ ॥ वराच्छ्रेष्ठात् ॥ ५५ ॥ ५६ ॥ ५७॥
यत्प्रयागानिलानपियश्चासौप्रयागश्चेतियत्प्रयागस्तत्स्पर्शिनोयस्यप्रयागस्यसंबंधिनोवायूनपीत्यर्थः ॥ किमितिप्रार्थयंतितत्राह ॥ तेपीति ॥ स्वयमेवतत्रकिमितिनयांतितत्राह ॥ किंकुर्मइति ॥
॥ ५८ ॥ ५९ ॥ मज्जागतानिअस्थिस्नायवोरंतर्वर्तिस्वच्छंजलंमज्जा ॥ अथवा अस्थ्यंतर्गतोधातुर्मज्जातद्गतानीत्यर्थः ॥ ६० ॥ कामिकंकामायहितम् ॥ ६१ ॥ गर्जंतिस्वफलदानायपरस्परं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कलहायंते ॥ धार्यतीतिक्वचित्पाठःसचिंत्यः ॥ मज्जंतिदेहिनइतिशेषः ॥ ६२ ॥ तद्विष्णोरिति ॥ विष्णोस्तत्प्रसिद्धंपरमंपदंसच्चिदानंदलक्षणंसदासूरयोविद्वांसःपश्यंतिऐक्येनानुभवंति एतद्यत्पुनः पुनर्वेदेपठ्यतेकथ्यते ॥ प्रथतइतिक्वचित्पाठः ॥ तत्प्रयागंतत्प्राप्त्युपायत्वादिति ॥ ६३ ॥ सरस्वतीरजोरूपारजोगुणोपाधिहिरण्यगर्भरूपा ॥ तमोरूपातमोगुणोपाधिरुद्ररूपा ॥ सत्त्वरूपासत्त्वगुणोपाधिविष्णुरूपेत्यर्थः॥६४॥इयंवेणीगंगायमुनयोःसंभेदः॥ निःश्रेणीसोपानपरंपरा॥श्रद्धाऽश्रद्धाप्लुतस्यास्तिक्यबुद्ध्यानास्तिक्यबुद्ध्यावास्नातस्यचकाराद्बलात्स्नापितस्यापीत्यर्थः ॥ ६५ ॥ इदानीं प्रयागमारभ्यकाश्याःसीमानंवदन्स्त्रीरूपाकारेणकाशींनिरूपयति ॥ काशीति ॥ काशीतिकाचिदबलाऽस्तीतिशेषः॥काचिदनिर्वचनीयगुणेगणेत्यर्थः॥इयंयाऽत्रप्रयागेगदिताकथितावेणीत्वेनेतिशेषः॥ सातदीयाकाशीसंबंधिनीवेणीप्रवेणीप्रोषितभर्तृकादिभिर्यानिबध्यतइत्यर्थः ॥ वेणिःप्रवेणिःशीर्षण्यशिरस्यौविशदेकचेइत्यमरः ॥ कथंभूता ॥ भुवनेषुलोकेषुरूढाप्रख्याता ॥ लोलार्ककेशवावेवं विलोलेचंचलेविलोचनेविशिष्टेलोचनेयस्याःसातथा ॥ तस्याहस्तयुगलंचवरणानदीअसिश्च ॥ अक्षयशर्मभूमिरक्षयंयत्सुखंब्रह्मानंदैकलक्षणंतस्यभूमिरधिष्ठानम् ॥ तथाचवामनपुराणेमहेश्वरं

तद्विष्णोःपरमंपदंसदापश्यंतिसूरयः ॥ एतद्यत्पठ्यतेवेदेतत्प्रयागंपुनःपुनः ॥ ६३ ॥ सरस्वतीरजोरूपातमोरूपाकलिंदजा ॥ सत्त्वरूपाचगंगात्र नयंतिब्रह्मनिर्गुणम् ॥ ६४ ॥ इयंवेणीहिनिःश्रेणीब्रह्मणोवर्त्मयास्यतः ॥ जंतोर्विशुद्धदेहस्यश्रद्धाऽश्रद्धाप्लुतस्यच ॥ ६५ ॥ काशीतिकाचिदबलाभुवनेषुरूढालोलार्ककेशवविलोलविलोचनाच ॥ तद्दोर्युगंचवरणासिरियंतदीयावेणीतियाऽत्रगदिताऽक्षयशर्मभूमिः ॥ ६६ ॥ ॥ अगस्तिरुवाच ॥ ॥ सुधर्मिणिगुणांस्तस्यकोत्रवर्णयितुंक्षमः ॥ तीर्थराजप्रयागस्यतीर्थैःसंसेवितस्यच ॥ ६७ ॥ पापिनांयानिपापानिप्रसह्यक्षालितान्यहो ॥ तच्छुद्ध्यैसेव्यतेतीर्थैःप्रयागमधिकंततः ॥ ६८ ॥ प्रयागस्यगुणान्ज्ञात्वाशिवशर्माद्विजःसुधीः ॥ तत्रमाघमुषित्वाऽथप्रापवाराणसींपुरीम् ॥ ६९ ॥ प्रवेशएवसंवीक्ष्यसदेहलिविनायकम् ॥ अन्वलिंपत्ततोभक्त्यासाज्यसिंदूरकर्दमैः ॥७०॥ निवेद्यमोदकान्पंचवंचयंतंनिजंजनम्॥ महोपसर्गवर्गेभ्यस्ततोऽतःक्षेत्रमाविशत् ॥७१॥ आगत्यदृष्ट्वामणिकर्णिकायामुदग्वहांस्वर्गतरंगिणींसः ॥ संक्षीणपुण्येतरपुण्यकर्मणांनृणांगणैःस्थाणुगणैरिवावृताम् ॥७२॥

प्रतिहरेर्वचनम् ॥ महेश्वरश्शृणुष्वेमांममवाचंकलस्वनाम् ॥ ब्रह्महत्याक्षयकरींशुभदांपुण्यवर्द्धनीम् ॥ योसौप्राङ्मंडलेपुण्येमदंशप्रभवोऽव्ययः ॥ प्रयागेवसतेनित्यंयोगशायीतिविश्रुतः ॥ चरणाद्दक्षिणात्तस्यविनियातासरिद्वरा ॥ विश्रुतावरणेत्येवसर्वपापहराशुभा ॥ सव्यादन्याद्द्वितीयाचअसिरित्येवविश्रुता ॥ तेउभेसरितांश्रेष्ठेलोकपूज्येबभूवतुः ॥ तयोर्मध्येतुयोदेशस्तत्क्षेत्रंयोगशायिनः ॥ त्रैलोक्यप्रवरंतीर्थंसर्वपापप्रमोचनम् ॥ नतादृगस्तिगगनेभूम्यांनचरसातले ॥ तत्रास्तिनगरीपुण्याख्यातावाराणसीशुभा ॥ यस्यांहिभोगिनोनाशेप्रयांतिभवतोलयमिति ॥ ६६ ॥ प्रयागमाहात्म्यमुपसंहरति ॥ सुधर्मिणीतिद्वयेन ॥ शोभनाधर्माःपातिव्रत्यादिलक्षणायस्याः सा ॥ सधर्मिणीतिक्वचित्पाठः ॥ ६७ ॥ तच्छुद्ध्यैतेषांपापानांशुद्ध्यैनाशाय ॥ अहोहेकांते ॥ ६८ ॥ ६९ ॥ प्रवेशेति ॥ क्षेत्रप्रवेशसमयेएवसशिवशर्मादेहलीविनायकंवीक्ष्यप्रथमतःपंचमोदकान्निवेद्यततःपश्चात्साज्यसिंदूरकर्दमैर्घृताक्तसिंदूरपंकैरन्वलिंपल्लिप्तवानितिद्वयोरन्वयः ॥ कथंभूतंविनायकम् ॥ महोपसर्गवर्गेभ्योमहाविघ्नसमूहेभ्योनिजंजनंभक्तंवंचयंतंगोपायंतमित्यर्थः ॥ ७० ॥ निवेद्येतिपूर्वस्मिन्श्लोकेऽन्वयः ॥ ७१ ॥ आगत्येति ॥ सशिवशर्मामणिकर्णिकायामागत्यउदग्वहामुत्तरवाहिनींस्वर्गतरं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

गिर्णीस्वर्नदींदृष्ट्वाविस्मितोबभूवेतिशेषइतितृतीयश्लोकेनान्वयः ॥ किमाकारोविस्मयस्तमाह ॥ मयाइदमविमुक्तमालोकिदृष्टंनवेति ॥ कथंभूतांस्वर्नदीम् ॥ संक्षीणानिपुण्येतराणिपापानिपुंण्यानिच
कर्माणियेषांतेषांनृणांगणैरावृताम् ॥ कैरिव ॥ स्थाणुगणैरिव ॥ स्थाणोःश्रीरुद्रस्ययेगणाःरुद्ररूपावागणास्तैरिवेति ॥ ७२ ॥ किंकृत्वा सचैलमाप्लुत्यसवस्त्रंनिमज्ज्य ॥ कुत्र ॥ जले ॥
कथंभूते ॥ अमले नविद्यतेऽविद्यातत्कार्यलक्षणोमलोयस्मात्तस्मिन्माणिकर्णिकइत्यर्थः :॥ तदुक्तम् ॥ यस्यामधोमज्जनमूर्ध्वगत्यैयत्पंकलेपोविमलत्वसिद्ध्यै ॥ यद्वारिसंसारतरोःप्रशांत्यैनमोऽ
स्तुतस्यैमणिकर्णिकायैइति ॥ हेअमलेशुद्धांतःकरणे ॥ अमलइतिपाठेनिष्पापइत्यर्थः ॥ अविलंबितंयथास्यात् आलंबिताशुद्धाबुद्धिर्येनसतथा ॥ पुनः किंकृत्वा ॥ संतर्प्यप्रीणयित्वा ॥ कान्देवान् ॥
देवाश्चब्रह्मादयः ऋषयश्चमधुच्छंदआदयः मनुष्याश्चसनकादयः दिव्यपितरश्चकव्यवाडादयस्तान्स्वान्पितॄंश्चस्वदेहजनकादीन् ॥ पूर्वोक्तानुष्ठानेतस्याक्रियाकांडवेत्तृत्वंहेतुमाह ॥ सहीति
॥ ७३ ॥ हियस्मात् ॥ द्राग्झटिति ॥ प्रागितिक्वचित्पाठः ॥ पुनःकिंकृत्वा ॥ पंचतीर्थिकांवरणासिसंभेदपंचनदमणिकर्णिकादशाश्वमेधात्मिकांविधाय ॥ एतेषुपंचसुस्नानादिकंकृत्वेत्यर्थः ॥
आदित्यादिरूपांवा ॥ यथास्वंस्वंधनमनतिक्रम्यवित्तशाठ्यमकृत्वेतियावत् ॥ विस्मयप्रकारमाह ॥ इदंमयालोकिनवेति ॥ इदमविमुक्तपुरंनवा ॥ ७४ ॥ पश्चादवलोकितामितिनिर्धार्यकाशींवर्णयति
नस्वःपुरीत्यष्टभिः ॥ सास्वःपुरीअमरावतीतुनिश्चितंअनयाकाश्यापुरापुर्यासमंसार्धंसमंजसापिसम्यक्कृतत्त्वदृशाविचारेणापि अपिशब्दाद्व्यवहारदृशाविचारेणापिप्रतिसाम्यंसमस्यभावःसाम्यं
साम्यंसाम्यंप्रतिप्रतिसाम्यं नआवहेन्नाप्राप्नुयादित्यन्वयः ॥ उभयदृशाविचारेसाम्याभावप्रदर्शनार्थंवीप्सांतरगर्भितप्रतिसाम्यशब्दप्रयोगः ॥ उभयदृशाविचारेणसाम्याभावायतंत्रेणउभय

सचैलमाप्लुत्यजलेऽमलेऽमलेऽविलंबमालंबितशुद्धबुद्धिः ॥ संतर्प्यदेवर्षिमनुष्यदिव्यपितॄन्पितॄन्स्वान्सहिकर्मकांडवित् ॥ ७३ ॥ विधायचद्राक्स
हिपंचतीर्थिकांविश्वेशमाराध्यततोयथास्वम् ॥ पुनःपुनर्वीक्ष्यपुरींपुरारेरिदंमयालोकिनवेतिविस्मितः ॥ ७४ ॥ नस्वःपुरीसात्वन[illegible]पुरासमं
समंजसापिप्रतिसाम्यमावहेत् ॥ प्रबंधभेदाद्व्यतिरिक्तपुस्तकप्रतिर्यथासल्लिपिभेदभंगतः ॥ ७५ ॥

निष्ठहेतुमाह ॥ प्रबंधभेदादिति ॥ प्रबंधनंप्रबंधोरचनापरिपाटीतस्यभेदात् ॥ अमरावतीहिब्रह्मणाप्रतिदिनंरच्यतेइयंतुसकृद्देवेति ॥ तत्रापिसाब्रह्मणारच्यते इयंतुस्वयमीश्वरेण ॥ साचक्षुद्ररत्न
निचयखचिताल्पोत्सेधाच इयंचानर्घ्यरत्नप्रचयनिर्मितागगनोत्सेधाच ॥ अथवा प्रबंधभेदात्प्रबंधयोर्भेदात् ॥ स्वःपुर्यांस्थितानांहिप्रकृष्टोबंधःप्रबंधःपुनःपुनर्जन्ममरणादिरूपः संसारःस्यात्काश्यां
स्थितानांतुप्रगतोबंधःप्रबंधोभवेदित्येवंप्रबंधयोर्भेदादित्यर्थः ॥ अथवा प्रकृष्टोबंधःप्रबंधस्तस्यभेदाद्बाहुल्यादमरावतीस्थितानांप्रकृष्टोबंधःप्रबंधस्तस्यभेदाद्विदारणात्काशीस्थानामित्यर्थः ॥ अम
रावतीकाश्याःसाम्यंनैवआवहेदित्यत्रदृष्टांतमाह ॥ व्यतिरिक्तपुस्तकेति ॥ अयमर्थः ॥ सर्वस्मादविद्यातत्कार्यादतिरिच्यतइत्यतिरिक्तंब्रह्मविगतमतिरिक्तंप्रतिपाद्यत्वेनयत्रतद्व्यतिरिक्तंअनात्मशास्त्रंतच्च
तत्पुस्तकंचेतिव्यतिरिक्तपुस्तकंतेनसहयाप्रातिःप्रतिपुस्तिकावात्स्यायनादिप्रणीतिर्यामुपजीव्यकामादिशास्त्रंप्रवृत्तंतन्नतत्पुस्तकंकिंचिदनात्मशास्त्रजातमित्यर्थः ॥ सायथा सद्ब्रह्म ओंतत्सदितिनिर्दे
शोब्रह्मणस्त्रिविधःस्मृतइतिस्मृतेस्तस्यालिपिस्तत्प्रतिपादिकालिपिर्यत्रतत्सल्लिपिअध्यात्मशास्त्रंतच्चताद्विद्यतइतिभेदोनानाप्रकारश्चतस्यभंगतोभंगेनखंडेनभागेनेतियावत् ॥ साम्यंनावहेत्तद्वदिति॥सल्लिपि
भेदभंगितइतिपाठेसतीसद्विषयाचासौलिपिश्चेतिसल्लिपिस्तस्याभेदोनानात्वंतस्यभंगोभागएकदेशइतियावत् ॥ सवर्ततेयस्यतेनशास्त्रेणेतिव्याख्येयम् ॥ उभयपक्षेपितृतीयांतात्तसिल् ॥ अथवासल्लिपि
भेदभंगितइतितंत्रेणोच्चरितत्वात्काशीनिष्ठद्वितीयहेतुपरतयापिव्याकर्तव्यम् ॥ सतीलिपिःसल्लिपिर्विधात्रालललाटेलिखितेतियावत् ॥ तदुक्तम् ॥ ललाटेलिखितंयत्रषष्ठीजागरवासरे ॥ नोहरिःशंकरो

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ब्रह्माद्यन्यथाकर्तुमर्हतीति ॥ चित्रगुप्तलिखितावातस्याभेदभंगतोविशेषभंजनात्प्रारब्धातिरिक्तायालिपेर्नाशकत्वादित्यर्थः ॥ सन्न्योलिपिभेदस्तस्यभंगतइतिवा ॥ पाठांतरेप्ययमेवार्थः ॥ स्वस्त्वनये तिक्वचित्पाठः ॥ स्वर्गतयेतिक्वचित्सचित्यः ॥ प्राकृतंव्याख्यानंस्पष्टम् ॥ ७५ ॥ पयोपीति ॥ यत्रत्यंयत्रकाश्यांभवंयत्रत्यंकाशीस्थमित्यर्थः ॥ पयोप्यचित्यवैभवम् ॥ आपिःसमुच्चये ॥ गर्हा समुच्चयप्रश्नशंकासंभावनास्वपीत्यमरः ॥ नकेवलंस्थलंअचिंत्यवैभवंजलमपीत्यर्थः ॥ नचिंत्यंतर्कयितुंयोग्यंवैभवंकैवल्यदानसामर्थ्यंयस्यतत्तथा ॥ तथाचोक्तम् ॥ गंगायांचजलेमोक्षोवाराणस्या जलेस्थलइति ॥ अतोदिविस्थितायासुधाऽमृतंसासाधुयथास्यान्मुधाव्यर्थंआप्यतेप्राप्यतेप्राथ्र्यतइत्यर्थः ॥ दिविस्थितैरितिपाठेआप्यतेपीयतेइत्यर्थः ॥ उभयत्रहेतुमाह ॥ इदंपयोयदिक्वचित्कदाचित्पीतंस्या तदाप्रसूतेर्जनन्याःपयोधरेयत्पयःस्तन्यंतथानपीयते ॥ तुशब्दोयथाशब्दार्थे ॥ पीतामृतैःपानानंतरंजन्मलब्ध्वायथापीयतेतथानेत्यर्थः ॥ प्रसूतोच्चपयोधरइतिक्वचित्पाठः ॥ तदाप्रकर्षेणसूत इतिप्रसूतामातेतिव्याख्येयम् ॥ उच्चपयोधरइत्यनेनोच्चस्तनस्यकठिनत्वात्पानेदुःखाधिक्यमितिसूचितम् ॥ ७६ ॥ अनामयाइति ॥ यत्रकाश्यांजनालोकाःनयेशितुर्नीतिशास्त्रोपदेष्टुर्नीयते प्राप्यतेसर्वोर्थोऽनेनेतिनयोवेदस्तस्येशितुस्तत्प्रवर्तकस्यशास्त्रयोनेरितिवाचिंतनयाशुभानुध्यानेनामयाखिविधतापरहिताः सत्कर्मकृतः सत्कर्मकुर्वाणाएवपिनाकिनाविनाविश्वेश्वरंविनाकर्ममनागल्पमपिन कुर्वतेकिंतुविश्वनाथार्पणेनैवकुर्वतीत्यर्थः ॥ अतएवसर्वतःसर्वप्रकारेणशर्वगणान्शर्वस्येश्वरस्यगणान्नंदिभृंगिप्रमुखाननु कुर्वतेऽनुकुर्वतीतितैस्तुल्याभवंतीत्यर्थः ॥ सर्वगणांश्चेतिपाठेपिसएवार्थः ॥ यद्वा

पयोपियत्रत्यमचिंत्यवैभवंदिविस्थितासाधुसुधाप्यतोमुधा ॥ तथाप्रसूतेस्तुपयोधरेपयोनपीयतेपीतमिदंयदिक्वचित् ॥ ७६ ॥ अनामयाश्चिंतनयान येशितुर्जनामनाग्यत्रविनापिनाकिना ॥ नकर्मसत्कर्मकृतोपिकुर्वतेऽनुकुर्वतेशर्वगणांश्चसर्वतः ॥ ७७ ॥ नवर्ण्यतेकैःकिलकाशिकेयंजंतोःस्थितस्यात्रयतोंतकाले ॥ पचेलिमैःप्राक्कृतपुण्यभारैरोंकारमोंकारयतींदुमौलिः ॥ ७८ ॥ संसारिचिंतामणिरत्रयस्मात्तंतारकंसज्जनकर्णिकायाम् ॥ शिवोभिधत्ते सहसांऽतकालेतद्गीयतेसौमणिकर्णिकेति ॥ ७९ ॥ मुक्तिलक्ष्मीमहापीठमणिस्तच्चरणाब्जयोः ॥ कर्णिकेयंततःप्राहुर्यांजनामणिकर्णिकाम् ॥ ८० ॥

सर्वेचतेगणाश्चार्थादीश्वरस्येति ॥ न्यक्कुर्वतइतिक्वचित्पाठः ॥ तत्रतेषांगणानांसत्कर्माभावात्प्रयुतनिषिद्धाचरणाच्चन्यक्कुर्वतेतिरस्कुर्वतइवेतिव्याख्येयम् ॥ ७७ ॥ नवर्ण्यतइति ॥ इयंकाशिका ॥ किलेति प्रसिद्धौ ॥ कैर्नवर्ण्यतेस्तूयतेऽपितुसर्वैरेवेत्यर्थः ॥ तत्रहेतुमाह ॥ यतोयस्मादंतकालेपचेलिमैःफलदानोन्मुखैःप्राक्तनपुण्यभारैःप्राचीनपुण्यनिचयैर्हेतुभिरत्रस्थितस्यजंतोःप्राणिमात्रस्यइंदुमौलिश्चंद्रशेखरः ओंकारंप्रणवंओंकारयतिस्वीकारयति उपदिशतीत्यर्थः ॥ ७८ ॥ मणिकर्णिकानामव्युत्पादयंस्तस्याअतिश्रेष्ठतामाह ॥ संसारिचिंतेति ॥ तत्तस्मादसौमणिकर्णिकेतिगीयतइत्यन्वयः ॥ तस्मात्क स्मात ॥ यस्मात्संसारिणांप्राणिनांचिंतामणिरिवचिंतामणिर्विश्वनाथःसर्वपुरुषार्थप्रदत्वाच्छिवःकल्याणरूपस्तंतारकंप्रसिद्धमोंकारंषडक्षरंराममंत्रराजंवाअंतकालेसज्जनकर्णिकायामत्रम्रियमाणस्यद क्षिणकर्णेऽभिधत्तेकथयतीत्यर्थः ॥ तत्रश्रुतिरुक्तैव ॥ संसारचिंतामणिरितिक्वचित्पाठः ॥ तदासम्यक्सारःसरणंयेषांतेसंसाराःसंसारिणइत्यर्थः ॥ जीवानांसंसारचिंतामणिरित्यध्याहारोवा ॥ ७९ ॥ प्रकारांतरेणमणिकर्णिकाशब्दव्युत्पत्तिमाह ॥ मुक्तिलक्ष्मीति ॥ ततोजनाःयांमणिकर्णिकांप्राहुःसाऽसावित्यध्याहृत्ययोजना ॥ ततःकुतः ॥ यतोमुक्तिलक्ष्मीर्मोक्षलक्ष्मीस्तस्यामहापीठंमहत्सिंहासनं महत्स्थानंवातद्रूपोमणिः सर्वोत्कृष्टत्वान्मणिरिवमणिः ॥ यद्वा मुक्तिलक्ष्म्यामहापीठानिमहास्थानान्ययोध्यादीनिमणिकर्णिकास्थलंविहायकाश्यंतानितेषुमणिरिवमणिःसर्वोत्कृष्टाइयंस्थली ॥ सायुज्य

१ सुधामुधाप्यतइतिक्वचित्पाठः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मुक्तिर्मणिकर्णिकायामित्युक्तेः ॥ यद्वा मुक्तिलक्ष्मीमहापीठेषुमणिरिवमणिःकाशी ॥ अन्यानिपुण्यक्षेत्राणिकाशीप्राप्तिकराणीत्युक्तेः ॥ साचतस्यांमुक्तिलक्ष्मीमहापीठमणौकाश्यांवातच्चरणाब्जयो स्तस्यामोक्षलक्ष्म्याश्चरणाब्जयोःपादपद्मयोः कर्णिकाचेयंतेनमणिकर्णिकांप्राहुरित्यर्थः ॥ किंत्वंतिमपक्षेअध्याहृत्ययोजनासोढव्या ॥ ८० ॥ जरायुजामनुष्यादयः अंडजाःपक्ष्यादयः उद्भिज्जा स्तरवः स्वेदजामत्कुणादयोऽत्रवासिनएतेत्रि दशैर्देवैःसमानभवंतिकिंतुतेभ्योधिकाइत्यर्थः ॥ तत्रहेतुमाह ॥ मोक्षभाजस्तइति ॥ देवैःकीदृशैः ॥ मुक्तिदुर्दर्शैर्मुक्तिर्दुर्दशादुष्प्रापदशायेषांतेतथातैः ॥ ॥ ८१ ॥ काशींदृष्ट्वाएतावान्कालोममवृथायातइत्यनुतपाति ॥ ममजन्मेति ॥ यावन्मयाकाशिकानैक्षिष्टनैक्षिनादर्शीतियावत् ॥ तावन्ममजन्मवृथाजातमित्यन्वयः ॥ कथंभूतस्य ॥ दुर्वृत्तस्यदुश्चेष्टितस्यजडात्मनोऽज्ञस्य ॥ काशिकाकथंभूता ॥ मुक्तिकाशिकाकैवल्यप्रकाशिका ॥ ८२ ॥ पुनःपुनरितिव्यासोक्तिः ॥ अतिथीकृत्यविषयीकृत्य ॥ तृप्तिमलंबुद्धिम् ॥ ८३ ॥ काशींप्राप्याप्यवंत्याद्याश्चतस्रोद्रष्टुंविमृशाति ॥ सप्तानांचेतिद्वयेन ॥ धुरीणांश्रेष्ठाम् ॥ अवयामिजानामि ॥ सुनिर्वाणविश्राणनविचक्षणां सुष्ठुनिर्वाणंसुनिर्वाणंसायुज्यंकैवल्यमित्यर्थः ॥ तस्यय

जरायुजांडजोद्भिज्जाःस्वेदजाह्यत्रवासिनः ॥ नसमामोक्षभाजस्तेत्रिदशैर्मुक्तिदुर्दशैः ॥ ८१ ॥ ममजन्मवृथाजातंदुर्वृत्तस्यजडात्मनः ॥ नाद्ययावन्मयै क्षिष्टकाशिकामुक्तिकाशिका ॥ ८२ ॥ पुनःपुनश्चतत्क्षेत्रमतिथीकृत्यनेत्रयोः ॥ विचित्रंचपवित्रंचतृप्तिंनाधिजगामह ॥ ८३ ॥ सप्तानांचपुरीणांहिधुरी णामवयाम्यहम् ॥ वाराणसींसुनिर्वाणविश्राणनविचक्षणाम् ॥ ८४ ॥ तथापिनचतस्रोन्यामयादृग्गोचरीकृताः ॥ तासांप्रभावंविज्ञायाप्यागमिष्याम्य हंपुनः ॥ ८५ ॥ तीर्थयात्रांप्रतिदिनंकुर्वन्नूनंसवत्सरम् ॥ नप्रापसर्वतीर्थानितीर्थंकाश्यांतिलेतिले ॥ ८६ ॥ ॥ अगस्तिरुवाच ॥ ॥ जानन्न पिगुणान्देविक्षेत्रस्यास्यपरान्द्विजः ॥ नानाप्रमाणैःप्रवणोनिरगात्सतथाप्यहो ॥ ८७ ॥ किंकुर्वंतिहिशास्त्राणिसप्रमाणानिसुंदरि ॥ महामायांभवित्रींतां कोनिवारयितुंक्षमः ॥ ८८ ॥ कःसमुच्चलितंचेतस्तोयंवासंप्रतीपयेत् ॥ प्रोच्चस्थानस्थितमपिस्वभावोयच्चलस्तयोः ॥ ८९ ॥ शिवशर्माव्रजन्सोथदे शाद्देशांतरंक्रमात् ॥ महाकालपुरींप्रापकलिकालविवर्जिताम् ॥ ९० ॥ कल्पेकल्पेखिलंविश्वंकालयेद्यःस्वलीलया ॥ तंकालंकलयित्वायो महाकालोभवत्किल ॥ ९१ ॥

द्विश्राणनंवितरणमर्थाज्जीवानांतत्रविचक्षणांनिपुणांसमर्थामित्यर्थः ॥ ८४ ॥ एवंचेत्तर्ह्यलमन्यत्रगमनेनेतिस्वयमाशंक्याह ॥ तथापीति ॥ ८५ ॥ तिलेतिलेतिलपरिमितभूप्रदेशेतीर्थंयतोऽ स्तीतिशेषः ॥ ८६ ॥ जानन्निति ॥ सशिवशर्मानानाप्रमाणैःक्षेत्रस्यगुणान्जानन्नपिनिरगात्निर्गतः ॥ काश्याइत्यर्थः ॥ प्रमाणैःकाश्यागुणज्ञानेहेतुमाह ॥ प्रवणइति ॥ अंतर्निष्ठइत्यर्थः ॥ ॥ ८७ ॥ तत्रभवितव्यरूपांमायांहेतूकरोति ॥ किंकुर्वंतीति ॥ हीतिनिश्चये ॥ ८८ ॥ संक्षुभितांचित्तस्यापितत्रकारणत्वमाह ॥ कःसमुच्चलितमिति ॥ कःपुरुषःप्रोच्चस्थानस्थितंप्रोत्कृष्टस्थान स्थितमपिचित्तंप्रतीपयेत्प्रतिकूलयेन्निवर्तयेदित्यर्थः ॥ तत्रदृष्टांतमाह ॥ तोयंवेति ॥ वेत्युपमायाम् ॥ उभयत्रनिवर्तनाभावेहेतुमाह ॥ स्वभावोयच्चलस्तयोरिति ॥ यद्यतः ॥ चलश्चंचलः ॥ स्वभावोवेतिपाठेयतइत्यर्थेवाशब्दः ॥ ८९ ॥ महाकालपुरींमहाकालस्यपुरीम् ॥ कलिकालविवर्जितांकलिकालाभ्यामस्पृष्टाम् ॥ ९० ॥ महाकालनामनिर्वक्ति ॥ कल्पेकल्पइतिश्लोकेन ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कलयेत्भक्षयेत् ॥ कलयित्वाभक्षयित्वा ॥ सकालकालईश्वरोऽग्रसदितिश्रुतेः ॥ कालमूषकभक्षकइतिस्मृतेश्च ॥ तस्यपुरीमितिपूर्वेणैवान्वयः ॥ ९१ ॥ तस्याएवनामांतरंनिर्वक्ति ॥ पापादिति ॥ सामहाकालपुरी ॥ कलौतस्यानामांतरमाह ॥ युगेयुगइति ॥ उज्जयिनीति ॥ कल्पेकल्पेइतिक्कचित्पाठः ॥ तदुक्तम् ॥ प्राक्कल्पेसुवर्णश्रृंगाद्वितीयेचकुशस्थली ॥ तृतीयेऽवंतिनीप्रोक्ताचतुर्थे चामरावती॥पंचमेचूडामणिः प्रोक्ताषष्ठेपद्मावतीस्मृता ॥ सप्तमेचोज्जयिनीपुरीति ॥ ९२ ॥ नसमुच्छ्रयतिउच्छूनतांनगच्छतीत्यर्थः ॥ ९३ ॥ परःकोटीनिकोटिभ्यःपराणिअसंख्यातानीत्यर्थः ॥ ९४ ॥ एकंलिंगमिति ॥ एकंज्योतिर्ज्योतिर्मयंलिंगमित्यग्रिमेणसंबंधः ॥ ९५ ॥ सिद्धवटेज्योतिरिति ॥ इहअवंत्यांयेद्विजास्त्रिवर्णास्तेसिद्धवटेज्योतिर्ज्योतिर्लिंगंपश्यंति ॥ सिद्धवटेयज्ज्योतिस्तज्ज्योतिःपश्यंतीतिवा ॥ स्थिताइतिक्कचित्पाठःसंचित्यः ॥ अथवेति॥ श्रीमहाकालस्ययेद्रष्टारोऽतएवपुण्यराशयस्तेसर्वेपितज्ज्योतिर्लिंगंपश्यंतीत्यन्वयः॥९६॥ कष्टिभिःकष्टवद्भिःसंसारांगारपच्यमानैरित्यर्थः ॥ दृष्टिभिरितिक्कचित्पाठः ॥ ९७ ॥ स्पृष्टपृष्ठाःस्पृष्टानिपृष्ठानियेषांतेतथा ॥ स्पृष्टाःपृष्ठेइतिक्कचित्पाठः ॥ कशाघातंअश्वनोदिन्यास्ताडनजंदुःखंविश्रमयंति ॥ महाकालप्रासादपताकाछायायांक्षणंविश्रम्यनाशयंतीत्यर्थः ॥ एतेनप्रासादस्यात्युच्छ्रतत्वंध्वनितम् ॥९८॥ स्मरतश्चिंतयतोध्यायतोभक्तानितियावत् ॥ स्मरतःकरुणार्द्रयादृशापश्यतइत्यर्थः ॥ स्मरकर्तृस्मरांतकौ श्रीकृष्णमहेश्वरौ ॥९९॥१००॥ निवासिनइतितत्रगतानामुपलक्षणम् ॥ श्रीकांतान्लक्ष्मीपतीन् ॥१॥ कांतीनाम्ना॥ कान्तीनामनिर्वक्ति ॥ कांतिमतीमिति॥कांचीमितिक्कचित्पाठः ॥२॥ तत्रेति॥ तत्रयत्कृत्यंकर्तव्यंतत्कृत्यंकृत्वेतिसंबंधः ॥ यत्कृत्यंनैत्यकंतत्रकांत्यांचयत्कृत्यंतत्सर्वंकृत्वेतिवा ॥ ३ ॥ द्वारवतीनामनिर्वक्ति॥चतुर्णामिति ॥ वर्गाणांधर्मार्थकाममोक्षाणाम् ॥ वर्णानामितिपाठेअपिशब्दादन्येषामपि॥४॥अहोआश्चर्ये ॥ यत्रद्वारकायांजंतूनांप्राणिमात्राणामस्थीन्यपिचक्रांकितानिभवंतितत्रतस्यांशंखचक्रांकितैःशंखचक्राद्युपलक्षितैःकरैर्जंतवइतिशेषः ॥ विष्णुरूपाःस्युर्भवेयुरितिकिं

पापादवंतीसाविश्वमवंतीतिनिगद्यते ॥ युगेयुगेन्यनाम्नीसाकलावुज्जयिनीतिच ॥ ९२ ॥ विपन्नोयत्रवैजंतुःप्राप्यापिशवतांस्फुटम् ॥ नपूतिगंधमाप्नोतिसमुच्छ्रयतिनक्कचित् ॥ ९३ ॥ यमदूतानयस्यांहिप्रविशंतिकदाचन ॥ परःकोटीनिलिंगानितस्यांसंतिपदेपदे ॥ ९४ ॥ हाटकेशोमहाकालस्तारकेशस्तथैवच ॥ एकंलिंगंत्रिधाभूत्वात्रिलोकींव्याप्यसंस्थितम् ॥ ९५ ॥ ज्योतिःसिद्धवटेज्योतिस्तेपश्यंतीहयेद्विजाः ॥ अथवाश्रीमहाकालद्रष्टारःपुण्यराशयः ॥ ९६ ॥ महाकालस्यतल्लिंगंयैर्दृष्टंकष्टिभिःक्कचित् ॥ नस्पृष्टास्तेमहापापैर्नदृष्टास्तेयमोद्भटैः ॥ ९७ ॥ महाकालपताकाग्रैःस्पृष्टपृष्ठास्तुरंगमाः ॥ अरुणस्यकशाघातंक्षणंविश्रमयंतिखे ॥ ९८ ॥ महाकालमहाकालमहाकालेतिसंततम् ॥ स्मरतःस्मरतोनित्यंस्मरकर्तृस्मरांतकौ ॥ ९९ ॥ एवमाराध्यभूतेशंमहाकालंततोद्विजः ॥ जगामनगरींकांतींकांतांत्रिभुवनादपि ॥ १०० ॥ लक्ष्मीकांतःस्वयंसाक्षाज्जंतूंस्तत्रनिवासिनः ॥ श्रीकांतानेवकुरुतेपरत्रेहचनिश्चितम् ॥ १ ॥ दृष्ट्वाकांतींकांतिमतींकांतिमद्भिर्निषेविताम् ॥ कांतिमानभवत्सोपिनाकांतिस्तत्रकस्यचित् ॥ २ ॥ तत्रकृत्यंचयत्कृत्यंतत्कृत्वासर्वकृत्यवित् ॥ सप्तरात्रमुषित्वातुययोद्वारवतींपुरीम् ॥ ३ ॥ चतुर्णामपिवर्गाणांयत्रद्वाराणिसर्वतः ॥ अतोद्वारवतीत्युक्ताविद्वद्भिस्तत्त्ववेदिभिः ॥ ४ ॥ अस्थीन्यपिचजंतूनांयत्रचक्रांकितान्यहो ॥ किंचित्रंतत्रयत्रस्युःशंखचक्रांकितैःकरैः ॥ ५ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चित्रंनकिंचित्॥यत्रत्याःसर्वेप्राणिनोभगवत्सारूप्यभाजइत्यर्थः ॥ तदुक्तम् ॥ संवत्सरंचषण्मासंमासंमासार्धमेवच ॥ द्वारकावासिनःसर्वेनरानार्यश्चतुर्भुजाइति ॥ ५॥६॥ तद्गोपीचंदनइत्यत्रतच्छब्दो द्वारकाविषयः ॥ ७ ॥ ज्वलदिंगलवत्प्रदीप्ताग्निवत् ॥ ज्वलदंगारवदितिक्वचित्पाठः ॥ ८ ॥ प्रसंगात्तुलस्यामाहात्म्यमाह ॥ तुलसीति ॥ ९ ॥ मुषन्नपहरन् ॥ ११० ॥ ११ ॥ सशिवशर्मा ॥ अतंद्रितोऽनलसः ॥ १२ ॥ मायापुरीनामनिर्वक्ति ॥ यत्रसेति ॥ मायापाशैरहंकारममकाररज्जुभिर्नपाशयेन्नबध्नाति प्राणिनइतिशेषः ॥ १३ ॥ १४ ॥ प्रसंगाद्गंगामाहात्म्यंवदन्काशीतरा भ्यःपुरीभ्यस्तस्याःश्रैष्ठ्यमाह ॥ यतइतिद्वयेन ॥ यद्वा गंगाद्वारंमोक्षद्वारंहरिद्वारमितिनामत्रयंनिर्वक्ति ॥ इतइति ॥ यन्नामेत्यत्रयच्छब्दोगंगाविषयः ॥ १५ ॥ वैकुंठस्यैकसोपानमित्यनेनमोक्षद्वार

अंतकःशिक्षयत्येवंनिजदूतान्मुहुर्मुहुः ॥ तेत्याज्यायैर्द्वारवत्यानामापिपरिगृह्यते ॥ ६ ॥ श्रीखंडेक्वसआमोदःस्वर्णेवर्णःक्वतादृशः ॥ तत्पावित्र्यंक्ववै तीर्थेतद्गोपीचंदनेयथा ॥ ७ ॥ दूताःशृण्वंतुयद्भालंगोपीचंदनलांछितम् ॥ ज्वलदिंगलवत्सोपिदूरेत्याज्यःप्रयत्नतः ॥ ८ ॥ तुलस्यलंकृतायेयेतुलसी नामजापकाः ॥ तुलसीवनपालायेतेत्याज्यादूरतोभटाः ॥ ९ ॥ युगेयुगेद्वारवत्यारत्नानिपरितोमुषन् ॥ अब्धीरत्नाकरोद्यापिलोकेषुपरिगीयते ॥ ११० ॥ द्वारवत्यांम्रियंतेयेजंतवःकालनोदिताः ॥ चतुर्भुजाःस्युर्वैकुंठेतेपीतांबरधारिणः ॥ ११ ॥ तत्रापिसंतर्प्यपितॄन्ससदेवर्षिमानवान् ॥ तत्रतेपुचतीर्थेषुसस्नौसर्वेष्वतंद्रितः ॥ १२ ॥ ततोमायापुरींप्रातोदुष्प्रापांपापकारिभिः ॥ यत्रसावैष्णवीमायामायापाशैर्नपाशयेत् ॥ १३ ॥ केचिदूचुर्ह रिद्वारंमोक्षद्वारंततःपरे ॥ गंगाद्वारंचकेप्याहुःकेचिन्मायापुरंपुनः ॥ १४ ॥ यतोविनिर्गतागंगाख्याताभागीरथीभुवि ॥ यन्नामोच्चारणात्पुंसांपापंया तिसहस्रधा ॥ १५ ॥ वैकुंठस्यैकसोपानंहरिद्वारंजगुर्जनाः ॥ अत्राप्लुतानरायांतितद्विष्णोःपरमंपदम् ॥ १६ ॥ तीर्थोपवासकंकृत्वानिशाजागरणं तथा ॥ प्रातःस्नात्वाचगंगायांतर्प्यान्संतर्प्यसर्वतः ॥ १७ ॥ यावत्सपारणंकर्तुमियेषद्विजसत्तमः ॥ तावच्छीतज्वराक्रांतश्चकंपेऽत्यर्थमातुरः ॥ १८ ॥ वैदेशिकस्तथैकाकीतथाऽतिज्वरपीडितः ॥ चिंतामवापमहतींकिमेतत्समुपस्थितम् ॥ १९ ॥ चिंतार्णवेनिमग्नोभूत्त्यक्ताशोजीवितेधने ॥ सांयात्रि कइवागाधेभिन्नपोतोमहार्णवे ॥ १२० ॥ क्वक्षेत्रंक्वकलत्रंमेक्वपुत्राःक्वचतद्वसु ॥ क्वतद्विचित्रंवैहर्म्यंक्वसापुस्तकसंभृतिः ॥ २१ ॥ अद्यापिनायुःपर्याप्तंप लितंनतथामयि ॥ ज्वरोयंदारुणः प्राप्तःकालज्ञश्चातिदारुणः ॥ २२ ॥ मृत्युर्मूर्ध्निकृतावासोवासोदूरेव्यवस्थितः ॥ अग्नौगृहोपरिप्राप्तेकूपंतुखनयेदिह ॥ २३ ॥

नाम्नोपिनिर्वचनं अत्राप्लुताइत्यनेनवा ॥ १६ ॥ तर्प्यान्तर्पणार्हान् ॥ १७ ॥ १८ ॥ १९ ॥ सांयात्रिकःपोतवणिक् ॥ भिन्नपोतोभग्ननौकः ॥ १२० ॥ मरणकालीनमोहोत्थचिंतामाह ॥ क्वक्षेत्रमितिसार्धद्वयेन ॥ पुस्तकसंभृतिःपुस्तकसंभारः पुस्तकसमूहइतियावत् ॥ २१ ॥ पलितंजराशौक्ल्यम् ॥ पलितंजरसाशौक्ल्यमित्यमरः ॥ कालमवसरंजानातीतिकालज्ञोमृत्युः ॥ कःकाल श्चेतिवापाठः ॥ २२ ॥ तीर्थाटनेनशुद्धांतःकरणस्याविवेकनाशकंविवेकमाह ॥ अग्नावित्येकेन ॥ कूपंतुपुनःखनयेत् ॥ काकानखनयेदित्यर्थः ॥ कःखनयेदितिवापाठः ॥ २३ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तस्मादेवंकरिष्यामीत्याह ॥ चिंतयामीति ॥ २४ ॥ मुक्त्युपायस्यसाधितत्वादपिचिंताव्यर्थेत्याह ॥ अथवेतिद्वयेन ॥ एकोमुख्यः ॥ संश्चासावनुष्ठितश्चेतितथासन्यथाभवतितथानुष्ठितइ तिवा ॥ २५ ॥ संतापेनमनोदुःखेन चकाराद्रोगादिनाच ॥ पश्चात्तापेनतप्यतइतिपाठेअंतिमकालीनतापेनेत्यर्थः ॥ तयोर्मयासाधितत्वान्नतापोयुक्तइतिभावः ॥ २६ ॥ मुक्त्युपायानु ष्ठितत्वमंगीकृत्याप्याह ॥ अथवेति ॥ दुरवस्थयाऽनवस्थितया ॥ २७ ॥ रथ्यामितिकालाध्वनोरत्यंतसंयोगेद्वितीया ॥ रथ्यायामित्यर्थः ॥ म्रियेचेतिचकारात्पुर्यांच ॥ २८ ॥ २९ ॥ वृश्चिकःसविषकीटविशेषः ॥ १३० ॥ सप्तसप्तचतुर्दशादिनानि स्थित्वायावन्मरणंप्राप्तस्तावदित्यन्वयः ॥ सप्तपंचेतिक्वचित्पाठः ॥ ३१ ॥ ३२ ॥ ३३ ॥ किंकिणीजालमालितं

किमेभिश्चिंतनैर्व्यर्थैरतितापकरैर्मम ॥ चिंतयामिहृषीकेशंशिवदंशिवमेवच ॥ २४ ॥ अथवामुक्त्युपायोवैमयैकःसदनुष्ठितः ॥ मुक्तिपुर्यस्तुसप्तै ताःस्वनेत्रविषयीकृताः ॥ २५ ॥ स्वर्गापवर्गयोरेकःसाध्योहिविदुषाध्रुवम् ॥ तयोरसाधनेपश्चात्संतापेनचतप्यते ॥ २६ ॥ अथवाचिंतयाकिंमे त्वनयादुरवस्थया ॥ रणेवामरणंश्रेयस्तीर्थेवात्रयथामम ॥ २७ ॥ किमहंमंदभागीवरथ्यांक्वापिम्रियेधुना ॥ भागीरथ्यांम्रियेचाद्यकाचिंताममऽमूढवत् ॥ २८ ॥ चर्मास्थिसंचयेनाहमनेनवपुषाध्रुवम् ॥ प्राप्स्यामिनिधनादत्रसिद्धिंनैःश्रेयसींध्रुवम् ॥ २९ ॥ एवंचिंतयतस्तस्यपीडासीदतिदारुणा ॥ कोटिवृश्चिकदष्टस्ययावस्थातामवापसः ॥ १३० ॥ स्मर्तव्यंविस्मृतंसर्वंकाहंकोहंनवेत्तिच ॥ दिनानिसप्तसप्तेतिस्थित्वापंचत्वमागतः ॥ ३१ ॥ तावद्वैकुंठभुवनाद्विमानंसमुपस्थितम् ॥ तार्क्ष्योपलक्षितोयत्रध्वजश्चातिसमुच्छ्रितः ॥ ३२ ॥ अधिष्ठितंसुकन्यानांस्वर्णकौशेयवाससाम् ॥ चाम रव्यग्रहस्तानांसहस्रेणातिविस्तृतम् ॥ ३३ ॥ पुण्यशीलसुशीलाभ्यांगणाभ्यांचविराजितम् ॥ चतुर्भुजाभ्यांस्वास्याभ्यांकिंकिणीजालमालितम् ॥ ३४ ॥ तद्विमानमथारुह्यपीतवासाश्चतुर्भुजः ॥ अलंचक्रेनभोवर्त्मसद्विजोदिव्यभूषणः ॥ १३५ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायां चतुर्थेकाशीखंडेपूर्वार्द्धेसप्तपुरीवर्णनंनामसप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ लोपामुद्रोवाच ॥ ॥ जीवितेशकथामेतांपुण्यांपुण्यपुरीश्रिताम् ॥ नतृप्तिमधिगच्छामिश्रुत्वात्वच्छ्रीमुखेरिताम् ॥ १ ॥ मायापुर्यांमुक्तिपुर्यांशिवशर्माद्विजोत्तमः ॥ मृतोपिमोक्षंनैवापब्रूहितत्कारणंविभो ॥ २ ॥ ॥ अगस्त्यउवाच ॥ ॥ साक्षान्मोक्षोनचैतासुपुरीषुप्रियभाषिणि ॥ पुरोद्दिश्यामुमेवार्थमितिहासोमयाश्रुतः ॥ ३ ॥

क्षुद्रघंटिकासमूहेनसंजातमालमित्यर्थः ॥ ३४ ॥ १३५ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ पिशाचगुह्यगंधर्वविद्याधरप्रजाहृताम् ॥ आख्यायंतेऽष्टमेपंचलोकाःसंयमिनीमुखाः ॥ १ ॥ पूर्वाध्यायांतेतद्विमानमारुह्येत्यनेनशिवशर्मणःसारूप्यमुक्तिरुक्तासाऽघटमानेतितदुक्तायामाख्यायिकायामात्मनस्तृप्त्यभावमावेदयंतीतत्कारणं पृच्छति ॥ जीवितेशेतिद्वयेन ॥ १ ॥ मोक्षंसायुज्यम् ॥ २ ॥ मोक्षःकैवल्यरूपः ॥ अमुमेवार्थमायापुर्यादिषुसाक्षात्सायुज्यंनास्त्येवेत्येवंलक्षणम् ॥ इतिहासः इतिहेत्यव्ययमुपदेशपारंपर्याभिधा यितस्याऽवस्यानमत्रेतीतिहासःपुरावृत्तम् ॥ आर्षः ॥ पूर्ववृत्तांताश्रयाइतिहासाइतिदेवलस्मरणात् ॥ धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् ॥ पूर्ववृत्तकथायुक्तमितिहासंप्रचक्षतइतिवा ॥ ३ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ४ ॥ ५ ॥ आकृत्याआकारेणशोभयेतियावत् ॥ चकाराद्भगवद्भक्त्याच ॥ तथाचवक्ष्यतः ॥ भगवद्भक्तियुक्तानांकिमज्ञातमिति ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ दिव्यद्विजःशिवशर्मा ॥ कएषइति ॥ एषलोकः कइत्यन्वयः ॥ अल्पश्रीकत्वेहेतुमाह ॥ अपुण्यजनाकृतिरपुण्यजनानांपुण्यवर्जितानांजनानांआकृतयःशरीराणियस्मिन्सतथा ॥ स्वल्पपुण्यजनाकृतिरितिक्वचित्पाठः ॥ १० ॥ पिशाचादयश्चत्वारोदेवयोनिविशेषाः ॥ विद्याधरेत्याद्यमरः ॥ ११ ॥ १२ ॥ ततस्तदनंतरं गच्छन्लोकंददर्शेत्यन्वयः ॥ कथंभूतम् ॥ लोकैर्गुह्यकैरध्युषितमधिष्ठितम् ॥ कथंभूतैः ॥ पिचंडिलैः

शृणुकांतेविचित्रार्थांकथांपापप्रणाशिनीम् ॥ पुण्यशीलसुशीलाभ्यांकथितांशिवशर्मणे ॥४॥ शिवशर्मोवाच ॥ अयिविष्णुगणौपुण्यौपुंडरीकदलेक्षणौ ॥ किंचिद्विज्ञप्तुकामोहंप्रबद्धकरसंपुटः ॥ ५ ॥ ननामयुवयोर्वेद्मिवेद्म्याकृत्याचकिंचन ॥ पुण्यशीलसुशीलाख्यौयुवांभवितुमर्हथः ॥ ६ ॥ ॥ गणावूचतुः ॥ ॥ भगवद्भक्तियुक्तानांकिमज्ञातंभवादृशाम् ॥ एतदेवहिनौनामयदुक्तंश्रीमतात्वया ॥ ७ ॥ यदन्यदपितेचित्तेप्रष्टव्यंतदशंकितम् ॥ संपृच्छस्वमहाप्राज्ञप्रीत्यातत्प्रब्रवावहे ॥ ८ ॥ इतिश्रुत्वासवचनंभगवद्गणभाषितम् ॥ अतिप्रीतिकरंहृद्यंततस्तौप्रत्युवाचह ॥ ९ ॥ ॥ दिव्यद्विजउवाच ॥ ॥ कएषलोकोऽल्पश्रीकःस्वल्पपुण्यजनाकृतिः ॥ कइमेविकृताकाराब्रूतमेतन्ममाग्रतः ॥ १० ॥ ॥ गणावूचतुः ॥ ॥ अयंपिशाचलोकोत्रवसंतिपिशिताशनाः ॥ दत्त्वानुतापभाजोयेनोनोकृत्वाददत्यपि ॥११॥ शिवंप्रसंगतोभ्यर्च्यसकृत्त्वशुचिचेतसः ॥ अल्पपुण्याल्पलक्ष्मीकाःपिशाचास्तइमेसखे ॥ १२ ॥ ततोगच्छन्ददर्शाग्रेहृष्टपुष्टजनावृतम् ॥ पिचंडिलैःस्थूलवक्त्रैर्मेघगंभीरनिःस्वनैः ॥ १३ ॥ लोकैरध्युषितंलोकंश्यामलांगैश्चलोमशैः ॥ गणौकथयतांकोमीकोलोकःपुण्यतःकुतः ॥ १४ ॥ ॥ ॥ गणावूचतुः ॥ ॥ गुह्यकानामयंलोकस्त्वेतेवैगुह्यकाःस्मृताः ॥ न्यायेनोपार्ज्यवित्तानिगूहयंतिचयेभुवि ॥ १५ ॥ स्वमार्गगाधनाढ्याश्चशूद्रप्रायाःकुटुंबिनः ॥ संविभज्यचभोक्तारःक्रोधासूयाविवर्जिताः ॥ १६ ॥ नतिथिंनैववारंचसंक्रांत्यादिनपर्वच ॥ नाधर्मंनचधर्मंचविदंत्येतेसदासुखाः ॥१७॥ एकमेवहिजानंतिकुलपूज्योहियोद्विजः ॥ तस्मैगाःसंप्रयच्छंतिमन्यंतेतद्वचःस्फुटम् ॥१८॥ समृद्धिभाजोह्यत्रापितेनपुण्येनगुह्यकाः ॥ भुंजतेस्वर्गसौख्यानिदेववच्चाकुतोभयाः ॥ १९ ॥ ततोविलोकयामासलोकंलोचनशर्मदम् ॥ केऽमीजनास्त्वसौलोकःकिंनामावदतांगणौ ॥ २० ॥ ॥ गणावूचतुः ॥ ॥ गांधर्वस्त्वेषलोकोऽमीगंधर्वाश्चशुभव्रताः ॥ देवानांगायनाह्येतेचारणाःस्तुतिपाठकाः ॥ २१ ॥ गीतज्ञाअतिगीतेनतोषयंतिनराधिपान् ॥ स्तुवंतिचधनाढ्यांश्चधनलोभेनमोहिताः ॥ २२ ॥ राज्ञांप्रसादलब्धानिसुवासांसिधनान्यपि ॥ द्रव्याण्यपिसुगंधीनिकर्पूरादीन्यनेकशः ॥ २३ ॥

पिचंडउदरम् ॥ पिचंडकुक्षीजठरोदरंतुंदमित्यमरः ॥ सवर्ततेयेषांतेपिचंडिलाः ॥ तुंदादिभ्यइलच्चेतिइलच्प्रत्ययः तैःस्थूलोदरैरित्यर्थः ॥ १३ ॥ १४ ॥ गूहयंतिगर्तंकृत्वास्थापयेतीत्यर्थः ॥ गूहयंतीतिपाठेसएवार्थः ॥ १५ ॥ स्वमार्गं गाइत्यष्टानांस्पष्टोर्थः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्रुतौगांधर्ववेदेइत्यर्थः ॥ स्तुतावितिक्वचित्पाठः ॥ नाट्यशास्त्रकृतश्रमाश्चनाट्यशास्त्रेषुकृतःश्रमोयैस्तेतथा॥२४॥ तेनपुण्येनेति ॥ गीतविद्यार्जितैर्धनैर्ब्राह्मणास्तोषिताइतियत् ॥ वैप्रसिद्धम्॥ पुण्यमि तिशेषः ॥ तेनपुण्येनेतियोजना ॥ २५ ॥ गीतविद्याभ्यासेनमहत्त्वप्राप्तावुदाहरणमाहतुः ॥ गीतविद्येति ॥ यद्वा गीतविद्यायाःफलंप्रसिद्धमेवेत्याह ॥ गीतविद्येति ॥ २६ ॥ तुंबुरइत्यदंतोपिक्व चित्पाठः॥अतिदुर्लभौवहुमान्यौ ॥ तत्रगीतविद्यायाःशिवस्वरूपत्वंवदन्हेतुमाह ॥ नादरूपीति ॥ नादरूपीगीतरूपीषड्जादिस्वरूपीत्यर्थः ॥२७॥ गीतविद्यायानिष्कामसकामभेदेनफलद्वयमाह ॥ यादिगीतामिति ॥ २८ ॥ द्वितीयंपक्षंस्पष्टयति ॥ गीतज्ञइति ॥ रुद्रस्येतिविष्णोरप्युपलक्षणम् ॥ २९ ॥ सदाकालंसर्वकालम् ॥ सदालोकमितिपाठेआलोकम् ॥ स्पष्टंयथास्यादित्यर्थः ॥ एषाय

ब्राह्मणेभ्यःप्रयच्छंतिगीतंगायंत्यहर्निशम् ॥ श्रुतावेवमनस्तेषांनाट्यशास्त्रकृतश्रमाः ॥ २४ ॥ तेनपुण्येनगांधर्वोलोकस्त्वेषांविशिष्यते ॥ ब्राह्मणास्तो पितायद्वै गीतविद्यार्जितैर्धनैः ॥ २५ ॥ गीतविद्याप्रभावेनदेवर्षिर्नारदोमहान् ॥ मान्योवैष्णवलोकेवैश्रीशंभोश्चातिवल्लभः ॥ २६ ॥ तुंबुरुर्ना रदश्चोभौदेवानामतिदुर्लभौ ॥ नादरूपीशिवःसाक्षान्नादतत्त्वविदोहितौ ॥ २७ ॥ यदिगीतंक्वचिद्गीतंश्रीमद्धरिहरांतिके ॥ मोक्षस्तुतत्फलंप्राहुःसा न्निध्यमथवातयोः ॥ २८ ॥ गीतज्ञोयदिगीतेननाप्नोतिपरमंपदम् ॥ रुद्रस्यानुचरोभूत्वातेनैवसहमोदते ॥ २९ ॥ अस्मिँल्लोकेसदाकालंस्मृतिरे षाप्रगीयते ॥ तद्गीतमालयापूज्यौदेवौहरिहरौसदा ॥ ३० ॥ इतिशृण्वन्क्षणात्प्रापपुनरन्यन्मनोहरम् ॥ शिवशर्माथपप्रच्छकिंसंज्ञंनगरंत्विदम् ॥ ३१ ॥ गणावूचतुः ॥ ॥ असौवैविद्याधरोलोकोनानाविद्याविशारदाः ॥ एतेविद्यार्थिनामन्नमुपानद्वस्त्रकंबलम् ॥ ३२ ॥ औषधान्यपियच्छं तितत्पीडाशमनानिहि ॥ नानाकलाःशिक्षयंतिविद्यागर्वविवर्जिताः ॥ ३३ ॥ शिष्यंपुत्रेणपश्यंतिवस्त्रतांबूलभोजनैः ॥ अलंकृताश्चसत्कन्याधर्मा दुद्वाहयंतिच ॥ ३४ ॥ अभिलाषधियानित्यंपूजयंतीष्टदेवताः ॥ एतःपुण्यैर्वसंतीहविद्याधरवराइमे ॥३५॥ यावदित्थंकथांचक्रुस्तावत्संयमिनीपतिः ॥ धर्मराजोभिसंप्राप्तोदेवदुंदुभिनिःस्वनैः ॥३६॥ सौम्यमूर्तिर्विमानस्थोधर्मज्ञैःपरिवारितः ॥ सेवाकर्मसुचतुरर्भृत्यैस्त्रिचतुरैःसह ॥३७॥ धर्मराजउवाच ॥ साधुसाधुमहाबुद्धेशिवशर्मन्द्विजोत्तम ॥ कुलोचितंब्राह्मणानांभवताप्रतिपादितम् ॥ ३८ ॥ वेदाभ्यासःकृतःपूर्वंगुरवश्चापितोषिताः ॥ धर्मशास्त्रपुराणे षुदृष्टोधर्मस्त्वयाऽऽदृतः ॥ ३९ ॥ क्षालितंमुक्तिपुर्यद्भिराशुगंतृशरीरकम् ॥ कोविदोऽस्तिभवानेवजीवितेजीवितेतरे ॥ ४० ॥

दिगीतमित्यादिलक्षणा ॥ फलितमाह ॥ तद्गीतेति ॥ तत्तस्माद्गीतमालयागीतनिकरेण ॥ अथवास्मृतिरेषेत्यनेनतद्गीतमालयेत्याद्येवोच्यते तदातच्छब्दःप्रसिद्धार्थः ॥३० ॥ ३१ ॥३२॥ तत्पी डाशमनानिविद्यार्थिरोगनाशकानि ॥ अन्यदपियावदपेक्षितम् ॥ अपिहिशब्दार्थः ॥ ३३ ॥ धर्मात्धर्मनिमित्तात्धर्ममुद्दिश्येत्यर्थः ॥ ३४ ॥ अभिलाषधियाकामवांछया ॥ ३५ ॥ ३६ ॥ चतुरैर्दक्षैः ॥ सेवाकर्मसुसुष्ठुचतुरैरित्येकंपदंवा ॥३७॥३८॥ आदृतःआदरणीयः ॥३९॥ क्षालितंशोधितम् ॥ कोविदोपीत्यपिशब्दःसमुच्चये ॥ कोविदोस्तीतिक्वचित्पाठः ॥ जीवितेतरेमरणे॥४०॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सुतीर्थमेवपण्यंविक्रेयंद्रव्यंतेनसम्यग्विनिमितंपरिवर्तितम् ॥ एतदुक्तंभवति ॥ सुतीर्थगतपुण्यमादायशरीरगतंशरीरलक्षणंवापापंत्यक्तमित्यर्थः ॥ ४१ ॥ अतइति ॥ पांडित्यंसदसद्विवेकबुद्धिमत्त्वम् ॥ विचक्षणाविद्वांसः ॥ केते ॥ हितेपुरुषार्थेक्षणमेकंक्षणमात्रंयथास्यात्तथाअहःक्षेपंदिनंव्यर्थतांनाक्षिपंतिननयंतीत्यर्थः ॥ अहःक्षपांनक्षिपंतिक्षणमेकंहितेमुधाइतिक्वचित्पाठः ॥ हिनिश्चितम् ॥ येएवंविधास्तेबुधाइतिवा ॥ ४२ ॥ निमेषानिति ॥ पंचवाषड्वानिमेषान्पक्ष्मोन्मेषोपलक्षितान्कालान्व्याप्यमर्त्येमरणधर्मकेशरीरेप्राणिनोजंतवःप्राणंतिप्राणनव्यापारंकुर्वंतिचेष्टंतइत्यर्थः ॥ अतस्तत्रापिपंचषट्सुनिमेषेष्वपिअघकर्मणिपापकर्मणिअतएवगर्हितेनिंदिते ॥ अथकर्मणीतिवापाठः ॥ नप्रवर्तेयुः प्रवृत्तिंनकुर्युरित्यर्थः ॥ तत्रापिचेतिपाठेनिंदापरत्वेनव्याख्यातव्यम् ॥ ४३ ॥ स्थिरापायइति ॥ स्थिरोऽपायोनाशोयस्यकायस्यसस्थिरापायः ॥ सदाकायइतिवापाठः ॥ तत्तस्मात्प्रौढकार्येमहत्कार्येमोक्षैकप्रयोजनेइत्यर्थः ॥ ४४ ॥ ४५ ॥ सादिति ॥ सत्कर्मणोऽयंविपाकः

कलेवरंपूतिगंधिसदैवाशुचिभाजनम् ॥ सुतीर्थपुण्यपण्येनसम्यग्विनिमितंत्वया ॥ ४१ ॥ अतएवहिपांडित्यमाद्रियंतेविचक्षणाः ॥ अहःक्षेपंनक्षिपंतिक्षणमेकंहितेबुधाः ॥ ४२ ॥ निमेषान्पंचषान्मर्त्येप्राणंतिप्राणिनोध्रुवम् ॥ तत्रापिनप्रवर्तेयुरघकर्मणिगर्हिते ॥ ४३ ॥ स्थिरापायःसदाकायोनधनंनिधनेऽवति ॥ तन्मूढःप्रौढकार्येकिंनयतेतभवानिव ॥४४॥ सत्वरंगत्वरंचायुर्लोकःशोकसमाकुलः ॥ तस्माद्धर्मेमतिःकार्याभवतेवसुधार्मिकैः॥४५॥ सत्कर्मणोविपाकोऽयंतववंद्योममाप्यहो ॥ यदेतौभगवद्भक्तौसखित्वंभवतोगतौ ॥ ४६ ॥ ममाज्ञादीयतांतस्मात्साहाय्यंकरवाणिकिम् ॥ यत्कर्तव्यंमादृशैस्तेतत्कृतंभवतैवहि ॥ ४७ ॥ अद्यधन्यतरोस्मीहयद्दृष्टौभगवद्गणौ ॥ सेवासदैवमेज्ञाप्याश्रीमच्चरणसन्निधौ ॥ ४८ ॥ ततःप्रस्थापितस्ताभ्यांप्राविशत्स्वपुरींयमः ॥ अप्राक्षीच्चततोविप्रस्तौगणौप्रस्थितेयमे ॥ ४९ ॥ ॥ शिवशर्मोवाच ॥ ॥ साक्षादयंधर्मराजोननुसौम्यतराकृतिः ॥ धर्म्याण्येववचांस्यस्यमनःप्रीतिकराणिच ॥ ५० ॥ पुरीसंयमनीसेयमतीवशुभलक्षणा ॥ आकर्ण्ययस्यनामापिपापिनोऽतीवबिभ्यति ॥ ५१ ॥ यमरूपंवर्णयंतिमर्त्यलोकेऽन्यथाजनाः ॥ अन्यथाऽयंमयादृष्टोब्रूतंतत्कारणंगणौ ॥ ५२ ॥ केनपश्यंत्यमुंलोकंनिवसंतितथात्रके ॥ इदमेवास्यकिंरूपंकिंचान्यच्चनिवेद्यताम् ॥५३॥ ॥ गणावूचतुः ॥ ॥ शृणुसौम्यसुसौम्योऽसौदृश्यतेत्रभवादृशैः ॥ धर्ममूर्तिः प्रकृत्यैवनिःशंकैःपुण्यराशिभिः ॥५४॥ अयमेवहिपिंगाक्षःक्रोधरक्तांतलोचनः ॥ दंष्ट्राकरालवदनोविद्युल्ललनभीषणः ॥ ५५ ॥

फलम् ॥ किंतद्यदेतौभवतःसखित्वंगताविव्यन्वयः॥४६॥:किंचास्माभिःकर्तव्यमस्मत्कर्तव्यस्यत्वयैवकृतत्वादित्याह ॥ यत्कर्तव्यमिति॥४७॥भगवद्गणयोर्दर्शनात्स्वस्यापिकृतार्थतामाह ॥ अद्यति ॥ श्रीमच्चरणसन्निधौवैकुंठनाथसन्निधौ ॥ ४८ ॥ ४९ ॥ अतिरम्यतरंयमंयमपुरंवावीक्ष्यअतिविस्मयेनपृच्छति ॥ साक्षादिति ॥ अतिसौम्यतराकृतिःअतिशयेनशांतस्वभावइत्यर्थः ॥ ५० ॥ विस्मयमेवस्फोटयति ॥ आकर्ण्येति ॥ बिभ्यतिभीताभवंति ॥ ५१ ॥ अन्यथाऽयंमयादृष्टइत्यत्रइयं चान्यथादृष्टेतिबोद्धव्यम् ॥ ५२ ॥ अन्यदपिप्रश्नत्रयमाह ॥ केनेति ॥ ५३ ॥ प्रथमप्रश्नस्योत्तरंवदंतौचरमप्रश्नस्योत्तरमाहतुः ॥ शृणुसौम्येत्यादिना ॥ ५४ ॥ अयमेवहियमइत्यादिजल्पन्दुर्वृत्तैर्दूरतःश्रूयतेदृश्यतेचेतिपंचत्रिंशच्छ्लोकेनान्वयः ॥ यमंविशिनष्टि ॥ पिंगाक्षइत्यादिना ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विश्वस्मिन्विश्वंवारूपंयस्यसविश्वरूपः ११ ॥ विश्वकर्ताविश्वोत्पादकः १२ ॥ बुधशापाद्गर्भस्थोनमृतइतिमार्तंडः ॥ तथाचहरिवंशे ॥ नखल्वयंमृतोंडस्थइतिस्नेहादभाषत ॥ अजानन्कश्यपस्तस्मा न्मार्तंडइतिचोच्यतेइति ॥ अचेतनेंऽडेवैराजरूपेणप्रविष्टत्वाद्वामार्तंडः ॥ तदुक्तं भागवते ॥ मृतेंडएवएतस्मिन्यदभूत्ततोमार्तंडइतिव्यपदेशइति १३ ॥ मिहिंमोमेहकांरातिगृह्णातिनाशयतीतिमिहिरः १४ ॥ अंशुमान्रश्मिमान् १५ ॥ अदितेःपुत्रआदित्यः १६ ॥ चः समुच्चये ॥ उष्णगुस्तिग्मरश्मिः १७ ॥ उदमयंवसुसूतेइतिसूर्यः १८ ॥ अर्यमात्रयीमूर्तिः १९ ॥ कलाकाष्ठानिमेषादिक्रमेणसर्वं जगद्वर्धयतीतिब्रध्नः २० ॥ दिवाकरोदिनकर्ता २१ ॥ ७८ ॥ द्वादशात्माद्विषण्मूर्तिः २२ ॥ सप्तहयःसप्ताश्वः २३ ॥ भास्करःप्रभाकरः २४ ॥ अहस्करोदिनकरः २५ ॥ खेआकाशेगच्छतीति खगः २६ ॥ जगत्सूतइतिसूरः २७ ॥ प्रभाकरोदीप्तिकरः २८ ॥ श्रीमानितिविशेषणम् ॥ लोकचक्षुर्लोकप्रकाकइत्यर्थः २९ ॥ ग्रहेश्वरोग्रहाणांराजा ३० ॥ ७९ ॥ त्रिलोकेशोलोकत्रयानि यन्ता ३१ ॥ लोकसाक्षीसर्वांतर्यामी ३२ ॥ तमोरिःअन्धकारशत्रुः ३३ ॥ शाश्वतोनित्यः ३४ ॥ शुचिःपवित्रः ३५ ॥ गभस्तिहस्तोरश्मिकरः ३६ ॥ तीव्रांशुस्तीक्ष्णरश्मिः ३७ ॥ तरणि स्तारकः भक्तानांसंसारोत्तारकनौस्वरूपइतिवा ३८ ॥ सुमहःशोभनतेजःस्वरूपः ३९ ॥ अरणिः अरणिरिवारणिःसर्वोत्पत्तिमतामभिव्यक्तिस्थानमित्यर्थः ॥ लोकप्रकाशकःश्रीमानितिसांबपुराणां तर्गतसांबस्तवराजेएकविंशतिनामान्यथाऽनुपपत्त्याश्रीमानित्यस्यैकनामत्वेसुमहोरणिःप्रकृष्टतेजसामुद्भवस्थानमितिनामैकत्वेनव्यावर्तव्यमिति ४० ॥ ८० ॥ दिवोमणिर्द्युमणिः ४१ ॥ हरिदश्वोहरि

विश्वरूपोविश्वकर्तामार्तंडोमिहिरोंऽशुमान् ॥ आदित्यश्चोष्णगुःसूर्योऽर्यमाब्रध्नोदिवाकरः ॥ ७८ ॥ द्वादशात्मासप्तहयोभास्करोहस्करःखगः ॥ सूरः प्रभाकरःश्रीमाँल्लोकचक्षुर्ग्रहेश्वरः ॥ ७९ ॥ त्रिलोकेशोलोकसाक्षीतमोरिःशाश्वतःशुचिः ॥ गभस्तिहस्तस्तीव्रांशुस्तरणिःसुमहोरणिः ॥८०॥ द्युमणिर्हरिदश्वोर्कोभानुमान्भयनाशनः ॥छंदोश्वोवेदवेद्यश्चभास्वान्पूषावृषाकपिः ॥ ८१ ॥ एकचक्ररथोमित्रोमंदेहारिस्तमिस्रहा ॥ दैत्यहापापहर्ताचधर्मोधर्म प्रकाशकः ॥ ८२ ॥ हेलिकश्चित्रभानुश्चकलिघ्नस्तार्क्ष्यवाहनः ॥ दिक्पतिःपद्मिनीनाथःकुशेशयकरोहरिः ॥ ८३ ॥ घर्मरश्मिर्दुर्निरीक्ष्यश्चंडांशुः कश्यपात्मजः ॥ एभिःसप्ततिसंख्याकैःपुण्यैःसूर्यस्यनामभिः ॥ ८४ ॥

द्वर्णघोटकः ४२ ॥ अतिशयेनारतिगच्छतीत्यर्कः ॥ तदुक्तम् ॥ ऋश्चगतौस्मृतोधातुरस्यकःप्रत्ययःस्मृतः ॥ गतौयस्मात्परोनास्तितस्मादर्कःसउच्यतइति ॥ जगदर्च्यतेमत्तःवाद्वाऽर्कः ४३ ॥ भानु मान्रश्मिवान् ४४ ॥ भयनाशनोभवभयच्छेत्ता ४५ ॥ गायत्र्यादीनिसप्तच्छंदांसिअश्वायस्यसच्छंदोश्वः ४६ ॥ वेदवेद्यउपनिषदेकगम्यः ४७ ॥ चःसमुच्चये ॥ भास्वान्प्रकाशवान् ४८ ॥ वृष्ट्यादिद्वारेणसर्वंजगत्पुष्णातीतिपूषा ४९ ॥ वर्षतिपुण्यफलंआकंपयतिपापफलमितिवृषाकपिः ५० ॥ ८१ ॥ एकंचक्रंयस्मिंस्तथाविधोरथोयस्यसएकचक्ररथः ५१ ॥ मित्रः सर्वत्रमित्रस्वभावः ५२ ॥ मन्देहाराक्षसास्तेषामरिर्मंदेहारिः ५३ ॥ तमिस्रहातमोहर्ता ५४ ॥ दैत्यहामन्देहादिदैत्यहंता ५५ ॥ पापहर्ताभक्तानांपापहा ५६ ॥ चःसमुच्चये ॥ धारणाद्धर्मोधर्मस्वरूपोवा ५७ ॥ तस्यै वधर्मस्यप्रकाशकोधर्मप्रकाशकः ५८ ॥८२॥ हेआकाशेलिंकतिगच्छतीतिहेलिकः ५९॥ चित्राःसप्तप्रकाराभानवोरश्मयोयस्यसाचित्रभानुः६०॥ चःसमुच्चये॥कलिघ्नःकलेर्नाशकः ६१॥तार्क्ष्यवाहनः तार्क्ष्योऽनूरुर्वाहनःसारथिर्यस्यसः उह्यतेअनेनेतिवाहनशब्दव्युत्पत्तेः ६२ ॥ दिशांपतिर्दिक्पतिः ६३ ॥ पद्मिनीनाथःकमलिनीनांप्रकाशकः ॥ तथाचोक्तम् ॥ अयमुदयातिमुद्राभंजनः पद्मिनीना मिति ६४ ॥ कुशेशयकरःपद्महस्तः ६५ ॥ हरत्यज्ञानंतिमिरादिकंचेतिहरिः ६६ ॥८३॥ घर्मरश्मिरुष्णकिरणः ॥ घर्मःस्वेदस्तज्जनकारश्मयोयस्यसइतिवा ६७ ॥ दुर्निरीक्ष्यःस्वाच्छंद्येनद्रष्टुमश

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

क्यः ६८॥ चंडांशुस्तीक्ष्णकिरणः ६९॥ कश्यपात्मजोमारीचतनयः ७० ॥ एभिरिति॥ एभिरित्यादितृतीयांतानांपदानांदद्यादर्घ्यमनर्घ्यायेतिचतुर्थेनान्वयः॥८४॥८५॥८६॥८७॥उपमौलिशिरः समीपम् ॥ ८८ ॥ मंत्रंमंत्रंप्रतिमन्त्रम् ॥ पूर्वोक्तनामान्येवात्रमंत्राः ॥ मन्त्रमात्रत्वमितिभ्रमंनिराकुर्वन्नेतदनुष्ठानस्यफलमाह ॥ अनयेत्यादिना ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ॥ ९५ ॥ ९६ ॥ इतिश्रीरामानंदकृतायांकाशीखण्डटीकायांनवमोऽध्यायः ॥ ९ ॥ ॥छ॥ ॥ सहस्राक्षस्यवह्नेश्चलोकावत्यंतसुंदरौ ॥ मनःप्रीतिकरौहद्यौवर्ण्येतेदशमेऽद्भुतौ ॥ १ ॥ रमयंतीति ॥ इदमोद्विरभ्यासोऽन्वयभेदाभिप्रायेण ॥ अतीवेतिलोकोक्तिः ॥ एवार्थेइवशब्दः ॥ १ ॥ सुतीर्थफलितद्रुमं सुतीर्थस्यफलंसुतीर्थमेववाफलंतद्विद्यतेयस्यलोकस्यससुतीर्थफलितः ॥ तारकादित्वादितच्॥

प्रणवादिचतुर्थ्यंतैर्नमस्कारसमान्वितैः ॥ प्रत्येकमुच्चरन्नामदृष्ट्वादृष्ट्वादिवाकरम् ॥ ८५ ॥ विगृह्यपाणियुग्मेनताम्रपात्रंसुनिर्मलम् ॥ जानुभ्यामवनिंगत्वापरिपूर्यजलेनच ॥ ८६ ॥ करवीरादिकुसुमैरक्तचंदनमिश्रितैः ॥ दूर्वांकुरैरक्षतैश्चनिक्षिप्तैःपात्रमध्यतः ॥ ८७ ॥ दद्यादर्घ्यमनर्घ्यायसवित्रेध्यानपूर्वकम् ॥ उपमौलिसमानीयतत्पात्रंनान्यदृङ्मनाः ॥ ८८ ॥ प्रतिमंत्रंनमस्कुर्यादुदयास्तमयेरविम् ॥ अनयानामसत्तत्यामहामंत्ररहस्यया ॥ ८९ ॥ एवंकुर्वन्नरोजातुनदरिद्रोनदुःखभाक् ॥ व्याधिभिर्मुच्यतेघोरैरपिजन्मांतरार्जितैः ॥ ९० ॥ विनौषधैर्विनावैद्यैर्विनापथ्यपरिग्रहैः ॥ कालेननिधनंप्राप्तःसूर्यलोकेमहीयते ॥ ९१ ॥ इत्येकदेशःकथितोभानुलोकस्यसत्तम ॥ महातेजोनिधेरस्यकोविशेषमवैत्यहो ॥ ९२ ॥ स्वकर्णविषयीकुर्वन्निति पुण्यकथामिमाम् ॥ क्षणादालोकयांचक्रेमहेंद्रस्यमहापुरीम् ॥ ९३ ॥ ॥ अगस्तिरुवाच ॥ ॥ श्रुत्वासौरींकथामेतामप्सरोलोकसंयुताम् ॥ नदरिद्रोभवेत्क्वापिनाधर्मेषुप्रवर्तते ॥ ९४ ॥ ब्राह्मणैःसततंश्राव्यमिदमाख्यानमुत्तमम् ॥ वेदपाठेनयत्पुण्यंतत्पुण्यफलदायकम् ॥ ९५ ॥ ब्राह्मणाःक्षत्रिया वैश्याः शृण्वंतोऽध्यायमुत्तमम् ॥ पातकानिविसृज्येहगतिंयास्यंत्यनुत्तमाम् ॥ ९६ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायां चतुर्थे काशीखंडेपूर्वार्धेअप्सरःसूर्यलोकवर्णनंनामनवमोऽध्यायः ॥ ९ ॥ ॥छ॥ ॥ शिवशर्मोवाच ॥ ॥ रमयंतीमनोतीवकेयंकस्येयमीशितुः ॥ नयनानंदसंदोहदायिनीपूरनुत्तमा ॥ १ ॥ गणावूचतुः ॥ ॥ शिवशर्मन्महाभागसुतीर्थफलितद्रुम ॥ लोकोऽत्ररमतेविप्रसहस्राक्षपुरीत्वियम् ॥ २ ॥ तपोबलेनमहताविहिताविश्वकर्मणा ॥ दिवापिकौमुदीयस्याःसौधश्रेणीश्रियंश्रयेत् ॥ ३ ॥

सचासौद्रुमश्चतत्संबोधनंतथा ॥ विसर्गांतपाठेसुतीर्थफलितोद्रुमइतिचपाठेलोकएवद्रुमत्वेननिरूप्यते ॥ तत्रलोकशब्दस्यभुवनपरत्वेसुतीर्थफलितःसुतीर्थफलैःप्राप्यतइत्यर्थः ॥ सुतीर्थफलविद्रुमइतिक्वचित्पाठः ॥ तत्रसुतीर्थफलयुक्तोविशिष्टोद्रुमइत्यर्थः ॥ अत्ररमतेसहस्राक्षइतिशेषः ॥ उभयपक्षेप्यत्रकुत्रेत्याकांक्षायामाह ॥ सहस्राक्षेति ॥ तुशब्दोऽन्येभ्योलोकेभ्योविशेषद्योतनार्थः ॥ २ ॥ पुरींविशिनष्टि ॥ तपोबलेनेत्यादिसार्धद्वादशभिः ॥ एतेषुश्लोकेषुयदिदमादिशब्दानांसेयंपुरीइत्यनेनान्वयः ॥ दिवापीति ॥ यस्याइंद्रपुर्याःसौधश्रेणीश्रियंराजसदनपंक्तिशोभांदिवापिनकेवलंरात्रौदि

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्रैष्ठ्यमागतमित्याह ॥ वाच्यवाचकसंबंधइ [illegible] । नचगायत्र्याःप्रभावःसाधनीयःप्रत्यक्षसिद्धत्वादित्याह ॥ प्रभवेणेति ॥ कौशिकोविश्वामित्रः ॥ ५५ ॥ अन्यद्भुवनेत्यार्षम् ॥ अव्ययं वान्यच्छब्दः ॥ अन्यदपूर्वसामर्थ्यमितिवा [illegible] तत्कालेपूर्वोक्तप्रकारेण ॥ ५६ ॥ ५७ ॥ गायत्रीति ॥ वेदत्रयात्मकानांविष्णुरुद्रविरिंचानांगायत्रीस्वरूपत्वंयतोऽतोवेदत्रयी गायत्र्येवेत्यर्थः ॥ ५८ ॥ ततःकिंप्रकृते ॥ देवत्रयामाति ॥ येयंत्रयीतिक्वचित्पाठः ॥ कलयतीतिकालोनिमेषलवाद्यात्मकस्तदधिष्ठातावातत्प्रवर्तकश्च ॥ ५९ ॥अस्मल्लोकोवैकुंठस्तन्निवासिनः॥६०॥ तामेवश्रुतिंदर्शयतः ॥ एषोहदेवइति ॥ अस्यार्थः ॥ एषोहदेवास्त्रिष्टुभःसर्वाःसदसस्पतिमित्यस्यागायत्र्याःप्राक् ॥ इदानींस्वरूपंकथयति ॥ एषदेवःप्रदिशोदिशश्चसर्वाअनुव्याप्यप्रवर्ततेतिर्यगध्वं मधश्चैव ॥ पूर्वोहजातःअनादिनिधनःसंभूतः ॥ सउगर्भेअंतःसएवमातुरुदरेगर्भेव्यवतिष्ठते ॥ सएवचजातः ॥ सचजनिष्यमाणः ॥ तदुक्तम् ॥ सर्वंखल्विदंब्रह्मतज्जलानितिशांतउपासीते

प्रभावेणैवगायत्र्याःक्षत्रियःकौशिकोवशी ॥ राजर्षित्वंपरित्यज्यब्रह्मर्षिपदमीयिवान्॥५५॥ सामर्थ्यंप्रापचात्युच्चैरन्यद्भुवनसर्जने ॥ किंकिंनदद्याद्गायत्री सम्यगेवमुपासिता ॥ ५६ ॥ नब्राह्मणोवेदपाठान्नशास्त्रपठनादपि ॥ देव्यास्त्रिकालमभ्यासाद्ब्राह्मणःस्याद्द्विनान्यथा ॥ ५७ ॥ गायत्र्येवपरं विष्णुर्गायत्र्येवपरःशिवः ॥ गायत्र्येवपरोब्रह्मागायत्र्येवत्रयीततः ॥ ५८ ॥ देवत्रयंसभगवानंशुमालीदिवाकरः ॥ सर्वेषांमहसांराशिःकालःकालप्रवर्तकः ॥ ५९ ॥ अर्कमुद्दिश्यसततमस्मल्लोकनिवासिनः ॥ श्रुतिंह्युदाहरंतीमांसारासारविवेकिनः ॥६०॥ एषोहदेवःप्रदिशोनुसर्वाःपूर्वोहजातःसउगर्भेअंतः ॥ सएवजातःसजनिष्यमाणःप्रत्यङ्जनास्तिष्ठतिसर्वतोमुखः ॥ ६१ ॥ सदैवमुपतिष्ठेरन्सौरैःसूक्तैरतंद्रिताः ॥ येनमंत्यत्रतेविप्राविप्राभास्करसन्निभाः ॥ ६२ ॥ पुष्यार्केप्यथहस्तार्केमूलार्केप्यथवाद्विज ॥ उत्तरार्केऽथयत्कार्यंतत्फलत्येवनान्यथा ॥ ६३ ॥ पौषेमास्यर्कदिवसेयःस्नात्वाभास्करोदये ॥ दानंहोमंजपंकुर्यादर्चामर्कस्यसुव्रतः ॥ ६४ ॥ श्रद्धावानेकभक्तश्चकामक्रोधविवर्जितः ॥ सहाप्सरोभिर्द्युतिमान्सवसेदत्रभोगवान् ॥ ६५ ॥ अयनेविषुवेचापिषडशीतिमुखेषुवा ॥ विष्णुपद्यांचयेदद्युर्महादानानिसुव्रताः ॥ ६६ ॥

तिश्रुतौ ॥ प्रत्यङ्जनास्तिष्ठतिसर्वतोमुखः प्रतिप्रदार्थमंचन्यास्तिष्ठति ॥ सर्वतोमुखः सर्वतोक्षिशिरोग्रीवपाणिपादःअचिंत्यशक्तिरित्यर्थः ॥ जनाइत्याद्युदात्तस्वरमपिसदामंत्रितमेवार्थस्याहिप्राप्त मेतद्वर्ततेहेजनाइति ॥ ६१ ॥ येसदैवमुक्तप्रकारैःसौरैःसूक्तैः उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यमित्याद्यैस्तंसूर्यमुपतिष्ठेरन् येचतंनमंतितेऽपिभास्करतुल्याइत्यर्थः ॥ येवसंत्यत्रते विप्रविप्राइतिक्वचित्पाठः ॥ ६२ ॥ पुष्यार्केइत्यादावर्कशब्दोर्कवासरविषयः ॥ फलत्येवफलवद्भवत्येवेत्यर्थः ॥ एवकारव्यावर्त्यमाह ॥ नान्यथेति ॥ फलत्येषइतिक्वचित्पाठः ॥ तत्रएषसूर्यस्त त्कार्यंफलतिफलवन्निष्पादयति ॥ सफलंकरोतीत्यर्थः ॥ ६३ ॥ ६४ ॥ अत्रसूर्यलोके ॥ ६५ ॥ अयन इति ॥ अयनेअयनद्वितयेमकरकर्कटसंक्रमणे ॥ विषुवेविषुवद्वितयेतुलामेषसंक्रमणे ॥ षडशी

---

१ पुष्येमासीतिप्रचुरःपाठः । २ दृश्यतेइत्यपिक्वचित्पाठः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

क्यः ६८॥ चंडांशुस्तीक्ष्णकिरणः ६९॥ कश्यपात्मजोमारीचतनयः ७० ॥ एभिरिति॥ एभिरित्यादितृतीयांतानांपदानांदद्यादर्घ्यमनर्घ्यायेतिचतुर्थेनान्वयः॥८४॥८५॥८६॥८७॥उपमौलिशिरः समीपम् ॥ ८८ ॥ मंत्रंमंत्रंप्रतिमन्त्रम् ॥ पूर्वोक्तनामान्येवात्रमंत्राः ॥ मन्त्रमात्रत्वमितिभ्रमंनिराकुर्वन्नेतदनुष्ठानस्यफलमाह ॥ अनयेत्यादिना ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ इतिश्रीरामानंदकृतायांकाशीखण्डटीकायांनवमोऽध्यायः ॥ ९ ॥ ॥छ॥ ॥ सहस्राक्षस्यवह्नेश्चलोकावत्यंतसुंदरौ ॥ मनःप्रीतिकरौहृद्यौवर्ण्येतेदशमेऽद्भुतौ ॥ १ ॥ रमयंतीति ॥ इदमोद्विरभ्यासोऽन्वयभेदाभिप्रायेण ॥ अतीवेतिलोकोक्तिः ॥ एवार्थेइवशब्दः ॥ १ ॥ सुतीर्थफलितद्रुमं सुतीर्थस्यफलंसुतीर्थमेववाफलंतद्विद्यतेयस्यलोकस्यससुतीर्थफलितः ॥ तारकादित्वादितच् ॥

प्रणवादिचतुर्थ्यंतैर्नमस्कारसमन्वितैः ॥ प्रत्येकमुच्चरन्नामदृष्ट्वादृष्ट्वादिवाकरम् ॥ ८५ ॥ विगृह्यपाणियुग्मेनताम्रपात्रंसुनिर्मलम् ॥ जानुभ्यामवनिंगत्वाप रिपूर्यजलेनच ॥ ८६ ॥ करवीरादिकुसुमैरक्तचंदनमिश्रितैः ॥ दूर्वांकुरैरक्षतैश्चनिक्षिप्तैःपात्रमध्यतः ॥ ८७ ॥ दद्यादर्घ्यमनर्घ्यायसवित्रेध्यानपूर्व कम् ॥ उपमौलिसमानीयतत्पात्रंनान्यदृङ्मनाः ॥ ८८ ॥ प्रतिमंत्रंनमस्कुर्यादुदयास्तमयेरविम् ॥ अनयानामसतत्यामहामंत्ररहस्यया ॥ ८९ ॥ एवंकुर्वन्नरोजातुनदरिद्रोनदुःखभाक् ॥ व्याधिभिर्मुच्यतेघोरैरपिजन्मांतरार्जितैः ॥ ९० ॥ विनौषधैर्विनावैद्यैर्विनापथ्यपरिग्रहैः ॥ कालेननिधनं प्राप्तःसूर्यलोकेमहीयते ॥ ९१ ॥ इत्येकदेशःकथितोभानुलोकस्यसत्तम ॥ महातेजोनिधेरस्यकोविशेषमवैत्यहो ॥ ९२ ॥ स्वकर्णविषयीकुर्व न्नितिपुण्यकथामिमाम् ॥ क्षणादालोकयांचक्रेमहेंद्रस्यमहापुरीम् ॥ ९३ ॥ ॥ अगस्तिरुवाच ॥ ॥ श्रुत्वासौरींकथामेतामप्सरोलोकसंयुताम् ॥ नद रिद्रोभवेत्क्वापिनाधर्मेषुप्रवर्तते ॥ ९४ ॥ ब्राह्मणैःसततंश्राव्यमिदमाख्यानमुत्तमम् ॥ वेदपाठेनयत्पुण्यंतत्पुण्यफलदायकम् ॥ ९५ ॥ ब्राह्मणाःक्षत्रिया वैश्याः शृण्वंतोऽध्यायमुत्तमम् ॥ पातकानिविसृज्येहगतिंयास्यंत्यनुत्तमाम् ॥ ९६ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायां चतुर्थे काशीखंडेपूर्वार्धेअप्सरःसूर्यलोकवर्णनंनामनवमोऽध्यायः ॥ ९ ॥ ॥छ॥ ॥ शिवशर्मोवाच ॥ ॥ रमयंतीमनोतीवकेयंकस्येयमीशितुः ॥ नयनानं दसंदोहदायिनीपूरनुत्तमा ॥ १ ॥ गणावूचतुः ॥ ॥ शिवशर्मन्महाभागसुतीर्थफलितद्रुम ॥ लोकोऽत्ररमतेविप्रसहस्राक्षपुरीतिवियम् ॥ २ ॥ तपो बलेनमहताविहिताविश्वकर्मणा ॥ दिवापिकौमुदीयस्याःसौधश्रेणीश्रियंश्रयेत् ॥ ३ ॥

सचासौद्रुमश्चतत्संबोधनंतथा ॥ विसर्गांतपाठेसुतीर्थफलितोद्रुमइतिचपाठेलोकएवद्रुमत्वेननिरूप्यते ॥ तत्रलोकशब्दस्यभुवनपरत्वेसुतीर्थफलितःसुतीर्थफलैःप्राप्यतइत्यर्थः ॥ सुतीर्थफलविद्रुमइतिक्व चित्पाठः ॥ तत्रसुतीर्थफलयुक्तोविशिष्टोद्रुमइत्यर्थः ॥ अत्ररमतेसहस्राक्षइतिशेषः ॥ उभयपक्षेप्यत्रकुत्रेत्याकांक्षायामाह ॥ सहस्राक्षेति ॥ तुशब्दोऽन्येभ्योलोकेभ्योविशेषद्योतनार्थः ॥ २ ॥ पुरींविशिनष्टि ॥ तपोबलेनेत्यादिसार्धद्वादशभिः ॥ एतेषुश्लोकेषुयदिदमादिशब्दानांसेयंपुरीइत्यनेनान्वयः ॥ दिवापीति ॥ यस्याइंद्रपुर्याःसौधश्रेणीश्रियंराजसदनपंक्तिशोभांदिवापिनकेवलंरात्रौदि



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्रैष्ठ्यमागतमित्याह ॥ वाच्यवाचकसंबंधइति ॥ ५४ ॥ नचगायत्र्याःप्रभावःसाधनीयः प्रत्यक्षसिद्धत्वादित्याह ॥ प्रभवेणेति ॥ कौशिकोविश्वामित्रः ॥ ५५ ॥ अन्यद्भुवनेत्यार्षम् ॥ अव्ययं वान्यच्छब्दः ॥ अन्यदपूर्वंसामर्थ्यमितिवा ॥ एवंतत्तत्कालेपूर्वोक्तप्रकारेण ॥ ५६ ॥ ५७ ॥ गायत्रीति ॥ वेदत्रयात्मकानांविष्णुरुद्रविरिंचानांगायत्रीस्वरूपत्वंयतोऽतोवेदत्रयी गायत्र्येवेत्यर्थः ॥ ५८ ॥ ततःकिंप्रकृते ॥ देवत्रयमिति ॥ येयंत्रयीतिक्वचित्पाठः ॥ कलयतीतिकालोनिमेषलवाद्यात्मकस्तदधिष्ठातावातत्प्रवर्तकश्च ॥ ५९ ॥अस्मल्लोकोवैकुंठस्तन्निवासिनः॥६०॥ तामेवश्रुतिंदर्शयति ॥ एषोहदेवइति ॥ अस्यार्थः ॥ एषोहदेवस्त्रिष्टुभःसर्वाःसदसस्पतिमित्यस्यागायत्र्याःप्राक् ॥ इदानींस्वरूपंकथयति ॥ एषदेवःप्रदिशोदिशश्चसर्वाअनुव्याप्यप्रवर्ततेतिर्यगधर्ध्व मधश्चैव ॥ पूर्वोहजातःअनादिनिधनःसंभूतः ॥ सउगर्भेअंतःसएवमातुरुदरेगर्भेव्यवतिष्ठते ॥ सएवचजातः ॥ सचजनिष्यमाणः ॥ तदुक्तम् ॥ सर्वंखल्विदंब्रह्मतज्जलानितिशांतउपासीते

प्रभावेणैवगायत्र्याःक्षत्रियःकौशिकोवशी ॥ राजर्षित्वंपरित्यज्यब्रह्मर्षिपदमीयिवान्॥५५॥ सामर्थ्यंप्रापचात्युच्चैरन्यद्भुवनसर्जने ॥ किंकिंनदद्याद्गायत्री सम्यगेवमुपासिता ॥ ५६ ॥ नब्राह्मणोवेदपाठान्नशास्त्रपठनादपि ॥ देव्यास्त्रिकालमभ्यासाद्ब्राह्मणःस्याद्द्विनान्यथा ॥ ५७ ॥ गायत्र्येवपरं विष्णुर्गायत्र्येवपरःशिवः ॥ गात्र्येवपरोब्रह्मागायत्र्येवत्रयीततः ॥ ५८ ॥ देवत्रयंसभगवानंशुमालीदिवाकरः ॥ सर्वेषांमहसांराशिःकालःकालप्रवर्तकः ॥ ५९ ॥ अर्कमुद्दिश्यसततमस्मल्लोकनिवासिनः ॥ श्रुतिंह्युदाहरंतीमांसारासारविवेकिनः ॥६०॥ एषोहदेवःप्रदिशोनुसर्वाःपूर्वोहजातःसउगर्भेअंतः ॥ सएवजातःसजनिष्यमाणःप्रत्यङ्जनास्तिष्ठतिसर्वतोमुखः ॥ ६१ ॥ सदैवमुपतिष्ठेरन्सौरैःसूक्तैरतंद्रिताः ॥ येनमंत्यत्रतेविप्राविप्राभास्करसन्निभाः ॥ ६२ ॥ पुष्यार्केप्यथहस्तार्केमूलार्केप्यथवाद्विज ॥ उत्तरार्केऽथयत्कार्यंतत्फलत्येवनान्यथा ॥ ६३ ॥ पौषेमास्यर्कदिवसेयःस्नात्वाभास्करोदये॥ दानंहोमंजपंकुर्यादर्चामर्कस्यसुव्रतः ॥ ६४ ॥ श्रद्धावानेकभक्तश्चकामक्रोधविवर्जितः ॥ सहाप्सरोभिर्द्युतिमान्सवसेदत्रभोगवान् ॥ ६५ ॥ अयनेविषुवेचापिषडशीतिमुखेषुवा ॥ विष्णुपद्यांचयेदद्युर्महादानानिसुव्रताः ॥ ६६ ॥

तिश्रुतौ ॥ प्रत्यङ्जनास्तिष्ठतिसर्वतोमुखः प्रतिपदार्थमंचनयस्तिष्ठति ॥ सर्वतोमुखः सर्वतोक्षिशिरोग्रीवपाणिपादःअचिंत्यशक्तिरित्यर्थः ॥ जनाइत्याद्युदात्तस्वरमपिसदामंत्रितमेवार्थस्याहिप्राप्त मेतद्वर्ततेहेजनाइति ॥ ६१ ॥ येसदैवमुक्तप्रकारैःसौरैःसूक्तैः उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यमित्याद्यैस्तंसूर्यमुपतिष्ठेरन् येचतंनमंतितेऽपिभास्करतुल्याइत्यर्थः ॥ येवसंत्यत्रते विप्राविप्राइतिक्वचित्पाठः ॥ ६२ ॥ पुष्यार्कइत्यादावर्कशब्दोर्कवासरविषयः ॥ फलत्येवफलवद्भवत्येवेत्यर्थः ॥ एवकारव्यावर्त्यमाह ॥ नान्यथेति ॥ फलत्येषइतिक्वचित्पाठः ॥ तत्रएषसूर्यस्त त्कार्यंफलतिफलवन्निष्पादयति ॥ सफलंकरोतीत्यर्थः ॥ ६३ ॥ ६४ ॥ अत्रसूर्यलोके ॥ ६५ ॥ अयन इति ॥ अयनेअयनद्वितयेमकरकर्कटसंक्रमणे ॥ विषुवेविषुवद्वितयेतुलामेषसंक्रमणे ॥ षडशी

---

१ पुष्येमासीतिप्रचुरःपाठः । २ द्रुष्यतेइत्यपिक्वचित्पाठः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कपिलाज्याप्लुतैः ॥ कपिलायाघृतेनप्रोक्षितैः॥
तिसुस्वेषुधनुर्मिथुनकन्यामीनसंक्रमणेषु ॥ विष्णुपद्यांवृषवृश्चिकसिंहकुंभसंक्रांत्याम् ॥ ६६ ॥ ६७ ॥ विकर्तनसमप्रभाभवंतीतिशेषः ॥ ६८ ॥६९॥ विहीननयनाननाः विहीनानि
कपिलाज्याक्तसीतैलैरितिपाठेसत्तिलशब्देनशुक्लास्तिलागृह्यंते ॥ शुक्लैस्तुतर्पयेद्देवान्मनुष्यान्शबलैस्तिलैः॥कृष्णैस्तुतर्पयेत्पितॄन्श्रद्धावांस्तुसमाहितइतिवचनात्॥७०॥ पटच्चरंजीर्णवस्त्रमित्यमरः ॥
विगतानिनयनानिनेत्राणियेषुतानिआननानिमुखानियेषांते ॥ विहीननयनानराइतिकचित्पाठः ॥ विच्छायनयनाननाइतिचाऽन्यत्र ॥ सपटच्चराजीर्णवस्त्रसहिताः ॥ हंसहंसेतिमंत्रोयंजीवोजपतिसर्वदेति
॥ ७१ ॥ कृष्णलकेनगजात्मकेन ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ हंसइति ॥ हंति नाशयतिगच्छतिजानातिवासर्वमितिहंसः ॥ मंत्ररूपोवा ॥

महापूजांचयेकुर्युर्महामंत्राञ्जपंतिच ॥ तेऽत्रवैकर्तनेलोके
तिलाञ्जुह्वतिसाज्यांश्चब्राह्मणान्भोजयंतिच॥पितॄनुद्दिश्यचश्राद्धंयेकुर्वंतिविपश्चितः ॥ ६७ ॥ संक्रमेषुनयैर्दत्तंनस्नातंतीर्थवा
विकर्तनसमप्रभाः ॥६८॥ नदरिद्रानचदुःखार्ता नव्याधिपरिपीडिताः ॥ संक्रमेष्वर्कभक्तायेनविरूपानदुर्भगाः ॥६९॥ ॥ ७१ ॥ समं
रिषु॥विशेषहोमोनकृतःकपिलाज्याप्लुतैस्तिलैः ॥ ७० ॥ तेदृश्यंतेप्रतिद्वारंविहीननयनाननाः ॥ देहिदेहीतिजल्पंतोदेहिनःसपटच्चराः
कृष्णलकेनापियोदद्यात्कांचनंकृती ॥ सूर्यग्रहेकुरुक्षेत्रेसवसेदत्रपुण्यभाक् ॥ ७२ ॥ सर्वंगंगासमंतोयंसर्वेब्रह्मसमाद्विजाः ॥ सर्वंदेयंस्वर्णसमंराहुग्रस्ते
दिवाकरे ॥ ७३ ॥ दत्तंजप्तंहुतंस्नातंयत्किंचित्सदनुष्ठितम्॥भानूपरागेश्राद्धादितद्धेतुर्ब्रध्नसंनिधेः ॥७४॥ रविवारेसंक्रमश्चेदुपरागोऽथवाभवेत् ॥ तदायद
र्जितंपुण्यंतदिहाक्षयमाप्यते ॥ ७५ ॥ भानुवारोयदाषष्ठ्यांसप्तम्यामथजायते ॥ तदायत्सुकृतंकर्मकृतंतदिहभुज्यते ॥ ७६ ॥ हंसोभानुःसहस्रां
शुस्तपनस्तापनोरविः ॥ विकर्तनोविवस्वांश्चविश्वकर्माविभावसुः ॥ ७७ ॥

सहस्रंअपरिमिताअंशवोरश्मयोयस्यससहस्रांशुः ३ ॥ तपतीतितपनः
वचनात् ॥ शुद्धसात्त्विकइतिवा ॥ वैष्णवोंशःपरःसूर्यइतिवचनात् १ ॥ भातीतिभानुःभाःनुदतिप्रेरयतीतिवा २ ॥ अवतित्रीनिमांल्लोकांस्तेनासौरविरुच्यत इति ६ ॥ विशिष्टतेजस्त्वार्थकर्तनात्तेजः
४ ॥ तापयतीतितापनः ५ ॥ लोकानवतिरक्षतीतिरविः ॥ उक्तंच ॥ अवेतिरक्षणेधातुःप्रत्ययेस्यरुडागमः ॥ विश्वंकर्मयस्यविश्वस्यकर्मयस्मादितिवासविश्वकर्मा ९ ॥
शातनाद्वाविकर्तनः ७ ॥ विशिष्टंवसुतेजोवर्ततेयस्यसविवस्वान् ८ ॥ निपातनात्साधुत्वम् ॥ एवमन्यत्रापि ॥ चःसमुच्चये ॥
विभावसुःअग्निस्वरूपः ॥ विविधप्रकारेणधातुपुभांतिवसवोरश्मयोयस्येतिवा १० ॥ ७७ ॥



१ कृष्णलकेनगुंजयासमंतत्परिमितमित्यर्थइत्यपेक्षितामितिभाति ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वसेपिकौमुदीचांद्रिकाश्रयेदाश्रयेत् ॥ चंद्रिकैवयस्याःसदासौधश्रेणिशोभेत्यर्थः॥किंच॥३॥यदेति॥ दर्शेअमावास्यायाम्॥ दर्शइत्युपलक्षणम्॥यदायदाऽदृश्यत्वंप्राप्नोतितदातदास्वप्रेयसींस्वस्यप्रियतमां ज्योत्स्नांसौधेषुनिगूहयेत्संचारयेदित्युत्प्रेक्षा ॥ सुश्रेयसीमितिपाठे सुश्रेयसींश्रेष्ठांश्रेयस्करीमितियावदर्थाल्लोकानामित्यर्थः ॥ ४ ॥ यदच्छेति ॥ यस्याअच्छभित्तौनिर्मलसौधभित्तौस्वंप्रतिबिंबंवीक्ष्या न्ययोषिद्विशंकिताअन्यस्यस्त्रीकांतेनानीताइतिविशंकिता ॥ विशंकायांहेतुः ॥ मुग्धामूढाऽविदग्धाकाचिदेवांगनाचित्रंयथास्यात्तथाईर्ष्यावशादिवस्वांचित्रशालिकांस्वीयंसौधविशेषंआशुझटितिनावि शेदित्यर्थः ॥ एतच्चित्रमितिवा ॥ ५ ॥ हर्म्येष्विति ॥ तमोऽधकारः ॥ अपिशब्दात्सचन्द्रासुरात्रिष्वपीत्यर्थः ॥ उत्प्रेक्षेयम् ॥ ६ ॥ चंद्रेति ॥ तत्रपुर्याम् ॥ स्रुतमत्रतस्मादितिचपाठेएकंजल पदमध्याहर्तव्यम् ॥ ७ ॥ कुविंदास्तंतुवायाः ॥ पश्यतोहराअलंकरणनिर्मातारःस्वर्णकाराइत्यर्थः ॥ अलंकृतीःअलंकरणानि ॥ ८ ॥ चिन्तामणिस्तदधिष्ठात्रीदेवता ॥ चिकेतिजानातिगणयती

यदाकलानिधिःक्वापिदर्शेऽदृश्यत्वमावहेत् ॥ तदास्वप्रेयसींज्योत्स्नांसौधेष्वेपुनिगूहयेत् ॥ ४ ॥ यदच्छभित्तौवीक्ष्यस्वमन्ययोषिद्विशंकिता ॥ मुग्धानाशुविशेच्चित्रमपिस्वांचित्रशालिकाम् ॥ ५ ॥ हर्म्येषुनीलमणिभिर्निर्मितेष्वत्रनिर्भयम् ॥ स्वनीलिमानमाधायतमोऽहःस्वपितिष्ठति ॥ ६ ॥ चंद्रकांतशिलाजालस्रुतमात्रामलंजलम् ॥ तत्रचादायकलशैर्नेच्छंत्यन्यज्जलंजनाः ॥ ७ ॥ कुविंदानचसंत्यत्रनचतेपश्यतोहराः ॥ चैलान्यलंकृती रत्रयतःकल्पद्रुमोर्पयेत् ॥ ८॥ गणकानात्रविद्यंतेचिंताविद्याविशारदाः ॥ यतश्चिकेतिसर्वेषांचिंतांचिंतामणिर्द्रुतम् ॥ ९ ॥ सूपकारानसंत्यत्ररसकर्म विचक्षणाः॥दुग्धेसर्वरसानेकाकामधेनुरतोयतः ॥ १० ॥ कीर्तिरुच्चैःश्रवायस्यसर्वतोवाजिराजिषु ॥ रत्नमुच्चैःश्रवाःसोत्रहयानांपौरुषाधिकः ॥ ११ ॥ ऐरावतोदंतिवरश्चतुर्दंतोत्रराजते ॥ द्वितीयइवकैलासोजंगमस्फटिकोज्वलः ॥ १२ ॥ तरुरत्नंपारिजातःस्त्रीरत्नंसोर्वशीत्विह ॥ नंदनंवनरत्नंचरत्नंमंदाकिनी ह्यपाम् ॥ १३ ॥ त्रयस्त्रिंशत्सुराणांयाकोटिःश्रुतिसमीरिता ॥ प्रतीक्षतेसाऽवसरंसेवायैप्रत्यहंत्विह ॥ १४ ॥

तिवा ॥ चिन्तामभिप्रेतांवांछामित्यर्थः ॥ ९ ॥ अतोऽस्याम् ॥ १० ॥ कीर्तिरिति ॥ सर्वतोवाजिराजिषुसकलेष्वश्वसमूहेषु ॥ उच्चैःश्रवःश्रवणंयस्याःसाकीर्तिर्यस्यसउच्चैश्रवाः ॥ हयानांमध्येरत्नं श्रेष्ठोऽत्रास्यामित्यर्थः ॥ कथंभूतः ॥ पौरुषाधिकः पुरुषस्येदंपौरुषंबलंतेनाधिकः ॥ यद्वा पुरुषोविष्णुस्तस्यांशःपौरुषोविभूतिरित्यर्थः ॥ तेनाधिकःश्रेष्ठः ॥ उच्चैःश्रवसमश्वानामितिभगवद्वचनात् ॥ चात्रेतिपाठेसइत्यध्याहर्तव्यम् ॥ ११ ॥ १२ ॥ १३ ॥ त्रयस्त्रिंशदिति ॥ यद्यपित्रयस्त्रिंशदेवदेवाःश्रुतिप्रतिपादिताः ॥ तथाचश्रुति ॥ त्रयस्त्रिंशद्वैदेवाइति ॥ तथापितेष्वंतर्भूतान्देवान्गृहीत्वात्रय स्त्रिंशत्सुराणांयाकोटिरित्युक्तम् ॥ अवसरमवकाशम् ॥ तुशब्देनसंभ्रमोगृह्यते ॥ १४ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ १५ ॥ अमरावत्यास्तौल्यपावित्र्ययोरभावमन्यस्याह ॥ अश्वमेधेति ॥ १६ ॥ अर्चिष्मतीति ॥ वह्नियमनिर्ऋतिवरुणवायुकुबेरेशानांसप्तानामर्चिष्मत्याद्याःसप्तपुर्यः ॥ ईशस्येयमैशी ॥१७॥ नान्यतइतिपाठेनान्यस्येत्यर्थः ॥ १८ ॥ १९ ॥ २० ॥ महेंद्रपदलिप्सवःअमरावतींप्राप्तुमिच्छवः ॥ २१ ॥ शक्रैश्वर्यजिघृक्षवःइंद्रश्रियंलब्धुमिच्छवः ॥ २२ ॥ तर्हिकिमितिनागृह्णंस्तत्राह ॥ निष्प्रत्यूहमिति ॥ २३ ॥ तर्हिसविघ्नक्रतुशतानांतदनुष्ठानंनिष्फलमेवनेत्याह ॥ असमाप्तेति ॥ २४ ॥ तुलेति ॥ तुलापुरुषादीनिचतानिमहादानानिचेतितथा ॥ आदिपदेन

स्वर्गोऽपींद्रपदादन्यन्नविशिष्येतकिंचन ॥ यद्यत्त्रिलोक्यामैश्वर्यंनतत्तुल्यमनेनहि ॥ १५ ॥ अश्वमेधसहस्रस्यलभ्यंविनिमयेनयत् ॥ किंतेनतुल्यमन्यत्स्यात्पवित्रमथवामहत् ॥ १६॥ अर्चिष्मतीसंयमिनीपुण्यवत्यमलावती ॥ गंधवत्यलकेशीचनैतत्तुल्यामहर्धिभिः ॥ १७॥ अयमेवसहस्राक्षस्त्वयमेवदिवस्पतिः ॥ शतमन्युरयंदेवोनामान्येतानिनामतः ॥ १८ ॥ सप्तापिलोकपालायेतएनंसमुपासते ॥ नारदाद्यैर्मुनिवरैरयमाशीर्भिरीड्यते ॥ १९ ॥ गंधर्वएतत्स्थैर्येणसर्वेषांलोकानांस्थैर्यमिष्यते ॥ पराजयान्महेंद्रस्यत्रैलोक्यंस्यात्पराजितम् ॥ २० ॥ दनुजामनुजादैत्यास्तपस्यंत्युग्रसंयमाः ॥ गंधर्वयक्षरक्षांसिमहेंद्रपदलिप्सवः ॥ २१ ॥ सगराद्यामहीपालावाजिमेधविधायकाः ॥ कृतवंतोमहायत्नंशक्रैश्वर्यजिघृक्षवः ॥ २२ ॥ निष्प्रत्यूहंक्रतुशतंयःकश्चित्कुरुतेऽवनौ ॥ जितेंद्रियोमरावत्यांसप्राप्नोतिपुलोमजाम् ॥ २३ ॥ असमाप्तक्रतुशतावसंत्यत्रमहीभुजः ॥ ज्योतिष्टोमादिभिर्यागैर्येयजंत्यपितेद्विजाः ॥२४॥ तुलापुरुषदानादिमहादानानिषोडश ॥ येयच्छंत्यमलात्मानस्तेलभंतेऽमरावतीम् ॥ २५ ॥ अक्लीबवादिनोधीराःसंग्रामेष्वपराङ्मुखाः ॥ विक्रांतावीरशयनेतेऽत्रतिष्ठंतिभूभुजः ॥२६॥ इत्युद्देशात्समाख्यातामहेंद्रनगरीस्थितिः ॥ यायजूकावसंत्यत्रयज्ञविद्याविशारदाः ॥ २७ ॥ इमामर्चिष्मतींपश्यवीतिहोत्रपुरींशुभाम् ॥ जातवेदसियेभक्तास्तेवसंत्यत्रसुव्रताः ॥ २८ ॥ अग्निप्रवेशंयेकुर्युर्दृढसत्त्वाजितेंद्रियाः ॥ स्त्रियोवासत्त्वसंपन्नास्तेसर्वेअग्नितेजसः ॥ २९ ॥ अग्निहोत्ररताविप्रास्तथाग्निब्रह्मचारिणः ॥ पंचाग्निव्रतिनोयेवैतेऽग्निलोकेग्नितेजसः ॥ ३० ॥

हिरण्यगर्भादीनिगृह्यंते॥तानिचलैंगेदर्शितानि॥ तथाहि ॥ तुलाहिरण्यगर्भश्चब्रह्मांडाख्यंतृतीयकम् ॥ कल्पतरुर्गोसहस्रंनामधेयंतुपंचमम् ॥ हिरण्यकामधेनुश्चहिरण्याश्वश्चसप्तमः ॥ हिरण्याश्वरथश्चैवहमहस्तिरथस्तथा॥पंचलांगलदानंचधराख्यंविश्वचक्रकम्॥कल्पलताह्वयंचान्यत्सप्तसागरमेवच॥रत्नधेनुर्महाभूतघटेत्येतानिषोडश ॥ महादानानिसुतरांक्रमशःकथितानिवै ॥ सर्वाण्येतानिकृतवान्पुराशंबरसूदनईत ॥ २५ ॥ २६ ॥ यायजूकायज्ञशीलाः ॥ २७ ॥ २८ ॥ २९ ॥ अग्निब्रह्मचारिणःसाग्निकाब्रह्मचारिणः ॥ चतुर्दिक्षुचत्वारोऽग्नयउपरिसूर्यश्चपंचाग्नयस्तत्तापव्रतिनःपंचाग्नि



१ विक्रताइतिक्वचित्पाठः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

व्रतिनः ॥ ३० ॥ इध्मभारान्काष्ठभारान् ॥ काष्ठंदार्विंधनंत्वेधइध्ममेधःसमित्स्त्रियामित्यमरः ॥ तषांसारत्वनीरसत्वख्यापनायतुशब्दः ॥ अग्निष्टिकांलोहादिनिर्मिताग्न्याधारस्थालिकाम् ॥
॥ ३१ ॥ ३२ ॥ आग्नेयमग्निवृद्धिकरम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ अंतरात्मांऽतःसाक्षी ॥ हिनिश्चये ॥ मांसपेशिकांमांसमयजरायुजांगर्भस्थबालतनुमितियावत् ॥

शीतेशीतापनुत्यैयस्त्विध्मभारान्प्रयच्छति ॥ कुर्यादग्निष्टिकांवाऽथसवसेदग्निसन्निधौ ॥ ३१ ॥ अनाथस्याग्निसंस्कारंयःकुर्याच्छ्रद्धयान्वितः ॥
अशक्तःप्रेरयेदन्यंसोग्निलोकेमहीयते ॥३२॥ जठराग्निविवृद्ध्यैयोदद्यादाग्नेयमौषधम् ॥ मंदाग्नयेसपुण्यात्मावह्निलोकेवसेच्चिरम् ॥ ३३ ॥ यज्ञोपस्कर
वस्तूनियज्ञार्थंद्रविणंतुवा ॥ यथाशक्तिप्रदद्याद्योह्यर्चिष्मत्यांवसेत्सवै ॥ ३४ ॥ अग्निरेकोद्विजातीनांनिःश्रेयसकरःपरः ॥ गुरुर्देवोव्रतंतीर्थंसर्वमग्निर्वि
निश्चितम् ॥ ३५ ॥ अपावनानिसर्वाणिवह्निसंसर्गतःक्षणात् ॥ पावनानिभवंत्येवतस्माद्यःपावकःस्मृतः ॥ ३६ ॥ अपिवेदंविदित्वायस्त्यक्तावै
जातवेदसम् ॥ अन्यत्रबध्नातिरतिंब्राह्मणोनसवेदवित् ॥३७॥ अंतरात्माह्ययंसाक्षान्निश्चितोह्याशुशुक्षणिः ॥ मांसग्रासान्पचेत्कुक्षौस्त्रीणांनोमांसपेशिकाम्
॥३८॥ तैजसीशांभवीमूर्तिःप्रत्यक्षादहनात्मिका ॥ कर्त्रीहंत्रीपालयित्रीविनैनांकिंविलोक्यते ॥ ३९ ॥ चित्रभानुरयंसाक्षान्नेत्रंत्रिभुवनेशितुः ॥ अंधंतमो
मयेलोकेविनैनंकःप्रकाशकः ॥ ४० ॥ धूपप्रदीपनैवेद्यपयोदधिघृतैक्षवम् ॥ एतद्भुक्तंनिषेवंतेसर्वेदिविदिवौकसः ॥ ४१ ॥ शिवशर्मोवाच ॥
॥ कोयंकृशानुःकस्यायंसूनुःकथमिदंपदम् ॥ आग्नेयंलब्धमेतेनब्रूतमेतन्ममाग्रतः ॥ ४२ ॥ ॥ गणावूचतुः ॥ ॥ आकर्णयमहाप्राज्ञवर्णयावो
यथातथम् ॥ योयंयस्ययथाऽनेनप्रापिज्योतिष्मतीपुरी ॥ ४३ ॥ नर्मदायास्तटेरम्येपुरेनर्मपुरेपुरा ॥ पुरारिभक्तःपुण्यात्माऽभवद्विश्वानरोमुनिः ॥४४॥
ब्रह्मचर्याश्रमेनिष्ठोब्रह्मयज्ञरतःसदा ॥ शांडिल्यगोत्रःशुचिमान्ब्रह्मतेजोनिधिर्वशी ॥ ४५ ॥ विज्ञाताखिलशास्त्रार्थोलौकिकाचारचंचुरः ॥ कदाचि
च्चिंतयामासहृदिध्यात्वामहेश्वरम् ॥ ४६ ॥

॥ ३८ ॥ तेजसइयंतैजसी ॥ शंभोरियंशांभवी ॥ अष्टमूर्तित्वादीश्वरस्य ॥ ३९ ॥ अंधंतमोमयेलोकइतिच्छांदसम् ॥ ४० ॥ ऐक्षवमिक्षुविकारम् ॥ ४१ ॥ ४२ ॥ प्रापिप्राप्ता ॥
॥ ४३ ॥ पुरारिभक्तस्त्रिपुरारिसेवकः ॥ ४४ ॥ ब्रह्मवेदःसएवयज्ञस्तत्ररतः ॥ वेदाध्ययनस्वरूपेऋषियज्ञेरतइत्यर्थः ॥ ४५ ॥ [1] लौकिकाचारचंचुरःलौकिकव्यवहारेनिपुणःकुशलइतिया

१ कथयावइतिक्वचित्पाठः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विड्भोजनः विड्विष्ठाविशेषेण भोजनंयस्यसतथा ॥ ५२ ॥
वत् ॥ ४६ ॥ संक्षुण्णेसम्यङ्निष्पादितेचीर्णइत्यर्थः ॥ ४७ ॥ अलोड्यविचार्य ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ विड्भोजनः विड्विष्ठाविशेषेणभोजनंयस्यसतथा ॥ ५२ ॥
ब्रह्मचर्यंहीति ॥ गार्हस्थ्येगृहाश्रमेयादृग्ब्रह्मचर्यंतादृग्ब्रह्मचारिणिस्वभावचपलेचित्तेसतिकुत्रेत्यन्वयः ॥ कीदृक् ॥ कल्पनयाबंधनयाप्रतारणयेतियावत् उज्झितंत्यक्तम् ॥ यद्वैकल्याणयोजित
मितिक्वचित्पाठः ॥ यद्वैकल्पेनयोजितमितिचान्यत्र॥५३॥ अनधिकारिणांतत्तदाश्रमनिंदापूर्वकमधिकारिणोगृहस्थस्यतत्तदाश्रमाच्छ्रैष्ठ्यमाह ॥ हठादितिषड्भिः॥ हठाद्बलादधिकाराभावेप्याग्रहादि

इदंश्रेयस्त्विदंश्रेयस्त्विदंतुसुकरंभवेत् ॥ इत्थंसर्वंसमालो
चतुर्णामप्याश्रमाणांकोतीवश्रेयसेसताम् ॥ यस्मिन्प्राप्नोतिसंक्षुण्णेपरत्रेहचवासुखम् ॥४७॥ इदंश्रेयस्त्विदंश्रेयस्त्विदंतुसुकरंभवेत् ॥ इत्थंसर्वंसमालो
ड्यगार्हस्थ्यंप्रशशंसह ॥ ४८ ॥ ब्रह्मचारीगृहस्थोवावानप्रस्थोऽथभिक्षुकः ॥ एषामाधारभूतोसौगृहस्थोनान्यथेतिच ॥ ४९ ॥ देवैर्मनुष्यैःपितृभि
स्तिर्यग्भिश्चोपजीव्यते ॥ गृहस्थःप्रत्यहंयस्मात्तस्माच्छ्रेष्ठोगृहाश्रमी ॥५०॥ अस्नात्वाचाप्यहुत्वावाऽदत्त्वावाश्नातियोगृही ॥ देवादीनामृणीभूत्वानरकं
प्रतिपद्यते ॥ ५१ ॥ अस्नाताशीमलंभुंक्तेत्वजपीपूयशोणितम् ॥ अहुताशीकृमीन्भुंक्तेप्यदत्त्वाविड्भोजनः ॥ ५२ ॥ ब्रह्मचर्यंहिगार्हस्थ्येयादृक्क
ल्पनयोज्झितम् ॥ स्वभावचपलेचित्तेक्वतादृग्ब्रह्मचारिणि ॥ ५३ ॥ हठाद्वालोकभीत्यावास्वार्थाद्वाब्रह्मचर्यभाक् ॥ संकल्पयतिचित्तेचेत्कृतमप्यकृतं
तदा ॥ ५४ ॥ परदारपरित्यागात्स्वदारपरितुष्टितः ॥ ऋतुकालाभिगामित्वाद्ब्रह्मचारीगृहीरितः ॥ ५५ ॥ विमुक्तरागद्वेषोयःकामक्रोधविवर्जितः ॥
साग्निःसदारःसगृहीवानप्रस्थाद्विशिष्यते ॥ ५६ ॥ वैराग्याद्गृहमुत्सृज्यगृहधर्मान्हृदिस्मरेत् ॥ सभवेदुभयभ्रष्टोवानप्रस्थोनवागृही ॥ ५७॥ अयाचितो
पस्थितयायोवृत्त्यावर्तते गृही ॥ येनकेनापिसंतुष्टोभिक्षुकात्सविशिष्यते ॥ ५८ ॥ प्रार्थयेद्यत्क्वचित्किंचिद्दुष्प्रापंवाभविष्यति ॥ अशनेषुनसंतुष्टः
सयतिःपतितोभवेत् ॥ ५९ ॥ गुणागुणंविचार्येत्थंसवैविश्वानरोद्विजः ॥ उद्वाहविधानेनस्वोचितांकुलकन्यकाम् ॥ ६० ॥ अग्निशुश्रूषणरतः
पंचयज्ञपरायणः ॥ षट्कर्मनिरतोनित्यंदेवपित्रतिथिप्रियः ॥ ६१ ॥ धर्मार्थकामान्युक्तात्मासोर्जयन्स्वस्वकालतः ॥ परस्परमसंकोचंदंपत्यो
रानुकूल्यतः ॥ ६२ ॥ पूर्वाह्णेदैविकंकर्मसोकरोत्कर्मकांडवित् ॥ मध्यंदिनेमनुष्याणांपितॄणामपराह्णके ॥६३॥ एवंबहुतिथेकालेगतेतस्याग्रजन्मनः ॥
भार्याशुचिष्मतीनामकामपत्नीवसुव्रता ॥ ६४ ॥

त्यर्थः॥स्वार्थात्स्वप्रयोजननिमित्तात् संकल्पयातिचिंतयाति ब्रह्मचर्यविरोधिकर्मेतिशेषः॥कृतंब्रह्मचर्यमित्येव॥५४॥५५॥५६॥५७॥५८॥ प्रार्थयेदिति ॥ योयतिःक्वचित्कदाचित्किंचित्प्रार्थयेत्प्रार्थ
यति॥दुष्प्रापंवायद्भविष्यतिभवतितदपिप्रार्थयाति॥समीचीनमसमीचीनंवायाचतइत्यर्थः ॥ सपतितोभवेत्स्वाश्रमाद्भ्रष्टोभवतीत्यर्थः ॥५९॥६०॥६१॥६२॥ ६३ ॥ कामपत्नीरतिस्तद्वदिव ॥ ६४ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अंकुरंकारणंपुत्रमात्रमित्यर्थः॥शंकरंकल्याणकरमभीष्टदमित्यर्थः॥६५॥६६॥ अलंकृत्यातिशयंकृत्वा॥तान्यपितानापि ॥ तानपीतिवापाठः॥अलंकृतेतिपाठेअलंकरोतीत्यलंकृत्तयामयेत्यर्थः ॥६७॥ सुवासांसिशोभनवस्त्राणि ॥ सुवासाःशोभनगृहाः ॥ चकारःसमुच्चये ॥ सुशय्याशोभनकशिपुः ॥ सुनितंबिनीशोभनपरिचारिका ॥ स्रक्तांबूलान्नपानाश्चेत्यष्टौभोगाः ॥ विसंधिरार्षः ॥ स्वधर्मिणांस्वधर्मवताम् ॥ पाठांतरेशोभनधर्मवतामित्यर्थः ॥ सुतांबूलान्नपानाश्चेतिपाठेऽष्टावितिदुर्घटम् ॥ सुतांबूलान्नपानाद्याइतिक्वचित् ॥ समाहारपाठश्चान्यत्र ॥ एतेऽष्टौ भोगामयाभुक्ता

अपश्यंत्यंकुरमपिसंततेःस्वर्गसाधनम् ॥ विज्ञायशंकरंकांतंप्रणिपत्यव्यजिज्ञपत् ॥ ६५ ॥ ॥ शुचिष्मत्युवाच ॥ आर्यपुत्रार्यधिषणप्राणनाथप्रियव्रत ॥ नदुर्लभंममास्तीहकिंचित्त्वच्चरणार्चनात् ॥ ६६ ॥ येवैभोगाःसमुचिताःस्त्रीणांतेत्वत्प्रसादतः ॥ अलंकृत्यमयाभुक्ताःप्रसंगाद्वच्मितान्यपि ॥६७॥ सुवासांसिसुवासाश्चसुशय्यासुनितंबिनी ॥ स्रक्तांबूलान्नपानाश्चअष्टौभोगाःस्वधर्मिणाम्[1] ॥ ६८ ॥ एकंमेप्रार्थितंनाथचिरायहृदिसंस्थितम् ॥ गृहस्थानांसमुचितंतत्त्वंदातुमिहार्हसि ॥ ६९ ॥ विश्वानरउवाच ॥ किमदेयंहिसुश्रोणितवप्रियहितैषिणि ॥ तत्प्रार्थयमहाभागेप्रयच्छाम्यविलंबितम् ॥७०॥ महेशितुःप्रसादेनममकिंचिन्नदुर्लभम् ॥ इहामुत्रचकल्याणिसर्वकल्याणकारिणः ॥ ७१ ॥ इतिश्रुत्वावचःपत्युस्तस्यसापतिदेवता ॥ उवाचहृष्टवदनायदिदेयोवरोमम ॥७२॥ वरयोग्यास्मिचेन्नाथनान्यंवरमहंवृणे ॥ महेशसदृशंपुत्रंदेहिमाहेश्वरागव ॥ ७३ ॥ इतिस्यावचःश्रुत्वाशुचिष्मत्याः शुचिव्रतः ॥ क्षणंसमाधिमाधायहृद्येतत्समचिंतयत् ॥७४॥ अहोकिमेतयातन्व्याप्रार्थितंह्यतिदुर्लभम् ॥ मनोरथपथाद्दूरमस्तुवासहिसर्वकृत् ॥७५॥ तेनैवास्यामुखेस्थित्वावाक्स्वरूपेणशंभुना ॥ व्याहृतंकोऽन्यथाकर्तुमुत्सहेतभवेदिदम् ॥७६॥ ततःप्रोवाचतांपत्नीमेकपत्निव्रतेस्थितः ॥ विश्वानरमुनिःश्रीमानितिकांतेभविष्यति ॥ ७७ ॥ इत्थमाश्वास्यतांपत्नींजगामतपसेमुनिः ॥ यत्रविश्वेश्वरःसाक्षात्काशीनाथोधितिष्ठति ॥ ७८ ॥ प्राप्यवाराणसींतूर्णंदृष्ट्वाथमणिकर्णिकाम् ॥ तत्याजतापत्रितयमपिजन्मशतार्जितम् ॥ ७९ ॥ दृष्ट्वासर्वाणिलिंगानिविश्वेशप्रमुखानिच ॥ स्नात्वासर्वेषुकुंडेषुवापीकूटसरःसुच ॥ ८० ॥ नत्वाविनायकान्सर्वान्गौरीःसर्वाःप्रणम्यच ॥ संपूज्यकालराजंचभैरवंपापभक्षणम् ॥ ८१ ॥ दण्डनायकमुख्यांश्चगणान्स्तुत्वाप्रयत्नतः ॥ आदिकेशवमुख्यांश्चकेशवान्परितोष्यच ॥ ८२ ॥

इतिपूर्वेणान्वयः ॥ ६८ ॥ समुचितंयोग्यम् ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ सुलभत्वंभावयति ॥ अस्त्विवति ॥ यतःसएवविश्वेश्वरएवसर्वकृत्सर्वकर्ता ॥ ७५ ॥ अतस्तेनव्याहृतंभवेद्भविष्यतीत्यन्वयः ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥

---

१ सुधर्मिणामित्येवंरूपे ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ८३ ॥ ८४ ॥ ८५ ॥ कृत्तिवासेश्वरमित्यार्षम् ॥ ८६ ॥ ८७ ॥ द्रुमीत्यत्रद्दमीत्यपिदृश्यते ॥ ८८ ॥ ८९ ॥ विभांडेश्वरास्तिलभांडेश्वरः ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥



सहस्रभोजनाद्यैश्चयतीन्विप्रान्प्रतर्प्यच ॥ महापूजो
लोलार्कमुख्यसूर्यांश्चप्रणम्यचपुनःपुनः ॥ कृत्वापिण्डप्रदानानिसर्वतीर्थेष्वतंद्रितः ॥ ८३ ॥ सहस्रभोजनाद्यैश्चयतीन्विप्रान्प्रतर्प्यच ॥ महापूजो
पंचारैश्चलिंगान्यभ्यर्च्यभक्तितः ॥ ८४ ॥ असकृच्चिन्तयामासकिंलिंगंक्षिप्रसिद्धिदम् ॥ यत्रनिश्चलतामेतितपस्तनयकाम्यया ॥ ८५ ॥
श्रीमदोंकारनाथंवाकृत्तिवासेश्वरंकिमु ॥ कालेशंवृद्धकालेशंकलशेश्वरमेवच ॥ ८६ ॥ केदारेशंतुकामेशंचन्द्रेशंवात्रिलोचनम् ॥ ज्येष्ठेशंजंबुकेशंवाजै
गीषव्येश्वरंतुवा ॥ ८७ ॥ दशाश्वमेधमीशानंद्रुमिचंडेशमेवच ॥ दृक्केशंगरुडेशंचगोकर्णेशंगणेश्वरम् ॥ ८८ ॥ ढुंढ्याशागजासिद्धाख्यंधर्मेशंतारके
श्वरम् ॥ नन्दिकेशंनिवासेशंपत्रीशंप्रीतिकेश्वरम् ॥ ८९ ॥ पर्वतेशंपशुपातिंब्रह्मेशंमध्यमेश्वरम् ॥ बृहस्पतीश्वरंवाथविभांडेश्वरमेवच ॥ ९० ॥
भारभूतेश्वरंकिंवामहालक्ष्मीश्वरंतुवा ॥ मरुत्तेशंतुमोक्षेशंगंगेशंनर्मदेश्वरम् ॥ ९१ ॥ मार्कंडमणिकर्णीशरत्नेश्वरमथापिवा ॥ अथवायोगिनीपीठं
साधकस्यैवासिद्धिदम् ॥ ९२ ॥ यामुनेशंलांगलीशंश्रीमद्विश्वेश्वरंविभुम् ॥ अविमुक्तेश्वरंवाथविशालाक्षीशमेवच ॥ ९३ ॥ व्याघ्रेश्वरंवराहेशंव्यासेशं
वृषभध्वजम् ॥ वरुणेशंविधीशंवावसिष्ठेशंशनीश्वरम् ॥ ९४ ॥ सोमेश्वरंकिमिन्द्रेशंस्वर्लीनंसंगमेश्वरम् ॥ हरिश्चंद्रेश्वरंकिंवाहरिकेशेश्वरंतुवा॥९५॥
त्रिसंध्येशंमहादेवमुपशांतिशिवंतथा॥ भवानीशंकपर्दीशंकंदुकेशंमखेश्वरम् ॥ ९६ ॥ मित्रावरुणसंज्ञंवाकिमेषामाशुपुत्रदम् ॥ क्षणंविचार्यसमुनिरिति
विश्वानरःसुधीः ॥ ९७ ॥ आज्ञातंविस्मृतंतावत्फलितोमेमनोरथः ॥ सिद्धैःसंसेवितंलिंगंसर्वसिद्धिकरंपरम् ॥ ९८ ॥ दर्शनात्स्पर्शनाद्यस्यमनोनिर्वृ
तिभाग्भवेत् ॥ उद्घाटितंसदैवास्तेस्वर्गद्वारंहियत्रवै ॥ ९९ ॥ दिवानिशंपूजनार्थंविज्ञाप्यत्रिदशेश्वरम् ॥ पञ्चमुद्रेमहापीठेसिद्धिदेसर्वजंतुषु ॥ १०० ॥
यत्रसाविकटादेवीप्रकटासिद्धिरूपिणी ॥ यत्रास्थितानांभक्तानांसाक्षात्सिद्धिविनायकः ॥ १ ॥ निर्धूयविघ्नजालानिसर्वाःसिद्धीःप्रयच्छति ॥ अविमुक्ते
महाक्षेत्रेसिद्धिक्षेत्रंहितत्परम् ॥ २ ॥ यत्रवीरेश्वरंलिंगंमहागुह्यतमंमतम् ॥ तिलांतरापिनोकाश्यांभूमिर्लिंगंविनाक्वचित् ॥ ३ ॥ परंवीरेशसद्दृशंन
लिंगंत्वाशुसिद्धिदम् ॥ धर्मदंचार्थदंसम्यक्कामदंमोक्षदंतथा ॥४॥ यथावीरेश्वरंलिंगंकाश्यांनान्यत्तथाध्रुवम् ॥ पंचस्वरोत्रगंधर्वःपरांसिद्धिमगात्पुरा॥५॥

मखेश्वरमित्यत्राजेश्वरमितिवा ॥ ९६ ॥ ९७ ॥ आज्ञातमित्याङितिस्मृतिद्योतकमव्ययम् ॥ ९८ ॥ ९९ ॥ पंचमुद्रयाविकटयाअधिष्ठिते ॥ १०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥



१ पहारैश्चेतिक्वचित्पाठः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ स्वफणामणिभिर्बहुनीराजनैरितिसंबंधः ॥ ११० ॥ ११ ॥ १२ ॥ विदेहजश्चेतिजयद्रथविशेषणम् ॥ १३ ॥ १४ ॥ वसुसुतोपमांउपरिचरवसोर्वीर्या जातसत्यवत्युपमाम् ॥ वसवोदेवास्तत्सुतोपमामितिवा ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ १२० ॥ २१ ॥ २२ ॥ २३ ॥ नेपथ्यंभूषणम् ॥ २४ ॥

विद्याधरःस्वच्छविद्योवसुपूर्णश्चयक्षराट् ॥ नृत्यंतीनिजभावेनपुराह्यत्राप्सरोवरा ॥ ६ ॥ सदेहाकोकिलालापालिंगमध्येलयंगता ॥ ऋषिर्वेदशिराना मजपन्वैशतरुद्रियम् ॥ ७ ॥ मन्त्रज्योतिर्मयेलिंगेसशरीरोविशत्पुरा ॥ चन्द्रमौलिभरद्वाजावुभौपाशुपतोत्तमौ ॥ ८ ॥ वीरेश्वरंसमभ्यर्च्यगायमानौ लयंगतौ ॥ शंखचूडोहिनागेंद्रःस्वफणामणिभिर्निशि ॥ ९ ॥ षण्मासात्सिद्धिमगमद्बहुनीराजनैरिह ॥ किन्नरीहंसपद्यत्रभर्त्रावेणुप्रियेणवै ॥ ११० ॥ गायंतीसुस्वरंयातापरांनिर्वाणभूमिकाम् ॥ असंख्याताःसहस्राणिसिद्धाःसिद्धिमिहागताः ॥ ११ ॥ सिद्धलिंगमिहाख्यातंतस्माद्वीरेश्वरंपरम् ॥ १२ ॥ वीरेश्वरंसमाराध्यभ्रष्टराज्योजयद्रथः ॥ हत्वारिपूनस्खलितंराज्यंप्रापविदेहजः ॥ १३ ॥ विदूरथोऽथनृपतिरपुत्रःपुत्रवानभूत् ॥ वीरेश्वरप्रसादेनमगधा धिपतिर्वशी ॥ १४ ॥ वसुदत्तोत्रचवणिक्सुतांवसुसुतोपमाम् ॥ अब्दमभ्यर्च्यवीरेशंरत्नदत्तोप्यवाप्तवान् ॥ १५ ॥ अहमप्यत्रवीरेशंसमाराध्यत्रिका लतः ॥ आशुपुत्रमवाप्स्यामियथाभिलषितंस्त्रिया ॥ १६ ॥ इतिकृत्वामतिंधीरोविप्रोविश्वानरःकृती ॥ चन्द्रकूपजलैःस्नात्वाजग्राहनियमंव्रती ॥ १७ ॥ एकाहारोभवन्मासंमासंनक्ताशनोभवत् ॥ अयाचिताशनोमासंमासंत्यक्ताशनःपुनः ॥ १८ ॥ पयोव्रतोभवन्मासंमासंशाकफलाशनः ॥ मासंमुष्टितिलाहारोमासंपानीयभोजनः ॥ १९ ॥ पंचगव्याशनोमासंमासंचांद्रायणव्रती ॥ मासंकुशाग्रजलभुङ्मासंश्वसनभक्षणः ॥ १२० ॥ अथत्रयोदशेमासिस्नात्वात्रिपथगांभसि ॥ प्रत्यूषएववीरेशंयावदायातिसद्द्विजः ॥ २१ ॥ तावद्विलोकयांचक्रेमध्येलिंगंतपोधनः ॥ विभूतिभूषितंबाल मष्टवर्षाकृतिंशुभम् ॥२२॥ आकर्णपूर्णनेत्रंचसुरक्तदशनच्छदम् ॥ चारुपिंगजटामौलिंनग्नंप्रहसिताननम् ॥ २३ ॥ शैशवोचितनेपथ्यधारिणंचित्तहा रिणम् ॥ पठंतंश्रुतिसूक्तानिहसंतंचस्वलीलया ॥ २४ ॥ तमालोक्यस्तुतिंचक्रेरोमकंचुकितोमुदा ॥ प्रोचरद्गद्गदालापोनमोस्त्वितिपुनःपुनः ॥ २५ ॥ विश्वानरउवाच ॥ ॥ एकंब्रह्मैवाद्वितीयंसमस्तंसत्यंसत्यंनेहनानास्तिकिंचित् ॥ एकोरुद्रोनद्वितीयोवतस्थेतस्मादेकंत्वांप्रपद्येमहेशम् ॥ २६ ॥

॥ २५ ॥ अभिलाषप्रदैःपद्यैरष्टभिर्बालरूपिणम् ॥ तुष्टावपरमानंदंदेवंविश्वानरःकृती ॥ एकमिति ॥ समस्तंजगद्ब्रह्मेत्यन्वयः ॥ किंमृद्घटवदौपचारिकंनेत्याह ॥ सत्यंसत्य मिति ॥ निश्चयार्थावीप्सा ॥ बाधेसामानाधिकरण्यान्नोपचारइतिभावः ॥ तर्हिब्रह्मविष्णुरुद्रःसजातीयभेदोभविष्यतिनेत्याह ॥ एकमिति ॥ ननुकालाकाशादेःसत्यत्वेनप्रतीतेस्तेनवि

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

जातीयभेदोभवेत्तत्राह ॥ अद्वितीयमिति ॥ तर्हिस्वगतभेदःस्यान्नेत्याह ॥ एकइति ॥ एकमेवाद्वितीयमितिश्रुतेरित्यर्थः ॥ नन्वस्मिन्ग्रामेएकएवपुरुषइतिवदेषाश्रुतिरुपचारपरेत्याशंक्याह ॥ नेहनानास्तिकिंचिदिति ॥ नेहनानास्तिकिंचनेतिश्रुतेरित्यर्थः ॥ भूयसीनांश्रुतीनामैक्यपरत्वावगमान्नोपचारत्वमेकमेवेत्यादिश्रुतेरितिभावः ॥ उपसंहरन्प्रणमति एकइति॥ यस्मादेकःकेवलःसजातीयस्वगतभेदरहितोऽद्वितीयोविजातीयभेदरहितः ॥ रुद्रःरुत्संसारदुःखंद्रावयतिनाशयतीतिरुद्रोऽवतस्थेऽवतिष्ठते ॥ एकएवरुद्रोवतस्थेनद्वितीयइतिश्रुतेः ॥ तस्मादेकंसजातीयविजातीयस्वगतभेदशून्यं महेशंमहांतमीश्वरंत्वांशरणमाश्रयंरक्षितारंप्रपद्येभजेइत्यर्थः ॥ २६ ॥ जगत्कर्तृत्वोपाधिंभगवंतंस्तुवन्ननेककर्तारइतिमतंनिराकरोति ॥ एकःकर्तेति ॥ कथंतर्हिप्रतिशरीरंतद्भेदप्रतीतिस्तत्राह ॥ नानारूपेष्विति ॥ उपाधिभेदादेकस्यबहुधाभानेदृष्टांतमाह ॥ यद्वदिति ॥ अपोपःप्रतिप्रत्यप् तासुप्रत्यप्सु ॥ छांदसोऽयंप्रयोगः ॥ स्वर्कःशोभनोमेघाघनाच्छादितोऽर्कइति वा ॥ प्रत्यंब्वितिवापाठः ॥ तदुक्तम् ॥ एकएवहिभूतात्माभूतेभूतेव्यवस्थितः ॥ एकधाबहुधाचैवदृश्यतेजलचंद्रवदिति ॥ चंद्रसमानन्यायत्वात्सूर्योपितथा ॥ २७ ॥ प्रत्यग्ब्रह्मण्यज्ञेयप्रपंचस्यविवर्तरूपतांदृष्टांतपुरःसरमाह ॥ रज्जाविति ॥ यस्मिन्परमात्मनिज्ञातेएषोपरोक्षत्वेनप्रतीयमानःप्रपंचोविष्वक्सर्वतस्तद्वत्तथाभवतितंप्रपद्यइत्यन्वयः ॥ तद्वत्किंवत् ॥ रज्जौरज्ज्वां

एकःकर्तात्वंहिसर्वस्यशंभोनानारूपेष्वेकरूपोस्यरूपः ॥ यद्वत्प्रत्यप्स्वर्कएकोप्यनेकस्तस्मान्नान्यंत्वांविनेशंप्रपद्ये ॥२७॥ रज्जौसर्पःशुक्तिकायांचरूप्यंनैरःपूरस्तन्मृगाख्येमरीचौ ॥ यद्वत्तद्वद्विष्वगेषप्रपंचोयस्मिञ्ज्ञातेतंप्रपद्येमहेशम् ॥ २८ ॥ तोयेशैत्यंदाहकत्वंचवह्नौतापोभानौशीतभानौप्रसादः ॥ पुष्पेगंधोदुग्धमध्येपिसर्पिर्यत्तच्छंभोत्वंततस्त्वांप्रपद्ये ॥ २९ ॥ शब्दंगृह्णास्यश्रवास्त्वंहिजिघ्रेरघ्राणस्त्वंव्यंघ्रिरायासिदूरात् ॥ व्यक्षःपश्येस्त्वंरसज्ञोप्यजिह्वःकस्त्वांसम्यग्वेत्त्यतस्त्वांप्रपद्ये ॥ १३० ॥ नोवेदस्त्वामीशसाक्षाद्धिवेदनोवाविष्णुर्नोविधाताऽखिलस्य ॥ नोयोगींद्रानेंद्रमुख्याश्चदेवाभक्तोवेदत्वामतस्त्वांप्रपद्ये ॥ ३१ ॥

ज्ञातायांसर्पोयद्वत् यथाशुक्तिकायां मुक्तास्फोटेचज्ञातायांरौप्यंरजतंयथा ॥ सचासौमृगाख्यश्चेतितन्मृगाख्यस्तस्मिन्मृगाख्येमरीचौमृगतृष्णिकायाम् ॥ मृगतृष्णामरीचिकेत्यमरः ॥ सामान्यविशेषभावेनयोजनान्नपौनरुक्त्यम् ॥ तस्यांज्ञातायांनीराणामयंनैरःपूरःसमूहोयथा ॥ तद्वदिति ॥ रज्ज्वाद्यधिष्ठानेज्ञातेसर्पादिविवर्तोयथानिवर्तते तथाधिष्ठानभूतेप्रत्यग्ब्रह्मणित्वयिज्ञातेसर्वोऽपिप्रपंचोनश्यतीत्यर्थः ॥ अनेकदृष्टांतोपादानंस्वानुभवस्यात्यंतदाढर्चख्यापनाय ॥ चकारःसमुच्चये ॥ २८ ॥ सर्वशक्तिस्वरूपत्वेनस्तौति ॥ तोयेशैत्यमिति॥ हेशंभोतत्त्वतस्त्वांप्रपद्यइत्यन्वयः ॥ तत्किमितिपृच्छायामाह ॥ तोयेशैत्यमित्यादि ॥ भूमौस्थैर्यमितिक्वचित् ॥ भानौसूर्ये ॥ शीतभानौचंद्रे ॥ प्रसादआह्लादः ॥ चकारःसमुच्चये ॥ २९ ॥ शब्दमिति ॥ हिर्हेतौ सर्वत्रसंबध्यते ॥ यस्मादश्रवाःश्रवणेंद्रियरहितस्त्वंशब्दंगृह्णासिशृणोषि ॥ अघ्राणोनासिकेंद्रियरहितस्त्वंजिघ्रेःगंधंगृह्णासि ॥ व्यंघ्रिः पादरहितोदूरादायासिआगच्छसि ॥ व्यक्षोऽचक्षुस्त्वंरूपंपश्येःपश्यसि ॥ अजिह्वोरसनेंद्रियरहितस्त्वंरसज्ञोरसंजानासि ॥ तथाचश्रुतिः ॥ अपाणिपादोजवनोग्रहीतापश्यत्यचक्षुःसशृणोत्यकर्णइत्याद्या ॥ अतस्त्वांकःसम्यगपरोक्षतयावेत्तिजानातिनकोपीत्यर्थः ॥ १३० ॥ तर्हिवेदोज्ञास्यतिनेत्याह ॥ नोवेदइति ॥ हेईशस्वप्रकाशंत्वांवेदोनवेद ॥ यतोवाचोनिवर्तंतइतिश्रुतेः ॥ कथंतर्ह्यौपनिषदत्वमित्याशंकायामाह ॥ साक्षादिति ॥ लक्षणयातदुपपत्तिरितिभावः ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तर्हिविष्ण्वाद्योज्ञास्यंतिनेत्याह ॥ नोवाविष्णुरित्यादि ॥ तर्ह्यधिकार्यभावाल्लक्षणयाप्यज्ञेयत्वमेवनेत्याह ॥ भक्तोवेदेति ॥ भक्त्यभावेविष्ण्वादेरपिदुर्ज्ञेयस्त्वमितिभावः ॥ ३१ ॥ अवर्णमजरममरम
रूपमव्ययम् ॥ अनामागोत्रमित्यादिश्रुतिसिद्धंस्तौति ॥ नोतेगोत्रमिति ॥ नेशजन्मेत्यत्रनापिजन्मेतिक्वचित्पाठः ॥ पूरयेःपूरयसि॥३२॥यतोवाइमानिभूतानिजायंते त्वंस्त्रीत्वंपुमानसित्वंकुमारउतवा
कुमारी ॥ त्वंजीर्णोदंडेनवंचसित्वंजातोभवसिविश्वतोमुखः॥ सर्वंविष्णुमयंजगदित्यादिश्रुतिसिद्धेसर्वकारणत्वसर्वात्मत्वेदर्शयति ॥ त्वत्तःसर्वमिति ॥ त्वंहिसर्वमित्येतत्प्रपंचयाति॥त्वंगौरीशइत्यादिना॥

नोतेगोत्रंनेशजन्मापिनाख्यानोवारूपंनैवशीलंनदेशः ॥ इत्थंभूतोपीश्वरस्त्वंत्रिलोक्याःसर्वान्कामान्पूरयेस्तद्भजेत्वाम् ॥ ३२ ॥ त्वत्तःसर्वंत्वंहिसर्वं
स्मरारेत्वंगौरीशस्त्वंचनग्नोऽतिशांतः ॥ त्वंवैवृद्धस्त्वंयुवात्वंचबालस्तत्त्वंयत्किंनास्यतस्त्वांनतोस्मि ॥ ३३ ॥ स्तुत्वेतिभूमौनिपपातविप्रःसदं
डवद्यावदतीवहृष्टः ॥ तावत्सबालोखिलवृद्धवृद्धःप्रोवाचभूदेववरंवृणीहि ॥ ३४ ॥ ततउत्थायहृष्टात्मामुनिर्विश्वानरःकृती ॥ प्रत्यब्रवीत्किमज्ञातंसर्व
ज्ञस्यतवप्रभो ॥ ३५ ॥ सर्वांतरात्माभगवान्सर्वःसर्वप्रदोभवान् ॥ याच्ञांप्रतिनियुंक्तेमांकिमीशोदैन्यकारिणीम् ॥ ३६ ॥ इतिश्रुत्वावचस्तस्यदेवो
विश्वानरस्यह ॥ शुचेःशुचिव्रतस्याशुशुचिस्मित्वाब्रवीच्छिशुः ॥ ३७ ॥ बालउवाच ॥ त्वयाशुचेशुचिष्मत्यांयोभिलापःकृतोहृदि ॥ अचिरेणैवकाले
नसभविष्यत्यसंशयः ॥ ३८ ॥ तवपुत्रत्वमेष्यामिशुचिष्मत्यांमहामते ॥ ख्यातोगृहपतिर्नाम्नाशुचिःसर्वामरप्रियः ॥ ३९ ॥ अभिलाषाष्टकंपुण्यंस्तो
त्रमेतत्त्वयेरितम् ॥ अब्दंत्रिकालपठनात्कामदंशिवसंनिधौ ॥ १४० ॥ एतत्स्तोत्रस्यपठनंपुत्रपौत्रधनप्रदम् ॥ सर्वशांतिकरंचापिसर्वापत्परिनाशनम्
॥ ४१ ॥ स्वर्गापवर्गसंपत्तिकारकंनात्रसंशयः ॥ प्रातरुत्थायसुस्नातोलिंगमभ्यर्च्यशांभवम् ॥ ४२ ॥ वर्षंजपन्निदंस्तोत्रमपुत्रःपुत्रवान्भवेत् ॥
वैशाखेकार्तिकेमाघेविशेषनियमैर्युतः ॥ ४३ ॥ यःपठेत्स्नानसमयेसलभेत्सकलंफलम् ॥ कार्तिकस्यतुमासस्यप्रसादादहमव्ययः ॥ ४४ ॥ तवपुत्रत्वमे
ष्यामियस्त्वन्यस्तत्पठिष्यति ॥ अभिलाषाष्टकमिदंनदेयंयस्यकस्यचित् ॥ ४५ ॥ गोपनीयंप्रयत्नेनमहावंध्याप्रसूतिकृत् ॥ स्त्रियावापुरुषेणापि
नियमाल्लिंगसंनिधौ ॥ ४६ ॥ अब्दंजप्तमिदंस्तोत्रंपुत्रदंनात्रसंशयः ॥ इत्युक्त्वांतर्दधेबालःसोपिविप्रोगृहंगतः ॥ १४७ ॥ इति श्रीस्कांदेमहापुराण
एकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखण्डेपूर्वार्द्धेइंद्राग्निलोकवर्णनंनामदशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ अगस्तिरुवाच ॥ ॥ शृणुसुश्रो
णिसुभगेवैश्वानरसमुद्भवम् ॥ पुण्यशीलसुशीलाभ्यांयथोक्तंशिवशर्मणे ॥ १ ॥

अन्वयमुखेनसर्वात्मत्वमुक्त्वाव्यतिरेकेणापितदाह ॥ तत्त्वामिति ॥ यत्त्वंनअसिनभवसितत्किंनास्तीत्यर्थः ॥ तत्किंयत्त्वंनासीतिपाठेपिसएवार्थः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ शुचिस्मित्वा
शुचियथास्यात्तथाईषद्धास्यंकृत्वेत्यर्थः ॥ ३७॥३८॥ ३९॥१४०॥४१॥४२॥४३॥ कार्तिकमासाराधनेनतोषितत्वात्तत्प्रसादादित्युक्तम्॥४४॥तदभिलाषाष्टकंस्तोत्रम् ॥ ४५ ॥ ४६ ॥ १४७ ॥
इतिश्रीरामानंदकृतायांकाशीखंडटीकायांदशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ एकादशेग्निलोकोंतिविस्तरेणनिरुच्यते ॥ वैश्वानरसमुत्पत्तिर्वरप्राप्तिपुरःसरा ॥ १ ॥ १ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथानंतरम्॥तद्योषित्तस्यविश्वानरस्यभार्याशुचिष्मती ॥ गर्भाधानाख्येकर्मणितेनविश्वानरेणविहितेसतिअंतर्वत्नीगर्भवतीबभूवेत्यर्थः ॥२॥ पुंसवनंगर्भस्यपुंस्त्वाधानम्॥स्पंदनात्प्राक्गर्भचलनात्प्राक् पूर्वम् ॥ गृह्योक्तविधिनावैदिकेनप्रकारेणेत्यर्थः ॥ पुंस्त्वविवृद्धयेपुंभाववृद्ध्यर्थम् ॥ गर्भस्यवीर्यातिशयायेत्यर्थः ॥३॥ अकारिकृतः ॥ चकारोभिन्नक्रमे ॥ सुखप्रसववृद्ध्यर्थंक्रियाचशोष्यंत्याख्याऽ कारीत्यन्वयः ॥ वेत्तीतिवित्तेनविदाजानतेत्यर्थः ॥ ४ ॥ अथशब्दोमंगलार्थः ॥ अतोऽनंतरंसप्रसिद्धः ॥ नामप्राकाश्ये ॥ तस्यांशुचिष्मत्यांतनयःपुत्रोबभूवेतिद्वितीयेनान्वयः ॥ कथंभूतः ॥ ताराधिपवराननःचंद्रवत्प्रसन्नमुखः ॥ किंकुर्वन् ॥ अरिष्टममंगलंदीपयन्दहन्नाशयन्नित्यर्थः ॥ यद्वा अरिष्टंसूतिकागृहंदीपयन्प्रकाशयन् ॥ अरिष्टंसूतिकागृहमितिवचनात् ॥ तत्रहेतुगर्भविशेषण माह ॥ दीप्त्यातेजसासर्वारिष्टविनाशकृदिति ॥ कस्मिन्सति ॥ शुभेलग्नेसमीचीनेराशीनामुदयेसति ॥ लग्नस्यशुभत्वमेवाह ॥ सुतारासुशोभनस्तारोध्वनिर्नामेतियावद्यासांतथाभूतासुतारासुशुभासु सतीष्वित्यर्थः ॥ सुतारासुशोभनतारास्वितिवा ॥ शततारास्वितिपाठेशतभिषास्वित्यर्थः ॥ तथागुरौबृहस्पतौ ॥ केंद्रेलग्नचतुर्थसप्तमदशमराशौस्थितेसतीत्यर्थः ॥ तथासुग्रहेष्वयुगेषुचसमीचीनेषु

अथकालेनतद्योषिदंतर्वत्नीबभूवह ॥ विधिवद्विहितेतेनगर्भाधानाख्यकर्मणि ॥ २ ॥ ततःपुंसवनंतेनस्पंदनात्प्राग्विपश्चिता ॥ गृह्योक्तविधिनासम्यक्कृतंपुंस्त्वविवृद्धये ॥ ३ ॥ सीमन्तोथाष्टमेमासिगर्भरूपसमृद्धिकृत् ॥ सुखप्रसवसिद्ध्यैचतेनाकारिक्रियाविदा ॥ ४ ॥ अथातःसत्सुतारासुताराधिपवराननः॥ केंद्रेगुरौशुभेलग्नेसुग्रहेष्वयुगेषुच ॥५॥ अरिष्टंदीपयन्दीप्त्यासर्वारिष्टविनाशकृत् ॥ तनयोनामतस्यांतुशुचिष्मत्यांबभूवह ॥६॥ सद्यःसमस्तसुखदोभूर्भुवःस्वर्निवासिनाम् ॥ गंधवाहागन्धवाहादिग्वधूमुखवासनाः ॥ ७ ॥ इष्टगन्धप्रसूनौघैर्ववर्षुस्तेघनाघनाः ॥ देवदुन्दुभयोनेदुः प्रसेदुःसर्वतोदिशः ॥८॥ परितःसरितःस्वच्छाभूतानांमानसैःसह ॥ तमोऽताम्यच्चुनितरांरजोपिविरजोभवत् ॥ ९ ॥ सत्त्वाःसत्त्वसमायुक्तावसुधासीच्छुभातदा ॥ कल्याणीसर्वतोवाणीप्राणिनःप्रीणयंत्यभूत् ॥ १० ॥

ग्रहेष्वसमेष्वित्यर्थः ॥ चकारःसमुच्चये ॥ ५ ॥ ६ ॥ तनयस्यविशेषणांतरम् ॥ सद्यइति ॥ गंधवाहावायवः ॥ ॥ गंधवहाइतिक्वचित् ॥ कथंभूताः ॥ गंधंवहंतीतिगंधवाहायथार्थाख्याआसन्नित्यर्थः ॥ गंधवाहनवाहाश्चेतिपाठेघनानांविशेषणम् ॥ कथंभूताः ॥ दिग्वधूमुखवासनाः दिग्वधूनांमुखानिवासयंतिसुगंधीनिकुर्वंतीतितथा ॥ यद्वा दिग्वधूमुखानांवासनायेषुतेतथा ॥ दिगंगनाननामृतवासिताइत्यर्थः ॥ वाहनाइतिपाठेदिग्वधूमुखेभ्योवहंतीतितथातेप्रसिद्धाघनामेघाः ॥ ७ ॥ ववर्षुर्वृष्टिंचक्रुः ॥ कैः ॥ इष्टोगंधोयेषांतथाभूतानांप्रसूनानामोघैःसमूहैः ॥ घनानिविडाः ॥ घनाघनाइत्येकंवापदम् ॥ वर्षंतोमेघाइत्यर्थः ॥ ८ ॥ तमोऽज्ञानमंधकारोवा ॥ अताम्यदनशत् ॥ रजोपिविरजोविगतरजोऽभवदनशादित्येव ॥ ९ ॥ सत्त्वाःप्राणिनः ॥ पुंस्त्वमार्षम् ॥ सत्त्वसमायुक्ताःसत्त्वगुणसंपन्नाः ॥ शुभाःशोभनाः ॥ पाठांतरेसुष्ठुधारयमाणाऽमृततुल्यावा ॥ सुधातुल्यफलसस्यादिमतीत्यर्थः ॥ यदाबभूवतदेतिसर्वत्रसंबध्यते ॥ १० ॥

१ एतद्व्याख्यानेतारास्वितिपदमध्याहृत्ययोजितमितिभाति परंत्वीदृशक्लेशबीजंकिमितिनाविद्मः । २ आर्षमेतत् । ३ सुधातदेत्येवंरूपे ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तिलोत्तमेत्यादीनांतत्रविश्वानरगृहेमुदाहर्षेणाजग्मुरित्यग्रिमेणान्वयः ॥ वरांगनावराप्सरसः ॥ ११ ॥ किंकृत्वा ॥ क्वणत्कंकणपात्राणिकरतलेकृत्वा ॥ क्वणंतिशब्दंकुर्वंतिकंकणानियेषुतानिपात्राणि तथा ॥ क्वणत्कनकपात्राणीतिक्वचित् ॥ पात्राणिविशिनष्टि ॥ मुक्तमुक्ताफलाढ्यानीतित्रिभिः ॥ मुक्तानिप्रसृतानियानिमुक्ताफलानितैराढ्यानि ॥ मुक्तमुक्ताक्षताढ्यानीतिक्वचित् ॥ यक्षकर्दमवं तिकर्पूरागरुकस्तूरीकंकोलवंति ॥ १२ ॥ वज्रवैदूर्याएवदीपाःप्रदीपास्तैःसहवादीपायेषुतानितथा ॥ हरिद्रालेपनानीत्यत्रहरिद्राक्षोदवंतीतिपाठेहरिद्राचूर्णवंतीत्यर्थः ॥ गारुत्मतागरुडस्योद्गाराज्जाताम णयएकरूपाःश्रेष्ठरूपायेषुतानितथा ॥ गारुत्मतैकदूर्वाणीतिक्वचित् ॥ शंखादियुक्तानिदधीनियेषुतानि ॥ शंखेत्यत्रसक्थितिक्वचित् ॥ १३ ॥ पद्मरागादयोमणिप्रभेदाः आख्येत्यत्राढ्येतिक्वचित् ॥

तिलोत्तमोर्वशीरंभाप्रभाविद्युत्प्रभाशुभा ॥ सुमंगलाशुभालापासुशीलाद्यावरांगनाः ॥११॥ क्वणत्कंकणपात्राणिकृत्वाकरतलेमुदा ॥ मुक्तमुक्ताफला ढ्यानियक्षकर्दमवंतिच ॥ १२ ॥ वज्रवैदूर्यदीपानिहरिद्रालेपनानिच ॥ गारुत्मतैकरूपाणिशंखशुक्तिदधीनिच ॥ १३ ॥ पद्मरागप्रवालाख्यरत्नकुं कुमवंतिच ॥ गोमेदपुष्परागेंद्रनीलसन्माल्यभांजिच ॥ १४ ॥ विद्याधर्यश्चकिन्नर्यस्तथाऽमर्यःसहस्रशः ॥ चामरव्यग्रहस्ताग्रमंगलद्रव्यपाणयः ॥ १५ ॥ गंधर्वोरगयक्षाणांसुवासिन्यःशुभस्वराः ॥ गायंत्योललितंगीतंतत्राजग्मुरनेकशः ॥ १६ ॥ मरीचिरत्रिःपुलहःपुलस्त्यःक्रतुरंगिराः ॥ वसिष्ठःकश्यपश्चाहंविभांडोमांडवीसुतः ॥ १७ ॥ लोमशोलोमचरणोभरद्वाजोथगौतमः ॥ भृगुस्तुगालवोगर्गोजातूकर्ण्यःपराशरः ॥ १८ ॥ आपस्तंबोयाज्ञवल्क्यदक्षवाल्मीकिमुद्गलाः ॥ शातातपश्चलिखितःशिलादःशंखउंछभुक् ॥ १९ ॥ जमदग्निश्चसंवर्तोमतंगोभरतोंशुमान् ॥ व्यासः कात्यायनःकुत्सःशौनकःसुश्रुतःशुकः ॥२०॥ ऋष्यशृंगोथदुर्वासारुचिर्नारदतुंबुरू ॥ उत्तंकोवामदेवश्चच्यवनोसितदेवलौ ॥२१॥ शालंकायनहारी तौविश्वामित्रोथभार्गवः ॥ मृकंडःसहपुत्रेणदाल्भ्यउद्दालकस्तथा ॥ २२ ॥ धौम्योपमन्युवत्साद्यामुनयोमुनिकन्यकाः ॥ तच्छांत्यर्थंसमाजग्मुर्धन्यं विश्वानराश्रमम् ॥ २३ ॥ ब्रह्माबृहस्पतियुतोदेवोगरुडवाहनः ॥ नंदिभृंगिसमायुक्तोगौर्यासहवृषध्वजः ॥ २४ ॥ महेंद्रमुख्यागीर्वाणानागाःपातालवा सिनः ॥ रत्नान्यादायबहुशःससरित्कामहाब्धयः ॥ २५ ॥ स्थावराजंगमंरूपंधृत्वायाताःसहस्रशः ॥ महामहोत्सवेतस्मिन्बभूवाकालकौमुदी ॥२६॥

पद्मरागप्रवालाख्यरत्नरूपंयत्कुंकुमंतद्वंति ॥ गोमेदादिमयानिसन्माल्यानिविचित्रवर्णदामानिभजंतेतानि ॥ १४ ॥ अमर्योऽमरांगनाः ॥ १५ ॥ सुवासिन्यःस्त्रियः ॥ १६ ॥ मरीचिरिति ॥ तच्छां त्यर्थंतस्यगृहपतेरग्नेःशांत्यर्थंशांतिकर्मकरणार्थंविश्वानरगृहाश्रमंमरीच्यादयआजग्मुरितिसप्तमेनान्वयः ॥ अहमगस्त्यः ॥ मांडवीसुतोमांडव्यः ॥१७॥ लोमचरणोलोमपादः ॥ जातूकर्णइतिक्वचित ॥ १८ ॥ १९ ॥ २० ॥ उत्तंकइत्यत्रोदंकइतिचक्वचित् ॥ २१ ॥ सहपुत्रेणमार्कंडेयेनसह ॥ २२ ॥ २३ ॥ तत्रेति ॥ ब्रह्मादयआयाताइतितृतीयेनान्वयः ॥ २४ ॥ २५ ॥ अकालकौमुदीअकालेऽ

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

समयेचंद्ररहितेपिरात्र्यादौकौमुदीज्योत्स्नातस्मिन्महामहोत्सवेऽभूदित्यर्थः ॥ २६ ॥ जातेति ॥ स्वयंपितामहोब्रह्मातस्यबालस्यजातकर्मचक्रेकृतवान् ॥ किंकृत्वा ॥ तद्रूपांजातकर्मप्रतिपादिकांश्रुतिं विचार्य ॥२७॥ नामकर्मविधानेनएकादशेदिवसेनाम्नाऽयंगृहपतिरितिदेयंदातुंयोग्यंनामचददावित्यर्थः ॥ किंकुर्वन् ॥ तदर्थंनामकरणार्थंश्रुतिंवेदमुच्चरन्नुच्चारयन् ॥२८॥ तामेवदर्शयति ॥ अयमग्निर्गृहपतिरितिसार्धेन ॥अस्यायमर्थः योऽयमग्निर्गृहपतिर्गार्हपत्याख्यःप्रजायाश्चातिशयेनधनस्यवेदितातमेतंयाचे ॥ हेअग्नेगृहपतेअभिद्युम्नंद्योततेर्यशोवाऽन्नंवा ॥ अभिसहइतिबलस्यनाम ॥ आयच्छस्व ॥ यमेरेतद्रूपम् ॥ एतदुक्तंभवति ॥ अस्मानभिअन्नंयशोवाबलंवागृह्णीष्वआगमयेत्यर्थः ॥ यद्वाऽस्मानभिद्युम्नमभिबलंवाआयच्छस्वस्थापयस्वसमर्पय ॥ आयतिःस्थापनार्थः ॥ २९ ॥ अग्नेगृहपतेस्थित्येतिशाखाभेदेनद्रष्टव्यम् ॥ चतुर्वेदोक्तमंत्रैराशीर्भिरभिनंद्यवर्धयित्वापितामहोजगामेतिद्वितीयेनान्वयः ॥ ३० ॥ ३१ ॥ अहोइत्यन्योन्यंस्तुवंतोयथागतंतथाजग्मुरितिचतुर्थेनान्वयः ॥

जातकर्मस्वयंचक्रेतस्यदेवःपितामहः ॥ श्रुतिंविचार्यतद्रूपांनाम्नागृहपतिस्त्वयम् ॥२७॥ इतिनामददौतस्मैदेयमेकादशेहनि ॥ नामकर्मविधानेनतदर्थं श्रुतिमुच्चरन् ॥ २८ ॥ अयमग्निर्गृहपतिर्गार्हपत्यःप्रजायावसुवित्तमः ॥ अग्नेगृहपतेभिद्युम्नमभिसहआयच्छस्व ॥ २९ ॥ अग्नेगृहपतेस्थित्यापरामपि निदर्शयन् ॥ चतुर्निगममंत्रोक्तैराशीर्भिरभिनंद्यच ॥ ३० ॥ कृत्वाबालोचितांरक्षांहंसेणहरिणासह ॥ निर्ययौहंसमारुह्यसर्वेषांप्रपितामहः ॥ ३१ ॥ अहोरूपमहोतेजस्त्वहोसर्वांगलक्षणम् ॥ अहोशुचिष्मतीभाग्यमाविरासीत्स्वयंहरः ॥ ३२ ॥ अथवाकिमिदंचित्रंशर्वेभक्तजनेष्वहो ॥ आविर्भवेत्स्वयंरुद्रोयतोरुद्रास्तदर्चकाः ॥ ३३ ॥ इतिस्तुवंतस्त्वन्योन्यंजग्मुःसर्वेयथागतम् ॥ विश्वानरंसमापृच्छ्यसंप्रहृष्टतनूरुहाः ॥ ३४ ॥ अतःपुत्रंसमीहंतेगृहस्थाश्रमवासिनः ॥ पुत्रेणलोकाञ्जयतिश्रुतिरेषासनातनी ॥ ३५ ॥ अपुत्रस्यगृहंशून्यमपुत्रस्यार्जनंवृथा ॥ अपुत्रस्यान्वयश्छिन्नोनापवित्रंह्यपुत्रतः ॥ ३६ ॥ नपुत्रात्परमोलाभोनपुत्रात्परमंसुखम् ॥ नपुत्रात्परमंमित्रंपरत्रेहचकुत्रचित् ॥ ३७ ॥ औरसःक्षेत्रजःक्रीतोदत्तःप्राप्तःसुतासुतः ॥ आपत्सुरक्षितश्चान्यःपुत्राःसप्तात्रकीर्तिताः ॥ ३८ ॥ एषामन्यतमःकार्योगृहस्थेनविपश्चिता ॥ पूर्वपूर्वःसुतःश्रेयान्हीनःस्यादुत्तरोत्तरः ॥ ३९ ॥ ॥ गणावूचतुः ॥ ॥ निष्क्रमोथचतुर्थेऽस्यमासिपित्राकृतोगृहात् ॥ अन्नप्राशनमब्दार्धेचूडाब्देचार्थवत्कृता ॥ ४० ॥

किंस्तुवंतइत्याकांक्षायामाह ॥ अहोरूपमिति ॥ ३२ ॥ रुद्रःस्वयमाविर्भवतीत्यत्रहेतुमाह ॥ यतइति ॥ रुद्रार्चकारुद्रस्वरूपाएवेतियतइतिभावः ॥ ३३ ॥ ३४ ॥ ३५ ॥ नापवित्रमिति ॥ अपुत्रतःपुत्राभावात्पुत्ररहितोगृहस्थःपवित्रंनानस्यादित्यर्थः ॥ यद्वा नानरोऽपुत्रतोऽपवित्रःस्यादित्यर्थः ॥ ३६ ॥ ३७ ॥ औरसइति ॥ अत्रलोकेसप्तपुत्राःकीर्तिताइत्यन्वयः ॥ केतेइत्यतआह ॥ औरसइत्यादिना ॥ औरसोधर्मपत्नीप्रभवः ॥ दत्तःकेनचित् ॥ प्राप्तःस्वयमेव ॥ सुतासुतःपुत्रिकाकरणेन ॥ ३८ ॥ भवंतुसप्तपुत्रास्तावताकिमित्यतआह ॥ एषामिति ॥ तत्र विशेषमाह ॥ पूर्वःपूर्वइति ॥ ३९ ॥ अब्दार्धेषष्ठेमासि ॥ चूडाकरणंअब्देवर्षे ॥ अर्थइतिपाठेकुसुमगर्भितस्निग्धकेशार्थइत्यर्थः ॥ अर्थवद्यथाविधीत्यर्थः ॥ कृतीइतिक्वचित् ॥ अस्याग्रिमेणा



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

न्वयः ॥ पूर्वत्रलिंगंविपरिणमय्यपूर्वक्रियैवसंबंधः ॥ ४० ॥ चूडाकर्मानंतरंत्र नमुपनयनम् ॥ ४१ ॥ उपाकर्मश्रावण्यांक्रियमाणंकर्म ॥ वेदान्ऋगादीन् ॥ कथंभूतान् ॥ सांगपदक्रमान् अंगानिचपदानिचक्रमश्चतत्सहितान् ॥ अध्यैष्टअधीतवान्पठितवानित्यर्थः ॥ ४२ ॥ साक्षिमात्रान्निमित्तमात्रात् ॥ आचार्यवान्पुरुषोवेद ॥ आचार्याद्वेवगृहीताविद्यासाधिष्ठचंगमयतीत्यादिश्रुत्यर्थ ज्ञापनार्थमित्यर्थः ॥ ४३ ॥ दृष्ट्वाज्ञात्वा ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ तत्रविशेषमाह ॥ गर्भेति ॥ ४८ ॥ अभिषिच्य [illegible]कंकृत्वा ॥ स्वमात्मानंदेहसंघातमित्यर्थः ॥ स्वर्धुनीति ॥ स्वर्धु न्यागंगायायत्शुद्धंकमुदकंतस्यबन्धाद्धारणादधिकशुद्धतामत्यंतपवित्रतांगंगास्नानादप्यधिकशुद्धिमित्यर्थः ॥ यद्वा स्वर्धुन्याःशुद्धंशोधकंकबंधंज[illegible]स्मादधिकशुद्धतांपावनतामित्यर्थः ॥ ४९ ॥ इतोपिमाताधिकेत्याह ॥ संन्यस्तेति ॥ मस्करीपरिव्राट् ॥ भिक्षुःपरिव्राट्कर्मंदीपाराशर्यपिमस्करी ॥ तपस्वीतापसःपारिकांक्षीवा[illegible]यमोमुनिरित्यमरः ॥ अपिरत्रभिन्नक्रमे ॥ पितुरपिवंद्यइत्य

कर्णवेधंततःकृत्वाश्रवणर्क्षेसकर्मवित् ॥ ब्र[illegible]तेजोभिवृद्ध्यर्थंपंचमेऽब्देव्रतंददौ ॥ ४१ ॥ उपाकर्मततःकृत्वावेदानध्या[illegible]त्सुधीः ॥ त्र्यब्दंवेदान्सवि धिनाऽध्यैष्टसांगप[illegible]दक्रमान् ॥ ४२ ॥ विद्याजातंसमस्तंचसाक्षिमात्राद्गुरोर्मुखात् ॥ विनयादिगुणानाविष्कुर्वन्सग्राहशक्तिमान् ॥ ४३ ॥ ततोथनवमे वर्षेपित्रोःशुश्रूषणेरतम् ॥ वैश्वानरंगृहपतिंदृष्ट्वाकामचरोमुनिः ॥ ४४ ॥ विश्वानरोटजंप्राप्यदेवर्षिर्नारदःसुधीः ॥ पप्रच्छकुशलंतत्रगृहीतार्घासनः क्रमात् ॥ ४५ ॥ ॥ नारदउवाच ॥ ॥ विश्वानरमहाभागशुचिष्मतिशुभव्रते ॥ कुरुतेयुवयोर्वाक्यमयंगृहपतिःशिशुः ॥ ४६ ॥ नान्यत्तीर्थं नवादेवोनगुरुर्नचसत्क्रिया ॥ विहायपित्रोर्वचनंनान्योधर्मःसुतस्यहि ॥ ४७ ॥ नापित्रोरधिकंकिंचित्त्रिलोक्यांतनयस्यहि ॥ गर्भधारणपोषाभ्यांपितुर्मा ता गरीयसी ॥ ४८ ॥ अंभोभिरभिषिच्यस्वंजननीचरणच्युतैः ॥ प्राप्नुयात्स्वर्धुनीशुद्धकबंधाधिकशुद्धताम् ॥ ४९ ॥ संन्यस्ताखिलकर्मापिपितुर्वंद्यो हिमस्करी ॥ सर्ववंद्येनयतिनाप्रसूर्वंद्याप्रयत्नतः ॥ ५० ॥ इदमेवतपोत्युग्रमिदमेवपरंव्रतम् ॥ अयमेवपरोधर्मोयत्पित्रोःपरितोषणम् ॥ ५१ ॥ मन्येमा न्योनाधमस्यतथान्यस्ययथायुवाम् ॥ सुखाकारैर्विनीतस्यशिशोर्गृहपतेरहम् ॥ ५२ ॥ वैश्वानरसमभ्येहिममोत्संगेनिषीदभो ॥ लक्षणानिपरीक्षेहंपा णिंदर्शयदक्षिणम् ॥ ५३ ॥ इत्युक्तोमुनिनाबालःपित्रोराज्ञामवाप्यसः ॥ प्रणम्यनारदंश्रीमान्भक्त्याप्रह्वउपाविशत् ॥ ५४ ॥

नेनसंबध्यते ॥ हीतिनिश्चितम् ॥ प्रसूर्माता ॥ अतएवोक्तंभगवत्पादैः ॥ आस्तांतावदियंप्रसूतिसमयेदुर्वारशूलव्यथानैरुच्येनिजशोषणंमलमयीशय्याचसांवत्सरी एकस्यापिनगर्भभारभरणक्लेशस्य यस्याःक्षमोदातुंनिष्कृतिमुन्नतोपितनयस्तस्यैजनन्यैनमइति ॥ अहंइतिमन्ये ॥ ५० ॥ ५१ ॥ मन्यइति ॥ अहमितिमन्ये ॥ किंतत् युवांयुवयोर्गृहपतेःशिशोर्यथाहंमान्योमाननीयःपूज्यइत्यर्थः ॥ तथान्यस्याधमस्यगृहस्थस्यशिशोर्नाहंमान्यइत्यहंमन्यइत्यर्थः ॥ यद्वा यथागृहपतेःशिशोर्युवांपितरौमान्यौतथाऽन्यस्याधमस्यशिशोःपित्रादिर्मान्योनइत्यहंमन्यइत्यर्थः ॥ कथंभूतस्यगृहपतेः ॥ सुखाकारैर्विनीतस्यसुखंक्षोभरहितमक्षुब्धंयथास्यात्तथाकारैःकार्यकारणसंघातैर्विनीतस्यनम्रस्य ॥ मुखाकारैरितिपाठेस्पष्टएवार्थः ॥ मन्येमान्योनधर्मस्यतथान्यस्ययथास्यवैइतिक्वचित्पाठः ॥ तत्रा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

प्यस्यशिशोर्धर्मस्यधर्ममूर्तेरितिव्याकर्तव्यम् ॥ अन्यत्पूर्ववत् ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ परिममौगणितवान् ॥ ५६ ॥ तिर्यगिति ॥ हेद्विजतिर्यगूर्ध्वविस्तारोच्चमानेपरिमाणेअष्टोत्तरशतांगुलः अष्टौउत्तराआधिकाःशतमंगुलयोयत्रसोऽष्टोत्तरशतांगुलःसमस्तुल्योगणितोयोऽयन्तेबालःसयथायथावल्लोकपालोभवेत्भविष्यतीत्यर्थः ॥ अर्चिष्मत्याःपुर्याःपतिरितितुहृदिस्थम् ॥ तिर्यक्प्रमाणंप्रसारिताभ्यांबाहुभ्यांज्ञातव्यम् ॥ ५७ ॥ पंचेति ॥ अयंतेबालोद्वात्रिंशल्लक्षणएवेतिविशेष्यंपूर्वश्लोकानुषज्ज्यान्वयः ॥ तान्येवद्वात्रिंशल्लक्षणानिषड्भिर्विशेषणैर्दर्शयति ॥ पञ्चसूक्ष्मः पञ्चत्वक्केशांगुलिदशनांगुलिपर्वाणिसूक्ष्माणियस्यसतथा ॥ पंचदीर्घःपञ्चभुजनेत्रहनुजानुनासादीर्घायस्यसतथा ॥ सप्तरक्तः सप्तपाणितलनेत्रांततालुजिह्वाअधरोष्ठनखारक्तायस्यसतथा ॥ षडुन्नतः षड्वक्षःकुक्ष्यलकस्कंधकरवक्त्राणिउन्नतानियस्यसतथा ॥ त्रिपृथुः त्रीणिललाटकटिवक्षांसिपृथूनिविस्तीर्णानियस्यसतथा ॥ लघुगंभीरः ॥ लघुश्चासौगंभीरश्चेतिलघुगंभीरः ॥ अत्रत्रिशब्दावध्याहर्तव्यौ ॥ त्रिलघुस्त्रिगंभीरइत्यर्थः ॥ त्रिलघुःत्रीणिग्रीवाजंघामेहनानिलघूनिह्रस्वानियस्यसतथा ॥ त्रिगंभीरः त्रयःस्वरसत्त्वनाभयोगंभीरायस्यसतथा ॥ सामुद्रिकेतुत्रिलघुरित्यत्रचतुर्ह्रस्वमित्यु

ततोदृष्ट्वास्यसर्वांगंतालुजिह्वादिजानपि ॥ आनीयकुंकुमारक्तंसूत्रंचत्रिगुणीकृतम् ॥ ५५ ॥ स्मृत्वाशिवौगणाध्यक्षमूर्ध्वीभूतमुदङ्मुखम् ॥ मुनिः परिममौबालमापादतलमस्तकम् ॥ ५६ ॥ तिर्यगूर्ध्वसमोमानेयोष्टोत्तरशतांगुलः ॥ सभवेत्पृथिवीपालोबालोऽयंतेयथाद्विज ॥ ५७ ॥ पंचसूक्ष्मः पंचदीर्घःसप्तरक्तःषडुन्नतः ॥ त्रिपृथुर्लघुगंभीरोद्वात्रिंशल्लक्षणास्त्विति ॥ ५८ ॥ पंचदीर्घाणिशस्यानियथादीर्घायुषोस्यवै ॥ भुजौनेत्रेहनुर्जानुनासाऽस्यतनयस्यते ॥ ५९ ॥ ग्रीवाजंघामेहनैश्चत्रिभिर्ह्रस्वोयमीडितः ॥ स्वरेणसत्त्वनाभिभ्यांत्रिगंभीरःशिशुःशुभः ॥ ६० ॥ त्वक्केशांगुलिदशनाः पर्वाण्यंगुलिजान्यपि ॥ तथास्यपंचसूक्ष्माणिदिक्पालपदभाग्यथा ॥ ६१ ॥ वक्षःकुक्ष्यलकंस्कंधकरंवक्त्रंषडुन्नतम् ॥ तथाऽत्रदृश्यतेबालेमहदैश्वर्यभाग्यथा ॥ ६२ ॥ पाण्योस्तलेचनेत्रांततालुजिह्वाधरोष्ठकम् ॥ सप्तारुणंचसनखमस्मिन्राज्यसुखप्रदम् ॥ ६३ ॥ ललाटकटिवक्षोभिस्त्रिविस्तीर्णो यथाह्यसौ ॥ सर्वतेजोतिरैश्वर्यंतथाप्राप्स्यातिनान्यथा ॥ ६४ ॥ कमठीपृष्ठकठिनावकर्मकरणौकरौ ॥ राज्यहेतूशिशोरस्यपादौचाध्वनिकोमलौ ॥ ६५ ॥

क्तम् ॥ तथाहि पंचदीर्घंचतुर्ह्रस्वंपञ्चसूक्ष्मंषडुन्नतम् ॥ सप्तरक्तंत्रिगंभीरंत्रिविस्तीर्णंप्रशस्यतइति ॥ ५८ ॥ क्रममनादृत्यश्लोकंव्याचष्टे ॥ पञ्चेत्यारभ्यकमठीपृष्ठकठिनावित्यतःप्राक्तनेन ॥ शस्यानिप्रशस्तानि ॥ हनुर्वदनैकदेशःकपोलयोःपरभागः ॥ अधःस्याच्चिबुकंगंडौकपोलौतत्पराहनुरित्यमरः ॥ जानुऊरुपर्व ॥ जंघाप्रसृता ॥ जंघातुप्रसृताजानूरुपर्वाष्ठीवदस्त्रियामित्यमरः ॥ ५९ ॥ मेहनंशिश्नः ॥ भगंयोनिर्द्वयोःशिश्नोमेढ्रोमेहनशेफसीइत्यमरः ॥ सत्त्वमन्तःकरणम् ॥ ६० ॥ ६१ ॥ वक्षोहृदयम् ॥ कुक्षिरुदरम् ॥ पिचण्डकुक्षीजठरोदरंतुंदमित्यमरः ॥ अलकंचूर्णकुंतलाः ॥ अलकाश्चूर्णकुंतलाइत्यमरः ॥ उभयत्रक्लीबत्वंछांदसम् ॥ यद्वा वक्षश्चकुक्षिश्चअलकाश्चवक्षःकुक्ष्यलकम् ॥ समाहारत्वादेकवद्भावः ॥ स्कंधंभुजाशिरःस्कंधोभुजशिरोंऽसोऽस्त्रीत्यमरः ॥ करंहस्तः ॥ बलिहस्तांशवःकराइत्यमरः ॥ अत्राप्युभयत्रक्लीबत्वंछांदसम् ॥ स्कंधकरवक्त्रमितिक्वचित्पाठस्तत्रसमाहारत्वादेकवद्भावउन्नेयः ॥ ६२ ॥ ६३ ॥ ६४ ॥ कमठीति ॥ अस्यशिशोःकरौराज्यहेतू

१ अत्रनखेतिक्वचित्पाठः ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

राजत्वकारणे ॥ पादौचेत्यन्वयः ॥ कथंभूतौतौकरौ ॥ कमठीपृष्ठकठिनौकमठीकूर्मस्यपत्नीडुलिरितियावत् ॥ भेकस्यपत्नीवर्षाभ्वीकूर्मस्यकमठीडुलिरित्यमरः ॥ तस्याःपृष्ठवत्कठिनौदृढावि त्यर्थः ॥ अकर्मकरणौकर्मकरणानर्हौ ॥ कर्मकरणंविनापिकठिनावित्यर्थः ॥ पादौचरणौ ॥ कथंभूतौ ॥ अध्वनिवर्त्मविषयेकोमलौमृदूइत्यर्थः ॥ ६५ ॥ अच्छिन्नेति ॥ अस्यशिशोर्हस्तेत थारेखादृश्यतेयथाऽस्यदीर्घायुष्यमर्पयेदित्यन्वयः ॥ कथंभूता ॥ कनिष्ठापृष्ठनिर्याता कनिष्ठायाअंगुल्याःपृष्ठात्पश्चान्निर्यातानिःसृतेत्यर्थः ॥ अवधिमाह ॥ तर्जनींव्याप्याच्छिन्नाऽविच्छिन्नेत्यर्थः ॥ ६६ ॥ पादादिति ॥ अस्यपादावैश्वर्यसूचकावैश्वर्यस्यप्रापकावित्यर्थः ॥ कथंभूतौ ॥ मांसलौबलवंतौसुबलिनावित्यर्थः ॥ बलवान्मांसलोंसलइत्यमरः ॥ समावबक्रौसूक्ष्मौनातिस्थूला वित्यर्थः ॥ सुशोभनौसुन्दरौ ॥ समगुल्फौसमौगुल्फौघुटिकेययोस्तौसमगुल्फौ ॥ तद्ग्रंथीघुटिकेगुल्फावित्यमरः ॥ ६७ ॥ स्वल्पाभिरिति ॥ अयंतवशिशुःराजराजोभविष्यति ॥ कीदृशः ॥ सदासुखी ॥ कैर्लक्षणैः ॥ कररेखाभिरिति ॥ लिंगेनचशेफसाशिश्नेनेत्यर्थः ॥ लिंगंचिह्नशेफसोरित्यमरः॥ कथंभूतेन ॥ कृशहस्वेन कृशंचतद्ध्रस्वंचेतितेन ॥ राजराजोलोकपालइत्यर्थः ॥ ६८॥ उत्कटेति ॥ अयंशिशुरुत्कटासनगुल्फस्फिक् उत्कटंमहत्तन्नतदासनंचेत्युत्काटासनम् तद्गुल्फेतद्योग्येस्फिचौकटिस्थमांसपिंडौयस्यसतथा ॥ स्त्रियांस्फिचौकटिप्रोथावित्यमरः ॥ अस्यगृहपतेर्नाभिर

अच्छिन्नातर्जनींव्याप्यतथारेखास्यदृश्यते ॥ कनिष्ठापृष्ठनिर्यातादीर्घायुष्यंयथार्पयेत् ॥ ६६ ॥ पादौसुमांसलौरक्तौसमौसूक्ष्मौसुशोभनौ ॥ समगुल्फौ स्वेदहीनौस्निग्धावैश्वर्यसूचकौ ॥६७॥ स्वल्पाभिःकररेखाभिरारक्ताभिःसदासुखी ॥ लिंगेनकृशह्रस्वेनराजराजोभविष्यति ॥ ६८ ॥ उत्कटासनगुल्फा[3] स्फिग्भ्राभिरस्यापिवर्तुला ॥ दक्षिणावर्तमरुणंमहदैश्वर्यसूचिका ॥ ६९॥ धारैकामूत्रयत्यस्मिन्दक्षिणावर्तिनीयदि ॥ गंधश्चमीनमधुनोर्यदिवीर्येतदानृपः ॥ ७० ॥ विस्तीर्णौमांसलौस्निग्धौस्फिचावस्यसुखोचितौ ॥ वामावर्तौसुप्रलंबौदोषौदिग्रक्षणोचितौ ॥७१॥ श्रीवत्सवज्रचक्राब्जमत्स्यकोदंडदंडभृत् ॥ तथास्यकरगारेखायथास्यात्रिदिवस्पतिः ॥ ७२ ॥ द्वात्रिंशद्दशनश्चायंकरकंबुशिरोधरः ॥ क्रौंचदुंदुभिहंसाभ्रस्वरःसर्वेश्वराधिकः ॥ ७३ ॥

पिवर्तुलाकारा ॥ कथंभूता ॥ दक्षिणावर्तमरुणंचयथाभवतितथामहदैश्वर्यसूचिकाप्रकाशिकेत्यर्थः ॥ ६९ ॥ धारैकेति ॥ अस्मिन्मूत्रयतिसतिएकाधारायदिदक्षिणावर्तिनीभवतिदक्षिणावर्तेननिः सरतीत्यर्थः ॥ यदिअस्यवीर्येमीनमधुनोर्मत्स्यक्षौद्रयोर्गंधश्चभवेत्तदाऽयंनृपइत्यर्थः ॥ ७० ॥ विस्तीर्णाविति ॥ अस्यस्फिचौकटिस्थमांसपिंडौसुखोचितौसुखयोग्यौ ॥ कथंभूतौ ॥ विस्तीर्णौ विस्तृतौ ॥ मांसलौबलवंतौ अंसलावित्यर्थः ॥ स्निग्धौचिक्कणौ ॥ अस्यदोषौहस्तौदिग्रक्षणोचितौदिक्पालनयोग्यौ ॥ कथंभूतौ ॥ वामावर्तौ वामःसुंदरआवर्तआवर्तनमावलनंययोस्तौतथा ॥ वामःसुंदरमूढयोरितिवचनात् ॥ सुप्रलंबौआजानुदीर्घावित्यर्थः ॥ ७१ ॥ श्रीवत्सेति ॥ अस्यशिशोस्तादृशीकरगारेखाऽस्तीतिशेषः ॥ यथाऽयंत्रिदिवस्पतिःस्वर्गाधिपतिःस्यात् ॥ तादृशी कीदृशीत्याकांक्षायामाह ॥ श्रीवत्सेति ॥ श्रीवत्सश्चवज्रश्चचक्रंचअब्जंचमत्स्यश्चकोदंडश्चदंडश्चतान्बिभर्तीतितथा ॥ श्रीवत्सोनामात्रदक्षिणावर्तरेखावलिविशेषः ॥ कोदंडोधनुः ॥ ७२ ॥ द्वात्रिंशद्दशनइति ॥ अयंसर्वेश्वराधिकोभविष्यतीत्यन्वयः ॥ तत्रहेतुगर्भाणिविशेषणान्याह ॥ किंविशिष्टःप्राक्तनेनग्रंथेन ॥ द्वात्रिंशद्दशनः द्वाभ्यामधिकास्त्रिंशद्दशनायस्यसः ॥ करकंबुशिरो धरः करःशुंडादंडः कंबुःशंखः॥ कंबुर्नावलयेशंखेइत्यमरः ॥ करवद्धस्तिशुंडादंडवत्सुवलिताकंबुवत्त्रिधारांकिताचशिरोधराग्रीवायस्यसः ॥ क्रौंचदुंदुभिहंसाभ्रस्वरः॥ क्रौंचादीनामिवस्वरोयस्यसः ॥

१ इदंविचारणीयम् । २ अत्रापितत्तुल्येड्यपेक्षितमितिभाति । ३ अत्रउत्कटासनतुल्यास्फिगितिपाठोपेक्षितइतिभाति ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तत्रक्रौंचःकुञ्चाख्यःपक्षी ॥ दुंदुभिर्दमामाइतिलोकप्रसिद्धोवाद्यविशेषः ॥ हंसश्चक्रांगः ॥ हंसास्तुश्वेतगरुतश्चक्रांगामानसौकसइत्यमरः ॥ अभ्रंमेघः ॥ अभ्रंमेघोवारिवाहइत्यमरः ॥ ७३ ॥
मधुपिंगलनेत्रः मधुवत्पिंगलेनेत्रेयस्यसः ॥ पंचरेखायत्रतादृशंललाटंयस्यसः ॥ सिंहोदरः सिंहस्यउदरमिवउदरंयस्यसः ॥ ७४ ॥ ऊर्ध्वरेखांकितपदः ऊर्ध्वगामिनीभिःरेखाभिरंकितौचाङ्कितौपादौ यस्यसः ॥ निःश्वसन्नसन् ॥ अच्छिद्रपाणिः अच्छिद्रौनतोन्नतरहितौपाणीहस्तौयस्यसः ॥ अच्छिद्रौसंहतांगुलीहस्तौयस्येतिवा ॥ उपसंहरति ॥ महालक्षणवानिति ॥ सर्वलक्षणवानयमि त्यर्थः ॥ ७५ ॥ एवंगुणानुक्त्वाऽपमृत्युंदर्शयति ॥ किंत्विति ॥ सर्वलक्षणलक्षितमप्येनंविधिरदृष्टंविधातावापातयेदित्यन्वयः ॥ कमिव ॥ विधुवत् चंद्रमिव ॥ उपरागेराहुद्वारेत्यर्थः ॥ सर्वलक्षणलक्षितत्वेवादृष्टांतोविधुवदिति ॥ कथंभूतंविधुम् ॥ संपूर्णनिर्मलकलं संपूर्णाःषोडशनिर्मलाःकलायस्यसपूर्णिमाचंद्रइत्यर्थस्तम् ॥ तद्धितार्थोपसर्जनस्यापिविधोःसंपूर्णनिर्मलकल मितिविशेषणंछांदसम् ॥ पालयेदितिक्वचित्पाठस्तदापालयेत्पालयत्वितिकाकूत्तयाविघ्नःसूचितः ॥ ७६ ॥ उपसंहरन्पूर्वोक्तंविवृणोति ॥ तस्मादितिसार्धेन ॥ वक्रीभूतेविषमीभूतेप्रतिकूलेजा

मधुपिंगलनेत्रोऽसौनैनंश्रीस्त्यजतिक्वचित् ॥ पंचरेखललाटस्तुतथासिंहोदरःशुभः॥७४॥ऊर्ध्वरेखांकितपदोनिःश्वसन्पद्मगंधवान् ॥ अच्छिद्रपाणिः सुनखोमहालक्षणवानयम् ॥ ७५ ॥ किंतुसर्वगुणोपेतंसर्वलक्षणलक्षितम् ॥ संपूर्णनिर्मलकलंपातयेद्विधुवद्विधिः ॥ ७६ ॥ तस्मात्सर्वप्रयत्नेनरक्षणी यस्त्वसौशिशुः ॥ गुणोपिदोषतांयातिवक्रीभूतेविधातरि ॥ ७७ ॥ शंकेऽस्यद्वादशेवर्षेप्रत्यूहोविद्युदग्नितः ॥ इत्युक्त्वानारदोधीमान्सजगामयथागतम् ॥ ७८ ॥ विश्वानरःसपत्नीकस्तच्छ्रुत्वानारदेरितम् ॥ तदेवमन्यमानोभूद्वज्रपातंसुदारुणम् ॥ ७९ ॥ हाहतोस्मीतिवचसाहृदयंसमताडयत् ॥ मूर्च्छा मवापमहतींपुत्रशोकसमाकुलः ॥ ८० ॥ शुचिष्मत्यपिदुःखार्तारुरोदातीवदुःसहम् ॥ आर्तस्वरेणहारावैरत्यंतव्याकुलेंद्रिया ॥ ८१ ॥ हाशिशोहागुण निधेहापितुर्वाक्यकारक ॥ हाकुतोमंदभाग्यायाजठरेमेसमागतः ॥ ८२ ॥ त्वदेकपुत्रांहापुत्रकोऽत्रमांत्रायतेपुरा ॥ त्वद्दतेत्वद्गुणोर्म्याढ्येपतितांशोकसा गरे ॥ ८३ ॥ हाबालहाविमलहाकमलायताक्षहालोकलोचनचकोरकुरंगलक्ष्मन् ॥ हातातताननयनाब्जमयूखमालिन्हामातुरुत्सवसहस्रसुखैकहेतो ॥ ८४ ॥ हापूर्णचंद्रमुखहासुनखांगुलीकहाचाटुकारवचनामृतवीचिपूर ॥ दुःखैःकियद्भिरहहांगमयात्वमातःकिंकिंकृतंगृहपतेनमयात्वदाप्त्यै ॥ ८५ ॥

तइत्यर्थः ॥ ७७ ॥ प्रत्यूहोविघ्नोऽपमृत्युरित्यर्थः ॥ विद्युदग्नितःवज्राग्नेरित्यर्थः ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ त्वदेकपुत्रामिति ॥ हाकष्टे ॥ पुत्रहेपुत्रपुरापूर्व मेवशोकसागरेपतितांमांकस्त्रायतेकस्त्रास्यतीत्यर्थः ॥ भयादितिक्वचित्पाठः ॥ अहमेवशोकसागरेत्रास्यामीतिचेत्तत्राह ॥ त्वद्दतेत्वांविनेत्यर्थः ॥ मत्तोऽन्यःपुत्रस्त्रास्यतीत्याशंकाया मात्मानंविशिनष्टि ॥ त्वदेकपुत्रामिति ॥ कथंभूतेशोकसागरे ॥ त्वद्गुणोर्म्याढ्येतवगुणास्त्वद्गुणास्तएवोर्मयस्तरंगास्तैराढ्येआकुले ॥ ८३ ॥ शोकाकुलासतीबहुधासंबोधयति ॥ हाबालेति ॥ सर्वत्रहाशब्दोविषादेशोकेअतौवा ॥ लोकेति ॥ लोकानांलोचनान्येवचकोराश्चंद्ररश्मिभोक्तारःपक्षिविशेषास्तेषांकुरंगलक्ष्मन् मृगलांछनचंद्रतुल्य ॥ मृगेकुरंगवातायुहरिणाजिनयो नयइत्यमरः ॥ हातातेति ॥ तातनयनाब्जमयूखमालिन्पितृनेत्राब्जसूर्य ॥ हाताततहानयनपद्मेतिक्वचित्पाठः ॥ ८४ ॥ चाटुकारेति ॥ मनोहरवाक्यसुधातरंगसमूहसमुद्रेतिवा ॥ अहहेतिखेदे ॥





CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अहहेत्यद्भुतेखेदइत्यमरः ॥ अंगहेपुत्र ॥ इहहांगेतिक्कचित् ॥ तान्येवदुःखान्याह ॥ किंकिंकृतामिति ॥ ८५ ॥ नोप्तइति ॥ नोप्तोनदत्तइतिनेत्यन्वयः ॥ बतेतिखेदे ॥ खेदानुकंपासंतोषाविस्मया मंत्रणेबतेत्यमरः ॥ अध्युषितानिसेवितानि ॥ तवकृतेत्वदर्थंकेकेमयानियमाऔषधानिमंत्रायंत्राश्चनसंसाधितानसेविताइत्यर्थः ॥ तथापिनतैस्त्वंप्राप्तइत्याह ॥ सुकृतैकलभ्य विश्वेश्वरेऽर्पितंयत्सु कृतंतेनकेवलेनलभ्य ॥ ८६ ॥ संसारेति ॥ संसारसमुद्रतारकनौस्वरूप ॥ निजवाक्सुधोक्षैः स्ववाक्यामृतसेकैः ॥ ८७ ॥ किंदेवतेति ॥ अहहखेदे ॥ अस्यशिशोर्जन्ममहोत्सवेऽस्यभाव्यनिष्टं ज्ञात्वाकिंकिमितियुगपन्मिलिताःकिमर्थमागताइत्यर्थः ॥ यद्वा अस्यभाविज्ञात्वामिलिताइत्येतत्किमितिपृच्छामीत्यर्थः ॥ मेलनेहेतुमाह ॥ एकस्थेति ॥ ८८ ॥ कालकालः कालेनयमेनकालः कालनंमारणमितियावत् ॥ ८९ ॥ हाहंतेति ॥ हाहंतविषादे ॥ हंतहर्षेऽनुकंपायांवाक्यारंभविषादयोरित्यमरः ॥ हंतेतिवाक्यारंभे हेविधेभवताकस्मादयंबालोविदधेऽकारि ॥ किंकृत्वा ॥ बहुभिः प्रयत्नैर्विशालगुणसिंधुंविस्तृतगुणरूपसमुद्रंविधाय ॥ अर्थादस्मिन्बालकइतिशेषइतिवा ॥ कथंभूतम् ॥ अगाधमध्यमनवगाहनीयमध्यमित्यर्थः ॥ सद्रत्नसारंसद्रत्नान्येवसाराणियत्रतम् ॥

नोप्तोबलिर्नबतकासुचदेवतासुतीर्थानिकानिनमयाध्युषितानिवत्स ॥ केकेमयाननियमौषधमंत्रयंत्राःसंसाधितास्तवकृतेसुकृतैकलभ्य ॥ ८६ ॥ संसारसागरतरेहरदुःखभारंसारंमुखेंदुमभिदर्शयसौख्यसिंधो ॥ पुन्नामतीव्रनरकार्णववाडवाग्नेस्संजीवयस्वपितरंनिजवाक्सुधोक्षैः ॥ ८७ ॥ किंदेवताअहहजन्ममहोत्सवेऽस्यज्ञात्वेतिभाविमिलितायुगपत्समस्ताः ॥ एकस्थसर्वगुणशीलकलाकलापसौंदर्यलक्षणपरीक्षणपूर्णहर्षाः ॥ ८८ ॥ शंभो महेशकरुणाकरशूलपाणेमृत्युंजयस्त्वमितिवेदविदोवदंति ॥ त्वद्दत्तबालतनयेयदिकालकालःस्यादेवमत्रवदकस्यभवेन्नपातः ॥ ८९ ॥ हाहंतहंतभवताभवतापहारीकस्माद्विधेऽत्रविदधेबहुभिःप्रयत्नैः ॥ बालोविशालगुणसिंधुमगाधमध्यंसद्रत्नसारमखिलंसविधंविधाय ॥ ९० ॥ हाकालबालकवतीकिमुतेनराज्ञीत्वत्कालतांनहृतवान्नसुताननेंदुः ॥ बालेतिकोमलमृणाललतांगलीलेदंभोलिनिष्ठुरकठोरकुठारदंष्ट्रः ॥ ९१ ॥ इत्थंविलप्यबहुशोनयनांबुधारासंपातजाततटिनीशतमुत्तरंगम् ॥ सातोकशोकजनितानलतापतप्ताप्रोच्छ्वस्यदीर्घविपुलोष्णमहोशुशोष ॥ ९२ ॥

अखिलंसंपूर्णम् ॥ सविधंसप्रकारम् ॥ किमित्याकांक्षयामाह ॥ भवतापहारीभवताकृत्वाऽपहारोवर्ततेयस्यसतथा ॥ सृष्ट्वापिमारणीयश्चेत्किमर्थंसृजसीत्यभिप्रायः ॥ भवतापहारीत्येकंवापदम् ॥ भवतापंहर्तुंशीलंयस्यसतथा ॥ अस्मिन्पक्षेयतोऽग्रेमारमिष्यसीतिशेषः ॥ ९० ॥ हाकालेति ॥ हाविषादे ॥ हेकालतेतवराज्ञीमहिषीकिमुबालकवतीनापितुबालकवत्येव ॥ तवसुताननेंदुःपुत्रवदनचंद्रस्त्वत्कालतांत्वत्कालनतांत्वत्कृतमारणतांनहृतवान्नदूरीकृतवान् अपितुकृतवानेव ॥ अतोऽस्मिन्बालेकिंकिमित्येवंभूतोऽसि ॥ कथंभूते ॥ कोमलायाम्मृणाललतातस्यायदंगंतस्येवलीलायस्यस तथातस्मिन् ॥ कोमलमृणाललतांगवत्सुकुमारइत्यर्थः ॥ त्वंकथंभूतः ॥ दंभोलिर्वज्रंतद्वन्निष्ठुरस्तीक्ष्णःकठोरोभयंकरोयःकुठारस्तद्वद्दंष्ट्रायस्य सः ॥ स्वपुत्रस्यरक्षणंपरपुत्रस्यमारणमेतत्तवानुचित मितिभावः ॥ ९१ ॥ इत्थमिति ॥ अहोकष्टम् ॥ साशुचिष्मतीइत्थंविलप्यशुशोषशोषंप्राप्तवतीत्यन्वयः ॥ दीर्घंबहुकालव्यापिविपुलंगंभीरंउष्णंयथास्यात्तथाप्रोच्छ्वस्य ॥ तथानेत्रवार्यासारजनित



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नदीनांशतमुत्तरंगंउच्छलद्भंगंयथास्यादेति ॥ ९२ ॥ आकर्ण्येति ॥ तस्यास्तानिकरुणवंतिपरिदेवितानिदृष्ट्वाश्रुत्वावाद्रुमाव्रततयःद्रुमाश्चव्रततयोलताश्च कुसुमान्येवाश्रुपातास्तैःपततां पक्षिणांविरुतानिवासितान्येवआरावाआर्तरावास्तैः असकृत्वारंवारंपवनच्छलेनवायुव्याजेनमौलिमस्तकमालोल्यप्रकंप्यप्रायोरुदंतिरुदंतीवेत्युत्प्रेक्षा ॥ ९३ ॥ रुण्णमिति ॥ तयाशुचिष्मत्यामुक्तकंठंयथास्यात्तथार्तस्वरैरुण्णंरोदनंकृतम् ॥ छांदसोऽयंप्रयोगः ॥ यथाप्रतिरवस्यच्छलतोव्याजेनसर्वादिशोरुरुदुः ॥ कथंभूताः ॥ गिरिकंदराएवास्यानियासांतास्तथा ॥ पुनःकथंभूताः ॥ स्थगितपत्रिमृगागमाः स्थगिताःस्तंभिताः पत्रिणांमृगाणांचागमाआगमनानियासुतास्तथा ॥ यदाअचेतनाअपिवृक्षादयोरुरुदुस्तदासचेतनानांकाकथेतिहिशब्दार्थः ॥९४॥ श्रुत्वेति ॥ इत्यार्तनादंश्रुत्वासाविश्वानरः ॥ ह्रस्वश्छांदसः ॥ पाठांतरेतुर्वितर्के उभयत्रव्यवधानमार्षम् ॥ किमित्यादिउच्चैर्वदन्मोहांहित्वोत्थितइत्यन्वयः ॥ तुशब्दोऽत्रसंभ्रमे ॥ अन्तरात्मानिलयः

आकर्ण्यतत्करुणवत्परिदेवितानितानिद्रुमाव्रततयःकुसुमाश्रुपातैः ॥ प्रायोरुदंतिपततांविरुतार्तरावैरालोल्यमौलिमसकृत्पवनच्छलेन ॥ ९३ ॥ रुण्णं तयाकिलतथाबहुमुक्तकंठमार्तस्वरैःप्रतिरवच्छलतोयथोच्चैः ॥ तद्दुःखतोनुरुरुदुर्गिरिकंदरास्याःसर्वादिशःस्थगितपत्रिमृगागमाहि ॥ ९४ ॥ श्रुत्वार्तनादमितिविश्वनरोपिमोहंहित्वोत्थितःकिमितिकिंत्वितिकिंकिमेतत् ॥ उच्चैर्वदन्गृहपतिःक्वसमेबहिस्थःप्राणोंतरात्मनिलयःसकलेंद्रियेशः ॥ ९५ ॥ अगस्त्यउवाच ॥ ॥ ततोदृष्ट्वासपितरौबहुशोकसमावृतौ ॥ स्मित्वोवाचततोमातस्त्रासस्त्वीदृक्कुतोहिवाम् ॥९६॥ नमांकृतवपुस्त्राणंभवच्चरणरेणुभिः ॥ कालःकलयितुंशक्तोवराकीचंचलालिपिका ॥ ९७ ॥ प्रतिज्ञांशृणुतंतातौयदिवांतनयोह्यहम् ॥ करिष्येहंतथातेनविद्युन्मत्तस्त्रसिष्यति ॥ ९८ ॥ मृत्युंजयंसमाराध्यसर्वज्ञंसर्वदंसताम् ॥ कालकालंमहाकालंकालकूटविषादिनम् ॥ ९९ ॥ इतिश्रुत्वावचस्तस्यजरितौद्विजदंपती ॥ अकालामृतवर्षौवशांततापौतदोचतुः ॥ १०० ॥ अपयोदपयोवृष्टिरदुग्धाब्धिःसुधोदयः ॥ अनिंदुःकौमुदीकांतिःकुतोनौसुखयत्यलम् ॥ १ ॥ पुनर्ब्रूहिपुनर्ब्रूहिकीदृक्कीदृक्पुनःपुनः ॥ कालःकलयितुंनालंवराकीचंचलालिपिका ॥२॥ आवयोस्तापनाशायमहोपायस्त्वयेरितः ॥ मृत्युंजयस्यदेवस्यसमाराधनलक्षणः॥ ॥३॥ तद्गच्छशरणंताततनातःपरतरंहितम् ॥ मनोरथपथातीतकारिणःकालहारिणः ॥ ४ ॥ किंनश्रुतंत्वयातातश्वेतकेतुंयथापुरा ॥ पाशितंकालपाशेनरक्षत्रिपुरांतकः ॥ ५ ॥ शिलादतनयंमृत्युग्रस्तमष्टाब्दमर्भकम् ॥ शिवोनिजजनंचक्रेनंदिनंविश्वनंदिनम् ॥ ६ ॥ क्षीरोदमथनोद्भूतंप्रलयानलसंनिभम् ॥ पीत्वाहालाहलंघोरमरक्षद्भुवनत्रयम् ॥ ७ ॥

प्रत्यगात्मासकलेंद्रियेशःसमस्तेंद्रियाणांसाक्षी ॥ ९५ ॥ ततोदृष्ट्वेति ॥ तमोमोहः ॥ प्राधान्यान्मातुःसंबोधनम् ॥ तुशब्दात्ताततेतिच ॥ ९६ ॥ कलयितुंमारयितुम् ॥ चञ्चलाविद्युत् ॥ यत्रकालोपिकुंठितस्तत्रवराकीनिकृष्टाअल्पाअसमर्थाचपलाकालयितुंनशक्ताइतिकिंवाच्यमित्यभिप्रायः ॥ ९७ ॥ वांयुवयोः ॥ ९८ ॥ ९९ ॥ जरितौजरावंतौ ॥ ज्वरितावितिक्वचित्पाठः ॥ १०० ॥ किमूचतुस्तदाह ॥ अपयोदेति ॥ नविद्यतेपयोदोयस्यांसाचासौपयोवृष्टिश्चनदुग्धाब्धिःक्षीराब्धिर्यस्मिन्ससुधोदयः नविद्यतेइन्दुर्यस्यांसाकौमुदीकांतिःकुतःकस्मान्नौआवामलमत्यर्थंसुखयातिसुखिनौकरोतीत्यूचतुरिति ॥ १ ॥ पुनरितिवीप्सात्रितयमादरार्थम् ॥ पुनर्वदेतिक्वचित् ॥ कालइत्याद्यर्धमनुवादः ॥ २ ॥ ३ ॥ ४ ॥ पाशितंबद्धम् ॥ ५ ॥ ६ ॥ हालाहलंविषम् ॥ ७ ॥

१ श्रुत्वातुइत्येवंरूपे ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

महान्दर्पोयस्यतम् ॥ महादैत्यमित्यपिक्वचित् ॥ ८ ॥ पत्रिणंबाणम् ॥ ९ ॥ वर्षायुतंदशसहस्त्रवषम् ॥ ११० ॥११॥१२ ॥ १३ ॥ सगृहपतिःकाशींसंप्राप्यप्राङ्मणिकर्णिकांलोचनाभ्यांदृष्टवान्
ययाविति पंचमेनान्वयः ॥ काशींविशिनष्टि ॥ यल्लभ्यतइत्यतःप्राक्तनेनग्रंथेन ॥ महासंवर्तःप्राकृतोलयः ॥१४॥ कण्ठभूमिषुकाश्याःकण्ठस्थानीयासुभूमिषु ॥ नीहारोहिमम् ॥१५॥ बहुसंसारेति॥
दुःखमितिशेषः॥बहुसंसारसंतापमितिक्वचित् ॥ असिधारयाऽसिप्रवाहेण ॥१६ ॥ मणिकर्णिकांविशिनष्टि॥ यल्लभ्यतइत्येकेन ॥ कथंभूतांमणिकर्णिकाम् ॥ सुदृढोऽविप्लुतोयोष्टांगयोगस्तस्माल्लभ्यं
तेयत्कैवल्यंतत्सम्यग्देहत्यागमात्रेणविकासयंतीमभिव्यंजयंतीम् ॥ बुधाःकाशकांयांजगुस्तामिति ॥ १७ ॥ कथंभूताभ्यांनेत्राभ्याम् ॥ संसारतापतप्ताभ्याम्.॥ कर्णाकर्णप्रकीर्णाभ्याम् ॥ कर्णा

जालंधरंमहादर्पंहृतत्रैलोक्यसंपदम् ॥ चरणांगुष्ठरेखोत्थचक्रेणनिजघानयः ॥ ८ ॥ यएकेषुनिपातोत्थज्वलनैस्त्रिपुरंपुरा ॥ विधायपत्रिणंविष्णुंज्वा
लयामासधूर्जटिः ॥ ९ ॥ अंधकंयस्त्रिशूलाग्रप्रोतंवर्षायुतंपुरा ॥ त्रैलोक्यैश्वर्यसंमूढंशोषयामासभानुना ॥ ११० ॥ कामंदृष्टिनिपातेनत्रैलोक्यविजयो
र्जितम् ॥ निनायानंगपदवींवीक्षमाणेष्वजादिषु ॥ ११ ॥ तंब्रह्माद्येककर्तारंमेघवाहनमच्युतम् ॥ प्रयाहिपुत्रशरणंविश्वरक्षामणिंशिवम् ॥ १२ ॥
पित्रोरनुज्ञांप्राप्येतिप्रणम्यचरणौतयोः ॥ प्रदक्षिणमुपावृत्यबह्वाश्वास्यविनिर्ययौ ॥ १३ ॥ सप्राप्यकाशींदुष्प्रापांब्रह्मनारायणादिभिः ॥ महासंवर्तसं
वृत्ततापाद्विश्वेशपालिताम् ॥ १४ ॥ शिरस्स्वर्धुन्याहारयष्टेचेवराजितांकंठभूमिषु ॥ विचित्रगुणशालिन्याहारनीहारगौरया ॥ १५ ॥ बहुसंसारसंतापसं
ततजनतोद्भवम् ॥ वारयंतींवरणयाछिंदंतीमसिधारया ॥ १६ ॥ यल्लभ्यतेचकैवल्यंसुदृढाष्टांगयोगतः ॥ विकासयंतींतत्सम्यक्काशिकांयांजगुर्बुधाः ॥
॥ १७ ॥ संसारतापतप्ताभ्यांलोचनाभ्यांसदृष्टवान् ॥ कर्णाकर्णप्रकीर्णाभ्यांप्राग्ययौमणिकर्णिकाम् ॥ १८ ॥ तत्रस्नात्वाविधानेनदृष्ट्वाविश्वेश्वरंवि
भुम् ॥ त्रैलोक्यप्राणिसंत्राणकारिणंप्रणनामह ॥ १९ ॥ आलोक्यालाक्यतल्लिंगंतुतोषहृदयेबहु ॥ परमानंदकंदाख्यंस्फुटमेतन्नसंशयः ॥ १२० ॥
अहोनमत्तोधन्योस्तित्रैलोक्येसचराचरे ॥ यदद्राक्षिषमद्याहंश्रीमद्विश्वेश्वरंविभुम् ॥२१॥ त्रिलोकीसारसर्वस्वंपिंडीभूतमिदंकिल ॥ किंवापीयूषपिंडो
यमुद्धृतःक्षीरनीरधेः ॥२२ ॥ आत्मावबोधमहसःकिमसौप्रथमांकुरः ॥ ब्रह्मानंदसुकंदोवाकिमुब्रह्मरसायनम् ॥ २३ ॥

भ्यांयआकर्णआकर्णनंश्रवणंतेनप्रकीर्णाभ्यांविस्तीर्णाभ्यामित्यर्थः ॥ आकर्ण्यमणिकर्णाभ्यामितिक्वचित् ॥ यद्वा कर्णःआकर्णनंतेनआकर्णप्रकीर्णाभ्यांकर्णपर्यंताभ्यामिति ॥ १८ ॥ पूजादिकंच
विदधेइतिहकारार्थः ॥ १९ ॥ १२० ॥ यद्यस्मात् ॥ अद्राक्षिषंदृष्टवान् ॥ २१ ॥ सारसर्वस्वंवरसर्वधनम् ॥ सारोबलेस्थिरांशेचन्याय्येक्लीबंवरेत्रिष्वित्यमरः ॥ पिंडीभूतंलिंगाकारेणपारिणतम् ॥
किलेत्युत्प्रेक्षायाम् ॥२२॥ आत्मावबोधमहसःस्वप्रकाशप्रत्यग्ज्योतिषः ॥ सुकंदःशोभनंमूलम्॥ब्रह्मरसायनंब्रह्मचतद्रसश्चतदयनंचतत्तथा ॥ रसोवैसः रसंह्येवायंलब्ध्वानंदीभवतीतिश्रुतेः ॥२३ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

योगीति ॥ योगिहृत्कमलाश्रयंअनाकारंप्रत्यग्भूतंयद्ब्रह्मोच्यतेतल्लिंगच्छलादाकारत्वंलिंगमूर्तित्वमापेदेप्रापकिमितिविमर्शः ॥ २४ ॥ फलंनित्यशुद्धबुद्धमुक्तस्वप्रकाशानंदस्वरूपम् ॥ २५ ॥ केशपाशश्चूडा ॥ शिखाचूडाकेशपाशइत्यमरः ॥ सुपुष्प्यतेइतिपाठेसुपुष्पितइत्यर्थः ॥ कैवल्यमल्लीवल्लयाः कैवल्यमेवमल्लीवल्लीमल्लिकालतातस्याःस्तवकोगुच्छः ॥ सस्तावकानांस्तोतॄणां भक्तानामर्थदःपुरुषार्थचतुष्टयप्रदइत्यर्थः ॥२६॥ आनंदक्रीडनकंदुकः सुखक्रीडाकंदुकः॥आनंदइत्यत्रकम्रइतिवापाठः ॥ कमनीयइत्यर्थः॥२७॥कल्याणरमणीकल्याणसुंदरीतस्यारम्यःशृंगाररस्यशो भायादर्शनार्थदर्पणआदर्शः ॥२८॥ आज्ञातमिति ॥ आङीतिस्मृतौ ॥ बीजपूरःफलपूरः ॥ अद्भुतआश्चर्यमयः॥२९॥आश्चर्यमयत्वेहेतुंदर्शयन्विश्वेश्वरलिंगमितिनामनिर्वक्ति॥विश्वेषामिति ॥ कर्माणी

योगिहृत्पद्मनिलयंयदनाकारमुच्यते ॥ तदाकारत्वमापेदेकिमिदंलिंगकैतवात् ॥ २४ ॥ ब्रह्मांडभांडमथवानानारत्नौघपूरितम् ॥ अथवामोक्षवृक्ष स्यफलमेतन्नसंशयः ॥ २५ ॥ निर्वाणलक्ष्म्याःकिमथकेशपाशःसुपुष्पयुक ॥ कैवल्यमल्लीवल्लयाःकिंस्तवकःस्तावकार्थदः ॥ २६ ॥ निःश्रेयसश्रियः किंवाऽऽनंदक्रीडनकंदुकः ॥ अपवर्गोदयाद्रेःकिमुदियायसुधाकरः ॥ २७ ॥ संसारमोहतिमिरभिदुरःकिंमसौरविः ॥ किमुकल्याणरमणीरम्यशृंगारद र्पणः ॥ २८ ॥ आज्ञातंनभवेदन्यत्सर्वेषांदेहधारिणाम् ॥ अनेककर्मबीजानांबीजपूरोऽयमद्भुतः ॥२९॥ विश्वेषांविश्वबीजानांकर्माख्यानांलयोयतः ॥ अस्मिन्निर्वाणदेलिंगेविश्वलिंगमिदंततः ॥ १३० ॥ ममभाग्योदयेनैवनारदेनमहर्षिणा ॥ तदागत्यतथोक्तंयत्कृतकृत्योस्म्यहंततः ॥ ३१ ॥ इत्यानं दामृतरसैर्विधायसहिपारणम् ॥ततःशुभेऽह्निसंस्थाप्यलिंगंसर्वहितप्रदम् ॥ ३२ ॥ जग्राहनियमान्घोरान्दुष्करानकृतात्मनाम् ॥ अष्टोत्तरशतैःकुंभैः पूर्णैर्गंगामृतद्रवैः ॥ ३३ ॥ संस्नाप्यवाससापूतैः पूतात्माप्रत्यहंशिवम् ॥ नीलोत्पलमयींमालांसमर्पयतिसोऽन्वहम् ॥ ३४ ॥ अष्टाधिकसहस्रैस्तुसुमनो भिर्विनिर्मिताम् ॥ सपक्षार्धेनषण्मासंकंदमूलफलाशनः॥३५॥शीर्णपर्णाशनःपक्षेत्वाषण्मासंबभूवसः ॥ षण्मासंवायुभक्षोभूत्षण्मासंजलबिंदुभुक्३६॥

तिआख्यायेषांतेषांकर्माख्यानांविश्वबीजानांविश्वेषांसर्वेषांबीजानांयतोयस्मादस्मिँल्लिंगेलयोनाशस्तस्मादिदंविश्वलिंगमिति ॥ पांठांतरे[2]तुननुपरिच्छिन्नेकथंसर्वेषांकर्मरूपाणांबीजानांलयस्तत्राह ॥ तत मिति ॥ परिपूर्णमित्यर्थः ॥ परिच्छिन्नप्रतीतिस्तुभ्रांत्याश्रीकृष्णइवेत्यभिप्रायः ॥३०॥ तथोक्तंयत् शंकेस्यक्षादशेवर्षेप्रत्यूहोविद्युदग्नितइत्यादिलक्षणंततउक्तात् ॥ यद्यस्मात्तत्तस्मादितिवा ॥ ३१ ॥ इत्येवंप्रकारेणआनंदामृतरसैः[1]सुखसुधाद्रवैः ॥ ३२ ॥ अकृतात्मनामजितेंद्रियाणाम् ॥३३॥ पूतात्माशुद्धात्मा ॥ अन्वहंप्रत्यहम् ॥३४॥ सुमनोभिर्नीलोत्पलपुष्पैः ॥ सपक्षेति॥सवैश्वानरः॥षण्मा संव्याप्यपक्षार्धेनपक्षार्धेनसार्धसप्तदिनैःसार्धसप्तदिनैःकंद मूलफलाशनोबभूव ॥ ३५ ॥ सषण्मासंव्याप्यपक्षेपक्षेशीर्णपर्णाशनोबभूवेत्युभयत्रवीप्सा ॥ अन्वयभेदाच्चतच्छब्दस्यावृत्तिरदोषः ॥ ३६ ॥

१ अमृतप्रदैरित्यपिपाठः । २ इदंततमित्येवरूप ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

आसतस्तिष्ठतःसतोवर्त्तमानस्येतिवा॥ ३७॥कुलिशायुधइंद्ररूपेणशंकरएव॥इंद्ररूपेणमयैवत्वंहिभीषितइतिवक्ष्यमाणत्वात्॥यन्मनसिस्थितंतदित्यर्थः॥ ३८॥ ३९॥मधुरंसारम्॥कीरवत्शुकवत्॥ कुलिश पाणिनंवज्रपाणिम्॥ १४०॥ ४१॥बालिशत्वंमूर्खत्वम्॥वरमभिलाषम्॥वरंश्रेष्ठम्॥माचिरमितिक्वचित्पाठः ॥४२॥ नमत्तःशंकरोस्त्यन्यइत्याद्यखर्वगर्ववचनात्सक्रोधःसन्नाह॥गच्छेति ॥४३॥ ४४ ॥ मुमूर्च्छेमूर्च्छांगतवान् ॥४५॥ अथेति ॥ नकेवलमाविरासीत्उत्तिष्ठोत्तिष्ठभद्रंतेइतिवदन्नितिशेषः ॥ स्पर्शैःकरस्पर्शैःसंजीवयामासचेत्यर्थः ॥४६॥ सबालकउत्थायनेत्रकमलेउन्मील्यविकचय्यविवृत्ये र्तियावत् ॥ अग्रेशंभुमपश्यदित्यन्वयः॥ कीदृशेइव ॥ दिवाक्षयेरात्रौसुप्तेमुद्रितेइव॥कीदृशंशंभुम् ॥ अर्कशताधिकंअपरिमितसूर्याधिकप्रकाशमित्यर्थः ॥४७॥ भालेइति ॥ सएतादृशंरूपंप्रथमतआलो

एवंवर्षद्वयंतस्यव्यतिक्रांतंतथासतः ॥ जन्मतोद्वादशेवर्षेतद्वचोनारदेरितम् ॥ ३७ ॥ सत्यंकरिष्यन्निवतमभ्यगात्कुलिशायुधः ॥ उवाचचवरंब्रूहिद्विजतन्मनसिस्थितम् ॥३८॥ अहंशतक्रतुर्विप्रप्रसन्नोस्मिशुभव्रतेः ॥ इत्याकर्ण्यमहेंद्रस्यवाक्यंमुनिकुमारकः॥३९॥उवाचमधुरंधीरःकीरवन्मधुराक्षरम्॥ मघवन्वृत्रशत्रोत्वांजानेकुलिशपाणिनम् ॥ १४० ॥ नाहंवृणेवरंत्वत्तः शंकरोवरदोस्तिमे ॥ ४१ ॥ इंद्रउवाच ॥ नमत्तःशंकरोस्त्यन्योदेवदेवोस्म्यहंशिशो ॥ विहायबालिशत्वंत्वंवरयाचस्वमांवरम् ॥ ४२ ॥ ब्राह्मणउवाच ॥ गच्छाहल्यापतेऽसाधोगोत्रारेपाकशासन ॥ नप्रार्थयेपशुपतेरन्यंदेवांतरंस्फुटम् ॥४३॥ इतितस्यवचःश्रुत्वाक्रोधसंरक्तलोचनः ॥ उद्यम्यकुलिशंघोरंभीषयामासबालकम् ॥४४॥ सदृष्ट्वाबालकोवज्रंविद्युज्ज्वालाशताकुलम् ॥ स्मरन्नारदवाक्यंचमुमूर्च्छभयविह्वलः ॥ ४५ ॥ अथगौरीपतिःशंभुराविरासीत्तमोनुदः ॥ उत्तिष्ठोत्तिष्ठभद्रंतेस्पर्शैःसंजीवयन्निव[1] ॥ ४६ ॥ उन्मील्यनेत्रकमलेसुप्तेइवदिवाक्षये ॥ अपश्यदग्रेचोत्थायशंभुमर्कशताधिकम् ॥ ४७ ॥ भालेलोचनमालोक्यकंठेकालंवृषध्वजम् ॥ वामांगसंनिविष्टाद्रितनयंचंद्रशेखरम् ॥ ४८ ॥ कपर्देनविराजंतंत्रिशूलाजगवायुधम् ॥ स्फुरत्कर्पूरगौरांगंपरिणद्धगजाजिनम् ॥४९॥ परिज्ञायमहादेवंगुरुवाक्यतआगमात् ॥ हर्षबाष्पाकुलःसन्नकंठोरोमांचकंचुकः ॥ १५० ॥ क्षणंस्थगितवत्तस्थौचित्रकृत्रिमपुत्रकः ॥ यथातथासुसंपन्नोविस्मृत्यात्मानमेवच ॥ ५१ ॥ नस्तोतुंननमस्कर्तुंकिंचिद्विज्ञप्तुमेवच ॥ यदासनशशाकालंतदास्मित्वाऽऽहशंकरः ॥ ५२ ॥ ईश्वरउवाच ॥ शिशोगृहपतेशक्राद्वज्रोद्यतपरादहो ॥ ज्ञातोभीतोसिमाभैषीर्जिज्ञासातेकृतामया ॥ ५३ ॥

क्यपश्चान्महादेवंपरिज्ञायक्षणंस्थगितवन्निश्चलवत्तस्थावितिचतुर्थेनान्वयः ॥ कीदृशंरूपंतदाह ॥ भालइतिसार्धेन ॥४८॥ कपर्देनजटाजटेन ॥ आजगवंपिनाकः॥परिणद्धंपरिहितंगजाजिनंगजासुरस्य चर्मयेनसतथातम् ॥ ४९ ॥ कथंभूतः ॥ आनंदवारिव्याप्तःअतएवसन्नकंठोनिरुद्धगलः ॥ रोम्णामश्चउद्गमःकंचुकोयस्यसः ॥ १५० ॥ चित्रेणरंगद्रव्येणचित्रेभित्त्यादौवाकृत्रिमोलिखितः पुत्रकोयथातथासंपन्नोवृत्तःसन्इतिपादद्वयस्यपूर्वेणाग्रिमेणवान्वयः ॥ ५१ ॥ यदात्मानंविस्मृत्यचकारात्परंचकिमपिकर्तुमलंनशशाकैवतदास्मित्वाईषद्धास्यंकृत्वाशंकरआहेत्यर्थः ॥ ५२ ॥ ५३ ॥

---

१ पुस्तकांतरे संजीवयन्निवेत्येवार्थेइवशब्दइतिपाठोदृश्यते । अयमेवयुक्तइतिभाति ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नांतकोपिनयमोपि ॥ चपलाऽपिचेतिक्वचित्पाठः ॥ ५४ ॥ ५५ ॥ दिगीशोदिंगीश्वरयोः ॥ दिगीशस्त्वंभववा ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ वीरेश्वरस्येति ॥ वीरेश्वरस्यपूर्वेणपूर्वस्यां दिशियागंगातस्याःपश्चिमेतटेऽग्नीश्वरंसमाराध्येत्यन्वयः ॥ अतोवीरेश्वरस्यपूर्वस्यांदिशिकथमग्नीश्वरइतिनात्र[1]कथंतेति ॥ १६० ॥ ६१ ॥ ६२ ॥ १६३ ॥ ॥ इतिश्रीरामानन्दकृतायांकाशीखण्डटीकायामेकादशोध्यायः ॥ ११ ॥ ॥ छ ॥ द्वादशेवर्ण्यतेलोकोनिर्ऋतेश्चमहाधिमान् ॥ वरुणस्यतथाचैवलोकोऽत्यन्तमनोरमः ॥ १ ॥ पूर्वाध्यायांते इत्थमग्निस्वरूपंतेशिवशर्मन्प्रवर्णितम् ॥ किमन्यच्छ्रोतुकामोसिकथयावस्तदीरयेत्युक्तंतत्रपृच्छाति ॥ नैर्ऋतेति ॥ हेपुरुषोत्तममौनैर्ऋतादीन्लोकान्क्रमात्आख्यातंकथयतमित्यन्वयः ॥ पुरुषोत्तमत्वेहेतुमाह ॥ पुरुषोत्तमस्यचरणकमलरेणु

ममभक्तस्यनोशक्रोनवज्रंनांतकोपिवा ॥ प्रभवेदिंद्ररूपेणमयैवत्वंहिभाषितः ॥ ५४ ॥ वरंददामितेभद्रत्वमग्निपदभाग्भव ॥ सर्वेषामेवदेवानांवदनंत्वंभविष्यसि ॥५५॥ सर्वेषामेवभूतानांत्वमग्नेऽतश्चरोभव ॥ धर्मराजेंद्रयोर्मध्येदिगीशोराज्यमाप्नुहि ॥५६॥ त्वयेदंस्थापितंलिंगंतवनाम्नाभविष्यति ॥ अग्नीश्वरइतिख्यातंसर्वतेजोभिवृंहणम् ॥ ५७ ॥ अग्नीश्वरस्यभक्तानांनभयंविद्युदग्निजम् ॥ अग्निमांद्यभयंनैवनाकालमरणंक्वचित् ॥ ५८ ॥ अग्नीश्वरंसमभ्यर्च्यकाश्यांसर्वसमृद्धिदम् ॥ अन्यत्रापिमृतोदैवादग्निलोकेमहीयते ॥५९॥ ततःकाशींपुनःप्राप्यकल्पांतेमोक्षमाप्नुयात् ॥ वीरेश्वरस्यपूर्वेणगंगायाःपश्चिमेतटे ॥ १६० ॥ अग्नीश्वरंसमाराध्यवह्निलोकेवसेन्नरः ॥ पितृभ्यांस्वजनैःसार्धंमित्रबंधुसमायुतः ॥ ६१ ॥ विमानमिदमारुह्यप्रयाह्येवदिशःपते ॥ इत्युक्त्वानीयतद्बंधून्पित्रोश्चपरिपश्यतोः ॥ दिक्पतित्वेऽभिषिच्याग्निंतत्रलिंगेशिवोविशत् ॥ ६२ ॥ गणावूचतुः ॥ ॥ इत्थमग्निस्वरूपंतेशिवशर्मन्प्रवर्णितम् ॥ किमन्यच्छ्रोतुकामोसिकथयावस्तदीरय ॥ १६३ ॥ ॥ इति श्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थे काशीखंडेपूर्वार्द्धेवह्निलोकवर्णनंनामैकादशोऽध्यायः ॥ ११ ॥ ॥छ॥ शिवशर्मोवाच ॥ नैर्ऋतादीन्क्रमाल्लोकानाख्यातंपुरुषोत्तमौ ॥ पुरुषोत्तमपादाब्जपरागोद्धूसरालकौ ॥ १ ॥ गणावूचतुः ॥ आकर्णयमहाभागसंयमिन्याःपुरींपराम् ॥ दिक्पतेर्निर्ऋतस्यासौपुण्यापुण्यजनोषिता ॥ २ ॥ राक्षसानिवसंत्यस्यामपरद्रोहिणःसदा ॥ जातिमात्रेणरक्षांसिवृत्तैःपुण्यजनाइमे ॥ ३ ॥ स्मृत्युक्तश्रुतिवर्त्मानोजातवर्णावरेष्वपि ॥ नाद्रियंतेऽन्नपानानामस्मृत्युक्तंकदाचन ॥ ४ ॥ परदारपरद्रव्यपरद्रोहपराङ्मुखाः ॥ जाताजातौनिकृष्टायामपिपुण्यानुसारिणः ॥ ५ ॥ द्विजातिभक्त्युत्पन्नार्थैरात्मानंपोषयंतिये ॥ सदासंकुचितांगाश्चद्विजसंभाषणादिषु ॥ ६ ॥

नोद्धूलिताआविलाश्चूर्णकुंतलाययोस्तावीति ॥ १ ॥ परामनंतरांपश्चिमदिग्भवांवा ॥ निर्ऋतस्यनिर्ऋतेः ॥ २ ॥ वृत्तैःसदाचारैः पुण्यजनाधार्मिकाः ॥ ३ ॥ःवर्णाश्चतेअवराश्चेतितेष्वप्यधमवर्णेष्वपीत्यर्थः ॥ अस्मृत्युक्तंस्मृतिशास्त्रानुक्तमित्यर्थः ॥ भोजनपानमितिशेषः ॥ ४ ॥ ५ ॥ द्विजातयोब्राह्मणक्षत्रियवैश्यास्तेषांभक्त्याशुश्रूषयाउत्पन्नायेऽर्थास्तैरात्मानंयेपोषयंतितेऽत्रपुरोत्तमेवसंतीतिपंचमेनान्वयः ॥ तथाग्रेवक्ष्यमाणानामपितेनैवान्वयः ॥ ६ ॥

१ कथमित्यव्ययात्तल् ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भगोमान्य ॥ ७ ॥ ८ ॥ दमादयोऽस्तेयादयश्चसर्वेषांप्राणिमात्राणांमेतेधर्महेतवः ॥ पुण्यकारणानीत्यर्थः ॥ तन्मध्येशौचंद्विविधवाह्यमाभ्यंतरंच ॥ वाह्यमृज्जलाभ्याम् ॥ अंतर्भावशुद्ध्या ॥ अस्तेयंकायवाङ्मनोभिःपरद्रव्याग्रहणम् ॥ अहिंसाकायवाङ्मनोभिःप्राणिमात्रस्यांपीडा ॥ अन्यत्पूर्वंव्याख्यातम् ॥ ९ ॥ १० ॥ म्लेच्छाइति ॥ काशींविहायसुतीर्थेपुयेमृतास्तेम्लेच्छाअपि अत्रनैर्ऋतेलोकेभोगिनःस्युः ॥ आत्मघातेनापिसुतीर्थेषुमरणंभवतितंवारयति ॥ नात्मघातकाइति ॥ काशींविहायेत्युक्तंतत्रहेतुगर्भविशेषणमाह ॥ निर्वाणविश्राणामिति ॥ निर्वाणंकैवल्यंविश्राणं फलंयस्याः ॥ निर्वाणंवाविश्राणयतिददातीतिसातथाताम् ॥ तन्मरणस्यमोक्षहेतुत्वादितिभावः ॥ ११ ॥ नात्मघातकाइत्येतत्प्रपंचयति ॥ अंधंतमोविशेयुस्तइत्यादिना ॥ १२ ॥ उपसंहरति ॥ आत्मघातइति ॥ विपश्चिताइत्यनेनअविपश्चितांक्षत्रियादीनांप्रयागादावात्मघातोऽनुमन्यते ॥ तथाचोक्तंभगवतायुधिष्ठिरंप्रति ॥ नलोकवचनात्तातनवेदवचनादपि ॥ मतिरुत्क्रमणीयातेप्रयागमरणं

आहूतावस्त्रवदनावदंतिद्विजसंनिधौ ॥ जयजीवभगोनाथस्वामिन्निति हिवादिनः ॥ ७ ॥ तीर्थस्नानपरानित्यंनित्यंदेवपरायणाः ॥ द्विजेषुनित्यंप्रणताः स्वनामाख्यानपूर्वकम् ॥ ८ ॥ दमदानदयाक्षांतिशौचेंद्रियविनिग्रहाः ॥ अस्तेयसत्याहिंसाश्चसर्वेषांधर्महेतवः ॥ ९ ॥ आवश्येषुसदोद्युक्तायेजाता यत्रकुत्रचित् ॥ सर्वभोगसमृद्धास्तेवसंत्यत्रपुरोत्तमे ॥ १० ॥ म्लेच्छाअपिसुतीर्थेषुयेमृतानात्मघातकाः ॥ विहायकाशींनिर्वाणविश्राणांतेऽत्रभोगिनः ॥ ॥ ११ ॥ अंधंतमोविशेयुस्तेयेचैवात्महनोजनाः ॥ भुक्तानिरयसाहस्रंतेचस्युर्ग्रामसूकराः ॥ १२ ॥ आत्मघातोनकर्तव्यस्तस्मात्क्वापिविपश्चिता ॥ इहापिचपरत्रापिनशुभान्यात्मघातिनाम् ॥ १३ ॥ यथेष्टमरणंकेचिदाहुस्तत्त्वावबोधकाः ॥ प्रयागेसर्वतीर्थानांराज्ञिसर्वाभिलाषदे ॥ १४ ॥ अंत्यजाअ पियेकेचिद्दयाधर्मानुसारिणः ॥ परोपकृतिनिष्ठास्तेवसंत्यत्रतुसत्तमाः ॥ १५ ॥ अस्यस्वरूपंवक्ष्यावोदिक्पतेःक्षणतःशृणु ॥ मध्येविंध्याटवि पुरापक्कणस्थजनाग्रणीः ॥ १६ ॥ पल्लीपतिरभूदुग्रःपिंगाक्षइतिविश्रुतः ॥ निर्विंध्यायास्तटेशूरःक्रूरकर्मपराङ्मुखः ॥ १७ ॥ घातयेद्दूरसंस्थो पियःपांथपरिपंथिनः ॥ व्याघ्रादीनदुष्टसत्त्वांश्चसहिनस्तिप्रयत्नतः ॥ १८ ॥ जीवेन्मृगयुधर्मेणतत्रापिकरुणापरः ॥ नविश्वस्तान्पक्षिमृगा न्प्रसुतान्नव्यवायिनः ॥ १९ ॥

प्रति ॥ ब्रह्मज्ञानेनमुच्यंतेप्रयागमरणेनवा ॥ अथवास्नानमात्रेणगोमत्यांकृष्णसंनिधाविति ॥ विपक्षेबाधकमाह ॥ इहापिचेति ॥ १३ ॥ तदेवाह ॥ यथेष्टमरणमिति ॥ यद्वा क्वापीत्येतत्संको चयति ॥ यथेष्टमरणमिति ॥ १४ ॥ १५ ॥ अस्यदिक्पतेरितिसंबंधः ॥ मध्येविंध्याटवीति ॥ पुरापूर्वंमध्येविंध्याटविविंध्यसंबंधिन्याअटव्यामध्ये पिंगाक्षःपिंगेअक्षिणीयस्यसपिंगाक्ष इतिविश्रुतोविख्यातोऽभूत्आसीदित्यन्वयः ॥ कीदृक् ॥ पक्कणस्थजनाग्रणीः पक्कणःशवरालयस्तत्स्थजनानांश्रेष्ठः ॥ १६ ॥ पल्लीपतिःशवरालयानांपतिश्च ॥ उग्रस्तीव्रपराक्रमः ॥ तंविशिनष्टि ॥ निर्विंध्यायाइत्यादिसार्धपंचश्लोकैः ॥ निर्विंध्याकाचिन्नदी ॥ १७ ॥ पांथपरिपंथिनःपथिकपरिरोधकान् ॥ १८ ॥ करुणापरोदयापरः ॥ दयापरत्वमेवदर्शयति ॥ नविश्वस्तानिति ॥ व्यवायिनो

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ग्राम्यधर्मवतः ॥ १९ ॥ अंतर्वत्नित्वंगुर्विणीत्वंलक्षणंचिह्नंयेषांतान्नघातयतीत्यन्वयः ॥ ह्रस्वश्छांदसः ॥ २० ॥ उपानद्भ्राहितेपथिकेउपानहःपादत्राणदः ॥ २१ ॥ कांतारेदुर्गमवर्त्मनि ॥ २२ ॥ आविंध्याटविविंध्याटवीपर्यंतम् ॥२३॥ आशीर्वादयंतिआशिषःप्रयच्छंति ॥२४॥ नगरायितानगरवज्जाताचेत्यर्थः॥ अध्वनीनेऽध्वगामिनीत्यर्थः॥ अध्वनीनइतिपाठेशौल्किकइत्यर्थः ॥ यद्वा समर्थोऽध्वनीनोऽध्वगोदुर्बलानध्वगान्नबाधतइत्यर्थः॥२५॥तत्पितृव्येणपिंगाक्षपितृभ्रात्रातारोक्षेण ॥ तारेउच्चेअक्षिणीयस्येतिव्युत्पत्तेः ॥ सार्थःसमूहः ॥ सार्थोऽर्थसहितः ॥२६॥ लुब्धकइति॥ तन्निधनोद्यत इत्यत्रतच्छब्दःकार्पटिकविषयःसार्थविषयोवा॥२७॥ निकषाशब्दःसमीपविषयः॥तन्मार्गेनिकषातन्मार्गस्यसमीपइत्यर्थः॥अध्युषितःउवास॥२८॥तत्रकारणमाह॥परप्राणेति॥एतद्विश्वमितिसंबंधः ॥

नतोयगृध्नून्नशिशून्नांतर्वत्नित्वलक्षणान् ॥ सघातयतिधर्मज्ञोजातिधर्मपराङ्मुखः ॥ २० ॥ श्रमातुरेभ्यःपांथेभ्यःसविश्रामंप्रयच्छति ॥ हरेत्क्षुधां क्षुधार्तानामुपानद्दोऽनुपानहे ॥ २१ ॥ मृगत्त्वचोतिमृदुलाविवस्त्रेभ्यातिसर्जति ॥ अनुव्रजतिकांतारेप्रांतरेपथिकान्पथि ॥ २२ ॥ नजिघृक्षतितेभ्योर्थ मभयंचेतियच्छति ॥ आविंध्याटविमेनामग्राह्यंदुष्टभयापहम् ॥ २३ ॥ नित्यंकार्पटिकान्सर्वान्सपुत्रेणप्रपश्यति ॥ तेपिचप्रतितीर्थंहितमाशीर्वादयं तिवै ॥२४॥ इतितिष्ठतिपिंगाक्षेसाटवीनगरायिता ॥ अध्वनीनेऽध्वगान्कोपिनरुणद्धिससाध्वसः ॥२५॥ कदाचित्तत्पितृव्येणसमीपग्रामवासिना ॥ श्रुतःकार्पटिकानांहिसार्थःसार्थोमहास्वनः ॥ २६ ॥ लुब्धकस्तद्धनेलुब्धःक्षुद्रस्तन्निधनोद्यतः ॥ सरुरोधतमध्वानमग्रेगत्वाऽतिगूढवत् ॥ २७ ॥ तदा गुप्यस्यशेषेणपिंगाक्षोमृगयांगतः ॥ तस्मिन्नरण्येतन्मार्गेनिकषाध्युषितोनिशि ॥ २८ ॥ परप्राणद्रुहांपुंसांनसिद्ध्येयुर्मनोरथाः ॥ विश्वंकुशलितेनैत द्विश्वेशपारिरक्षितम् ॥ २९ ॥ नचिंतयेदनिष्टानितस्मात्कृष्टिःकदाचन॥ विधिदृष्टंयतोभाविकलुषंभाविकेवलम् ॥३०॥ तस्मादात्मसुखंप्रेप्सुरिष्टानिष्टंन चिंतयेत् ॥ चिंतयेच्चेत्तदाचिंत्योमोक्षोपायोनचेतरः ॥३१॥ व्युष्टायामथयामिन्यामभूत्कोलाहलोमहान् ॥ घातयध्वंपातयध्वंनग्नयध्वंद्रुतंभटाः ॥३२॥ मामारयध्वंत्रायध्वंभटाःकार्पटिकावयम् ॥ अनायासंलुंठयध्वंनयध्वंचयदस्तिनः ॥ ३३ ॥ वयंपांथाअनाथाःस्मोविश्वनाथपरायणाः ॥ सनाथास्ते नदूरंसनाथतांपथिकोऽपरः ॥ ३४ ॥ वयंपिंगाक्षविश्वासादस्मिन्मार्गेऽकुतोभयाः ॥ यातायातंसदाकुर्मःसचदूरइतोवनात् ॥३५॥ इतिश्रुत्वाऽथपिंगाक्षो भटःकार्पटिकेरितम् ॥ दूरान्माभैष्टमाभैष्टब्रुवन्नितिसमागतः ॥ ३६ ॥ तत्कर्मसूत्रैराकृष्टोभिल्लःकार्पटिकप्रियः ॥ तूर्णंतदायुष्यमिवतत्रोपस्थितवा न्क्षणात् ॥ ३७ ॥ कोयंकोयंदुराचारःपिंगाक्षेमयिजीवति ॥ उल्लुलुंठयिषुःपांथान्प्राणलिंगसमान्मम ॥ ३८ ॥

यस्माद्विश्वेशरक्षितंजगत्तस्मात्कुशलीत्यन्वयः॥२९॥ कृष्टिर्विद्वान्॥ केवलंकलुषंभाव्यनिष्टचिन्तनेइतिशेषः॥३०॥फलितमाह ॥ तस्मादिति॥३१॥व्युष्टायांप्रभातायाम्॥कोलाहलमाह ॥ घातयध्वमि तिसार्धत्रिभिः ॥३२॥३३॥ तत्रतेनविश्वनाथेनवयंसनाथाःसतुदूरम् ॥ नाथतांस्वत्राणार्थंयाचतामस्माकंकोऽपरोनाथइत्यर्थः ॥ अयंभावः ॥ यद्यपिविश्वनाथःसर्वगतस्तथाप्यस्मद्दुरदृष्टवशाद्दूरस्थित इवभातीत्यर्थः ॥३४॥ किंचवयमिति ॥३५॥ ३६ ॥ भिल्लःपिंगाक्षः ॥ आयुरेवायुष्यम् ॥३७॥ उत्उन्मुच्यअथवाउन्मूल्यमारयित्वेतियावत् ॥ लुलुंठयिषुःलुंठितुमिच्छुः ॥ प्राणलिंगसमान्जंग



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मैर्याचैमाणशिवलिंगतुल्यान् ॥३८॥३९॥ कुलपांसनःकुलदूषणः ॥ कुलपांसुलइतिक्वचित्तत्रापिसएवार्थः ॥ इतिचिरंमयाचिंतितंध्यातंअतोघामुंघातयिष्यामीत्यर्थः ॥४०॥ क्रुधाक्रोधेन ॥४१॥
तान्कार्पटिकान् ॥ सपिंगाक्षः ॥ स्वावसथांतिकंस्वगृहसमीपम् ॥४२॥ आछिन्नमिति॥यत्यद्यहंईश्वरःसमर्थोऽभविष्यंभूतःस्यांततत्तदाशरैराच्छिन्नंधनुर्बाणंधनुश्चबाणाश्चधनुर्बाणम् ॥ द्वंद्वैकवद्भावः॥
हिशब्दःपादपूरणे ॥ यथास्थात्तथाएतान्असूदयिष्यंसूदितवान्स्यामित्यर्थः ॥ यद्वा हियस्मादेतैर्ममशरैर्धनुर्बाणंतथासंनहनंछिन्नंअतोयद्यहमीश्वरोभूतःस्यांएतान्निषूदितवान्स्यामित्यर्थः ॥ ४३ ॥
इत्यभिलष्यन्अभिलषन् ॥ दैवादिकस्यवारूपम् ॥ सपिंगाक्षःपरार्थतःपरेषांनिमित्तंप्राणानत्याक्षीत्त्यक्तवानित्यर्थः ॥ तत्पल्लींतस्यपिंगाक्षस्यपल्लीमालयंपक्कणमितियावत् ॥ गतसाध्वसाविगत
त्रासाः ॥ ४४ ॥ यामतिरिति ॥ मरणकालेयामतिर्यादृग्भावःस्यात्तदनुरूपतस्तादृग्भावानुसारेणगम्यतइतिगतिःफलंस्यादितियतोऽतोनैर्ऋत्यांदिशिभवानांनैर्ऋत्यानामीश्वरः ॥ सदिगीश्वरत्वंप्राप्त

इतितद्वाक्यमाकर्ण्यताराक्षस्तत्पितृव्यकः ॥ धनलोभेनपिंगाक्षेपापंपापोव्यचिंतयत् ॥३९॥ कुलधर्मंव्यपास्यैषवर्ततेकुलपांसनः ॥ चिरंचिंतितमद्यामुं
घातयिष्याम्यसंशयम् ॥ ४० ॥ विचार्येतिसदुष्टात्माभृत्यानाज्ञापयत्क्रुधा ॥ आदावेनंघातयंतुततःकार्पटिकानिमान् ॥ ४१ ॥ ततोऽयुध्यन्दुराचा
रास्तेनैकेनचतेऽखिलाः ॥ यथाकथंचित्तानननयत्सचस्वावसथांतिकम् ॥ ४२ ॥ आच्छिन्नंहिधनुर्बाणंछिन्नंसन्नहनंशरैः ॥ असूदयिष्यमेतांस्तदभविष्यं
यदीश्वरः ॥ ४३ ॥ अभिलष्यन्नितिप्राणानत्याक्षीत्सपरार्थतः ॥ तेपिकार्पटिकाःप्राप्तास्तत्पल्लींगतसाध्वसाः ॥ ४४ ॥ यामतिस्त्वंतकालेस्याद्गति
स्तदनुरूपतः ॥ दिगीशत्वमतःप्राप्तोनिर्ऋत्यांनैर्ऋतेश्वरः ॥ ४५ ॥ इत्थमस्यस्वरूपंतेआवाभ्यांसमुदीरितम् ॥ एतस्योत्तरतोलोकोवरुणस्यायमद्भुतः
॥४६॥ कूपवापीतडागानांकर्तारोनिर्मलैर्धनैः ॥ इहलोकेमहीयंतेवारुणेवरुणप्रभाः ॥४७॥ निर्जलेजलदातारःपरसंतापहारिणः ॥ अर्थिभ्योयेप्रयच्छं
तिचित्रच्छत्रकमंडलून् ॥४८॥ पानीयशालिकाःकुर्युर्नानोपस्करसंयुताः ॥ दद्युर्धर्मघटांश्चापिसुगंधोदकपूरितान् ॥४९॥ अश्वत्थसेकंयेकुर्युःपथिपाद
परोपकाः ॥ विश्रामशालाकर्तारःश्रांतसंतापनोदकाः ॥५०॥ ग्रीष्मोष्महंतिमायूरपिच्छादिरचितान्यपि ॥ चित्राणितालवृंतानिवितरंतितपागमे ॥५१॥

वानित्यर्थः ॥ यलोपआर्षः ॥ अणूप्रत्ययांतरूपंवा ॥ तदुक्तंभगवता ॥ यंयंवापिस्मरन्भावंत्यजत्यंतेकलेवरम् ॥ तंतमेवैतिकौंतेयसदातद्भावभावितइति ॥ ४५ ॥ नैर्ऋतलोकमुपसंहरन्वरुणलोकं
निर्दिशति ॥ इत्थमिति ॥ ४६ ॥ कूपेति ॥ कूपादीनांकर्ताइहास्मिन्वारुणेलोकेमहीयतेइत्यन्वयः ॥ तत्रकूपोंधुः ॥ पुंस्येवांधुःप्रहिःकूपउदपानंतुपुंसिवेत्यमरः ॥ वापीदीर्घिका ॥ वापीतुदीर्घिकेत्यमरः॥
तडागःपद्माकरः ॥ पद्माकरस्तडागोऽस्त्रीकासारःसरसीसरइत्यमरः ॥ ४७ ॥ निर्जलेनिर्गतंजलंयस्मात्तस्मिन्प्रदेशइतिशेषः ॥ ४८ ॥ पानीयशालिकाःप्रपाः ॥ नानोपस्कराणिविचित्रजलपान
भाजनवासार्थंलवंगकर्पूरादीनितैःसंयुताःसंयुक्ताः ॥ ४९ ॥ ५० ॥ ग्रीष्मोष्महंति निदाघकालजनिततापहंतितालवृंतानितालादिपत्ररचितव्यजनानीत्यर्थः ॥ धर्मघटान्वितरंतिप्रयच्छंति ॥

१ अक्षराधिक्यमार्षम् ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तपागमेग्रीष्मागमे ॥ ग्रीष्मउष्णकालः ॥ निदाघउष्णोपगमउष्णउष्मापगस्तपइत्यमरः ॥ ५१ ॥ तपर्तुषुग्रीष्मर्तुषु ॥ आतृप्तिपानकानितृप्तिपर्यंतंप्रपानकानीत्यर्थः ॥ ५२ ॥ ऐक्षवानिक्षुजन्यान् ॥ ५३ ॥ धारामंडपाःजलयंत्रगृहाः ॥ ५४ ॥ गलंतिकागौडेझराइतिप्रसिद्धाः ॥ तीर्थमार्गावनेजकास्तीर्थमार्गशोधकाःसंमार्जकाइत्यर्थः ॥ ५५ ॥ भयार्तेभ्यउद्यताःपाणयोयेषांतेतथा ॥ लसंतिचक्रीडंतिचेत्यर्थः ॥ ५६ ॥ विपाशयंतिविगतपाशान्कुर्वंतिमोचयंतीत्यर्थः ॥ कंठपाशितान्कंठेषुपाशादिभिर्बद्धानित्यर्थः ॥ पाशपाणेर्वरुणस्य ॥ प्रचेतावरुणःपाशीत्यमरः ॥ अकुतोभयाःनविद्यतेकुतश्चिद्भयंयेषांतेतथा ॥ ५७ ॥ नौकादीत्यादिपदेनउडुपादयोगृह्यंते ॥ अपिःसमुच्चयवाचीभिन्नक्रमे ॥ दुःखार्णवादपीत्यर्थः ॥ ५८ ॥ तोयार्थेतिपाठेतोयानिमित्तसुखासिद्ध्यर्थमित्यर्थः ॥ ५९ ॥ वितर्षयंतिविगततृष्णान्कुर्वंते ॥ सुखसंततिःसुखपरंपरातद्भागिनः ॥ ६० ॥ एकतमोमुख्यतमः ॥ यादसांजलजंतूनाम् ॥ साक्षीसर्वेषुकर्मस्विति ॥ तदुक्तम् ॥

रसवंतिसुगंधीनिहिमवंतितपर्तुषु ॥ विश्राणयंतिवातृप्तिपानकानिप्रयत्नतः ॥ ५२ ॥ इक्षुक्षेत्राणिसंकल्प्यब्राह्मणेभ्योददत्यपि ॥ तथानानाप्रकारांश्चविकारानैक्षवान्बहून् ॥ ५३ ॥ गोरसानांप्रदातारस्तथागोमहिषीप्रदाः ॥ धारामंडपकर्तारश्छायामंडपकारिणः ॥५४॥ देवालयेषुयेदद्युर्बहुधारागलंतिकाः ॥ तीर्थेवाकरहर्तारस्तीर्थमार्गावनेजकाः ॥ ५५ ॥ अभयंयेप्रयच्छंतिभयार्तोद्यतपाणयः ॥ निर्भयावारुणेलोकेतेवसंतिलसंतिच ॥ ५६ ॥ विपाशयंतियेपुण्यादुर्वृत्तैःकंठपाशितान् ॥ तेपाशपाणेर्लोकेस्मिन्निवसंत्यकुतोभयाः ॥ ५७ ॥ नौकाद्युपायैर्नद्यादौपांथान्येतारयंत्यपि ॥ तारयंत्यपिदुःखाब्धेस्तत्रनागरिकाद्विज ॥५८॥ चट्टान्पुण्यतटिन्यादेर्बंधयंतिशिलादिभिः ॥ तोयार्थिसुखसिद्ध्यर्थंयेनरास्तेत्रभोगिनः ॥ ५९ ॥ वितर्षयंतियेपुण्यास्तृषिताञ्शीतलैर्जलैः ॥ तेऽत्रवैवारुणेलोकेसुखसंततिभागिनः ॥ ६० ॥ जलाशयानांसर्वेषामयमेकतमःपतिः ॥ प्रचेतायादसांनाथःसाक्षीसर्वेषुकर्मसु ॥ ६१ ॥ अस्योत्पत्तिंशृणुपतेर्वरुणस्यमहात्मनः ॥ आसीन्मुनिरमेयात्माकर्दमस्यप्रजापतेः ॥ ६२॥ शुचिष्मानितिविख्यातस्तनयोविनयोचितः ॥ स्थैर्यमाधुर्यधैर्याद्यैर्गुणैरुपचितोहितः ॥ ६३ ॥ अच्छोदेसरसिस्नातुंसगतोबालकैःसह ॥ जलक्रीडनसंसक्तंशिशुमारोहरच्चतम् ॥६४॥ ततस्तस्मिन्मुनिसुतेहृतेऽत्याहितशंसिभिः ॥ तैःसमागत्यशिशुभिःकथितंतत्पितुःपुरः ॥ ६५ ॥

आदित्यचंद्रावनिलोनलश्चद्यौर्भूमिरापोहृदयंयमश्च ॥ अहश्चरात्रिश्चउभेचसंध्येधर्मश्चजानातिजनस्यवृत्तमित्यादि ॥ ६१ ॥ अस्यपतेर्लोकपालस्येतिषष्ठ्यौसमानाधिकरणे ॥ अस्यलोकस्यपतेरितिव्यधिकरणेवा ॥ सखेइतिक्वचित् ॥ ६२ ॥ स्थैर्येति ॥ आदौभवाआद्याःस्थैर्यादयोयेषांतैः शांत्यादिभिर्गुणैरित्यर्थः ॥ उपचितोव्याप्तः ॥ हितोहितकारी ॥ सर्वेषामितिशेषः ॥ हिसइतिक्वचित् ॥ ६३ ॥ अच्छोदेनिर्मलोदकेसरसिपद्माकरे ॥ यद्वा अच्छोदानामग्निष्वात्तानांपितॄणांमानसीकन्यातस्याउत्थितमच्छोदम् ॥ तथाचपितृकल्पेहरिवंशे ॥ एतेषांमानसीकन्याअच्छोदानामविश्रुता ॥ अच्छोदंनामतद्दिव्यंसरोयस्याःसमुत्थितमिति ॥ शिशुंमारयतीतिशिशुमारोजलचरविशेषः ॥ तंशुचिष्मंतम् ॥ ६४ ॥ ततस्तदनंतरंतस्मिन्सरसिमुनिसुतेहृतेसत्यर्थाच्छिशुमारेणे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तिशेषइतिवा ॥ तैःशिशुभिःसमागम्यततिपतुस्तस्यशुचिष्मतःपितुःकर्दमस्यपुरस्तद्धरणमितिवा ॥ कथंभूतैः ॥ अत्याहितशंसिभिः ॥ अतिशयेनाहितं अत्याहितमत्यनिष्टमित्यर्थः॥तच्छंसितुंकथितुं शीलंयेषांतैरिति ॥६५॥ श्रुतबालविपत्तेः ॥ श्रुताबालविपत्तिर्येनसतथातस्यमनोंऽतःकरणम् ॥ हराद्विश्वेश्वरात् ॥६६॥ अधिकमिति ॥ अधिकंयथास्यात्तथाशीलयामासाचिंतयामासेत्यर्थः ॥ तेषां मध्येइत्यतःआक्तनानांद्वितीयातानांपदानांपश्यन्शीलयामासेत्यनेनैवान्वयः ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ इत्थंसंसक्तानासक्तान्बहुबालकान्मुनिकुमारांश्चपश्यन्नित्यन्वयः ॥ इत्थमि त्युक्तंप्रकारमभिनयेनदर्शयति ॥ करेति ॥ कराएवयंत्राणिजलनिषेकपात्राणितैर्विनिर्मुक्तास्त्यक्तायास्तोयधारास्ताभिरभिषेचनैरभिषेकैरित्यर्थः ॥ ७१ ॥ करैस्ताडितानियानिपानीया

हरार्चनोपविष्टस्यसमाधौनिश्चलात्मनः ॥ श्रुतबालविपत्तेश्चचचालनमनोहरात् ॥ ६६ ॥ अधिकंशीलयामाससससर्वज्ञांत्रिलोचनम् ॥ पश्यञ्शंभोः समीपेसभुवनानिचतुर्दश ॥ ६७ ॥ नानाभूतानिभूतानिब्रह्मांडांतर्गतानिच ॥ चंद्रसूर्यर्क्षताराश्चपर्वतान्सरितोद्रुमान् ॥ ६८ ॥ समुद्रानंतरीया णिह्यरण्यानीस्सरांसिच ॥ नानादेवनिकायांश्चबह्वीर्दिविषदांपुरीः ॥ ६९ ॥ वापीकूपतडागानिकुल्याः पुष्करिणीर्बहु ॥ एकस्मिन्क्वापिसरसिजलक्री डापरायणान् ॥ ७० ॥ बहून्मुनिकुमारांश्चमज्जनोन्मज्जनादिभिः ॥ करयंत्रविनिर्मुक्ततोयधाराभिषेचनैः ॥ ७१ ॥ करताडितपानीयशब्ददिङ्मुखना दिभिः ॥ जलखेलनकैरित्थंसंसक्तान्बहुबालकान् ॥७२॥ तेषांमध्येददर्शाथसमाधिस्थःसकर्दमः ॥ स्वंशिशुंशिशुमारेणनीयमानंसुविह्वलम् ॥ ७३ ॥ कयाचिज्जलदेव्याथतस्माच्चक्रूरयादसः ॥ प्रसह्यनीत्वोदधयेदृष्टवांस्तंसमर्पितम् ॥ ७४ ॥ निर्भर्त्स्यसरितांनाथंकेनचिद्रुद्ररूपिणा ॥ त्रिशूलपाणिने त्युक्तंक्रोधताम्राननेनच ॥ ७५ ॥ कुतोजलानामधिपशिवभक्तस्यबालकः ॥ प्रजापतेःकर्दमस्यमहाभागस्यधीमतः ॥ ७६ ॥ अज्ञात्वाशिवसामर्थ्यं भवताचिरमासितः ॥ भयत्रस्तेनतद्वाक्यश्रवणात्तमुदन्वता ॥७७॥ बालंरत्नैरलंकृत्यबद्धातंशिशुमारकम् ॥ समर्पितंसमानीयशंभुपादाब्जसंनिधौ ॥ ॥ ७८ ॥ नत्वाविज्ञापयत्तंचनापराध्याम्यहंविभो ॥ अनाथनाथविश्वेशभक्तापत्तिविनाशन ॥ ७९ ॥ भक्तकल्पतरोशंभोऽनेनायंदुष्टयादसा ॥ अना यिनमयानाथभवद्भक्तजनार्भकः ॥ ८० ॥

निजलानितैर्यैःशब्दास्तैर्दिङ्मुखनादिभिर्जलखेलनकैर्जलक्रीडनकैश्चेति ॥ ७२ ॥ तेषामिति ॥ अथानंतरं तेषांबालकानांमध्येशिशुमारेणस्वंशिशुंनीयमानंददर्श ॥ ७३ ॥ तस्मा च्छिशुमारात्कयाचिज्जलदेवतयाप्रसह्यहठान्नीत्वातंशिशुमुदधयेसमुद्रायसमर्पितमितिचदृष्टवानित्यन्वयः ॥ ७४ ॥ इत्युक्तंवक्ष्यमाणम् ॥ ७५ ॥ ७६ ॥ आसितोवासितः ॥ चिरकालम भिव्याप्यबद्धइतिवा ॥ भयेति ॥ उदन्वतासमुद्रेणतस्यरुद्ररूपिणोवाक्यश्रवणात्तंबालंरत्नैरलंकृत्यशंभोःपादाब्जसन्निधौसमर्पितमित्यन्वयः ॥ नपुंसकत्वंछांदसम् ॥ ::समर्पितमितिभावेवा निष्ठा ॥ पश्यन्नितिवान्वयः ॥ ७७ ॥ ७८ ॥ तंशंभुंनत्वाविज्ञापयद्व्यज्ञापयत् ॥ अडभावस्त्वार्षः ॥ विज्ञापनमाह ॥ नापराध्यामीति ॥ आपत्तिरापत् ॥ ७९ ॥ भोशंभोअनेनदुष्टयादसा

१ इदंपदत्रयमग्रिमश्लोकस्थम् ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तंजलजंतुंशिशुमाराख्यम् ॥ ८१ ॥ तेनप्रसिद्धेनगणेन ॥ तत्पादः ॥ भवस्यतवभक्तजनार्भकइतिवा ॥ ८० ॥ हेनाथहेभव ॥ मयानानीतइत्यर्थः ॥ अयंबालोऽनायिआनीतोनोमया ॥ गृहाणेतिसार्धद्वयंवाक्यम् ॥ पार्षदेशंकरस्याज्ञयाशुचिष्मतंप्रतिहेवत्सस्वभवनंयाहिइतिब्रुवतिसतितथाकर्दमंप्रतिगृहाणेमंस्वंतनयमितिचब्रुवतिसतिकर्दमःसमाधिसमयेइतिपूर्वोक्तंशृण्वन्प्रणिधानमेकाग्रतां समाधिंविसृज्यनेत्रेउन्मील्यविकचय्ययावत्संपश्यतेसंपश्यतिपुरतःतावत्पार्श्वेशिशुंसमवैक्षतदृष्टवानित्यर्थः ॥ अलंकृतेकर्णिकेकर्णौयस्यतम् ॥ ८२ ॥ ८३ ॥ ८४ ॥ काकपक्षश्चूडाकरणात्प्राक्केशः

गृहाणेमंस्वतनयंपार्षदेशंकराज्ञया ॥ याहिस्वभवनंवत्सब्रु गणेनतेनविज्ञायशंभोरथमनोगतम् ॥ पाशेनबद्धातत्पादः शिशुहस्तेसमर्पितम् ॥ ८१ ॥ वतीतिसकर्दमः ॥ ८२॥ समाधिसमयेसर्वमितिशृण्वन्नुदारधीः॥उन्मील्यनयनेयावत्प्रणिधानंविसृज्यच ॥८३॥ संपश्यतेशिशुंतावत्पुरतःसमवैक्षत ॥ गृहीतशिशुमारंचपार्श्वेऽलंकृतकर्णिकम् ॥ ८४ ॥ तोयार्द्रकाकपक्षाग्रंकषायनयनांचलम् ॥ किंचिद्विरूक्षत्वक्क्षोभंसंभ्रमापन्नमानसम् ॥ ८५ ॥ कृतप्रणाममालिंग्यजिघ्रंस्तन्मुखपंकजम् ॥ पुनर्जातमिवामंस्तपश्यंश्चापिमुहुर्मुहुः ॥ ८६ ॥ शतानिपंचवर्षाणिप्रणिधानस्थितस्यहि ॥ कर्दमस्यव्यतीतानिशंभुमर्चयतस्तदा ॥ ८७ ॥ कर्दमोपिचतत्कालमज्ञासीत्क्षणसंगतम् ॥ यतोनप्रभवेत्कालोमहाकालस्यसंनिधौ ॥ ८८ ॥ ततस्तंतनयःपृष्ट्वा पितरंप्रणिपत्यच ॥ जगामतूर्णंतपसेश्रीमद्वाराणसींपुरीम् ॥ ८९ ॥ तत्रतप्त्वातपोघोरंलिंगंसंस्थाप्यशांभवम् ॥ पंचवर्षसहस्राणिस्थितःपाषाणनिश्चलः ॥ ९० ॥ आविरासीन्महादेवस्तुष्टस्तत्तपसाततः ॥ उवाचकार्दमेब्रूहिकिंददामिवरोत्तमम् ॥ ९१ ॥ कार्दमिरुवाच ॥ ॥ यदिनाथप्रसन्नोसिभक्तानामनुकंपक ॥ सर्वासामाधिपत्यंमेदेह्यपांयादसामपि ॥ ९२ ॥ इतिश्रुत्वामहेशानःसर्वचिंतितदःप्रभुः ॥ अभ्यषिंचततंतत्रवारुणेपरमेपदे ॥ ९३ ॥ जलाशयानांसर्वेषांप्रतीच्याश्चापिवैदिशः ॥ अधीश्वरः रत्नानामब्धिजातानामब्धीनांसरितामपि ॥ सरसांपल्वलानांचवाप्यंबुस्रोतसांपुनः ॥ ९४ ॥ पाशपाणिर्भवसर्वामरप्रियः ॥ ९५ ॥

शिखंडकइत्यर्थः ॥ काकपक्षःशिखण्डकइत्यमरः ॥ तोयेनार्द्रकाकपक्षस्याग्रंयस्यतम् ॥ कषायनयनांचलंकषायंकषाययुक्तंनयनांचलंनयनमेवअंचलंवस्त्रंयस्य ॥ यद्वा कषाययुक्तंनयनयोरंचलंप्रांतोयस्यतम् ॥ किंचिद्यथास्यात्तथाविरूक्षंअस्निग्धमित्यर्थः ॥ त्वक्क्षोभंत्वचिक्षोभोयस्यतम् ॥ ८५ ॥ अमंस्तामन्यत ॥ ८६ ॥ ८७ ॥ क्षणसंगतंक्षणमात्रंसंगतंइत्यज्ञासीज्ज्ञातवानित्यर्थः ॥ तत्रहेतुः ॥ यतइति ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ सरसांपद्माकराणाम् ॥ पल्वलानामल्पसरसाम् ॥ वाप्यंबुस्रोतसांवाप्यंबूनांस्रोतसांचेत्यर्थः ॥ ९४ ॥ जलाशयानांजलाधा



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

राणाम् ॥ जलाशयोजलाधारइत्यमरः ॥ प्रतीच्याःपश्चिमायाः ॥ प्राच्यवाचीप्रतीच्यस्ताःपूर्वदक्षिणपश्चिमाइत्यमरः ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ तृषस्तृष्णायाः ॥ ९९ ॥ १०० ॥
वरुणोपीति ॥ यद्यपिद्वादशादित्यानांमध्येवरुणएकआदित्यःकश्यपाददित्यामुत्पन्नइतिप्रसिद्धस्तथापिकल्पभेदाभिप्रायेणायमितिज्ञातव्यम् ॥ १ ॥ दुरपायैरपमृत्युभिः ॥ १०२ ॥ ॥ इति
श्रीरामानंदकृतायांकाशीखंडटीकायांद्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ त्रयोदशेजगत्प्राणगुह्यकेश्वरयोःपुरे ॥ गंधवत्यलकाख्येवैवर्ण्यैतेसुमनोहरे ॥ १ ॥ क्रमप्राप्तांवायोःपुरींवर्णयतः ॥
इमामिति ॥ १ ॥ २ ॥ कश्यपएवकाश्यपः ॥ दायादःपुत्रः ॥ ३ ॥ ४ ॥ पापकंचुकंपापमेवकंचुकंनिर्मोकम् ॥ ५ ॥ तपसांफलदः ॥ फलमतउपपत्तेरितिब्रह्मसूत्रादित्यर्थः ॥ ज्योतीरूपः

ददामिवरमन्यंचसर्वेषांहितकारकम् ॥ त्वयैतत्स्थापितंलिंगंतवनाम्नाभविष्यति ॥ ९६ ॥ वरुणेशमितिख्यातंवाराणस्यांसुसिद्धिदम् ॥ मणिकर्णेश
लिंगस्यनैर्ऋत्यांदिशिसंस्थितम् ॥ ९७ ॥ आराधितंसदापुंसांसर्वजाड्यविनाशकृत् ॥ वरुणेशस्ययेभक्तानतेषामम्भयंक्वचित् ॥ ९८ ॥ नसंतापभयं
तेषांनापायमरणंक्वचित् ॥ जलोदरभयंनैवनभयंवैतृषःक्वचित् ॥ ९९ ॥ नीरसान्यन्नपानानिवरुणेश्वरसंस्मृतेः ॥ सरसानिभविष्यंतिनात्रकार्या
विचारणा ॥ १०० ॥ इत्युक्त्वांतर्दधेशंभुर्वरुणोपिस्वबंधुभिः ॥ इमंलोकमलंकुर्वस्तदारभ्यस्थितोद्विजः ॥ १ ॥ इदंवरुणलोकस्यस्वरूपंतेनिरूपितम् ॥
यच्छ्रुत्वाननरःक्वापिदुरपायैःप्रबाध्यते ॥ १०२ ॥ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेनिर्ऋतिवरुणलो
कवर्णनंनामद्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ गणावूचतुः ॥ ॥ इमांगंधवतींपुण्यांपुरींवायोर्विलोकय ॥ वारुण्याउत्तरेभागेमहाभाग्यनिधेद्विज
॥ १ ॥ अस्यांप्रभंजनोनामजगत्प्राणोदिगीश्वरः ॥ आराध्यश्रीमहादेवंदिक्पालत्वमवाप्तवान् ॥ २ ॥ पुराकश्यपदायादःपूतात्मेतिचविश्रुतः ॥
धूर्जटेराजधान्यांसचचारविपुलंतपः ॥ ३ ॥ वाराणस्यांमहाभागोवर्षाणामयुतंशतम् ॥ स्थापयित्वामहालिंगंपावनंपवनेश्वरम् ॥ ४ ॥ यस्यदर्शनमात्रे
णपूतात्माजायतेनरः ॥ पापकंचुकमुत्सृज्यसवसेत्पावनेपुरे ॥ ५ ॥ ततस्तस्योग्रतपसातपसांफलदःशिवः ॥ आविरासीत्ततोलिंगाज्ज्योतीरूपोमहे
श्वरः ॥ ६ ॥ उवाचचप्रसन्नात्माकरुणामृतसागरः ॥ उत्तिष्ठोत्तिष्ठपूतात्मन्वरंवरयसुव्रत ॥ ७ ॥ अनेनतपसोग्रेणलिंगस्याराधनेनच ॥ तवादेयंनपू
तात्मंस्त्रैलोक्येसचराचरे ॥८॥ ॥ पूतात्मोवाच ॥ देवदेवमहादेवदेवानामभयप्रद ॥ ब्रह्मनारायणेंद्रादिसर्वदेवपदप्रद ॥ ९ ॥ वेदास्त्वांनचाविंदंतिकि
मात्मकइतिप्रभो॥प्राप्ताःशतपथत्वंचनेतिनेतीतिवादिनः ॥१०॥ ब्रह्मविष्ण्वोरपिगिरांगोचरोनचवाक्पतेः॥प्रमथेशंकथंस्तोतुंमादृशःप्रभवेत्प्रभो ॥११॥

प्रकाशबहुलोभास्वरइतियावत् ॥६॥७॥८॥ परमात्मत्वेनश्रीविश्वेश्वरंस्तौति ॥ देवदेवेति॥ देवानांदेवत्वेपिपरिच्छिन्नत्वंजाड्यंवास्यादित्यतआह ॥ महांश्चासौदेवःस्वप्रकाशश्चेतिमहादेवस्तत्संबोधनंहे
महादेव ॥ परिपूर्णानुभवरूपत्वेपिभक्ताभयप्रदत्वाश्रयप्रदत्वेआह ॥ देवानामित्यादिना ॥९॥ यतोवाचोनिवर्ततइतिश्रुतिसिद्धश्रुत्यविषयत्वमाह ॥ वेदास्त्वामिति॥किमात्मकःकिंस्वरूपः॥ शतपथत्वं
प्राप्तावाजसनेयिनः॥ बहुभिर्मार्गैर्यत्नंकुर्वंतोपिनवाप्राप्नुवंतीतिध्वनितम् ॥१०॥ वेदतद्द्रष्टॄणामगोचरत्वेपिब्रह्मविष्ण्वोर्वाचस्पतेश्चगिरांगोचरोभविष्यतिनेत्याह ॥ ब्रह्मविष्ण्वोरिति ॥ अतःहेप्रभोप्रमथेशं


CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

प्रमथ्नातिप्रकर्षेणविलोडयतिसंसारेजीवानितिप्रमथमज्ञानंतस्येशंनियंतारंमाहशोऽज्ञःस्तोतुंकथंप्रभवेदित्यर्थः ॥ प्राकृतंव्याख्यानंसर्वत्रस्पष्टम् ॥ ११॥ यद्यप्येवंतथापिहेईशतवभक्तिस्तवस्तुतिकर्मणिमां
प्रमिमीतेप्रवर्तयति ॥ प्रमिमीतेशइत्यत्रईलोपश्छांदसः ॥ हेजगन्नाथजगतांस्वामिन्किंकरोमियतोममेंद्रियाणिनवश्यानिनस्वतंत्राणीति ॥ यद्यपिममत्वत्स्तवनेसामर्थ्यंनास्तितथापित्वद्भक्तिप्रेरितः
सन्स्तौमीत्यर्थः ॥ १२ ॥ विश्वंजगत्त्वम् ॥ ब्रह्मैवेदमित्यादिश्रुतेः ॥ नन्वहंचेद्विश्वंतर्हिविश्वस्यजडत्वदृश्यत्वाभ्यांममानात्मत्वविनाशित्वेप्रसज्जेयातांतत्राह ॥ नास्तिवैभेदइति ॥ वैप्रसिद्धंएवार्थेवा ॥
भेदोयथार्थतोनास्त्येव ॥ कुतः॥ यतस्त्वमेकः ॥ एकमेवाद्वितीयमित्यादिश्रुतेः॥ जानेत्वत्तोनभेदोस्तीतिकश्चित् ॥ जानेत्वमित्यन्यत्र ॥ सर्वगःपूर्णः ॥ स्तुत्यंस्तवनीयम् ॥ स्तोतास्तवकर्ता ॥ स्तुति
रारोप्यमाणगुणकीर्तनम् ॥ सगुणोनिर्गुणःसप्रपंचोपिनिष्प्रपंचश्चभवानिति ॥ १३ ॥ कदानिर्गुणइत्याकांक्षायामाह ॥ सर्गात्पुराभवानेकइति ॥ एकःसजातीयविजातीयस्वगतभेदशून्यः ॥
एकमेवाद्वितीयमितिश्रुतेः ॥ परमार्थतःशब्दाद्यगोचरत्वाद्यतोवाचोनिवर्तंतेअप्राप्यमनसासहेतिश्रुतेरित्याशयः ॥ १४ ॥ कथंतर्हिवेदांतवेद्यतासगणेगृहीतशक्तिकतयानिर्गुणस्यलक्ष्यमाणत्वा

प्रसह्यप्रमिमीतेशभक्तिर्मांस्तुतिकर्मणि ॥ करोमिकिंजगन्नाथनवश्यानींद्रियाणिमे ॥ १२ ॥ विश्वंत्वंनास्तिवैभेदस्त्वमेकःसर्वगोयतः ॥ स्तुत्यंस्तो
तास्तुतिस्त्वंचसगुणोनिर्गुणोभवान् ॥१३॥ सर्गात्पुराभवानेकोरूपनामविवर्जितः ॥ योगिनोपिनतेतत्त्वंविंदंतिपरमार्थतः ॥ १४ ॥ यदैकलोनशक्नो
षिरंतुंस्वैरचरप्रभो ॥ तदिच्छातवयोत्पन्नासेव्याशक्तिरभूत्तव ॥ १५ ॥ त्वमेकोद्वित्वमापन्नःशिवशक्तिप्रभेदतः ॥ त्वंज्ञानरूपोभगवान्स्वेच्छाशक्तिस्वरू
पिणी ॥ १६ ॥ उभाभ्यांशिवशक्तिभ्यांयुवाभ्यांनिजलीलया ॥ उत्पादिताक्रियाशक्तिस्ततःसर्वमिदंजगत् ॥ १७ ॥ ज्ञानशक्तिर्भवानीशइच्छाश
क्तिरुमास्मृता ॥ क्रियाशक्तिरिदंविश्वमस्यत्वंकारणंततः ॥ १८ ॥ दक्षिणांगंतवविधिर्वामांगंतवचाच्युतः ॥ चंद्रसूर्याग्निनेत्रस्त्वंत्वन्निःश्वासःश्रुति
त्रयम् ॥ १९ ॥ त्वत्स्वेदादंबुनिधयस्तवश्रोत्रंसमीरणः ॥ बाहवस्तेदशदिशोमुखंतेब्राह्मणाःस्मृताः ॥ २० ॥ राजन्यवर्यास्तेबाहूवैश्याऊरुसमुद्भवाः ॥
पद्भ्यांशूद्रस्तवेशानकेशास्तेजलदाःप्रभो ॥ २१ ॥

दित्याशयेनाह ॥ यदैकलइति ॥ स्वैरचरहेस्वतंत्र ॥ तत्तदा ॥ सेव्यासेवनीयास्वाश्रयेत्यर्थः ॥ १५ ॥ तर्हिशक्तिशक्तिमतोर्भेदाद्द्वैतक्षतिर्नेत्याह ॥ त्वमेकोद्वित्वमापन्नइति ॥ तत्रविभागमाह ॥
त्वामिति ॥ शिवशब्दार्थमाह ॥ ज्ञानरूपइति ॥ स्वेच्छास्वस्येच्छाईक्षणरूपेतियावत् ॥ सऐक्षतबहुस्यामितिश्रुतेः ॥ इच्छाशक्तीतिक्वचित् ॥१६॥ ततोद्वित्वभावानंतरंक्रियाशक्तिरुत्पादितेत्यन्वयः ॥
क्रियाशक्तिस्वरूपमाह ॥ सर्वमिदंजगदिति ॥ १७ ॥ पूर्वोक्तमेवाविवृणोति ॥ ज्ञानशक्तिरिति ॥ यतउभाभ्यांईशोमाभ्यांक्रियाशक्तिरुत्पादिता ॥ ततस्तस्याइत्यर्थः ॥ १८ ॥ इदानींविरा
डरूपेणस्तौति ॥ दक्षिणांगमिति ॥ चन्द्रसूर्येति ॥ चक्षोःसूर्योअजायतइत्यादिश्रुतेः ॥ त्वन्निःश्वासइति ॥ तदेतन्महतोभूतस्यानिःश्वसितमेतद्यदृग्वेदोयजुर्वेदःसामवेदइतिश्रुतेः ॥१९॥ मुखंतइति ॥
ब्राह्मणोस्यमुखमासीदितिश्रुतेः ॥ २० ॥ राजन्येति ॥ बाहूराजन्यःकृतइतिश्रुतेः ॥ वैश्याइति ॥ ऊरूतदस्ययद्वैश्यइतिश्रुतेः ॥ पद्भ्यामिति ॥ पद्भ्यांशूद्रोअजायतेतिश्रुतेः ॥ २१ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पुंप्रकृतिरूपेणपुरुषप्रधानशक्तिभ्यामित्यर्थः ॥ मध्येब्रह्मांडंब्रह्मांडस्यमध्ये॥२२॥उपसंहरति ॥ अतइति ॥२३॥ सगुणनिर्गुणयोर्दुर्ज्ञेयत्वात्केवलंनमस्याति ॥ नमस्तुभ्यमिति ॥ आदरार्थावीप्सा ॥ ज्ञानेच्छाक्रियाशक्तीनांवात्रयोनमस्काराः ॥ २४ ॥ २५ ॥ सर्वगोममरूपेणेत्यादीनामितिवरानद्त्वातस्मिन्‌लिंगेअन्तर्धानंययावित्यग्रिमेणान्वयः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ उपसंहरंतौकुवेरस्यपुरींदर्शयतः ॥ इतीति ॥ तस्याइति ॥ योभक्तियोगतःशंभोर्महेश्वरस्यसखित्वमापेदेऽस्याअलकायानाथश्चतस्यकुवेरस्य ॥ तस्याःगन्धवत्याः ॥ प्राच्यांपूर्वस्यांदिश्येषाऽलकापुरीत्यर्थः ॥ ३१ ॥ पद्ममुख्यानामिति ॥ पद्मोमुख्योआदिर्येषांपद्मादीनांतेतथा तेषामष्टानामित्यर्थः ॥ ३२ ॥ ३३ ॥ श्रुतिगोचरतांश्रवणेंद्रियगोचरताम् ॥ युवयोरिति ॥ युवयोर्वागेव

त्वंपुंप्रकृतिरूपेणब्रह्मांडमसृजः पुरा॥मध्येब्रह्मांडमखिलंविश्वमेतच्चराचरम् ॥ २२ ॥ अतस्त्वत्तोनमन्येऽहंकिंचिद्भिन्नंजगन्मय ॥ त्वयिसर्वाणिभूतानिसर्वभूतमयोभवान् ॥ २३ ॥ नमस्तुभ्यंनमस्तुभ्यंनमस्तुभ्यंनमोनमः ॥ अयमेववरोनाथत्वयिमेऽस्तुस्थिरामतिः ॥ २४ ॥ इत्युक्तवतिदेवेशस्तस्मिन्पूतात्मनिप्रभुः ॥ स्वमूर्तिंत्वंसमारोप्यदिक्पालपदमादधे ॥ २५ ॥ सर्वगोममरूपेणसर्वतत्त्वावबोधकः ॥ सर्वेषामायुषोरूपंभवानेवभविष्यति ॥ २६ ॥ तवलिंगमिदंदिव्यंयेद्रक्ष्यंतीहमानवाः ॥ सर्वभोगसमृद्धास्तेत्वल्लोकसुखभागिनः ॥ २७ ॥ पवमानेश्वरंलिंगंमध्येजन्मसकृन्नरः ॥ यथोक्तविधिनापूज्यसुगंधस्नपनादिभिः ॥ २८ ॥ सुगंधचंदनैःपुष्पैर्ममलोकेमहीयते ॥ ज्येष्ठेशात्पश्चिमेभागेवायुकुंडोत्तरेणतु ॥ २९ ॥ पावमानंसमाराध्यपूतोभवतितत्क्षणात् ॥ इतिदत्त्वावरान्देवस्तस्मिँल्लिंगेलयंययौ ॥३०॥ गणावूचतुः ॥ इतिगंधवतीपुर्याःस्वरूपंतेनिरूपितम् ॥ तस्याःप्राच्यांकुबेरस्यश्रीमत्येषालकापुरी ॥ ३१ ॥ शंभोःसखित्वमापेदेनाथोस्याभक्तियोगतः ॥ निधीनांपद्ममुख्यानांदाताभोक्ताहराचनात् ॥ ३२ ॥ ॥ शिवशर्मोवाच ॥ ॥ कोसौकस्यपुनःकीदृग्भक्तिरस्यसदाशिवे ॥ ययासखित्वमापन्नोदेवदेवस्यधूर्जटेः ॥ ३३ ॥ इतिश्रोतुंममनःश्रुतिगोचरतांगतम् ॥ युवयोर्वाक्सुधास्वादमेदुरोदरमंथरम् ॥ ३४ ॥ गणावूचतुः ॥ ॥ शिवशर्मन्महाप्राज्ञपरिशुद्धेंद्रियेश्वर ॥ सुतीर्थक्षालिताशेषजन्मजातमहामल ॥ ३५ ॥ सुहृदिप्रेमसंपन्नेत्वय्यनुद्यंनाकिंचन ॥ साधुभिःसहसंवादःसर्वश्रेयोऽभिवृद्धये ॥ ३६ ॥ आसीत्कांपिल्यनगरेसोमयाजिकुलोद्भवः ॥ दीक्षितोयज्ञदत्ताख्योयज्ञविद्याविशारदः ॥ ३७ ॥ वेदवेदांगवेदार्थान्वेदोक्ताचारचंचुरः ॥ राजमान्योबहुधनोवदान्यःकीर्तिभाजनम् ॥ ३८ ॥ अग्निशुश्रूषणरतोवेदाध्ययनतत्परः ॥ तस्यपुत्रोगुणनिधिश्चंद्रबिंबसमाकृतिः ॥ ३९ ॥

सुधातस्यायआस्वादस्तेनमेदुरंस्निग्धंतृप्तंयदुदरमध्यंतेनमंथरंस्थिरमित्यर्थः ॥ ३४ ॥ शिवेति ॥ परिशुद्धमिंद्रियाणामीश्वरंमनोयस्यतस्यसंबोधनंहेपरिशुद्धेंद्रियेश्वरेति ॥ अथवापरिशुद्धइंद्रियेश्वरःप्रत्यगात्मायस्यसतथातस्यसंबोधनम् ॥ सुतीर्थेषुमथुरादिक्षेत्रेषुक्षालितमशेषजन्मसमूहस्यमहामलंमहत्पापंयेनसतथातत्संबोधनंसुतीर्थक्षालिताशेषजन्मजातमहामलेति ॥ ३५ ॥ अनुद्यमकथनीयम् ॥ ३६ ॥ ३७ ॥ वेदवेदांगवेदार्थान्वेदजानातीत्यर्थः ॥ ऐकेपद्यपाठेऽर्थःस्पष्टएव ॥ उक्ताचारचंचुरःशास्त्रोक्ताचारेषुदक्षः ॥ वदान्योदाता ॥ कीर्तिभाजनंयशःपात्रम् ॥ ३८ ॥ ३९ ॥

---

१ वासिनइतिक्वचित्पाठः । २ वेदोक्ताचारचंचुरइति ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ४० ॥ ४१ ॥ ४२ ॥ पाखंडिनोबैडालव्रतिकाः ॥ भण्डाःप्रतारकाः ॥ तैःसहबद्धाप्रेमपरंपरायेनसः ॥ ४३ ॥ ४४ ॥ ४५ ॥ तदेति ॥ अनेहसंकालम् ॥ ४६ ॥ अधीत्यावर्त्यपूर्वपाठितं कंठतःकृत्वेतियावत् ॥ ४७ ॥ केशांतकर्मकृत्वेति ॥ अनुवादोयम् ॥ यद्वा षोडशाब्देक्रियमाणंगोदानाख्यंकर्मविशेषःकेशांतकर्म ॥ ४८ ॥ गृह्योक्तेन स्वशाखोक्तेन ॥ आश्वलायनप्रणीतसूत्रोक्त विधानेनेत्यर्थः॥पाणिग्राहंविवाहम्॥मृदुकोमलंयथास्यात् ॥४९॥ शास्तिशिक्षयति ॥ शिक्षामेवाह ॥ क्रोधनस्तइत्यारभ्यप्रतिक्षणमित्यतःप्राक्तनेनग्रंथेन ॥५०॥सदाचारैरित्यस्यव्यावृत्तिमाह ॥ नवै

कृतोपनयनःसोथविद्यांजग्राहभूरिशः ॥ अथपित्रानभिज्ञातोद्यूतकर्मरतोऽभवत् ॥ ४० ॥ आदायादायबहुशोधनंमातुःसकाशतः ॥ ददातिद्यूतकारेभ्योमैत्रींतैश्चचकारसः ॥ ४१ ॥ संत्यक्तब्राह्मणाचारःसंध्यास्नानपराङ्मुखः ॥ निंदकोवेदशास्त्राणांदेवब्राह्मणनिंदकः ॥४२॥ स्मृत्याचारविहीनस्तुगीतवाद्यविनोदभाक् ॥ नटपाखंडिभंडैश्चबद्धप्रेमपरंपरः ॥ ४३ ॥ प्रेरितोपिजनन्यासनयातिपितुरंतिकम् ॥ गृहकार्यांतरव्यग्रोदीक्षितोदीक्षितायिनीम् ॥ ४४ ॥ यदायदैवतांपृच्छेदयेगुणनिधिःसुतः ॥ नदृश्यतेमयागेहेक्कयातिविदधातिकिम् ॥ ४५ ॥ तदातदेतिसाब्रूयादिदानींसबहिर्गतः ॥ स्नात्वासमर्च्यवैदेवानेतावंतमनेहसम् ॥ ४६ ॥ अधीत्याध्ययनार्थंसद्विर्त्रैर्मित्रैःसमंययौ ॥ एकपुत्रेतितन्माताप्रतारयतिदीक्षितम् ॥ ४७ ॥ नतत्कर्मचतद्वृत्तंकिंचिद्वेत्तिसदीक्षितः ॥ सचकेशांतकर्मास्यकृत्वावर्षेऽथषोडशे ॥ ४८ ॥ गृह्योक्तेनविधानेनपाणिग्राहमकारयत् ॥ प्रत्यहंतस्यजननीसुतंगुणनिधिंमृदु ॥ ४९ ॥ शास्तिस्नेहार्द्रहृदयाक्रोधनस्तेपितेत्यलम् ॥ यदिज्ञास्यतितेवृत्तंत्वांचमांताडयिष्यति ॥५०॥ आच्छादयामितेनित्यंपितुरग्रेकुचेष्टितम् ॥ लोकमान्योस्तितेतातःसदाचारैर्नवैधनैः ॥ ५१ ॥ ब्राह्मणानांधनंपुत्रसद्विद्यासाधुसंगमः ॥ सच्छ्रोत्रियास्त्वनूचानादीक्षिताःसोमयाजिनः ॥ ५२ ॥ इतिरूढिमिहप्राप्तास्तवपूर्वपितामहाः ॥ त्यक्त्वादुर्वृत्तसंसर्गंसाधुसंगरतोभव ॥ ५३ ॥ सद्विद्यासुमनोधेहिब्राह्मणाचारमाचर ॥ तवानुरूपारूपेणवयसाकुलशीलतः ॥ ५४ ॥ ऊनविंशतिकोऽसित्वमेषाषोडशवार्षिकी ॥ तवपत्नीगुणनिधेसाध्वीमधुरभाषिणी ॥ ५५ ॥ एतांसंवृणुसद्वृत्तांपितृभक्तियुतोभव ॥ श्वशुरोपिहितेमान्यःसर्वत्रगुणशीलतः ॥ ५६ ॥ ततोऽपत्रपसेकिंनत्यजदुर्वृत्ततांशिशो ॥ मातुलास्तेऽतुलाःपुत्रविद्याशीलकुलादिभिः॥ ५७ ॥ तेभ्योपिनबिभेषित्वंशुद्धोस्युभयवंशतः ॥ पश्यैतान्प्रतिवेश्मस्थान्ब्राह्मणानांकुमारकान् ॥ ५८ ॥ गृहेपिशिष्यान्पश्यैतान्पितुस्तेविनयोचितान् ॥ राजापिश्रोष्यतियदातवदुश्चेष्टितंसुत ॥ ५९ ॥ श्रद्धांविहायतेतातवृत्तिलोपंकरिष्यति ॥ बालचेष्टितमेवैतद्वदंत्यद्यापितेजनाः ॥ ६० ॥

धनैरिति॥नचाधमैरितिक्वचित्पाठः ॥ तत्राऽधमैरधमाचारैर्न ॥५१॥ सांगेप्रवचनेगुरोरधीतिनोऽनूचनाः ॥ अनूचानःप्रवचनेसांगेधीतीगुरोस्तुयइत्यमरः॥दीक्षिताःसोमयाजिनइतिव्याख्यानव्याख्येय भावान्नपौनरुक्त्यम् ॥ यष्टाचयजमानश्चससोमवतिदीक्षितइत्यमरः ॥ [illegible] संवृणुवरयस्वेत्यर्थः ॥ ५६ ॥ अपत्रपसेलज्जसे ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विप्रंतातम् ॥ पित्रमितिपाठेपितरमित्यर्थः ॥ वप्रमितिवापाठः ॥ तत्रवप्रंपितरमित्येव ॥ यदाहामरः वप्रःपितरिकेदारइति ॥ मांचआक्षारयिष्यंतिदूषयिष्यंतितिरस्करिष्यंतीतियावत् ॥ ६१ ॥
कैः ॥ मातुश्चरित्रंपुत्रोधत्तेइतिदुर्भाषणैर्दुश्चवचनैरीरिति ॥ निषिद्धाचरणानुभावमुक्त्वाविहिताचरणमाह ॥ श्रुतिस्मृतिपथीनकिंश्रुतिस्मृत्युक्ताचारवान्किंनअपितुस्यादेवेत्यर्थः ॥ श्रुतिस्मृतिपथीनक
इतिक्वचित्पाठः ॥ तत्रपथीनकःपथी ॥ ६२॥६३॥ प्रतिक्षणमितिगणयोरुक्तिः ॥ ६४ ॥ दुर्बोधत्वेहेतुर्यतोव्यसनी॥दुर्बोध्यइतिवापाठः ॥ दुर्वार्यइतिवाक्वचित् ॥ युक्तमेवैतदित्याह ॥ मृगयेति ॥
दुरोदरंद्यूतम् ॥ पणेद्यूतेदुरोदरइत्यमरः॥६५॥सपारदारैः परदारानिमित्तंव्यसनंपारदारंतत्सहितैर्मृगयादिभिःसप्तभिर्व्यसनैरत्रजगतिकोनखंडितोज्ञानभ्रंशतांनप्रापितोअपितुसर्वोलोकःप्रापितएवेत्यर्थः॥

अनंतरंहसिष्यंतियुक्तंदीक्षिततास्त्विति ॥ सर्वेप्याक्षारयिष्यंतितवविप्रंचमांचवै ॥६१॥ मातुश्चरित्रंतनयोधत्तेदुर्भाषणैरिति ॥ पितापितेनपापीयाञ्च्छ्रु
तिस्मृतिपथीनकिम् ॥ ६२ ॥ तदंघ्रिलीनमनसोममसाक्षीमहेश्वरः ॥ नचतुस्नातयापीहमुखंदुष्टस्यवीक्षितम् ॥६३॥ अहोबलीयान्सविधिर्येनजातो
भवानिति ॥ प्रतिक्षणंजननन्येतिशिक्ष्यमाणोतिदुर्मदः ॥ ६४ ॥ नतत्याजचतद्धर्मंदुर्बोधोव्यसनीयतः ॥ मृगयामद्यपैशुन्यवेश्याचौर्यदुरोदरैः ॥ ६५ ॥
सपारदारैर्व्यसनैरेभिःकोत्रनखंडितः ॥ यद्यन्मध्येगृहेपश्येत्तत्तन्नीत्वासुदुर्मतिः ॥ ६६ ॥ अर्पयेद्द्यूतकाराणांसकुप्यंवसनादिकम् ॥ नवरत्नमयींमातुः
करतःपितुरूर्मिकाम् ॥ ६७ ॥ स्वपंत्यास्त्वेकदाऽऽदायदुरोदरिकरेऽर्पयत् ॥ एकदागच्छताराजभवनान्निजमुद्रिका ॥ ६८ ॥ दीक्षितेनपरिज्ञातादे
वाद्द्यूतकृतःकरे ॥ उवाचदीक्षितस्तंचकुतोलब्धात्वयोर्मिका ॥ पृष्टस्तेनाथनिर्बंधादसकृत्प्रत्युवाचकिम् ॥ ६९ ॥ ममाक्षिपसिविप्रोच्चैःकिंमयाचौर्य
कर्मणा ॥ लब्धामुद्रात्वदीयेनपुत्रेणैषाममार्पिता ॥ ७० ॥ ममेमातुर्हिपूर्वेद्युर्जित्वानीतोहिशाटकः ॥ नकेवलंममाप्येतदंगुलीयंसमर्पितम् ॥ ७१ ॥
अन्येषांद्यूतकर्तॄणांभूरितेनार्पितंवसु ॥ रत्नकुप्यदुकूलानिभृंगारुप्रभृतीनिच ॥ ७२ ॥ भाजनानिविचित्राणिकांस्यताम्रमयानिच ॥ नग्नीकृत्यप्रति
दिनंबद्ध्यतेद्यूतकारिभिः ॥ ७३ ॥ नतेनसदृशःकश्चिदाक्षिकोभूमिमंडले ॥ अद्ययावत्त्वयाविप्रदुरोदरशिरोमणिः ॥ ७४ ॥ कथंनाज्ञायितनयो
ऽविनयानयकोविदः ॥ इतिश्रुत्वात्रपाभारविनम्रतरकंधरः ॥ ७५ ॥

मध्येगृहेगृहमध्ये ॥ ६६ ॥ कुप्यंस्वर्णरजतातिरिक्तताम्रादिभाजनंतत्सहितंवसनादिकंवस्त्रादिकम् ॥ सगुणानिधिरितिवा ॥ ऊर्मिकांमुद्रिकाम् ॥ ६७ ॥ दुरोदरंद्यूतंवर्ततेयस्यासौदुरोदरीतस्यकरेदत्त
वानिति ॥ ६८ ॥ हेविप्रकिंकिमर्थम् ॥ उत्तरत्रान्वयः ॥ ६९ ॥ ममेमाम् ॥ मामाक्षिपसीतिवापाठः ॥ उच्चैर्यथास्यात्तथाऽऽक्षिपसिकिम् ॥ मयामुद्रामुद्रिकाचौर्यकर्मणालब्धाऽपितुनलब्धेति ॥
किंमांक्षिपसीतिपाठेकिंकुत्सितंयथास्यात्तथाकिंकिमर्थंक्षिपसिआक्षिपसीत्यर्थः ॥ कथंतर्हिप्राप्तातत्राह ॥ त्वदीयेनेति ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ आक्षिकःअक्षेणव्यवहरतीत्या
क्षिकोद्यूतकारइत्यर्थः ॥ अद्ययावदद्यारभ्यतेनत्वत्पुत्रेणसदृशोद्यूतकारोनाभूदस्तीतिचोदितिशेषः ॥ अतोदुरोदरशिरोमणिर्द्यूतकारश्रेष्ठः ॥ ७४ ॥ कथंत्वयानाज्ञायिअद्ययावत्कथंनाज्ञायीतिवाकाका

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

व्यसनीचौर्यको

भिन्यायेनोभयत्रवासंबंधः ॥ कथंभूतः ॥ अविनयानयकोविदः ॥ नविनयोऽविनयःदुर्नयइत्यर्थः ॥ ननयोऽनयोदुर्नीतिरनीतिशास्त्रमितिवा ॥ तयोःकोविदःपंडितः ॥ विदइतिकाचित् ॥ ७५ ॥ आस्योपविश्यच ॥ ७६ ॥ ७७ ॥ मेनममंगुलितोंऽगुल्याःसकाशात्त्वयाहृता ॥ अंगुलिकाहृतेतिक्कचित् ॥ मयातवसमर्पितेतिचान्यत्र ॥ ७८ ॥ ७९ ॥ ॥ ८० ॥ ८१ ॥ हंहोइतिसंबोधने ॥ हंहोहेसत्पुत्रजननिइतिसक्रोधोपहासः ॥ ८२ ॥ सहयुनक्तीतिसयुक्सहितइत्यर्थः ॥ ८३ ॥ त्वत्तव ॥ सशाटकइतिक्कचित् ॥ तच्छाटकइत्यन्यत्र ॥ शाटकःस्थूलशाटकः ॥ भामासत्यभामेतिवत् ॥ वराशिरित्यर्थः ॥ वराशिःस्थूलशाटकइत्यमरः ॥ मांजिष्ठयाआरक्तोमांजिष्ठः ॥ तुनिश्चितम् ॥ वस्त्रधान्यांवस्त्राणिधी यन्तेऽस्यामितिवस्त्रधानीरज्वादिनिर्मितवस्त्रस्थानंतस्यांलंबतेस्मेत्यध्याहारः ॥ ८४ ॥ भृंगारुर्गडुकविशेषः ॥ त्रिगुणितापटीत्रिपटीअंगाच्छादनप्रतिष्ठावस्त्रमित्यर्थः ॥ ८५ ॥ दक्षिणस्यां

महापतिव्रतामास्यपत्नींप्रोवाचतामथ ॥ ७६ ॥ दीक्षितायिनिकुत्रासिक्वतेगुणनिधिः सुतः ॥ अथतिष्ठतु प्रावृत्यवाससामौलिंप्राविशन्निजमंदिरम् ॥ इतिश्रुत्वाथतद्वाक्यंभी तिनक्कसाममशुभोर्मिका ॥ ७७ ॥ अंगोद्वर्तनकालेयात्वयामेंऽगुलितोहृता ॥ नवरत्नमयींशीघ्रंतामानीयप्रयच्छमे ॥ ७८ ॥ इतिश्रुत्वाथतद्वाक्यंभी किंतेनक्कसाममशुभोर्मिका ॥ ७७ ॥ अंगोद्वर्तनकालेयात्वयामेंऽगुलितोहृता ॥ नवरत्नमयींशीघ्रंतामानीयप्रयच्छमे ॥ ७८ ॥ इतिश्रुत्वाथतद्वाक्यंभी तासादीक्षितायिनी ॥ प्रोवाचसातुमाध्याह्नींक्रियांनिष्पादयत्वथ ॥ ७९ ॥ व्यग्रास्मिदेवपूजार्थमुपहारादिकर्मणि ॥ समयोयमतिक्रामेदतिथीनां प्रियातिथे ॥ ८० ॥ इदानीमेवपक्वान्नकरणव्यग्रयामया ॥ स्थापिताभाजनेक्कापिविस्मृतेतिनवेद्म्यहम् ॥ ८१ ॥ दीक्षितउवाच ॥ ॥ हंहोसत्पुत्रजन निनित्यंसत्यप्रभाषिणि ॥ यदायदात्वांसंपृच्छेतनयः क्कगतस्त्विवति ॥ ८२ ॥ तदातदेतित्वंब्रूयानाथेदानींसनिर्गतः ॥ अधीत्याध्ययनार्थंचद्वित्रैर्मित्रैः सयुग्बहिः ॥ ८३ ॥ कुतस्त्वच्छाटकः पत्निमांजिष्ठोयोमयाऽर्पितः ॥ लंबतेवस्त्रधान्यांयस्तथ्यंब्रूहिभयंत्यज ॥ ८४ ॥ सांप्रतंनेक्ष्यतेसोपिभृंगारुर्मणिमं डितः ॥ पट्टसूत्रमयीसापित्रिपटीक्कनृपार्पिता ॥ ८५ ॥ क्कदाक्षिणात्यंतत्कांस्यंगौडीताम्रघटीक्कसा ॥ नागदंतमयीसाक्कसुखकौतुकमंचिका ॥ ८६ ॥ क्कसापर्वतदेशीयाचंद्रकांतशिलोद्भवा ॥ दीपिकाव्यग्रहस्ताग्रासालंकृच्छालभंजिका ॥ ८७ ॥ किंबहूक्तेनकुलजेतुभ्यंकुप्याम्यहंवृथा ॥ तदाभ्यवह रिष्येहमुपयंस्याम्यहंयदा ॥ ८८ ॥ अनपत्योस्मितेनाहंदुष्टेनकुलदूषिणा ॥ उत्तिष्ठानयदर्भांबुतस्मैदद्यांतिलांजलिम् ॥ ८९ ॥ अपुत्रत्वंवरंनॄणां कुपुत्रात्कुलपांसनात् ॥ त्यजेदेकंकुलस्यार्थेनीतिरेषासनातनी ॥ ९० ॥

दिशिभवंदाक्षिणात्यम् ॥ गौडदेशोद्भवागौडी ॥ नागोगजः ॥ मंचिकासूक्ष्मखट्वा ॥ ८६ ॥ पर्वतदेशीयापर्वतदेशोद्भवाशालभंजिकापुत्तलिका ॥ यासाक्केत्यन्वयः ॥ कथंभूता ॥ चन्द्रकांतशिलोद्भवातन्निर्मितादीप्यतीतिदीपिकाउज्ज्वलेत्यर्थः ॥ अव्यग्रहस्ताग्रा ॥ वरंप्रार्थितुमुद्यतकराग्रेत्यर्थः ॥ अलंकृदलंकरणंतत्सहितायासासालंकृत् ॥ ८७ ॥ किंबहूक्तेनेति ॥ यदाहमुपयंस्यामिउद्वहिष्यामिविवाहांतरंकरिष्यामीतियावत् ॥ उपनेष्यामीतिपाठेपिसएवार्थः ॥ तदाहंअभ्यवहरिष्येभोक्ष्येभोजनंकरिष्यामीत्यर्थः ॥ ८८ ॥ ८९ ॥ कुलपांसनात् कुलदूषणात् ॥ कुलपांसुलादितिपाठेपिसएवार्थः ॥ कुललांछनादितिकचित्पाठः ॥ त्यजेदेकमिति ॥ [illegible] ॥ त्यजेदेकंकुलस्यार्थेग्रामस्यार्थेकुलंत्यजेत् ॥ ग्रामंजनपदस्यार्थेआत्मार्थेपृथिवीं



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्यजेदिति ॥ भागवतेचधृतराष्ट्रंप्रतिविदुरवाक्यम् ॥ त्यजाश्वशैवंकुलकौशलायेति ॥ ९० ॥ सुतांप्राप्य ॥ प्रार्थ्येतिचक्वचित् ॥ ९१ ॥ समालोच्यविचार्य ॥ समालंब्येतिक्वचित् ॥ ९२ ॥ अस्तिधनः अस्तिविद्यमानंधनंयस्यसोऽस्तिधनः ॥ अस्तीतितिङंतप्रतिरूपकमव्ययम् ॥ ९३ ॥ देशांतरेऽस्तिधनदइतिक्वचित् ॥ अस्तिधनतइतिवान्यत्र ॥ नाहमभ्यस्तवेदोऽस्मिनचैवास्तिधना गमः ॥ देशांतरेयोधनवान्सविद्यःसुखमेधतइतिक्वचित्पाठःसस्पष्टार्थः ॥९४॥ यायजूककुलेइज्याशीलस्यवंशे ॥ इज्याशीलोयायजूकइत्यमरः ॥ अनुसंधयेद्योजयेत् ॥ ९५ ॥ नाधिगच्छामिनाभि जानामि ॥ परिचितःकश्चिज्जनइतिशेषः ॥ परिचितिरितिक्वचित् ॥ ९६ ॥ याचेप्रार्थये ॥ याचमेजननीसाइहनेतियोजना ॥ साचेतिवापाठः ॥ ९७ ॥ ९८ ॥ महोपहारान्महापूजासं

स्नात्वानित्यविधिं कृत्वातस्मिन्नेवाह्निकस्यचित् ॥ श्रोत्रियस्यसुतांप्राप्यपाणिंजग्राहदीक्षितः ॥ ९१ ॥ श्रुत्वातथासवृत्तांतंप्राक्तनंस्वंविनिंद्यच ॥ कांचिद्दिशंसमालोच्यनिर्ययौदीक्षितांगजः ॥९२॥ चिंतामवापमहतींक्वयामिकरवाणिकिम् ॥ नाहमभ्यस्तविद्योस्मिनचैवास्तिधनोस्म्यहम् ॥ ९३ ॥ देशांतरेह्यस्तिधनः सद्विद्यः सुखमेधते ॥ भयमस्तिधनेचौरात्सविद्यःसर्वतोऽभयः ॥ ९४ ॥ यायजूककुलेजन्मक्वक्वमेव्यसनंतथा ॥ अहोबलीयान्स विधिर्भाविकर्मानुसंधयेत् ॥९५॥ भिक्षितुंनाधिगच्छामिनमेपरिचितःक्वचित् ॥ नचपार्श्वेधनंकिंचित्किमत्रशरणंभवेत् ॥ ९६ ॥ सदानभ्युदितेभानौ प्रसूर्मेमृष्टभोजनम् ॥ दद्याद्द्यात्रकंयाचेयाचेहजननीनमे ॥९७॥ इतिचिंतयतस्तस्यभानुरस्ताचलंगतः ॥ एतस्मिन्नेवसमयेकश्चिन्माहेश्वरोनरः॥९८॥ महोपहारानादायनगराद्बहिरभ्यगात् ॥ समभ्यर्चितुमीशानंशिवरात्रावुपोषितः ॥ ९९ ॥ पक्वान्नगंधमाघ्रायक्षुधितःसतमन्वगात् ॥ इदमन्नंमयाग्राह्यं शिवायोपस्कृतंनिशि ॥ १०० ॥ इत्याशामवलंब्याथद्वारिशंभोरुपाविशत् ॥ ददर्शचमहापूजांतेनभक्तेननिर्मिताम् ॥ १ ॥ विधायनृत्यगीतादिभक्ताः सुप्ताःक्षणंयदा ॥ नैवेद्यंसतदाऽऽदातुंगर्भागारंविवेशह ॥ २ ॥ दीपंमंदप्रभंदृष्ट्वापक्वान्नावेक्षणायसः ॥ निजचैलांचलाद्वर्तिंदत्त्वासमुददीपयत् ॥ ३ ॥ ततःपक्वान्नमादायत्वरितंगच्छतोबहिः ॥ तस्यपादतलाघातात्प्रसुप्तःकोप्यबुध्यत ॥ ४ ॥ कोयंकोयंत्वरापन्नश्चोरोयंगृह्यतामिति ॥ यावद्ब्रूयात्समागत्य तावत्सपुररक्षकैः ॥ ५ ॥ पलायमानोनिहतःक्षणात्पंचत्वमागतः ॥ अभक्षयच्चनैवेद्यंभाविपुण्यबलान्नसः ॥ ६ ॥

भारान् ॥ ९९ ॥ तमन्वगात्तंमाहेश्वरमनुपश्चादगाद्गतवान् ॥ १०० ॥ १ ॥ गर्भागारंअगारस्यमध्यम् ॥ २ ॥ निजचैलांचलात्स्ववस्त्राग्रतोवर्तिंदशांसमुददीपयत्सम्यक्ज्वालयामास ॥ ३ ॥ ॥ ४ ॥ ५ ॥ अभक्षयच्चेति ॥ भाविपुण्यवशाद्भविष्यच्छिवरात्रोपोषणपुण्यवशात् ॥ निर्माल्यभक्षणेउपोषणनाशप्रसंगात् ॥ अतएवाशिवदूतावक्ष्यंति ॥ उपोषितेनभूतायामिति ॥ यत्तुशिवनिर्माल्यभोक्तारइत्यादितत्तुतेषांसूक्ष्मधर्मापरिज्ञानात् ॥ तथाचवक्ष्यंतिशिवदूताः ॥ किंकराःशिवधर्मायेसूक्ष्मास्तेवैभवादृशैरित्यादि ॥ यद्वा बाणलिंगाद्यतिरिक्तविषयंतद्यमदूतवचनम् ॥ तथाच ॥ बाणलिंगेस्वयंभूतेचंद्रकांतेहृदिस्थिते॥तत्रक्रतुशतंपुण्यंशंभोर्नैवेद्यभक्षणामिति ॥ तत्रबाणलिंगंनार्मदम् ॥ हृदिस्थितंप्राणलिंगम् ॥ हृत्प्रदेशेप्राणवच्छैवैर्धार्यमाणंलिंगमित्यर्थः॥हृदिध्यान

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विषयत्वेनस्थितंलिंगमितिवा ॥ रुद्रभुक्तंभुंजीतरुद्रपीतंपिबेद्रुद्राघ्रातंजिघ्रेदितिचजाबालिश्रुतिः ॥ ६ ॥ अथेति ॥ अनंतरंयावत्समागत्यविकैटैर्भटैःसवद्धस्तावत्पारिषदास्तंनेतुंप्राप्ताइतिद्वितीय श्लोकेनान्वयः ॥ ७ ॥ किंकिणीजालमालितं क्षुद्रघंटिकानिवहसंजातमालमित्यर्थः ॥ शूलपाणयःरुद्रपारिषदाइत्यर्थः ॥ ८ ॥ [शंभोर्गणान्समालोक्ययमकिंकरैरित्थमवाद्युक्तमित्यन्वयः ॥ किंतत् ॥ हेगणाअयंद्विजोदुर्वृत्तइति ॥९॥ दुर्वृत्तत्वमेवाह ॥ कुलेतिचतुर्भिः ॥ ११० ॥ आस्तामित्यत्रअकारलोपआर्षः॥ आसतामित्यर्थः ॥] ११ ॥ १२ ॥ १३ ॥ तत्तर्हि ॥ १४ ॥ इत्थमिति ॥

अथवद्धःसमागत्यपाशमुद्गरपाणिभिः ॥ निनीषुभिःसंयमिनींयामैःसविकटैर्भटैः ॥ ७ ॥ तावत्पारिषदाःप्राप्ताःकिंकिणीजालमालितम् ॥ दिव्यंविमानमादायतंनेतुंशूलपाणयः ॥ ८ ॥ शंभोर्गणान्समालोक्यभीतैस्तैर्यमकिंकरैः ॥ अवादिप्रणतैरित्थंदुर्वृत्तोयंगणाद्द्विजः ॥ ९ ॥ कुलाचारप्रतीपोयंपित्रोर्वाक्यपराङ्मुखः ॥ सत्यशौचपरिभ्रष्टःसंध्यास्नानविवर्जितः ॥ ११० ॥ आस्तांदूरेऽस्यकर्माणिशिवनिर्माल्यहारकः ॥ प्रत्यक्षतोऽत्रवीक्षध्वमस्पृश्योयंभवादृशाम् ॥ ११ ॥ शिवनिर्माल्यभोक्तारःशिवनिर्माल्यलंघकाः ॥ शिवनिर्माल्यदातारःस्पर्शस्तेषांह्यपुण्यकृत् ॥१२॥ विषमालोड्यवापेयंश्रेयोवाऽनशनंपरम् ॥ सेवितव्यंशिवस्वंनप्राणैः कंठगतैरपि ॥ १३ ॥ यूयंप्रमाणंधर्मेषुयथानचतथावयम् ॥ अस्तिचेद्धर्मलेशोस्यगणास्तच्छृणुमोवयम् ॥ १४ ॥ इत्थंतद्वाक्यमाकर्ण्यप्रोचुःपारिषदास्ततः ॥ किंकराःशिवधर्मायेसूक्ष्मास्तेवैभवादृशैः ॥ १५ ॥ स्थूललक्ष्यैःकथंलक्ष्यालक्ष्यायेसूक्ष्मदृष्टिभिः ॥ अनेनानेनसाकर्मयत्कृतंशृणुतेहतत् ॥ १६ ॥ पतंतीलिंगशिरसिदीपच्छायानिवारिता ॥ स्वचैलांचलतोऽनेनदत्त्वादीपेदशांनिशि ॥१७॥ अपरोपिपरोधर्मोजातस्तत्रास्यकिंकराः ॥ शृण्वताशिवनामानिप्रसंगादपिगृह्णतः ॥ १८ ॥ भक्तेनविधिनापूजाक्रियमाणानिरीक्षिता ॥ उपोषितेनभूतायामनेनस्थिरचेतसा ॥ १९ ॥ कलिंगराजोभविताऽधुनाविधुतकल्मषः ॥ एषद्विजवरोदूतायूयंयातयथागताः ॥ १२० ॥ पार्षदैर्यमदूतेभ्योमोचितस्त्वितिसद्द्विजः ॥ अरिंदमस्यतनयःकलिंगाधिपतेर्दमः ॥ २१ ॥ क्रमाद्राज्यमवाप्याथपितर्युपरतेयुवा ॥ नान्यंधर्मंविजानातिदुर्दमोभूपतिर्दमः ॥२२॥ शिवालयेषुसर्वेषुदीपदानादृतेद्विज॥ ग्रामाधीशान्समाहूयसर्वान्स्वविषयस्थितान् ॥२३॥ इत्थमाज्ञापयामाससमेदंडचोभविष्यति ॥ यस्ययस्याभितोग्रामंयावंतश्चशिवालयाः ॥ २४ ॥

हेकिंकराःयेशिवधर्मास्तेभवादृशैःसूक्ष्माअलक्ष्याएव ॥ १५ ॥ एतदेवस्पष्टयति ॥ स्थूललक्ष्यैरिति ॥ सूक्ष्मदृष्टिभिर्येधर्मालक्ष्याज्ञेयाः ॥ स्थूलंलक्ष्यंयेषांतैःस्थूलदृष्टिभिःकथंलक्ष्याइत्यर्थः ॥ अथवाहेकिंकराःयेशिवधर्मास्तेअतीवसूक्ष्माएव ॥ अतःसूक्ष्मदृष्टिभिरित्यादिपूर्ववत् ॥ अनेनसानिष्पापेन ॥ १६ ॥ दशांवर्तिम् ॥ १७ ॥ शिवनामानिगृह्णतःपुरुषात्सकाशात्प्रसंगात्तानिशृण्वता ॥ ॥ १८ ॥ भक्तेनविहितापूजाअनेननिरीक्षिता ॥ भूतायांचतुर्दश्याम् ॥ १९ ॥ इतियतः ॥ अतःकलिंगराजोभवितेति ॥ १२० ॥ २१ ॥ २२ ॥ २३ ॥ समेदंडचोभविष्यतियस्तुममाज्ञांन





CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ २४ ॥ दण्डमेवाह ॥ ममाज्ञाभंगदोषेणेति ॥ २५ ॥ २६ ॥ २७ ॥ रत्नदीपशिखाश्रयःरत्नान्ये करिष्यतीतिशेषः ॥ आज्ञामेवाह ॥ यस्ययस्येति ॥ ग्राममभितः ग्रामस्यसमंततः ॥ २४ ॥ दण्डमेवाह ॥ ममाज्ञाभंगदोषेणेति ॥ २५ ॥ २६ ॥ २७ ॥ रत्नदीपशिखाश्रयःरत्नान्ये

वदीपास्तेषांशिखानामाश्रयः ॥ रत्नश्रेष्ठानांपतिरित्यर्थः ॥ २८ ॥ २९ ॥ स्वार्थेति ॥ स्वार्थस्वप्रयोजनार्थंदीपवर्त्युद्दीप्त्यालिंगमस्तकांधकारंहरतीतिसः ॥ १३० ॥ प्राग्वासनोदयात्पूर्व संस्कारस्फुरणात् ॥ अतिविस्मयेनाहतुः ॥ क्वैषेति ॥ हेशिवशर्मन्विलोकयपश्य ॥ किम् ॥ एषादिक्पालपदवीस्थानंक ॥ एषाकेत्याकांक्षायामाहतुः ॥ मनुष्यधर्मणाऽनेनगुणनिधिनासां प्रतंयाइहस्वर्गेभुज्यतेसावाकइतिशेषः ॥ ३१ ॥ नकेवलमलकायाःपतिरभूदीश्वरेणसार्धंमित्रतांचप्राप्तवानित्याहतुः ॥ सर्वदैवेत्यादिना ॥ संश्रृणुष्वसम्यक्श्रृणु ॥ आत्मनेपदमार्षम् ॥ पाठांतरेहेस्वस्वीयआत्मीयेतिशिवशर्मसंबोधनम् ॥ ३२ ॥ पाद्मेकल्पेलोकत्रयात्मकपद्मसृष्टौ ॥ वैश्रवणःविश्रवसःपुत्रःकुबेरइत्यर्थः ॥ ३३ ॥ ३४ ॥ तत्रपाद्मे ॥ मेघवाहनेरौद्रेकल्पइत्यनुषज्जते ॥

तत्रतत्रसदादीपोद्योतनीयोऽविचारितम् ॥ ममाज्ञाभंगदोषेणशिरश्छेत्स्याम्यसंशयम् ॥ २५ ॥ इतितद्भयतोदीप्तादीपाःप्रतिशिवालयम् ॥ अनेनै वसधर्मेणयावज्जीवंदमोनृपः ॥ २६ ॥ धर्मर्द्धिंमहतींप्राप्यकालधर्मवशंगतः ॥ सदीपवासनायोगाद्बहून्दीपान्प्रदीप्यवै ॥ २७ ॥ अलकायाःपति रभूद्रत्नदीपशिखाश्रयः ॥ एवंफलतिकालेनशिवेऽल्पमपियत्कृतम् ॥ २८ ॥ इतिज्ञात्वाशिवेकार्यंभजनंस्वसुखार्थिभिः ॥ क्वसदीक्षितदायादः सर्वधर्म पराङ्मुखः ॥ २९ ॥ स्वार्थदीपदशोद्योतलिंगमौलितमोहरः ॥ कलिंगविषयेराज्यंप्राप्तोधर्मरतिःसदा ॥ १३० ॥ शिवालयेसमुद्दीप्यदीपान्प्राग्वा सनोदयात् ॥ क्वैषादिक्पालपदवीशिवशर्मन्विलोकय ॥ मनुष्यधर्मणानेनसांप्रतंयेहभुज्यते ॥ ३१ ॥ गणावूचतुः ॥ ॥ सर्वदैवशिवेनासौसखित्वं चयथेयिवान् ॥ तदप्येकमनाविप्रसंश्रृणुष्वब्रवावहे ॥ ३२ ॥ पाद्मेकल्पेपुराविप्रब्रह्मणोमानसात्सुतात् ॥ पुलस्त्याद्विश्रवाजज्ञेतस्यवैश्रवणःसुतः॥३३॥ तेनेयमलकाभुक्तापुरीविश्वकृताकृता ॥ आराध्यंत्र्यबकंदेवमत्युग्रतपसापुरा ॥ ३४ ॥ व्यतीतेतत्रकल्पेवैप्रवृत्तेमेघवाहने ॥ याज्ञदत्तिरसौश्री दस्तपस्तेपेसुदुःसहम् ॥ ३५ ॥

तथाचोक्तंवासिष्ठे ॥ कदाचित्सृष्टयःशार्व्यःकदाचित्पद्मजोद्भवाः ॥ कदाचिदपिवैष्णव्यःकदाचिन्मुनिनिर्मिताइति ॥ कथंरुद्रस्यमेघवाहनत्वमितिचेदुच्यते ॥ मेघवाहनइंद्रस्तद्रूपधारित्वान्महादेवस्य मेघवाहनता ॥ तत्रात्रैवोक्तम् ॥ यद्वा मेघमारुह्यश्रीकृष्णायवरंदत्तवानितिमेघवाहनइति ॥ दानधर्मे ॥ दिव्यंवर्षसहस्रंमेघोभूत्वाहरंविष्णुरवहदितिवातथोच्यते ॥ तथाचलैंगे ॥ ससर्जशंकरंध्यात्वा ब्रह्माणंपरमेश्वरः॥जनार्दनोजगन्नाथःकल्पेवैमेघवाहने॥दिव्यंवर्षसहस्रंतुमेघोभूत्वाऽवहद्धरम् ॥ नारायणोमहादेवंबहुमानेनसादरम्॥ दृष्ट्वाभावंमहादेवोहरेःस्वात्मनिशंकरः॥प्रददौतस्यसकलंस्रष्टुंवैब्रह्मणा सह ॥ तदातत्कल्पमाहुर्वैमेघवाहनसंज्ञयेति ॥ यद्वा देव्योक्तेनोपरिमेघानांकृतावासत्वान्मेघवाहनइतिपुराणांतरम् ॥ यद्वा भक्तानांफलसेचनान्मेघोवृषस्तद्वाहनत्वात् ॥ यद्वा सेचनतृप्तिसाम्यान्मे

१ स्वश्रृणुष्वेत्येवंरूपे ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

घोवरस्तंप्रापयतीतिमेघवाहनः ॥ यद्वाऽष्टमूर्तित्वात्सूर्यरूपेणावहादिमेघान्प्रापयतीति ॥ यद्वा मेघवाहनइतिब्रह्मणःकल्पविशेषस्यनाम ॥ तथाचोक्तंलैंगे ॥ भवोद्भवस्तपश्चैवभव्यारंभःप्रभुःपुनः ॥ ऋतुर्वैर्हिर्हव्यवाहःसावित्रस्तुतएवच ॥ उशिकःकुशिकश्चैवगांधारोमुनिसत्तमाः॥ ऋषभश्चतथापद्मोगांधारीयश्चमध्यगः ॥ वैराजोवैनिषादश्चमुख्योवैमेघवाहनः॥पंचमश्चित्रकश्चैवआकृतिस्तानएवच ॥ मनश्चदशोंवृंहश्चतथावैश्वेतलोहितः॥रक्तश्चपीतवासाश्च असितःसर्वरूपकः॥एवंकल्पास्तुसंख्याताब्रह्मणोऽव्यक्तजन्मनइति ॥ यज्ञदत्तस्यापत्यंयाज्ञदत्तिर्गुणानिधिरित्यर्थः॥ श्रीदोनिधिपतित्वात्संपत्तिदत्वात्संपत्तिदः ॥ सुदुःसहंसुदुष्करंतपस्तेपइत्यर्थः ॥ ३९ ॥ एतद्विवृणोति ॥ भक्तिप्रभावमित्यारभ्यततइत्यतःप्राक्तनेन ॥ शंभोर्भक्तिप्रभावंविज्ञायकाशिकांप्राप्यचित्तरत्नप्रदीपकमुद्बोध्यउज्ज्वाल्यशांभवंलिंगंशंभोर्लिंगंसंस्थाप्ययावत्तद्वर्ष्मत्वगस्थिपरिशेषितमस्थिचर्मावशिष्टंबभूवतावद्वर्षाणामयुतंशतंदशलक्षंतपस्ततापकृतवानितिपंचमेनान्वयः ॥ ३६ ॥ भक्तिप्रभावंविज्ञायेत्युक्तं तत्रहेत्वन्वेषणायामाह ॥ तद्दीपमात्रतःतस्यप्रसिद्धस्यमाहेश्वरस्यकृतस्यदीपस्यमात्रतःदीपनंदीपउद्दीपनंउज्ज्वालनमितियावत् ॥ तन्मात्रतस्तदेकमात्रतइत्यर्थः ॥ कथंभूतंचित्तरत्नप्रदीपकम् ॥ शिवैकदशं

भक्तिप्रभावंविज्ञायशंभोस्तद्दीपमात्रतः ॥ पुरींपुरारेःसंप्राप्यकाशिकांचित्प्रकाशिकाम् ॥ ३६ ॥ शिवैकदशमुद्बोध्यचित्ररत्नप्रदीपकम् ॥ अनन्यभक्तिस्नेहाढ्यंतन्महोध्याननिश्चलम् ॥ ३७ ॥ शिवैक्यसुमहापात्रंतपोग्निपरिबृंहितम् ॥ कामक्रोधमहाविघ्नपतंगाघातवर्जितम् ॥ ३८ ॥ प्राणसंरोधनिर्वातंनिर्मलंनिर्मलेक्षणात्॥संस्थाप्यशांभवंलिंगंसद्भावकुसुमार्चितम् ॥३९॥ तावत्ततापसतपस्त्वगस्थिपरिशेषितम्॥यावद्बभूवतद्वर्ष्मवर्षाणामयुतंशतम्॥१४०॥ ततःसहविशालाक्ष्यादेवोविश्वेश्वरः स्वयम् ॥ अलकापतिमालोक्यप्रसन्नेनांतरात्मना ॥ ४१ ॥ लिंगेमनःसमाधायस्थितंस्थाणुस्वरूपिणम् ॥ उवाच वरदोस्मीतितस्वालमलकापते ॥ ४२ ॥ उन्मीलयनयनेयावत्सपश्यतितपोधनः ॥ तावदुद्यत्सहस्रांशुसहस्राधिकतेजसम् ॥ ४३ ॥ पुरोददर्शश्रीकंठंचंद्रचूडमुमाधवम् ॥ तत्तेजःपरिभूताक्षितेजाः संमील्यलोचने ॥ ४४ ॥

शिवएवैकादशावर्तिकायस्मिंस्तम् ॥ पुनःकीदृशम् ॥ अनन्यभक्तिस्नेहाढ्यं अव्यभिचारिणीभक्तिरेवस्नेहोघृतादिस्तेनाढ्यम्॥ तन्महोध्याननिश्चलं तच्चतन्महश्चेतितन्महस्तद्ध्यानेननिश्चलम्॥३७॥ शिवैक्यसुमहापात्रं शिवेनसहयदैक्यंतादात्म्यंतदेवसुमहापात्रमाधारोयस्यतम् ॥ तपएवाग्निस्तेनपरिबृंहितंवर्धितम् ॥ कामक्रोधादयोमहाविघ्नास्तएवपतंगास्तेषामाघातेनापातेनपरिवर्जितम् ॥ ३८ ॥ प्राणसंरोधःप्राणायामएवनिर्वातोवाताभावोयत्रतम् ॥ निर्मलमसंभावनाविपरीतभावनारहितंयदीक्षणंज्ञानंतस्मान्निर्मलम् ॥ कथंभूतंलिंगम् ॥ सद्भावकुसुमार्चितं सद्भावःसद्भक्तिस्तदेवकुसुमंतेनार्चितम् ॥ यद्वा सद्भक्तिर्मनोवृत्तिस्तद्विशेषरूपाण्यहिंसादीनिपुष्पाणितैरर्चितम् ॥ तथाचोक्तम् ॥ अहिंसाप्रथमंपुष्पंपुष्पमिंद्रियनिग्रहः ॥ ध्यानपुष्पंतपःपुष्पंज्ञानपुष्पंतथैवच ॥ सर्वभूतदयापुष्पंक्षमापुष्पंविशेषतः ॥ सत्यंचाष्टविधंपुष्पंविष्णोःप्रीतिकरंपरमिति ॥ ध्यानपुष्पमित्यत्रध्यानशब्दोविवेकविषयः ॥ अतोनिर्मलेक्षणादित्यनेननपौनरुक्त्यम् ॥ ३९ ॥ १४० ॥ ४१ ॥ ४२ ॥ उन्मीलयेति ॥ सधनदोनयनेउन्मील्यविवृत्ययावत्पश्यतितावच्छ्रीकंठंददर्शेत्यन्वयः ॥ ४३ ॥ तत्तेजइति ॥ सोऽलकापतिर्नेत्रेसंमील्यसम्यगविकचय्यहेदेवेतिसंबोध्यदेवेशंदेवदेवानांवेशंउवाचे

१ ततइत्यपिपाठः । २ ज्ञानपुष्पमित्यत्रज्ञानशब्दइतिपाठोपेक्षितइतिभाति ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्यन्वयः ॥ कथंभूतः ॥ तस्यविश्वेश्वरस्यतेजसापरिभूतमक्षितेजोयस्यसः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ प्रेमपात्रमर्यादीश्वरस्य ॥ सौभाग्यश्रीःसौभाग्यसंपत् ॥ ४९ ॥
क्रूरदृष्टिःसन्यावद्वीक्षतेतावत्तन्नेत्रम् ॥ तदित्यव्ययम् ॥ तस्यवामंचक्षुःपुस्फोटस्फुटितवदित्यर्थः ॥ वामनेत्रस्फोटनेहेतुमाह ॥ वामविलोकनात्क्रूरदृष्ट्याविलोकनात् ॥ वामनेत्रेणवाविलोकनात् ॥
स्फोटनेहेतुमाह ॥ क्रूरदृगिति ॥ वक्रदृष्टिरित्यर्थः ॥ दुष्टदृष्टिरितिवा ॥ १५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ अधिवर्णयेदधिकंकथयेत् ॥ अधिवर्णयन्निति क्वचित् ॥ ५४ ॥ निधीनांपद्मादीनामष्टानाम् ॥

उवाचेदेवदेवेशंमनोरथपथातिगम् ॥ निजांघ्रिदर्शनेनाथदृक्सामर्थ्यंप्रयच्छमे ॥४५॥ अयमेववरोनाथयत्त्वंसाक्षान्निरीक्ष्यसे ॥ किमन्येनवरेणेशनमस्ते शशिशेखर ॥ ४६ ॥ इतितद्वचनंश्रुत्वादेवदेवउमापतिः ॥ ददौदर्शनसामर्थ्यंस्पृष्ट्वापाणितलेनतम् ॥ ४७ ॥ प्रसार्यनयनेपूर्वमुमामेवव्यलोकयत् ॥ शंभोःसमीपेकायेपिदेशासर्वांगसुंदरी ॥ ४८ ॥ अनयाकिंतपस्तप्तंममापितपसोधिकम् ॥ अहोरूपमहोप्रेमसौभाग्यश्रीरहोभृशम् ॥ ४९ ॥ क्रूरदृग्वीक्षतेयावत्पुनःपुनरिदंवदन् ॥ तावत्पुस्फोटतन्नेत्रंवामंवामाविलोकनात् ॥ १५० ॥ अथदेव्यब्रवीद्देवंकिमसौदुष्टतापसः ॥ असकृद्वीक्ष्यमांवक्तिन्यक्कुर्वन्मेतपःप्रभाम् ॥ ५१ ॥ असकृद्दक्षिणेनाक्ष्णापुनर्मामेवपश्यति ॥ असूयमानोमेरूपंप्रेमसौभाग्यसंपदः ॥ ५२ ॥ इतिदेवीगिरंश्रुत्वाप्रहस्यप्राहतां प्रभुः ॥ उमेत्वदीयःपुत्रोयंनचक्रूरेणचक्षुषा ॥ ५३ ॥ संपश्यतेतपोलक्ष्मींतवकिंत्वधिवर्णयेत् ॥ इतिदेवींसमाभाष्यतमीशःपुनरब्रवीत् ॥ ५४ ॥ वरान्ददामितेवत्सतपसानेनतोषितः ॥ निधीनामधिनाथस्त्वंगुह्यकानांभवेश्वरः ॥ ५५ ॥ यक्षाणांकिन्नराणांचराजाराज्ञांचसुव्रत ॥ पतिःपुण्यजनानांचसर्वेषांधनदोभव ॥ ५६ ॥ मयासख्यंचतेनित्यंवत्स्यामिचतवांतिके ॥ अलकांनिकषामित्रतवप्रीतिविवृद्धये ॥ ५७ ॥ आगच्छपादयोरस्याःपततेजननीत्वियम् ॥ इतिदत्त्वावरान्देवःपुनराहशिवांशिवः ॥ प्रसादंकुरुदेवेशितपस्विन्यंगजेऽत्रवै ॥ ५८ ॥ देव्युवाच ॥ ॥ वत्सतेनिश्चलाभक्तिर्भवेभवतुसर्वदा ॥ भवैकपिंगोनेत्रेणवामेनस्फुटितेनह ॥ ५९ ॥ देवेनदत्तायेतुभ्यंवराःसंतुतथैवते ॥ कुबेरोभवनाम्नात्वंममरूपेर्ष्ययासुत ॥ १६० ॥ त्वयेदंस्थापितंलिंगंतवनाम्नाभविष्यति ॥ सिद्धिदंसाधकानांचसर्वपापहरंपरम् ॥ ६१ ॥ नधनेनवियुज्येतनसख्यानचबांधवैः ॥ कुबेरेश्वरलिंगस्यकुर्याद्योदर्शनंनरः ॥ ६२ ॥ विश्वेशाद्दक्षिणेभागेकुबेरेशंसमर्चयेत् ॥ नरोलिप्येतनोपापैर्नदारिद्र्येणनोऽसुखैः ॥ ६३ ॥ इतिदत्त्वावरान्देवोदेव्यासहमहेश्वरः ॥ धनदायाविवेशाथधामवैश्वेश्वरंपरम् ॥ ६४ ॥

तदुक्तम् ॥ पद्मश्चैवमहापद्मोमत्स्यकूर्मौतथोदकः ॥ नीलोमुकुंदःशंखश्चनिधयोष्टौप्रकीर्तिताइति ॥ ५५ ॥ किन्नराणांकिंपुरुषाणामित्यर्थः ॥ यथाश्रुतानामेववा ॥ पुण्यजनानांराक्षसानाम् ॥ ५६ ॥ निकषामित्र निकषाराक्षसजातीनांमातातस्यामित्र ॥ यद्वा अलकांनिकषाअलकायाःसमीपेप्रीतिविवृद्धयेप्रीत्यतिशयार्थम् ॥ प्रीतिंविवर्धयन्निति क्वचित् ॥ ५७ ॥ ५८ ॥
एकपिंगः एकंनेत्रंपिंगंस्फुटितंयस्यसः ॥ ५९ ॥ कुत्सितोवेरःशरीरं[illegible] ॥ १६० ॥ ६१ ॥ [illegible] ॥ ६२ ॥ ६३ ॥ वैश्वेश्वरंस्वस्वरूपमानंदवनंवाकैलासंवा ॥ ६४ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

उपसंहरति ॥ इत्थमिति ॥ वैश्वेश्वरंधामेत्युक्तेकिंतद्धामेत्याकांक्षायामाह ॥ अलकांनिकषेति ॥ अलकायाःसमीपइत्यर्थः ॥ यद्वा कैलासंदृष्ट्वाकस्येयंपुरीतिपृच्छंतंशिवशर्माणंप्रत्याहतुरलका मिति ॥ ६५ ॥ यक्षेश्वराणामितिपूजायांबहुवचनम् ॥ यक्षाश्चतदीश्वराश्चतेषामितिवा ॥ कल्पभेदापेक्षयावा ॥ १६६ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांत्रयोदशोध्यायः ॥ १३ ॥ चतुर्दशेऽत्रवर्ण्यंतेलोकौद्वावतिसुंदरौ ॥ ईशानस्यतथाचैन्द्रस्यामृतवदीधितेः ॥ १ ॥ क्रमप्राप्तामैशानींपुरींदर्शयतोऊकायाइति ॥ १ ॥ शिवसात्कृतंशिवेसमर्पितंसकलंकर्मयैस्तेशिवसात्कृत



॥ गणावूचतुः ॥ इत्थंसखित्वंश्रीशंभोःप्रापेषधनदःपरम् ॥ अलकांनिकषाचैषकैलासःशंकरालयः ॥ ६५ ॥ पुर्ययक्षेश्वराणांतेस्वरूपमितिव र्णितम् ॥ यच्छ्रुत्वासर्वपापेभ्योनरोमुच्येदसंशयम् ॥१६६॥ ॥ इतिश्रीस्कांदेमहापुराणे एकाशीतिसाहस्र्यांसंहितायां चतुर्थेकाशीखंडे पूर्वार्द्धे गंधव त्यलकावर्णनंनामत्रयोदशोध्यायः ॥ १३ ॥ ॥ गणावूचतुः ॥ अलकायाःपुरोभागेपूरैशानीमहोदया ॥ अस्यांवसंतिसततंरुद्रभक्तास्तपोधनाः ॥१॥ शिवस्मरणसंसक्ताःशिवव्रतपरायणाः ॥ शिवसात्कृतकर्माणःशिवपूजारताःसदा ॥२॥ साभिलाषास्तपस्यंतिस्वर्गभोगोस्त्वितीहनः ॥ तेऽत्ररुद्रपुरेरम्ये रुद्ररूपधरानराः ॥ ३ ॥ अजैकपादहिर्बुध्न्यमुख्याएकादशापिवै ॥ रुद्राःपरिवृढाश्चात्रत्रिशूलोद्यतपाणयः ॥ ४ ॥ पुर्यष्टकंचदुष्टेभ्योदेवद्रुग्भ्योह्यवं तिते ॥ प्रयच्छंतिवरान्नित्यंशिवभक्तजनेवराः ॥ ५ ॥ एतैरपितपस्तप्तंप्राप्यवाराणसींपुरीम् ॥ ईशानेशंमहालिंगंपरिस्थाप्यशुभप्रदम् ॥ ६ ॥ ईशाने शप्रसादेनदिश्यैश्वर्यांहिदिगीश्वराः ॥ एकादशाप्येकचराजटामुकुटमंडिताः ॥ ७ ॥ भालनेत्रानीलगलाः शुद्धांगावृषभध्वजाः ॥ असंख्याताःसहस्रा णियेरुद्राअधिभूतलम् ॥ ८ ॥ तेऽस्यांपुरिवसंत्यैश्वर्यांसर्वभोगसमृद्धयः ॥ ईशानेशंसमभ्यर्च्यकाश्यांदेशांतरेष्वपि ॥ ९ ॥ विपन्नास्तेनपुण्येनजायंते ऽत्रपुरोहिताः ॥ अष्टम्यांचचतुर्दश्यामीशानेशंयजंतिये ॥ १० ॥ तएवरुद्राविज्ञेयाइहामुत्राप्यसंशयम् ॥ कृत्वाजागरणंरात्रावीशानेश्वरसंनिधौ ॥११॥ उपोष्यभूतायांकांचिन्ननरोगर्भभाक्पुनः ॥ स्वर्गमार्गेकथामित्थंशृण्वन्विष्णुगणोदिताम् ॥ १२ ॥ शिवशर्मादिवाप्युच्चैरपश्यच्चंद्रचंद्रिकाम् ॥ आह्ला दयंतींबहुशःसमंसर्वेंद्रियैर्मनः ॥ १३ ॥ चमत्कृत्यचमत्कृत्यकोयंलोकोहरेर्गणौ ॥ पप्रच्छशिवशर्मातौप्रोचतुस्तंचतौद्विजम् ॥ १४ ॥

कर्माणः ॥ शिवसत्कृतकर्माणइतिपाठेपिसएवार्थः ॥२॥ ३॥ अहिर्बुध्न्यइति ॥ उकारयकारवत्पदम् ॥ अजोऽस्येकपादहिर्बुध्न्यइत्यस्यांश्रुतौतथादर्शनात् ॥ परिवृढाःप्रभवः॥४॥ देवेभ्योद्रुह्यंतियेते देवद्रुहस्तेभ्योदेवद्रुग्भ्यः ॥ वराःश्रेष्ठाः ॥ जनावनाइतिकचित् ॥ जनेऽवनाइतिचान्यत्र ॥ ५ ॥ ६ ॥ ७ ॥ भालनेत्राललाटचक्षुषः ॥ ८ ॥ ९ ॥ यजंतिपूजामात्रंकुर्वंति ॥ पुरोहिताःपुरोधसः ॥ पुरेहिताइतिपाठेहिताहितकारिणः ॥ १० ॥ ११ ॥ भूतांचतुर्दशीम् ॥ १२ ॥ दिवापिदिनेपि ॥ चंद्रचंद्रिकांचंद्रज्योत्स्नाम् ॥ समंसह ॥ १३ ॥ चमत्कृत्यचमत्कृत्येत्या



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दरेवीप्सा ॥ अत्याश्चर्यंविधायमनआह्लादयंतीमितिपूर्वेणैवान्वयः ॥ १४ ॥१५॥१६॥ तदनुत्तरंतपइतिसंबंधः ॥ नविद्यतेउत्तरमाधिकंयस्मात्तदनुत्तरंसर्वोत्कृष्टमित्यर्थः ॥१७॥ ऊर्ध्वंदेहस्योर्ध्वप्रदेश
माचक्रमेगतवत्यद्रेतस्ततसोमत्वमीयिवत्प्राप्तवदित्यर्थः ॥ सोमत्वंसोमतेजस्त्वजन्म अमृतत्वंवा ॥ अनुत्तरभावनायास्तत्फलत्वात् ॥१८॥ विधिनादिष्टाब्रह्मणाप्रेरिताः ॥ दृष्टाइतिपाठेविधिनादैवेन ॥
हृष्टाइतिपाठेपिसएवार्थः ॥ १९ ॥ सजूःसह ॥ २० ॥ २१ ॥ चकारकारयामास ॥ अमुंचन्द्रम् ॥ अमूमितिपाठेपृथ्वीमित्यर्थः ॥ २२ ॥ तथापृथिव्यांपतनप्रकारेण ॥ तेनेतिपाठेपृथिवींप्रा
सेनतेजसेत्यर्थः ॥ २३ ॥ पद्मानांदशदशतीःशतंवर्षपञ्चशतसंख्यावच्छिन्नंकालम् ॥ २४ ॥ २५ ॥ २६ ॥ कुण्डमितिपाठेकुंडंकूपम् ॥ अज्ञानात्प्रमुच्यतेमायातोमुक्तोभवाति ॥ ज्ञानेनयुज्यत

गणावूचतुः ॥ ॥ शिवशर्मन्महाभागलोकएषकलानिधेः ॥ पीयूषवार्षिभिर्यस्यकरैराप्याय्यतेजगत् ॥ १५ ॥ पितासोमस्यभोविप्रजज्ञेऽत्रिर्भगवानृ
षिः ॥ ब्रह्मणोमानसात्पूर्वंप्रजासर्गंविधित्सतः ॥ १६ ॥ अनुत्तरंनामतपोयेनतप्तंहितत्पुरा ॥ त्रीणिवर्षसहस्राणिदिव्यानीतीहनौश्रुतम् ॥ १७ ॥ ऊर्ध्व
माचक्रमेतस्यरेतःसोमत्वमीयिवत् ॥ नेत्राभ्यांतच्चसुस्रावदशधाद्योतयद्दिशः ॥ १८ ॥ तंगर्भंविधिनादिष्टादशदेव्योदधुस्ततः ॥ समेत्यधारयामासुर्नै
वताःसमशक्नुवन् ॥ १९ ॥ यदानधारणेशक्तास्तस्यगर्भस्यतादिशः ॥ ततस्ताभिःसजूःसोमोनिपपातवसुंधराम् ॥२०॥ पतितंसोममालोक्यब्रह्मालो
कपितामहः ॥ रथमारोपयामासलोकानांहितकाम्यया ॥२१॥ सतेनरथमुख्येनसागरांतांवसुंधराम् ॥ त्रिःसप्तकृत्वोद्रुहिणश्चकारासुंप्रदक्षिणम् ॥२२॥
तस्ययत्स्रवितंतेजःपृथिवीमन्वपद्यत ॥ तथौषध्यःसमुद्भूतायाभिःसंधार्यतेजगत् ॥ २३ ॥ सलब्धतेजाभगवान्ब्रह्मणावर्धितःस्वयम् ॥ तपस्तेपेमहा
भागपद्मानांदशतीर्दश ॥ २४ ॥ अविमुक्तंसमासाद्यक्षेत्रंपरमपावनम् ॥ संस्थाप्यलिंगममृतंचंद्रेशाख्यंस्वनामतः ॥ २५ ॥ बीजौषधीनांतोयानां
राजाभूदग्रजन्मनाम् ॥ प्रसादाद्देवदेवस्यविश्वेशस्यपिनाकिनः ॥ २६ ॥ तत्रकूपंविधायैकममृतोदमितिस्मृतम् ॥ यस्यांबुपानस्नानाभ्यांनरोऽज्ञाना
त्प्रमुच्यते ॥ २७ ॥ तुष्टेनदेवदेवेनस्वमौलौयोधृतःस्वयम् ॥ आदायतांकलामेकांजगत्संजीवनींपराम् ॥२८॥ पश्चाद्दक्षेणशप्तोपिमासोनेक्षयमाप्यच ॥
आप्याय्यतेसौकलयापुनरेवतयाशशी ॥ २९ ॥ सतत्प्राप्यमहाराज्यंसोमःसोमवतांवरः ॥ राजसूयंसमाजह्रेसहस्रशतदक्षिणम् ॥ ३० ॥ दक्षिणामद
दात्सोमस्त्रीँल्लोकानितिनौश्रुतम् ॥ तेभ्योब्रह्मर्षिमुख्येभ्यःसदस्येभ्यश्चभोद्विज ॥ ३१ ॥ हिरण्यगर्भोब्रह्माऽत्रिर्भृगुर्यत्रर्त्विजोभवन् ॥ सदस्योभूद्ध
रिस्तत्रमुनिभिर्बहुभिर्युतः ॥ ३२ ॥

इतिकश्चित् ॥ २७ ॥ तुष्टेनेति ॥ तांप्रसिद्धामेकांकलामादाय एकयाकलयाउपलक्षितइत्यर्थः ॥ तुष्टेनदेवेनस्वमौलौयःस्वयंधृतः ॥ धृतःसदेतिवापाठः ॥ ससोमस्तन्महाराज्यंप्राप्यराजसू
यंसमाजह्रइतितृतीयेनान्वयः ॥ २८ ॥ मासश्चासावूनश्चेतिमासोनस्तस्मिन्मुख्येचांद्रेमासिसमाप्तेसतीत्यर्थः ॥ मासांतइतिपाठेपिसएवार्थः ॥ तयामहादेवेनशिरोधृतया ॥ अनयेतिपाठेपिस
एवार्थः ॥ यथेतिपाठेयथावदित्यर्थः ॥ २९ ॥ सोमवतांसोमयागवताममृतवतामितिवा ॥ वरःश्रेष्ठः ॥ ३० ॥ नौआवाभ्याम् ॥ ३१ ॥ हिरण्यगर्भोब्रह्माभूदित्यग्रिमक्रियानुषज्जते ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अत्रिर्भृगुरितिमरीच्यादीनामुपलक्षणार्थम् ॥ अतएवर्त्विजोऽभवन्नितिबहुवचनम् ॥ ३२ ॥ सिनीसिनीवाली ॥ ३३ ॥ सोमनामनिर्वक्ति ॥ उमयेति ॥ ३४ ॥ ३५ ॥ ३६ ॥ तत्रैवाविमुक्तएव ॥ विलोचनपदंविशिष्टनेत्रपदम् ॥ ३७ ॥ ३८ ॥ त्वत्तव ॥ हस्तैःकरैरश्मिभिरितियावत् ॥ परीतंव्याप्तम् ॥ ३९ ॥ यद्यतः ॥ एवमग्रेपि ॥ ४० ॥ यच्चेत्यत्रयत्रेतिक्वचित्पाठो दृश्यतेतदात्वयात्रतपस्तप्तमित्युक्तम् ॥ अत्रकुत्रेत्याकांक्षायामाह ॥ यत्रक्रतुक्रियेति ॥ ४१ ॥ त्वन्नाम्नित्वन्नाम्नोपलक्षितेचंद्रेश्वरइत्यर्थः ॥ सोमहेसोमसोमार्धरूपधृक् ॥ उमयासहवर्ततइतिसोमं

तंसिनीचकुहूश्चैवद्युतिःपुष्टिःप्रभावसुः ॥ कीर्तिर्धृतिश्चलक्ष्मीश्चनवदेव्यःसिषेविरे ॥ ३३ ॥ उमयासहितंरुद्रंसंतर्प्याध्वरकर्मणा ॥ प्रापसोमइतिख्यातिंदत्तांसोमेनशंभुना ॥ ३४ ॥ तत्रैवतप्तवान्सोमस्तपःपरमदुष्करम् ॥ तत्रैवराजसूयंचचक्रेचंद्रेश्वराग्रतः ॥ ३५ ॥ तत्रैवब्राह्मणैःप्रीतैरित्युक्तोसौ कलानिधिः ॥ सोमोस्माकंब्राह्मणानांराजात्रैलोक्यदक्षिणः ॥ ३६ ॥ तत्रैवदेवदेवस्यविलोचनपदंगतः ॥ देवेनप्रीतमनसात्रैलोक्याह्लाददहेतवे ॥ ३७ ॥ त्वंममास्यपरामूर्तिरित्युक्तस्तत्तपोबलात् ॥ जगत्त्वोदयंप्राप्यभविष्यतिसुखोदयम् ॥ ३८ ॥ त्वत्पीयूषमयैर्हस्तैःस्पृष्टमेतच्चराचरम् ॥ भानुतापपरीतंचपरांग्लानिंविहास्यति ॥ ३९ ॥ एतदुक्त्वामहेशानोवरानन्यानदान्मुदा ॥ द्विजराजतपस्तप्तंयदत्युग्रंत्वयात्रवै ॥ ४० ॥ यच्चक्रतुक्रियोत्सर्गस्त्वयामह्यंनिवेदितः ॥ स्थापितंयत्त्विदंलिंगंममचंद्रेश्वराभिधम् ॥ ४१ ॥ ततोत्रलिंगेत्वन्नाम्निसोमसोमार्धरूपधृक् ॥ प्रतिमासंपंचदश्यांशुक्लायांसर्वगोप्यहम् ॥ ४२ ॥ अहोरात्रंवसिष्यामित्रैलोक्यैश्वर्यसंयुतः ॥ ततोत्रपूर्णिमायांतुकृतास्वल्पापिसत्क्रिया ॥ ४३ ॥ जपहोमार्चनध्यानदानब्राह्मणभोजनम् ॥ महापूजाचसानूनंममप्रीत्यैभविष्यति ॥ ४४ ॥ जीर्णोद्धारादिकरणंनृत्यवाद्यादिकार्पणम् ॥ ध्वजारोपणकर्मादितपस्वियतितर्पणम् ॥ ४५ ॥ चंद्रेश्वरेकृतंसर्वंतदानंत्यायजायते ॥ अन्यच्चतेप्रवक्ष्यामिशृणुगुह्यंकलानिधे ॥ ४६ ॥ अभक्तायचनाख्येयंनास्तिकायश्रुतिद्रुहे ॥ अमावास्यायदासोमजायतेसोमवासरे ॥ ४७ ॥



त्वत्तदर्धंचतद्रूपधृक् ॥ उमार्धशरीरधृगित्यर्थः ॥ शुक्लायांपंचदश्यांपौर्णमास्यामित्यर्थः ॥ ४२ ॥ ततइति ॥ यतोऽत्रस्थानेऽहंनिवसिष्यामिततोऽत्रस्वल्पापिकृतासत्क्रियानूनंनिश्चितंममप्रीत्यै महापूजाभविष्यतीतिसार्धेनान्वयः ॥ ४३ ॥ सत्क्रियामेवदर्शयति ॥ जपहोमेति ॥ ४४ ॥ अर्पणंविश्वेश्वरेसमर्पणम् ॥ कारणमितिपाठेकरणमित्यर्थः ॥ ४५ ॥ ४६ ॥ श्रुतिद्रुहेवेदनिंदकाय ॥ ४७ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भूतायांचतुर्दश्याम् ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ वसुरुद्रादितिसुतेतिअश्रद्धामलक्षालनायापित्रादित्रयाणांवस्वादिरूपकथनम् ॥ ५२ ॥ ५३ ॥ ५४ ॥ सर्वर्णात्संपूर्णादृणात् ॥
क्षणात्पितृकृतादितिक्वचित्पाठः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ स्पृष्ट्वास्पर्शनंकृत्वा ॥ दृष्ट्वेतिक्वचित् ॥ ५९ ॥ सदर्शेऽमावास्यासहिते ॥ ऋणत्रयाद्दैवपित्र्यमानुषलक्षणादित्यर्थः ॥

तदोपवासःकर्तव्योभूतायांसद्भिरादरात् ॥ कृतनित्यक्रियःसोमत्रयोदश्यांनिशामय ॥ ४८ ॥ शनिप्रदोषेसंपूज्यलिंगंचंद्रेश्वराह्वयम् ॥ नक्तंकृत्वात्रयोदश्यांनियमंपरिगृह्यच ॥ ४९ ॥ उपोष्यचचतुर्दश्यांकृत्वाजागरणंनिशि ॥ प्रातःसोमकुहूयोगेस्नात्वाचंद्रोदवारिभिः ॥५०॥ उपास्यसंध्यांविधिवत्कृतसर्वोदकक्रियः ॥ उपचंद्रोदतीर्थेषुश्राद्धंविधिवदाचरेत् ॥५१॥ आवाहनार्घ्यरहितंपिंडान्दद्यात्प्रयत्नतः ॥ वसुरुद्रादितिसुतस्वरूपपुरुषत्रयम् ॥५२॥ मातामहांस्तथोदिश्यतथान्यानपिगोत्रजान् ॥ गुरुश्वशुरबंधूनांनामान्युच्चार्यपिंडदः ॥ ५३ ॥ कुर्वञ्छ्राद्धंचतीर्थेस्मिञ्छ्राद्धयोद्धरतेखिलान् ॥ गयायांपिंडदानेनयथातुष्यंतिपूर्वजाः ॥ ५४ ॥ तथाचंद्रोदकुंडेऽत्रश्राद्धैस्तृप्यंतिपूर्वजाः ॥ गयायांचयथामुच्येत्सर्वर्णात्पितृजान्नरः ॥ ५५ ॥ तथाप्रमुच्यतेचर्णाच्चंद्रोदेपिण्डदानतः ॥ यदाचंद्रेश्वरंद्रष्टुंयायात्कोपिनरोत्तमः ॥५६॥ तदानृत्यंतिमुदितास्ततपूर्वप्रपितामहाः ॥ अयंचंद्रोदतीर्थेस्मिंस्तर्पणंनःकरिष्यति ॥ ५७ ॥ अस्माकंमंदभाग्यत्वाद्यदिनैवकरिष्यति ॥ तदातत्तीर्थसंस्पर्शादस्मत्तृप्तिर्भविष्यति ॥ ५८ ॥ स्पृष्टेनापियदामंदस्तदाद्रक्ष्यतितितृप्तये ॥ एवंश्राद्धंविधायाथस्पृष्ट्वाचंद्रेश्वरंव्रती ॥ संतर्प्यविप्रांश्चयतीन्कुर्याद्वैपारणंततः ॥ ५९ ॥ एवंव्रतेकृतेकाश्यांसदर्शेसोमवासरे ॥ भवेदृणत्रयान्मुक्तोमृगांकमदनुग्रहात् ॥ ६० ॥ अत्रयात्रामहाचैत्र्यांकार्याक्षेत्रनिवासिभिः ॥ तारकज्ञानलाभायक्षेत्रविघ्ननिवर्तिनी ॥ ६१ ॥ चंद्रेश्वरंसमभ्यर्च्ययद्यन्यत्रापिसंस्थितः ॥ अघौघपटलींभित्त्वासोमलोकमवाप्स्यति ॥६२॥ कलौचंद्रेशमहिमानाभाग्यैरवगम्यते ॥ अन्यच्चतेप्रवक्ष्यामिपरंगुह्यंनिशापते ॥ ६३॥ सिद्धयोगीश्वरंपीठमेतत्साधकसिद्धिदम् ॥ सुरासुरेषुगंधर्वनागविद्याधरेष्वपि ॥ ६४ ॥ रक्षोगुह्यकयक्षेषुकिंनरेषुनरेषुच ॥ सप्तकोटयस्तुसिद्धानामत्रसिद्धाममाग्रतः ॥ ६५ ॥ षण्मासंनियताहारोध्यायन्विश्वेश्वरीमिह ॥ चंद्रेश्वरार्चनायातान्सिद्धान्पश्यतिसोऽग्रगान् ॥ ६६ ॥ सिद्धयोगीश्वरीसाक्षाद्वरदातस्यजायते ॥ तवापिमहतीसिद्धिःसिद्धयोगीश्वरीक्षणात् ॥ ६७॥ संतिपीठान्यनेकानिक्षितौसाधकसिद्धये ॥ परंयोगीश्वरीपीठाद्भूपृष्ठेनाशुसिद्धिदम् ॥ ६८ ॥ यत्रचंद्रेश्वरंलिंगंत्वयेदंस्थापितंशशिन् ॥ इदमेवहितत्पीठमदृश्यमकृतात्मभिः ॥ ६९ ॥ जितकामाजितक्रोधाजितलोभस्पृहास्मिताः ॥ योगीश्वरींप्रपश्यंतिममशक्तिंपरांहिताम् ॥ ७० ॥

तथाचश्रुतिः ॥ जायमानोहवैब्राह्मणस्त्रिभिर्ऋणवाञ्जायतइति ॥६०॥ महाचैत्र्यांचैत्रमासोद्भवायांमहापूर्णिमायांचित्रानक्षत्रयुक्तायामित्यर्थः ॥६१॥ संस्थितोमृतः ॥ अघौघपटलींपापसमूहपंक्तिम् ॥६२॥
॥ ६३ ॥ ६४ ॥ ६५ ॥ विश्वेश्वरींसिद्धेश्वरीम् ॥ अयमेववापाठः ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ जितेति ॥ लोभश्चस्पृहाचास्मिताचतास्तथाजितालोभस्पृहास्मितायैस्तेतथा ॥ जितलोभाजित

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्पृहाइतिकचित्पाठः ॥ स्पृहोऽञ्झिताइतिचान्यत्र ॥ हितांहितकारिणीम् ॥ हिनिश्चितंतांप्रसिद्धामितिवा ॥ ७० ॥ भावोभक्तिस्तामिताःप्राप्ताभाविताभक्तियुक्ताइत्यर्थः ॥ ७१ ॥ ७२ ॥
॥ ७३ ॥ अधिपःश्रेष्ठः ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ततःपंचदशेचात्रलोको
नाक्षत्रसंज्ञकः ॥ तथाऽतिरम्योलोकोत्रबुधस्यापिनिगद्यते ॥ १ ॥ उडुलोककथांकथयितुंभार्यांसावधानयति ॥ शृणुपत्नीति ॥ १ ॥ उडुनक्षत्रम् ॥ ख्यातंकथयतम् ॥ विष्वगाख्यान



येतुप्रत्यष्टमिजनास्तथाप्रतिचतुर्दशि ॥ सिद्धयोगीश्वरीपीठेपूजयिष्यंतिभाविताः ॥ ७१ ॥ अदृष्टरूपांसुभगांपिंगलांसर्वसिद्धिदाम् ॥ धूपनैवेद्यदीपाद्यैस्तेषामाविर्भविष्यति ॥ ७२ ॥ इतिदत्त्वावरान्छंभुस्तस्मैचंद्रमसेद्विज ॥ अंतर्हितोमहेशानस्तत्रवैश्वेश्वरेपुरे ॥ ७३ ॥ तदारभ्यचलोकेऽस्मिन्द्विजराजोधिपोभवत् ॥ दिशोवितिमिराःकुर्वन्निजैःप्रसृमरैःकरैः ॥ ७४ ॥ सोमवारव्रतकृतःसोमपानरतानराः ॥ सोमप्रभेणयानेनसोमलोकंव्रजंतिहि ॥ ७५ ॥ चंद्रेश्वरसमुत्पत्तिंतथाचांद्रमसंतपः ॥ यःश्रोष्यतिनरोभक्त्याचंद्रलोकेसइज्यते ॥ ७६ ॥ अगस्तिरुवाच ॥ ॥ शिवशर्मणिशर्मकारिणींपथिदिव्येश्रमहारिणींगणौ ॥ कथयंतौतुकथामिमांशुभामुडुलोकंपरिजग्मतुस्ततः ॥ ७७ ॥ इति श्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायां चतुर्थे काशीखंडेपूर्वार्द्धेसोमलोकवर्णनंनामचतुर्दशोऽध्यायः ॥ १४ ॥ अगस्तिरुवाच ॥ शृणुपत्निमहाभागेलोपामुद्रेसधर्मिणि ॥ कथांविष्णुगणाभ्यांचकथितांशिवशर्मणे ॥ १ ॥ शिवशर्मोवाच ॥ अहोगणौविचित्रेयंश्रुताचांद्रमसीकथा ॥ उडुलोककथांख्यातंविष्वगाख्यानकोविदौ ॥ २ ॥ गणावूचतुः ॥ पुरासिसृक्षतःसृष्टिंस्रष्टुरंगुष्ठपृष्ठतः ॥ दक्षःप्रजाविनिर्माणेदक्षोजातःप्रजापतिः ॥ ३ ॥ षष्टिर्दुहितरस्तस्यतपोलावण्यभूषणाः ॥ सर्वलावण्यरोहिण्योरोहिणीप्रमुखाःशुभाः ॥ ४ ॥ ताभिस्तप्वातपस्तीव्रंप्राप्यवैश्वेश्वरींपुरीम् ॥ आराधितोमहादेवःसोमःसोमविभूषणः ॥ ५ ॥ यदातुष्टोयमीशानोदातुंवरमथाययौ ॥ उवाचचप्रसन्नात्मायाचध्वंवरमुत्तमम् ॥ ६ ॥ शंभोर्वाक्यमथाकर्ण्यऊचुस्ताश्चकुमारिकाः ॥ यदिदेयोवरोऽस्माकंवरयोग्याःस्मशंकर ॥ ७ ॥ भवतोपिमहादेवभवतापहरोहियः ॥ रूपेणभवतातुल्यःसनोभर्ताभवत्विति ॥ ८ ॥ लिंगंसंस्थाप्यसुमहन्नक्षत्रेश्वरसंज्ञितम् ॥ वारणायास्तटेरम्येसंगमेश्वरसान्निधौ ॥ ९ ॥

कोविदौसकलाख्यानेपंडितौ ॥ २ ॥ ३ ॥ तपोविषयेयल्लावण्यंप्रावीण्यंतद्भूषणंयासांतास्तथा ॥ रूपलावण्येतिकचित् ॥ तपोलावण्यसंयुताइतिचान्यत्र ॥ नकेवलंतदेकभूषणाःसर्वलावण्यरोहिण्यश्च ॥ सर्वेषुविषयेषुयानिलावण्यानितानिरोहितुमारोहितुंशीलंयासांतास्तथा ॥ सर्वकल्याणकारिण्यइतिपाठेस्पष्टएवार्थः ॥ ४ ॥ सोमउमयासहवर्तमानः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पुरुषायितसंज्ञितंपुरुषवदाचरितंपुरुषायितंपुरुषैर्याहृशंतपोऽनुष्ठीयतेताहृशमित्यर्थः ॥ तत्संज्ञितंतन्नामकंतपः ॥ पुरुषामितसंज्ञितामितिक्कचित् ॥ पुरुषायुतसंज्ञितमितिचान्यत्र ॥ पाठद्वयेपि पुरुषेभ्योप्यतिशयितंयत्तपस्तत्संज्ञितमित्यर्थः ॥ अतएवोक्तम् ॥ पुरुषैरपिदुष्करमितिं ॥ १० ॥ एकस्यपत्न्यएकपत्न्यस्तासाम् ॥ तदेवाह ॥ एकत्रभर्तरि ॥ एकार्थेतिपाठेपिसएवार्थः ॥ ११ ॥ वरान्दास्यन्प्रथमतस्तासांनक्षत्रनामनिर्वक्ति ॥ नक्षांतमिति ॥ नक्षांतंनसोढमीर्ष्यावशादित्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ अतिथित्व

दिव्यंवर्षसहस्रंतुपुरुषायितसंज्ञितम् ॥ तपस्ततंमहत्ताभिःपुरुषैरपिदुष्करम् ॥ १० ॥ ततस्तुष्टोहिविश्वेशोव्यतरद्वरमुत्तमम् ॥ सर्वासामेकपत्नीनामकत्रे स्थिरचेतसाम् ॥ ११ ॥ श्रीविश्वेश्वरउवाच ॥ ॥ नक्षांतंहितपोत्युग्रमेतदन्याभिरीदृशम् ॥ पुराऽबलाभिस्तस्माद्वोनामनक्षत्रमत्रवै ॥ १२ ॥ पुरुषा यितसंज्ञेनततंयत्तपसाधुना ॥ भवतीभिस्ततःपुंस्त्वमिच्छयावोभविष्यति ॥ १३ ॥ ज्योतिश्चक्रेसमस्तेऽस्मिन्नग्रगण्याभविष्यथ ॥ मेषादीनांचराशी नांयोनयोयूयमुत्तमाः ॥ १४ ॥ ओषधीनांसुधायाश्चब्राह्मणानांचयःपतिः ॥ पतिमत्योभवत्योपितेनपत्याशुभाननाः ॥ १५ ॥ भवतीनामिदंलिंगंनक्षत्रे श्वरसंज्ञितम् ॥ पूजयित्वानरोगंताभवतीलोकमुत्तमम् ॥ १६ ॥ उपरिष्टान्मृगांकस्यलोकोवस्तुभविष्यति ॥ सर्वासांतारकाणांचमध्येमान्याभवि ष्यथ ॥ १७ ॥ नक्षत्रपूजकायेचनक्षत्रव्रतचारिणः ॥ तेवोलोकेवसिष्यंतिनक्षत्रसदृशप्रभाः ॥ १८ ॥ नक्षत्रग्रहराशीनांबाधास्तेषांकदाचन ॥ नभविष्यं तियेकाश्यांनक्षत्रेश्वरवीक्षकाः ॥ १९ ॥ अगस्त्यउवाच ॥ ॥ अतिथित्वमवापनेत्रयोर्बुधलोकःशिवशर्मणस्त्वथ ॥ गणयोर्भगणस्यसंकथांकथयित्रो रितिविष्णुचेतसोः ॥ २० ॥ शिवशर्मोवाच ॥ ॥ कस्यलोकोयमतुलोब्रूतंश्रीभगवद्गणौ ॥ पीयूषभानोरिवमेमनःप्रीणयतेतराम् ॥ २१ ॥ ॥ गणा वूचतुः ॥ ॥ शिवशर्मञ्छृणुकथामेतांपापापहारिणीम् ॥ स्वर्गमार्गविनोदायतापत्रयविनाशिनीम् ॥ २२ ॥ योसौपूर्वंमहाकांतिरावाभ्यांपरिवर्णितः ॥ साम्राज्यपदमापन्नोद्विजराजस्तवाग्रतः ॥ २३ ॥ दक्षिणाराजसूयस्ययेनत्रिभुवनंकृता ॥ तपस्ततापयोत्युग्रंपद्मानांदशतीर्दश ॥२४॥ अत्रिनेत्रसमुद्भूतः पौत्रोवैद्रुहिणस्ययः ॥ नाथःसर्वौषधीनांचज्योतिषांपतिरेवच ॥ २५ ॥

मिति॥ इत्युक्तप्रकारेणभगणस्यनक्षत्रगणस्यसंकथांसमीचीनांकथांगणयोःकथयतोःसतोर्बुधलोकः शिवशर्मणोनेत्रयोरतिथित्वंनेत्रगोचरतामवापेत्यर्थः ॥२०॥ पीयूषभानोश्चन्द्रस्यलोकइवप्रीणयते वर्षयतिहर्षयतीतियावत ॥ २१ ॥ २२ ॥ योसाविति ॥ योऽसौपूर्वंमहाकांतिरित्यादिभिःषड्भिःश्लोकैर्यएवंभूतश्चंद्रइत्यनूद्यसबृहस्पतेर्भार्यांजहारेतिसप्तमेनान्वयः ॥ २३ ॥ २४ ॥ द्रुहिणस्य

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ब्रह्मणः ॥ २५ ॥ शेवधिर्निधिराश्रय इत्यर्थः ॥ स्वकरैः स्वरश्मिभिः ॥ गलहस्तयेत् गले धृत्वा निस्सारयेन्नाशयेदित्यर्थः ॥२६॥ दिग्वध्विति ॥ दिग्वधूनां दिगंगनानां ये चारवः शृंगारा अलंकरणानि कुंकुमादिभिर्मंडनानि वा तेषां दर्शनार्थमादर्शस्थानीयं दर्पणस्थानीयं मंडलं यस्य सः ॥ २७ ॥ किमन्यैरिति ॥ अन्यैर्गुणसंभारैर्वर्णितैः किम् ॥ यतोऽतोपि वक्ष्यमाणात्कारणादस्य विधोः समं नास्ति ॥ समोग्रह इति क्वचित्पाठः ॥ तमसोरिपोरिति चान्यत्र ॥ अत इत्यनेनोक्तं हेतुं विवृणोति ॥ निजेति ॥ सर्वज्ञ ईश्वरो यस्य चंद्रस्य कलां निजोत्तमांगे स्वशिरसि अवतंसयेच्छिरोभूषणं कुर्यादित्यर्थः ॥ द्वितीयांतपाठे निजोत्तमांगं प्रतिभूषयेदिति ॥ २८ ॥ भ्रातुः पितृव्यपुत्रस्य ॥ अत्र्यंगिरसोर्भ्रातृत्वात् ॥ अत एवांगिरसस्येति विशेषणमुक्तम् ॥ २९ ॥ रूपवान् रूपशालिनीमिति विशेषणाभ्यां परस्परानुमतेनैव हरणमिति सूचितम् ॥ मत्स्यपुराणे तथा दर्शनात् ॥ तथाहि ॥ कदाचिदुद्यानगतामपश्यदनेकपुष्पाभरणोपशोभाम् ॥ बृहन्नितंबस्तनभारखेदात्पुष्पावभंगेप्यतिदुर्बलांगीम् ॥ भार्यां च तां देवगुरोरनंगबाणातुरामायतचारुनेत्राम् ॥ तारां स ताराधिपतिः स्मरार्तः केशेषु जग्राह विविक्तभूमौ ॥ सापि स्मरार्ता सह तेन रेमे तद्रूपकांत्याहतमानसेव ॥ चिरं विहृत्याथ जगाम तारां विधुर्गृहीत्वा स्वगृहं ततोपीति ॥ बहु बहुवारं यथा भवति तथा ॥ ३० ॥ ननु कथमयं सात्त्विको भूत्वा बहुभिर्वार्यमाणोत्यंतनिषिद्धे कर्मणि प्रवृत्त इत्यत आह ॥ नायमिति ॥ न खंडितं वैक्लव्यं न प्रापितमपि तु खंडितमेव ॥ ३१ ॥ ननु सनकादीनां मनसः कामाखंडितत्वं दृश्यते ॥ सत्यम् ॥ तेषामाधिपत्यतमोऽभावादित्याशयेनाह ॥ ध्वांतमिति ॥ एतद्यद्ध्वांतं तमः ॥ अभितः सर्वतः प्रसारि प्रसरणशीलं तच्छमायनाशाय विधिना महदौषधं विनिर्मितम् ॥ किं तन्महौषधमित्याकांक्षायामाह ॥ दीपेति ॥ अधिपतेर्भाव आधिपत्यमाधिपत्यतमस आधिपत्यजन्याविवेकज्ञानस्य तु पुनः किंचन किंचिदप्यौषधं न विहितमित्यर्थः ॥ ३२ ॥ वार्यमाणोपि जहार इति यदुक्तं तत्र वै हेत्वंतरमाह ॥ आधिपत्यमिति ॥ आधिपत्यमदेन मोहितमंतःकरणं पुरुषं वा कर्मभूतमिति शेषः ॥ हरेः संबंधि यद्धितं श्रवणादि निषिद्धवर्जनादिकं तद्यतः शंसितं कथितं सत्कर्तृभूतं न स्पृशति ॥ आधिपत्यमदमुत्सार्य स्वार्थे स्थापयितुं न शक्नोतीत्यर्थः ॥ अत्रानुगुणं दृष्टांतमाह ॥ दुर्जनमिति ॥ तीर्थमज्जनैस्तीर्थस्नानादिभिः शुद्धा निर्मला बुद्धिर्यस्य स यथा विरुद्धमानसं दुष्टमानसं दुर्जनं वंचकं न स्पृशति तद्वदिति ॥ हरेर्द्धितमिति पाठे न केवलं नो स्पृशति अपितु हितं हरेत् ॥ क्रोधमुत्पाद्यानर्थं संपादयेदित्यर्थः ॥ चतंहितैरीति स्थलद्वयपाठे तं चंद्रं हितैः सुहृद्भिः ॥ अन्यत्सर्वं पूर्ववत् ॥ दुर्जनं विहिततीर्थमज्जनमिति क्वचित्पाठः ॥ ३३ ॥ आधिपत्यगर्वं निंदति ॥ धिग्धिगिति ॥ अधिकर्द्धिचेष्टितं धिक् गर्हितं निंदितमिति यावत् ॥ गर्हाधिक्यसूचनार्था वीप्सा ॥

निर्मलानां कलानां च शेवधिर्यश्च गीयते ॥ उद्यन्परोपतापं यः स्वकरैर्गलहस्तयेत् ॥ २६ ॥ मुदं कुमुदिनीनां यस्तनोति जगतां सह ॥ दिग्वधूचारुशृंगारदर्शनादर्शमंडलः ॥ २७ ॥ किमन्यैर्गुणसंभारैरतोपि न समं विधोः ॥ निजोत्तमांगे सर्वज्ञः कलां यस्यावतंसयेत् ॥ २८ ॥ बृहस्पतेस्स वै भार्यामैश्वर्यमदमोहितः ॥ पुरोहितस्यापि गुरोर्भ्रातुरांगिरसस्य वै ॥ २९ ॥ जहार तरसा तारां रूपवान्रूपशालिनीम् ॥ वार्यमाणोपि गीर्वाणैर्बहुदेवर्षिभिः पुनः ॥ ३० ॥ नायं कलानिधेर्दोषो द्विजराजस्य तस्य वै ॥ हित्वा त्रिनेत्रं कामेन कस्य नो खंडितं मनः ॥ ३१ ॥ ध्वांतमेतदभितः प्रसारि यत्तच्छमाय विधिना विनिर्मितम् ॥ दीपभास्करकरामहौषधं नाधिपत्यतमसस्तु किंचन ॥ ३२ ॥ आधिपत्यमदमोहितं हितं शंसितं स्पृशति नो हरेर्हितम् ॥ दुर्जनं विहिततीर्थमज्जनैः शुद्धधीरिव विरुद्धमानसम् ॥ ३३ ॥ धिग्धिगेतदधिकर्द्धिचेष्टितं चंक्रमेक्षणविलक्षितं यतः ॥ वीक्षतेक्षणमचारुचक्षुषा घातितेन विपदः पदे न च ॥ ३४ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अधिगर्द्धिचेष्टितमितिक्वचित्पाठः ॥ कुतइत्यतआह ॥ यतोयेनाधिकर्द्धिचेष्टितेनचंक्रमेक्षणविलक्षितंचंक्रमश्चंक्रमणंपरिभ्रमणंतेनयदीक्षणंपृथिवीभ्रमणादिदर्शनम् ॥ यदुक्तंभागवते ॥ यथा भ्रमरिकादृष्ट्याभ्राम्यतीवमहीपतइति ॥ तद्वद्विलक्षितंविपरीतंवीक्षतेपश्यति ॥ अहितमेवहितंमन्यतइत्यर्थः ॥ कथंभूतेनाधिकर्द्धिचेष्टितेन ॥ अचारुचक्षुषाऽविवेकात्मकेननेत्रेण ॥ पुनःकथंभूतेन ॥ क्षणंघातितेन क्षणंयथास्यात्तथाघातंघातकत्वमितेनप्राप्तेननाशकेनेत्यर्थः ॥ पुनःकथंभूतेन ॥ विपदःपदेनविपदामाश्रयेणेत्यर्थः ॥ ३४ ॥ कामाधिपत्यतमसीउपसंहरन्दृष्टांतत्वेनार्थांतराण्याह ॥ कःकामेनेति ॥ जगतांमध्ये ॥ त्रिजगतइतिक्वचित् ॥ भल्लोबाणः ॥ भल्लीतिपाठेपिसएवार्थः ॥ सल्लोचनोविद्यमाननेत्रः ॥ काचकामलादिदोषराहित्यंवासतोऽर्थः ॥ सल्लोचनःसद्विवेकवानितिवा ॥ ३५ ॥ उपदेशसारमाह ॥ आधिपत्येति ॥ आधिपत्यकमलाऐश्वर्यलक्ष्मीर्यासातिचंचलातांचपुनःप्राप्यसदसद्यदर्जितंतन्निश्चलंस्थिरतरंभवतिसुखदुःखप्रापकमवश्यंभवतीत्यर्थः ॥ तत्तस्मादार्याणांचरितमिवचरितंयेषांतैरुच्चकैर्यथास्यात्तथासदैवहितंसर्वदासदनुष्ठानमेवकार्यमिति ॥ किलेतिशास्त्रप्रसिद्धिंद्योतयति ॥ ३६ ॥ प्रासंगिकमुक्त्वाप्रकृतमाहतुः ॥ नयदेति ॥

कःकामेननिर्जितस्त्रिजगतांपुष्पायुधेनाप्यहोकःक्रोधस्यवशंगतोननचकोलोभेनसंमोहितः ॥ योषिल्लोचनभल्लभिन्नहृदयःकोनात्तवानापदंकोराज्यश्रियमाप्यनांधपदवींयातोपिसल्लोचनः ॥ ३५ ॥ आधिपत्यकमलातिचंचलाप्राप्यतांचयदिहार्जितंकिल ॥ निश्चलंसदसदुच्चकैर्हितंकार्यमार्यचरितैः सदैवतत् ॥ ३६ ॥ नयदांगिरसेतारांसव्यसर्जयदुल्बणः ॥ रुद्रोथपार्ष्णिजग्राहगृहीत्वाजगवंधनुः ॥ ३७ ॥ तेनब्रह्मशिरोनामपरमास्त्रंमहात्मना ॥ उत्सृष्टंदेवदेवायतेनतन्नाशितंततः ॥ ३८ ॥ तयोस्तद्युद्धमभवद्घोरंवैतारकामयम् ॥ ततस्त्वकांडब्रह्मांडभंगाद्भीतोभवद्विधिः ॥३९॥ निवार्यरुद्रंसमरात्संवर्तानलवर्चसम् ॥ ददावांगिरसेतारांस्वयमेवपितामहः ॥४०॥ अथांतर्गर्भमालोक्यतारांप्राहबृहस्पतिः ॥ मदीयायांनतेयोनौगर्भोधार्यःकथंचन ॥४१॥

आंगिरसेआंगिरसायबृहस्पतये ॥ व्यसर्जयत्ददत्तवान् ॥ उल्बणस्तीक्ष्णउद्भटइतियावत् ॥ पार्ष्णिपृष्ठरक्षांसाहाय्यंवाजग्राहकृतवान् ॥ अजस्यच्छागस्यगोश्चशृंगाभ्यांनिर्मितमाजगवम् ॥ ॥ ३७ ॥ तेनेति ॥ तेनचंद्रेण ॥ ब्रह्मइतिपदंशिरसियस्यतद्ब्रह्मशिरोब्रह्मास्त्रमस्त्रविशेषंवाब्रह्मशिरः ॥ अस्त्रंब्रह्मशिरश्चैवब्राह्ममस्त्रंतथैवचेतिनृसिंहप्रादुर्भावेहरिवंशेदर्शनात् ॥ देवदेवायरुद्रायोत्सृष्टम् ॥ ततस्तदनंतरंतद्ब्रह्मशिरोऽस्त्रंतेनदेवेननाशितम् ॥ ततइत्यत्रयशइतिपाठेतत्तस्यचंद्रस्ययशोनाशितमित्यर्थः ॥ उद्धृत्यदेवानुत्सृष्टंयेनैषांनाशितंयशइतिक्वचित्पाठस्तदातेनेत्यनेनेश्वरस्यचन्द्रस्यवाऽभिधानम् ॥ उद्धृत्यउत्तोल्य ॥ देवान्प्रतिएषांदेवानाम् ॥ ३८ ॥ तारकामयन्तारानिमित्तम् ॥ ततोयुद्धात् ॥ कथंभूतात् ॥ अकांडब्रह्मांडभंगादनवसरजगत्प्रलयान्निमित्तात् ॥ विधिर्ब्रह्माभीतोऽभूत् ॥ भ्रंशभीतइतिपाठेततस्तदनंतरमितिवार्थः ॥ तुशब्दादन्येऽपिभीताअभूवन्नित्यर्थः ॥ ३९ ॥ संवर्तानलवर्चसं प्रलयाग्नितेजसम् ॥ आंगिरसेआंगिरसाय ॥ ४० ॥ अन्तर्गर्भमुदरस्थंगर्भमित्यर्थः ॥ अस्यामितिपाठेतारायामित्यर्थः ॥ अथात्रेतिपाठेपिसएवार्थः ॥ योनौगर्भेक्षेत्रइतिवा ॥ क्षेत्रेमदीयेगर्भोऽयंनधार्यःशशिनस्त्वये

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तिकचित्पाठः ॥ ४१ ॥ इषीकास्तंबमत्युच्छ्रितृणविशेषगुच्छम् ॥ ऐषीकास्त्रमथादायेतिपाठश्चित्यः ॥ ४२ ॥ ४३ ॥ अतिसत्रपाअतिशयलज्जायुक्ता ॥ ४४ ॥ ४५ ॥ ससोमःप्रजापतिश्चेत्यन्वयः ॥ राजावनस्पतीनाम् ॥ तदातंतारागर्भमितिस्थलद्वयपाठेप्रजापतिर्ब्रह्माइत्येव ॥ ४६ ॥ ४७ ॥ निर्वाणराशिंकैवल्यपुंजम् ॥ ४८ ॥ उग्रंविश्वेश्वरंसंशीलयन् चिंतयन् ॥ अयुतंदशसहस्रम् ॥ ४९ ॥ ५० ॥ उवाचेति ॥ अन्यविबुधोत्तमोऽन्यदेवेषूत्तमस्त्वंवरंब्रूहीत्यन्वयः ॥ पाठांतरेसंबोधनम् ॥ ५१ ॥ ५२ ॥ इतीति ॥ इतिपूर्वोक्तप्रकारंवचः श्रुत्वासबालकोलोचनेउन्मील्ययावत्पुरःपश्यतितावल्लिंगेत्र्यंबकंददर्शेतिद्वितीयेनान्वयः ॥ मेघगंभीरनिःस्वनंयथास्यात्तथा ॥ कथंभूतम् ॥ अवग्रहेणवृष्टिप्रतिबंधेनपरिम्लानंपरिशुष्कंसस्यंतस्य

इषीकास्तंबमासाद्यगर्भंसाचोत्ससर्जह ॥ जातमात्रःसभगवान्देवानामाक्षिपद्वपुः ॥ ४२ ॥ ततःसंशयमापन्नास्तारामूचुःसुरोत्तमाः ॥ सत्यंब्रूहिसुतः कस्यसोमस्याथबृहस्पतेः ॥ ४३ ॥ पृच्छमानायदादेवैर्नाहताराऽतिसत्रपा ॥ तदासाशप्तुमारब्धाकुमारेणातितेजसा ॥ ४४ ॥ तंनिवार्यतदाब्रह्मातारां पप्रच्छसंशयम् ॥ प्रोवाचप्रांजलिःसातंसोमस्येतिपितामहम् ॥ ४५ ॥ तदासमूर्ध्न्युपाघ्रायराजागर्भंप्रजापतिः ॥ बुधइत्यकरोन्नामतस्यबालस्यधीमतः ॥ ४६ ॥ ततश्चसर्वदेवेभ्यस्तेजोरूपबलाधिकः ॥ बुधःसोमंसमापृच्छ्यतपसेकृतनिश्चयः ॥४७॥ जगामकाशींनिर्वाणराशिंविश्वेशपालिताम् ॥ तत्रलिंगंप्रतिष्ठाप्यसस्वनाम्नाबुधेश्वरम् ॥ ४८ ॥ तपश्चचारचात्युग्रमुग्रंसंशीलयन्हृदि ॥ वर्षाणामयुतंबालोबालेंदुतिलकंशिवम् ॥ ४९ ॥ ततोविश्वपतिःश्रीमान्विश्वेशोविश्वभावनः ॥ बुधेश्वरान्महालिंगादाविरासीन्महोदयः ॥ ५० ॥ उवाचचप्रसन्नात्माज्योतीरूपोमहेश्वरः ॥ वरंब्रूहिमहाबुद्धे बुधान्यविबुधोत्तमः ॥ ५१ ॥ तवानेनातितपसालिंगसंशीलनेनच ॥ प्रसन्नोस्मिमहासौम्यनादेयंत्वयिविद्यते ॥ ५२ ॥ इतिश्रुत्वावचःसोथमेघगंभीरनिःस्वनम् ॥ अवग्रहपरिम्लानसस्यसंजीवनोपमम् ॥ ५३ ॥ उन्मील्यलोचनेयावत्पुरःपश्यतिबालकः ॥ तावल्लिंगेददर्शाथत्र्यंबकंशशिशेखरम् ॥५४॥ बुधउवाच ॥ ॥ नमःपूतात्मनेतुभ्यंज्योतीरूपनमोस्तुते ॥ विश्वरूपनमस्तुभ्यंरूपातीतायतेनमः ॥५५॥ नमःसर्वार्तिनाशायप्रणतानांशिवात्मने ॥ सर्वज्ञायनमस्तुभ्यंसर्वकर्त्रेनमोस्तुते ॥ ५६ ॥

संजीवनमुपमायत्रतत्तथा ॥ ५३॥५४॥ सोमंविश्वेश्वरंदेवंदृष्ट्वातिकरुणाकरम् ॥ अष्टभिःपरमप्रीतःपद्यैरस्तौद्बुधःशिवम् ॥ नमइति ॥ पूतात्मनेपूतात्माख्यवाय्वात्मनेऽष्टमूर्तित्वादीश्वरस्य ॥ पवित्रात्मनेइतिवा ॥ पवित्राणांपवित्रंयइतिस्मृतेः ॥ सर्वात्मनइतिकचित् ॥ पूर्णात्मनइतिचान्यत्र ॥ हेज्योतीरूपस्वप्रकाशतेतुभ्यंनमोस्तु ॥ अत्रायंपुरुषःस्वयंज्योतीरितिश्रुतेः ॥ आत्मास्वप्रकाशश्चिद्रूपत्वाद्दुर्वभिमतज्ञानवदित्यनुमानाच्च ॥ प्रपंचितमेतद्बालबोधिनीटीकायामस्माभिः ॥ विश्वरूपहेप्रपंचात्मन् ॥ इदंसर्वंयदयमात्मेतिश्रुतेः ॥ विश्वंविष्णुर्वषट्कारइतिस्मृतेश्च ॥ रूपातीतायरूपाण्यतीत्यवर्तमानाय ॥ अगोत्रमस्पर्शमरूपमव्ययमितिश्रुतेः ॥ ५५ ॥ प्रणतानांसर्वार्तिनाशायभक्तानामाध्यात्मिकाधिदैविकाधिभौतिकतापत्रितयनाशायेत्यर्थः ॥ भिद्यतेहृदयग्रंथिः



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तत्रकोमोहःकःशोकएकत्वमनुपश्यतइतिश्रुतेः ॥ प्रणतार्तिप्रभंजनः विशोकःशोकनाशमइतिस्मृतेश्च ॥ कथंभूताय ॥ शिवात्मनेमंगलस्वरूपाय ॥ स्मृतेसकलकल्याणभाजनंयत्रजायते ॥
मंगलानांचमंगलमितिस्मृतेः ॥ सर्वंजानातीतिसर्वश्चासौज्ञश्चेतिवासर्वज्ञःस्वाध्यस्तंसर्वमवभासयतीत्यर्थः ॥ तदुक्तमुपदेशसहस्र्यांभगवत्पादैः ॥ सर्वज्ञोप्यतएवस्यात्स्वेनभासावभासयन् ॥ सर्वमिति ॥
यःसर्वज्ञःसर्ववित् साक्षीचेताइत्यादिश्रुतेश्च ॥ सर्वकर्त्रेसर्वेषांब्रह्मादिस्तंबपर्यंतानांकर्त्रेउत्पादयित्रे ॥ सर्वासांक्रियाणांहेतुत्वाद्वासर्वकर्त्रे ॥ तदुक्तं तस्यांतैरेवाक्षरचतुष्टयन्यूनेनपूर्वस्यैवार्धेन ॥ सर्वं
सर्वक्रियाहेतोःसर्वकृत्त्वंतथात्मनइति ॥ यतोवाइमानिभूतानिजायंते एषसर्वज्ञइत्यादिश्रुतेः ॥ करणंकारणंकर्तेत्यादिस्मृतेश्च ॥ ५६ ॥ कृपालवेदयालवे ॥ ततोऽन्यंकंवादयालुंशरणंव्रजेम
इतिस्मृतेः ॥ भक्तिगम्यायभक्त्येकलभ्याय ॥ यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ ॥ यमेवैषवृणुतेतेनलभ्यइतिश्रुतेः ॥ भक्त्यातुतोषभगवान्गजयूथपायेतिस्मृतेश्च ॥ फलदात्रेकर्मफलदात्रे पर
मार्थफलदात्रेवा ॥ रातेर्दातुःपरायणमित्यादिश्रुतेः ॥ कैवल्यपतयेनमइतिस्मृतेश्च ॥ तपसांतपस्विनांतपोरूपायवाज्ञानदायेत्यर्थः ॥ ज्ञानंयस्यपरन्तपइतिश्रुतेः ॥ तेतुभ्यंनमः ॥ ५७ ॥ शंसुखंभवत्य

कृपालवेनमस्तुभ्यंभक्तिगम्यायतेनमः ॥ फलदात्रेचतपसांतपोरूपायतेनमः ॥ ५७ ॥ शंभोशिवशिवाकांतशांतश्रीकंठशूलभृत् ॥ शशिशेखरशर्वे
शशंकरेश्वरधूर्जटे ॥ ५८ ॥ पिनाकपाणेगिरिशशितिकंठसदाशिव ॥ महादेवनमस्तुभ्यंदेवदेवनमोस्तुते ॥ ५९ ॥ स्तुतिंकर्तुंनजानामिस्तुतिप्रियम
हेश्वर ॥ तवपादांबुजद्वंद्वेनिर्द्वंद्वाभक्तिरस्तुमे ॥ ६० ॥ अयमेववरोनाथप्रसन्नोसियदीश्वर ॥ नान्यंवरंवृणेत्वत्तःकरुणामृतवारिधे ॥ ६१ ॥ ततःप्राहमहे
शानस्तत्स्तुत्यापरितोषितः ॥ रौहिणेयमहाभागसौम्यसौम्यवचोनिधे ॥ ६२ ॥ नक्षत्रलोकादुपरितवलोकोभविष्यति ॥ मध्येसर्वग्रहाणांचसपर्यां
लप्स्यसेपराम् ॥ ६३ ॥ त्वयेदंस्थापितंलिंगंसर्वेषांबुद्धिदायकम् ॥ दुर्बुद्धिहरणंसौम्यत्वल्लोकवसतिप्रदम् ॥ ६४ ॥ इत्युक्त्वाभगवाञ्छंभुस्तत्रैवांतरधी
यत ॥ बुधःस्वर्लोकमगमद्देवदेवप्रसादतः ॥ ६५ ॥ गणावूचतुः ॥ ॥ काश्यांबुधेश्वरसमर्चनलब्धबुद्धिःसंसारसिंधुमधिगम्यनरोह्यगाधम् ॥ मज्जेत्रस
ज्जनविलोचनचंद्रकांतिःकांताननस्त्वधिवसेच्चबुधेऽत्रलोके ॥ ६६ ॥

स्मादितिशंभुस्तत्संबोधनंहेशंभो ॥ शिवसुखस्वरूप ॥ सत्यंज्ञानमानंदंब्रह्मेतिश्रुतेः॥शिवाकांतपार्वतीनाथ॥शांतनिर्विकार॥ नजायतेनम्रियतेअविनाशीवाअरेऽयमात्मेत्यादिश्रुतेः ॥ श्रीकण्ठनीलकंठ ॥
इतितस्यवचःश्रुत्वामयागिरिवरात्मजे ॥ धृतंकंठेविषंघोरंततःश्रीकण्ठतामगमितिस्मृतेः ॥ शूलभृत्त्रिशूलभृत् ॥ शशिशेखरचंद्रावतंसचंद्रमौलेइत्यर्थः ॥ सर्वेशब्रह्मादिस्तंबपर्यंतानांनियन्तः ॥ शंकल्या
णंकरोतीतिशंकर ॥ ईश्वरईशनशील ॥ धूर्जटेधूर्भारस्तद्रूपाजटायस्यतत्संबोधनंतथा ॥ ५८ ॥ पिनाकपाणेआजगवहस्त ॥ गिरौकैलासेशेतइतिगिरिश ॥ शितिकण्ठनीलग्रीव ॥ सदाशिवंकल्याणं
यस्मात्सर्वदैकसुखस्वरूपेतिवा ॥ देवनंदेवः महांश्चासौदेवश्चेतितथा ॥ देवानांदेवेतिदेवदेवहेदेवेतिवा ॥ आदरेवीप्सा ॥ ५९ ॥ ६० ॥ करुणामृतवारिधेदयासुधासिंधो ॥ ६१ ॥ रौहिणेयेति ॥
यद्यपितारेयोऽयन्तथापिचन्द्रपत्नीनां मध्येतस्याः प्राधान्यात्सपत्नमातृत्वाद्वातयापुष्टत्वाद्वातथाभिधानमितिज्ञातव्यम् ॥ सौम्यसौम्येत्यादरेवीप्सा ॥ वचोनिधेवाग्मिन् ॥ सौम्यवचोनिधेमधुरवचसांशे
वधेआश्रयेतिवा ॥ ६२ ॥ सपर्यांपूजाम् ॥ ६३ ॥ बुद्धिदायकंज्ञानकारकम् ॥ बुद्धिवर्धनमितिकचित् ॥ ६४ ॥ ६५ ॥ काश्यामिति ॥ काश्यांबुधेश्वरसमर्चनेनलब्धबुद्धिःप्राप्तज्ञानोऽत्रबुधेलोकोने

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वसेदित्यन्वयः ॥ ज्ञानप्राप्तेःपरमंफलंदर्शयाति ॥ संसारसमुद्रंप्राप्यापिनमज्जेन्नब्रुडेत् ॥ सज्जनविलोचनानांचन्द्रकांतिदर्शनीयश्चभवतीत्यर्थः ॥ कांतंकमनीयमाननंयस्यसः ॥ ६६ ॥ ६७ ॥ ६८ ॥
इतिश्रीरामानंदकृतायांकाशीखण्डटीकायांपंचदशोध्यायः ॥ १५ ॥ ॥ छ ॥ षोडशेजीवसद्रत्नपुरवर्यंनिरूप्यते ॥ भार्गवस्यासुरेंद्राणांगुरोरतुलतेजसः ॥ १ ॥ क्रमप्राप्तंभृगुलोकंवर्णयतः ॥
शिवशर्माणमिति ॥ १ ॥ कणाःकंडितास्तंदुलतुषास्तज्जन्यंधूमंकणधूमम् ॥ २ ॥ दुष्करांदुष्प्राप्याम् ॥ वाक्पतिश्चेतिकाचित् ॥ ३ ॥४॥ अचाक्षाथांकथयतम् ॥५ ॥ अपमृत्युभ्योऽपमरणेभ्यः ॥

चंद्रेश्वरात्पूर्वभागेदृष्ट्वालिंगंबुधेश्वरम् ॥ नबुद्ध्याहीयतेजंतुरंतकालेपिजातुचित् ॥६७॥ गणौयावत्कथामित्थंचक्रातेबुधलोकगाम् ॥ तावद्विमानंसंप्राप्तं शुक्रलोकमनुत्तमम् ॥ ६८ ॥ ॥ इति श्रीस्कांदेमहापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडेपूर्वार्द्धेनक्षत्रबुधलोकयोर्वर्णनंनामपंचदशोध्यायः ॥ १५ ॥ ॥ गणावूचतुः ॥ शिवशर्मन्महाबुद्धेशुक्रलोकोयमद्भुतः ॥ दानवानांचदैत्यानांगुरुरत्रवसेत्कविः ॥ १ ॥ पीत्वावर्षसहस्रंवैकणधूमंसुदुःसहम् ॥ यःप्राप्तवान्महाविद्यांमृत्युसंजीविनींहरात् ॥ २ ॥ इमांविद्यांनजानातिदेवाचार्योतिदुष्कराम् ॥ ऋतेमृत्युंजयात्स्कंदात्पार्वत्यागजवक्त्रतः ॥ ३ ॥ शिवशर्मोवाच ॥ ॥ कोसौशुक्रइतिख्यातोयस्यायंलोकउत्तमः ॥ कथंतेनचविद्याप्तामृत्युसंजीविनीहरात् ॥ ४ ॥ आचक्षाथामिदंदेवौयदिप्रीतिर्मयिप्रभू ॥ ततस्तौस्माहतुर्देवौशुक्रस्यपरमांकथाम् ॥५॥ यांश्रुत्वाचापमृत्युभ्योहीयंतेश्रद्धयायुताः ॥ भूतप्रेतपिशाचेभ्योनभयंचापिजायते ॥ ६ ॥ आजौप्रवर्तमानायामंधकांधकवैरिणोः ॥ अनिर्भेद्यगिरिव्यूहवज्रव्यूहाधिनाथयोः ॥७॥ अपसृत्यततोयुद्धादंधकःशुक्रसंनिधिम् ॥ अधिगम्यबभाषेदमवरुह्यरथात्ततः ॥ ८ ॥ भगवंस्त्वामुपाश्रित्यवयंदेवांश्चसानुगान् ॥ मन्यामहेतृणैस्तुल्यान्रुद्रोपेंद्रादिकानपि ॥ ९ ॥ कुंजराइवसिंहेभ्योगरुडेभ्यइवोरगाः ॥ अस्मत्तोबिभ्यतिसुरागुरोयुष्मदनुग्रहात् ॥ १० ॥ वज्रव्यूहमनिर्भेद्यंविविशुर्दैत्यदानवाः ॥ विधूयप्रमथानीकंद्वंदंतापार्दिताइव ॥ ११ ॥ वयंत्वच्छरणंभूत्वापर्वताइवनिश्चलाः ॥ स्थित्वाचरामनिःशंकाब्राह्मणेंद्रमहाहवे ॥ १२ ॥

पापमृत्युभ्यइतिक्वचित् ॥ हीयन्तेमुच्यन्ते ॥ ६ ॥ अन्धकांधकवैरिणोराजौसंग्रामेप्रवृत्तेसतिअंधकोरणादपसृत्यरथादवरुह्यशुक्रसंनिधिमधिगम्यइदंवक्ष्यमाणंवाक्यंबभाषइतिद्वितीयेनान्वयः ॥ ७ ॥
बभाषेदमितिसंधिरार्षः ॥ ८ ॥ तदेववचनंदर्शयति इत्यंधकवचःश्रुत्वेत्यतःप्राक्तनेनग्रंथेन ॥ ९ ॥ १० ॥ ११ ॥ त्वच्छरणमितिकर्मधारयः ॥ त्वत्तवशरणंगृहमाश्रयंसाहाय्यमित्येतादिति



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वार्थः ॥ भूत्वाप्राप्येत्यर्थः ॥ प्राप्त्यर्थस्यभवतेःसकर्मकत्वात् ॥ त्वच्छरणाइतिपाठेस्पष्टएवार्थः ॥ १२ ॥ १३ ॥ यदर्थंशुश्रूषणंतद्व्यनक्ति ॥ अभिरक्षेति ॥ पश्यहुंडमित्यादीनांद्वितीयांतानां प्रमथैःक्रांतंपश्योतिद्वितीयेनान्वयः ॥ १४ ॥ १५ ॥ द्राविडैर्द्रविडदेशोद्भवैर्जनैः ॥ १६ ॥ एवंसतिकिंमयाकर्तुंशक्यतइतिचेदतआह ॥ यापीत्वेति ॥ शरदांसंवत्सराणाम् ॥ १७ ॥ अथअतः ॥ अद्येतिक्वचित् ॥ १८ ॥ किंचित्स्मितंतदाकृत्वेति ॥ यस्येश्वरस्यप्रसादान्मयाविद्यालब्धातयैवतस्यपराभवंवांछत्ययंधृष्टइतिईषद्धास्यंकृत्वेत्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ ग्लानानि शुष्काणि ॥ २२ ॥ २३ ॥ इत्युक्तेति ॥ अंधकमित्युक्त्वाकविःशुक्रएकैकंदैत्यमुद्दिश्यविद्यामावर्तयन् आवर्तयतिस्मजपतिस्मेत्यर्थः ॥ यानुद्दिश्यविद्यांजजापतेधृतायुधाउत्तस्थुरिति ॥

आप्तभावेनचवयंपादौतवसुखप्रदौ ॥ सदाराःससुताश्चैवशुश्रूषामोदिवानिशम् ॥ १३ ॥ अभिरक्षाभितोविप्रप्रसन्नःशरणागतान् ॥ पश्यहुंडंतुहुंडंचकुजं भंजंभमेवच ॥ १४ ॥ पाकंकार्तस्वनंचैवविपाकंपाकहारिणम् ॥ तंचन्द्रदमनंशूरंशूरामरविदारणम् ॥१५॥ प्रमथैर्भीमविक्रांतैःक्रांतंमृत्युप्रमाथिभिः ॥ सूदितान्पतितांश्चैवद्राविडैरिवचंदनान् ॥ १६॥ यापीत्वाकणधूमंवैसहस्रंशरदांपुरा ॥ वराविद्यात्वयाप्राप्तातस्याःकालोयमागतः ॥१७॥ अथविद्याफलं तत्तेदैत्यान्संजीवयिष्यतः ॥ पश्यंतुप्रमथाःसर्वेत्वयासंजीवितानिमान् ॥१८॥इत्यंधकवचःश्रुत्वास्थिरधीर्भार्गवोमुनिः ॥ किंचित्स्मितंतदाकृत्वादानवा धिपमब्रवीत् ॥ १९ ॥ दानवाधिपतेसर्वंतथ्यंयद्भाषितंत्वया ॥ विद्योपार्जनमेतद्धिदानवार्थंमयाकृतम् ॥ २० ॥ पीत्वावर्षसहस्रंवैकणधूमंसुदुः सहम् ॥ एषाप्राप्तेश्वराद्विद्याबांधवानांसुखावहा ॥ २१ ॥ एतयाविद्ययासोहंप्रमथैर्मथितान्रणे ॥ उत्थापयिष्येग्लानानिधान्यान्यंबुधरोयथा ॥२२॥ निर्व्रणान्नीरुजःस्वस्थान्सुप्त्वेवपुनरुत्थितान् ॥ अस्मिन्मुहूर्तेद्रष्टासिदानवानुत्थितान्नृप ॥ २३ ॥ इत्युक्त्वादानवपतिंविद्यामावर्तयत्कविः ॥ एकैकंदैत्यमु द्दिश्यतउत्तस्थुर्धृतायुधाः ॥ २४ ॥ वेदाइवसदभ्यस्ताःसमयेवायथांबुदाः ॥ ब्राह्मणेभ्योयथादत्ताःश्रद्धयार्थामहापदि ॥ २५ ॥ उज्जीवितांस्तुतान्दृष्ट्वातुहुं डाद्यान्महासुरान् ॥ विनेदुःपूर्वदेवास्तेजलपूर्णाइवांबुदाः ॥ २६ ॥ शुक्रेणोज्जीवितान्दृष्ट्वादानवांस्तान्गणेश्वराः ॥ विज्ञाप्यमेवदेवेशेह्येवंतेऽन्यो न्यमब्रुवन् ॥ २७ ॥ आश्चर्यरूपेप्रमथेश्वराणांतस्मिंस्तथावर्ततियुद्धयज्ञे ॥ अमर्षितोभार्गवकर्मदृष्ट्वाशिलादपुत्रोभ्यगमन्महेशम् ॥ २८ ॥

आवर्तयदितिपाठेस्पष्टएवार्थः ॥ २४ ॥ तत्रसात्त्विकतामसराजसभेदेदृष्टांतत्रयमाह ॥ वेदाइवेति ॥ यथावेदाअनभ्यस्यमानाउच्छिन्नसंप्रदायतयानष्टाःसंतःसद्भिरभ्यस्ताआवर्त्तिताअभिव्यक्ता भवंति ॥ यथामेघाःप्रावृषःपूर्वंनष्टाःसंतःप्रावृड्ऋतौपर्जन्येनानियुक्तागगनेउत्तिष्ठंति ॥ यथाब्राह्मणेभ्यःश्रद्धयादत्ताअर्थामहापदिदातॄणांफलंदानायउत्तिष्ठंति ॥ महापदिदत्ताइतिवा ॥ तद्व दित्यर्थः ॥२५॥ पूर्वदेवाअसुराः ॥२६॥ विज्ञाप्यमेवमेवंप्रकारंविज्ञापनीयम् ॥ विज्ञाप्यमेतदितिक्वचित ॥ एवमब्रुवन्नित्यन्वयभेदान्नपौनरुक्त्यम् ॥२७॥ वर्ततिवर्तमाने ॥ शिलादपुत्रोनंदी ॥२८॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

जययोर्निजयस्ययोर्निकारणम् ॥ वक्तव्यमाह ॥ गणेश्वराणामितिसार्धत्रयेण ॥ २९ ॥ सहेलंसलीलंयथास्यात् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ आनयस्वेत्यात्मनेपदमार्षम् ॥
हेस्वआत्मीयेतिवा ॥ लावकंलावमेवलावकंपक्षिविशेषम् ॥ तित्तिरिःकुक्कुभोलावइत्यमरः ॥ अण्डजातमण्डेउत्पन्नंशावकमित्यर्थः ॥ अथवालावकमित्यस्यचछेदनकर्तृव्यावृत्त्यर्थमण्ड
जातमितिविशेषणम् ॥ अण्डजमित्यर्थः ॥ ३४ ॥ वृषसिंहनादःश्रेष्ठसिंहशब्दः ॥ ३५ ॥ विक्षोभ्यविचाल्य ॥ शरभोऽष्टापदः ॥ इभंगजम् ॥ ३६ ॥ मोचयिष्यंतइव ॥ वस्तुतोमोचनंनास्त्येवे
त्यभिप्रायः ॥ अथवाविमोचयिष्यंतइवेतिलोकोक्तिः ॥ सिंहरवान्वीरगर्जितशब्दान् ॥ वीराणांगर्जितंशब्दंसिंहनादंविदुर्बुधाइतिवचनात् ॥ ३७ ॥ दंभोलीति ॥ वज्रत्रिशूलखड्गकुठाराणांतथाउद्दंडानां

जयेतिचोक्ताजययोनिमुग्रमुवाचनंदीकनकावदातम् ॥ गणेश्वराणांरणकर्मदेवदेवैश्चसेंद्रैरपिदुष्करंयत् ॥ २९ ॥ तद्भार्गवेणाद्यकृतंवृथानःसंजीव्यताना
जितान्विपक्षान् ॥ आवर्त्यविद्यांमृतजीवदात्रीमेकैकमुद्दिश्यसहेलमीश ॥ ३० ॥ तुहुंडहुंडादिकजंभजंभविपाकपाकादिमहासुरेंद्राः ॥ यमालयाद
प्यपुनर्निवृत्ताविद्रावयंतःप्रमथांश्चरंति ॥ ३१ ॥ यदिह्यसौदैत्यवरान्निरस्तान्संजीवयेदत्रपुनःपुनस्तान् ॥ जयःकुतोनोभवितामहेशगणेश्वराणांकुतएवशां
तिः ॥ ३२ ॥ इत्येवमुक्तःप्रमथेश्वरेणसनंदिनावैप्रमथेश्वरेशः ॥ उवाचदेवःप्रहसंस्तदानींतंनंदिनंसर्वगणेशराजम् ॥ ३३ ॥ नंदिन्प्रयाहित्वरितोतिमात्रं
द्विजेंद्रवर्यंदितिनंदनानाम् ॥ मध्यात्समुद्धृत्यतथानयाशुश्येनोयथालावकमंडजातम् ॥ ३४ ॥ सएवमुक्तोवृषभध्वजेननननादनंदीवृषसिंहनादः ॥
जगामतूर्णंचविगाह्यसेनांयत्राभवद्भार्गववंशदीपः ॥ ३५ ॥ तंरक्ष्यमाणंदितिजैःसमस्तैःपाशासिवृक्षोपलशैलहस्तैः ॥ विक्षोभ्यदैत्यान्बलवाञ्जहारकाव्यं
सनंदीशरभोयथेभम् ॥ ३६ ॥ स्रस्तांबरंविच्युतभूषणंचाविमुक्तकेशंबलिनागृहीतम् ॥ विमोचयिष्यंतइवानुजग्मुःसुरारयःसिंहरवान्सृजंतः ॥ ३७ ॥
दंभोलिशूलासिपरश्वधानामुद्दंडचक्रोपलकंपनानाम् ॥ नंदीश्वरस्योपरिदानवेंद्रावर्षंववर्षुर्जलदाइवोग्रम् ॥ ३८ ॥ तंभार्गवंप्राप्यगणाधिराजोमुखा
ग्निनाशस्त्रशतानिदग्ध्वा ॥ आयात्प्रवृद्धेऽसुरदेवयुद्धेभवस्यपार्श्वेव्यथितारिसैन्यः ॥ ३९ ॥ अयंसशुक्रोभगवन्निनीतीदंनिवेदयामासभवायशीघ्रम् ॥
जग्राहशुक्रंसचदेवदेवोयथोपहारंशुचिनाप्रदत्तम् ॥ ४० ॥ नकिंचिदुक्त्वासहिभूतगोप्ताचिक्षेपवक्त्रेफलवत्कवींद्रम् ॥ हाहारवस्तैरसुरैःसमस्तैरुच्चै
र्विमुक्तोहहहेतिभूरि ॥ ४१ ॥

चक्रहूनांचक्रपाषाणकंपनाख्यास्त्रविशेषाणांवायव्यास्त्राणांवावर्षंदानवेंद्रानंदिकेश्वरस्योपरिउग्रंयथास्यादुग्रंवर्षमितिवाअंबुदाइववव्रृषुरित्यर्थः ॥ इवागमितिपाठेअंबुदायथापर्वतंववृषुस्तथेत्यर्थः ॥ ३८ ॥
प्रवृद्धेअतिशयिते ॥ प्रवृत्तइतिक्वचित् ॥ व्यथितानिअरिसैन्यानियेनयस्मादितिवासः ॥ ३९ ॥ उपहारंबलिम् ॥ बलिःपूजोपहारेस्यादित्यमरः ॥ ४० ॥ फलवदामलकादिफलवत् ॥ हाहारवइति ॥
हहहेतिहकारत्रयंखेदे ॥ भूरिअतिशयेनखेदोयथाभवतीतितथाहाहारवोहाहाशब्दस्तैःसमस्तैरसुरैर्विमुक्तोविशेषणत्रयक्तइत्यर्थः ॥ हाहारवैरितिपाठेहाहाइतिरवोयेषांतैरसुरैः ॥ हहहेतिखेदातिशयप्र



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तिपादकःशब्दः ॥ भूरियथास्यात्तथाविमुक्तोहाहाहहहे त्येवंरूपःशब्दोबहुविधःकृतइत्यर्थः ॥ ४१ ॥ हस्तैःशुंडादंडैः ॥ ४२ ॥ ४३ ॥ योषाःस्त्रियः ॥ मार्गणौघाबाणसमूहाः ॥ श्रुतान्यध्ययनानि ॥ ४४ ॥ विनेति ॥ विभोर्विश्वेश्वरस्येयंवैभवी वैभवीचासौशक्तिश्चेतिवैभवशक्तिस्ताम् ॥ वैभ्रसिद्धांभवशक्तिमितिवा ॥ भवभक्तिमितिक्वचित् ॥ एकांमुख्याम् ॥ ४५ ॥ विषादिनारुद्रेण ॥ ४६ ॥४७॥ अद्यतेननंदिनासर्वेषांनोऽस्माकंतनूःशरीराणिविनाविहायप्राणाहतानाशिताः ॥ प्राणैर्हीनदेहाः संपादिताइत्यर्थः ॥ कृताइतिपाठेपिसएवार्थः ॥ धैर्यंपांडित्यम्आपद्यपिमनःस्वास्थ्यंमित्यर्थः ॥ वीर्यंशूरत्वम् ॥ गतिर्ज्ञानम् ॥ कीर्तिर्यशः ॥ सत्त्वमुत्साहः ॥ तेजःप्रागल्भ्यम् ॥ पराक्रमउद्योगः ॥ ४८ ॥ धिगिति ॥ यैरस्माभिर्गुरुर्नत्रातस्तानस्मान्प्रतिधिगित्यर्थः॥ कुलसत्तमोविप्र

काव्येनिगीर्णेगिरिजेश्वरेणदैत्याजयाशारहिताबभूवुः ॥ हस्तैर्विमुक्ताइववारणेंद्राःशृंगैर्विहीनाइवगोवृषाश्च ॥ ४२ ॥ शरीरहीनाइवजीवसंघाद्विजायथाचाध्ययनेनहीनाः ॥ निरुद्यमाःसत्त्वगुणायथावैयथोद्यमाभाग्यविवर्जिताश्च ॥ ४३ ॥ पत्याविहीनाश्चयथैवयोषायथाविपक्षाइवमार्गणौघाः ॥ आयूंषिहीनानियथैवपुण्यैर्वृत्तेनहीनानियथाश्रुतानि ॥ ४४ ॥ विनायथावैभवशक्तिमेकांभवंतिहीनाःस्वफलैःक्रियौघाः ॥ तथाविनातंद्विजवर्यमेकंदैत्याजयाशाविमुखाबभूवुः ॥ ४५ ॥ नंदिनापहृतेशुक्रेगिलितेचविषादिना ॥ विषादमगमन्दैत्याहीयमानरणोत्सवाः ॥ ४६ ॥ तान्वीक्ष्यविगतोत्साहानंधकःप्रत्यभाषत ॥ कविंविक्रम्यनयतानंदिनावंचितावयम् ॥ ४७ ॥ तनूर्विनाहृताःप्राणाःसर्वेषामद्यतेननः ॥ धैर्यंवीर्यंगतिःकीर्तिःसत्त्वंतेजःपराक्रमः ॥४८॥ युगपन्नोहृतंसर्वमेकस्मिन्भार्गवेहृते ॥ धिगस्मान्कुलपूज्योयैरेकोपिकुलसत्तमः ॥ गुरुःसर्वसमर्थश्चत्रातात्रातोनचापदि ॥ ४९ ॥ तद्धैर्यमवलंब्येहयुध्यध्वमारीभिःसह ॥ सूदयिष्याम्यहंसर्वान्प्रमथान्सहनंदिना ॥ ५० ॥ अथैतान्विवशान्हत्वासहदेवैःसवासवैः ॥ भार्गवंमोचयिष्यामिजीवंयोगीवकर्मतः ॥ ५१ ॥ सचापियोगीयोगेनयदिनामस्वयंप्रभुः ॥ शरीरात्तस्यनिर्गच्छेदस्माकंशेषपालिता ॥ ५२ ॥ इत्यंधकवचःश्रुत्वादानवामेघनिःस्वनाः ॥ प्रमथानर्दयामासुर्मर्तव्येकृतनिश्चयाः ॥ ५३ ॥ सत्यायुषिननोजातुशक्ताःस्युःप्रमथाबलात् ॥ असत्यायुषिकिंगत्वात्यक्तास्वामिनमाहवे ॥ ॥ ५४ ॥ येस्वामिनंविहायाजौबहुमानधनाजनाः ॥ यांतितेयांतिनियतमंधतामिस्रमालयम् ॥ ५५ ॥ अयशस्तमसाख्यातिंमलिनीकृत्यभूरिशः ॥ इहामुत्रापिसुखिनोनस्युर्भग्नारणाजिरात् ॥ ५६ ॥ किंदानैःकिंतपोभिश्चाकिंतीर्थपरिमज्जनैः ॥ धरातीर्थेयदिस्नातंपुनर्भवमलापहे ॥ ५७ ॥

कुलेषुश्रेष्ठः ॥ द्विजसत्तमइतिक्वचित् ॥ ४९ ॥ तत्तस्मात्सूदयिष्यामिनाशयिष्यामि ॥ ५० ॥ विवशानस्वतंत्रान् ॥ इवयथाकश्चिद्योगीजीवंस्वात्मानंकर्मतःकर्मभ्योधर्माधर्मलक्षणेभ्योमोचयतितद्वदित्यर्थः ॥५१॥ सचेति ॥ सचापिसोपिचयोगीभार्गवोयदिकथंचिद्योगेनतस्यविश्वेश्वरस्यशरीरान्निर्गच्छेन्निर्गमिष्यतितदाशेषपालिताशेषाणामवशिष्टानामस्माकंपालितापालयितापालयिष्यतीत्यर्थः॥ अस्माकंसेव्यतात्रकेतिक्वचित् ॥ शेषशालितेतिचशेषशालिनामितिचान्यत्र ॥ पाठद्वयेक्रमेणावशेषवत्त्वंतदाभद्रंस्यादित्यर्थः ॥ ५२ ॥ ५३ ॥ ५४ ॥ बहुमानएवधनंयेषांतेबहुमानधनाः ॥ ५५ ॥ अयशएवतमोंधकारस्तेनअयशस्तमसा ॥ ख्यातिंकीर्तिम् ॥ भग्नास्त्यक्तरणाः ॥ भंगादितिपाठेपलायनादित्यर्थः ॥ ५६ ॥ धरातीर्थेयुद्धभूमिरूपेतीर्थे ॥ धारातीर्थइतिपाठेशस्त्रधारापातरूपेतीर्थ



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इत्यर्थः ॥ ५७ ॥ ५८ ॥ कटंकटशिलामयैः कटंकटशब्दयुक्तयंत्रपाषाणैः ॥ भुशुंडीति ॥ भुशुंडयश्च भिंदिपालाश्च भुशुंडीभिंदिपालास्तैः ॥ तत्र भुशुंडयः सर्वत्र लोहकंटकव्याप्ता अवःक्रमोत्सेधाः ॥ तदुक्तम् ॥ भुशुंडी सर्वतो लोहकंटकावृक्रमोन्नतेति ॥ अयोगोलकयष्टय इति केचित् ॥ भिंदिपालैः सुगैर्लोहबद्धदंडैरितियावत् ॥ यदाहामरः ॥ भिंदिपालः सृगस्तुल्याविति ॥ परश्वधैः कुठारैः ॥ यदाहामरः ॥ द्वयोः कुठारः स्वधितिः परशुश्च परश्वध इति ॥ ५९ ॥ खट्वांगं खट्वायाः खुराकारोऽस्त्रविशेषः ॥ पट्टिशादयोऽस्त्रविशेषाः ॥ एतैश्चालमत्यर्थं कदनं दुःखम् ॥ ६० ॥ विकृष्टानां टंकारितानाम् ॥ क्ष्वेडितानां क्ष्वेडं विषं तद्विद्यते यासां ताः क्ष्वेडिताः ॥ तारकादित्वादस्त्यर्थे इतच् ॥ तासाम् ॥ ६१ ॥ ६२ ॥ ६३ ॥ गजानां वाजिनां च महारावैः स्फुटंतः स्फुटमानाः शब्दग्रहाः

संप्रधार्येति तेऽन्योन्यं दैत्यास्ते दनुजास्तथा ॥ ममंथुः प्रमथानाजौ रणभेरीनिनादच ॥ ५८ ॥ तत्र बाणासिवज्रौघैः कटंकटशिलामयैः ॥ भुशुंडीभिंदिपालैश्च शक्तिभल्लपरश्वधैः ॥ ५९ ॥ खट्वांगैः पट्टिशैः शूलैर्लकुटैर्मुसलैरलम् ॥ परस्परमभिघ्नंतः प्रचक्रुः कदनं महत् ॥ ६० ॥ कार्मुकाणां विकृष्टानां पततां च पतत्रिणाम् ॥ भिंदिपालभुशुंडीनां क्ष्वेडितानां रवोऽभवत् ॥ ६१ ॥ रणतूर्यनिनादैश्च गजानां बहुबृंहितैः ॥ हेषारवैर्हयानां च महान्कोलाहलोऽभवत् ॥६२॥ प्रतिस्वनैरवापूरि द्यावाभूम्योर्यदंतरम् ॥ अभीरूणां च भीरूणां महारोमोद्गमोऽभवत् ॥ ६३ ॥ गजवाजिमहारावस्फुटच्छब्दग्रहाणि च ॥ भग्नध्वजपताकानि क्षीणप्रहरणानि च ॥ ६४ ॥ रुधिरोद्गारचित्राणि व्यश्वहस्तिरथानि च ॥ पिपासितानि सैन्यानि सुमूर्छुरुभयत्र वै ॥ ६५ ॥ दृष्ट्वा सैन्यं च प्रमथैर्भज्यमानमितस्ततः ॥ दुद्राव रथमास्थाय स्वयमेवांधको गणान् ॥ ६६ ॥ शरवज्रप्रहारैस्तैर्वज्राघातैर्नगा इव ॥ प्रमथानेशिरे वातैर्निस्तोया इव तोयदाः ॥ ६७ ॥ यां तमायांतमालोक्य दूरस्थं निकटस्थितम् ॥ प्रत्येकं रोमसंख्याभिर्व्यधाद्बाणैस्तदांधकः ॥ ६८ ॥ विनायकेन स्कंदेन नंदिना सोमनंदिना ॥ नैगमेयेन शाखेन विशाखेन बलीयसा ॥ ६९ ॥ इत्याद्यैस्तु गणैरुग्रैरंधकोप्यंधकीकृतः ॥ त्रिशूलशक्तिबाणौघधारासंपातपातिभिः ॥ ७० ॥ ततः कोलाहलो जातः प्रमथासुरसैन्ययोः ॥ तेन शब्देन महता शुक्रः शंभूदरे स्थितः ॥ ७१ ॥ छिद्रान्वेषी भ्रमन्सोथ विनिःकेतो यथानिलः ॥ सप्तलोकान् सपालान्स रुद्रदेहे व्यलोकयत् ॥७२॥ ब्रह्मनारायणेंद्राणामादित्याप्सरसां तथा ॥ भुवनानि विचित्राणि युद्धं च प्रमथासुरम् ॥ ७३ ॥ स वर्षाणां शतं कुक्षौ भवस्य परितो भ्रमन् ॥ न तस्य ददृशे रंध्रं शुचे रंध्रं खलो यथा ॥ ७४ ॥

कर्णायेषां तानि तथा ॥ ६४ ॥ सुमूर्छुर्मूर्छां प्रापुः ॥ ६५ ॥ ६६ ॥ शरा एव वज्रास्तेषां प्रहारैः ॥ प्रमथानेशिरे अदर्शनं लेभिरे ॥ ६७ ॥ व्यधादताडयत् ॥ ६८ ॥ विनायकेनेति ॥ इत्याद्यैर्गणैरंधकोप्यंधकीकृत इत्यन्वयः ॥ केत इत्याकांक्षायामाह ॥ विनायकेनेत्यादि ॥ ६९ ॥ कैरित्याकांक्षायामाह ॥ त्रिशूलेति ॥ त्रिशूलादयश्च धारापातेन पातो वर्तते येषां ते च तैः ॥ ७० ॥ ॥ ७१ ॥ केतः केतनं मार्ग इतियावत् ॥ विनिर्गतः केतो निर्गममार्गो यस्य सोऽनिलो यथेति ॥ ७२ ॥ प्रमथानामसुराणां च वृत्तं युद्धं प्रमथासुरम् ॥ ७३ ॥ रंध्रं छिद्रम् ॥ ७४ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शांभवेनशंभुप्रसादलब्धेनयोगेनोपायेन ॥ शुक्ररूपेणवीर्यरूपेण शुक्रंयथोपस्थच्छिद्रेणबहिर्निःसरतितेनप्रकारेणेत्यर्थः ॥ चस्कंदजगामबहिर्निर्गतइत्यर्थः ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ कोसौशुक्रइतिप्रश्नोत्तरमुपसंहरति ॥ इत्थंनाम्नाऽभवच्छुक्रइति ॥ ८० ॥ कथंतेनचविद्याप्राप्तेतिप्रश्नस्यानुवादपूर्वकंप्रत्युत्तरमनुजानाति ॥ यथाचविद्यामिति ॥ ८१ ॥ पुरेति ॥ असौशुक्रोबहुकालं तपस्तेपेनिराहारःस्थितवानितिद्वितीयेनान्वयः ॥ ८२ ॥ ८३ ॥ नकेवलंतपस्तेपेकिंतुसभार्गवःप्रत्येकंराजचंपकाद्यैःपुष्पैःकिसलयैरपिलक्षपरिमितैःपत्रैश्चशंकरंसमानर्चपूजयामासेतिसप्तमेनान्वयः ॥ यद्वा तपस्तेपेनियमंगृहीतवानित्यस्यैवार्थमाह ॥ राजचंपकेति ॥ तत्रराजचंपकश्चंपकावांतरजातिविशेषः ॥ धत्तूरउन्मत्तः ॥ करवीरःप्रतीहासः ॥ कुशेशयंपद्मम् ॥ वापुंसिपद्मंनलिनमर विंदंमहोत्पलम्॥सहस्रपत्रंकमलंशतपत्रंकुशेशयमित्यमरः ॥ मालतीजातिः ॥ कर्णिकारोद्रुमोत्पलः ॥ कदंबोहलिप्रियः ॥ बकुलःकेसरः ॥ उत्पलंकुवलयम् ॥ स्यादुत्पलंकुवलयमित्यमरः ॥

शांभवेनाथयोगेनशुक्ररूपेणभार्गवः ॥ चस्कंदाथननामापिततोदेवेनभाषितः ॥ ७५ ॥ शुक्रवन्निःसृतोयस्मात्तस्मात्त्वंभृगुनंदन ॥ कर्मणानेनशुक्रस्त्वं ममपुत्रोसिगम्यताम् ॥ ७६ ॥ जठरान्निर्गतेशुक्रेदेवोपिसुमुदेतराम् ॥ श्रमघ्नेयोभवद्यन्मेनभृतोजठरेद्विजः ॥ ७७ ॥ इत्येवमुक्तोदेवेनशुक्रोर्कसदृशद्यु तिः ॥ विवेशदानवानीकंमेघमालांयथाशशी ॥ ७८ ॥ शुक्रोदयान्मुदंलेभेसदानवमहार्णवः ॥ यथाचंद्रोदयेहर्षमूर्मिमालीमहोदधिः ॥ ७९ ॥ अंधकां धकहंत्रोर्वैवर्तमानेमहाहवे ॥ इत्थंनाम्नाभवच्छुक्रःसवैभार्गवनंदनः ॥ ८० ॥ यथाचविद्यांतांप्रापमृतसंजीवनींपराम् ॥ शंभोरनुग्रहात्काव्यस्तन्निशामय सुव्रत ॥ ८१ ॥ ॥ गणावूचतुः ॥ ॥ पुराऽसौभृगुदायादोगत्वावाराणसींपुरीम् ॥ अंडजस्वेदजोद्भिज्जजरायुजगतिप्रदाम् ॥ ८२ ॥ संस्थाप्यलिंगं श्रीशंभोःकूपंकृत्वातदग्रतः ॥ बहुकालंतपस्तेपेध्यायन्विश्वेश्वरंप्रभुम् ॥ ८३ ॥ राजचंपकधत्तूरकरवीरकुशेशयैः ॥ मालतीकर्णिकारैश्चकदंबैर्बकुलो त्पलैः ॥ ८४ ॥ मल्लिकाशतपत्रीभिःसिंदुवारैःसकिंशुकैः ॥ अशोकैःकरुणैःपुष्पैःपुन्नागैर्नागकेसरैः ॥ ८५ ॥ क्षुद्राभिर्माधवीभिश्चपाटलाबिल्वचं पकैः ॥ नवमल्लीविचिकिलैःकुंदैःसमुचुकुंदकैः ॥ ८६ ॥ मंदारैर्बिल्वपत्रैश्चद्रोणैर्मरुबकैर्बकैः ॥ ग्रंथिपर्णैर्दमनकैःसुरभूचूतपल्लवैः ॥ ८७ ॥

॥ ८४ ॥ मल्लिकातृणशून्यम् ॥ शतपत्रीपुष्पविशेषः ॥ कुंकुमारुणवर्णाभांगंधाढ्यांशतपत्रिकाम् ॥ योददातिजगन्नाथेश्वेतद्वीपेवसेत्सदेत्युक्तेः ॥ सिंदुवारःपुष्पविशेषः॥किंशुकःपलाशः ॥ अशोको वंजुलः ॥ करुणोवृक्षभेदः ॥ पुष्पैःपुष्पलताभिः ॥ पुन्नागोदेववल्लभः ॥ नागकेसरोहेमपुष्पः ॥ ८५ ॥ क्षुद्राभिरितिमाधवीविशेषणम् ॥ माधवीवासंतीलता ॥ पाटलापाटलिः ॥ बिल्वःश्रीफलः ॥ चंपकोहेमपुष्पकः ॥ नवमल्लीपुष्पविशेषः ॥ विचिकिलश्चारुपुटः ॥ कुंदंमाध्यम् ॥ मुचकुंदोमुकुंदःपालंक्येत्यर्थः ॥ अथपालंक्यांमुकुंदःकुंदकुंदुरुइत्यमरः ॥ ८६ ॥ मंदारःपारिभद्रकः ॥ द्रोणः पुष्पविशेषः॥द्रोणपुष्पसहस्रेभ्यःखादिरंवैविशिष्यतइत्युक्तेः ॥ मरुबकःप्रस्थपुष्पः ॥समीरणोमरुबकःप्रस्थपुष्पःफणिज्जकइत्यमरः॥ बकःपुष्पविशेषः॥बकपुष्पसहस्राद्धिनंद्यावर्तविशिष्यतइत्युक्तेः ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ग्रंथिपर्णः पुष्पविशेषः ॥ दमनकः प्रसिद्धः ॥ सुरभूः पुष्पविशेषः ॥ चूतआम्रः ॥८७॥ तुलसीसुरसा ॥ देवगंधारीपुष्पविशेषः ॥ बृहत्पत्रीपुष्पविशेषः ॥ कुशांकुरैः कुशपुष्पैः ॥ पालाशपुष्पसहस्रात्तु कुशपुष्पंविशिष्यतइत्युक्तेः ॥ नंद्यावर्तस्तगरः ॥ अगस्त्यःप्रसिद्धः ॥ सालःसर्जः ॥ देवदारुःशक्रपादपः ॥८८॥ कुरबकःपुष्पविशेषः ॥ कुरंटकःपुष्पविशेषः ॥ अपरैरितिकुसुमपल्लवपत्राणांविशेषणम् ॥ प्रत्यकमेभिःपूर्वोक्तैःकुसुमपल्लवपत्रैरपरैरपीत्यर्थः ॥ ८९ ॥ ९० ॥ यक्षकर्दमैःकर्पूरादीनांचतुर्णांमिश्रीभावैः ॥ ९१ ॥ सुगंधोद्वर्तनान्यनुसुगंधैर्द्रव्यैरभ्यंगानिविधायानुपश्चाच्चंदनैर्यक्षकर्दमैश्चसम्यगालिलिंपेत्यर्थः ॥ ९२ ॥ सहस्रमिति ॥ सहस्रंपंचशरदांवर्षाणांपंचसहस्रमित्यर्थः ॥ इत्थंसमर्चयन्यदावरदानायोन्मुखंमनागपिईषदपिनाललोकेनापश्यत्तदाऽन्यमतीवदुःसहंघोरंनियमंजग्राहेतिसार्धेनान्वयः ॥ ९३ ॥ ९४ ॥ तमेवघोरंनियमंदर्शयति ॥ प्रक्षाल्येति ॥ चेतसोंऽतःकरणस्यचांचल्याख्यंमहामलंप्रक्षाल्यदूरीकृत्यकविःशुक्रःशरदांसहस्रंव्याप्यकणधूमौघं

तुलसीदेवगंधारीबृहत्पत्रीकुशांकुरैः ॥ नंद्यावर्तैरगस्त्यैश्चसशालैर्देवदारुभिः ॥ ८८ ॥ कांचनारैःकुरबकैर्दूर्वांकरकुरंटकैः ॥ प्रत्येकमेभिःकुसुमैःपल्लवैरपरैरपि ॥८९॥ पत्रैःशतसहस्रैश्चससमानर्चशंकरम् ॥ पंचामृतैर्द्रोणमितैर्लक्षकृत्वःप्रयत्नतः ॥९०॥ स्नपयामासदेवेशंसुगंधस्नपनैर्बहु ॥ सहस्रकृत्वोदेवेशंचंदनैर्यक्षकर्दमैः ॥९१॥ समालिलिंपदेवेशंसुगंधोद्वर्तनान्यनु ॥ गीतनृत्योपहारैश्चश्रुत्युक्तस्तुतिभिर्बहु॥९२॥नाम्नांसहस्रैरन्यैश्चस्तोत्रैस्तुष्टावशंकरम् ॥ सहस्रंपंचशरदामित्थंशुक्रःसमर्चयन् ॥ ९३ ॥ यदादेवंनालुलोकेमनागपिवरोन्मुखम् ॥ तदान्यंनियमंघोरंजग्राहातीवदुःसहम् ॥ ९४ ॥ प्रक्षाल्यचेतसोत्यंतंचांचल्याख्यंमहामलम् ॥ भावनावार्भिरसकृदिंद्रियैःसहितस्यच ॥ ९५ ॥ निर्मलीकृत्यतच्चेतोरत्नंदत्त्वापिनाकिने ॥ प्रपपौकणधूमौघंसहस्रंशरदांकविः ॥९६॥ प्रससादतदादेवोभार्गवायमहात्मने ॥ तस्माल्लिंगाद्विनिर्गत्यसहस्रार्काधिकद्युतिः ॥ ९७ ॥ उवाचचविरूपाक्षःसाक्षाद्दाक्षायणीपतिः ॥ तपोनिधेप्रसन्नोस्मिवरंवरयभार्गव ॥ ९८ ॥ निशम्येतिवचःशंभोरंभोजनयनोद्विजः ॥ उद्यदानंदसंदोहरोमांचांचितविग्रहः ॥ ९९ ॥ तुष्टावाष्टतनुंतुष्टःप्रफुल्लनयनांचलः ॥ मौलावंजलिमाधायवदञ्जयजयेतिच ॥ १०० ॥ भार्गवउवाच ॥ ॥ त्वंभाभिराभिरभिभूयतमःसमस्तमस्तंनयस्यभिमतानिनिशाचराणाम् ॥ देदीप्यसेदिनमणेगगनेहितायलोकत्रयस्यजगदीश्वरतन्नमस्ते ॥ १०१ ॥

व्रीहितुषधूमसमूहंप्रपपौप्रकर्षेणपीतवानितिद्वयोरन्वयः ॥ कैः ॥ भावनाध्यानानितान्येववारिवारीणितैः ॥ सकृत्क्षालनंनिराकरोति ॥ असकृदिति ॥ नैरंतर्येणेत्यर्थः ॥ नन्विंद्रियस्यैंद्रियस्यार्थेरागद्वेषौव्यवस्थिताविितस्मृतेरिंद्रियेषुविषयोन्मुखेषुसत्सुमनःक्षालनमकिंचित्करमित्याशंक्याह ॥ इंद्रियैःसहितस्यचेति ॥ ९५ ॥ पुनःकिंकृत्वा ॥ एवमुक्तैःसाधनैस्तच्चेतोरत्नंनिर्मलीकृत्यरागद्वेषादिरहितंकृत्वेतियावत् ॥ पिनाकिनेविश्वनाथायदत्त्वातदेकनिष्ठंकृत्वेत्यर्थः ॥ ९६ ॥ ९७ ॥ ९८ ॥ अंभोजनयनःपद्मनेत्रः ॥ प्रसन्ननयनइतिक्वचित् ॥ उद्यदानंदसंदोहरोमांचांचितविग्रहः उद्गच्छत्सुखनिवहोद्धरलोमव्याप्तदेहः ॥ ९९ ॥ प्रफुल्लनयनांचलोविकसितनेत्रपक्ष्मा ॥ १०० ॥ सूर्येंदुवाय्वग्निपयोऽवकाशपृथ्व्यात्ममूर्तिंभगवन्तमीशम् ॥ क्रमेणतुष्टावभृगुप्रवीरःपद्येनतावद्विचतुष्टयेन ॥ त्वंभाभिरिति ॥ हेजगदीश्वरहेदिनमणेतत्तस्मात्तेतुभ्यंनमोऽस्तुकरोमीतिशेषः ॥ यस्मात्त्वंभाभिःप्रसिद्धाभिःसुषुम्नहरिकेशविश्वकर्मविश्वव्यचा



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

र्वावसुसंश्रवसंज्ञेः सप्तभीरश्मिभिः समस्तंतमोंऽधकारमभिभूयतिरस्कृत्यनिशाचराणांराक्षसादीनां तंत्रेणचनिशाऽविद्या यानिशासर्वभूतानामितिभगवद्वचनात् तस्यांचरंतीतिनिशाचरारागद्वेषलोभा दयस्तेषांचाभिमतानिस्वस्वकार्यकरणसामर्थ्यान्यस्तंनाशंनयसिप्रापयसि ॥ किंच ॥ लोकत्रयस्यभूर्भुवःस्वर्लोकस्य अथच लोकत्रयस्यविश्वादिनामजनत्रयस्यजीवत्रयस्येत्यर्थः ॥ हितायगगने भूताकाशेचित्ताकाशेचदेदीप्यसेऽतिशयेनराजसइत्यर्थः ॥ अयमर्थः ॥ यतस्त्वंगगनेभूताकाशेराजसेऽतोबहिस्तमोनिहत्यराक्षसादीनामभिमतानिनाशयसि ॥ पक्षांतरेच यतस्त्वंगगनेचित्ताका शेप्रमाणवृत्त्यारूढःसन्प्रकाशसेऽतोंतस्तमोनिराकृत्यनिशाचराणांकामलोभादीनामभिमतानिनाशयसीत्यर्थः ॥ १ ॥ लोकेइति ॥ हेहिमांशोशिशिरदीधिते ॥ हेपीयूषपूरपरिपूरितसुधानिवह परिपूर्ण ॥ तत्तस्मात्तेतुभ्यंनमइतिपूर्ववत् ॥ यस्माल्लोकेऽतिवेलंप्रतिक्षणम् ॥ आतिक्रांतावेलातीरंसीमायैस्तान्यतिवेलानितानिचतानिमहामहांसिचतैः कौमुदमुदं कुमुदानामियंकौमुदी ॥ कुमुदशब्दोऽत्ररात्रिविकसितानामुपलक्षणम् ॥ साचमुद्धर्षश्चकौमुदमुत्॥तांकौमुदमदम् ॥ चकारोभिन्नक्रमे ॥ सप्रसिद्धश्चंद्रस्त्वंमुत्समुद्रंप्रीत्यर्णवंचानिर्मासि॥ अयमर्थः॥ अपरिमितैःस्वीयैःशीतकिरणै रात्रिविकसितानामुल्लासंप्राणिमात्राणामपरिमितप्रमोदंचददासीति ॥ मुदासहवर्तमानंसमुद्रंसमुत्समुद्रमिति ॥ लोकेहिचन्द्रोदयेऽतिविततकिरणैःप्राणिमात्राणांसमुद्रोहर्षकरोभवतीतिसर्वेषांप्रसिद्धम् ॥ कथंभूतस्त्वम् ॥ विद्रावितावखिलतमाःविनाशिताखिलांधकारोविद्राविताखिलाऽज्ञानोवा ॥ पुनःकथंभूतः ॥ सुतमःसुष्ठुतमःशोभनतमइत्यर्थः ॥ सुतमामितिपाठेसुतमांसुष्ठुतमांशोभनतमाम् ॥

लोकेतिवेलमतिवेलमहामहोभिर्निर्मासिकौमुदमुदंचसमुत्समुद्रम् ॥ विद्राविताखिलतमाःसुतमोहिमांशोपीयूषपूरपरिपूरितितन्नमस्ते ॥ २ ॥ त्वंपावनेप थिसदागतिरस्युपास्यःकस्त्वांविनाभुवनजीवनजीवतीह ॥ स्तब्धप्रभंजनविवर्धितसर्वजंतोसंतोषिताहिकुलसर्वगतन्नमस्ते ॥ ३ ॥ विश्वैकपावकनताव कपावकैकशक्तेर्ऋतेऽमृतबतामृतादिव्यकार्यम् ॥ प्राणित्यदोजगदहोजगदंतरात्मंस्तत्पावकप्रतिपदंशमदंनमस्ते ॥ ४ ॥ पानीयरूपपरमेशजगत्पवित्र चित्रंविचित्रसुचरित्रकरोषिनूनम् ॥ विश्वंपवित्रममलंकिलविश्वनाथपानावगाहनतएतदतोनतोस्मि ॥ ५ ॥

हिमांशोइत्येकंपदम् ॥ २ ॥ त्वंपावनइति ॥ अपरिमितसूर्याधिकप्रकाशंभगवंतंदृष्ट्वोद्रिक्तभक्तेर्बहुधासंबोधनानि ॥ एवमुपर्यपि ॥ हेस्तब्धप्रभंजन स्तब्धाननम्रान्प्रभनक्तिआमर्दयतीति तथा ॥ विवर्धितसर्वजंतो विवर्धितावृद्धिंप्रापिताःसर्वेजंतवोयेनसतथा ॥ संतोषिताहिकुलसंतोषितमहीनांसर्पाणांकुलंयेनवाय्वाहारत्वात्तेषांसतथा ॥ तेषांसंबोधनानितथा ॥ तत्तस्मात्तेतुभ्यंत्वां प्रतिनमः ॥ कथंभूतम् ॥ यस्त्वम् ॥ यद्वा यस्मात्त्वंपावनेपथिवेदमार्गेउपास्यःपूज्यः ॥ वायव्यंश्वेतमालभेतेतिश्रुतेः ॥ अपिशब्दाद्व्रतादिविषयेपि ॥ अप्युदास्सइतिपाठेसदागतिरपित्वंपाव नेपथिआवहइत्यादिसप्तवायुमार्गप्रभेदेतदूर्ध्वमास्सेमूर्तिमान्भूत्वातिष्ठसीत्यर्थः ॥ नमस्कारेहेतुः॥त्वंपावनइत्यादि ॥ हेभुवनजीवनसर्वेषांप्राणरूप ॥ त्वांविनेहकोजीवतिनकोपीत्यर्थः॥ ३ ॥विश्वैकेति ॥ वतअहोहेविश्वैकपावकजगदेकपवित्र हे अमृतब्रह्मस्वरूप मरणादिषड्भावविकाररहितेतिवा हेजगदन्तरात्मन्विश्वांतर्यामिन् हेपावकहेवह्ने यस्मात्तावकपावकैकशक्तेर्ऋतेत्वत्संबंधिपवित्रमुख्यसामर्थ्यंविना ऽदोजगन्नप्राणितिप्राणव्यापारंनकरोतिनचेष्टतइत्यर्थः ॥ तावकपाचकैकशक्तेरितिपाठेपाचकशक्तित्वंजाठराग्न्युज्ज्वालनेनबोद्धव्यम्॥कथंभूतंजगत्॥:अमृतदिव्यकार्यम् अमृतादेवाश्चदिव्यानींद्रियाणि चकार्याणिभूतानिच॥एकवद्भावादमृतदिव्यकार्यमधिदैवाध्यात्माधिभूतमित्यर्थः॥हेनतावकभक्तरक्षक॥पावकाएकाशक्तिर्यस्यतस्मात्त्वदृतेइतिवा ॥ किंत्वस्मिन्पक्षेऽदोजगत्प्राणितिअपितुनप्राणितीति काकाव्याख्येयम्॥तत्तस्मात्प्रतिपदंप्रतिक्षणंशमदंशांतिदंसुखदंयथास्यात्तथातेतुभ्यंनमः ॥ प्रतिक्षणंशमदंयथास्यात्तथाजगत्प्राणितीतिवा॥ ४॥ पानीयेति ॥ हेपानीयस्वरूपहेपरमेशहेजगत्पावित्रहेविचि

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्रसुचारित्रहेविश्वनाथअतोऽस्माद्धेतोस्त्वांनतोस्मि॥ यस्मादेतद्विश्वंचित्रंविचित्रमध्यात्माधिभूताधिदैवभेदेनजरायुजांडजस्वेदजोद्भिज्जरूपेणवानूनंनिश्चितंपानावगाहनतःपवित्रमतोऽमलंबाह्यतःकरोषि॥ सबाह्याभ्यंतरंजगत्पुनासीत्यर्थः ॥ ५ ॥ आकाशेति ॥ हेआकाशरूपाव्याकृताकाशस्वरूप ॥ अव्याकृतस्वरूपमेवाह ॥ हेईश्वर हेसदय ततःकारणात्त्वामहंनतोस्मि ॥ यस्मादिहाविद्यादशायामेत द्विश्वंविकस्वरंविकसनस्वभावंदृश्यमितियावत् ॥ बहिरंतरुत उतअप्यर्थे बहिरंतरपीत्यर्थः ॥ बहिरंतउतेतिपाठेप्ययमेवार्थः ॥ अवकाशदानात्क्रियाशक्तिमत्सूत्रात्मनाप्रवर्तनात्॥ त्वत्तःसदासंश्वसितिप्रा णितिजायतइत्यर्थः ॥ सदासदयेतिवान्वयः ॥ तथाभवतःसकाशात्संकोचंनाशमेतिचगच्छतिप्राप्नोतीत्येतत् ॥ तत्रनिमित्तकारणमाह ॥ स्वभावादिति ॥ स्वस्यभावःस्वभावोऽविद्यातस्मादित्यर्थः ॥ तथाचोक्तंभगवता॥स्वभावस्तुप्रवर्ततइति॥भूताकाशपक्षेस्पष्टएवार्थः॥६॥विश्वंभरेति ॥ हेविश्वंभरात्मकहेपृथ्वीस्वरूप हेविश्वनाथ हेतमोऽरेऽज्ञानारे हेहिमजाहिभूष हिमजायाउमायाअहीनांसर्पाणांचभू षायस्मात्तत्संबोधनंतथाहेहिमजाहिभूष परपर पराणांब्रह्मादीनांपरश्रेष्ठ अत्रजगतिब्रह्मांडेएतद्विश्वंजगद्भवतःसकाशादन्यतमःकोबिभर्तिनकोपि ॥ यतएवंतत्तस्माच्छमिनांक्षमावतांसहिष्णूनामित्येतत् मध्येत्वांविनापरःस्तव्योनेत्यर्थः ॥ ततस्त्वांप्रणतोस्मीति ॥ क्षमिणामितिपाठेपंचमंगुर्वार्षम् ॥ ७ ॥ आत्मस्वरूपेति ॥ हेआत्मस्वरूपव्यापकस्वभाव ॥ यद्वा हेआदानकर्तः ॥ यद्वा हेविषयाद ॥

आकाशरूपबहिरंतरुतावकाशदानाद्विकस्वरमिहेश्वरविश्वमेतत् ॥ त्वत्तःसदासदयसंश्वसितिस्वभावात्संकोचमेतिभवतोस्मिनतस्ततस्त्वाम् ॥ ६ ॥
विश्वंभरात्मकबिभर्तिविभोऽत्रविश्वंकोविश्वनाथभवतोन्यतमस्तमोरे ॥ तत्त्वांविनानशमिनांहिमजाहिभूषस्तव्योऽपरःपरपरप्रणतस्ततस्त्वाम् ॥ ७ ॥
आत्मस्वरूपतवरूपपरंपराभिराभिस्ततंहरचराचररूपमेतत् ॥ सर्वांतरात्मनिलयप्रतिरूपरूपानित्यंनतोस्मिपरमात्मतनोऽष्टमूर्ते ॥ ८ ॥ इत्यष्टमूर्तिभि रिमाभिरुमाभिवंद्यवंद्यातिवंद्यभवविश्वजनीनमूर्ते ॥ एतत्ततंसुविततंप्रणतप्रणीतसर्वार्थसार्थपरमार्थततोनतोस्मि ॥ ९ ॥ अष्टमूर्त्यष्टकेनेष्टंपरिष्टूये तिभार्गवः ॥ भर्गभूमिमिलन्मौलिःप्रणनामपुनःपुनः ॥ ११० ॥

यद्वा हेनिरंतरसत्तावन् ॥ तथाचोक्तंमोक्षधर्मे ॥ यच्चाप्नोतियदादत्तेयच्चात्तिविषयानिह ॥ यच्चास्यसंततोभावस्तस्मादात्मेतिकथ्यतइति ॥ हेहरहेअज्ञानतत्कार्यनाशक सर्वांतरात्मनिलय सर्वेषामंत रात्मानोंऽतःकरणानिनिलयमाश्रयोयस्यतत्संबोधनंतथा ॥ हेप्रतिरूपरूप रूपंरूपंप्रतीतिप्रतिरूपंप्रत्युपाधिरूपंचिदाभासलक्षणंयस्यतत्संबोधनंतथा ॥ तथाचश्रुतिः ॥ यथाग्नेःक्षुद्राविस्फुलिंगाव्यु च्चरंत्येवमेवास्मादात्मनः ॥ रूपंरूपंप्रतिरूपोबभूव ॥ तदस्यरूपंप्रतिचक्षणायेत्यादिः ॥ हेपरमात्मतनोपरब्रह्मस्वरूप ॥ हेअष्टमूर्ते अष्टौसूर्यचंद्रवायुवह्निपानीयाकाशपृथ्व्यात्मानोमूर्तयोयस्य तत्संबोधनंतथा ॥ आभिरात्मस्वरूपाभिस्तवरूपपरंपराभिर्मूर्तिसंततिभिरेतत्परिदृश्यमानंचराचररूपंजगत्ततंव्याप्तमतोनित्यंत्वांप्रणतोस्मीति ॥ नित्यंततमितिवान्वयः ॥ ८ ॥ उपसंहरति ॥ इत्यष्टमूर्तिभिरिति ॥ हेउमाभिवंद्य हेवंद्यातिवंद्य ॥ वंद्याभिवंद्येतिक्वचित् ॥ हेभव हेविश्वजनीनमूर्तेविश्वजनैकसुखद हेप्रणतप्रणीतभक्तैकप्राप्य हेसर्वार्थपरमार्थसार्थसर्वेषामर्थसमूहानांमध्येपर मार्थस्वरूप ॥ यतइमाभिरनंतरोक्तसूर्यादिभिरष्टमूर्तिभिरेतज्जगत्ततंव्याप्तम् ॥ कथंभूतंजगत् ॥ सुविततंविस्तृतंविशालमितियावत् ॥ ततःकारणात्त्वांनतोस्मीति ॥ ९ ॥ अष्टेतिगणयोर्वाक्यम् ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भार्गवः शुक्रोभर्गंविश्वनाथंपुनःपुनःप्रणनामेत्यन्वयः ॥ कथंभूतः ॥ भूमिमिलन्मौलिर्भूमौमिलंतीपतंतीभूमिंस्पृशंतीतिवामौलिर्यस्यसतथा ॥ किंकृत्वा ॥ इतिपरिष्टूय ॥ इतिशब्दोक्तं प्रकारमाह ॥ अष्टमूर्त्यष्टकेनेति ॥ स्तोत्रेणेतिशेषः ॥ अष्टमूर्तिप्रतिपादकान्यष्टौपद्यानियत्रतत्तथातेनस्तोत्रेणेत्यर्थः ॥ नन्वन्यान्देवान्विहायकिमितिविश्वेश्वरमेवास्तौषीत्तत्राह ॥ इष्टमिति ॥ परमप्रेमास्पदत्वेननिरुपाधिसुखरूपमित्यर्थः॥१०॥११॥१२॥१३॥ सुताभ्यांगणेशकार्तिकेयाभ्यांतुल्यमितिशेषः ॥१४॥ वरेंद्रियमुपस्थः॥ मेहनेंद्रियमार्गेणेतिवापाठः॥ममइंद्रियेतिक्वचित्॥तन्मार्गे

इतिस्तुतोमहादेवोभार्गवेणातितेजसा ॥ उत्थाप्यभूमेर्बाहुभ्यांधृत्वातंप्रणतंद्विजम् ॥ ११ ॥ उवाचदशनज्योत्स्नाप्रद्योतितदिगंतरः ॥ अनेनात्युग्रतपसाह्यनन्याचरितेनच ॥ १२ ॥ लिंगस्थापनपुण्येनलिंगस्याराधनेनच ॥ चित्तरत्नोपहारेणशुचिनानिश्चलेनच ॥१३॥ अविमुक्तमहाक्षेत्रेपवित्राचरणेनच ॥ त्वांसुताभ्यांप्रपश्यामितवादेयंनकिंचन ॥ १४ ॥ अनेनैवशरीरेणममोदरदरींगतः ॥ मद्वरेंद्रियमार्गेणपुत्रजन्मत्वमेष्यसि ॥ १५ ॥ अन्यंवरंप्रयच्छामिदुष्प्रापंपार्षदैरपि ॥ हरौहिरण्यगर्भेपिप्रायशोऽहंजुगोपयाम् ॥ १६ ॥ मृतसंजीवनीनामविद्यायाममनिर्मला ॥ तपोबलेनमहतामयैवपरिनिर्मिता ॥ १७ ॥ त्वांतांतुप्रापयाम्यद्यमंत्ररूपांमहाशुचे ॥ योग्यतातेऽस्तिविद्यायास्तस्याःशुचितपोनिधे ॥ १८ ॥ यंयमुद्दिश्यनियतमेतामावर्तयिष्यसि ॥ विद्यांविद्येश्वरश्रेष्ठससप्राणिष्यतिध्रुवम् ॥१९॥ अत्यर्कमत्यग्निचतेतेजोव्योम्न्यतितारकम् ॥ देदीप्यमानंभविताग्रहाणांप्रवरोभव ॥२०॥ अभित्वांयेकरिष्यंतियात्रांनार्योनरोपिवा ॥ तेषांत्वद्दृष्टिपातेनसर्वंकार्यंप्रणंक्ष्यति ॥ २१ ॥ तवोदयेभविष्यंतिविवाहादीनिसुव्रत ॥ सर्वाणिधर्मकार्याणिफलवंतिनृणामिह ॥ २२ ॥ सर्वाश्चतिथयोमंदास्तवसंयोगतःशुभाः ॥ तवभक्ताभविष्यंतिबहुशुक्राबहुप्रजाः ॥ २३ ॥

णच्छिद्रेण ॥ अंतिमपाठेसंधिर्नविवक्षितः॥ पुत्रजन्मत्वमेष्यसिप्राप्स्यसीति॥अतएवपूर्वोक्तमुदरप्रवेशादिकमेतदनंतरमितिज्ञातव्यम्॥१५॥जुगोपगुप्तवान् ॥१६॥१७॥१८॥ आवर्तयिष्यसिजपिष्यसि एतांविद्यामित्यन्वयः ॥ प्राणिष्यतिजीविष्यति ॥ १९ ॥ अत्यर्केति ॥ अर्कादीनतिक्रम्यवर्तमानंतेतेजोभविष्यत्यतोग्रहाणांत्वंश्रेष्ठोभवेत्यर्थः ॥ २० ॥ अभित्वामिति ॥ त्वामभिलक्षीकृत्यसंमुखीकृत्येतियावत् ॥ नरोनराः ॥ नृशब्दस्यबहुवचनेरूपम् ॥ २१ ॥ २२ ॥ मन्दाअमंगलाः ॥ नन्दाइतिपाठेप्रतिपत्षष्ठ्येकादश्योनन्दाः ॥ तथाचाहुर्ज्योतिर्विदः ॥ भृगुनंदासिद्धियोग

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इति ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ पुंस्त्वंपुंभावःपौरुषंसामर्थ्यमितियावत् ॥ २७ ॥ २८ ॥ २९ ॥ अंगारोमंगलस्तदीयंलोकमांगारकम् ॥ आलुलोकेऽपश्यत् ॥ ३० ॥ इतिश्रीरामानंदकृतायांकाशीखण्डटीकायांषोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ माहेयगुरुसावर्णिलोकाअत्यंतदुर्लभाः ॥ सप्ताधिकदशेध्यायेवर्ण्यंतेऽत्रयथाक्रमम् ॥१॥ आंगारकंलोकमित्युक्तंतत्रोक्तानुवादेनात्मनःश्रोत्रयोःप्रीतिमाविष्कुर्वंस्तमेवपृच्छति ॥ शुक्रेति ॥ हेदेवौ ॥ अश्रावि श्रुता ॥ प्रीणितेतर्पिते ॥ १ ॥ एषः तुपुनः ॥ भवतांस्ताम् ॥ २ ॥ ननुउक्तयैवकथयाऽलंमन्यस्वेतिचेत्त

त्वयेदंस्थापितंलिंगंशुक्रेशमितिसंज्ञितम् ॥ येऽर्चयिष्यंतिमनुजास्तेषांसिद्धिर्भविष्यति ॥ २४ ॥ आवर्षंप्रतिशुक्रंयेनक्तव्रतपरानराः ॥ त्वद्दिनेशुक्रकूपेयेकृतसर्वोदकक्रियाः ॥ २५ ॥ शुक्रेशमर्चयिष्यंतिशृणुतेषांतुयत्फलम् ॥ अवंध्यशुक्रास्तेमर्त्याःपुत्रवंतोऽतिरेतसः ॥ २६ ॥ पुंस्त्वसौभाग्यसंपन्नाभविष्यंतिनसंशयः ॥ व्यपेतविघ्नास्तेसर्वेजनाःस्युःसुखवासिनः ॥ इतिदत्त्वावरान्देवस्तत्रलिंगेलयंययौ ॥२७॥ गणावूचतुः ॥ ॥ शुक्रेश्वरस्ययेभक्ताःशुक्रलोकेवसंतिते ॥ विश्वेश्वराद्दक्षिणतःशुक्रेशोस्तिपरंतप ॥ २८ ॥ तस्यदर्शनमात्रेणशुक्रलोकेमहीयते ॥ इत्येषाशुक्रलोकस्यस्थितिरुक्तामहामते ॥२९॥ अगस्त्यउवाच ॥ ॥ इत्थंसधर्मिणिकथांशुक्रलोकस्यसुव्रते ॥ शृण्वन्नांगारकंलोकमालुलोकेऽथसद्द्विजः ॥ ३० ॥ इति श्रीस्कांदे महापुराणे चतुर्थे काशीखंडेपूर्वार्धे शुक्रलोकवर्णनंनामषोडशोऽध्यायः ॥१६॥ ॥ शिवशर्मोवाच ॥ ॥ शुक्रसंबंधिनीदेवौकथाश्राविमयाशुभा ॥ यस्याःश्रवणमात्रेणप्रीणितेश्रवणेमम ॥ १ ॥ कस्यपुण्यनिधेर्लोकःशोकहृत्त्वेषनिर्मलः ॥ एतदाख्यातुमुद्युक्तौभवंतौभवतांमम ॥ २ ॥ धयित्वाश्रोत्रपात्राभ्यांवाणीममृतरूपिणीम् ॥ नतृप्तिमधिगच्छामिभवन्मुखसुखोद्गताम् ॥३॥ ॥ गणावूचतुः ॥ ॥ लोहितांगस्यलोकोयंशिवशर्मन्निबोधह ॥ उत्पत्तिंचास्यवक्ष्यावोभूसुतोयंयथाभवत् ॥ ४ ॥ पुरातपस्यतःशंभोर्दाक्षायण्यावियोगतः ॥ भालस्थलात्पपातैकःस्वेदबिंदुर्महीतले ॥ ५ ॥ ततःकुमारःसंजज्ञेलोहितांगोमहीतलात् ॥ स्नेहसंवर्धितःसोथधात्र्याधात्रीस्वरूपया ॥ ६ ॥ माहेयइत्यतःख्यातिंपरामेषगतःसदा ॥ ततस्तेपेतपोत्युग्रमुग्रपुर्यांपुरानघ ॥ ७ ॥ असिश्ववरणाचापिसरितौयत्रशोभने ॥ द्युनद्योत्तरवाहिन्यामिलितेऽत्रजगद्धिते ॥ ८ ॥

त्राह ॥ धयित्वेति ॥ धयित्वापीत्वा ॥ श्रोत्रेश्रवणेंद्रियेएवपात्रेताभ्यांतृप्तिमलंप्रत्ययम् ॥ भवदिति ॥ भवतोर्मुखात्सुखेननिःसृताम् ॥ ३ ॥ लोहितांगस्यांगारकस्यमंगलस्येतियावत् ॥ अंगारकःकुजोभौमोलोहितांगोमहीसुतइत्यमरः ॥ ४ ॥ दाक्षायण्यादक्षसुतायाःसत्याइत्यर्थः ॥ भालस्थलाल्ललाटात् ॥ ५ ॥ लोहितांगः लोहितान्यंगानियस्यसः ॥ धात्र्यापृथिव्या ॥ कथंभूतया ॥ धात्रीस्वरूपयाउपमातृस्वरूपयेत्यर्थः ॥ धात्रीस्यादुपमातापीत्यमरः ॥ ६ ॥ माहेयोमह्याःपुत्रः ॥ उग्रपुर्यांत्रिपुरारेराजधान्याम् ॥ ७ ॥ उग्रपुरींविशिनष्टि ॥ असिश्चेतिचतुर्भिः॥ सरितौनद्यौ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चनीयमतिमहत्तरमितियावत् ॥ तदलमतिशयितंतेजः ॥ :तत्तेजोऽलंसहिष्येइतिवा ॥ ९४ ॥ ९५ ॥ भद्रामितितपत्यानामांतरम् ॥ यद्वा भद्रांसद्वृत्तांनाम्नातपतीमितिपुराणांतरादवगं तव्यम् ॥ ९६ ॥ ९७ ॥ गौरवाद्गुरुत्वात् ॥ ९८ ॥ पदापादेन ॥ संज्ञायाःसमानंरूपंवर्ततेयस्याःसासंज्ञासरूपिणीताम् ॥ ९९ ॥ यद्यस्मात्समुद्यतउत्थापितः ॥ तत्तस्मात् ॥ एषपादः ॥ १०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ अस्मात्पदात् ॥ ६ ॥ ७ ॥ अयीतिसंबोधने ॥ भामिनिकोपने ॥ भाविनीतिक्वचित् ॥ अनादिषुकनिष्ठेषु ॥ नादिष्वितिपाठेआदि

मन्यमानोथतांसंज्ञांसवर्णायांतदारविः ॥ सावर्णिंजनयामासमनुमष्टममुत्तमम् ॥ ९५ ॥ शनैश्चरंद्वितीयंचसुतांभद्रांतृतीयिकाम् ॥ सवर्णास्वेष्वपत्ये षुसापत्न्यात्स्त्रीस्वभावतः ॥ ९६ ॥ चकाराभ्यधिकंस्नेहंनतथापूर्वजेष्वथ ॥ मनुस्तत्क्षांतवाञ्ज्येष्ठोभक्ष्यालंकारलालने ॥ ९७ ॥ कनिष्ठेष्वधिकंदृष्ट्वा सावर्ण्यादिषुनोयमः ॥ कदाचिद्रोषतोबाल्याद्भाविनोर्थस्यगौरवात् ॥ ९८ ॥ पदासंतर्जयामासयमःसंज्ञासरूपिणीम् ॥ तंशशापचसाक्रोधात्सावर्णेर्ज ननीतदा ॥ ९९ ॥ जिघांसतात्वयापापमांयदंघ्रिःसमुद्यतः ॥ अचिरात्तत्पतत्वेषतवेतिभृशदुःखिता ॥ १०० ॥ मातृशापपरित्रस्तोयमोपिपितुरग्रतः ॥ शशंससर्वंतद्वृत्तंरक्षरक्षेत्युवाचच ॥ १ ॥ मात्रासुतेषुसर्वेषुवर्तनीयंसमंयतः ॥ तस्यांमयोद्यतःपादोनदेहेपरिपातितः ॥ २ ॥ बाल्याद्वायदिवामोहा त्तद्भवान्क्षंतुमर्हसि ॥ गोपतेशापतोमातुर्मापतत्वंघ्रिरेषमे ॥ ३ ॥ विवस्वानुवाच ॥ ॥ अपराधसहस्रेपिजननीनशपेत्सुतम् ॥ तस्मात्किमपिभोबालभ विष्यत्यत्रकारणम् ॥ ४ ॥ येनत्वांसाऽशपत्क्रोधाद्धर्मज्ञंसत्यवादिनम् ॥ मातृशापोन्यथाकर्तुंनशक्यःकेनचित्क्वचित् ॥ ५ ॥ कृमयोमांसमादाययास्यं त्यस्मान्महीतलम् ॥ इत्थंतुचरितार्थःस्याच्छापस्त्रातोभवानपि ॥ ६ ॥ इतिपुत्रंसमाश्वास्यरविरंतःपुरंययौ ॥ चिरमालोक्यतांभार्यामुवाचसविता वचः ॥ ७ ॥ अयिभामिनिबालेषुसमेष्वपिकुतस्त्वया ॥ विधीयतेऽधिकःस्नेहःसावर्ण्यादिष्वनादिषु ॥ ८ ॥ नाचचक्षेयदासाऽथभास्वतेपरिपृच्छते ॥ तदात्मानंसमाधायसोज्ञासीत्सर्वमेवहि ॥ ९ ॥ ततोभगवतेशप्तुमुद्यतेसाशशंसह ॥ यथावृत्तंतथातथ्यंतुतोषभगवानपि ॥ ११० ॥ तथ्यभाषणत स्तांतुरविर्ज्ञात्वानिरागसम् ॥ नशशापचसंक्रुद्धोययौचत्वष्टुरंतिकम् ॥ ११ ॥ त्वष्टापिचयथान्यायंसान्त्वयंतिग्मतेजसम् ॥ निर्दग्धुकामंकोपेनप्रागानर्च मुदातदा ॥ विज्ञायतदभिप्रायंत्वष्टोवाचाऽशुतंरविम् ॥ १२ ॥ त्वष्टोवाच ॥ ॥ तवातितेजसोभीताप्राप्योत्तरकुरूनूरवे ॥ वडवारूपमास्थायवनेचर तिशाद्वले ॥ १३ ॥ द्रष्टाहितांभवानद्यस्वांभार्यामार्यचारिणीम् ॥ अधृष्यांसर्वभूतानांतेजसांनियमेनच ॥ १४ ॥

पुत्राद्धदेवादिषु ॥ ८ ॥ आत्मानमन्तःकरणंसमाधायस्थिरीकृत्य ॥ मनसाध्यानंविधायेत्येतत् ॥ ९ ॥ ११० ॥ ११ ॥ अनुपश्चादयन्तीत्यन्वयामाठरपिंगलादयस्तत्स हितंसान्वयम् ॥ सांत्वयन्नितिक्वचित् ॥ १२ ॥ १३ ॥ आर्यचारिणीमार्यवच्चतुंशीलंयस्यास्ताम् ॥ नियमेनचेतिचकारस्तेजसामित्यनेनसंबध्यते ॥ तेजसेतिवापाठः ॥ १४ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इति ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ पुंस्त्वंपुंभावःपौरुषंसामर्थ्यमितियावत् ॥ २७ ॥ २८ ॥ २९ ॥ अंगारोमंगलस्तदीयंलोकमांगारकम् ॥ आलुलोकेऽपश्यत् ॥ ३० ॥ इतिश्रीरामानंदकृतायांकाशीखण्डटीकायांषोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ माहेयगुरुसावर्णिलोकाअत्यंतदुर्लभाः ॥ सप्ताधिकदशेध्यायेवर्ण्यंतेऽत्रयथाक्रमम् ॥१॥ आंगारकंलोकमित्युक्तंतत्रोक्तानुवादेनात्मनःश्रोत्रयोःप्रीतिमाविष्कुर्वंस्तमेवपृच्छति ॥ शुक्रेति ॥ हेदेवौ ॥ अश्रावि श्रुता ॥ प्रीणितेतर्पिते ॥ १ ॥ एषः तुपुनः ॥ भवतांस्ताम् ॥ २ ॥ ननुउक्तयैवकथयाऽलंमन्यस्वेतिचेत्त

त्वयेदंस्थापितंलिंगंशुक्रेशमितिसंज्ञितम् ॥ येऽर्चयिष्यंतिमनुजास्तेषांसिद्धिर्भविष्यति ॥ २४ ॥ आवर्षंप्रतिशुक्रंयेनक्तव्रतपरानराः ॥ त्वद्दिनेशुक्रकूपेयेकृतसर्वोदकक्रियाः ॥ २५ ॥ शुक्रेशमर्चयिष्यंतिशृणुतेषांतुयत्फलम् ॥ अवंध्यशुक्रास्तेमर्त्याःपुत्रवंतोऽतिरेतसः ॥ २६ ॥ पुंस्त्वसौभाग्यसंपन्नाभविष्यंतिनसंशयः ॥ व्यपेतविघ्नास्तेसर्वेजनाःस्युःसुखवासिनः ॥ इतिदत्त्वावरान्देवस्तत्रलिंगेलयंययौ ॥२७॥ गणावूचतुः ॥ ॥ शुक्रेश्वरस्ययेभक्ताःशुक्रलोकेवसंतिते ॥ विश्वेश्वराद्दक्षिणतःशुक्रेशोस्तिपरंतप ॥ २८ ॥ तस्यदर्शनमात्रेणशुक्रलोकेमहीयते ॥ इत्येषाशुक्रलोकस्यस्थितिरुक्तामहामते ॥२९॥ अगस्त्यउवाच ॥ ॥ इत्थंसधर्मिणिकथांशुक्रलोकस्यसुव्रते ॥ शृण्वन्नांगारकंलोकमालुलोकेऽथसद्द्विजः ॥ ३० ॥ इति श्रीस्कांदे महापुराणे चतुर्थे काशीखंडेपूर्वार्धे शुक्रलोकवर्णनंनामषोडशोऽध्यायः ॥१६॥ ॥ शिवशर्मोवाच ॥ ॥ शुक्रसंबंधिनीदेवौकथाश्राविमयाशुभा ॥ यस्याःश्रवणमात्रेणप्रीणितेश्रवणेमम ॥ १ ॥ कस्यपुण्यनिधेर्लोकःशोकहृत्त्वेषनिर्मलः ॥ एतदाख्यातुमुद्युक्तौभवंतौभवतांमम ॥ २ ॥ धयित्वाश्रोत्रपात्राभ्यांवाणीममृतरूपिणीम् ॥ नतृप्तिमधिगच्छामिभवन्मुखसुखोद्गताम् ॥३॥ ॥ गणावूचतुः ॥ ॥ लोहितांगस्यलोकोयंशिवशर्मन्निबोधह ॥ उत्पत्तिचास्यवक्ष्यावोभूसुतोयंयथाभवत् ॥ ४ ॥ पुरातपस्यतःशंभोर्दाक्षायण्यावियोगतः ॥ भालस्थलात्पपातैकःस्वेदबिंदुर्महीतले ॥ ५ ॥ ततःकुमारःसंजज्ञेलोहितांगोमहीतलात् ॥ स्नेहसंवर्धितःसोथधात्र्याधात्रीस्वरूपया ॥ ६ ॥ माहेयइत्यतःख्यातिंपरामेषगतःसदा ॥ ततस्तेपेतपोत्युग्रमुग्रपुर्यांपुरानघ ॥ ७ ॥ असिश्चवरणाचापिसरितौयत्रशोभने ॥ द्युनद्योत्तरवाहिन्यामिलितेऽत्रजगद्धिते ॥ ८ ॥

त्राह ॥ धयित्वेति ॥ धयित्वापीत्वा ॥ श्रोत्रेश्रवणेंद्रियेएवपात्रेताभ्यांतृप्तिमलंप्रत्ययम् ॥ भवदिति ॥ भवतोर्मुखात्सुखेननिःसृताम् ॥ ३ ॥ लोहितांगस्यांगारकस्यमंगलस्येतियावत् ॥ अंगारकःकुजोभौमोलोहितांगोमहीसुतइत्यमरः ॥ ४ ॥ दाक्षायण्यादक्षसुतायाःसत्याइत्यर्थः ॥ भालस्थलाल्ललाटात् ॥ ५ ॥ लोहितांगः लोहितान्यंगानियस्यसः ॥ धात्र्यापृथिव्या ॥ कथंभूतया ॥ धात्रीस्वरूपयाउपमातृस्वरूपयेत्यर्थः ॥ धात्रीस्यादुपमातापीत्यमरः ॥ ६ ॥ माहेयोमह्याःपुत्रः ॥ उग्रपुर्यांत्रिपुरारेराजधान्याम् ॥ ७ ॥ उग्रपुरींविशिनष्टि ॥ असिश्चेतिचतुर्भिः ॥ सरितौनद्यौ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यत्रउग्रपुर्याम् ॥ द्युनद्यागंगया ॥ अत्रब्रह्मांडे ॥ सांधेरार्षः ॥ यत्रात्रेतिसामानाधिकरण्यंवा ॥ ८ ॥ कालोज्झितस्ववर्ष्मणांयथावसरत्यक्तस्वदेहानाम् ॥९॥ अमृतंकैवल्यम् ॥ १० ॥ सांख्यमात्माना त्मविवेकः॥योगोऽष्टांगः ॥११॥ संस्थाप्ययावज्ज्वलदंगारवत्तेजःस्वशरीरान्निःसृतंतावत्तेनभौमेनतपस्तप्तमितिद्वितीयेनान्वयः ॥ पांचमुद्रेमहास्थानेतन्नाम्निमहापीठे ॥ पंचानांभूतानामविद्याऽस्मिता रागद्वेषाभिनिवेशानांवामुद्रामुद्रणंविनाशोयस्मिंस्तत्स्थानंतथेतिवा॥कंबलाश्वतरयोर्नागयोरुत्तरेउत्तरस्मिन्पार्श्वे ॥ १२ ॥ १३॥१४॥१५॥१६॥ उपरागसमंग्रहणसमम् ॥ पर्वपुण्यकालः ॥ १७ ॥ ॥ १८ ॥ अंगारकचतुर्थ्याउपरागपर्वसमत्वेहेत्वंतरमाह ॥ अंगारकचतुर्थ्यांत्विति ॥ तुशब्दात्पूर्वस्माद्धेतोराधिक्यंसूच्यते ॥ १९ ॥ २० ॥ २१ ॥ गुरोःपुरींकथयितुंप्रस्तावयति ॥

सर्वगोपिहिविश्वेशोयत्रनित्यंप्रकाशते ॥ मुक्तयेसर्वजंतूनांकालोज्झितस्ववर्ष्मणाम् ॥ ९ ॥ अमृतंहिभवंत्येवमृतायत्रशरीरिणः ॥ अनुग्रहंसमासाद्यप रंविश्वेश्वरस्यह ॥ १० ॥ अपुनर्भवदेहास्तेयेऽविमुक्तेतनुत्यजः ॥ विनासांख्येनयोगेनविनानानाव्रतादिभिः ॥ ११ ॥ संस्थाप्यलिंगंविधिनास्वनाम्नां गारकेश्वरम् ॥ पांचमुद्रेमहास्थानेकंबलाश्वतरोत्तरे ॥ १२ ॥ ज्वलदंगारवत्तेजोयावत्तस्यशरीरतः ॥ विनिर्ययौतपस्तावत्तेनतप्तंमहात्मना ॥ १३ ॥ ततोंगारकनाम्नासससर्वलोकेषुगीयते ॥ तस्यतुष्टोमहादेवोददौग्रहपदंमहत् ॥ १४ ॥ अंगारकचतुर्थ्यांयेस्नात्वोत्तरवहांभसि ॥ अभ्यर्च्यांगारकेशानं नमस्यंतिनरोत्तमाः ॥१५ ॥ नतेषांग्रहपीडाचकदाचित्क्वापिजायते ॥ अंगारकेनसंयुक्ताचतुर्थीलभ्यतेयदि ॥१६॥ उपरागसमंपर्वतदुक्तंकालवेदिभिः ॥ तस्यांदत्तंहुतंजप्तंसर्वंभवतिचाक्षयम् ॥१७॥ श्रद्धयाश्राद्धदायैवैचतुर्थ्यंगारयोगतः ॥ तेषांपितॄणांभवितातृप्तिर्द्वादशवार्षिकी ॥ १८ ॥ अंगारकचतुर्थ्यां तुपुराजन्नेगणेश्वरः ॥ अतएवतुतत्पर्वप्रोक्तंपुण्यसमृद्धये ॥ १९॥ एकभक्तव्रतीतत्रसंपूज्यगणनायकम् ॥ किंचिद्दत्त्वातमुद्दिश्यनविघ्नैरभिभूयते ॥ २० ॥ अंगारेश्वरभक्तायेवाराणस्यांनरोत्तमाः ॥ तेऽस्मिन्नंगारकेलोकेवसंतिपरमर्द्धयः ॥२१॥ अगस्त्यउवाच ॥ ॥ इत्थंकथयतोरेवरम्यांपुण्यवर्तांकथाम् ॥ भगवद्गणयोःप्रापनेत्रातिथ्यंगुरोःपुरी ॥ २२ ॥ नेत्रानंदकरींदृष्ट्वाशिवशर्माऽथतांपुरीम् ॥ पप्रच्छाचार्यवर्यस्यकस्येयंपूरनुत्तमा ॥ २३ ॥ ॥ गणा वूचतुः ॥ ॥ सर्वेसुखंसमाख्यावोनानाख्येयंतवाग्रतः ॥ अध्वखेदापनोदायपुनरस्याःपुरःकथाम्॥ २४ ॥ विधेर्विधित्सतःपूर्वंत्रिलोकीरचनांमुदा ॥ आविरासुःसुताःसप्तमानसाःस्वस्यसंनिभाः ॥ २५ ॥ मरीच्यत्र्यंगिरोमुख्याःसर्वेसृष्टिप्रवर्तकाः ॥ प्रजापतेरंगिरसस्तेष्वभूद्देवसत्तमः ॥ २६ ॥ सुतश्चां गिरसोनामबुद्ध्याविबुधसत्तमः ॥ शांतोदांतोजितक्रोधोमृदुवाङ्निर्मलाशयः ॥ २७ ॥

इत्थमिति ॥ कथयतोःसतोः ॥ नेत्रातिथ्यंनेत्रगोचरताम् ॥ शिवशर्मणइतिशेषः ॥ २२ ॥ नेत्रेति ॥ आचार्यवर्यस्यबृहस्पतेस्तांपुरींदृष्ट्वाकस्येयमनुत्तमापूरितिशिवशर्मापप्रच्छेत्यन्वयः ॥ कस्यपूज्यस्यश्रेष्ठस्येतियावदितिवा ॥ २३ ॥ २४ ॥ विधेरिति ॥ लोकत्रयसृष्टिंविधातुमिच्छतोहिरण्यगर्भस्यात्मनस्तुल्याःसप्तपुत्रामानसाआविरभवन्नित्यर्थः ॥ २५ ॥ मरीचिश्चात्रिश्चांगिरा श्चतेमुख्याःप्रधानाआद्यावायेषांसप्तानांपुलस्त्यादीनांवातेतथा ॥ तेषुमध्ये ॥ २६ ॥ अंगिरसो[illegible] ॥ [illegible]प्रख्यातइत्यर्थः ॥ तंविशिनष्टिसार्धत्रयेण ॥ बुद्ध्येति ॥ २७ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कलासुचतुःषष्टिकलासुशैवतंत्रप्रसिद्धासु ॥ यथा—गीतम्, वाद्यम्, नृत्यम्, नाट्यम्, आलेख्यम्, विशेषकच्छेद्यम्, तंडुलकुसुमबलिविकाराः, पुष्पास्तरणम्, दशनवसनांगरागाः, मणिभूमिकाकर्म, शयनरचनम्, उदकवाद्यमुदकघातः, चित्रयोगाः, माल्यग्रथनविकल्पाः, शेखरापीडयोजनम्, नेपथ्ययोगाः, कर्णपत्रभंगी, गंधयुक्तिः, भूषणयोजनम्, ऐंद्रजालम्, कौतुमारयोगाः, हस्तलाघवम्, चित्रशाकापूपभक्ष्यविकारक्रिया, पानकरसरागासवयोजनम्, सूचीवामकर्म. सूत्रक्रीडा, वीणाडमरुकवाद्यानि, प्रहेलिका, प्रतिमाला, दुर्वचकयोगाः, पुस्तकवाचनम्, नाटकाख्यायिकादर्शनम्, काव्यसमस्यापूरणम्, पट्टिकावेत्रबाणविकल्पाः, तर्ककर्माणि, तक्षणम्, वास्तुविद्या, रूप्यरत्नपरीक्षा, धातुवादः, मणिरागज्ञानम्, आकरज्ञानम्, वृक्षायुर्वेदयोगाः, मेषकुक्कुटलावकयुद्धविधिः, शुकसारिकाप्रलापनम्, उत्सादनम्, केशमार्जनकौशलम्, अक्षरमुष्टिकाकथनम्, म्लेच्छितकर्कविकल्पाः, देशभाषाज्ञानम्, पुष्पशकटिका, निमित्तज्ञानम्, यंत्रमातृकामंत्रमातृकाधारणमातृकासंवाच्यम्, मानसीकाव्यक्रिया, अभिधानकोशाः, छंदोज्ञानम्, क्रियाविकल्पाः, छलितकयोगाः, वस्त्रगोपनानि, द्यूतविशेषाः, आकर्षक्रीडा, बालक्रीडनकानि, वैनायिकानां वैजयिकानां वैयासिकानांचविद्यानांज्ञानम् ॥ इतिचतुःषष्टिकलाः ॥ अमलोऽज्ञानमलरहितः ॥ पारदृश्वासमाप्तिंगतः ॥ २८ ॥ अहितात्यहितःसदा सदासर्वदाऽहितमत्यहितम् अतिक्रांतंयेनसः अहितस्यातिशयेनाहितइतिवा ॥ अहितानामपिक्षमीतिकश्चित् ॥ २९ ॥ सब्रह्मपातिः ॥ ३० ॥ महल्लिंगंमहतोभूतस्यविश्वेश्वरस्य ॥ अस्यमहतोभूतस्यनिश्वसितमेतदित्यादिश्रुतेः ॥ लिंगं महल्लिंगमितिकर्मधारयोवा ॥ प्रतिष्ठाप्यसंवत्सराणांदिव्यंदशसहस्रंव्याप्यमहतींतापसींतापससंबंधिनींतपोयोग्यांवावृत्तिंधारयंस्तततापेत्यर्थः ॥ ३१ ॥ ३२ ॥ प्रसन्नोस्मीति ॥ यत्तूयः ॥ यइत्येववापाठः ॥ इतिएवंप्रकारेण ॥ ३३ ॥ पद्यैरष्टभिरुत्कृष्टैर्देवाचार्योमहेश्वरम् ॥ तुष्टावोद्रिक्तयाभक्त्यासोमंसोमार्धशेखरम् ॥ जयेति ॥ हेशंकरकल्याणकर ॥ हेशांतएकरूप ॥ हेशशांकरुचेचन्द्रकांते ॥ हेरुचिरकमनीय॥ हेअर्थद ॥ हेरुचिरार्थदेत्येकंपदंवा॥रुचिरान्नदेतिकश्चित् ॥ हेसर्वदपुरुषार्थचतुष्टयप्रद॥ प्रलयकालेसर्वांवखंडकसर्वनाशकेतिवा॥ हेसर्वसर्वस्वरूप॥ हेशुचेपवित्र॥ सर्वेषुचयोयस्मात्तत्संबोधनंतथाइतिवा ॥ तथाचोक्तम् ॥ अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिरिति ॥ सर्वजनस्यशुचेइतिकश्चित्पाठः ॥ शुचिभिर्दत्तासमर्पितागृहीतामहो

वेदवेदार्थतत्त्वज्ञःकलासुकुशलोऽमलः ॥ पारदृश्वातुसर्वेषांशास्त्राणांनीतिवित्तमः ॥ २८ ॥ हितोपदेष्टाहितकृदहितात्यहितःसदा ॥ रूपवाञ्छीलसंपन्नो गुणवान्देशकालवित् ॥ २९ ॥ सर्वलक्षणसंभारसंभृतोगुरुवत्सलः ॥ ततापतापसींवृत्तिंकाश्यांसमहतींदधत् ॥ ३० ॥ महल्लिंगंप्रतिष्ठाप्यशंभोर्भवभूरिभावनः ॥ अयुतंशरदांदिव्यंदिव्यतेजामहातपाः ॥३१॥ ततःप्रसन्नोभगवान्विश्वेशोविश्वभावनः ॥ आविर्भूयततोलिंगान्महसांराशिरब्रवीत् ॥३२॥ प्रसन्नोस्मिवरंब्रूहियत्तेमनसिवर्तते ॥ इतिशंभुंसमालोक्यतुष्टावेतिसद्दृष्टवान् ॥ ३३ ॥ ॥ आंगिरसउवाच ॥ ॥ जयशंकरशांतशशांकरुचेरुचिरार्थदसर्वदसर्वशुचे ॥ शुचिदत्तगृहीतमहोपहृतेहृतभक्तजनोद्धततापतते ॥ ३४ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पद्धतिर्महोपहारोमहापूजायेनतत्संबोधनंतथा ॥ हताभक्तजनानामुद्धताउद्भटातापततिःसन्तापपरंपरायेनतत्संबोधनंतथा ॥ जयोत्कर्षमाविष्कुरु ॥ ३४ ॥ ततेति ॥ ततंविस्तृतंव्याप्तंसर्वेषांहृद्दंबरं हृदयाकाशंयेनतत्संबोधनंतथा ॥ हेवरद ॥ हेनतेनतनम्रस्वरूप ॥ कर्तरिक्तिन् ॥ सक्तेतुर्विधृतिरितिवत् ॥ [1]वरदानांब्रह्मादीनांनतिर्यस्मैतत्संबोधनंतथेतिवा ॥ नतानांप्रणतानांवृजिनानिपापा न्येवमहावनानितेषांदाहकृतेभस्मकर्तः ॥ कृतंविविधंचरित्रंसृष्ट्यादिलक्षणंययासातनुर्यस्यतत्संबोधनंतथा ॥ ततविविधचरित्रतनोइतिक्वचित् ॥ पवित्रतनोइतिचान्यत्र ॥ सुतनोहेशोभनतनो ॥ तनू निकोमलानिपुष्पाणीत्येतत् विशिखावाणायस्यसकंदर्पस्तथातंविशोषयतिनाशयतितस्यविशोषणंयस्मादितिवातत्संबोधनंतथा ॥ हेधैर्यनिधेधैर्यसमुद्र ॥ तनुविशिखेनयद्विशोषणंदाहस्तत्रधैर्य निधेइत्येकंवापदम् ॥ जयेत्यनुषज्जते ॥ एवमुत्तरत्रापि ॥ ३५ ॥ निधनेति ॥ निधनादिविवर्जितमरणादिषड्भावविकाररहित ॥ कृतःसंपादितोनतिकृत्प्रणतोभक्तोयेनतत्संबोधनंतथा ॥ निधनादिविवर्जिताः कृतानतिकृतोभक्तायेनेत्येकंवापदम् ॥ कृतिनेविदुषेज्ञानिनेइतियावत् ॥ विहितोदत्तोमनोरथोमोक्षोयेनतत्संबोधनंतथा ॥ हेपन्नगभृत्सर्पधारिन् ॥ नगभर्तृसुतापार्वतीअर्पितास्था पितावामवपुषिवामांगेअर्पितास्वीकृतावामवपुर्वामांगंवायेनतत्संबोधनंतथा ॥ नगभर्तृसुतयाऽर्पितंव्याप्तंवामंवपुर्वामांगंयस्यअर्पितंदत्तंवामवपुर्मनोहरंशरीरंयस्माइतिवातत्संबोधनंतथेतिवा ॥ स्ववपु

ततसर्वहृद्दंबरवरदनतेनतवृजिनमहावनदाहकृते ॥ कृतविविधचरित्रतनोसुतनो[1]तनुविशिखविशोषणधैर्यनिधे ॥ ३५ ॥ निधनादिविवर्जितकृतन तिकृत्कृतिविहितमनोरथपन्नगभृत् ॥ नगभर्तृसुतार्पितवामवपुःस्ववपुःपरिपूरितसर्वजगत् ॥ ३६ ॥ त्रिजगन्मयरूपविरूपसुदृग्दृगुदंचनकुंचन कृतहुतभुक् ॥ भवभूतपतेप्रमथैकपतेपतितेष्वपिदत्तकरप्रसृते ॥ ३७ ॥ प्रसृताखिलभूतलसंवरणप्रणवध्वनिसौधसुधांशुधर ॥ धरराजकुमारि कयापरयापरितःपरितुष्टनतोस्मिशिव ॥ ३८ ॥

पास्वस्वरूपेणब्रह्मरूपेणेतियावत् ॥ परिपूरितंपरितोव्याप्तंसर्वजगद्येनतत्संबोधनंतथा ॥ परिनिर्मितेतिक्वचित् ॥ ३६ ॥ त्रिजगदिति ॥ त्रिजगन्मयरूपहेत्रिजगद्विवर्तस्वरूप ॥ ब्रह्मैवेदमित्यादि श्रुतेः ॥ वस्तुतोविरूपहेप्रपंचरूपरहित ॥ तत्रहेतुः ॥ सुदृक्सुष्ठुशोभनाखंडसच्चिदानंदैकलक्षणादृक्चिच्छक्तिर्यस्यतत्संबोधनंतथा ॥ प्राक्तंव्याख्यानंपदद्वयेपिस्पष्टम् ॥ दृशांनेत्राणामुदंचनमुद्वर्त नंचालनमितियावत् ॥ तेनकुंचनंसंकोचनंप्रलयंकरोतीतितत्संबोधनंतथा ॥ मृगचन्दनकुंचनकृदितिक्वचित्पाठः ॥ तत्रमृगमदेनमिश्रितंचन्दनंमृगचन्दनंतेनकुंचनकृदालेपकृदितिव्याख्येयम् ॥ अकारश्रवणमार्षम् ॥ हुतभुक्इंद्रादिरूपेणचरुपुरोडाशादिभुक् ॥ कृतभुगितिपाठेजीवरूपेणकृतस्वर्गादिफलभुक् ॥ पाठद्वयेपितत्संबोधनंतथा ॥ दृगुदंचनकुंचनेकृतःहुतभुक्येनेत्येकंवापदम् ॥ भवत्यस्मादितिभवहेसर्वोत्पादक ॥ भूतविशेषाणांप्राणिमात्राणांवापतेहेभूतपते ॥ प्रमथानांगणविशेषाणांमुख्यस्वामिन्प्रमथैकपते ॥ अत्रभूतप्रमथानामवांतरभेदोद्रष्टव्यः ॥ पतितेष्वपिभ वार्णवेनिमग्नेष्वपिदत्तःकरोरश्मिःकरइवकरोज्ञानम्॥अज्ञानांधकारनाशकत्वात्॥तस्यप्रसृतिःप्रसरणंप्राप्तिर्येनतत्संबोधनंतथा॥पतितेष्वपिभक्तेषुदत्ताकरप्रसृतिर्हस्तावलंबनंयेनतत्संबोधनंतथेतिवा ॥३७॥ प्रसृतेति ॥ प्रसृतंगतमखिलभूतलेषुसंवरणंसम्यग्वृतिर्व्याप्तिरावरणंवायस्यतत्संबोधनंतथा ॥ येनसर्वमिदंततम् ॥ मृत्युनैवेदमावृतमासीदित्यादिस्मृतिश्रुतिभ्यः ॥ प्रणवध्वनिरेवसौधंधवलगृह

---

१ अतनोःअनंगस्यबाणविशोषण ! तत्कर्मणिधैर्यनिधे वा । २ हेसुविरूपाक्ष ! अथवा हेविरूपस्वक्ष ! विरूपापिसुष्ठुतराहृग्यस्येति ।

माश्रयोयस्यतत्संबोधनंतथा ॥ सुधांशुःसुधामयश्चंद्रस्तंधरतीतिसःतत्संबोधनंतथा ॥ प्रणवस्यॐकारस्यषडक्षरात्मकस्ययोध्वनिर्नादःषष्ठाक्षरःपरापश्यंतीमध्यमावैखर्याख्याअवस्थाअनुभूय
स्वरवर्णपदात्मकस्तस्यसौधंगृहमाश्रयइत्यर्थः ॥ तत्संबोधनंतथा ॥ सुधांशुधरहेचन्द्रावतंसेतिवा ॥ हेधरराजकुमारिकयाधराधरराजकन्ययाऽपर्णयापरयाचिद्रूपयापरितःसर्वतःपरितुष्टअतिशयेन
प्राप्ततोष ॥ हेशिवकल्याणरूप ॥ नतोस्मित्वामितिशेषः ॥ ३८ ॥ शिवेति ॥ हेशिवमहेश्वररूप ॥ हेदेवस्वप्रकाश ॥ हेगिरीशगिरोवेदलक्षणायाःसरस्वत्यावाईशनियन्तः ॥ गिरेः
कैलासस्येतिवा ॥ हेमहेशमहांश्चासावीशश्चेतितत्संबोधनंतथा ॥ हेविभोसमर्थविशेषेणभवतीतिविभुस्तत्संबोधनंतथा ॥ हेविभवप्रदऐश्वर्यप्रद ॥ हेगिरिशगिरौकैलासेशेतइतितत्संबोधनं
तथा ॥ हेशिवेशशिवायाउमायाभर्तः ॥ हेमृडसुखजनकसुखस्वरूपेतिवा ॥ उडुपतिंचंद्रंधरतीत्युडुपतिध्रस्तत्संबोधनंतथा ॥ उडुपतिलकेतिक्वचित् ॥ उडुपतिकेतिचान्यत्र ॥ पाठद्वयमपिच्छंदोभं
गादक्षराधिक्याच्चनांगीकर्तव्यमिति ॥ उडुपतीकोऽत्रपाठेउडुपतिमिकतिशिरोभूषणत्वेनस्वीकरोतीतियावत्तत्संबोधनंतथा ॥ धातूनामनेकार्थत्वात् ॥ कृतादत्तायन्त्रणापीडायेनतत्संबोधनंतथा ॥
केषामित्याकांक्षायामाह ॥ भक्तिविघातकृतांकामक्रोधलोभादीनांत्रिपुरांधकजलंधरादीनांचेत्यर्थः ॥ जगत्त्रितयंमृडयसुखय ॥ अस्मिन्श्लोकेद्वितीयपादेछन्दोभंगोऽक्षराधिक्यंचार्षम् ॥ ३९ ॥

शिवदेवगिरीशमहेशविभोविभवप्रदगिरिशशिवेशमृड ॥ मृडयोडुपतिध्रजगत्त्रितयंकृतयंत्रणभक्तिविघातकृताम् ॥ ३९ ॥ नकृतांततएषबिभेमिहरप्र
हराशुमहाघममोघमते ॥ नमतांतरमन्यदवैमिशिवंशिवपादनतेःप्रणतोस्मिततः ॥ ४० ॥ विततेऽत्रजगत्यखिलेऽघहरंहरतोषणमेवपरंगुणवत् ॥
गुणहीनमहीनमहावलयंप्रलयांतकमीशनतोस्मिततः ॥ ४१ ॥ इतिस्तुत्वामहादेवंविररामांगिरःसुतः ॥ व्यतरच्चमहेशानःस्तुत्यातुष्टोवरान्बहून् ॥४२॥
॥ श्रीमहादेवउवाच ॥ ॥ बृहतातपसानेनबृहतांपतिरेध्यहो ॥ नाम्नाबृहस्पतिरितिग्रहेष्वर्च्योभवद्विज ॥ ४३ ॥ अस्माल्लिंगार्चनान्नित्यंजीवभूतो
सिमेयतः ॥ अतोजीवइतिख्यातिंत्रिषुलोकेषुयास्यसि ॥४४॥ वाचांप्रपंचैश्चतुरैर्निष्प्रपंचोयतःस्तुतः ॥ अतोवाचांप्रपंचस्यपतिर्वाचस्पतिर्भव ॥४५॥

नेति ॥ हेहरअज्ञाननाशकभक्तपापहरप्रलयकालेसर्वसंहारकेतिवा ॥ हेअमोघमतेअप्रतिहतज्ञान ॥ ज्ञानमप्रतिघंयस्येतिश्रुतेः ॥ एषोऽहंकृतांततोयमादपिनबिभेमित्वद्दर्शनादितिशेषः ॥ अतआशुशीघ्रं
महाघंमहत्पापंमहामोहंवाप्रहरदूरीकुरुनाशयेत्यर्थः ॥ ननुतत्त्वज्ञानादेवाहमज्ञानंनाशयामीतिचेत्तत्राह ॥ शिवपादनतेःशिवस्यतवपादनतेर्नमस्कारादन्यन्मतांतरंशिवंकल्याणरूपंनावैमिनजाना
मिततस्त्वांप्रणतोस्मीतिनमस्कारमात्रेणैवज्ञानंसंपाद्यअज्ञानंनिवर्तयेतिभावः ॥४०॥ विततइति ॥ अतःकारणादहमीशंत्वांनतोस्मि ॥ ईशंकथंभूतम् ॥ गुणहीनंप्रपंचातीतमित्यर्थः॥ पुनःकीदृशम् ॥
अहीनमहावलयम्अहीनमहिसंबंधिमहावलयंमहत्कंकणंयस्यतम् ॥ अहीनांसर्पाणामिनईश्वरोऽहीनोवासुकिर्नागानामिनोनंतोवासमहद्वलयंयस्येतिवा ॥ पुनःकीदृशम् ॥ प्रलयांतकंप्रलयकालेसर्व
संहारकमित्यर्थः ॥ यतोऽत्रजगति ॥ कीदृशे ॥ वितते ॥ अस्यैवव्याख्यानमखिलइति ॥ हरतोषणमेवाघहरंपरंमुख्यंगुणवदिति ॥ ४१ ॥ व्यतरद्दत्तवान् ॥ ४२ ॥ वरान्प्रयच्छन्नामात्रे
तयंनिर्वक्ति ॥ बृहतेतिश्लोकत्रयेण ॥ बृहतांपतिरधिइंद्रादीनांदेवानांगुरुरित्यर्थः ॥ ४३ ॥ ४४ ॥ प्रपंचैर्विस्तारैश्चतुरैर्निपुणैःसुश्राव्यैरित्यर्थः ॥ भवस्याः ॥ भवानितिक्वचित् ॥ ४५ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्रवणादपिभावतइतिपाठेएतत्स्तोत्रंभावतोभक्त्यात्रिकालतस्त्रि ॥ अस्यस्तोत्रस्यपठनात्पाठायंपुरुषंप्रतिवाक्सरस्वतीउदियादुदिताभवतितस्यसंस्कृतावाणीचस्यादित्यन्वयः ॥
वागुदियात्त्वयमिति ॥ अस्यस्तोत्रस्यपठनात्पा ठायंपुरुषंप्रतिवाक्सरस्वतीउदियादुदिताभवतितस्यसंस्कृतावाणीचस्यादित्यन्वयः ॥ अर्थस्तुपूर्वोक्तरीत्यानुसंधेयः ॥ ४६ ॥ वायव्याख्यंवायुः
कालंयःपठतियश्चशृणोतितितस्यसंस्कृतावाणीस्यादित्यर्थः ॥ अपिवाऽसुमहात्मनः अपिवाऽगुणवांश्चयइतिपाठद्वयेप्यकारःप्रश्लेष्टव्यः ॥ वायुर्य
सूत्रात्मा ॥ वायुर्वैगौतमतत्सूत्रमितिश्रुतेः ॥ तत्प्रापकंवायव्यंहिरण्यगर्भपदप्रापकमित्यर्थः ॥ वायुपुराणेप्रोक्तंवायुनावाप्रोक्तंवायव्यम् ॥ यद्वा वायुरेववायव्यम् ॥ स्वार्थेष्यञ् ॥

अस्यस्तोत्रस्यपठनादपिवागुदियात्त्वयम् ॥ तस्यस्यात्संस्कृतावाणीत्रिभिर्वर्षैस्त्रिकालतः ॥ ४६ ॥ समुत्पन्नेमहाकार्येनसबुद्ध्याप्रहीयते ॥ यःप
ठिष्यत्यदःस्तोत्रंवायव्याख्यंदिनेदिने ॥ ४७ ॥ अस्यस्तोत्रस्यपठनान्नियतंममसंनिधौ ॥ नदुर्वृत्तौप्रवृत्तिःस्यादविवेकवतांनृणाम् ॥ ४८ ॥ अदः
स्तोत्रंपठञ्जंतुर्जातुपीडांग्रहोद्भवाम् ॥ नप्राप्स्यतितितोजप्यमिदंस्तोत्रंममाग्रतः ॥ ४९ ॥ नित्यंप्रातःसमुत्थाययःपठिष्यतिमानवः ॥ इमांस्तुतिंहरिष्येऽ
हंतस्यबाधाःसुदारुणाः ॥ ५० ॥ त्वत्प्रतिष्ठितलिंगस्यपूजांकृत्वाप्रयत्नतः ॥ इमांस्तुतिमधीयानोमनोवांछामवाप्स्यति ॥ ५१ ॥ इतिदत्त्वावरान्छंभुः
पुनर्ब्रह्माणमाह्वयत् ॥ सेंद्रान्देवगणान्सर्वान्सयक्षोरगकिंनरान् ॥ ५२ ॥ तानागतान्समालोक्यशिवोब्रह्माणमब्रवीत् ॥ विधेविधेहिमद्वाक्यादस्मुंवा
चस्पतिंमुनिम् ॥ ५३ ॥ गुरुंसर्वसुरेंद्राणांपरितःस्वगुणैर्गुरुम् ॥ अभिषिंचविधानेनदेवाचार्यपदेमुदे ॥ ५४ ॥ अतीवधिषणाधीशोममप्रीतोभवि
ष्यति ॥ महाप्रसादइत्याज्ञांशिरस्याधायतत्क्षणात् ॥ ५५ ॥ सुरज्येष्ठःसुराचार्यंचकारांगिरसंतदा ॥ देवदुंदुभयोनेदुर्ननृतुश्चाप्सरोगणाः ॥ ५६ ॥
गुरुपूजांव्यधुःसर्वेगीर्वाणामुदिताननाः ॥ अभिषिक्तोवसिष्ठाद्यैर्मंत्रपूतेनवारिणा ॥ ५७ ॥ पुनरन्यंवरंप्रादाद्गिरीशःपतयेगिराम् ॥ शृण्वांगिरसधर्मात्मन्
देवेज्यकुलनंदन ॥ ५८ ॥ भवतास्थापितंलिंगंसुबुद्धिपरिवर्धनम् ॥ बृहस्पतीश्वरइतिख्यातंकाश्यांभविष्यति ॥ ५९ ॥ गुरुपुष्यसमायोगेलिंगमेतत्स
मर्च्यच ॥ यत्करिष्यंतिमनुजास्तत्सिद्धिमधियास्यति ॥ ६० ॥ बृहस्पतीश्वरंलिंगंमयागोप्यंकलौयुगे ॥ अस्यसंदर्शनादेवप्रतिभाप्रतिलभ्यते ॥ ६१ ॥
चंद्रेश्वराद्दक्षिणतोवीरेशान्नैर्ऋतेस्थितम् ॥ आराध्यधिषणेशंवैगुरुलोकेमहीयते ॥ ६२ ॥ गुर्वंगनागमनजंपापंषण्मासंसेवनात् ॥ अवश्यंविलयंयातितमः
सूर्योदयाद्यथा ॥ ६३ ॥ अतएवहिगोप्तव्यंमहापातकनाशनम् ॥ बृहस्पतीश्वरंलिंगंनाख्येयंयस्यकस्यचित् ॥ ६४ ॥ इतिदत्त्वावरान्देवस्तत्रैवांतर्हितो
भवत् ॥ द्रुहिणोगुरुणासार्धंसेंद्रोपेंद्रोबृहस्पतिम् ॥ ६५ ॥

याक्षिप्रकारीतथाशीघ्रफलदमित्यर्थः ॥ तदाख्यंतन्नामकम् ॥ उकारःशंकरःप्रोक्तः अकारोवासुदेवःस्यादाकारश्चपितामहइत्येकाक्षरकोशाद्वारुद्रविष्णुब्रह्माणस्तान्यौतिमिश्रीकरोतीतिवायवं
वायवमेववायव्यंतदाख्यंस्तोत्रमितिवा ॥ अलमतिविस्तरेण ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ मुदेसर्वेषांप्रीतये ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ पतयेगिरां
वाचस्पतयेइत्यर्थः ॥ ५८ ॥ सुबुद्धिपरिवर्धनंशोभनज्ञानजनकम् ॥ ५९ ॥ यत्कर्मतत्कर्तृभूतम् ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ अंतर्हितोंऽतर्धानंगतः ॥ अंतरित



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इतिपाठेपिसएवार्थः ॥ गुरुणादैत्यगुरुणाशुक्रेणेत्यर्थः ॥ यद्वा गुरुणात्रैलोक्यगुरुणाश्रीविष्णुनेत्यर्थः ॥ ६५ ॥ स्वलोकंसुमेरोरुपरिस्थंलोकंसत्यलोकंवा ॥ ६६ ॥ शनिलोककथांप्रस्ता वयति ॥ अतिक्रम्येति ॥ ६७ ॥ तेनद्विजेन पृष्टावित्यन्वयः ॥ प्रददर्शतुर्विशेषेणदर्शयामासतुरित्यर्थः ॥ प्रशशंसतुरितिपाठेप्रकर्षेणकथयामासतुरित्यर्थः ॥ ६८ ॥ दाक्षायण्यांदक्षकन्यायाम दित्याभितियावत् ॥ उष्णगुःउष्णागावोरश्मयोयस्यससूर्यस्तथा ॥ ६९ ॥ ७० ॥ आदित्यस्येति ॥ आदित्यस्यसूर्यस्यतद्रूपंतेजःपुंजमंडलस्यतेजसोपलक्षितंगात्रेषुसासंज्ञापरिदध्यौपरिदधौ धृतवतीकिंतुतस्यागात्रंनातिकांतंनातिकमनीयामिवाभवदित्यर्थः ॥ नातिक्रांतुमितिपाठेअतिक्रांतुमतिशयेनधर्तुमतिक्रमितुंवेवनाभवत्समर्थानजातेत्यर्थः ॥ लोकोत्तयभिप्रायेणेवशब्दएवार्थेवा ॥ गात्रेषु

अस्मिन्पुरेभिषिच्याथविसृज्येंद्रादिकान्सुरान् ॥ अलंचकारस्वंलोकंविष्णुनाऽनुमतोद्विज ॥ ६६ ॥ ॥ अगस्त्यउवाच ॥ ॥ अतिक्रम्यगुरोर्लोकंलो पामुद्रेददर्शसः ॥ शिवशर्मापुरींसौरेः प्रभामंडलमंडिताम् ॥ ६७ ॥ पृष्टौतेनचतौतत्रतांपुरींप्रददर्शतुः ॥ द्विजेनद्विजवर्यायगणवर्यौशुचिस्मिते ॥६८॥ गणावूचतुः ॥ ॥ मारीचेःकश्यपाज्जज्ञेदाक्षायण्यांद्विजोष्णगुः ॥ तस्यभार्याभवत्संज्ञापुत्रीत्वष्टुःप्रजापतेः ॥ ६९ ॥ भर्तुरिष्टाततस्तस्माद्रूपयौवनशा लिनी ॥ संज्ञाबभूवतपसासुदीप्तेनसमन्विता ॥ ७० ॥ आदित्यस्यहितद्रूपंमंडलस्यतुतेजसा ॥ गात्रेषुपरिदध्यौवैनातिकांतमिवाभवत् ॥ ७१ ॥ नखल्वयमृतोंऽडस्थइतिस्नेहादभाषत ॥ तदाप्रभृतिलोकेयंमार्तंडइतिचोच्यते ॥ ७२ ॥ तेजस्त्वभ्यधिकंतस्यसाऽसहिष्णुर्विवस्वतः ॥ येनातितापयामासत्रैलोक्यंतिग्मरश्मिभृत् ॥ ७३ ॥ त्रीण्यपत्यानिभोब्रह्मन्संज्ञायांमहसांनिधिः ॥ आदित्योजनयामासकन्यांद्वौचप्रजापती ॥ ७४ ॥ वैवस्वतंमनुंज्येष्ठंयमंचयमुनांततः ॥ नातितेजोमयंरूपंसोढुंसाऽलंविवस्वतः ॥ ७५ ॥ मायामयींततश्छायांसवर्णांनिर्ममेस्वतः ॥ प्रांजलिःप्रणता भूत्वासंज्ञांछायातदाब्रवीत् ॥ ७६ ॥ तवाज्ञाकारिणीदेविशाधिमांकरवाणिकिम् ॥ संज्ञोवाचततश्छायांसवर्णेशृणुसुंदरि ॥ ७७ ॥

परिदध्यावैनातिक्रांतमनाभवदितिपाठश्चित्यः ॥ ७१ ॥ प्रणयकोपितायाभार्यायावचसामार्तंडनामनिरुक्तिर्नखल्विति ॥ अयंसूर्यः ॥ अंडस्थोगर्भस्थः स्नेहात्प्रणयकोपात् ॥ यद्वा प्रसंगात्सूर्यस्य नामनिरुक्तिर्नखल्विति ॥ अभाषतकश्यपइतिशेषः ॥ द्रुतंभिक्षामलभमानेनबुधेनशापान्मृतांडस्थस्यकश्यपानुग्रहात्प्रतीकारइतिमोक्षधर्मांतर्गर्भिणीकथा ॥ तदुक्तंहरिवंशे ॥ अजानन्कश्य पस्तस्मादितितृतीयश्चरणः चरणत्रयंश्लोकोक्तमेव ॥ ७२ ॥ येनतेजसा ॥ तिग्मरश्मिभृत्तीक्ष्णकिरणभृत् ॥ ७३ ॥ महसांतेजसांनिधिराश्रयः ॥७४॥ मनुंमन्वंतराधिपम् ॥ मनुश्रेष्ठमितिक्वचित् ॥ सोढुंधर्तुम् ॥७५॥ मायामयींसवर्णांतन्नाम्नीमित्यन्वयः ॥ छाययानिर्मितत्वाच्छायेत्यपितस्यानामातएवाग्रेवक्ष्यतिसंज्ञांछायातदाब्रवीदिति ॥ छायाप्रतिबिंबम् ॥ स्वतःस्वेच्छया ॥ ७६ ॥ ७७ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ७८ ॥ यमौयमजौ ॥ ताविवाह ॥ यमुनेति ॥ ७९॥८०॥ आकचग्रहणात्कचग्रहणपर्यंतम् ॥ आशापाच्छापपर्यंतंच ॥८१॥ तथेत्युक्तातथाकरिष्यामीतिसवर्णयाप्रत्युदिताकथितासतीत्यर्थः ॥ तथेत्युक्तेतिपाठश्चित्यः ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ प्रतिबाधक ॥ शैशवादित्रिषुपित्रादित्रितयाद्यथासंख्यंभयंस्यादित्यर्थः ॥ ८६ ॥ मौग्ध्यान्मौढ्यात् ॥ मौढ्यादित्येववापाठः ॥ एवमग्रेपि ॥ दुर्वृत्तयाऽसमीक्ष्यकारिण्या ॥ ८७ ॥ साहम् ॥ अत्रापतुर्गृहे ॥ ८८ ॥ भयंकरोभयकर्ताभविष्यतीत्यर्थः ॥ ८९ ॥ स्वकरांगारकर्षणंस्वहस्तेन

अहंयास्यामिसदनंत्वष्टुस्त्वंपुनरत्रमे ॥ भवनेवसकल्याणिनिर्विशंकंममाज्ञया ॥ ७८ ॥ मनुरेषयमावेतौयमुनायमसंज्ञकौ ॥ स्वापत्यदृष्ट्याद्रष्टव्यमे तद्बालत्रयंत्वया ॥ ७९ ॥ अनाख्येयमिदंवृत्तंत्वयापत्यौशुचिस्मिते ॥ इत्याकर्ण्याथसात्वाष्ट्रींदेवींछायाजगादह ॥ ८० ॥ आकचग्रहणान्नाहमाशापा च्चकदाचन ॥ आख्यास्यामिचरित्रंतेयाहिदेवियथासुखम् ॥ ८१ ॥ इत्यादिश्यसवर्णांसातथेत्युक्तासवर्णया ॥ पितुरंतिकमासाद्यनत्वात्वष्टारमब्रवीत् ॥ ॥ ८२ ॥ पितःसोढुंनशक्नोमितेजस्तेजोनिधेरहम् ॥ तीव्रंतस्यार्यपुत्रस्यकाश्यपस्यमहात्मनः ॥ ॥ ८३ ॥ निशम्योदीरितंतस्याःपित्रानिर्भर्त्सिता बहु ॥ भर्तुःसमीपंयाहीतिनियुक्तासापुनःपुनः ॥ ८४ ॥ चिंतामवापमहतींस्त्रीणांधिक्चेष्टितंत्विति ॥ निनिंदबहुधात्मानंस्त्रीत्वंचातिनिनिंदसा ॥८५॥ स्वातंत्र्यंनक्वचित्स्त्रीणांधिगस्वातंत्र्यजीवितम् ॥ शैशवेयौवनेप्रांतेपितृभर्तृसुताद्भयम् ॥८६॥ त्यक्तंभर्तृगृहंमौग्ध्याद्धंतदुर्वृत्तयामया ॥ अविज्ञातापिचे च्छायामथपत्युर्निकेतनम् ॥८७ ॥ तत्रास्तिसासवर्णावैपरिपूर्णमनोरथा ॥ अथावतिष्ठेसात्रैवपित्रानिर्भर्त्सिताप्यहम् ॥ ८८ ॥ ततोतिचंडश्चंडांशुःपित्रो रतिभयंकरः ॥ अहोयदुच्यतेलोकैरुपाख्यानमिदंहितत् ॥ ८९ ॥ स्फुटंदृष्टंमयाद्येतिस्वकरांगारकर्षणम् ॥ नष्टंभर्तृगृहंमौग्ध्याच्छ्रेयोवानापितुर्गृहम् ॥ ॥ ९० ॥ वयश्चप्रथमंचारुरूपंत्रैलोक्यकांक्षितम् ॥ सर्वाभिभवनंस्त्रीत्वंकुलंचातीवनिर्मलम् ॥ ९१ ॥ पतिश्चतादृक्सर्वज्ञोलोकचक्षुस्तमोपहः ॥ सर्वेषांकर्मणांसाक्षीसर्वःसर्वत्रसंचरः ॥ ९२ ॥ मह्यंश्रेयःकथंवास्यादितिसापरिचिंत्यच ॥ अगच्छद्वडवाभूत्वातपसेपर्यनिंदिता ॥ ९३ ॥ उत्तरां श्चकुरून्प्रापचरंतीनीरसंतृणम् ॥ व्युत्तेपेचतपस्तीव्रंपतिमाधायचेतसि ॥ तपोबलेनतत्पत्युःसहिष्येतेजइत्यलम् ॥ ९४ ॥

ज्वलदंगारग्रहणम् ॥ वर्षणमितिपाठेत्यागइत्यर्थः ॥ पितुर्गृहंश्रेयोहेतुर्नभवतीत्यर्थः ॥ वाशब्दोवितर्के ॥ गृहेइतिक्वचित् ॥ ९० ॥ ९१ ॥ सर्वःसर्वात्मकः ॥ परात्मत्वात्सूर्यस्य ॥ ईश्वर रूपोवाऽष्टमूर्तित्वात्तस्य ॥ सदेतिपाठेसदासर्वकाले ॥ सर्वत्रसर्वदेशे ॥ ९२ ॥ मह्यंमम ॥ सत्यमितिपाठेसत्यंपरमार्थम् ॥ वडवाऽश्वा ॥ पर्यनिंदितासर्वतोनिन्दाशून्या ॥ कृतनिश्चयेति क्वचित् ॥ ९३ ॥ उत्तरान्कुरून्उत्तरसमुद्रसंलग्नंवर्षम् ॥ चरंतीभक्षयन्ती ॥ व्युत्तेपेविशेषेणउत्कृष्टतयासोत्तेपेतप्तवती ॥ तादृक्नेपइतिपाठेतपोबलेनेत्यस्योपरियादृगितिज्ञातव्यं तादृगनिर्वे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वनीयमतिमहत्तरामितियावत् ॥ तदलमतिशयितंतेजः ॥ :तत्तेजोऽलंसहिष्येइतिवा ॥ ९४ ॥ ९५ ॥ भद्रामितितपत्यानामांतरम् ॥ यद्वा भद्रांसद्वृत्तांनाम्नातपतीमितिपुराणांतरादवगं
तव्यम् ॥ ९६ ॥ ९७ ॥ गौरवाद्गुरुत्वात् ॥ ९८ ॥ पदापादेन ॥ संज्ञायाःसमानंरूपंवर्ततेयस्याःसासंज्ञासरूपिणीताम् ॥ ९९ ॥ यद्यस्मात्समुद्यतउत्थापितः ॥ तत्तस्मात् ॥ एषपादः
॥ १०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ अस्मात्पदात् ॥ ६ ॥ ७ ॥ अयीतिसंबोधने ॥ भामिनिकोपने ॥ भाविनीतिक्वचित् ॥ अनादिषुकनिष्ठेषु ॥ नादिष्वितिपाठेआदि

मन्यमानोथतांसंज्ञांसवर्णायांतदारविः ॥ सावर्णिजनयामासमनुमष्टममुत्तमम् ॥ ९५ ॥ शनैश्चरंद्वितीयंचसुतांभद्रांतृतीयिकाम् ॥ सवर्णास्वेष्वपत्ये
ष्वसापत्न्यात्स्त्रीस्वभावतः ॥ ९६ ॥ चकाराभ्यधिकंस्नेहंनतथापूर्वजेष्वथ ॥ मनुस्तत्क्षांतवाञ्ज्येष्ठोभक्ष्यालंकारलालने ॥ ९७ ॥ कनिष्ठेष्वधिकंदृष्ट्वा
सावर्ण्यादिषुनोयमः ॥ कदाचिद्रोषतोबाल्याद्भाविनोर्थस्यगौरवात् ॥ ९८ ॥ पदासंतर्जयामासयमःसंज्ञासरूपिणीम् ॥ तंशशापचसाक्रोधात्सावर्णेर्ज
ननीतदा ॥ ९९ ॥ जिघांसतात्वयापापमांयदंघ्रिःसमुद्यतः ॥ अचिरात्तत्पतत्वेषतवेतिभृशदुःखिता ॥ १०० ॥ मातृशापपरित्रस्तोयमोपिपितुरग्रतः ॥
शशंससर्वंतद्वृत्तंरक्षरक्षेत्युवाचच ॥ १ ॥ मात्रासुतेषुसर्वेषुवर्तनीयंसमंयतः ॥ तस्यांमयोद्यतःपादोनदेहेपरिपातितः ॥ २ ॥ बाल्याद्वायदिवामोहा
त्तद्भवान्क्षंतुमर्हसि ॥ गोपतेशापतोमातुर्मापतत्वंघ्रिरेषमे ॥३॥ ॥ विवस्वानुवाच ॥ ॥ अपराधसहस्रेपिजननीनशपेत्सुतम्॥तस्मात्किमपिभोबालभ
विष्यत्यत्रकारणम् ॥ ४ ॥ येनत्वांसाऽशपत्क्रोधाद्धर्मज्ञंसत्यवादिनम् ॥ मातृशापोन्यथाकर्तुंनशक्यःकेनचित्क्वचित् ॥ ५ ॥ कृमयोमांसमादाययास्यं
त्यस्मान्महीतलम् ॥ इत्थंतुचरितार्थःस्याच्छापस्त्रातोभवानपि ॥ ६ ॥ इतिपुत्रंसमाश्वास्यरविरंतःपुरंययौ ॥ चिरमालोक्यतांभार्यामुवाचसविता
वचः ॥ ७ ॥ अयिभामिनिबालेषुसमेष्वपिकुतस्त्वया ॥ विधीयतेऽधिकःस्नेहःसावर्ण्यादिष्वनादिषु ॥ ८ ॥ नाचचक्षेयदासाऽथभास्वतेपरिपृच्छते ॥
तदात्मानंसमाधायसोज्ञासीत्सर्वमेवहि ॥ ९ ॥ ततोभगवतेशप्तुमुद्यतेसाशशंसह ॥ यथावृत्तंतथातथ्यंतुतोषभगवानपि ॥ ११० ॥ तथ्यभाषणत
स्तांतुरविर्ज्ञात्वानिरागसम् ॥ नशशापचसंक्रुद्धोययौचत्वष्टुरंतिकम् ॥११॥ त्वष्टापिचयथान्यायंसान्त्वयंतिग्मतेजसम् ॥ निर्दग्धुकामंकोपेनप्रागानर्च
सुदातदा ॥ विज्ञायतदभिप्रायंत्वष्टोवाचाऽशुतंरविम् ॥ १२ ॥ त्वष्टोवाच ॥ ॥ तवातितेजसोभीताप्राप्योत्तरकुरूनूरवे ॥ वडवारूपमास्थायवनेचर
तिशाद्वले ॥ १३ ॥ द्रष्टाहितांभवानद्यस्वांभार्यामार्यचारिणीम् ॥ अधृष्यांसर्वभूतानांतेजसांनियमेनच ॥ १४ ॥

पुत्राद्देवादिषु ॥ ८ ॥ आत्मानमन्तःकरणंसमाधायस्थिरीकृत्य ॥ मनसाध्यानंविधायेत्येतत् ॥ ९ ॥ ११० ॥ ११ ॥ अनुपश्चादयन्तीत्यन्वयामाठरपिंगलादयस्तत्स
हितंसान्वयम् ॥ सांत्वयन्निनिक्वचित् ॥ १२ ॥ १३ ॥ आर्यचारिणीमार्यवद्वर्तनशीलांयस्यास्ताम् ॥ नियमेनचेतिचकारस्तेजसामित्यनेनसंबध्यते ॥ तेजसेतिवापाठः ॥ १४ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यद्यस्मात्तक्षितस्तनूकरणत्वंप्रापितः ॥ भ्रमिंकुंदम् ॥ भ्रमोंऽबुनिर्गमेभ्रांतौकुंदाख्येशिल्पयंत्रकइतिविश्वप्रकाशस्तस्यार्थपरत्वाद्भ्रमिरपितथा ॥ १९ ॥ अरद्भुतम् ॥ अथेतिकश्चित् ॥ १६ ॥ वृण्वंतीमावृण्वंतींभक्षयंतीमितियावत् ॥ तृण्वंतीमितिकश्चित् ॥ १७ ॥ अनेनसंनिष्पापाम् ॥ हरिःसूर्यः ॥ हरिरूपेणाश्वरूपेण ॥ हरिरूपोऽभूदितिकश्चित्तदाक्रियाभेदादन्वयभेदः ॥ समभावयत्सं गमकरोत् ॥ १८ ॥ १९ ॥ १२० ॥ २१ ॥ निर्वृत्तिंस्वास्थ्यम् ॥ निर्वृतिमितिपाठेसुखम् ॥ युक्तमेतदित्याह ॥ दुष्प्रापमिति ॥ २२ ॥ २३ ॥ महोज्योतिः ॥ २४ ॥

त्वष्ट्रायत्तक्षितःसूर्यस्तस्यैवानुमतेनच ॥ भ्रमिमारोप्ययत्नेनसोतिकांततरोऽभवत् ॥ १५ ॥ लब्धानुज्ञोऽथसवितागत्वोत्तरकुरूनरम् ॥ साक्षात्तपोमयीं लक्ष्मींचरंतींचतपोमहत् ॥ १६ ॥ ददर्शवडवारूपांवाडवानलतेजसम् ॥ नीरसानितृणान्येववृण्वंतींयोगमायया ॥ १७ ॥ अनेनसंसविज्ञायतांत्वाष्ट्री मश्वरूपिणीम् ॥ सहरिर्हरिरूपेणमुखेनसमभावयत् ॥ १८ ॥ त्वरमाणाचपरितःपरपूरुषशंकया ॥ सातन्निरवमच्छुक्रंनासिकाभ्यांविवस्वतः ॥ १९ ॥ देवौतस्मादजायेतामश्विनौभिषजांवरौ ॥ स्वरूपमनुरूपंचद्युमणिस्तामदर्शयत् ॥ १२० ॥ तुतोषसापितंदृष्ट्वामित्रंनेत्रमुदावहम् ॥ पतिंपतिव्रताकां तंस्वांतसंतापहारिणम् ॥ २१ ॥ निर्वृत्तिंचपरांप्रापदुष्प्रापंतपसाथकिम् ॥ तपएवपरंश्रेयस्तपएवपरंधनम् ॥ २२ ॥ तपएवहिदेवत्वेकारणंपरमंमतम् ॥ शिवशर्मन्नयदेतद्देदृश्यतेचातिदीप्तिमत् ॥ २३ ॥ ज्योतिश्चक्रस्वरूपंचव्योम्न्युपर्यधएवच ॥ तत्सर्वमिहजानीहिसुमहत्तापसंमहः ॥२४॥ एवंशनैश्चरो जज्ञेसवर्णायांविवस्वतः ॥ सोऽथवाराणसींगत्वासर्वत्रिदशवंदिताम् ॥ २५ ॥ तप्त्वातपोऽतिविपुलंलिंगंसंस्थाप्यशांकरम् ॥ इमंलोकमवापोच्चैर्ग्रहत्वं चहरार्चनात् ॥२६॥ शनैश्चरेश्वरंदृष्ट्वावाराणस्यांसुशोभनम् ॥ शनिबाधानजायेतशनिवारेतदर्चनात् ॥२७॥ विश्वेशाद्दक्षिणेभागेशुक्रेशादुत्तरेणहि ॥ शनैश्चरेशमभ्यर्च्यलोकेऽत्रपरिमोदते ॥ २८ ॥ श्रुत्वाऽध्यायमिमंपुण्यंग्रहपीडानजायते ॥ नोपसर्गभयंतस्यकाश्यांनिवसतःसतः ॥ १२९ ॥ इति श्रीस्कांदे महापुराणे एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे भौमगुरुशनिलोकवर्णनं नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ अग स्तिरुवाच ॥ ॥ इतिशृण्वन्कथांरम्यांशिवशर्माऽथमाथुरः ॥ मुक्तिपुर्यांसुसंस्नातोमायापुर्यांगतासुकः ॥१॥ नेत्रयोःप्राघुणीचक्रेततःसप्तर्षिमंडलम् ॥ व्रजन्सवैष्णवंलोकमंतेविष्णुपुरीक्षणात् ॥ २ ॥

॥ २५ ॥ २६ ॥ २७ ॥ शुक्रेशादुत्तरेणशुक्रेश्वरस्योत्तरइत्यर्थः ॥ दक्षिणेनेतिपाठश्चित्यः ॥ २८ ॥ एतदध्यायश्रवणफलमाह ॥ श्रुत्वेति ॥ १२९ ॥ इतिश्रीरामानन्दविरचितायांकाशीखण्डटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ अष्टादशेमरीच्यत्रिपुलस्त्यपुलहक्रतु ॥ वसिष्ठांगिरसांलोकोवर्ण्यतेत्यन्तउज्ज्वलः ॥ ॥ १ ॥ इतीति ॥ अथानन्तरंशिवशर्माइतिइत्थंकथांशृण्वन्सप्तर्षिमण्डलंनेत्रयोःप्राघुणींचक्रेप्रत्यक्षीचकारेतिसार्धेनान्वयः ॥ व्रजन्निति ॥ सशिवशर्मावैष्णवंलोकंव्रजन्गच्छन्देहेवौ

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ मागधैर्देवप्रभेदैः ॥ ३ ॥ स्थितास्विति ॥ वयंमन्दभाग्याएवेतितासुदे
कस्यायमतुलोलोकइत्युवाचपप्रच्छेतिचतुर्थेनान्वयः ॥ २ ॥ चकारःसमुच्चये ॥ नकेवलंव्रजन्व्रजतिउवाचचेत्यर्थः ॥ मागधैर्देवप्रभेदैः ॥ ३ ॥ स्थितास्विति ॥ वयंमन्दभाग्याएवेतितासुदे
वकन्यासुनिःश्वस्यस्थितासुसतीषुअसौशिवशर्मापुण्यतमान्सप्तर्षिलोकान्गतोगतवान् ॥ यतोऽसौपुण्यवतांमध्येश्रेष्ठइत्यगस्त्यवाक्यम् ॥ इतितिष्ठतिष्ठेत्यादिवचनानिशृण्वन्नित्यन्वयः ॥ असौपुण्यत
मान्लोकान्गतोयतोऽसौपुण्यकृत्तमोवयंमन्दभाग्याःस्वल्पपुण्याइतितासुनिःश्वस्यस्थितासुसतीषुउवाचेतिपूर्वेणैवान्वयः ॥ गन्तेतिपाठेगमिष्यतीत्यर्थः ॥ ४ ॥ ५ ॥ सदाशिवामंगलरूपाशिवेवामाति
र्यस्य॥शिवगतइतिपाठेशिवएवगतिर्यस्य ॥ शेषंपूर्ववत् ॥ उभयपाठेतत्संबोधनंतथा ॥ सदेत्यत्रापीतिकचित्पाठः ॥ ६ ॥ प्रजासृजाब्रह्मणा ॥ ७ ॥ सुताःपुत्राः ॥ प्रजाइतिपाठेपिसएवार्थः ॥ ८ ॥

॥ गतःपुण्यतमाँ
ल्लोकानसौयत्पुण्यवत्तमः ॥ ४ ॥ इतिशृण्वन्मुखात्तासांवचनानिविमानगः ॥ देवौकस्यायमतुलोलोकस्तेजोमयःशुभः ॥ ५ ॥ इतिद्विजवचःश्रुत्वाप्रो
वाचचप्रसन्नात्मास्तुतश्चारणमागधैः ॥ प्रार्थितोदेवकन्याभिस्तिष्ठतिष्ठेतिचक्षणम् ॥ ३ ॥ स्थितासुतासुनिःश्वस्यमंदभाग्यावयंत्विति
चतुर्गणसत्तमौ ॥ शिवशर्मंश्छिवमतेसदासत्पर्योमलाः ॥ ६ ॥ वसंतीहप्रजाःस्रष्टुंविनियुक्ताःप्रजासृजा ॥ मरीचिरत्रिःपुलहःपुलस्त्यःक्रतुरंगिराः ॥ ७ ॥
वसिष्ठश्चमहाभागोब्रह्मणोमानसाःसुताः ॥ सप्तब्रह्माणइत्येतेपुराणेनिश्चयंगताः ॥ ८ ॥ संभूतिरनसूयाचक्षमाप्रीतिश्चसन्नतिः ॥ स्मृतिरूर्जाक्रमादे
षांपत्न्योलोकस्यमातरः ॥ ९ ॥ एतेषांतपसाचैतद्धार्यतेभुवनत्रयम् ॥ उत्पाद्यब्रह्मणापूर्वमेतेप्रोक्तामहर्षयः ॥ १० ॥ प्रजाःसृजतरेपुत्रानानारूपाःप्रयत्नतः ॥
ततःप्रणम्यब्रह्माणंतपसेकृतनिश्चयाः ॥ ११ ॥ अविमुक्तंसमासाद्यक्षेत्रंक्षेत्रज्ञधिष्ठितम् ॥ मुक्तयेसर्वजंतूनामविमुक्तंशिवेनयत् ॥ १२ ॥ प्रतिष्ठाप्यच
लिंगानितेस्वनाम्नांकितानिच ॥ शिवेतिपरयाभक्त्यातेपुरुग्रंतपोभृशम् ॥ १३ ॥ तुष्टस्तत्तपसाशंभुःप्राजापत्यपदंददौ ॥ लिंगान्यत्रीश्वरादीनिदृष्ट्वाकाश्यां
प्रयत्नतः ॥ १४ ॥ प्राजापत्येऽत्रतेलोकेवसंत्युज्ज्वलतेजसः ॥ गोकर्णेशस्यसरसःप्रत्यक्तीरेप्रतिष्ठितम् ॥ १५ ॥ लिंगमत्रीश्वरंदृष्ट्वाब्रह्मतेजोभिवर्धते ॥
ककोंटवाप्याईशानेमरीचेःकुंडमुत्तमम् ॥ १६ ॥ तत्रस्नात्वानरोभक्त्याभ्राजतेभास्करोयथा ॥ मरीचीश्वरसंज्ञंतुतत्रलिंगंप्रतिष्ठितम् ॥ १७ ॥
तल्लिंगदर्शनाद्विप्रमारीचंलोकमाप्नुयात् ॥ कांत्यामरीचिमालीवशोभतेपुरुषर्षभः ॥ १८ ॥ पुलहेशपुलस्त्येशौस्वर्गद्वारस्यपश्चिमे ॥ तौदृष्ट्वामनुजोलोके
प्राजापत्येमहीयते ॥ १९ ॥ हरिकेशवनेरम्येदृष्ट्वैवांगिरसेश्वरम् ॥ इहलोकेवसेद्विप्रतेजसापरिबृंहितः ॥ २० ॥ वरणायास्तटेरम्येदृष्ट्वावासिष्ठमीश्वरम् ॥
क्रत्वीश्वरंचतत्रैवलभतेवसतिंत्विह ॥ २१ ॥ काश्यामेतानिलिंगानिसेवितानिशुभैषिभिः ॥ मनोभिवांछितंदद्युरिहलोकेपरत्रच ॥ २२ ॥

॥ ११ ॥ ततआज्ञादानानंतरंतेमुनयोऽविमुक्तंसमासाद्यतत्रस्वनाम्नालिंगानिप्रतिष्ठाप्यशिवेपरयाभक्त्याऽतिअत्यर्थमुक्तंतपस्तेपुरित्यग्रिमेणान्वयः ॥ ११ ॥
ऊर्जाअरुंधती ॥ ९ ॥ १० ॥ ततइति ॥ सकलप्राणिनांमुक्त्यैशिवेनाविमुक्तंनत्यक्तंयत्तद
कीदृशमविमुक्तम् ॥ क्षेत्रज्ञेनईश्वरेणाधिष्ठितमाश्रितमित्यर्थः ॥ विष्ठितमितिपाठेविशेषेणाधिष्ठितमित्यर्थः ॥ अविमुक्तनामनिरुक्तिर्मुक्तयइति ॥
विमुक्तमित्यर्थः ॥ यद्यस्मादितिवा ॥ १२ ॥ १३ ॥ १४ ॥ प्राजापत्ये प्रजापतीनांमरीच्यादीनांसंबंधिनि ॥ गोकर्णेशस्यसरसःप्रत्यक्तीरेपश्चिमेतीरेप्रतिष्ठितंप्रतिष्ठाविधिनास्थापितमित्यर्थः ॥
गोकर्णस्यास्येतिपाठेबुद्धिसन्निहितत्वादस्येतिनिर्देशः ॥ १५ ॥ १६ ॥ १७ ॥ [illegible] ॥ १८ ॥ १९ ॥ २० ॥ इहवाराणस्यांसप्तर्षिमंडलेवा ॥ २१ ॥ शुभैषिभिः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कैवल्येप्सुभिः ॥ २२ ॥ वसिष्ठस्याप्यरुंधतीमितिभागवतोक्तेरपिशब्दाद्वसिष्ठस्यान्यापत्न्यस्तिसाप्यत्रतिष्ठतीत्याहतुः ॥ पतिव्रतेति ॥ २३ ॥ २४ ॥ २५ ॥ हेकमलेहेभामिनिपतिव्रतासुमध्येयथाऽ
रुंधत्याविमलाशयोऽस्ति विमलश्चासावाशयश्चेतिविमलाशयःशुद्धांतःकरणमित्यर्थः ॥ नतथाकुत्राप्यन्यस्याःकस्याश्चिदित्यर्थः ॥ २६ ॥ नतादितिश्लोकद्वयंवाक्यम् ॥ हेदेविहेप्रियेअरुंधत्यां
यथारूपादीनितथाऽन्यासांनसंतीत्यर्थः ॥ तत्प्रसिद्धम् ॥ शुश्रूषणंनवेतिक्वचित्पाठः ॥ २७ ॥ आर्यपरितोषणंश्वशुरादीनांशुश्रूषणम् ॥ २८ ॥ धन्याइति ॥ याःस्त्रियःप्रसंगेऽवसरेऽरुंधत्याना
मापिनाममात्रमपिपरिगृह्णतेपरिगृह्णंतितायोषितोधन्याइत्यर्थः ॥ प्रसंगेनयन्नामपरिगृह्यतइतिक्वचित्पाठस्तत्रारुंधत्याःप्रसंगेनयन्नामयासांनामपरिगृह्यतेतायोषितइत्यादिपूर्ववत् ॥ २९ ॥ यदेति ॥
अस्मद्भवनेवैकुंठेयदापतिव्रतानांकथाभवेत्तदाप्राथमिकींरेखामेषाऽरुंधतीसतीपतिव्रताऽलंकुरुते ॥ पतिव्रतानांगणनायांयदारेखाध्रियंतेतदाप्रथमारेखाएतन्नाम्नाध्रियते ॥ सर्वपतिव्रतानांमध्ये
श्रेष्ठत्वादस्याइतिभावः ॥ ३० ॥ ब्रुवतोरिति ॥ ततस्तदनंतरंवैष्णवयोर्गणयोर्नयनातिथ्यंनेत्रगोचरंध्रुवलोकउपागतःप्राप्तइत्यन्वयः ॥ कीदृशोर्गणयोः ॥ इत्युक्तप्रकारांसंकथांसमीचीनां

गणावूचतुः ॥ ॥ शिवशर्मन्महाभागतिष्ठतेसात्रसुंदरी ॥ अरुंधतीमहापुण्यापतिव्रतपरायणा ॥ २३ ॥ यस्याःस्मरणमात्रेणगंगास्नानफलंलभेत् ॥
अंतःपुरचरैर्द्विव्रैःपवित्रैःसहितोविभुः ॥ २४ ॥ सदानारायणोदेवोयस्याश्चक्रेकथांमुदा ॥ कमलायाःपुरोभागेपातिव्रत्यसुतोषितः ॥ २५ ॥ पतिव्रता
स्वरुंधत्याःकमलेविमलाशयः ॥ यथास्तिनतथाऽन्यस्याःकस्याश्चित्क्वापिभामिनि ॥२६॥ नतद्रूपंनतच्छीलंनतत्कौलीन्यमेवच ॥ नतत्कलासुकौ
शल्यंपत्युःशुश्रूषणंनतत् ॥ २७ ॥ नमाधुर्यंनगांभीर्यंनचार्यपरितोषणम् ॥ अरुंधत्यायथादेवितथाऽन्यासांक्वचित्प्रिये ॥ २८ ॥ धन्यास्तायोषितो
लोकेसभाग्याःशुद्धबुद्धयः ॥ अरुंधत्याःप्रसंगेयानामापिपरिगृह्णते ॥ २९ ॥ यदापतिव्रतानांतुकथास्मद्भवनेभवेत् ॥ तदाप्राथमिकींरेखामेषाऽलंकुरुते
सती ॥ ३० ॥ ब्रुवतोरितिसंकथांतथागणयोर्वैष्णवयोर्मुदावहाम् ॥ ध्रुवलोकउपागतस्ततोनयनातिथ्यमतथ्यवर्जितः ॥ ३१ ॥ ॥ इतिश्रीस्कांदे
महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे सप्तर्षिलोकवर्णनंनामाष्टादशोऽध्यायः ॥१८॥ शिवशर्मोवाच ॥ तिष्ठन्नेकेनपादेनको
यंभ्रमतिसत्तमौ ॥ अनेकरशनाव्यग्रहस्ताग्रोव्यग्रलोचनः ॥१॥ त्रिलोकीमंडपस्तंभसन्निभोभाभिरावृतः ॥ अतुलंज्योतिषांराशिंतुलयातुलयन्निव॥२॥

कथांब्रुवतोर्ब्रुवाणयोः ॥ कीदृशींकथाम् ॥ मुदावहाम् ॥ कथंभूतोलोकः ॥ अतथ्यवर्जितोदैनंदिनप्रलयरहितस्त्रैलोक्यनाशेप्यविनश्वरइतियावत् ॥ तथाचभागवतेभगवद्वचनम् ॥ स्थास्नुः
परस्तात्कल्पवासिनामिति ॥ ३१ ॥ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायामष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ एकोनविंशकेऽध्यायउपरिष्टात्त्रिलोकतः ॥ वर्ण्यतेऽ
त्यद्भुताकारोध्रुवलोकेध्रुवःपरः ॥ १ ॥ ध्रुवलोकउपागतस्ततोनयनातिथ्यमित्युक्तंतत्रतिष्ठन्नितिप्रथमश्लोकेनसंदिग्धत्वेनानूद्यत्रिलोकीत्यादिनासार्धद्वयेनमध्येचतुर्थोत्प्रेक्ष्यपश्चात्कोयमित्यर्थेन
पृच्छाति ॥ तिष्ठन्नेकेनेत्यादिना ॥ एकेनपादेनार्थादेकंपादमुत्तोल्येत्यर्थः ॥ यद्वा एकेनपादेनएकरूपत्वेनास्थितेनपादद्वयेनेत्यर्थः ॥ तिष्ठन्हेसत्तमौसतांमध्येश्रेष्ठौकोयंभ्रमति ॥ कथंभूतः ॥
अनेकरसनाव्यग्रहस्ताग्रोनानाविधवातमयरज्ज्वाकुलकरांगुलिः ॥ व्यग्रलोचनश्चंचलनेत्रः ॥ १ ॥ त्रिलोक्येवमंडपस्तस्यस्तंभसन्निभःस्थूणासदृशः ॥ भाभीरश्मिभिरावृतः ॥ एवंसंदेहारूप

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ व्योम०व्यायामस्याकाशविस्तारस्यपरिमापकःपरिगणकोवा ॥ दत्वेनानुग्यचतुर्थोत्प्रेक्षते ॥ अतुलमपरिमितंज्योतिषांसूर्यादीनांराशिंतुलयापरिमाणपात्रेणतुलयन्निवपरिमापयन्निवेत्यर्थः ॥ २ ॥ त्रिविक्रमोवामनस्तदीय अग्रिमस्यवाशब्दस्यात्रानुषंगः ॥ कइव ॥ सूत्रधारइव ॥ यथागृहीतसूत्रःस्थपत्यादिर्गृहादिभूमिंपरिमापयतितद्वदित्यर्थः ॥ परिमाणकइतिपाठेपिसएवार्थः ॥ तदेवंचतुर्थो त्रैविक्रमोंऽघ्रिदण्डःपाददंडोवा ॥ कथंभूतः ॥ प्रोद्दंडोमहत्तरइत्यर्थः ॥ गगनमेवांगणंप्रांगणंतस्मिन् ॥ ३॥ अथवांबरमाकाशमेवकासारःसरस्तत्रसारयूपस्वरूपधृक्श्रेष्ठयूपस्वरूपभृत् ॥ तमेस्यपृच्छाति ॥ कोऽयमिति ॥ ४ ॥ निशम्येत्यगस्त्योक्तिः ॥ ध्रुवांध्रुवफलांनिश्चितफलांनिश्चितार्थामितियावत् ॥ ५ ॥ उत्तानचरणउत्तानपादः ॥ ६॥ अपरःकनिष्ठः ॥ मध्येसभंसभायामध्ये

सूत्रधारइवव्योमव्यायामपरिमापकः ॥ त्रैविक्रमोंत्रिदंडोवाप्रोद्दंडोगगनांगणे ॥ ३ ॥ अथवांबरकासारसारयूपस्वरूपधृक् ॥ कोयंकथयतंदेवौकृपयापृच्छामि वां सखे ॥ क्रियमम ॥ ४ ॥ निशम्येतिवचस्तस्यवयस्यस्यविमानगौ॥ प्रणयादाहतुस्तस्मैध्रुवांध्रुवकथांगणौ ॥५॥ ॥ गणावूचतुः ॥ ॥ मनोःस्वायंभुवस्यासीदुत्तानचरणःसुतः ॥ तस्यक्षितिपतेर्विप्रद्वौसुतौसंबभूवतुः ॥ ६ ॥ सुरुच्यामुत्तमोज्येष्ठःसुनीत्यांतुध्रुवोपरः ॥ मध्येसभंनरपतेरुपविष्टस्यचैकदा ॥ ७ ॥ सुनीत्याराजसेवायैनियुक्तोऽलंकृतोर्भकः ॥ ध्रुवोधात्रेयिकापुत्रैःसमंविनयतत्परः ॥ ८॥ सगत्वोत्तानचरणंक्षोणीशंप्रणनामह ॥ दृष्ट्वोत्तमंतदुत्संगेनिविष्टंजनकस्यवै ॥ ९ ॥ प्रोच्चसिंहासनस्थस्यनृपतेर्बाल्यचापलात् ॥ आरोढुकामस्त्वभवत्सौनीतेयस्तदाध्रुवः ॥ १० ॥ आरुरुक्षुमवेक्ष्यामुंसुरुचिर्ध्रुवमब्रवीत् ॥ दौर्भगेयकिमारोढुमिच्छेरंकंमहीपतेः ॥ ११ ॥ बालबालिशबुद्धित्वादभाग्याजठरोद्भव ॥ अस्मिन्सिंहासनेस्थातुंनत्वयासुकृतंकृतम् ॥ १२ ॥ यदिस्यात्सुकृतंतत्किंदुर्भगोदरगोऽभवः ॥ अनेनैवानुमानेनबुध्यस्वस्वाल्पपुण्यताम् ॥ १३ ॥ भूत्वाराजकुमारोपिनालंकुर्याममोदरम् ॥ सुकुक्षिजममुंपश्यत्वमुत्तममनुत्तमम् ॥ १४ ॥ अधिजानुधराजानेर्मानेनपरिबृंहितम् ॥ प्रांशोःसिंहासनस्यास्यरुचिश्चेदधिरोहणे ॥ १५ ॥ कुक्षिंहित्वाकिमवसःसुरुचेश्चसुरोचिषम् ॥ मध्येभूपसभंबालस्तयेतिपरिभर्त्सितः ॥ १६ ॥ पतन्निपीतबाष्पांबुर्धैर्यात्किंचिन्नचोक्तवान् ॥ उचिताऽनुचितंकिंचिन्नोचिवान्सोपिपार्थिवः ॥ १७ ॥ नियंत्रितोमहिष्याश्चतस्याःसौभाग्यगौरवात् ॥ विसृज्यचसभालोकंशोकंसंमृज्यचेष्टितैः ॥ १८ ॥

॥ ७ ॥ नियुक्तःप्रेषितः ॥ धात्रेयिकापुत्रैरुपमातृकापुत्रैःसह ॥ ८ ॥ ९ ॥ आरोढुकामआरुरुक्षुमित्यत्रचअग्रिमस्यांकमित्यस्यानुषंगः ॥ १० ॥ दौर्भगेयदुर्भगायाःपुत्र ॥ ११ ॥ बालहे बालक॥बालिशबुद्धित्वान्मूर्खबुद्धित्वात्॥ १२॥तत्तदा॥किंकथम् ॥ अभवोजातोसि ॥ १३॥ नालंकुर्याःनालंकृतवानसि ॥ नविद्यतेउत्तमोयस्मात्सतथातमनुत्तमम्॥ १४॥धराजानेःपृथ्वीपतेः ॥ परिबृंहितमुपलालितम् ॥ प्रांशोरिति ॥ अस्यप्रांशोरुच्चस्यसिंहासनस्याधिरोहणेरुचिश्चेत्तदासुरुचेर्ममकुक्षिमुदरंहित्वाकिंकिमर्थमवसोवसतिंकृतवानसि॥ सुनीतेःकुक्षावितिशेषः॥कथंभूतंकुक्षिम् ॥ सुरोचिषंसुष्ठुदीप्तिमन्तम् ॥ १५ ॥ १६ ॥ पतन्निर्गच्छन्निपीतंबाष्पांबुनेत्रजलंयेनसपतन्निपीतबाष्पांबुः ॥ [illegible] ॥ १७ ॥ उचितानुचितानुक्तौहेतुस्तस्याःसुरुच्याःपट्टमहिष्याः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सौभाग्यगौरवात्सौभाग्यातिशयेननियंत्रितोवशीकृतइति ॥१८॥ शैशवैःशिशुसंबन्धिभिश्चेष्टितैः ॥ शोकंसंमृज्यप्रकटमकृत्वासध्रुवःशिशुर्बालः ॥ शिशुभिःसहसशिशुरितिवा ॥ १९ ॥ मुखलक्ष्म्यामु
खशोभयाम्लानमुखश्रियेत्यर्थः ॥ समवमानितंसम्यगवज्ञातम् ॥ २० ॥ किंचित्परिम्लानमिवमनाक्म्लानमिव ॥ ससांत्वंसांत्वनसहितंयथास्यात्परिषस्वजेआलिंगितवती ॥ २१॥२२॥ दुकूलांचल
संपर्कैःपट्टवस्त्रांतसंघर्षणैः ॥ कथंभूतैः ॥ मृदुलैःकोमलैः ॥ २३ ॥ केनास्यमानितःकेनजनेनापमानितोऽवमानितस्तिरस्कृतोऽसिभवासिजातोसीत्येतत ॥ सोपरोधंम्उपरोधसहितंयथास्यात् ॥
यद्वा सोपरोधमंतःपुरंनिभृतमित्येतत् ॥ सध्रुवस्तामितिपाठेतांमातरंपर्यभाषतपरितोभावेनपप्रच्छेत्यर्थः ॥ २४ ॥ भाषणमेवाह संपृच्छेइतिचतुर्भिः ॥ संपृच्छेपृच्छामि ॥ जननिहेमातः ॥

शैशवैःसशिशुर्नत्वानृपंस्वसदनंययौ ॥ सुनीतिर्नीतिनिलयमवलोक्याथबालकम् ॥ १९ ॥ मुखलक्ष्म्यैवचाज्ञासीद्ध्रुवंसमवमानितम् ॥ अभिसृत्यचतं
बालंमूर्ध्न्युपाघ्रायसासकृत् ॥ २० ॥ किंचित्परिम्लानमिवससांत्वंपरिषस्वजे ॥ अथदृष्ट्वासुनीतिंसरहोंतःपुरवासिनीम् ॥२१॥ दीर्घंनिःश्वस्यबहुशो
मातुरग्रेरुरोदह ॥ सांत्वयित्वाश्रुनयनावदनंपरिमार्ज्यच ॥ २२ ॥ दुकूलांचलसंपर्कैर्मृदुलैर्मृदुपाणिना ॥ पप्रच्छतनयंमातावदरोदनकारणम् ॥ वि
द्यमानेनरपतौशिशोकेनापमानितः ॥ २३ ॥ अपोथसमुपस्पृश्यतांबूलंपरिगृह्यच ॥ मात्रापृष्टःसोपरोधंध्रुवस्तांपर्यभाषत ॥२४॥ संपृच्छेजननित्वाहं
सम्यक्शंसममाग्रतः ॥ भार्यात्वेपिचसामान्येकथंसासुरुचिःप्रिया ॥ २५ ॥ कथंनभवतीमातःप्रियाक्षितिपतेरसि ॥ कथमुत्तमतांप्राप्तउत्तमःसुरुचेः
सुतः ॥ २६ ॥ कुमारत्वेपिसामान्येकथंत्वहमनुत्तमः ॥ कथंत्वंमंदभाग्यासिसुकुक्षिःसुरुचिःकथम् ॥२७॥ कथंनृपासनंयोग्यमुत्तमस्यकथंनमे ॥ कथं
मेसुकृतंतुच्छमुत्तमस्योत्तमंकथम् ॥ २८ ॥ इतिश्रुत्वावचस्तस्यसुनीतिर्नीतिमच्छिशोः ॥ किंचिदुच्छ्वस्यशनकैःशिशुकोपोपशांतये ॥ २९ ॥
स्वभावमधुरांवाणींवक्तुंसमुपचक्रमे ॥ सापत्नंप्रतिघंत्यक्त्वाराजनीतिविदांवरा ॥३०॥ ॥ सुनीतिरुवाच ॥ ॥ अयितातमहाबुद्धेविशुद्धेनांतरात्मना ॥
निवेदयामितेसर्वंमाऽपमानेमतिंकृथाः ॥ ३१ ॥ तयायदुक्तंतत्सर्वंतथ्यमेवनचान्यथा ॥ सापत्युर्महिषीराज्ञोराज्ञीनामतिवल्लभा ॥ ३२ ॥ तयाजन्मां
तरेतातयत्पुण्यंसमुपार्जितम् ॥ तत्पुण्योपचयाद्राजासुरुच्यांसुरुचिर्भृशम् ॥ ३३ ॥ मादृश्योमंदभाग्यायाःप्रमदासुप्रतिष्ठिताः ॥ केवलंराजपत्नी
त्ववादस्तासुनतद्रुचिः ॥ ३४ ॥ महासुकृतसंभारैरुत्तमश्चोत्तमोदरे ॥ उवासतस्याःपुण्यायानृपसिंहासनोचितः ॥ ३५ ॥

त्वात्वाम् ॥ सम्यक्शंससत्यंकथय ॥ २५ ॥ २६ ॥ अहंतेसुतइत्यनुषज्जते ॥ अनुत्तमोऽपकृष्टस्तुच्छइत्यर्थः ॥ २७ ॥ २८ ॥ नीतिमद्वचइत्यन्वयः ॥ नीतिमांश्चासौशिशुश्चेतिनीतिमच्छिशुः
नीतिमच्छिशोस्तस्यध्रुवस्यवचइतिवान्वयः ॥ २९ ॥ सापत्नंसपत्नीविषयंप्रतिघंप्रतिकूलंप्रतिपक्षमितियावत् ॥ ३० ॥ अयीतिसानुकंपसंबोधने ॥ कृथाःकुरु ॥ ३१ ॥ ३२ ॥ ३३ ॥
मादृश्यइति ॥ प्रमदासुमध्येप्रतिष्ठिताःस्थितामादृश्योयामंदभाग्यास्तास्वस्माकंकेवलंराजपत्नीत्ववादोनृपभार्यात्वकथनमात्रंनतद्रुचिः ॥ तस्योत्तानपादस्यराज्ञोरुचिःप्रीतिर्नास्तीत्यर्थः ॥३४॥३५॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

आतपत्रंचेत्याद्यानांनियमैर्यमैरित्यंतानांद्वादशश्लोकानामेतैर्मनोरथफलैस्तपोद्रुमास्तपांस्येवद्रुमावृक्षाःफलंत्येवेतित्रयोदशेनान्वयः ॥ भद्रासनंराजसिंहासनम् ॥ सिंधुरागजाः ॥ मदोद्धुरामदोन्मत्ताः ॥ ३६ ॥ तुरंगमाअश्वाः ॥ तुरगाःशीघ्रगाः ॥ अनाधिव्याधि नविद्येतेआधिव्याधीमानसव्यथारोगौयस्मिंस्तज्जीवितम् ॥ तथाप्राज्यंप्रजासुखम् ॥ यद्वा प्राज्यंश्रेष्ठम् ॥ प्राच्यमितिपाठेप्राच्यंप्राचीदिग्भवमैश्वर्यम् ॥ एतच्चाग्न्यादिदिग्भवैश्वर्याणामुपलक्षणम् ॥ ३७ ॥ अपराजितंपरैःशत्रुभिरितिशेषः ॥ अरिश्चासौषड्वर्गइन्द्रियषड्वर्गश्चेत्यरिषड्वर्गस्तस्मिन् ॥ इंद्रियारिषड्वर्गस्यपराभवइत्यर्थः ॥ अरिषड्वर्गैरितिपाठेअजयइतिच्छेदः ॥ ३८ ॥ ३९ ॥ साप्रसिद्धा ॥ येतिवापाठः ॥ ओर्जस्वलाऔदार्यवती ॥ ४० ॥ सदोऽजिरेसभांगणे ॥४१॥ स्त्रीप्रयोगेषुस्त्रीविषयव्यवहारेषु ॥

आतपत्रंचचंद्राभंशुभेचापिचचामरे ॥ भद्रासनंतथोच्चंचसिंधुराश्चमदोद्धुराः ॥ ३६ ॥ तुरंगमाश्चतुरगास्त्वनाधिव्याधिजीवितम् ॥ निःसपत्नंशुभंराज्यंप्राज्यंहरिहरार्चनम् ॥ ३७ ॥ विपुलंचकलाज्ञानमधीतमपराजितम् ॥ तथाजयोरिषड्वर्गेस्वभावात्सात्त्विकीमतिः ॥ ३८ ॥ दृष्टिःकारुण्यसंपूर्णावाणीमधुरभाषिणी ॥ अनालस्यंचकार्येषुतथागुरुजनेनतिः ॥ ३९ ॥ सर्वत्रशुचितातातसापरोपकृतिःसदा ॥ और्जस्वलामनोवृत्तिःसदैवादीनवादिता ॥ ॥ ४० ॥ सदोजिरेचपांडित्यंप्रागल्भ्यंचरणांगणे ॥ आर्जवंबंधुवर्गेषुकाठिन्यंक्रयविक्रये ॥ ४१ ॥ मार्दवंस्त्रीप्रयोगेषुवत्सलत्वंप्रजासुच ॥ ब्राह्मणेभ्योभयंनित्यंवृद्धवृत्त्युपजीवनम् ॥ ४२ ॥ वासोभागीरथीतीरेतीर्थेवामरणंरणे ॥ अपराङ्मुखताऽर्थिभ्यःप्रत्यर्थिभ्योविशेषतः ॥ ४३ ॥ भोगःपरिजनैःसार्धंदानावंध्यदिनागमः ॥ विद्याव्यसनितानित्यंनित्यंपित्रोरुपस्थितिः ॥ ४४ ॥ यशसःसंचयोनित्यंनित्यंधर्मस्यसंचयः ॥ स्वर्गापवर्गयोःसिद्धिःसदाशीलस्यमंडनम् ॥ ४५ ॥ सद्भिश्चसंगतिर्नित्यंमैत्रीचपितृमित्रकैः ॥ इतिहासपुराणानामुत्कंठाश्रवणेसदा ॥ ४६ ॥ विपद्यपिपरंधैर्यंस्थैर्यंसंपत्समागमे ॥ गांभीर्यंवाग्विलासेषुऔदार्यंपात्रपाणिषु ॥ ४७ ॥ देहेपरेकाकृशतातपोभिर्नियमैर्यमैः ॥ एतैर्मनोरथफलैःफलंत्येवतपोद्रुमाः ॥ ४८ ॥ तस्मादल्पतपस्त्वाद्वैत्वंचाहंचमहामते ॥ प्राप्यापिराजसांनिध्यंराजलक्ष्म्यानभाजनम् ॥ ४९ ॥

वृद्धानांसदाचाराणांयावृत्तिर्वर्तनंतेनोपजीवनंजीवनसंपादनम् ॥ वृद्धवृद्ध्युपजीवनमितिक्वचित् ॥ ४२ ॥ वासोमरणमितितीर्थेरणेइत्युभयत्रसंबध्यते ॥ प्रत्यर्थिभ्यःप्रतिकूलार्थिभ्यःशत्रुभ्यइत्यर्थः ॥ ॥ ४३ ॥ दानावंध्योदानैरव्यर्थोदिनागमोदिवसागमनंप्रत्यहंदानमित्यर्थः ॥ उपस्थितिरुपस्थानमनुकूलाचरणमितियावत् ॥४४॥ शीलस्यसद्वृत्तस्यमंडनंभूषणंप्रत्यहंसद्वृत्ताचरणमित्यर्थः ॥४५॥ पितृमित्रकैःपितुर्मित्रैःसहापितृवद्यानिमित्राणितैःसहेतिवा ॥ इतिहासपुराणानाम् इतिहासामहाभारतादयः पुराणानिब्राह्मादीनितेषाम् ॥४६॥ वाग्विलासेषुवचनप्रयोगेषु ॥ औदार्यंदातृत्वम् ॥ ४७ ॥ परामुख्याकेवलावा ॥ एतैरातपत्रादिकृशतांतैर्मनोरथफलैर्मनोराज्यवत्फलत्वेनकल्पितैः मनोऽभिलषितफलैरितिवाकृत्वातपोद्रुमाःफलंतीति ॥ ४८ ॥ प्रस्तुतमुपसंहरति ॥ तस्मादिति ॥ ४९ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्वकृतंस्वेनकृतंकर्म ॥ स्वकृतांकृतिंस्वेनकृतंकर्मस्रष्टापितामपमार्ष्टुंनपरीष्टेनसमर्थइत्यर्थः ॥ सांत्वयति ॥ माशोचइति ॥ दिष्टंदैवम् समर्पयेत्प्रापयेत् ॥ समुन्नयेदितिपाठेपिसएवार्थः ॥ ५० ॥
॥ ५१ ॥ ५२ ॥ ५३ ॥ अन्यैर्दुरासदंयत्पदन्तदासादितंविद्धीत्यन्वयः ॥५४ ॥ अनुज्ञादानमात्रंचेतिचकारोभिन्नक्रमे ॥ अनुज्ञादानमात्रंकुरुआशीर्भिरभिनन्दयचेत्यर्थः ॥ ५५ ॥ राजमानंभ्राज
मानम् ॥५६॥शय्यतेऽनेनेतिशयःपादः॥पादप्रसारणपूर्वकंहिसर्वेशेरतइतिसर्वेषामनुभवसिद्धम्॥उत्तानउच्चैःशयोयस्यसउत्तानशयउत्तानपादस्यांगज उत्तानशयांगज॥ हेउत्तानशयहेस्तनंधयेतिपृथग्वा
पदम् ॥ स्यादुत्तानशयोडिंभस्तनयश्चस्तनंधयइत्यमरः ॥ अनुत्तानशयेप्युत्तानशयपदप्रयोगस्त्वार्द्रचित्ततया ॥ आत्मजेतिक्वचित् ॥ साष्टैकवर्षदेशीयम्अष्टाभिःसहवर्ततइतिसाष्टंसाष्टंचतदेकवर्षंचे
तिसाष्टैकवर्षम्ईषदसमाप्तंसाष्टैकवर्षंयस्यससाष्टैकवर्षदेशीयः ॥ ईषदसमाप्तौकल्पब्देश्यदेशीयरइतिदेशीयप्रत्ययः ॥ सप्ताष्टदेश्यवर्षीयामितिपाठेईषदसमाप्तानिसप्तवाऽष्टवावर्षाणियस्यतामित्यर्थः ॥ एवंभू

मानापमानयोस्तस्मात्स्वकृतंकारणंपरम् ॥ स्रष्टापिनापमार्ष्टुंतत्परीष्टेस्वकृतांकृतिम् ॥ माशोचस्त्वमतःपुत्रदिष्टमिष्टंसमर्पयेत् ॥५० ॥ इत्याकर्ण्यसुनी
त्यास्तन्महावाक्यंसुनीतिमत् ॥ सौनीतेयोध्रुवोवाचमाददेवकुसुत्तरम् ॥ ५१ ॥ ध्रुवउवाच ॥ ॥ जनयित्रिसुनीतेमेशृणुवाक्यमनाकुलम् ॥ माबा
लइतिमत्वामामवमंस्थास्तपस्विनि ॥ ५२ ॥ यद्यहंमानवेवंशेजातोस्म्यत्यंतपावने ॥ उत्तानपादतनयस्त्वदीयोदरसंभवः ॥५३॥ तपएवहिचेन्मातः
कारणंसर्वसंपदाम् ॥ तत्तदासादितंविद्धिपदमन्यैर्दुरासदम् ॥ ५४ ॥ एकमेवहिसाहाय्यंकुरुमातरतंद्रिता ॥ अनुज्ञादानमात्रंचआशीर्भिरभिनंदय ॥
॥ ५५ ॥ सापिज्ञात्वामहावीर्यंकुमारंकुक्षिसंभवम् ॥ महत्योत्साहसंपत्त्याराजमानमुवाचतम् ॥ ५६ ॥ अनुज्ञातुंनशक्ताऽहंत्वामुत्तानशयांगज ॥
साष्टैकवर्षदेशीयन्तथापिकथयाम्यहम् ॥ ५७ ॥ सपत्नीवाक्यभल्लीभिर्भिन्नेमहतिमेहृदि ॥ तवबाष्पौघवारीणिनतिष्ठंतिकरोमिकिम् ॥ ५८ ॥ तानि
मन्येऽत्रमार्गेणस्रवंत्यविरतंशिशो ॥ स्रवंतीश्चचिकीर्षंतिप्रतिकूलजलाःकिल ॥ ५९ ॥ त्वदेकतनयाताततत्वदाधारैकजीविता ॥ त्वमंगयष्टिरसिमे
त्वन्मुखासक्तलोचना ॥ ६० ॥ लब्धोसिकतिभिःकष्टैरिष्टाःसंप्रार्थ्यदेवताः ॥ त्वन्मुखेंदूदयेतातमन्मनःक्षीरनीरधिः ॥ ६१ ॥ आनन्दपयसापूर्य
कुचावुद्वेलितोभवेत् ॥ त्वदंगसंगसंभूतसुखसन्दोहशीतला ॥ ६२ ॥

तंत्वांयद्यप्यनुज्ञातुमाज्ञांदातुंनशक्नोमितथापिकथयाम्याज्ञांप्रयच्छामीत्यर्थः ॥ ५७ ॥ आज्ञानर्हेप्याज्ञादानेहेतुमाह ॥ सपत्नीति ॥ सपत्नीदुष्टवाक्यान्येवभल्लयोबाणास्तैर्मेतवचहृदेभिन्नेस
तिबाष्पानिवहजलानिनतिष्ठंति ॥ तवत्वत्संबंधीनित्वन्निमित्तानिबाष्पौघवारीणीतिवा ॥ अतःकिंकरोमिएतदर्थमाज्ञांप्रयच्छामीत्यर्थः ॥ तत्तद्वाक्यौघवारीणीतिक्वचित् ॥ ५८ ॥ आज्ञादा
नेहेत्वंतरमाह ॥ तानीति ॥ किलप्रसिद्धौ ॥ हेशिशोतानिबाष्पौघवारीण्यविरतंनेत्रमार्गेणनेत्ररंध्रेणस्रवंति ॥ स्रवन्तीश्चनदीः ॥ स्रवन्तीनिम्नगापगाइत्यमरः ॥ चिकीर्षंति कर्तुमिच्छंतिवां
छन्तीतियावत् ॥ कथंभूताः ॥ प्रतिकूलजलाःदुःखावहाइत्यर्थः ॥ आनन्दबाष्पौघधाराव्यावृत्त्यर्थंविशेषणम् ॥ नकेवलंस्रवंतिस्रवंतीश्चचिकीर्षंतीतिवाऽन्वयः ॥ प्रतिकूलजनाइतिव पाठः ॥
किलेतिप्रसिद्धौ ॥ ५९ ॥ एवंकथंचिद्दास्यमानानुज्ञायाःपुत्रविश्लेषजनितखेदायाविलापमाहतुरथेत्यतःप्राक्तनेनग्रंथेन ॥ यष्टिर्लकुटः ॥६०॥ उद्वेलितोलंघिततीरमर्यादउतसक्ततीरोवा ॥६१॥६२॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शयेशयनंकुर्वे ॥ सुशयनेशोभनशय्यायाम् ॥ अथइतिपाठेइदानींआवृत्यास्तीर्येत्यर्थः ॥ पुलकएवांबरंवस्त्रंपुलकांबरम् ॥ अपइति ॥ अथानंतरम्अपःसमुपस्पृश्यमुखंप्रक्षाल्याचम्येत्यर्थः ॥ ६३ ॥
त्वदास्येति ॥ हेसुधांशुवदनचंद्राननत्वदास्यस्यतवमुखस्ययदोष्ठपुटकंदंतच्छदद्वयंतदेवदुग्धवार्धिःक्षीरसमुद्रस्तेनवर्धितामुच्छलितांसुधांपीयूषंधयंतीपिबंतीचुंबनादिनानधिनोमिनतर्पिनप्राप्नोमीत्यर्थः ॥
अपिशब्दात्पश्यंत्यपश्यंत्यपि ॥ ६४ ॥ त्वदीयेति ॥ त्वदीयःशीतलालापःकोमलवचनंममश्रुतिपथंयदाप्रापत्तदैवसपत्नीवाक्यदवथुःसपत्नीवाक्यमेवदवथुस्तस्माद्भयाद्योदवथुःकंपः सवेपथुः
सकंपःस्याच्छयेदित्यर्थः ॥ ६५ ॥ यदंगेति ॥ अंगहेपुत्रयदायदात्वंचिरंनिद्रासिनिद्रांकरोषितदेतिवक्ष्यमाणंध्यायंत्यस्मिचिंतयंतीभवामि ॥ किंतत्तदाह ॥ कदाऽसौनिद्रादरिद्रः निद्राया
दरिद्रः अभावोभविता ॥ निश्रेष्ठत्वसाम्यात्सूर्योदयेऽरविंदवद्भविष्यति ॥ यथासूर्योदयेऽरविंदंविकसितंभवतितथाऽसौनिद्राक्रांतनेत्रःकदाविकासंगमिष्यतीत्यर्थः ॥ निद्रादरिद्रोऽसौध्रुवइतिवा ॥
॥ ६६ ॥ उपेयाउपगच्छसि ॥ अनर्घ्यार्घ्यममूल्यार्घ्यम् ॥ स्यातांभवेताम् ॥ उन्मुखौक्षरितचूचुकौ ॥ इवेत्युत्प्रेक्षायाम् ॥ ६७ ॥ यदेति ॥ यदात्वंसौधाद्राजसदनाद्विनिर्यायाःनिर्गच्छ

सुखंशयेसुशयनेप्रावृत्यपुलकांबरम् ॥ अपोऽथसमुपस्पृश्यतांबूलंपरिगृह्य च ॥६३॥ त्वदास्यस्यौष्ठपुटकदुग्धवार्धिविवर्धिताम् ॥ सुधांसुधांशुवदनधयं
त्यपिधिनोमिन ॥ ६४ ॥ त्वदीयःशीतलालापःप्राप्तश्रुतिपथंयदा ॥ सपत्नीवाक्यदवथुस्तदैवस्यात्सवेपथुः ॥६५॥ यदंगनिद्रासिचिरंध्यायंत्यस्मितदे
त्यहम् ॥ कदानिद्रादरिद्रोसौभविताऽर्कोदयेऽब्जवत् ॥६६॥ यदोपेयागृहान्वत्सखेलित्वाबालखेलनैः ॥ तदानर्घ्यार्घ्यमुत्स्रष्टुंस्तनौस्यातामिवोन्मुखौ ॥
॥ ६७ ॥ यदासौधाद्विनिर्यायाःपद्मरेखांकितंपदम् ॥ प्राणानांतेयियासूनांतदातदवलंबनम् ॥ ६८ ॥ यदायदाबहिर्यासिपुत्रत्रिचतुरंपदम् ॥ तदात
दाममप्राणःकंठप्राघुणिकीभवेत् ॥ ६९ ॥ चित्रंपुत्रत्वरयतियातुंमेमानसांडजः ॥ सुधाधाराधरइवबहिश्चिरयतित्वयि ॥ ७० ॥ अथतिष्ठंतुकठिनाः
प्राणाःकंठाटवीतटे ॥ तपस्यंतोतिसंतप्तास्तपसेत्वयियास्यति ॥ ७१ ॥ इत्यनुज्ञामनुप्राप्यजननीचरणांबुजौ ॥ क्षणंमौलिजजंबालजडीकृत्वाध्रुवो
ययौ ॥ ७२ ॥ तयापिधैर्यसूत्रेणसुनीत्यापरिगुंफ्यच ॥ नेत्रेंदीवरजामालाध्रुवस्योपायनीकृता ॥ ७३ ॥ मात्रातन्मार्गरक्षार्थंतदातदनुगीकृताः ॥
पैरवार्यप्रसराःस्वाशीर्वादाःपरःशताः ॥ ७४ ॥

सितदायियासूनांगंतुमिच्छूनांप्राणानांधूलिकादिप्रदेशेपद्मरेखाचिह्नितंतवयत्पदंतदवलंबनमाश्रयोजीवनहेतुःस्यादित्यर्थः ॥ ६८ ॥ यदायदेति ॥ हेपुत्र त्रिचतुरं त्रयंचतुष्टयंवापदंयदात्वंबहि
र्यासितदातदाममप्राणःकंठप्राघुणिकीभवेत्कंठातिथिःकंठगतइत्यर्थः ॥ यथायथातथातथेतिक्वचित् ॥ ६९ ॥ चित्रमिति ॥ हेपुत्रएतच्चित्रम् ॥ किंतत् ॥ त्वयिबहिश्चिरायतिविलंबभाजिसति
ममानसांडजोमानसंमनएवांडजश्चकोराख्यःपक्षीयातुंत्वरयतित्वरांकरोति ॥ कथंभूतेइवत्वयि ॥ सुधाधाराधरेइव सुधाधारामममृतधारांधरतीतितथातस्मिन्नमृतमयेचंद्रइवेत्यर्थः ॥ चकोराख्यांड
जोपिचंद्ररश्म्यमृतंपातुंचंद्रनिकटेगंतुंत्वरयतेइतिलोकप्रसिद्धम् ॥ सुधाधाराधरमयइतिक्वचित्पाठः ॥ सुधाधाराधराकारइतिचान्यत्र ॥ पाठद्वयेपिपूर्वोक्तएवार्थः ॥ ७० ॥ कथंकथमप्यनु
ज्ञांददाति ॥ अथेति ॥ ७१ ॥ अनुअनंतरंपश्चाद्वा ॥ इवेतिपाठेस्पष्टएवार्थः ॥ मौलिजजंबालजडौ मौलिजाःकेशाएवजंबालाःपंकास्तैर्जडौवेष्टितावित्यर्थः ॥ निषद्वरस्तुजंबालःपंकोस्त्रीशाद
कर्दमावित्यमरः ॥ ७२ ॥ तयासुनीत्येतिसंबंधः ॥ परिगुंफ्यग्रथित्वा ॥ उपायनीकृताउपहारीकृता ॥ उपायनमुपग्राह्यमुपहारस्तथोपदेत्यमरः ॥ ७३ ॥ तदनुगीकृतास्तस्यध्रुवस्यप



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्चाह्वाःकृताः ॥ नवार्याःप्रसराःस्वकार्यक्षमतायेषांस्वाशीर्वादानांतेतथा ॥ सापेक्षत्वेपिसमासआर्षः ॥ शतात्परेपरःशताःअसंख्याताइत्यर्थः ॥ ७४ ॥ मरुतावायुना ॥ ७५ ॥ सइति ॥ मरुता
वायुनायत्तरुशाखाग्राणांप्रसारणमांदोलनंतन्मिषेणव्याजेन ॥ वायुनातरुपल्लवाग्राणांप्रसारणंमिषंव्याजंयस्मिन्तेनवनेनेतिसामानाधिकरण्यंवा ॥ ७६ ॥ ७७ ॥ ७८ ॥ अरण्यान्यांमहारण्ये ॥
॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ वैचित्र्यंविविधचित्रीकरणम् ॥ चित्रंचित्रीकरणमात्रम् ॥ चित्तमितिवापाठः ॥ कृतंकर्म ॥ तदुक्तम् ॥ नमस्तत्कर्मभ्योविधिरपिनयेभ्यःप्रभवतीति ॥ ८३ ॥

स्वसौधात्सविनिर्गत्यबालोऽबालपराक्रमः ॥ अनुकूलेनमरुतादार्शिताध्वाऽविशद्वनम् ॥ ७५ ॥ समरुत्तरुशाखाग्रप्रसारणमिषेणसः ॥ कृताह्वातिरिवप्रे
मणावनेनवनमाविशत् ॥ ७६ ॥ समातृदैवतोभिज्ञःकेवलंराजवर्त्मनि ॥ नवेदकाननाध्वानंक्षणंदध्यौनृपात्मजः ॥ ७७ ॥ यावदुन्मील्यनयनेपुरः
पश्यतिसध्रुवः ॥ तावद्ददर्शसप्तर्षीनतर्कितगतीन्वने ॥ ७८ ॥ बालिशेष्वसहायेषुभवेद्भाग्यंसहायकृत् ॥ अरण्यान्यांरणेगेहेततोभाग्यंहिकारणम् ॥
॥७९॥ क्वराजतनयोबालोगहनंक्वचतद्वनम् ॥ बलात्स्वसात्प्रकुर्वत्यैनमस्तेभवितव्यते ॥८०॥ यत्रयस्यहियद्भाव्यंशुभंवाऽशुभमेवच ॥ आकृष्यभा
विनीरज्जुस्तत्रतस्यहिदापयेत् ॥ ८१ ॥ अन्यथाविदधात्येषमानवोबुद्धिवैभवात् ॥ भगवत्याभवित्र्याऽसौविदध्याद्विधिरन्यथा ॥ ८२ ॥ नवयोनचवै
चित्र्यंनाचित्रंविद्येहितम् ॥ नबलंनोद्यमःपुंसांकारणंप्राक्कृतंकृतम् ॥ ८३ ॥ अथदृष्ट्वासससप्तर्षीन्सप्तसप्त्यतितेजसः ॥ भाग्यसूत्रैरिवाकृष्योपनीतान्प्रसुमो
दह ॥ ८४ ॥ तिलकांकितसद्भालान्कुशोपग्रहितांगुलीन् ॥ कृष्णाजिनोपविष्टांश्चयज्ञसूत्रैरलंकृतान् ॥ ८५ ॥ साक्षसूत्रकरान्किंचिद्विनिमीलितलो
चनान् ॥ सुधौतसूक्ष्मकाषायवासःप्रावरणान्वितान् ॥ ८६ ॥ अकांडेपिमहाभागान्मिलितान्सप्तनीरधीन् ॥ चित्रंविपद्विनिर्मग्नानुद्दिधीर्षूनिवप्रजाः
॥ ८७ ॥ उपगम्यविनम्रःसप्रबद्धकरसंपुटः ॥ ध्रुवोविज्ञापयांचक्रेप्रणम्यललितंवचः ॥ ८८ ॥ ॥ ध्रुवउवाच ॥ ॥ अवैतमांमुनिवराःमुनी
त्युदरसंभवम् ॥ उत्तानपादतनयंध्रुवंनिर्विण्णमानसम् ॥ ८९ ॥ इदंवनमनुप्राप्तंसनाथंयुष्मदंघ्रिभिः ॥ प्रायोनभिन्नंसर्वत्रमहद्भ्युषितमानसम् ॥९०॥

सध्रुवःसप्तर्षीन्दृष्ट्वाप्रमुमोदह ॥ अनंतरंप्रणम्यललितंवचोविज्ञापयांचक्रइतिपश्चमेनान्वयः ॥ सप्तसप्त्यतितेजसः सूर्याधिकमहसः तद्ददातितेजसइतिवा ॥ ८४ ॥ ८५ ॥ ८६ ॥ अकांडइति ॥
पुनःकीदृशान् ॥ अकांडेऽनवसरेमिलितान् ॥ मेलनहेतोरभावेपिसमवेतानित्यर्थः ॥ अतएवचित्रमाश्चर्यम् ॥ कानिव ॥ विपद्विनिर्मग्नाःप्रजाउद्दिधीर्षूनुद्धर्तुमिच्छून् सप्तनीरधीन्सप्तसमुद्रानिव ॥
अभूतोपमेयम् ॥ यदासप्तसागराःप्रजाउद्दिधीर्षवस्तदायथामिलंतितथामिलितानित्यर्थः ॥ गुणरत्नाकरत्वागाधबोधादिनासमुद्रसाम्यम् ॥८७॥८८॥८९॥ महत्याऋद्ध्याउषितमध्युषितमाश्रितं



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मानसंयस्यसतथातम् ॥ ९० ॥ ऊर्जस्वलंतेजस्विनम् ॥ अनर्घ्यनयनेपथ्यमातिशयनीतिचतुरम् ॥ ९१ ॥ ९२ ॥ ९३ ॥ नीरुग्रोगरहितः ॥ ९४ ॥ तथावैराग्यवानित्यर्थः ॥ स्वभावभिन्न प्रकृतौ स्वभावान्मायातोभिन्नानानाप्रकृतिःस्वभावोवासनायस्यतस्मिन्लोके ॥ ९५ ॥ ९६ ॥ प्रांशुमनोरथउच्चाभिलाषः ॥ ९७ ॥ ९८ ॥ ९९ ॥ क्षात्रंक्षत्रियजातिक्षत्रियस्वभावंवा ॥ तत्तदा ॥ तत्क्षात्रमितिवा ॥ अहोइत्याश्चर्ये ॥ १०० ॥ श्रवःश्रवणेंद्रियन्तद्गोचरीकुरु ॥ १ ॥ तत्प्रसिद्धम् ॥ भद्रासनंचक्रवर्तिसिंहासनम् ॥ २ ॥ उपदिश्यतइत्युपदेशउपायइत्यर्थः ॥ तत्तस्मात् ॥

तेदृष्ट्वोर्जस्वलंबालंस्वभावमधुराकृतिम् ॥ अनर्घ्यनयनेपथ्यंमृदुगंभीरभाषिणम् ॥ ९१ ॥ उपोपवेश्यशिशुकंप्रोचुर्वैविस्मिताभृशम् ॥ अहोबालविशालाक्षमहाराजकुमारक ॥ ९२ ॥ विचार्यापिनजानीमोवदनिर्वेदकारणम् ॥ अद्यतेह्यर्थचिंतानोक्वापमानःप्रसूर्गृहे ॥ ९३ ॥ नीरुक्छरीरसंपत्तिनिर्वेदःकिंनुकारणम् ॥ अनवाप्ताभिलाषाणांवैराग्यंजायतेनृणाम् ॥ ९४ ॥ सप्तद्वीपपतेराज्ञःकुमारस्त्वंतथाकथम् ॥ स्वभावभिन्नप्रकृतौलोकेस्मिन्नमनोगतम् ॥ ९५ ॥ अवगंतुंहिशक्येतयूनोवृद्धस्यवाशिशोः ॥ इतिश्रुत्वावचस्तेषांसहजप्रेमनिर्भरम् ॥ ९६ ॥ वाचंजग्राहसतदाशिशुःप्रांशुमनोरथः ॥ ध्रुवउवाच ॥ ॥ प्रेषितोराजसेवार्थंजनन्याऽहंमुनीश्वराः ॥ ९७ ॥ राजांकमारुरुक्षुर्हिसुरुच्यापारिभर्त्सितः ॥ उत्तमंचोत्तमीकृत्यमांचमन्मातरंतथा ॥९८॥ धिक्कृत्यप्रशशंसस्वंनिर्वेदेकारणंत्विदम् ॥ निशम्येतिशिशोर्वाक्यंपरस्परमवेक्ष्यते ॥९९॥ क्षात्रमेवशशंसुस्तदहोबालेपिनक्षमा ॥ १०० ॥ ऋषयऊचुः ॥ ॥ किमस्माभिरहोकार्यंकस्तवाऽस्तिमनोरथः ॥ ज्ञातोभवतुतावत्सनःश्रवोगोचरीकुरु ॥ १ ॥ ॥ ध्रुवउवाच ॥ ॥ मुनयोममयोबंधुरुत्तमश्चोत्तमोत्तमः ॥ पित्रादत्तंचसोऽध्यास्तांतद्भद्रासनमुत्तमम् ॥ २ ॥ भवत्कृतांहिसाहाय्यमेतदिच्छामिसुव्रताः ॥ प्रायोजानेनबालत्वादुपदेशस्तदुच्यताम् ॥ ३ ॥ अनन्यनृपभुक्तंयद्यदन्येभ्यःसमुच्छ्रितम् ॥ इंद्रादिदुरवापंयत्कथंलभ्यंदुरासदम् ॥ ४ ॥ पित्रोत्सृष्टंनकांक्षामिकांक्षामिस्वभुजार्जितम् ॥ मनोरथपथातीतंभवेद्यात्पितुरप्यहो ॥ ५ ॥ पितृसंपत्तिभोक्तारःप्रायशोनयशोधनाः ॥ नरोत्तमास्तुतेज्ञेयायेपित्राधिक्यदर्शिनः ॥ ६ ॥ उपार्जितंहिपित्रायेनाशयंतियशःश्रुतम् ॥ धनंनिधनमेवास्तुतेषांदुर्वृत्तचेतसाम् ॥ ७ ॥ इतिश्रुत्वावचस्तस्यमुनयःसुनयोर्जितम् ॥ यथार्थमेवंप्रत्यूचुर्मरीच्याद्यास्तथाध्रुवम् ॥ ८ ॥



उच्यतांकथ्यताम् ॥ ३ ॥ कस्योपदेशइत्यतआह ॥ अनन्येति ॥ समुच्छ्रितमत्युच्छ्रितमत्युच्चमितियावत् ॥ समुत्थितमितिपाठेपिसएवार्थः ॥ एतादृशंदुरासदंदुर्लभंयत्स्थानमितिशेषस्तत्कथंकेनप्रकारेणउपायेनलभ्यंसउपदेशउपायःकथ्यतामितिपूर्वेणैवान्वयः ॥ ४ ॥ ५ ॥ ६ ॥ श्रुतंप्रख्यातंधनंच ॥७॥ इतीति ॥ इत्येवंपूर्वोक्तप्रकारं सुनयोर्जितंशोभननयेनवर्धितं यथार्थंपरमार्थं तस्यध्रुवस्यवचः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्रुत्वामुनयोमननशीलाअपिमरीच्याद्यास्तथायथार्थंध्रुवंप्रत्यूचुःप्रत्युत्तरंदत्तवन्तइत्यर्थः ॥ ८ ॥ अनर्चितेति ॥ हेअंगध्रुवत्वंयथायादृशंपदमात्थकथयसितथातादृशंपदमनर्चिताच्युतपदःकथमापद्यतेन कथंचिदपिप्राप्नोति ॥ एतदहंनातथ्यंनमृषाकथयामीत्यर्थः ॥ यथायथेतिपाठेएकोयथाशब्दोयथावदित्यर्थे ॥ तथाशब्दोऽध्याहर्तव्योयत्तदोर्नित्यसंबंधात् ॥ ९ ॥ मरीच्यनुरूपमुपदेशमत्रिरुवाच ॥ अनास्वादितेति ॥ पदंस्थानम् ॥ फलमितिक्वचित्पाठः ॥ पथमितिपाठेपंथानमित्यर्थः ॥ अकारांतोवापथशब्दोवाटःपथश्चेतिवचनात् ॥ ११० ॥ अत्र्यनुरूपमुपदेशमंगिराअप्युवाच ॥ अदवीयइति ॥ अदवीयोमहदित्यर्थः ॥ निकटवर्तीतिवा ॥ कांतांघ्रिकमलेसुखसेव्यचरणपद्मेसुशीलयेच्छोभनप्रकारेणध्यायेत् ॥ ११ ॥ परमांतमात्यंतिकंनाशम् ॥ १२ ॥ प्रधानंप्रकृतिः ॥ पुरुषईश्वरः ॥ एकवद्भावादेकवचनम् ॥ तस्मात्परंयत्परमंब्रह्माहुःसोऽच्युतःसर्वदास्यतीत्यन्वयः ॥ ननुसजातीयविजातीयस्वगतभेदात्कथंतस्यब्रह्मत्वंतत्राह ॥ यन्माययायस्यमाययाऽपरंस

मरीचिरुवाच ॥ ॥ अनर्चिताच्युतपदःपदमापद्यतेकथम् ॥ यथातथात्वमात्थांगनातथ्यंकथयाम्यहम् ॥ ९ ॥ अत्रिरुवाच ॥ अनास्वादितगो विंदपदांबुजरजोरसः ॥ मनोरथपथातीतंस्फीतंनाकलयेत्पदम् ॥ ११० ॥ अंगिराउवाच ॥ ॥ अदवीयःपदंतस्यसर्वासांसंपदामिह ॥ कमलाकांतकांतांघ्रिकमलेयःसुशीलयेत् ॥ ११ ॥ ॥ पुलस्त्यउवाच ॥ ॥ यस्यस्मरणमात्रेणमहापातकसंततिः ॥ परमांतमवाप्नोतिसविष्णुःसर्वदोध्रुव ॥ १२ ॥ ॥ पुलहउवाच ॥ ॥ यदाहुःपरमंब्रह्मप्रधानपुरुषात्परम् ॥ यन्माययाततंसर्वंसर्वदास्यतिसोच्युतः ॥ १३ ॥ ॥ क्रतुरुवाच ॥ ॥ योयज्ञपुरुषो विष्णुर्वेदवेद्योजनार्दनः ॥ अंतरात्माऽस्यजगतःसतुष्टःकिंनयच्छति ॥ १४ ॥ ॥ वसिष्ठउवाच ॥ ॥ यद्भ्रूनर्तनवर्तिन्यःसिद्धयोऽष्टौनृपात्मज ॥ तमाराध्यहृषीकेशमपवर्गोप्यदूरतः ॥ १५ ॥ ध्रुवउवाच ॥ ॥ सत्यमुक्तंमुनीशानाविष्णोराराधनंप्रति ॥ कथंवाभगवानीज्यःसविधिश्चोपदिश्यताम् ॥१६॥ ॥ मुनयऊचुः ॥ ॥ तिष्ठतागच्छतावापिस्वपताजाग्रतातथा ॥ शयानेनोपविष्टेनजप्योनारायणःसदा ॥१७॥ द्वादशाक्षरमंत्रेणवासुदेवात्मकेनच ॥ ध्यायंश्चतुर्भुजंविष्णुंजप्त्वासिद्धिंनकोगतः ॥ १८ ॥ अतसीपुष्पसंकाशंपीतवाससमच्युतम् ॥ क्षणंसर्वात्मकंपश्यन्कोनसिध्यतिभूतले ॥१९॥ पुत्रान्कलत्रमित्राणिराज्यंस्वर्गापवर्गकम् ॥ वासुदेवंजपन्मर्त्यःसर्वंप्राप्नोत्यसंशयम् ॥ १२० ॥

वंमिति ॥ ततमितिपाठेयद्ब्रह्ममाययाततमित्यर्थः ॥ १३ ॥ सविष्णुः ॥ तुष्टो वेतिपाठेलोकोक्तिः ॥ १४ ॥ वर्तनंचालनम् ॥ सिद्धयोणिमाद्याः ॥ १५ ॥१६॥ तिष्ठतेति ॥ तदुक्तम् ॥ नदेशनियमश्चात्रनकालनियमस्तथा ॥ नोच्छिष्टादौनिषेधोस्तिहरेर्नामनिलुब्धकेति ॥ १७ ॥ मंत्रस्यैकदेशमुद्धरति ॥ वासुदेवात्मकेनेति ॥ ॐनमोभगवतेवासुदेवायेत्यनेनेत्यर्थः ॥ तथाचवैष्णवेयदभाणि ॥ हिरण्यगर्भपुरुषप्रधानाव्यक्तरूपिणे ॥ ॐनमोवासुदेवायशुद्धज्ञानस्वरूपिणइति ॥ तत्तुकल्पभेदाभिप्रायेणेतिबोद्धव्यम् ॥ जप्त्वाजपित्वा॥तप्त्वेतिपाठेआलोचयित्वाऽभेदेनध्यायन्नित्यर्थः ॥ विष्णुर्भूत्वायजेद्विष्णुमितिवचनात् ॥ सिद्धिंमोक्षाख्यांधर्मार्थकाममोक्षात्मिकांवा ॥ ध्येयमाह ॥ चतुर्भुजमित्यादि ॥ १८ ॥ अतसीलोकप्रसिद्धातत्पुष्पसदृशम् ॥ क्षणंसर्वात्मकंपश्यन्निति ॥ तथाचोक्तम् ॥ सर्वपापप्रसक्तोपिध्यायन्निमिषमच्युतम् ॥ द्विजस्तपस्वीभवतिपंक्तिपावनपावनइति ॥ सिद्ध्यतिधूतपाप्माभवति ॥ १९ ॥ नकेवलंसिध्यतिकिन्तुपुत्रानिति ॥ १२० ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नोपस्पृशंतिनोपसर्पंति ॥ अयमेववापाठः ॥ २१ ॥ पितामहेनस्वायंभुवेन ॥ २२ ॥ २३ ॥ १२४ ॥ ॥ इतिश्रीरामानन्दविरचितायांकाशीखण्डटीकायामेकोनविंशतितमोऽध्यायः ॥ १९ ॥
सप्तर्ष्यादिष्टमार्गस्यध्रुवस्यामिततेजसः ॥ वर्ण्यतेविंशतितमेऽध्यायेचर्यातपःस्थितेः ॥ १ ॥ ध्रुवोपितपसेगतइत्युक्तंततःपरंकिंवृत्तमित्याकांक्षायामाहतुः ॥ औत्तानपादिरिति ॥ मधुनाम्नादैत्ये
नाधिष्ठितंवनंमधुवनम् ॥ तदुक्तंवैष्णवे ॥ पुनश्चमधुसंज्ञेनदैत्येनाधिष्ठितंयतः ॥ ततोमधुवनंनामख्यातमत्रमहीतलइति ॥ १ ॥ महत्त्वेहेतुराद्यमिति ॥ संसारंहरतिमेधायस्यसहरिमेधास्तस्य ॥ २ ॥
जपन्नितिवाच्यवाचकयोरभेदोपचारात् ॥ निरामयंसर्वोपद्रवराहितम् ॥ ध्यानेनस्तिमितेनिश्चलेलोचनेयस्यसतथा ॥ ३ ॥ वासुदेवमयत्वंप्रपंचयतोहारिरित्यादिनातस्येक्षणेइत्यतःप्राक्त
नेनग्रंथेन ॥ हरित्सुदिशासु ॥ हरिमरीचिषुसूर्यरश्मिषु ॥ ४ ॥ शालरोभेकः भेकेमंडूकवर्षाभूशालूरप्लवदर्दुराइत्यमरः ॥ मंदुरासुवाजिशालासु ॥ वाजिशालातुमंदुरेत्यमरः ॥ ५ ॥ अनंतःशेषः ॥

वासुदेवजपासक्तानपिपापकृतोजनान् ॥ नोपस्पृशंतिवैविघ्नायमदूताश्चदारुणाः ॥ २१ ॥ पितामहेनतेप्येषमहामंत्रउपासितः ॥ मनुनाराज्यकामेनवै
ष्णवेनमहर्द्धिना ॥ २२ ॥ त्वमप्येतेनमंत्रेणवासुदेवपरोभव ॥ यथाभिलषितामृद्धिंक्षिप्रमाप्नुहिसत्तम ॥ २३ ॥ इत्युक्त्वांऽतर्हिताःसर्वेमहात्मानोमुनी
श्वराः ॥ वासुदेवमनाभूत्वाध्रुवोपितपसेगतः ॥ १२४ ॥ ॥ इति श्रीस्कांदेमहापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडेपूर्वार्द्धे
ध्रुवलोकवर्णनेध्रुवोपदेशोनामैकोनविंशतितमोऽध्यायः ॥ १९ ॥ ॥ गणावूचतुः ॥ ॥ औत्तानपादिर्निर्गत्यततःकाननतोद्विज ॥ रम्यंमधुवनं
प्रापयमुनायास्तटेमहत् ॥ १ ॥ आद्यंभगवतःस्थानंतत्पुण्यंहरिमेधसः ॥ पापोपिजंतुस्तत्प्राप्यनिष्पापोजायतेध्रुवम् ॥ २ ॥ जपन्सवासुदेवाख्यं
परंब्रह्मनिरामयम् ॥ अपश्यत्तन्मयंविश्वंध्यानस्तिमितलोचनः ॥ ३ ॥ हरिर्हरित्सुसर्वासुहरिर्हरिमरीचिषु ॥ शिवामृगमृगेंद्रादिरूपःकाननगोहरिः
॥ ४ ॥ जलेशालूरकूर्मादिरूपेणभगवान्हरिः ॥ हरिरश्वादिरूपेणमंदुरास्वपिभूभुजाम् ॥ ५ ॥ अनंतरूपःपातालेगगनेऽनंतसंज्ञकः ॥ एकोप्यनं
ततांयातोरूपभेदैरनंतकैः ॥ ६ ॥ देवेषुयोवसेन्नित्यंदेवानांवसतिर्हियः ॥ सवासुदेवःसर्वत्रदीव्येद्यद्वासनावशात् ॥ ७ ॥ विष्लृव्याप्तावयंधातुर्यत्रसार्थ
कतांगतः ॥ विष्णुनामस्वरूपेहिसर्वव्यापनशीलिनि ॥ ८ ॥ सर्वेषांचहृषीकाणामीशनात्परमेश्वरः ॥ हृषीकेशइतिख्यातोयःससर्वत्रसंस्थितः ॥ ९ ॥

शेषोऽनंतइत्यमरः ॥ अनंतसंज्ञकोऽपरिच्छिन्नरूपइत्यर्थः ॥ मूर्तिविशेषोवा ॥ यस्यव्रतमनंतव्रतमित्युच्यतेलोके ॥ अलक्ष्यसंज्ञकइतिकचित् ॥ नन्वेकमेवाद्वितीयमित्यादिश्रुतेरखंडैकरसत्वा
वगमात्कथंतस्यनानारूपत्वंमाययेत्याह ॥ एकोपीति ॥ माययेतिशेषः ॥ अनंततांनानारूपताम् ॥ रूप्यतेऽनेनेतिरूपमज्ञानंतस्यभेदैःकार्यैरित्यर्थः ॥ ६ ॥ वासुदेवादिनामपंचकंपंचभिःश्लोकै
र्निरुक्तं देवेष्वित्यादिना ॥ देवेषुदेवानामितिचोपलक्षणम् ॥ तथाचायमर्थः ॥ सर्वेषुयोनित्यंवसत्यंतर्यामिरूपेणसर्वेषांयोवसतिर्वसत्यस्यांसर्वमितिवसतिराधिष्ठानंसवासुदेवइत्यन्वयः ॥ कथंत
थात्वंतत्राह ॥ यद्यस्माद्वासयत्यज्ञान्संसारेष्वितिवासनाऽविद्यातद्वशाद्दीव्येद्रच्छेदंतर्यामितयाऽधिष्ठानतयाचव्याप्नुयादित्यर्थः ॥ तथाचवैष्णवे ॥ सर्वत्रासौसमस्तंचवसत्यत्रेतिवैयतः ॥ ततः
सवासुदेवेतिविद्वद्भिःपरिपठ्यतइति ॥ ७ ॥ सर्वव्यापनंशीलंस्वभावोयस्यास्तितस्मिन्सर्वव्यापनशीलिनि ॥ शालिनीतिकचित् ॥ सर्वव्यापीविराजतइतिचान्यत्र ॥ ८ ॥ हृषीकाणामिं



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मरुत्वताइन्द्रेण ॥ चिन्तामेवाह ॥ चेद्यदिध्रुवोमत्पदमाकांक्षिष्यदाकांक्षितवान्स्यात्तर्ह्ययंनिश्चितमहरिष्यद्धृतवान्स्यादित्यर्थः ॥ ३२ ॥ नियंतुंनिराकर्तुंनाशयितुमितियावत् ॥ अप्सरोवर्गोऽप्सरःसमूहः ॥ यूनितरुणे ॥ ३३ ॥ ३४ ॥ भूतानामालिंपंक्तिश्रेणीमित्यर्थः ॥ भूतान्हिभीषणाकारानितिक्वचित् ॥ तद्भियेतस्यध्रुवस्यभयाय ॥ ३५ ॥ ३६ ॥ उष्ट्रस्येवलं वालंबायमानाशिरोधराग्रीवायस्यसः ॥ दुर्दर्शादशनायस्यसः ॥ पाठांतरेक्रियाविशेषणम् ॥ ३७ ॥ द्विपोहस्ती ॥ ३८ ॥ रयाद्वेगात् ॥ तुशब्दाद्रुधिरंचपिबन् ॥ ३९ ॥ महोक्षोमहावृषः ॥ ४० ॥

मरुत्वतातिमहतींचिंताऽभूत्तत्तपोभयात् ॥ मत्पदंचेदकांक्षिष्यदहरिष्यद्ध्रुवंध्रुवः ॥ ३२ ॥ समर्थस्त्वप्सरोवर्गोनियंतुंयमिनांयमान् ॥ सतुयूनिप्रभव तिनात्रबालेकरोमिकिम् ॥ ३३ ॥ तपस्विनांतपोहंतुंद्वौमत्साहाय्यकारिणौ ॥ कामक्रोधौनतावस्मिन्प्रभवेतांशिशौध्रुवे ॥ ३४ ॥ एकएवकिलोपायो बालेमेप्रभविष्यति ॥ भूतालिंभीषणाकारांप्रहिणोमीहतद्भिये ॥ ३५ ॥ बालत्वाद्भीषितोभूतैस्तपस्त्यक्ष्यत्यसौध्रुवम् ॥ इतिनिश्चित्यभूतालिंप्रेषयामा सवासवः ॥ ३६ ॥ भल्लूकाकारसर्वांगउष्ट्रलंबशिरोधरः ॥ कश्चिद्दुर्दर्शदशनस्त्वभ्यधावत्तमर्भकम् ॥ ३७ ॥ तंव्याघ्रवदनःकश्चिद्व्यादायविकटान नम् ॥ द्विपोच्चदेहसंस्थानोमुहुर्गर्जन्समभ्यगात् ॥ ३८ ॥ रयात्तुमांसकंभुंजन्कश्चिद्विकटदंष्ट्रकः ॥ रोषात्तमभिदुद्रावदष्ट्वासंतर्जयन्निव ॥ ३९ ॥ अतितीक्ष्णैर्विषाणाग्रैस्तटानुच्चान्विदारयन् ॥ खुराग्रैर्दलयन्भूमिंमहोक्षोऽभिजगर्जतम् ॥ ४० ॥ कश्चिद्द्विपन्नगीभूयफटाटोपभयानकः ॥ अतिलो लद्विरसनःपुस्फूर्जनिकषाचितम् ॥ ४१ ॥ कश्चिच्चमहिषाकारःक्षिपञ्शृंगाग्रतोगिरीन् ॥ लांगूलताडितधरःश्वसन्वेगात्तमाप्तवान् ॥ ४२ ॥ कश्चिद्दा वानलालीढखर्जूरद्रुमसन्निभम् ॥ बिभ्रदूर्ध्वद्वयंभूतोव्यात्तास्यस्तमभीषयत् ॥ ४३ ॥ मौलिजैरभ्रसंघर्षंकुर्वन्दीर्घकृशोदरः ॥ निमग्नपिंगनयनःकश्चिद्भी षयतिस्मतम् ॥ ४४ ॥ कृपाणपाणिर्भग्नास्योवामहस्तकपालधृत् ॥ प्रचंडंक्ष्वेडयन्कश्चिदभ्यधावत्तमर्भकम् ॥ ४५ ॥ विशालसालमादायकुर्वन्किल किलारवम् ॥ कश्चित्तमभितोयातिकालोदंडधरोयथा ॥ ४६ ॥ तमःसंकेतसदनंव्याघ्रंवैवदनंमहत् ॥ कृतांतकंदराकारंबिभ्रत्कश्चित्तमभ्यगात् ॥ ४७ ॥ उलूकाकारतांधृत्वाफूत्कारैरतिदारुणैः ॥ हृदयाकंपनैःकश्चिद्भीषयामासतंध्रुवम् ॥ ४८ ॥

पन्नगीभूयसर्पोभूत्वा ॥ पन्नगोऽर्तीवेतिक्वचित् ॥ फटायाःफणायाआटोपोविस्तारस्तेनभयानकः ॥ अतिलोलद्विरसनोऽतिचंचलद्विजिह्वः ॥ पुस्फूर्जजगर्जफूत्कारंकृतवानित्यर्थः ॥ निकषासमीपे ॥ ॥ ४१ ॥ लांगूलताडितधरःपुच्छघातितावनिः ॥ ४२ ॥ आलीढोदग्धः ॥ भूतोदेवयोनिभेदः ॥ भीतइतिपाठेभयजनकइत्यर्थः ॥ ४३ ॥ ४४ ॥ कृपाणपाणिःखड्गहस्तः ॥ प्रचंडंयथास्या त्तथाक्ष्वेडयन्क्ष्वेडांकुर्वन्खड्गमार्गचरन्नित्यर्थः ॥ ४५ ॥ ४६ ॥ तमइति ॥ व्याघ्रंव्याघ्रमुखमिव ॥ व्यात्तमितिक्वचित् ॥ कृतांतकंदराकारंयममुखांतर्बिलाकारम् ॥ ४७ ॥ उलूकाकारतांपे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ९३ ॥ वक्षोघातमुरस्ताडंयथास्यात्तथा ॥ ५२ ॥ भुक्तेतिकचित् ॥ ५२ ॥ भंक्काप्रविभज्य ॥ वेतालीभूतविशेषः ॥ ५१ ॥ ५० ॥ ४९ ॥ मृणालवत्पद्मनालवत् ॥ ४८ ॥ चकनेवम् ॥ कारुण्य
पूर्णंकरुणाव्याप्तंवात्सल्यंवत्सलभावंस्निग्धत्वमितिवाआतन्वतीविस्तारयंती ॥ ५४ ॥ वतेतिखेदेसंबोधनेवा ॥ ५५ ॥ ५६ ॥ ५७ ॥ दुनोषिपरितप्यसे ॥ दूनास्मिपरितप्तास्मि ॥
॥ ५८ ॥ त्वात्वाम् ॥ वियोगिनीत्वद्वियोगवती ॥ ५९ ॥ निद्रेति ॥ अहंमंदभाग्यायस्मान्मेममसर्वथानंदियत्तवाननंतत्स्वप्नेपिनविलोकयेपश्यामि ॥ स्वप्नोपितावन्नास्तीत्याह ॥ निद्रेति ॥
निद्रादरिद्रेनिद्रारहितेनयनेयस्याःसाहमिति ॥ ६० ॥ त्वदिति ॥ हेध्रुवत्वदाननप्रतिनिधिस्तवमुखप्रतिबिंबकल्पश्चंद्र उदित्वरोप्युदयशीलोपितापंत्यक्तुकामयामयानालोकिनावलोकितः ॥ तत्र

यक्षिणीकाचिदानीयरुदंतंकस्यचिच्छिशुम् ॥ अपिबद्रुधिरंकोष्ठाच्चखादास्थिमृणालवत् ॥ ४९ ॥ पिपासिताद्यरुधिरंतेपिपास्याम्यहंध्रुव ॥ यथा स्यबालस्यतथाचर्वित्वास्थीनिवादिनी ॥ ५० ॥ आनीयतृणदारूणिपरिस्तीर्यसमंततः ॥ दावाग्निंज्वालयामासकाचिद्वात्याविवर्धितम् ॥ ५१ ॥ वेतालीरूपमास्थायभंक्काकाचित्तरून्गिरीन् ॥ रुरोधगगनाध्वानंकंपयंतीचतंभृशम् ॥ ५२ ॥ अन्यासुनीतिरूपेणतमभिप्रेक्ष्यदूरतः ॥ रुरोदातीवदुःखार्तावक्षोघातंमुहुर्मुहुः ॥ ५३ ॥ उवाचचवचश्चाटुबहुमायाविनिर्मितम् ॥ कारुण्यपूर्णवात्सल्यमतीवातन्वतीसती ॥ ५४ ॥ त्वदेकशरणांवत्सबतमृत्युर्जिघांसति ॥ रक्षरक्षगतासुंमांशरणागतवत्सल ॥ ५५ ॥ प्रतिग्रामंप्रतिपुरंप्रत्यध्वंप्रतिकाननम् ॥ प्रत्याश्रमंप्रतिगिरिश्रांतात्वद्वीक्षणातुरा ॥ ५६ ॥ यदाप्रभृतिरेबालनिरगात्तपसेभवान् ॥ तदेवदिनमारभ्यनिर्गताऽहंत्वदीक्षणे ॥ ५७ ॥ तैस्तैःसपत्नीदुर्वाक्यैर्दुनोषित्वंयथार्भक ॥ तथाऽहमपिदूनास्मिनितरांतद्वचोऽग्निना ॥ ५८ ॥ ननिद्रामिनजागर्मिनाश्नामिनपिबाम्यहम् ॥ ध्यायामिकेवलंत्वाऽहंयोगिनीववियोगिनी ॥५९॥ निद्रादरिद्रनयनास्वप्नेपिनतवाननम् ॥ आनंदिसर्वथायन्मेमंदभाग्याविलोकये ॥ ६० ॥ त्वदाननप्रतिनिधिर्विधुर्वैधुरयामया ॥ उदित्वरोपिनालोकितापंवैत्यक्तुकामया ॥ ६१ ॥ त्वदालापसमालापंकलयन्किलकाकलीम् ॥ कोकिलोपिमयाकर्णिनालकाकीर्णकर्णया ॥६२॥ त्वदंगसंगमधुरोध्रुवधूपितयामया ॥ नानिलोपिमयालिंगिकचिद्विश्रांतयाभृशम् ॥ ६३ ॥

हेतुर्विधुरयात्वद्वियोगिन्येत्यर्थः ॥ ६१ ॥ त्वदालापेति ॥ हेपुत्रकोकिलोपिमयानाकर्णिनश्रुतः ॥ कीदृशः ॥ त्वदालापसमालापंयथास्यात्तथा ॥ पाठांतरेकोकिलविशेषणम् ॥ किलनिश्चितम् ॥ तथाकाकलींमधुरध्वनिंकलयन्नुच्चारयन् ॥ अनाकर्णनेहेतुंदर्शयंत्यात्मानंविशिनष्टि ॥ अलकाकीर्णकर्णयेति ॥ अलकैःशोकादग्रथितैराकीर्णौकर्णौयस्याःसातथातया ॥ ६२ ॥ त्वदंगेति ॥ हेध्रुवानिलोपिमयाक्कचित्कदाचिन्नालिंगितोनाभिष्वक्तः ॥ कथंभूतः ॥ त्वदंगसंगमधुरस्त्वदवयवसंबंधाच्छीतलः त्वदंगसंगवत्कोमलइतिवा ॥ मयाकथंभूतया ॥ भृशमत्यर्थंविश्रांतयाविशेषणसंतप्तयाविगतश्रांतयासत्यावेत्यर्थः ॥ तत्रहेतुंवदंतीस्वात्मानंविशिनष्टि ॥ धूपितमायये[illegible]मयामायायापुत्रस्नेहमय्याकृत्वाधूपितयात्वद्वियोगक्षुभितयेत्यर्थः ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

द्रियाणाम् ॥ ९ ॥ नच्यवंतेननश्यंति ॥ सांद्रानंदब्रह्मरूपेणविराजमानत्वात् ॥ भुशुंडादिवद्वा ॥ १० ॥ भृत्याभरणेन ॥ भूत्येतिपाठेऐश्वर्येणेत्यर्थः ॥ स्वरूपसंपत्त्याकैवल्यप्राप्त्याच ॥ अखिलंचराचरमित्यन्वयः ॥ ११ ॥ ईक्षणेनेत्रे ॥ नान्यदित्युपपादयतः ॥ हियस्मान्नियमतःपुंडरीकाक्षएवनिरीक्ष्योनितरांद्रष्टुंयोग्योऽतोनान्यइति ॥ १२ ॥ मुकुंदेत्यादिसंबोधनंविनातस्य ध्रुवस्यशब्दग्रहौ ॥ अपिःसमुच्चये ॥ नकेवलमीक्षणेअन्यन्ननिरीक्षेतेकर्णावप्यन्यशब्दग्रहौनजातावित्यर्थः ॥ १३ ॥ गोविंदचरणयोरर्थेऽर्चागोविंदचरणार्थार्चातां तस्यविष्णोःप्रियमन्यत्कर्मच विनातस्यध्रुवस्यकरौहस्तौकर्मकरौन ॥ एतद्विलक्षणान्यकर्मकरौनभवंतइत्यर्थः ॥ १४ ॥ निर्द्वंद्वेति ॥ हरेर्निर्द्वंद्वं निर्गतंद्वंद्वमाध्यात्मिकादिदुःखत्रयंयस्ययस्मादितिवातत्तथातत्त्वतच्चरणद्वंद्वंचत न्निर्द्वंद्वचरणद्वंद्वं तन्मनस्तस्यध्रुवस्यमनोमनुते ॥ विजातीयप्रत्ययतिरस्कारेणसर्वदुःखनिवारकभगवच्चरणकमलयुगलमेवनिरंतरंभावयतीत्यर्थः ॥ किंकृत्वा ॥ अन्यदन्यविषयंसर्वंमननंचिंतनंहित्वा ॥ अतएवनिश्चलंस्थैर्यमवाप ॥ तन्मनःसध्रुव इतिशेषइतिवा ॥ १५ ॥ चरणाविति ॥ तस्यध्रुवस्यचरणौनारायणस्यांगणमजिरंहित्वाऽन्यत्रनोचरतोनगच्छतइत्यन्वयः ॥ कथंभूतौचरणौ ॥

नच्यवंतेपियद्भक्तामहतिप्रलयेसति ॥ अतोऽच्युतोऽखिलेलोकेसएकःसर्वगोऽव्ययः ॥ १० ॥ इदंचराचरंविश्वंयोबभारस्वलीलया ॥ भृत्यास्वरूपसंपत्त्यासोऽत्रविश्वंभरोऽखिलम् ॥ ११ ॥ तस्येक्षणेसमीक्षेतेनान्यद्विष्णुपदादृते ॥ निरीक्ष्यःपुंडरीकाक्षोनान्योनियमतोह्यतः ॥ १२ ॥ नान्यशब्दग्रहौ तस्यजातौशब्दग्रहावपि ॥ विनामुकुंदगोविंददामोदरचतुर्भुज ॥ १३ ॥ गोविंदचरणार्थार्चांतत्प्रियंकर्मवैविना ॥ शंखचक्रांकितौतस्यनान्यकर्मकरौकरौ ॥ १४ ॥ निर्द्वंद्वचरणद्वंद्वंतन्मनोमनुतेहरेः ॥ हित्वान्यन्मननंसर्वंनिश्चलत्वमवापह ॥ १५ ॥ चरणौविष्णुशरणौहित्वानारायणांगणम् ॥ तस्यनोचरतोन्यत्रचरतोविपुलंतपः ॥ १६ ॥ वाणीप्रमाणीक्रियतेगोविंदगुणवर्णने ॥ जोषंसमासतातेनमहासारंतपस्यता ॥ १७ ॥ नितांतकमलाकांतनामधेयसुधारसम् ॥ रसयंतीनरसनातस्यान्यरससस्पृहा ॥ १८ ॥ श्रीमुकुंदपदद्वंद्वपद्मामोदप्रमोदितम् ॥ गंधांतरंनतद्घ्राणंपरिजिघ्रत्यशीघ्रगम् ॥ १९ ॥ त्वगिंद्रियंमधुरिपोःपरिस्पृश्यपदद्वयम् ॥ सर्वस्पर्शसुखंप्रापतस्यभूजानिजन्मनः ॥ २० ॥

विष्णुःशरणंरक्षिताययोस्तौ ॥ युक्तंचैतद्योहियच्छरणोभवतिसतंविहायान्यत्रनगच्छतीति ॥ कथंभूतस्यतस्य ॥ विपुलंतपश्चरतःकुर्वतइत्यर्थः ॥ १६ ॥ वाणीति ॥ तेनध्रुवेणगोविंदगुण वर्णने ॥ गुणेत्युपलक्षणम् ॥ गोविंदस्यगुणकर्मादिकथनेवर्णनेवाणीप्रमाणीक्रियते ॥ तस्यवागिंद्रियंभगवद्गुणकर्मादिकमेववक्तीत्यर्थः ॥ कीदृशेन ॥ जोषंसमासताविष्णोःसेवनंकुर्व तात्प्रीतिंप्राप्नुवतावा ॥ पुनःकीदृशेन ॥ महासारंमहाधैर्यंयथास्यात्तथातपस्यतातपःकुर्वता ॥ अस्मिन्पद्येतृतीयेचरणेविष्णुरेवश्रुतस्तेनेतिक्वचित्पाठः ॥ सचनान्यशब्दग्रहावित्यनेनपौ नरुक्त्यात्त्याज्यः ॥ १७ ॥ नितांतेति ॥ तस्य ध्रुवस्यरसनारसनेंद्रियंनितांतंकेवलंकमलाकांतस्यनामधेयरूपंसुधारसंरसयंतीआस्वादयंतीअन्यरसेषुसस्पृहास्पृहायुक्तानभवतीत्यर्थः ॥ ॥ १८ ॥ श्रीति ॥ तद्घ्राणं तस्यघ्राणेंद्रियंश्रीमुकुंदस्यपादयुगलयोर्यआमोदस्तेनप्रमोदितमतिशयेनानंदितंसद्गंधांतरंनपरिजिघ्रतिगृह्णाति ॥ अशीघ्रगंस्थिरम् ॥ चरणकमलामोदेनप रिपूरितत्वात् ॥ १९ ॥ त्वगिति ॥ तस्यध्रुवस्यत्वगिंद्रियंमधुरिपोःपदद्वयपरिस्पृश्यस्पृष्ट्वासर्वेषांस्रक्चंदनादीनांविषयाणांस्पर्शसुखंस्पर्शजन्यंसुखंप्रापप्राप्तमित्यर्थः ॥ कथंभूतस्य ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तत्रतंशब्दादीनांविषयाणामाधारमधिष्ठानं भूरेवजायायस्यसभूजानिरुत्तानपादस्तस्माजन्मयस्यतस्य ॥ २० ॥ उपसंहरति ॥ शब्देति ॥ संप्राप्यसम्यक्प्राप्य ॥ तंप्राप्येतिक्वचित् ॥ तत्रतंशब्दादीनांविषयाणामाधारमधिष्ठानं
प्राप्येत्यन्वयः ॥ २१ ॥ लुप्तानीति ॥ चन्द्रादीनांतेजांसिलुप्तान्यभिभूतानिनष्टानीत्यन्वयः ॥ कदेत्याकांक्षायामाह ॥ तस्यध्रुवस्यतपएवतपनःसूर्यस्तस्योदयेसति ॥ कथंभूते ॥ प्रदीपितंसंक्षु
ब्धंजगत्त्रयंयेनतस्मिन् ॥ २२ ॥ समीरणोवायुः ॥ नैर्ऋतोनिर्ऋतिदिगधिष्ठाता ॥ निर्ऋतीतिपाठेउपचारात्सएवार्थः ॥ स्वपदेशंकाऽस्माकंपदंग्रहीष्यतीत्येवंरूपाजातायेषांतेस्वपदशंकिताः ॥ २३ ॥
विमानेश्चरंतीतिवैमानिकाः ॥ समुत्रेसुरतिशयेनत्रासंप्रापुः॥स्वाधिकारे स्वाधिकारनिमित्तेएधितोवर्धितआधिर्मानसीव्यथायेषांतेतथा ॥२४॥ मिनोतिप्रक्षिपति ॥ २५ ॥ अहोइति ॥ अहोआश्चर्यं ॥
तस्यध्रुवस्यांगसंगीनियानिजलानियमुनादिगतानिअन्यत्रान्यत्रस्थितान्यपीतिशेषः ॥ तानिसर्वाणिजलानिजाडचंपदार्थांतरसंसर्गनिमित्तंकालुष्यंविहायरसवंतिपदस्थानिचस्वस्वरूपाणिनैसर्गिकस्व
भावानीतियावत् ॥ सदच्छानीतिक्वचित् ॥ स्युर्भवेयुरित्यर्थः ॥ स्फुरंत्यन्यत्रेतिक्वचित् ॥ जडस्वभावान्यपिजाडचंत्यजंतिअन्येषांकावार्तेतिपूर्वस्यापरेर्थः ॥ तद्भयादित्यत्रतच्छब्दोध्रुवपरस्तत्तपः

शब्दादिविषयाधारंसारंदामोदरंपरम् ॥ ध्रुवेंद्रियाणिसंप्राप्यकृतार्थान्यभवंस्तदा ॥ २१ ॥ लुप्तानिसर्वतेजांसितत्तपस्तपनोदये ॥ चंद्रसूर्यानलर्क्षाणां प्रदीपितजगत्त्रये ॥ २२ ॥ इंद्रचंद्राग्निवरुणसमीरणधनाधिपाः ॥ यमनैर्ऋतमुख्याश्चजाताःस्वपदशंकिताः ॥ २३ ॥ वैमानिकास्तथाऽन्येपिवसु मुख्यादिवौकसः ॥ ततोध्रुवात्समुत्रेसुःस्वाधिकारैधिताधयः ॥२४॥ यत्रयत्रध्रुवःपादंमिनोतिपृथिवीतले ॥ धरातस्यभराक्रांताविनमेत्तत्रतत्रवै ॥२५॥ अहोतदंगसंगीनित्यक्ताजाड्यंजलान्यपि ॥ रसवंतिपदस्थानिस्फुरंत्यन्यत्रतद्भयात् ॥ २६ ॥ यावंतिविष्वक्तेजांसिसिद्धरूपगुणानिच ॥ नेत्रातिथी नितावंतितत्तपस्तेजसाऽभवन् ॥ २७ ॥ अहोनिजगुणस्पर्शःसततंमातरिश्वना ॥ दूरदेशांतरस्थोपितत्त्वचोविषयीकृतः ॥ २८ ॥ व्योम्नापिशब्दगु णिनाध्रुवाराधनबुद्धिना ॥ शब्दजातस्त्वशेषोपितत्कर्णशरणीकृतः ॥२९॥ आराधितोऽनुदिवसंसंभूतैरपिपंचभिः ॥ तपएवपरंमेनेगोविंदार्पितमानसः ॥ ३० ॥ कौस्तुभोद्भासितहृदःपीतकौशेयवाससः ॥ ध्यानात्तेजोमयंविश्वंतेनैक्षिनृपसूनुना ॥ ३१ ॥

परोवा ॥ अथवातदंगसंगीनितच्छरीरस्थितानिपश्चीकृतानिजलानिअन्यत्रापिस्थितानियानिजलानीति ॥ शेषंसमानम् ॥ २६ ॥ यावंतीति ॥ तत्तपस्तेजसा तस्यध्रुवस्यतपसउत्थिततेजसात
पोरूपतेजसावाविष्वक्सर्वत्रयावंतितेजांसिसिद्धरूपगुणानिच सिद्धानांयानिरूपाणिगुणाश्चतानिच ॥ षंढत्वमार्षम् ॥ सिद्धानांरूपाणिगुणाश्चप्रकाश्यत्वेनवर्ततेयेषुतानितेजांसितथेतिवा ॥ तावंति
नेत्रातिथीनिनेत्रगोचराण्यभवन् ॥ तस्यध्रुवस्येतिशेषः॥२७॥अहोनिजेति ॥ अहोआश्चर्यं निजगुणश्चासौस्पर्शश्चेतिनिजगुणस्पर्शःसमातरिश्वनावायुनासततंतस्यध्रुवस्यत्वचस्त्वगिंद्रियस्यविषयीकृतो
गोचरीकृतइत्यर्थः ॥ कथंभूतः ॥ दूरदेशांतरस्थोपियत्रतत्रस्थितोऽशेषःस्पर्शजातोपीत्यर्थः ॥२८॥ व्योम्नेति ॥ ध्रुवस्याराधनेबुद्धिर्यस्यसतथातेनव्योम्नाकाशेनापिशब्दगुणिनाशब्दगुणवताअशेषः
शब्दजातोपितत्कर्णशरणीकृतः ॥ ध्रुवस्यश्रोत्रेंद्रियाश्रयीकृतइत्यर्थः ॥ अपिःसमुच्चयार्थे ॥ तुःसंभ्रमे ॥ २९ ॥ अनुक्तंसंगृह्णन्नुपसंहरति ॥ आराधितइति ॥ सध्रुवः ॥ अपिशब्दादन्यैरपि
॥ ३० ॥ ऐक्षिदृष्टम् ॥ ३१ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तिपाठेपुत्रस्नेहरूपेणोद्बुद्धमाययेत्यर्थः ॥ ६३ ॥ ६४ ॥ अध्रुवंध्रुवेणत्वयारहितम् ॥ अंधयष्टितामंधलकुटताम् ॥ ६५ ॥ परुषंतपःपरुषांगैःपुरुषैःसाध्यंक तवकोमलान्यमून्यंगानिक्केत्यर्थः ॥ ॥ ६६ ॥ तपसाकीदृशेन ॥ अनेनसानविद्यतेएनः पापंयस्मात्तेनसर्वपापनिवर्तकेनेत्यर्थः ॥ ६७ ॥ सवयःशिशुभिःसमानवयस्कैर्बालैः ॥ ६८ ॥ कौमारंवयआसाद्येत्यन्वयः ॥ अभिध्यानशीलिनाऽनुसंधानशीलिनेत्यर्थः ॥ अध्ययनशीलिनेतिक्कचित् ॥ पारदृश्वनापारगेन ॥ ६९ ॥ चतुरंदक्षंयौवनम् ॥ यद्वा कौमारपौगंडकिशोरापेक्षयाचतुरंचतुर्थंवयइत्यर्थः ॥ अलोपआर्षः ॥

केदेशाःकाश्चसरितःकेशैलास्त्वत्कृतेध्रुव ॥ मयाचरणचारिण्याराजपत्न्यानलंघिताः ॥ ६४ ॥ अध्रुवंसर्वमेवैतत्पश्यंत्यंधीकृतास्म्यहम् ॥ धात्रींत्रायस्वमांपुत्रप्राप्यत्वंमेऽधयष्टिताम् ॥ ६५ ॥ मृदुलानितवांगानिक्केमानिक्कतपस्त्विदम् ॥ परुषंपुरुषैःसाध्यंपरुषांगैर्नरर्षभ ॥ ६६ ॥ अनेनतपसावत्सत्वयाऽऽप्यंकिमनेनसा ॥ धराधीशतनूजत्वादधिकंतद्ददाधुना ॥ ६७ ॥ अनेनवयसाबालखेलनीयंत्वयाऽनिशम् ॥ बालक्रीडनकैरन्यैःसवयःशिशुभिःसमम् ॥ ६८ ॥ ततःकौमारमासाद्यवयोऽभिध्यानशीलिना ॥ भवतासर्वविद्यानांभाव्यंवैपारदृश्वना ॥ ६९ ॥ वयोथचतुरंप्राप्ययोषास्स्रक्चंदनादिकान् ॥ निर्वेक्ष्यसिबहून्भोगानिंद्रियार्थान्कृतार्थयन् ॥ ७० ॥ उत्पाद्याथबहून्पुत्रान्गुणिनोधर्मवत्सलान् ॥ परिसंक्रामितश्रीकस्तेष्वथोत्वंतपश्चर ॥ ७१ ॥ इदानीमेवतपसिबाल्येवयसिकःश्रमः ॥ पादांगुष्ठकरीषाग्निःकदामौलिमवाप्स्यति ॥ ७२ ॥ विपक्षपरिभूतेनहतमानेनकेनचित् ॥ परिभ्रष्टश्रियावापितत्कर्व्यंतेपुकोभवान् ॥ ७३ ॥ हृतमानेनतत्तव्यंनिशम्येतिवचोध्रुवः ॥ दीर्घमुष्णंहिनिःश्वस्यपुनर्दध्यौहरिंहृदि ॥ ७४ ॥ जनयित्रीमनाभाष्यभूतभीतिंविहायच ॥ ध्रुवोऽच्युतध्यानपरःपुनरेवबभूवह ॥ ७५ ॥ सापिभूतावलीभीतिंबहुभीषणभूषणा ॥ दर्शयंतीतमभितोऽद्राक्षीच्चक्रंसुदर्शनम् ॥ ७६ ॥ परितःपरिवेषाभंसूर्यस्योच्चैःस्फुरत्प्रभम् ॥ रक्षणायचरक्षोभ्यस्तस्याधोक्षजनिर्मितम् ॥ ७७ ॥ भूतावलीतमालोक्यस्फुरच्चक्रंसुदर्शनम् ॥ ज्वालामालाकुलंतीव्रंरक्षंतंपरितोध्रुवम् ॥ ७८ ॥ अतीवनिष्कंपहृदंगोविंदार्पितचेतसम् ॥ तपोंकुरमिवोद्भिद्यमेदिनींसमुदित्वरम् ॥ ७९ ॥ सापिप्रत्युतभीतातंध्रुवंध्रुवविनिश्चयम् ॥ नमस्कृत्ययथायातंयाताव्यर्थमनोरथा ॥ ८० ॥ गर्जत्कादंबिनीजालंव्योम्निवैव्याकुलंयथा ॥ वृथाभवतिसंप्राप्यमनागनिललोलताम् ॥ ८१ ॥ अथजंभारिणासार्धंभीताःसर्वेदिवौकसः ॥ संमंत्र्यत्वरिताजग्मुर्ब्रह्माणंशरणंद्विज ॥ ८२ ॥ नत्वाविज्ञापयामासुःपरिष्टुत्यपितामहम् ॥ वचोऽवसरमालोक्यपृष्टागमनकारणाः ॥ ८३ ॥

तथाचोक्तम् ॥ कौमारंपंचमाब्दांतंपौगंडंदशमावधि ॥ आपंचदशात्कैशोरंयौवनंतुततःपरमिति ॥ निर्वेक्ष्यसिभोक्ष्यसि ॥ इंद्रियार्थान्विषयान् ॥ ७० ॥ ७१ ॥ इदानीमिति ॥ इदानीमेवबाल्येतपसिकःश्रमः ॥ बाल्यमारभ्यवार्धक्यपर्यंततपःकरणेऽनंतश्रमइत्यर्थः ॥ अनन्तश्रमेदृष्टांतः ॥ पादांगुष्ठेति ॥ करीषाग्निर्गोमयाग्निः ॥ मौलिंमस्तकम् ॥ ७२ ॥ ७३ ॥७४॥७५॥७६॥७७॥ ७८ ॥ समुदित्वरंसम्यगुत्थितम् ॥ ७९ ॥ साभूतावली ॥ आस्तांतावन्मोहकर्तृताप्रत्युतभीतेत्यर्थः ॥ ८०॥ वैप्रसिद्धम् ॥ व्याकुलंसत व्याकुलंयदीतिक्कचित् ॥८१॥ जंभारिणाइन्द्रेण ॥ ८२ ॥ ८३ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ८४ ॥ ८५ ॥ सुरुच्याःकुचेष्टितंज्ञात्वाविहस्य ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ पटलींसमूहम् ॥ इंद्रनीलेत्यनेनद्वयेनकृष्णउत्प्रेक्ष्यते ॥ यद्वा सामान्याकारेणैवपर्यालोकनमत्रोच्यते ॥ ९३ ॥ कामिवेत्याकांक्षायामाह ॥ प्रत्यग्रेति ॥ प्रत्यग्रंविकसंतिअत्यन्तप्रफुल्लानियान्युत्पलानितेषांनिकुरंबकैःसमूहैःप्रफुल्लितांप्रकर्षेणविकसिताम् ॥ समन्तात्सर्वतः ॥ रोदसीद्यावाभूमीतेएवसरसीसरस्तामिव ॥९४॥ कटाक्षितंविषयीकृतमित्यर्थः ॥ ९५ ॥ एवंसामान्यतउत्प्रेक्ष्यविशेषतःश्रीकृष्णंदृष्टवानित्याह ॥ प्रोद्यदित्यादिना ॥ कादंबिनीमेघमालाप्रस्फुरन्मेघमालानामन्तर्यद्विद्युद्दामतडिन्मालातत्समानारुग्दीप्तिर्यस्यसः ॥ तत्रकादंबिन्याशरीरसाम्यम् विद्युद्दाम्नामालायाःसाम्यमिति ॥ तेनध्रुवेणनेत्रातिथीकृतश्चक्षुर्गोचरीकृतः ॥ ९६ ॥

॥ देवाऊचुः ॥ ॥ धातरुत्तानपादस्यतनयेनसुवर्चसा ॥ तपतातापिताःसर्वेत्रिलोकीतलवासिनः ॥ ८४ ॥ सम्यक्संविद्महेतातध्रुवस्यनमनीषितम् ॥ पदंपरिजिहीर्षुःसकस्यास्मासुमहातपाः ॥ ८५ ॥ इतिविज्ञापितोदेवैर्विहस्यचतुराननः ॥ प्रत्युवाचाथतान्सर्वान्ध्रुवतोभीतमानसान् ॥ ८६ ॥ ॥ ब्रह्मोवाच ॥ ॥ नभेतव्यंसुरास्तस्माद्ध्रुवाद्ध्रुवपदेषिणः ॥ व्रजंतुविज्वराःसर्वेनसवःपदमिच्छति ॥ ८७ ॥ नतस्माद्भगवद्भक्ताद्भेतव्यंकेनचित्कचित् ॥ निश्चितंविष्णुभक्तायेनतेस्युःपरतापिनः ॥ ८८ ॥ आराध्यविष्णुंदेवेशंलब्ध्वातस्मात्स्वकांक्षितम् ॥ भवतामपिसर्वेषांपदानिस्थिरयिष्यति ॥ ८९ ॥ निशम्येतिचगीर्वाणाःप्रणीतंब्रह्मणोवचः ॥ प्रणिपत्यस्वधिष्ण्यानिप्रहृष्टाःपरिवव्रजुः ॥ ९० ॥ अथनारायणोदेवस्तंदृष्ट्वादृढमानसम् ॥ अनन्यशरणंबालंगत्वाताक्ष्यरथोऽब्रवीत् ॥ ९१ ॥ श्रीविष्णुरुवाच ॥ ॥ प्रसन्नोस्मिमहाभागवरंवरयसुव्रत ॥ तपसोऽस्मान्निवर्तस्वचिरंखिन्नोसिबालक ॥ ९२ ॥ वचोऽमृतंसमाकर्ण्यपर्युन्मील्यविलोचने ॥ इंद्रनीलमणिज्योतिःपटलींपर्यलोकयत् ॥ ९३ ॥ प्रत्यग्रविकसन्नीलोत्पलानांनिकुरंबकैः ॥ प्रोत्फुल्लितांसमंताच्चरोदसीसरसीमिव ॥ ९४ ॥ लक्ष्मीदेवीकटाक्षौघैःकटाक्षितमिवाखिलम् ॥ ध्रुवस्तदानिरैक्षिष्टद्यावाभूम्योर्यदंतरम् ॥ ९५ ॥ प्रोद्यत्कादंबिनीमध्यविद्युद्दामसमानरुक् ॥ पुरःपीतांबरःकृष्णस्तेननेत्रातिथीकृतः ॥ ९६ ॥ नभोनिकषपाषाणोमेरुकांचनरेखितः ॥ यथातथाध्रुवेणेक्षितदागरुडवाहनः ॥ ९७ ॥ सुनीलगगनंयद्वद्भूषितंतुकलावता ॥ पीतेनवाससायुक्तंसददर्शहरिंतदा ॥ ९८ ॥ दंडवत्प्रणिपत्याथपरितःपरिलुठ्यच ॥ रुरोददृष्ट्वेवचिरंपितरंदुःखितःशिशुः ॥९९॥ नारदेनसनंदेनसनकेनसुसंस्तुतः ॥ अन्यैःसनत्कुमाराद्यैर्योगिभिर्योगिनांवरः ॥१००॥ कारुण्यबाष्पनीरार्द्रपुंडरीकविलोचनः ॥ध्रुवमुत्थापयांचक्रेचक्रीधृत्वाकरेणतम् ॥१॥ हरिस्तुपरिपस्पर्शतदंगंधूलिधूसरम् ॥ कराभ्यांसुकठोराभ्यांनित्यंशस्त्रपरिग्रहात् ॥२॥

नभआकाशएवनिकषपाषाणःस्वर्णपरीक्षापाषाणःसचासौमेरुरेवकांचनंस्वर्णंतेनरेखितोंकितश्चसयथादृश्यतेतथातदागरुडवाहनोहरिर्ध्रुवेणैक्षिदृष्टइत्यर्थः ॥ अत्रनभोनिकषपाषाणसाम्यंकृष्णस्य मेरुकांचनरेखितसाम्यंगरुडस्य ॥ ९७ ॥ सुनीलंसुष्ठुनीलंगगनंयद्वद्यथाकलावताचंद्रेणभूषितंपश्यतिजनस्तथासध्रुवःपीतेनवाससायुक्तंतदाहरिंददर्शेत्यर्थः ॥ पीतवस्त्रेणसादृश्यंत्वत्रचन्द्रस्यनिर्मलत्वेनैवसायंकालेउदयताचन्द्रेणेतिव्याख्येयम् ॥ ९८ ॥ पितरंसर्वस्यजनयितारम् ॥ पितरंदृष्ट्वादुःखितःशिशुर्यथारोदितितथातंदृष्ट्वेतिच ॥ ९९ ॥ १०० ॥ १ ॥ सुकठोराभ्यामतिकठिनाभ्याम् ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सइतिपाठेसकृष्णः ॥ २ ॥ १०३ ॥ इतिश्रीरामानंदकृतायां काशीखंडटीकायां विंशतितमोऽध्यायः ॥ २० ॥ ॥ छ ॥ एकाधिकतमेविंशेऽध्यायेबालोमहामनाः ॥ तुष्टावजगदीशानंलोकास्तिस्तस्यवर्ण्यते ॥ १॥ सगुणागुणभेदेनतथाविश्वमयात्मना ॥ अस्तावीत्परमानंदंकृष्णंहृष्टमनाध्रुवः ॥ २ ॥ तत्रप्रथमतोब्रह्मरुद्रविष्णुरूपेणप्रणमाति नमोहिरण्यगर्भायेत्यादिना ॥ हिरण्यगर्भाय हिरण्यवर्णांडाधाराय ॥ सृष्टिविषयंविज्ञानसामर्थ्यंवाहिरण्यंतद्गर्भेयस्यतस्माइतिवा ॥ सर्वसृष्टिविधायिनेआध्यात्मिकाधिभौतिकाधिदैविकसकलप्रपञ्चजनयित्रे ॥ हिरण्यगर्भःसमवर्ततताग्रेभूतस्यजातःपतिरेकआसीदितिश्रुतेः ॥ हिरण्यरेतसेहिरण्यंस्वर्णंरेतोवीर्यंयस्यतस्मै ॥ सुहिरण्यप्रदायिने शोभनंहिरण्यंज्ञानंकांचनंवातत्प्रदायिनेदात्रे ॥ सर्वसिद्धिविधायिनइतिपाठेसर्वेषांवृत्तिरूपसिद्धिविधायिनइत्यर्थः ॥ १ ॥ नमइति ॥ हरस्वरूपायरुद्ररूपाय ॥ भूतसंहारकारिणेप्राणिमात्रप्रलयकर्त्रे ॥ यद्वा हरत्वमेवव्युत्पादयाति ॥ भूतेति ॥ भूतानांसंहरणाद्धरइत्यर्थः ॥ तत्त्वमस्यादिवाक्योत्थबुद्धिवृत्त्याभिव्यक्तःसन्नज्ञानंतत्कार्यंचहरतीतिहरस्तत्स्वरूपायेतिवा ॥ भूतेतिपूर्ववत् ॥ महाभूतात्मभूताय महाभूतात्मनापरिणतायविवर्तमानायेतिवा ॥ यद्वा महाभूतानामात्माऽहंकारस्तद्रूपायतत्राधिष्ठातृत्वेनजातायेत्यर्थः ॥ भूतानांपतयेप्राणिमात्राणांनियंत्रे ॥ २ ॥ स्थितिंकरोतीतिस्थितिकृत्तस्मैस्थितिकृतेपालयित्रेइत्यर्थः ॥ विष्णवेव्यापकाय विशतेप्रविशतइतिवा ॥ प्रभविष्णवे

स्पर्शनाद्देवदेवस्यसुसंस्कृतमयीशुभा ॥ वाणीप्रवृत्तातस्यास्यात्तुष्टावाथध्रुवोहरिम् ॥ १०३ ॥ ॥ इति श्रीस्कांदेमहापुराण एकाशीतिसाहस्र्यांसंहितायां चतुर्थे काशीखंडे पूर्वार्द्धे ध्रुवाख्यानेभगवद्दर्शनंनामविंशतितमोऽध्यायः ॥ २० ॥ ॥ ध्रुवउवाच ॥ ॥ नमोहिरण्यगर्भायसर्वसृष्टिविधायिने ॥ हिरण्यरेतसेतुभ्यंसुहिरण्यप्रदायिने ॥ १ ॥ नमोहरस्वरूपायभूतसंहारकारिणे ॥ महाभूतात्मभूतायभूतानांपतयेनमः ॥ २ ॥ नमःस्थितिकृतेतुभ्यंविष्णवेप्रभविष्णवे ॥ तृष्णाहरायकृष्णायमहाभारसहिष्णवे ॥ ३ ॥ नमोदैत्यमहारण्यदाववह्निस्वरूपिणे ॥ दैत्यद्रुमकुठारायनमस्तेशार्ङ्गपाणये ॥४॥ नमःकौमोदकीव्यग्रकराग्रायगदाधर ॥ महादनुजनाशायनमोनंदकधारिणे ॥ ५ ॥ नमःश्रीपतयेतुभ्यंनमश्चक्रधरायच ॥ धराधरायवाराहरूपिणे परमात्मने ॥ ६ ॥ नमःकमलहस्तायकमलावल्लभायते ॥ नमोमत्स्यादिरूपायनमःकौस्तुभवक्षसे ॥ ७ ॥ नमोवेदांतवेद्यायनमःश्रीवत्सधारिणे ॥ नमोगुणस्वरूपायगुणिनेगुणवर्जिते ॥ ८ ॥

भवनशीलाय ॥ तृष्णातर्षोविषयवासनावातद्धराय ॥ कृष्णायसदानंदरूपायेतिपुरुषार्थतादर्शिता ॥ कृषिर्भूवाचकःशब्दोणश्चनिर्वृतिवाचकः ॥ तयोरैक्यंपरंब्रह्मकृष्णइत्यभिधीयतइतिस्मृतेः ॥ महाभारसहिष्णवेवराहरूपेणकूर्मरूपेणशेषरूपेणवा ॥ ३ ॥ विष्णुत्वंप्रपंचयन्प्रणमाति ॥ नमोदैत्येत्यारभ्यजरायुजेत्यंतेन ॥ दैत्याएवमहारण्यानितेषुदवाग्निस्वरूपिणेवनाग्निरूपाय दितेःपुत्रादैत्यास्तएवद्रुमास्तेषांकुठारायपरश्वधायच्छेत्रेइत्यर्थः ॥ शृंगैर्निर्मितंशार्ङ्गंधनुःपाणौयस्यसतस्मै ॥४॥ कुमुदाख्यस्यदैत्यस्येयंकौमोदकीगदातस्याधारणार्थंव्यग्राणिउद्युक्तानिकराग्राण्यंगुलयोयस्यतस्मै ॥ गदांकौमोदकींधरतीतिगदाधरः ॥ महादनुजाःदनोःकश्यपभार्यायाःजाताविप्राचित्तिप्रमुखास्तेषांनाशाय ॥ नन्दकस्तन्नामाखड्गस्तद्धारिणे ॥ ५ ॥ श्रयन्त्येतांयोगिनोऽयोगिनोवेतिश्रीर्ब्रह्मविद्याऽविद्यावातयोःपतयेऽधिष्ठात्रेनियंत्रेवा ॥ चक्रंसुदर्शनन्तद्धराय ॥ धराधरायपृथिव्याश्रयायतदुद्धर्त्रेवासुमेरवइतिवा ॥ मेरुःशिखरिणामहामितिभगवद्वचनात् ॥ वाराहरूपिणेसूकररूपधारिणे ॥ परमात्मनेपरमेश्वराय ॥ ६ ॥ कमलहस्तायलीलाकमलधारिणे ॥ कमलावल्लभायलक्ष्मीकांताय ॥ मत्स्यादिरूपायमीनादिरूपिणे ॥ आदिशब्देनकूर्मादयोगृह्यंते ॥ कौस्तुभवक्षसेकौस्तुभनामामणिर्वक्षसियस्यतस्मै ॥ ७ ॥ वेदांतवेद्यायवेदैकगम्याय ॥ तंत्वौपनिषदंपुरुषंपृच्छामीतिश्रुतेः ॥ श्रीवत्सोभृगुपादलक्ष्मदक्षिणावर्तलोमावलिविशेषोवातद्धारिणे ॥ गुणस्वरूपायस

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पद्मनाभाय भुवनात्मकंपद्मंनाभौयस्यतस्मै ॥
त्वादिरूपाय ॥ गुणिनेजीवात्मने प्रधानात्मनइतिवा ॥ गुणवर्जितेवस्तुतोगुणवर्जिताय ॥ विभक्तिव्यत्ययश्छांदसः ॥ गुणवर्जितइतिवापाठः ॥ ८ ॥ पद्मनाभाय भुवनात्मकंपद्मंनाभौयस्यतस्मै ॥
स्वार्थेतद्धितः ॥ सर्वत्रासौवसतिसमस्तंवाऽस्मिन्व
पंचजननामादैत्यस्तदंगप्रभवःशंखःपांचजन्यस्तद्धराय ॥ वासुदेवः वसुस्तेजोरूपोदेवःप्रकाशात्मावसुश्चासौदेवश्चेतितथावसुदेवएववासुदेवः ॥ स्वार्थेतद्धितः ॥ सर्वत्रासौवसतिसमस्तंवाऽस्मिन्व
सतीतिवासुदेवः ॥ तदुक्तंवैष्णवे ॥ सर्वत्रासौसमस्तंचवसत्यत्रेतिवैयतः ॥ ततःसवासुदेवेतिविद्वद्भिःपरिपठ्यतइति ॥ वसुदेवस्यापत्यंवासुदेवइतिवातत्संबोधनंतथा ॥ देवकीनंदनाय दीव्यति
सुखात्मनासंसारचक्रेणवाक्रीडतीतिविद्यादेवकपुत्रीवादेवकीतांनंदयतीतितथा ॥ ९ ॥ प्रद्युम्नाय प्रकृष्टंद्युम्नंतेजोयस्यतस्मै ॥ नकेनाप्यवतारादौरुद्धइत्यनिरुद्धस्तस्मै ॥ उभयत्रार्थांतरंस्पष्टम् ॥
कंसविनाशाय स्वकार्यंकंस्तेव्याप्नोतीतिकंसमज्ञानंकंसनामाऽसुरोवातद्विनाशाय ॥ चाणूरमर्दिने चश्चासौरोविवेकापहारित्वादप्रबोधस्तेनाणुःसूक्ष्मतरःउःशिवस्तस्यरःप्रकाशोयत्रतच्चाणूरंजगत्चाणू
राख्योदैत्योवातन्मर्दिने ॥ १० ॥ दामबंधनंमायाउदरेंतर्यस्यमायाधिष्ठानत्वात्सतथा ॥ यशोदयाउलूखलेनास्योदरंदाम्नाबद्धंतेनवादामोदरस्तत्संबोधनंतथा ॥ हृषीकाणामिंद्रियाणामीशोनियंता ॥
चंद्रसूर्ययोरश्मयोहृष्टाःकेशायस्यसवाहृषीकेशस्तत्संबोधनंतथाहेहृषीकेश ॥ तथाचोक्तंभारते ॥ सूर्याचंद्रमसोःशश्वदंशुभिःकेशसंज्ञितैः ॥ बोधयन्स्वापयंश्चैवजगदुत्तिष्ठतेपृथक् ॥ बोधनात्स्वाप
नाच्चैवजगतोहर्षणंभवेत् ॥ अग्नीषोममयैरेवंकर्मभिःपांडुनंदन ॥ हृषीकेशोहमीशानोवरदोलोकपावनइति ॥ गोविंद हेप्राप्तकामधेन्वैश्वर्य ॥ अच्युत स्वभावान्नप्रच्यवतइत्यच्युतस्तत्संबोधनंतथा ॥

नमस्तेपद्मनाभायपांचजन्यधरायच ॥ वासुदेवनमस्तुभ्यंदेवकीनंदनायच ॥ ९ ॥ प्रद्युम्नायनमस्तुभ्यमनिरुद्धायतेनमः ॥ नमःकंसविनाशायनम
श्चाणूरमर्दिने ॥ १० ॥ दामोदरहृषीकेशगोविंदाच्युतमाधव ॥ उपेंद्रकैटभाऽरातेमधुहंतरधोक्षज ॥ ११ ॥ नारायणायनरकहारिणेपापहारिणे ॥ वामना
यनमस्तुभ्यंहरयेशौरयेनमः ॥ १२ ॥ अनंतायनमस्तुभ्यमनंतशयनायच ॥ रुक्मिणीपतयेतुभ्यंरुक्मिप्रमथनायच ॥ १३ ॥ चैद्यहंत्रेनमस्तुभ्यं
दानवारेसुरारये ॥ मुकुंदपरमानंदनंदगोपप्रियायच ॥ १४ ॥ नमस्तेपुंडरीकाक्षदनुजेंद्रनिषूदन ॥ नमोगोपालरूपायवेणुवादनकारिणे ॥ १५ ॥

मालक्ष्मीरविद्यावातयोर्धवनियंतःहेमाधव ॥ इंद्रस्योपरींद्रइत्युपेंद्रः ॥ तथाचहरिवंशे ॥ ममोपरियथेंद्रस्त्वंस्थापितोगोभिरीश्वरः ॥ उपेंद्रइतिलोकास्त्वांगास्यंतिभुविसर्वतइति ॥ तत्संबोधनंतथा ॥
इंद्रस्यउपसमीपेऽवरजत्वेनजातइतिवाउपेंद्रस्तत्संबोधनंतथा ॥ कैटभारातेकैटभनाम्नोदैत्यस्यारे ॥ मधुहंतर्मधुनाम्नोदैत्यस्यनाशकर्तः ॥ अधःइंद्रियेणपादेनावतारादौजायतइत्यधोक्षजः ॥
यद्वा अक्षजमैंद्रियकंज्ञानंतदधोऽर्वागेवयस्मात्तत्संबोधनंतथा ॥ ११ ॥ नराणांजीवानामाश्रयायनारायणाय ॥ पापिनोयेषुशास्यंतेतेनरकाःस्थानविशेषाः नरकनामासुरोवातद्धारिणे ॥
पापहारिणेऽधर्मनाशकर्त्रे ॥ वामयतिभक्तानांसंसारदुःखमितिवामनस्तस्मै ॥ अज्ञानंतत्कार्यंहरतीतिहरिस्तस्मै ॥ शूरस्यापत्यंशौरिस्तस्मै ॥ १२ ॥ अनंतायअनंतनागायत्रिविधपरिच्छेद
शून्यायवा ॥ नारायणावतारेऽनंतशयनायशेषशायिने ॥ रुक्मिणीपतयेलक्ष्मीकांताय ॥ रुक्मिणीकृष्णजन्मनीतिपराशरवचनात् ॥ वैदर्भीभीष्मकसुतांश्रियोमात्रांस्वयंवरेइतिशुकोक्तेश्च ॥
रुक्मिणंरुक्मिण्याभ्रातरंप्रमथयतिधनुरादिकंछित्त्वाकेशश्मश्रूणिमुंडयतीतिरुक्मिप्रमथनस्तस्मै ॥ १३ ॥ चैद्यवंशेभवश्चैद्यःशिशुपालस्तद्धंत्रे ॥ दनोःपुत्रादानवास्तदरेतेषांशत्रो ॥ असुराणा
मरयेनाशकाय ॥ मुकुंदभुक्तिमुक्तिद ॥ परमअविद्यातत्कार्यविनिर्मुक्त॥आनंदसुखरूप ॥ परमानंदेत्येकंपदंवा ॥ सपरमानंदइतिश्रुतेः ॥ नंदगोपस्यद्रोणवस्ववतारस्यप्रियायपुत्रायहितैषिणइतिवा ॥
॥ १४ ॥ महादेवाराधनकालेपुंडरीकीकृतमक्षिनेत्रंयेनमहादेवात्प्राप्तपुंडरीकतुल्यनेत्रत्वाद्वापुंडरीकाक्षस्तत्संबोधनंतथा ॥ तथाचादित्यपुराणे ॥ एवमुक्त्वाददौचक्रमित्युपक्रम्यनेत्रंचपद्मसदृशं



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विष्णवेप्रभविष्णवइति ॥ यद्वा पुंडरीकेइवाक्षिणीयस्यसतथातत्संबोधनंतथा ॥ यद्वा पुंडरीकाक्षहेअक्षयपरमधाम ॥ पुंडरीकंपरंधामाक्षयमव्ययमुच्यतइतिवचनात् ॥ दनुजेंद्राःहिरण्यकशिपुप्रभृतयस्तेषांनिषूदननाशक ॥ गोपालरूपायस्फुरद्धर्हदलोद्भद्धादिरूपाय ॥ वेणुवादनकारिणेवेणुवाद्यकर्त्रे ॥ १९ ॥ गोप्योराधाप्रभृतयस्तासांप्रियाय ॥ केशिघ्नेकेशिनाम्नोदैत्यस्यहंत्रे ॥ गोवर्धनंधरतीतिगोवर्धनधरस्तस्मै ॥ योगिनोरमंतेअस्मिन्निितिरामः ॥ तथाचपाद्मे ॥ रमंतेयोगिनोनंतेसत्यानंदेचिदात्मनि ॥ इतिरामपदेनासौपरंब्रह्माभिधीयतेइति ॥ रमयतिनयनमनांसीतिवारामस्तस्मै ॥ रघुनाथायरघुवंशोद्भवानांस्वामिने ॥ राघवायरघुवंशोद्भवाय ॥ १६ ॥ रावणारेदशग्रीवस्यशत्रो ॥ विभीषणस्यशरणमेवशरण्यआश्रयस्तंददातीतितथातत्संबोधनंविभीषणशरण्यद ॥ अजायजन्मरहिताय ॥ जयरूपायजयस्वरूपाय ॥ रणांगणविचक्षणरणभूमौदक्ष ॥ १७ ॥ क्षणआदिर्यस्यसक्षणादिःकालस्तद्रूपाय ॥ नानारूपायप्रपंचात्मने ॥ शार्ङ्गंधनुर्वर्ततेयस्यतस्मैशार्ङ्गिणे ॥ गदाकौमोदक्याख्याऽस्यास्तीतिगदीतस्मैगदिने ॥ चक्रंसुदर्शनाख्यंवर्ततेऽस्येतिचक्रीतस्मै ॥ दैत्यानांचक्रंसमूहंविमर्दितुंशीलंयस्यतस्मैदैत्यचक्रविमर्दिने ॥ १८ ॥ बलाधिक्याद्बलःसंकर्षणस्तस्मैबलाय ॥ बलोच्छ्र्याद्बलभद्रःस एवतस्मैबलभद्राय ॥ बलस्यासुरस्यारातिःशत्रुरिंद्रस्तस्यप्रियाय ॥ बलियज्ञप्रमथन बलिनाम्नोऽसुरस्ययज्ञविध्वंसन ॥ भक्तानांबलप्रदभक्तबल

गोपीप्रियायकेशिघ्नेगोवर्धनधरायच ॥ रामायरघुनाथायराघवायनमोनमः ॥ १६ ॥ रावणारेनमस्तुभ्यंविभीषणशरण्यद ॥ अजायजयरूपायरणांगणविचक्षण ॥१७॥ क्षणादिकालरूपायनानारूपायशार्ङ्गिणे ॥ गादिनेचाक्रिणेतुभ्यंदैत्यचक्रविमर्दिने ॥१८॥ बलायबलभद्रायबलारातिप्रियायच ॥ बलियज्ञप्रमथननमोभक्तवरप्रद ॥ १९ ॥ हिरण्यकशिपोर्वक्षोविदारणरणप्रिय ॥ नमोब्रह्मण्यदेवायगोब्राह्मणहितायच ॥ २० ॥ नमस्तेधर्मरूपायनमःसत्त्वगुणायच ॥ नमःसहस्रशिरसेपुरुषायपरायच ॥ २१ ॥ सहस्राक्षसहस्रांघ्रेसहस्रकिरणायच ॥ सहस्रमूर्तेश्रीकांतनमस्तेयज्ञपुरुष ॥२२॥ वेदवेद्यस्वरूपायनमोवेदप्रियायच॥वेदायवेदगादिनेसदाचाराध्वगामिने ॥२३॥ वैकुंठायनमस्तुभ्यंनमोवैकुंठवासिने॥ विष्टरश्रवसेतुभ्यंनमोगरुडगामिने ॥२४॥

प्रद ॥ अभक्तानांबलंप्रकर्षेणद्यतिखंडयतीतिवा ॥ दोऽवखंडनेइतिधातुः ॥ १९ ॥ हिरण्यकशिपोर्दैत्यस्यवक्षोवक्षःस्थलंविदारयतीतितथा ॥ रणप्रियसंग्रामोत्सुक ॥ ब्रह्मभ्योब्राह्मणादिभ्योहितोब्रह्मण्यःसचासौदेवश्चेतितस्मै ॥ ब्राह्मणरूपायेतिक्वचित् ॥ गवांब्राह्मणानांचहिताय ॥ २० ॥ चोदनालक्षणोऽर्थोधर्मस्तद्रूपाय ॥ तथाचपारमर्षसूत्रं चोदनालक्षणोर्थोधर्मइति ॥ धर्माख्यदेवतारूपायेतिवा ॥ सत्त्वंगुणोयस्मिंस्तस्मैशुद्धसत्त्वात्मकायेत्यर्थः ॥ सहस्रंशिरांस्यस्यतस्मै ॥ सहस्रशीर्षेत्यादिश्रुतेः ॥ पूर्णत्वात्पुरुषःपुरिशयनाद्वापुरुषः ॥ नवद्वारेपुरेशेतेपुरुषस्तेनचोच्यते ॥ कार्यकारणतयापूर्वमापिस्थितत्वाद्वापुरुषः ॥ तथाचश्रुतिः ॥ पूर्वमेवाहमिहासंततपुरुषस्यपुरुषत्वमिति ॥ तद्रूपाय ॥ परायपरमेश्वराय ॥ २१ ॥ सहस्रमक्षीणियस्यतत्संबोधनंतथा ॥ सहस्रमंघ्रयोयस्यतत्संबोधनंतथा ॥ सहस्रमपरिमिताःकिरणायस्यसूर्यरूपस्यतस्मै ॥ सहस्रमपरिमितामूर्तिर्यस्यतत्संबोधनंतथा ॥ श्रीकांतलक्ष्मीपते ॥ यज्ञपूरुषयज्ञाधिष्ठातृपुरुष ॥ २२ ॥ वेदवेद्योवैदिकवेद्यस्तत्स्वरूपाय ॥ वेदप्रियायवेदप्रवर्तकाय ॥ वेदायवेदस्वरूपाय ॥ वेदनंवेदःस्वप्रकाशश्चिदात्मातद्रूपायेतिवा ॥ वेदान्गदितुंकथयितुंव्यस्तुंवाशीलंयस्यतस्मैवेदव्यासरूपायेत्यर्थः ॥ सदाचाररूपोयोऽध्वामार्गस्तेनगंतुंशीलंयस्यतस्मैतत्प्रवर्तकायेत्यर्थः ॥२३॥ वैकुंठायविकुण्ठायाःपुत्राय ॥ पत्नीविकुण्ठाशुभ्रस्यवैकुंठैःसहितःसुरैः॥तस्यांसकलयाजज्ञेवैकुंठोभगवान्स्वय



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मिति ॥ विकुण्ठामायातामधिष्ठायतिष्ठतीतिवैकुण्ठस्तस्माइतिवा ॥ वैकुण्ठेवस्तुंशीलंयस्यतस्मै ॥ विष्टंव्याप्तिंरांतिकीर्तयन्तीतिविष्टरायाज्ञवल्क्यादयस्तेभ्यःश्रूयतइतिविष्टरश्रवाः ॥ विष्टरेशब्दप्रपंच मयेवेदेश्रूयतइतिवातस्मै ॥ गरुडेनगंतुंशीलंयस्यतस्मै ॥ २४ ॥ विष्वक्सेन विष्वगंचंतिपलायंतेदैत्यसेनायस्योद्योगमात्रेण ॥यद्वा॥ विष्वगंचतीसर्वतःप्रसर्पतीकैश्चिदप्यनिवारितासेनायस्यतत्संबोध नंतथा ॥ जगन्मयप्रपञ्चरूप ॥ इदंसर्वंयदयमात्मेतिश्रुतेः ॥ विरोधिलक्षणयाजनाःपुण्यजनाराक्षसास्तानर्दयतीतिदाशरथिरूपेणजनमात्रंवाअर्दयतिप्रलयकालइतितत्संबोधनंहेजनार्दन ॥ त्रिविक्र मायेति ॥ २५ ॥ केशवाय केशिनामानंदैत्यंहतवानितिकेशवस्तस्मै ॥ तथाचहरिवंशे ॥ यस्मात्त्वयाहतःकेशीतस्मान्मच्छासनंशृणु ॥केशवोनामनाम्नात्वंख्यातोलोकेभविष्यसि॥ केशसंज्ञिताःसूर्या दिसंक्रांताअंशवस्तद्वत्तयावाकेशवः ॥ अंशवोयेप्रकाशंतेममतेकेशसंज्ञिताः ॥ सर्वज्ञाःकेशवन्तस्मान्मामाहुर्द्विजसत्तमाइतिमहाभारते ॥ ब्रह्मविष्णुशिवाख्याताःशक्तयःकेशसंज्ञिताइत्यादौकेशशब्दः शक्तिपर्यायः ॥ कोब्रह्मेतिसमाख्यातईशोहंसर्वदेहिनाम् ॥ आवांतवांकेसंभूतौततःकेशवनामवानितिहरिवंशे ॥ तत्संबोधनंवातथा ॥ मायाख्याशक्तिर्वर्ततेयस्यतस्मै ॥ ब्रह्मगायिनेवेदगायिने ॥ तपोरूपायतपःस्वरूपायआलोचनरूपायेतिवा ॥ तपसांतपस्विनांफलदायिनेकर्मफलदात्रे ॥ २६ ॥ स्तुत्यायस्तोत्रस्यविषयभूताय ॥ स्तुतिरूपायस्तोत्रस्वरूपाय ॥ भक्तस्तुतिरतायभक्तानां

विष्वक्सेननमस्तुभ्यंजगन्मयजनार्दन ॥ त्रिविक्रमायसत्यायनमःसत्यप्रियायच ॥ २५ ॥ केशवायनमस्तुभ्यंमायिनेब्रह्मगायिने ॥ तपोरूपायतप सांनमस्तेफलदायिने ॥ २६ ॥ स्तुत्यायस्तुतिरूपायभक्तस्तुतिरतायच ॥ नमस्तेश्रुतिरूपायश्रुत्याचारप्रियायच ॥ २७ ॥ अंडजायनमस्तुभ्यंस्वे दजायनमोस्तुते ॥ जरायुजस्वरूपायनमउद्भिज्जरूपिणे ॥ २८ ॥ देवानामिंद्ररूपोसिग्रहाणामसिभानुमान् ॥ लोकानांसत्यलोकोऽसिसिंधूनांक्षी रसागरः ॥ २९ ॥ सुरापगाऽसिसरितांसरसांमानसंसरः ॥ हिमवानसिशैलानांधेनूनांकामधुग्भवान् ॥ ३० ॥ धातूनांहाटकमसिस्फटिकश्चोपले ष्वसि ॥ नीलोत्पलंप्रसूनेषुवृक्षेषुतुलसीभवान् ॥ ३१ ॥ सर्वपूज्यशिलानांवैशालग्रामशिलाभवान् ॥ मुक्तिक्षेत्रेषुकाशीत्वंप्रयागस्तीर्थपंक्तिषु ॥३२॥

स्तुतौप्रीयमाणाय ॥ श्रुतिरूपायवेदरूपाय ॥ वेदरूपायेतिक्वचित् ॥ श्रुत्याचारप्रियायश्रुत्याचारेणप्रीयमाणाय ॥२७॥ अण्डजायपक्षिस्वरूपाय ॥ स्वेदजायमत्कुणादिरूपाय ॥ जरायुजस्वरूपा यमानुषादिरूपाय ॥ उद्भिज्जरूपिणेतरुरूपिणे ॥ २८ ॥ विभूतिरूपेणस्तौति देवानामित्यारभ्यत्वामाहुर्जीवनेश्वरमित्यंतेन ॥ देवानांवस्वादित्यादीनामिंद्ररूपोऽसिभवसि ॥ देवानामस्मिवासव इतिभगवद्वचनात् ॥ नवग्रहाणांमध्येभानुमान्सूर्योऽसि ॥ चतुर्दशलोकानांमध्येसत्यलोकोब्रह्मलोकोऽसि ॥ सप्तानांसिंधूनांसागराणांमध्येक्षीरसागरोऽसीतिसर्वत्रानुषज्जते ॥ २९ ॥ सरितां नदीनांमध्येसुरापगागंगाऽसि ॥ स्रोतसामस्मिजाह्नवीतिभगवद्वचनात् ॥ सरसांसरोवराणांमध्येमानसंब्रह्मणोमनसोभवंसरोऽसि ॥ तथाचरामायणे ॥ कैलासेपर्वतेरामंमनसानिर्मितंसरः ॥ ब्रह्मणारघुशार्दूलमानसंनामतेनतदिति ॥ शैलानांपर्वतानांमध्येहिमवान्हिमालयोऽसि ॥ स्थावराणांहिमालयइतिभगवद्वचनात् ॥ धेनूनांमध्येकामधुक्सुरभिर्भवानस्ति ॥ धेनूनामस्मिकामधुगिति भगवद्वचनात् ॥ ३० ॥ अष्टानांसुवर्णादीनांधातूनांमध्येहाटकंसुवर्णमसि ॥ उपलेषुपाषाणेषुमध्येस्फटिकरूपपाषाणोऽसि ॥ प्रसूनेषुपुष्पेषुनीलोत्पलंनीलपद्ममसि ॥ वृक्षेषुमध्येतुलसीसुरसा भवानस्ति ॥ तुलसीसुरसागौरीभूतघ्नीबहुमंजरीतिधन्वंतरिः ॥ ३१ ॥ सर्वेषांसर्वावायाःपूज्यशिलास्तासांमध्येशालग्रामशिलाभवानस्ति ॥ मुक्तिक्षेत्रेषुमध्येकाशीत्वमसि ॥ तीर्थपंक्तिषुतीर्थ

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

समूहेषुप्रयागस्त्वमसि ॥ ३२ ॥ वर्णेषुश्वेतरक्तपीतकृष्णेषुमध्येश्वेतवर्णोऽसि ॥ द्विपदांपदद्वययुक्तानांमध्येब्राह्मणोभवानस्ति ॥ अंडजेषुपक्षिषुमध्येगरुडोऽसि ॥ वैनतेयश्चपक्षिणामितिभग वद्वचनात् ॥ व्यवहारेषुलोकचर्यासुमध्येवाग्वाणीभवानस्ति ॥ ३३ ॥ वेदेषुऋगादिषुचतुर्षुउपनिषद्रूपोवेदांतभागोभवानस्ति ॥ मंत्राणांगायत्र्यादीनांमध्येप्रणवओंकारोऽसि ॥ मंत्राणांप्रणवस्त्रिवृ दितिभागवतोक्तेः ॥ अक्षराणामकारादीनांमध्येऽकारोऽसि ॥ अक्षराणामकारोस्मीतिभगवद्वचनात् ॥ यज्वनांयज्ञकर्तॄणांमध्येसोमरूपधृक्चंद्ररूपधृक् ॥ नक्षत्राणामहंशशीतिभगवद्वचनात् ॥ ३४ ॥ प्रतापिनांप्रतापवतांमध्येऽग्निरसि ॥ वसूनांपावकश्चास्मीतिभगवद्वचनात् ॥ क्षमावतांसहनशक्तिमतांक्षमासहनशक्तिरसि ॥ दातॄणांदानकर्तॄणांमध्येपर्जन्योमेघस्तदधिष्ठातृदेवोऽसि ॥ पवित्राणां मध्येपरोसिउत्कृष्टोऽसि ॥ हीतिप्रसिद्धौ ॥ एवमन्यत्रापि ॥ पवित्राणांपवित्रंयइतिस्मृतेः ॥ पयोह्यसीतिपाठेपयोजलम् ॥ ३५ ॥ सर्वशस्त्राणांमध्येचापोधनुरसि ॥ आयुधानांधनुरहमिति भगवदुक्तेः ॥ वेगवतांमध्येवातोऽसि ॥ पवनःपवतामस्मीतिभगवद्वचनात् ॥ इंद्रियवर्गेषुइंद्रियसमुदायेषुमध्येमनोऽसि ॥ इंद्रियाणांमनश्चास्मीतिभगवद्वचनात् ॥ निर्भयाणांमध्येकरोहस्तोह्यसि ॥ अतएवभयेप्रत्युपस्थितेकरमेवप्रसारयतिसर्वोलोकइति ॥ ३६ ॥ व्याप्तिमतांविभूनांपदार्थानांमध्येव्योमआकाशंत्वमसि ॥ वैइत्यपिप्रसिद्धौ ॥ एवमन्यत्रापि ॥ आत्मनांप्रत्यक्चैतन्यानांमध्येपरमा

वर्णेषुश्वेतवर्णोऽसिद्विपदांब्राह्मणोभवान् ॥ गरुडोस्यंडजेष्वीशव्यवहारेषुवाग्भवान् ॥ ३३ ॥ वेदेषूपनिषद्रूपामंत्राणांप्रणवोह्यसि ॥ अक्षराणामकारो सियज्वनांसोमरूपधृक् ॥ ३४ ॥ प्रतापिनामग्निरसिक्षमाऽसित्वंक्षमावताम् ॥ दातॄणामसिपर्जन्यःपवित्राणांपरोह्यसि ॥ ३५ ॥ चापोसिसर्वशस्त्राणां वातोवेगवतामसि ॥ मनोसींद्रियवर्गेषुनिर्भयाणांकरोह्यसि ॥ ३६ ॥ व्योमव्याप्तिमतांत्वंवैपरमात्माऽसिचात्मनाम् ॥ संध्योपास्तिर्भवान्देवसर्वेनित्ये षुकर्मसु ॥ ३७ ॥ क्रतूनामश्वमेधोसिदानानामभयंभवान् ॥ लाभानांपुत्रलाभोसिवसंतस्त्वमृतुष्वहो ॥ ३८ ॥ युगानांप्रथमोसित्वंतिथीनांत्वंकुहूर्ह्यसि ॥ पुष्योसिनक्षत्रगणेसंक्रमःसर्वपर्वसु ॥ ३९ ॥ योगेषुव्यतिपातस्त्वंतृणेषुहिकुशोभवान् ॥ उद्यमानांहिसर्वेषांनिर्वाणंत्वमसिप्रभो ॥ ४० ॥

त्मासि ॥ अहमात्मागुडाकेशसर्वभूताशयस्थितइतिभगवद्वचनात् ॥ अहमात्मोद्धवामीषांभूतानांसुहृदीश्वरइतिभागवतोक्तेश्च ॥ हेदेवसर्वेषुनित्येषुकर्मसुभवान्संध्योपास्तिःसंध्योपासनमस्ति ॥ ३७ ॥ क्रतूनांयागानांमध्येऽश्वमेधोऽसि ॥ दानानांतुलापुरुषादीनांमध्येभवानभयरूपंदानमस्ति ॥ लाभानांराज्यप्राप्त्यादीनांमध्येभवान्पुत्रलाभोस्तिपुत्रोत्पत्तिरूपोलाभोस्ति ॥ अहोभोदेवषड्ऋतुषुमध्ये त्वंवसंतऋतुरसि ॥ ऋतूनांकुसुमाकरइतिभगवदुक्तेः ॥ ३८ ॥ युगानांसत्यत्रेताद्वापरकलीनांमध्येप्रथमोयुगःसत्ययुगस्त्वमसि ॥ तिथीनांप्रतिपदादिपंचदशानांमध्येकुहूरमावास्याऽसि ॥ नक्षत्रगणे नक्षत्रसमूहमध्येपुष्योनक्षत्रमसि ॥ पुंस्त्वंनक्षत्राणांस्त्रीपुंरूपत्वात् ॥ तथाचात्रैवोक्तम् ॥ पुरुषायितसंज्ञेनतप्यंतत्तपसाऽधुना ॥ भवतीभिस्ततःपुंस्त्वमिच्छयावोभविष्यतीति ॥ सर्वपर्वसुसर्वपुण्यकालेषुम ध्येसंक्रमःसंक्रांतिरसि ॥ ३९ ॥ योगेषुसप्तविंशतिसंख्येषुव्यतिपाताख्योयोगस्त्वम् ॥ रविवासरसंयुक्ताऽमावास्याव्यतिपातइतिकेचित् ॥ तृणेषुमध्येभवान्कुशोऽसि ॥ कुशोस्मिदर्भजातीनामि तिभागवतोक्तेः ॥ उद्यम्यंतेप्रसाध्यंतइत्युद्यमाधर्मार्थकाममोक्षास्तेषांसर्वेषामुद्यमानांमध्येनिर्वाणंमोक्षस्त्वमसि ॥ उपमानांहिसर्वेष्वितिपाठेसर्वेषुदार्ष्टांतिकेषुउपमानंदृष्टांतोभवानित्यर्थः ॥ ४० ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सर्वासांकामादिबुद्धीनांमध्येइहजगतिहेअजधर्मबुद्धिर्भवानास्ति ॥ सर्ववृक्षेषुमध्येभवानश्वत्थवृक्षोस्ति ॥ अश्वत्थःसर्ववृक्षाणामितिभगवद्वचनात् ॥ लतासुमध्ये ॥ चःसमुच्चये ॥ एवमन्यत्रापि ॥ सोमवल्लीसोमलताभवानस्ति ॥ ४१ ॥ अहोहेविष्णोपवित्रेषुसाधनेषूपायेषुमध्येभवान्प्राणायामःप्राणसंयमोस्ति ॥ सर्वलिंगेषुमध्येसर्वदःश्रीमान्विश्वेश्वरोभवानास्ति ॥ ४२ ॥ मित्राणांमध्ये कलत्रंभार्यात्वमसि ॥ सर्वबंधूनांमध्येधर्मरूपोबंधुरसि ॥ अनुक्तसर्वसमुच्चयार्थमाह ॥ त्वत्तइति ॥ हेनारायणजीवानामाश्रयचराचरेजंगमस्थावरात्मकेऽस्मिन्जगतित्वत्तोऽन्यन्नास्तित्वमेवसर्वमि त्यर्थः ॥ ४३ ॥ त्वमेवमातेत्यादिश्लोकस्तुत्वत्तइत्यस्मात्पूर्वंबोद्धव्यः ॥ अथवाकिंतदन्यन्मत्तोऽन्यन्नास्तीत्याकांक्षायामुपलक्षणार्थत्वेनकानिचिद्वस्तूनिदर्शयाति ॥ त्वमेवमाताजननी ॥ त्वंतातः पिता ॥ त्वंसुहृत्प्रत्युपकारमनपेक्ष्यहितकारी ॥ महाधनंनिधिरूपम् ॥ त्वमेवसौख्यसंपत्तिःसुखसंभारः ॥ त्वमायुर्जीवनंजीवनेश्वरोजीवश्चत्वम् ॥ एवकारावन्ययोगव्यावर्तकौसर्वत्रसंबध्येते

सर्वासामिहबुद्धीनांधर्मबुद्धिर्भवानज ॥ अश्वत्थःसर्ववृक्षेषुसोमवल्लीलतासुच ॥ ४१ ॥ प्राणायामोसिसर्वेषुसाधनेषुशुचिष्वहो ॥ सर्वदःसर्वलिंगेषुश्रीमान्विश्वेश्वरोभवान् ॥ ४२ ॥ मित्राणांहिकलत्रंत्वंधर्मस्त्वंसर्वबंधुषु ॥ त्वत्तोनान्यज्जगत्यस्मिन्नारायणचराचरे ॥ ४३ ॥ त्वमेवमातात्वंतातस्त्वंसुतस्त्वंमहाधनम् ॥ त्वमेवसौख्यसंपत्तिस्त्वमायुर्जीवनेश्वरः ॥ ४४ ॥ साकथायत्रतेनामतन्मनोयत्त्वदर्पितम् ॥ तत्कर्मयत्त्वदर्थंवैतत्तपोयद्भवत्स्मृतिः ॥४५॥ तद्धनंधनिनांशुद्धंयत्त्वदर्थेव्ययीकृतम् ॥ सएवसकलःकालोयस्मिञ्जिष्णोत्वमर्च्यसे ॥ ४६ ॥ तावच्चजीवितंश्रेयोयावत्त्वंहृदिवर्तसे ॥ रोगाःप्रशममायांतित्वत्पादोदकसेवनात् ॥ ४७ ॥ महापापानिगोविंदबहुजन्मार्जितान्यपि ॥ सद्योविलयमायांतिवासुदेवेतिकीर्तनात् ॥ ४८ ॥ अहोपुंसांमहामोहस्त्वहोपुंसांप्रमादता ॥ वासुदेवमनादृत्ययदन्यत्रकृतश्रमाः ॥ ४९ ॥ इदमेवहिमांगल्यमिदमेवधनार्जनम् ॥ जीवितस्यफलंचैतद्यद्दामोदरकीर्तनम् ॥ ५० ॥ अधोक्षजात्परोधर्मोनार्थोनारायणात्परः ॥ नकामःकेशवादन्योनापवर्गोहरिंविना ॥ ५१ ॥ इयमेवपराहानिरुपसर्गोयमेवहि ॥ अभाग्यंपरमंचैतद्वासुदेवंनयत्स्मरेत् ॥ ५२ ॥ हरेराराधनंपुंसांकिंकिंनकुरुतेबत ॥ पुत्रमित्रकलत्रार्थराज्यस्वर्गापवर्गदम् ॥ ५३ ॥ हरत्यघंध्वंसयतिव्याधीनाधीन्नियच्छति ॥ धर्मंविवर्धयेत्क्षिप्रंप्रयच्छतिमनोरथम् ॥ ५४ ॥ भगवच्चरणद्वंद्वंनिर्द्वंद्वध्यानमुत्तमम् ॥ पापिनापिप्रसंगेनविहितंस्वहितंपरम् ॥ ५५ ॥

॥ ४४ ॥ ४५ ॥ एवंब्रह्मरुद्रविष्णुरूपेणविभूतिरूपेणचस्तुत्वाइदानींनानाविधयास्तौति ॥ इत्युक्त्वेत्यतःप्राक्ततेनग्रंथेन ॥ सफलःसंपूर्णः ॥ सकलइतिक्वचित् ॥ ४६ ॥ ४७ ॥ महापापानिब्रह्महत्यादीनिवासुदेवेतिकीर्तनात्सद्योविलयमायांतीत्यन्वयः ॥ ४८ ॥ अहोइतिखेदे ॥ यद्येनमोहेनप्रमादेनवाऽन्यत्रकृतश्रमास्तेपुमांसः ॥ अन्यत्रकृतःश्रमोयैस्तेतथा ॥ पाठांतरेकृतश्वासौश्रमश्चेत्यर्थात्तैःपुंभिः ॥ ४९ ॥ ५० ॥ नार्थइतिनकारःकाकाक्षिन्यायेनोभयत्रसंबध्यते ॥ नाधोक्षजादितिवापाठः ॥ अपवर्गोमोक्षः ॥ ५१ ॥ उपसर्गउपद्रवः ॥ नरोनंतंनवेदयेदितिक्वचित् ॥ ५२ ॥ बतेत्याश्चर्ये ॥५३॥ आधीन्मानसीर्व्यथाः ॥ नियच्छतिनाशयति ॥५४॥ भगवदिति ॥ भगवच्चरणयोर्द्वंद्वेयुगलेनिर्द्वंद्वध्यानंनिश्चलंध्यानमतएवोत्तमंपापिनापिप्रसंगेनधनादिप्राप्त्यर्थंविहितंकृतंचेत्तर्हि

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तत्परंस्वहितमिति ॥ तथाचोक्तम्॥हरिर्हरतिपापानिदुष्टचित्तैरपिस्मृतः॥अनिच्छयापिसंस्पृष्टोदहत्येवहिपावकः ॥ सर्वपापप्रसक्तोपिध्यायन्निमिषमच्युतम् ॥ द्विजस्तपस्वीभवतिपंक्तिपावनपावनइत्यादि ॥५५॥ महांत्युपपदानिउपसमीपेपदानिभाजितुंशीलंयेषांतानिपापानितथा ॥ महापापान्यपीत्यर्थः ॥ सुलीनध्यानसंपन्नोनिश्चलध्यानसंबद्धः॥सुनीलध्यानसंपन्नइतिपाठेसुनीलःश्रीकृष्णस्तस्यध्याने नसंपन्नइतिव्याख्येयम् ॥ नामोच्चारोनामोच्चारणम् ॥५६॥ किंचप्रमादादपीति ॥ अनलकणोऽग्निविस्फुलिंगः॥अघंपापंसंसारंवा ॥ तथाचवैष्णवे ॥ अवशेनापियन्नाम्निकीर्तितेसर्वपातकैः ॥ पुमान्सद्योविमुच्येतसिंहत्रस्तैर्वृकैरिव॥भागवते ॥ सांकेत्यंपारिहास्यंवास्तोभंहेलनमेववा॥ वैकुण्ठनामग्रहणमशेषाघहरंविदुः ॥ अत्रापिवक्ष्यति ॥ यदिजातुचिदन्धकद्विषस्तवनामौष्ठपुटाद्विनिःसृतम् ॥ शिवशंकरचंद्रशेखरेत्यसकृत्तस्यनसंसृतिःपुनरिति ॥ ५७ ॥ ५८ ॥ विष्णुपादांब्विात ॥ तदुक्तम् ॥ शालग्रामशिलातोयंयदिशंखस्थितंभवेत् ॥ तदाप्रयोजनंनास्तितीर्थैस्त्रैलोक्यसंभवैरिति ॥ ५९ ॥ उपहारंनैवेद्यम् ॥ पुरोडाशोनामयज्ञेषुदेवेभ्योदेयोद्रव्यप्रभेदोऽत्यंतपवित्रःपदार्थः ॥ तथाचोक्तम् ॥ सदापुरोडाशपवित्रिताधराइति ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ शंखचक्रांकिततनुरिति

पापिनांयानिपापानिमहोपपदभांज्यपि ॥ सुलीनध्यानसंपन्नोनामोच्चारोहरेर्हरेत् ॥५६॥ प्रमादादपिसंस्पृष्टोयथाऽनलकणोदहेत् ॥ तथौष्ठपुटसंस्पृष्टंहरिनामहरेदघम् ॥ ५७ ॥ नितांतंकमलाकांतेशांतंचित्तंविधाययः ॥ संशीलयेत्क्षणंनूनंकमलातत्रनिश्चला ॥५८॥ अयमेवपरोधर्मस्त्विदमेवपरंतपः ॥ इदमेवपरंतीर्थंविष्णुपादांबुयत्पिबेत् ॥ ५९ ॥ तवोपहारंभक्त्यायःसेवतेयज्ञपूरुष ॥ सेवितस्तेननियतंपुरोडाशोमहाधिया ॥ ६० ॥ सचैवावभृथस्नातःसचगंगाजलाप्लुतः ॥ विष्णुपादोदकंकृत्वाशंखेयःस्नातिमानवः ॥ ६१ ॥ शालग्रामशिलायेनपूजितातुलसीदलैः ॥ सपारिजातमालाभिःपूज्यतेसुरसद्मनि ॥ ६२ ॥ ब्राह्मणःक्षत्रियोवैश्यःशूद्रोवायदिवेतरः ॥ विष्णभक्तिसमायुक्तोज्ञेयःसर्वोत्तमश्चसः ॥ ६३ ॥ शंखचक्रांकिततनुःशिरसामंजरीधरः ॥ गोपीचंदनलिप्तांगोदृष्टश्चेत्तदघंकुतः ॥ ६४ ॥ प्रत्यहंद्वादशशिलाःशालग्रामस्ययोऽर्चयेत् ॥ द्वारवत्याःशिलायुक्ताःसवैकुंठेमहीयते ॥ ६५ ॥

गोपीचंदनादिनानतुदाहेन ॥ बृहन्नारदीयेदाहेनशंखचक्रधारणस्यनिषिद्धत्वात् ॥ तथाहि ॥ यस्तुसंतप्तशंखादिलिंगचिह्नतनुर्नरः ॥ ससर्वयातनाभोगीचांडालोजन्मकोटिभिः ॥ तंद्विजंतप्तशंखादिलिंगांकिततनुंनरः॥ संभाष्यरौरवंयातियावदिंद्राश्चतुर्दश ॥ चक्रांकिततनुर्यत्रतत्रकोपिनसंवसेत् ॥ यदितिष्ठेन्महापापीसहस्रब्रह्महाभवेत्॥गंगास्नानरतोवापिअश्वमेधरतोपिवा॥चक्रांकिततनुंदृष्ट्वापश्येत्सूर्यंजपन्नरः ॥ जपेच्चशतरुद्रीयमन्यथारौरवंव्रजेत् ॥ ब्राह्मणस्यतनुर्ज्ञेयासर्वदेवसमाश्रिता॥साचेत्संतापिताराजन्किमुवक्ष्यामहेततः॥ चक्रांकिततनुर्वापिराजँल्लिंगान्वितोपिवा॥नाधिकारीपरिज्ञेयःश्रौतस्मार्तेषुकर्मस्विति ॥ नचअतप्ततनूर्नतदा मोअश्नुतइतिश्रुतिविरोधेनस्मृतेरप्रामाण्यम् ॥ श्रुतेरर्थांतरपरत्वात् ॥ कृच्छ्रचांद्रायणादिनाऽतप्ततनुरसंतापितदेहोऽतएवामोऽपक्वोऽदग्धरागादिःपुमांस्तद्ब्रह्मनाश्नुतेनप्राप्नोतीतिश्रुतेरर्थः ॥ तुलस्यामंजरीधरः ॥ शिरसामस्तकेन ॥ सुरसामंजरीधरइतिपाठेसुरसातुलसी ॥ तदघमित्यत्रतच्छब्दोदृष्टविषयः ॥ ६४ ॥ शालग्रामस्यचंपकारण्यांतर्गत

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चक्रतीर्थस्य ॥ शालग्रामस्यशालग्रामाणांद्वादशशिलाइतिवा ॥ द्वारवत्याःशिलाद्वारकाचक्रम् ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ गायामिगानंकरोमि ॥ श्रयामीतिकचित् ॥ ॥ ७२ ॥ ७३ ॥ स्त्रैणेस्त्रीसमूहे ॥ श्यामलतनुंश्रीकृष्णम् ॥ ७४ ॥ सर्वेषामिति ॥ हृदयेषुआवसतीतिहृदयावासोजीवरूपेण ॥ साक्षादपरोक्षः ॥ यत्साक्षादपरोक्षाद्ब्रह्मेतिश्रुतेः ॥ साक्षीअंतर्यामी॥सर्वगंत्वांविनाबहिरंतरन्यंनवेद्मित्वामेवसर्वंवेद्मीत्यर्थः ॥ यदन्यदितिपाठेत्वांविनात्वत्तःसकाशाद्यदन्यत्तत्त्वमेवेत्यन्वयः ॥७५॥७६॥७७॥ अन्नादिति ॥ तद्वृष्टेः साचासौवृष्टिश्चेतितद्वृष्टिस्तस्याः

हरिनामाक्षरमुखंभालेगोपीमृदांकितम् ॥ तुलसीमालितोरस्कंस्पृशे
तुलसीयस्यभवनेप्रत्यहंपरिपूज्यते ॥ तद्गृहंनोपसर्पंतिकदाचिद्यमकिंकराः ॥ ६६ ॥ हरिनामाक्षरमुखंभालेगोपीमृदांकितम् ॥ तुलसीमालितोरस्कंस्पृशे
युर्नयमानुगाः ॥ ६७ ॥ गोपीमृत्तुलसीशंखःशालग्रामःसचक्रकः ॥ गृहेपियस्यपंचैतेतस्यपापभयंकुतः ॥ ६८ ॥ येमुहूर्ताःक्षणायेचयाःकाष्ठायेनिमे
षकाः ॥ ऋतेविष्णुस्मृतेर्यातास्तेषुमुष्टोयमेनसः ॥ ६९ ॥ कद्व्यक्षरंहरेर्नामस्फुलिंगसदृशंज्वलत् ॥ महतीपातकानांचराशिस्तूलोपमाकच ॥ ७० ॥
गोविंदंपरमानंदंमुकुंदंमधुसूदनम् ॥ त्यक्त्वान्यंनैवजानामिनभजामिस्मरामिन ॥ ७१ ॥ ननमामिनचस्तौमिनपश्यामीहचक्षुषा ॥ नस्पृशामिनवाया
मिगायामिनहरिंविना ॥ ७२ ॥ जलेस्थलेचपातालेप्यनिलेचानलेऽचले ॥ विद्याधरासुरसुरेकिंनरेवानरेनरे ॥ ७३ ॥ तृणेस्त्रैणेचपाषाणेतरुगुल्मलता
सुच ॥ सर्वत्रश्यामलतनुंवीक्षेश्रीवत्सवक्षसम् ॥ ७४ ॥ सर्वेषां हृदयावासःसाक्षात्साक्षीत्वमेवहि ॥ बहिरंतर्विनात्वांतुनह्यन्यंवेद्मिसर्वगम् ॥ ७५ ॥
इत्युक्त्वाविरराामासौशिवशर्मन्ध्रुवस्तदा ॥ देवोपिभगवान्विष्णुस्तमुवाचप्रसन्नदृक् ॥ ७६ ॥ ॥ श्रीभगवानुवाच ॥ ॥ अयिबालविशालाक्षध्रुव
ध्रुवमतेऽनघ ॥ परिज्ञातोमयासम्यक्तवहृत्स्थोमनोरथः ॥ ७७ ॥ अन्नाद्भवंतिभूतानिवृष्टेरन्नसमुद्भवः ॥ तद्वृष्टेःकारणंसूर्यःसूर्याधारोध्रुवेधिभोः ॥७८॥
ज्योतिश्चक्रस्यसर्वस्यग्रहर्क्षादेःसमंततः ॥ गगनेभ्रमतोनित्यंत्वमाधारोभविष्यसि ॥ ७९ ॥ मेढीभूतस्तुवैसर्वान्वायुपाशैर्नियंत्रितान् ॥ आकल्पंतत्पदं
तिष्ठभ्रामयञ्ज्योतिषांगणान् ॥ ८० ॥

सूर्यःकारणम् ॥ तदितिपृथक्पदंवा ॥ तत्तस्माद्धोहेध्रुवत्वंसूर्याधारएधिभवेत्यर्थः ॥ तथाचश्रुतिः ॥ अग्नौप्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइति ॥ ॥ ७८ ॥ ७९ ॥ धान्याक्रमणायभ्राम्यमाणानांपशूनांबंधनस्तंभोमेढीतत्सदृशोमेढीभूतइत्यर्थः ॥ आकल्पंकल्पपर्यंतम् ॥ कल्पोऽत्रब्रह्मणोदिनंपरार्धद्वितयंवा ॥ स्थास्नुःपरस्तात्कल्पवासिनामितिभागवतोक्तेः ॥ ८० ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

आसादिप्राप्तम् ॥ आदायीतिपाठेगृहीतमित्यर्थः ॥ ८१ ॥ ८२ ॥ शक्राद्यैरपिदुर्लभंतैरपिप्राप्तुमशक्यमित्यर्थः ॥ तत्त्वत्सात्त्वदधीनम् ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ महोपसर्गश
मनीग्रहादिमहापीडानाशिनी ॥ ८८ ॥८९॥ ९०॥९१॥९२॥९३॥ अनेकानिदानानिदत्त्वानानाव्रतानिचकृत्वायथालाभानवाप्नोतितथाऽनयास्तुत्याऽवाप्नोति ॥ सर्वैर्दानव्रतादिभिर्यत्फलंलभ्यते

आराध्यश्रीमहादेवंपुरापदमिदंमया ॥ आसादियत्तदेतत्तेतपसाप्रतिपादितम् ॥ ८१ ॥ केचिच्चतुर्युगंयावत्केचिन्मन्वंतरंध्रुव ॥ तिष्ठंतित्वंतुवैकल्पंपदमे
तत्प्रशास्यासि ॥ ८२ ॥ मनुनापिनयत्प्रापिकिमन्यैर्मानवैर्ध्रुव ॥ तत्पदंविहितंत्वत्साच्छक्राद्यैरपिदुर्लभम् ॥ ८३ ॥ अन्यान्वरान्प्रयच्छामिस्तवेनाने
नतोषितः ॥ सुनीतिरपितेमातात्वत्समीपेचरिष्यति ॥ ८४ ॥ इदंस्तोत्रवरंयस्तुपठिष्यतिसमाहितः ॥ त्रिसंध्यंमनुजस्तस्यपापंयास्यतिसंक्षयम् ॥८५॥
नतस्यसदनंलक्ष्मीःपरित्यक्ष्यत्यसंशयम् ॥ नजनन्यावियोगश्चनबंधुकलहोदयः ॥ ८६ ॥ ध्रुवस्तुतिरियंपुण्यामहापातकनाशिनी ॥ ब्रह्महापिवि
शुद्ध्येतकाकथेतरपापिनाम् ॥ ८७ ॥ महापुण्यस्यजननीमहासंपत्तिदायिनी ॥ महोपसर्गशमनीमहाव्याधिविनाशिनी ॥ ८८ ॥ यस्याऽस्तिपरमाभ
क्तिर्मयिनिर्मलचेतसः ॥ ध्रुवस्तुतिरियंतेनजप्यामत्प्रीतिकारिणी ॥ ८९ ॥ समस्ततीर्थस्नानेनयत्फलंलभतेनरः ॥ तत्फलंसम्यगाप्नोतिजपन्स्तुत्या
नयामुदा ॥ ९० ॥ संतिस्तोत्राण्यनेकानिममप्रीतिकराणिच ॥ ध्रुवस्तुतेर्नचैतस्याःकलामर्हंतिषोडशीम् ॥ ९१ ॥ श्रुत्वापीमांस्तुतिंमर्त्यःश्रद्धयाप
रयामुदा ॥ पातकैर्मुच्यतेसद्योमहत्पुण्यमवाप्नुयात् ॥ ९२ ॥ अपुत्रःपुत्रमाप्नोतिनिर्धनोधनमाप्नुयात् ॥ अभक्तोभक्तिमाप्नोतिकीर्तनाच्चध्रुवस्तुतेः ॥
॥ ९३ ॥ दत्त्वादानान्यनेकानिकृत्वानानाव्रतानिच ॥ यथालाभानवाप्नोतितथास्तुत्याऽनयानरः ॥ ९४ ॥ त्यक्त्वासर्वाणिकार्याणिनित्यत्वाजप्यान्यने
कशः ॥ ध्रुवस्तुतिरियंजप्यासर्वकामप्रदायिनी ॥ ९५ ॥ श्रीभगवानुवाच ॥ ॥ ध्रुवावधेहिवक्ष्यामिहितंतवमहामते ॥ येनतेनिश्चलंसम्यक्पदमे
तद्भविष्यति ॥ ९६ ॥ अहंजिगमिषुस्त्वासंपुरींवाराणसींशुभाम् ॥ साक्षाद्विश्वेश्वरोयत्रतिष्ठतेमोक्षकारणम् ॥ ९७ ॥ विपन्नानांचजंतूनांयत्रविश्वेश्वरः
स्वयम् ॥ कर्णेजापंप्रकुरुतेकर्मनिर्मूलनक्षमम् ॥ ९८ ॥ अस्यसंसारदुःखस्यसर्वोपद्रवदायिनः ॥ उपायएकएवास्तिकाशिकानंदभूमिका ॥ ९९ ॥
इदंरम्यमिदंनेतिबीजंदुःखमहातरोः ॥ तस्मिन्काश्यग्निनादग्धेदुःखस्यावसरःकुतः ॥१००॥ प्राप्यंसंप्राप्यतेयेननभूयोयेनशोच्यते ॥ परायानिर्वृतेः
स्थानंयत्तदानंदकाननम् ॥ १ ॥ अमृतायनमुत्सृज्यपुरुषोन्यत्रयोवसेत् ॥ आनंदकाननंशंभोःकुतस्तस्यसुखोदयः ॥ २ ॥

तत्सर्वमनयास्तुत्याप्राप्यतइत्यर्थः ॥ कामानितिक्वचित् ॥ ननतथाकाममामितीतिपाठःस्पष्टार्थः ॥ ९४ ॥ ९५ ॥ अवधेहि शृणु ॥ येनहितेनहितानुष्ठानेन ॥ ९६ ॥ ९७ ॥ ९८ ॥ प्रसंगात्का
शींस्तौति अस्येत्यादिषड्भिः ॥ आनन्दभूमिकाआनंदरूपंस्थानम् ॥ ९९ ॥ काश्यग्निनाकाशीमरणनिमित्तरुद्रोपदिष्टज्ञानाग्निनेत्यर्थः ॥ १०० ॥ १ ॥ अमृतायनंकैवल्याश्रयम् ॥ २ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

निर्गतारिपवोयस्मात्तद्राष्ट्रंनीरिपु ॥ ३ ॥ काशींकाशींप्रति ॥ कथंभूतंविश्वेशम् ॥ जगदर्च्यम् ॥ पाठांतरेकाशीविशेषणम् ॥ ४ ॥ सविश्वेश्वरःसुदर्शनचक्रदः ॥ ५ ॥ पुरेति ॥ पुरापूर्वंहरःपादांगुष्ठस्ययाऽग्ररेखातस्याउत्थमुत्पादितंचक्रंसृष्ट्वाप्रक्षिप्यजालंधरंदैत्यमहरन्मारितवानित्यर्थः ॥ कथंभूतम् ॥ ममापिपरिकंपनंकंपजनकम् ॥ पादांगुष्ठस्यरेखाधइतिक्वचित् ॥ पादांगुष्ठस्यरेखातइतिवान्यत्र ॥ पादांगुष्ठस्यरेखाऽस्त्वतिचापरत्र ॥ पादांगुष्ठस्याग्रेणेतिकृत्वेतिचसर्वत्र ॥ ६ ॥ ससुदर्शनचक्रदइत्युक्तंतत्प्राप्तिमेवसकारणांदर्शयाति ॥ तच्चक्रमिति ॥ एवंहिश्रूयतेआदित्य

वरंशरावहस्तस्यचांडालागारवीथिषु ॥ भिक्षार्थमटनंकाश्यांराज्यंनान्यत्रनीरिपु ॥ ३ ॥ वैकुंठनगरात्काशींनित्यंविश्वेशमर्चितुम् ॥ अहमायामिनियमाज्जगदर्च्यंतदर्चिताम् ॥ ४ ॥ मयियापरमाशक्तिस्त्रिलोक्यारक्षणक्षमा ॥ तत्रहेतुर्महेशानःससुदर्शनचक्रदः ॥ ५ ॥ पुराजालंधरंदैत्यंममापिपारिकंपनम् ॥ पादांगुष्ठाग्ररेखोत्थंचक्रंसृष्ट्वाहरोऽहरत् ॥ ६ ॥ तच्चचक्रंमयालब्धंनेत्रपद्मार्चनाद्विभोः ॥ एतत्सुदर्शनाख्यंवैदैत्यचक्रप्रमर्दनम् ॥ ७ ॥ तन्मयातवरक्षार्थंभूतविद्रावणंपरम् ॥ तावत्प्रणुन्नंपुरतस्ततश्चाहमिहागतः ॥८॥ काशीमिदानींयास्यामिविश्वेश्वरविलोकने ॥ अद्ययात्राऽस्तिमहतीकार्तिक्यांबहुपुण्यदा ॥ ९ ॥ कार्तिकस्यचतुर्दश्यांविश्वेशंयोविलोकयेत् ॥ स्नात्वाचोत्तरवाहिन्यांनतस्यपुनरागतिः ॥ ११० ॥ इत्युक्त्वाताक्ष्यमारोप्यध्रुवमानंदमेदुरम् ॥ क्षणाद्वाराणसींप्रापहरिःस्मरहरोषिताम् ॥ ११ ॥ पंचक्रोश्याश्चसीमानंप्राप्यदेवोजनार्दनः ॥ वैनतेयादवारुह्यकरेधृत्वाध्रुवंततः ॥ १२ ॥ मणिकर्ण्यांपरिस्नायविश्वेशमभिपूज्यच ॥ ध्रुवंबभाषेभगवान्हितंतस्यचिकीर्षयन् ॥ १३ ॥ लिंगंस्थापययत्नेनक्षेत्रेऽत्रैवाविमुक्तके ॥ त्रैलोक्यस्थापनंपुण्यंयथाभवतितेऽक्षयम् ॥ १४ ॥ नियुतंयत्परिस्थाप्यलिंगानिफलमाप्यते ॥ अन्यत्रतदिहैकेनलिंगेनपरिलभ्यते ॥ १५ ॥ कालेनभंगमापन्नंजीर्णोद्धारंकरोतियः ॥ इहतस्यफलस्यांतःप्रलयेपिनजायते ॥ १६ ॥

पुराणे ॥ स्वर्णकमलसहस्रेणश्रीशंकरंश्रीकृष्णःप्रत्यहंपूजयतिस्म ॥ तत्रकदाचिच्छ्रीकृष्णस्यभावजिज्ञासयैकस्मिन्कमलेविश्वेश्वरेणहृतेएतद्वाक्यम् ॥ हृतेपुष्पेतदाविष्णुश्चिंतयन्किमिदंत्विति ॥ ज्ञात्वात्मनेत्रमुद्धृत्यपूजयामासशंकरम् ॥ ततस्तेनैवसंतुष्टस्यविश्वेश्वरस्यवाक्यम् ॥ दिव्यंददामितेचक्रमद्भुतंतत्सुदर्शनम् ॥ प्रीत्यर्थंसर्वदेवानांनिर्मितंयन्मयापुरा ॥ गृहीत्वातद्रणेदैत्याञ्जहिविष्णोममाज्ञया ॥ एवमुक्त्वाददौचक्रंसूर्यायुतसमप्रभमिति ॥ नेत्रमेवपद्मंनेत्रपद्मंतेनार्चनात्पूजनात् ॥७॥ प्रणुन्नंप्रेषितम् ॥ पुरतःपूर्वम् ॥ ८ ॥९॥११०॥११॥१२॥१३॥१४ ॥ १५ ॥ प्रसंगाज्जीर्णो



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

द्वारादीनांफलमाह कालेनेत्यादिना ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ १२० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ १३० ॥ ॥ इतिश्रीरामानंद कृतायांकाशीखंडटीकायामेकविंशतितमोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ महर्जनस्तपःसत्यलोकाःकाश्याःस्तुतिस्तथा ॥ द्वाविंशतितमेऽध्यायेवर्ण्यंतेऽमरदुर्लभाः ॥ १ ॥ ध्रुवाख्यानमभिनंदं

वित्तशाठ्यंपरित्यज्यप्रासादंयोऽत्रकारयेत् ॥ तेनदत्तोभवेत्सर्वोमेरुर्नियुतयोजनः ॥ १७ ॥ कूपवापीतडागानिशक्त्यायोऽत्रतुकारयेत् ॥ अन्य त्रकरणात्तस्यपुण्यंकोटिगुणाधिकम् ॥ १८ ॥ इज्यार्थमत्रयःकुर्यात्सुरम्यांपुष्पवाटिकाम् ॥ पुष्पेपुष्पेफलंतस्यसुवर्णकुसुमाधिकम् ॥ १९ ॥ अत्रब्रह्म पुरींकृत्वायोविप्रेभ्यःप्रयच्छति ॥ वर्षाशनेनसंयुक्तांतस्यपुण्यफलंशृणु ॥ १२० ॥ क्षीयंतेसलिलान्यब्धेर्भौमाश्चत्रसरेणवः ॥ क्षयोनतस्यपुण्यस्य शिवलोकेसमासतः ॥ २१ ॥ मठानपितपस्विभ्यःकारयित्वाऽत्रयोर्पयेत् ॥ जीवनोपायसंयुक्तान्सोपिपूर्वफलाश्रयः ॥ २२ ॥ कृत्वामहांतिपुण्यानियो ऽत्रविश्वेश्वरेऽर्पयेत् ॥ नतस्यपुनरावृत्तिर्घोरेसंसारसागरे ॥२३॥ अनंतइतिवादोयंमयिलोकेऽत्रगीयते ॥ परंकाशीगुणानांहिमयाप्यंतोनलभ्यते ॥२४॥ तस्मात्प्रयत्नतःकाश्यांध्रुवश्रेयःसमाश्रयेत् ॥ काशीश्रेयःफलंपुंसामक्षयायोपजायते ॥२५॥ गणावूचतुः ॥ ॥ ध्रुवमित्युपदिश्याथजगामगरुडध्वजः ॥ ध्रुवोपिलिंगंसंस्थाप्यवैद्यनाथसमीपतः ॥ २६ ॥ प्रासादंसुमहत्कृत्वाकृत्वाकुंडंतदग्रतः ॥ विश्वेश्वरंसमभ्यर्च्यकृतकृत्योगृहंययौ ॥ २७ ॥ ध्रुवेश्वरं समभ्यर्च्यध्रुवकुंडेकृतोदकः ॥ ध्रुवलोकमवाप्नोतिनरोभोगसमन्वितः ॥ २८ ॥ ध्रुवस्यपरमाख्यानंयःपठेत्पाठयेदपि ॥ सविष्णुलोकमासाद्यजायते विष्णुवल्लभः ॥ २९ ॥ नरोध्रुवस्यचरितंप्रसंगेनस्मरन्नपि ॥ नपापैरभिभूयेतमहत्पुण्यमवाप्नुयात् ॥ १३० ॥ इति श्रीस्कांदे महापुराण एकाशी तिसाहस्र्यांसंहितायां चतुर्थे काशीखंडे पूर्वार्द्धे ध्रुवस्तुतिर्नामैकविंशतितमोऽध्यायः ॥ २१ ॥ ॥ शिवशर्मोवाच ॥ ध्रुवाख्यानमिदंरम्यंमहापा तकनाशनम् ॥ महाश्चर्यकरंपुण्यंश्रुत्वातृप्तोस्मिभोगणौ ॥ १ ॥ ॥ अगस्त्यउवाच ॥ ॥ इत्थंयावद्द्विजोब्रूतेविमानंवायुवेगगम् ॥ तावत्प्रापमहर्लो कंस्वर्लोकात्परमाद्भुतम् ॥ २ ॥ द्विजोऽथलोकंसंवीक्ष्यसर्वतोमहसावृतम् ॥ तौगणौप्रत्युवाचेदंकोयंलोकोमनोहरः ॥ ३ ॥ तावूचतुस्ततोविप्रंनिशाम यमहामते ॥ अयंसहिमहर्लोकःस्वर्लोकात्परमाद्भुतः ॥ ४ ॥ कल्पायुषोवसंत्यत्रतपसाधूतकल्मषाः ॥ विष्णुस्मरणसंक्षीणसमस्तक्लेशसंचयाः ॥५॥ निर्व्याजप्रणिधानेनदृष्टातेजोमयंजगत् ॥ महायोगसमायुक्तावसंत्यत्रसुरोत्तमाः ॥ ६ ॥

स्तस्मिन्नात्मनोऽलंप्रत्ययाभावमाह ध्रुवाख्यानमित्यनेन ॥ १ ॥ २ ॥ महसातेजसा ॥ ३ ॥ ४ ॥ कल्पायुषोद्विपरार्धभृग्वादयइत्यर्थः ॥ विष्णोःस्मरणेनध्यानेननष्टाः समस्ताःसवासनाःक्लेशानामअविद्यास्मितारागद्वेषाभिनिवेशानांसंचयाःसमूहायेषांतेतथा ॥ ५ ॥ निर्व्याजप्रणिधानेननिष्कपटसमाधिना ॥ तेजोमयंब्रह्मात्मकम् ॥ महायोगोऽत्रजीवपरयोरैक्य

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चिंतनम् ॥ ६ ॥ इत्थंपूर्वोक्तांकथांकथयतोःसतोः ॥ तत्प्रसिद्धम् ॥ निनायप्रापयामास ॥ ७ ॥ ८ ॥ द्वंद्वानिशीतोष्णादीनि ॥ ९ ॥ १० ॥ विराजाहिरण्यगर्भेणोत्पादितांवैराजाः ॥ किंच ॥ वासुदेवेइति ॥ ११ ॥ १२ ॥ शिलोंछेत्यादीनांप्रथमांतानांपदानांततपोलोकेऽकुतोभयावसंतीतिनवमेनान्वयः ॥ शिलोंछवृत्तयःपतितकणिशकणवृत्तयः ॥ दन्ताएवउलूखलंकंडनीयेषांते दंतोलूखलकाः ॥ १३ ॥ सूर्येणसहचतुर्दिक्षुचतुर्भिराग्निभिस्तपोयेषांतेपंचाग्नितपसः ॥ स्थंडिलेशयाभूशायिनःहेमंतशिशिरयोर्ऋत्वोर्घेपौषमाघौव्याप्यजलेक्षपारात्रीः क्षपयन्तीत्यर्थः ॥ १४ ॥ तृषिताअपिकुशाग्रनीराणांविप्रुषःकणानेवापिबन्नयथेष्टमितिभावः ॥ दीर्घश्छांदसः ॥ तत्रहेतुर्यतयोयत्नशीलास्तपएकनिष्ठानविषयपराइत्यर्थः ॥ अतिक्षुधिताअपिवाताशिनः ॥ पादांगुष्ठाग्रेणभुवंस्पृशंतीतिपादांगुष्ठाग्रभूस्पृशः ॥ १५ ॥ ऊर्ध्वदोषऊर्ध्वीकृतहस्ताः ॥ रविदृशःसूर्यगत्यनुसारिनेत्राः ॥ एकेनांघ्रिणापादेनस्थाणुवन्निश्चलाः ॥ दिवानिरुच्छ्वासाःसंपूर्णदिनंव्याप्यत्यक्तोच्छ्वासाः

इत्थंकथांकथयतोर्भगवद्गणयोःप्रिये ॥ क्षणार्धेनविमानंतज्जनलोकंनिनायतान् ॥ ७ ॥ निवसंत्यमलायत्रमानसाब्रह्मणःसुताः ॥ सनंदनाद्यायोगींद्राः सर्वेतेह्यूर्ध्वरेतसः ॥ ८ ॥ अन्येतुयोगिनोयेवैह्यस्खलद्ब्रह्मचारिणः ॥ सर्वद्वंद्वविनिर्मुक्तास्तेवसंत्यतिनिर्मलाः ॥९॥ जनलोकात्तपोलोकस्तेषांलोचनगोचरः ॥ कृतस्तेनविमानेनमनोवेगेनगच्छता ॥ १० ॥ वैराजायत्रतेदेवावसेयुर्दाहवर्जिताः ॥ वासुदेवेमनोयेषांवासुदेवार्पितक्रियाः ॥ ११ ॥ तपसातोष्यगोविंदमभिलाषविवर्जिताः॥तपोलोकमिमंप्राप्यवसंतिविजितेंद्रियाः ॥१२॥ शिलोंछवृत्तयोयेवैदंतोलूखलिकाश्चये ॥ अश्मकुट्टाश्चमुनयःशीर्णपर्णाशिनश्चये ॥ १३ ॥ ग्रीष्मेपंचाग्नितपसोवर्षासुस्थंडिलेशयाः ॥ हेमंतशिशिराधेयेक्षपंतिसलिलेक्षपाः ॥१४॥ कुशाग्रनीरविप्रूषस्तृषितायतयोऽपिबन् ॥ वाताशिनोतिक्षुधिताःपादाग्रांगुष्ठभूस्पृशः ॥ १५ ॥ ऊर्ध्वदोषोरविदृशस्त्वेकांघ्रिस्थाणुनिश्चलाः ॥ येवैदिवानिरुच्छ्वासामासोच्छ्वासाश्चयेपुनः ॥१६॥ मासोपवासव्रतिनश्चातुर्मास्यव्रताश्चये ॥ ऋत्वंततोयपानायेयेषण्मासोपवासकाः ॥ १७ ॥ येचवर्षनिमेषावैवर्षधारांबुतर्षकाः ॥ येचस्थाणूपमांप्राप्तामृगकंडूतिसौख्यदाः ॥ १८ ॥ जटाटवीकोटरांतःकृतनीडांडजाश्चये ॥ प्ररूढवामलूरांगाःस्नायुनद्धास्थिसंचयाः ॥ १९ ॥ लताप्रतानैःपरितोवेष्टितावयवाश्चये ॥ सस्यानिचप्ररूढानियदंगेषुचिरस्थिति ॥ २० ॥

कुम्भकपरायणाइत्यर्थः ॥ मासोच्छ्वासामासमभिव्याप्योच्छ्वासोयेषांतेतथारेचकपरायणाइत्यर्थः ॥ १६ ॥ ऋत्वंतेमासद्वयांतेतोयंपानंयेषांतेऋत्वंततोयपानाः ॥ १७ ॥ वर्षमध्येवर्षसमाप्तौवानिमेषोयेषांतेवर्षनिमेषाः ॥ वर्षधारांबुनिवर्षसंपातजलेतर्षस्तृष्णायेषांतेवर्षधारैकजलपानाइत्यर्थः ॥ येचस्थाणूपमंस्थाणुतुल्यतांप्राप्ताः ॥ स्थाणुसाम्योपमामितिक्वचित् ॥ स्थाणुसाम्योपसंप्राप्ताइतिचान्यत्र ॥ अतएवमृगकंडूतिसौख्यदाः सुखमेवसौख्यंमृगैःकृत्वाकंडूतिःसौख्यदायेषांतेतथा ॥१८॥ जटैवाटवीविपिनंतस्याःकोटरांतश्छिद्रमध्येकृतोनीडोवासोयैस्तथाभूताअण्डजायेषुतेतथा॥ प्ररूढावामलूरावल्मीकाअंगेषुयेषांतेतथा ॥ वामलूरश्चनाकुश्चवल्मीकंपुन्नपुंसकमित्यमरः ॥ प्ररूढतृणसर्वांगाइतिक्वचित् ॥ स्नायुनद्धोनाडीबद्धोऽस्थिसंचयोयेषांतेतथा ॥१९॥ लताप्रतानैर्वल्लीनांविस्तारैःसमूहे



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

रीतिवा ॥ चिरस्थितियथास्यात् ॥ चिरस्थितेरितिकचित् ॥ तत्रनिश्चलतयाचिरस्थितेर्हेतोरित्यर्थः ॥ २० ॥ इत्यादिषुपूर्वोक्तप्रकारेषुसुतपःसुशोभनतपस्यासुक्लिष्टानिक्षीणानिवर्ष्माणिशरीराणि येषांतेतथा ॥ कर्माणइतिपाठेइत्यादीनिसुतपांस्येवक्लिष्टानिकठोराणिकर्माणियेषांतेतथा ॥ ब्रह्मायुषोहिरण्यगर्भसमजीविनः ॥ तदुक्तम् ॥ ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे ॥ परस्यांतेकृतात्मानस्ते विशंतिपरंपदामिति ॥ २१ ॥ शृणोतिकथामितिशेषः ॥ २२ ॥ तेनशिवशर्मणा ॥ २३ ॥ स्मृत्युक्ताचारचंचुः स्मृत्युक्ताचाराभिमुखस्तदुन्मुखइत्यर्थः ॥ चंचुपदंहंससादृश्यव्याख्यापनार्थम् ॥ सयथाक्षीरनीरेविवेचयतिविविच्यचक्षीरंपिबतितथाऽयमपिपापपुण्येविविच्यपापंविहायपुण्यमनुतिष्ठतीत्यर्थः ॥ यद्वा स्मृत्युक्ताचारेणचर्यतेज्ञायतइतिस्मृत्युक्ताचारचंचुः ॥ प्रतीपोविमुखः ॥ २४ ॥ ब्रह्माशिवशर्माणंसंबोधयति ॥ अयीति ॥ अपीतिपाठेनिश्चयेऽपिशब्दः ॥ हेशिवशर्मक दयायांकः ॥ २५ ॥ भूर्लोकमारभ्यसत्यलोकपर्यंतंसर्वंजगद्यदेतच्छब्दाभ्यांनिर्दिश्यते ॥ तत्रावांतरविशेषमाह ॥ दैनंदिनेति ॥ दिनेदिनेभवतीतिदैनंदिनःसचासौप्रलयश्चतस्माद्दैनंदिनप्रलयान्निमित्तादनंतरंवा ॥ आवैराजंमहर्लोकमाआमर्यादीकृत्यसीमानंविधायेत्येतत्पुनःपुनःसृजामि ॥

इत्यादिसुतपःक्लिष्टवर्ष्माणोयेतपोधनाः ॥ ब्रह्मायुषस्तपोलोकेतेवसंत्यकुतोभयाः ॥२१॥ यावदित्थंसपुण्यात्माशृणोतिगणयोर्मुखात् ॥ तावन्नेत्रातिथीभूतःसत्यलोकोमहोज्ज्वलः ॥ २२ ॥ त्वरावंतौगणौतत्रविमानादवरुह्यतौ ॥ स्रष्टारंसर्वलोकानांतेनसार्धंप्रणेमतुः ॥ २३ ॥ ब्रह्मोवाच ॥ गणावसौद्विजोधीमान्वेदवेदांगपारगः ॥ स्मृत्युक्ताचारचंचुश्चप्रतीपःपापकर्मसु ॥ २४ ॥ अयिद्विजमहाप्राज्ञजानेत्वांशिवशर्मक ॥ साधूकृतंत्वयावत्ससुतीर्थप्राणमोक्षणात् ॥ २५ ॥ सत्वरंगत्वरंसर्वंयच्चैतद्द्रवतेक्षितम् ॥ दैनंदिनप्रलयतःसृजामिचपुनःपुनः ॥ २६ ॥ आवैराजंप्रतिपदमुपसंहरतेहरः ॥ काकथामशकाभानांनृणांमरणधर्मिणाम् ॥ २७ ॥ चतुर्षुभूतग्रामेषुह्येकएवगुणोनृणाम् ॥ तस्मिन्वैभारतेवर्षेकर्मभूमौमहीयसि ॥ २८ ॥ चपलानिविनिर्जित्येंद्रियाणिमनसासह ॥ विहायवैरिणंलोभंविष्वग्गुणगणस्यच ॥ २९ ॥ धर्मवंशहरंकाममर्थसंचयहारिणम् ॥ जरापलितकर्तारंविनिष्कृत्यविचारतः ॥३०॥ जित्वाक्रोधरिपुंधैर्यात्तपसोयशसःश्रियः ॥ शरीरस्यापिहर्तारंनेतारंतामसींगतिम् ॥ ३१ ॥

भूरादिलोकत्रयमितिशेषः ॥ हरोरुद्रःप्रतिपदंप्रतिक्षणंप्रतिदिनमितियावत् ॥ पुनःपुनर्लोकत्रयमुपसंहरतेनाशयति ॥ महर्लोकादीनांतुप्रकृतप्रलयेद्विपरार्धावसानेसकारणकानांनाशःपुनरपितावतःकालस्यानंतरंसकारणकब्रह्मांडसृष्टिरितिबोद्धव्यम् ॥ यदादैनंदिनप्रलयतइत्यनेनविष्णोरेवदिनेदिनेप्रलय उच्यतेतदापुनःपुनःसृजामीतिविष्णुनासहाभेदविवक्षयेतियोज्यम् ॥ वैराजं ..त्यलोकमभिव्याप्येतिवाव्याख्येयम् ॥ यद्वा हेवत्सशिवशर्मन्सुतीर्थप्राणमोक्षणनिमित्ततोयदेतत्सर्वंचराचरंतत्सत्वरमविलंबितमेवगत्वरंगमनशीलंविनाशशीलंविनाशीत्येतद्द्रवतेक्षितंदृष्टंतत्त्वयासाधुकृतंसम्यक्कृतम् ॥ सत्वरंगत्वरमेवकुतइत्याकांक्षायामाह ॥ दैनंदिनेति ॥ शेषंपूर्ववत् ॥ २६ ॥ २७ ॥ चतुर्षुजरायुजांडजोद्भिज्जस्वेदजेषुनृणामएषवक्ष्यमाणएवतस्मिन्भारतेवर्षेगुणः ॥ कोऽसौगुणः ॥ धर्मसोपानमारुह्यहसत्यलोकमायांतीतियत्सइतिसप्तमेनान्वयः ॥ २८ ॥ कैःसाधनैर्यांतीत्याकांक्षायांसाधनान्याह ॥ चपलानीति ॥ चपलानींद्रियाणीत्यन्वयः ॥ विष्वग्गुणगणस्यसर्वगुणसमुदायस्य ॥ विश्वेगुणगणस्येतिक्वचित्पाठः ॥ तत्रविश्वेविश्वस्मिन् ॥ २९ ॥ धर्मवंशहरंधर्मसंततिहरम् ॥ धर्मध्वंसकरमितिक्वचित् ॥ ३० ॥ धैर्याद्विवेकात् ॥ यथोक्तंवैष्णवे ॥ यशसस्तपसश्चै

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वक्रोयोनाशकरःपरइति ॥ तामसींनारकींगतिंनेतारमितिलोभादीनांत्रयाणांविशेषणम् ॥ तथाचसार्वज्ञंवचः ॥ त्रिविधंनरकस्येदंद्वारंनाशनमात्मनः ॥ कामःक्रोधस्तथालोभस्तस्मादेतत्त्रयंत्यजे
दिति ॥ ३१ ॥ मदंदर्पम् ॥ सदापदमितिपाठेऽहंकारविशेषणम् ॥ ३२ ॥ दूषणेतिमोहविशेषणम् ॥ ३३ ॥ अंधीकरणंज्ञाननाशकम् ॥ अंधतामिस्रोनरकविशेषस्तद्दर्शकम् ॥ ३४ ॥ परिक्षुण्णं
सेवितम् ॥ ३५ ॥ यद्यस्मात् ॥ तत्रकर्मभूमौ ॥ पदेषुस्थानेषु ॥ उच्चावचेषूत्कृष्टापकृष्टेषुनानाविधेष्वित्यर्थः ॥ ३६ ॥ नार्यावर्तेति ॥ आर्यावर्तःपुण्यभूमिर्मध्यंविंध्यहिमालयोरिति ॥
ब्रह्मांडमेवमंडलंदेशस्तस्मिन् ॥ ब्रह्मांडमंडपइतिक्वचित् ॥ यद्यपिकाशीब्रह्मांडमध्यगानभवतितथापिप्रतीत्यभिप्रायेणोक्तमितिज्ञेयम् ॥ एवमग्रेपिज्ञातव्यम् ॥ ३७ ॥ एवंसामान्यतोऽधिकमुक्त्वा
विशेषतोपिवक्तुमाह ॥ संतीति ॥ सुखेतरंदुःखंतद्वर्जिताः ॥ ३८ ॥ स्वर्लोकादधिकंरम्यंपुंदरंनास्तीत्यत्रहेतुमाह ॥ सर्वैइति ॥ ३९ ॥ स्वर्गसदांदेवानांमध्ये ॥ ४० ॥ नागांगाभरणप्रोताः

सदामदंपरित्यज्यप्रमादैकपदप्रदम् ॥ प्रमादैकशरण्यंचसंपदांविनिवर्तकम् ॥ ३२ ॥ सर्वत्रलघुताहेतुमहंकारंविहायच ॥ दूषणारोपणेयत्नंकुर्वाणंसज्जने
ष्वपि ॥ ३३ ॥ हित्वामोहंमहाद्रोहरोपणंमतिघातिनम् ॥ अत्यंतमंधीकरणमंधतामिस्रदर्शकम् ॥ ३४ ॥ श्रुतिस्मृतिपुराणोक्तंपरिक्षुण्णंमहाजनैः ॥
धर्मसोपानमारुह्ययदिहायांतिहेलया ॥ ३५ ॥ कर्मभूमिंसमीहंतेसर्वेस्वर्गौकसोद्विज ॥ यत्तत्रार्जितभोक्तारःपदेषूच्चावचेष्वमी ॥ ३६ ॥ नार्यावर्तसमोदे
शोनकाशीसदृशीपुरी ॥ नविश्वेशसमंलिंगंक्वापिब्रह्मांडमंडले ॥३७॥ संतिस्वर्गाबहुविधाःसुखेतरविवर्जिताः॥ सुकृतैकफलाःसर्वेयुक्ताःसर्वसमृद्धिभिः॥
॥ ३८ ॥ स्वर्लोकादधिकंरम्यंनहिब्रह्मांडगोलके ॥ सर्वेयतंतेस्वर्गायतपोदानव्रतादिभिः ॥ ३९ ॥ स्वर्लोकादपिरम्याणिपातालानीतिनारदः ॥
प्राहस्वर्गसदांमध्येपातालेभ्यःसमागतः ॥ ४० ॥ आह्लादकारिणःशुभ्रामणयोयत्रसुप्रभाः ॥ नागांगाभरणप्रोताःपातालंकेनतत्समम् ॥ ४१ ॥
दैत्यदानवकन्याभिरितश्चेतश्चशोभिते ॥ पातालेकस्यनप्रीतिर्विमुक्तस्यापिजायते ॥ ४२ ॥ दिवार्करश्मयस्तत्रप्रभांतन्वंतिनातपम् ॥ शशिनश्चनशी
तायनिशिद्योतायकेवलम् ॥ ४३ ॥ यत्रनज्ञायतेकालोगतोपिदनुजादिभिः ॥ वनानिनद्योरम्याणिसदंभांसिसरांसिच ॥ ४४ ॥ कलाःपुंस्को
किलालापाःसुचैलानिशुचीनिच ॥ भूषणान्यतिरम्याणिगंधाद्यमनुलेपनम् ॥ ४५ ॥ वीणावेणुमृदंगादिनिस्वनाःश्रुतिहारिणः ॥ हाटकेशंमहालिंगंयत्र
वैसर्वकामदम् ॥ ४६ ॥ एतान्यन्यानिरम्याणिभोग्ययोग्यानिदानवैः ॥ दैत्योरगैश्चभुज्यंतेपातालांतरगोचरैः ॥ ४७ ॥

नागानामंगाभरणलक्षणालंकारेषुप्रोताग्रथितामणयोयत्रपातालेवर्ततेतत्पातालंकेनसमंनकेनापि ॥ सर्वोत्तमत्वात् ॥ नागाभरणभूषास्वितिपाठेपिसएवार्थः॥४१॥४२॥दिवार्केति॥यत्रपातालेदिवादिवसे
ऽर्करश्मयःप्रभामालोकमात्रंतन्वंतीतिनातपंघर्मंनविस्तारयंतीत्यर्थः ॥ शशिनश्चेतिचशब्दःसमासस्थमपिरश्मिपदमनुवर्तयति ॥ :चंद्रस्यचरश्मयोनिशिरात्रौनशीतायकिंतुकेवलद्योतायप्रकाशाय ॥
एतेनार्केंदुरश्मीनांपातालेप्यनुप्रवेशोविवक्ष्यते ॥ तथाचभविष्यपुराणे ॥ सूर्योगोभिर्जगत्सर्वमादीपयतिसर्वशः ॥ त्रीणिरश्मिशतान्यस्यभूर्लोकंद्योतयंतिवै ॥ त्रीणित्रीणितथाचान्यौद्वौलोकौभासयंत्यु
त ॥ शतंचापिअधस्तात्तुपातालंदीपयंत्युतेति ॥ सूर्याचंद्रमसावेतौगृहीतदेहांतरौतत्रस्तइतिकेचिद्व्याचक्षते ॥ ४३ ॥४४॥ कलाविद्याः ॥ ४५ ॥ ४६ ॥ भोग्ययोग्यानिभोग्यार्हाणि ॥ भोगयोग्यानी



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तिकचित् ॥ ४७ ॥ रत्नसानुंसुमेरुम् ॥ रत्नसारमितिपाठेपिसएवार्थः ॥ ४८ ॥ मृगीदृशोहरिणीनयनाः ॥ ४९ ॥ श्रेयोविनिमयार्जितापुण्यपरिवर्तनेनसंपादिता ॥ ५० ॥ अक्लीबभाषिभिरमिथ्या भाषिभिःसत्यवादिभिरित्यर्थः ॥ पुत्रक्षेत्रेआद्ययेषांगृहादीनांतेपुत्रक्षेत्राद्यास्तद्विहीनैकैस्तद्रहितैरित्यर्थः ॥ ५१ ॥ सर्वेभ्योद्वीपेभ्योजंबूद्वीपस्यश्रैष्ठ्यमाह ॥ संतीति ॥ द्विर्गताआपोयस्मिन् सद्वीपः ॥ पारावारांतरस्थिताः ॥ शुद्धोदपरार्वाक्तीरयोरंतरेपात्रेस्थितामध्येस्थिताइत्यर्थः ॥ पारावारेपरार्वाचीतीरेपात्रंतदंतरमित्यमरः ॥ अथवापारावारांतरस्थितत्वंद्वीपानांदक्षिणोत्तरसमुद्रतीरेपूर्वपश्चिमसमुद्रतीरेचापिज्ञातव्यम् ॥ ५२ ॥ नववर्षाणिभद्राश्वकेतुमालभारतोत्तरकुर्वाख्यानिपूर्वपश्चिमदक्षिणोत्तरतःसमुद्रलग्नानिचत्वारिवर्षाणि ॥ मेरोःसर्वतइलावृतंततउत्तरतोरम्यकंहिरण्मयंचदक्षिणतोहरिवर्षकिंपुरुषंचेति ॥ तत्रतेषु नवसुवर्षेषुभारतंवर्षमजनाभंसद्भरतस्यर्षभपुत्रस्यनाम्नाविख्यातमुत्तमंश्रेष्ठमित्यर्थः ॥ तथाचोक्तंभागवते ॥ तस्यासीद्भरतोज्येष्ठोनारायणपरायणः ॥ आख्यातंवर्षमेतद्यन्नाम्नाभारतमद्भुतमिति ॥ ५३ ॥ ५४ ॥ इदंभारतमित्यन्वयः ॥ प्रथमंमुख्यम् ॥ ५५ ॥ हिमविंध्याद्रेर्हिमालयसहितविंध्यपर्वतस्येत्यर्थः ॥ हिमविंध्याद्र्योरिति

पातालेभ्योपिवैरम्यंद्विजवर्षमिलावृतम् ॥ रत्नसानुंसमाश्रित्यपरितःपरिसंस्थितम् ॥ ४८ ॥ सदासुकृतिनोयत्रसर्वभोगभुजोद्विज ॥ नवयौवनसंपन्ना नित्यंयत्रमृगीदृशः ॥४९॥ भोगभूमिरियंप्रोक्ताश्रेयोविनिमयार्जिता ॥ भुज्यतेत्वद्विधैर्लोकैस्तीर्थाभित्यक्तदेहकैः ॥ ५० ॥ अक्लीबभाषिभिश्चापिपुत्रक्षेत्राद्यहीनकैः ॥ परोपकारसंक्षीणसुखायुर्धनसंचयैः ॥५१॥ संतिद्वीपाह्यनेकावैपारावारांतरस्थिताः ॥ जंबूद्वीपसमोद्वीपोनक्वापिजगतीतले ॥ ५२ ॥ तत्रापिनववर्षाणिभारतंतत्रचोत्तमम् ॥ कर्मभूमिरियंप्रोक्तादेवानामापिदुर्लभा ॥५३॥ अष्टौकिंपुरुषादीनिदेवभोग्यानितानितु ॥ तेषुस्वर्गात्समागत्यरमंतेत्रिदिवौकसः ॥ ५४ ॥ योजनानांसहस्राणिनवविस्तारतस्त्विदम् ॥ भारतंप्रथमंवर्षमेरोर्दक्षिणतःस्थितम् ॥ ५५ ॥ तत्रापिहिमविंध्याद्रेरंतरंपुण्यदंपरम् ॥ गंगायमुनयोर्मध्येह्यंतर्वेदीभुवःपराः ॥ ५६ ॥ कुरुक्षेत्रंहिसर्वेषांक्षेत्राणामधिकंततः ॥ ततोपिनैमिषारण्यंस्वर्गसाधनमुत्तमम् ॥ ५७ ॥ नैमिषारण्यतोपीहसर्वस्मिन्क्षितिमंडले ॥ सर्वेभ्योपिहितीर्थेभ्यस्तीर्थराजोविशिष्यते ॥ ५८ ॥ स्वर्गदोमोक्षदश्चैवसर्वकामफलप्रदः ॥ प्रयागस्तन्महत्क्षेत्रंतीर्थराजइतिस्मृतः ॥ ५९ ॥ यागाःसर्वेमयापूर्वंतुलयाविधृताद्विज ॥ तच्चतीर्थवरंरम्यंकामिकंकामपूरणात् ॥ ६० ॥ दृष्ट्वाप्रकृष्टंयागेभ्यःपुष्टेभ्योदक्षिणादिभिः ॥ प्रयागमितितन्नामकृतंहरिहरादिभिः ॥ ६१ ॥

क्वचित्पाठः ॥ अंतर्वेदीभुवअंतर्वेदीनाम्न्योभुवःपराउत्कृष्टाः ॥ ५६ ॥ निमिषेणेदंदानवंबलमस्मिन्नरण्येमयानिहतमितिनैमिषारण्यम् ॥ तथाचगौरमुखमृषिंप्रतिवराहपुराणेविष्णोर्वाक्यम् ॥ एवंकृत्वाततोदेवोमुनिंगौरमुखंतदा ॥ उवाचानिमिषेणेदंनिहतंदानवंबलम् ॥ अरण्येस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितमिति ॥ भविष्यतियथार्थंवैब्राह्मणानांविशेषकमितिपाठांतरे ॥ ब्रह्मणाविसृष्टस्यचक्रस्यनेमिःशीर्यतेयत्रतन्निमिशंनिमिशमेवनैमिशम् ॥ वायसराक्षसादिवत्स्वार्थेतद्धितः ॥ तथाचवायुपुराणे ॥ एतन्मनोमयंचक्रंमयासृष्टंविसृज्यते॥यत्रास्यशीर्यतेनेमिःसदेशस्तपसःशुभः ॥ इत्युक्त्वासूर्यसंकाशंचक्रंसृष्ट्वामनोमयम् ॥ प्रणिपत्यमहादेवंविससर्जपितामहः ॥ तेपिहृष्टतराविप्राःप्रणम्यजगतांप्रभुम् ॥ प्रययुस्तस्यचक्रस्ययत्रनेमिर्व्यशीर्यत ॥ तद्वनंतेनविख्यातंनैमिशंमुनिपूजितमिति ॥ ५७ ॥ ५८ ॥ कोऽसौतीर्थराजइत्याकांक्षायामाह ॥ स्वर्गदइति ॥ महदुत्कृष्टम् ॥ ममेतिकचित् ॥ ५९ ॥ प्रयागनामनिर्वक्ति यागाइतिद्वयेन ॥ ६० ॥ ६१ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यागादिभ्यःप्रकृष्टत्वमेवदर्शयति ॥ नाममात्रेति ॥ ६२ ॥ कृतानियानिएनांसिपापानितेषांपरिशुद्धितोनाशादित्येव ॥ ६३ ॥ ६४ ॥ सपापसंचयः ॥ ६५ ॥ पदांतरंस्थानांतरम् ॥ ६६ ॥ ॥६७॥ त्वङ्मांसरुधिरस्नाय्वस्थिमज्जाशुक्राणीतिसप्तधातवस्तन्मयीभूततनौतत्स्वरूपशरीरइत्यर्थः ॥ वपनान्मुंडनात् ॥ ६८ ॥ सितासितेगंगायमुनयोःसंभेदेवेण्यामित्यर्थः ॥ अभिध्यायसंकल्प्य अभिध्यायन्निितिक्वचित् ॥ ६९ ॥ ७० ॥ मोक्षमवाप्नोतिसत्त्वशुद्धिद्वाराविविदिषाद्वारावेत्यर्थः ॥ ७१ ॥ स्फुटंझटितीत्यर्थः ॥ ७२ ॥ ७३॥ ७४॥७५॥ यथाकथंचिदिति ॥ अनशनेनजलादिप्रवे

नाममात्रस्मृतेर्यस्यप्रयागस्यत्रिकालतः ॥ स्मर्तुःशरीरेनोजातुपापंवसतिकुत्रचित् ॥ ६२ ॥ संतितीर्थान्यनेकानिपापत्राणकराणिच ॥ नशक्तान्यधिकंदातुंकृतैनःपरिशुद्धितः ॥ ६३ ॥ जन्मांतरेष्वसंख्येषुयःकृतःपापसंचयः ॥ दुष्प्रणोद्योहिनितरांव्रतैर्दानैस्तपोजपैः ॥ ६४ ॥ सतीर्थराजगमनोद्यतस्यशुभजन्मनः ॥ अंगेषुवेपतेऽत्यंतंद्रुमोवातहतोयथा ॥ ६५ ॥ ततःक्रांतार्धमार्गस्यप्रयागदृढचेतसः ॥ पुंसःशरीरान्निर्यातुमपेक्षेतपदांतरम् ॥ ॥ ६६ ॥ भाग्यान्नेत्रातिथीभूतेतीर्थराजेमहात्मनः ॥ पलायतेद्रुततरंतमःसूर्योदयेयथा ॥ ६७ ॥ सप्तधातुमयीभूततनौपापानियानिवै ॥ केशेषुतानितिष्ठंतिवपनाद्यांतितान्यपि ॥ ६८ ॥ एवंनिष्कलुषीभूयततःस्नायात्सितासिते ॥ यंयंकाममभिध्यायंस्तंतमाप्नोतिनान्यथा ॥ ६९ ॥ पुण्यराशिंचविपुलंपुण्यान्भोगान्यथेप्सितान् ॥ स्वर्गंप्राप्नोतितत्पुण्यान्निष्कामोमोक्षमाप्नुयात् ॥ ७० ॥ स्नायाद्योभिलषन्मोक्षंकामानन्यान्विहायच ॥ सोपिमोक्षमवाप्नोतिकामदात्तीर्थराजतः ॥ ७१ ॥ तीर्थराजंपरित्यज्ययोऽन्यस्मात्काममिच्छति ॥ भारताख्येमहावर्षेसकामंनाप्नुयात्स्फुटम् ॥ ७२ ॥ सत्यलोकेप्रयागेचनांतरंवेद्म्यहंद्विज ॥ तत्रयेशुभकर्माणस्तेमल्लोकनिवासिनः ॥ ७३ ॥ तीर्थाभिलाषिभिर्मर्त्यैस्सेव्यंतीर्थांतरंनहि ॥ अन्यत्रभूमिवलयेतीर्थराजात्प्रयागतः ॥७४॥ यथांतरंद्विजश्रेष्ठभूपेत्वितरसेवके ॥ दृष्टांतमात्रंकथितंप्रयागेतरतीर्थयोः ॥७५॥ यथाकथंचित्तीर्थेऽस्मिन्प्राणत्यागंकरोतियः ॥ तस्यात्मघातदोषोनप्राप्नुयादीप्सितान्यपि ॥ ७६ ॥ यस्यभाग्यवतश्चात्रतिष्ठंत्यस्थीन्यपिद्विज ॥ नतस्यदुःखलेशोपिक्वापिजन्मनिजायते ॥ ७७ ॥ ब्रह्महत्यादिपापानांप्रायश्चित्तंचिकीर्षुणा ॥ प्रयागंविधिवत्सेव्यंद्विजवाक्यान्नसंशयः ॥ ७८ ॥ किंबहूक्तेनविप्रेंद्रमहोदयमभीप्सुना ॥ सेव्यंसितासितंतीर्थंप्रकृष्टंजगतीतले ॥ ७९ ॥

शेनवेत्यर्थः ॥ नचैतद्ब्राह्मणातिरिक्तविषयमितिमंतव्यम् ॥ यदित्वंनविजानासितातविष्णोरवस्थितिम् ॥ गत्वाप्रयागंतत्रैवसंत्यक्ष्यामःकलेवरमितिगर्गच्यवनादीनांवचनस्यप्रह्लादसंहितायांद्वारकामाहात्म्येदर्शनात् ॥ ७६ ॥ ७७ ॥ द्विजाःसनकादयोब्राह्मणाः ॥ [illegible] ॥ हेद्विजवाक्यंवचनमितिवा ॥ ७८ ॥ प्रयागमाहात्म्यमुपसंहरति ॥

CC-0. Shri Krishna Museum Kurukshetra. Digitized by eGangotri

किंबहूक्तेनेति ॥ ७९ ॥ यदर्थंस्वर्गादीनांरम्यत्वमुक्तंतदिदानींदर्शयति ॥ प्रयागतोपीति ॥ ८० ॥ अनायासेनमुक्तौहेतुंवदन्नतिरम्यत्वमाह ॥ प्रयागादिति ॥८१ ॥ अन्वयमुखेनातिरम्यत्वमुक्त्वाव्य तिरेकेणापितदाह ॥ अविमुक्तादिति ॥ महाक्षेत्रत्वेहेतुर्विश्वेशेति ॥ ८२ ॥ तर्हिब्रह्मांडस्थितत्वाविशेषादयोध्यादिक्षेत्रवदिदंक्षेत्रंस्यादित्यतआह ॥ अविमुक्तमिति ॥ ८३ ॥ कथंतर्हिदैनंदिनप्रलये प्राकृतप्रलयेचात्रकाशीतिष्ठेत्तत्राह ॥ यथायथाहीति ॥ ८४ ॥ कथंतर्हिनिराश्रयमिदंतिष्ठेदित्यतआह ॥ क्षेत्रमेतदिति ॥ कथंतर्हितथासर्वेनपश्यंतितत्राह ॥ नेक्षंतइति ॥ ८५ ॥ महापर्वग्रहणादि ॥ नशुक्रगुर्वोर्ग्रहयोरस्तमनोदयाभ्यांकृतोग्रहास्तोदयकृतः ॥ ८६ ॥ सौम्यायनंप्रशस्तमयनमुत्तरायणमित्यर्थः ॥ ८७ ॥ नन्वयोध्यादिक्षेत्रस्यापिचक्रादिधृतत्वप्रतीतेःकोविशेषइतिचेत्तत्राह ॥ तथेति ॥

प्रयागतोपितीर्थेशात्सर्वेषुभुवनेष्वपि ॥ अनायासेनवैमुक्तिःकाश्यांदेहावसानतः ॥८०॥ प्रयागादपिवैरम्यमविमुक्तंनसंशयः ॥ यत्रविश्वेश्वरःसाक्षात्स्वयं समधितिष्ठति ॥ ८१ ॥ अविमुक्तान्महाक्षेत्राद्विश्वेशसमधिष्ठितात् ॥ नचकिंचित्क्वचिद्रम्यमिहब्रह्मांडगोलके ॥ ८२ ॥ अविमुक्तमिदंक्षेत्रमपिब्रह्मां डमध्यगम् ॥ ब्रह्मांडमध्येनभवेत्पंचक्रोशप्रमाणतः ॥ ८३ ॥ यथायथाहिवर्धेतजलमेकार्णवस्यच ॥ तथातथोन्नयेदीशस्तत्क्षेत्रंप्रलयादपि ॥ ८४ ॥ क्षेत्रमेतत्त्रिशूलाग्रेशूलिनस्तिष्ठतिद्विज ॥ अंतरिक्षेनभूमिष्ठंनेक्षंतेमूढबुद्धयः ॥ ८५ ॥ सदाकृतयुगंचात्रमहापर्वसदाऽत्रवै ॥ नग्रहाऽस्तोदयकृतोदोषोविश्वे श्वराश्रमे ॥८६॥ सदासौम्यायनंतत्रसदातत्रमहोदयः ॥ सदैवमंगलंतत्रयत्रविश्वेश्वरस्थितिः ॥८७॥ यथाभूमितलेविप्रपुर्यःसंतिसहस्रशः ॥ तथाकाशी नमंतव्याक्वापिलोकोत्तरात्वियम् ॥ ८८ ॥ मयासृष्टानिविप्रेंद्रभुवनानिचतुर्दश ॥ अस्याःपुर्याविनिर्मातास्वयंविश्वेश्वरःप्रभुः ॥ ८९ ॥ पुरायमस्त पस्तप्त्वाबहुकालंसुदुष्करम् ॥ त्रैलोक्याधिकृतिंप्राप्तस्त्यक्त्वावाराणसींपुरीम् ॥ ९० ॥ चराचरस्यसर्वस्ययानिकर्माणितानिवै ॥ गोचरेचित्रगुप्तस्यकाशी वासिकृताहते ॥ ९१ ॥ प्रवेशोयमदूतानांनकदाचिद्द्विजोत्तम ॥ मध्येकाशीपुर्यांक्वापिरक्षिणस्तत्ररुद्रगणाः ॥ ९२ ॥ स्वयंनियंताविश्वेशस्तत्रकाश्यां तनुत्यजाम् ॥ तत्रापिकृतपापानांनियंताकालभैरवः ॥ ९३ ॥ तत्रपापंनकर्तव्यंदारुणारुद्रयातना ॥ अहोरुद्रपिशाचत्वंनरकेभ्योपिदुःसहम् ॥ ९४ ॥

भूमितलेभूम्यादितलेइत्यर्थः ॥ तथामननहेतुमाह ॥ काशीति ॥ तुशब्दइतराभ्योऽस्याआधिक्यंद्योतयति ॥ तदेवाह ॥ इयंकाशीलोकोत्तराचतुर्दशलोकादूर्ध्वेतियावत् ॥ ८८ ॥ तत्रहेतुमाह ॥ मयेति ॥ एतत्तुप्राकृतप्रलयानंतरंसृष्टावितिज्ञातव्यम् ॥ तथाचस्कांदेसूतसंहितायाम् ॥ तानिभूतानिसूक्ष्माणिपंचीकृत्यशिवाज्ञया ॥ तेभ्यएवसुराःसृष्टंब्रह्मांडाख्यमिदंमयेति ॥ अयंभावः ॥ अयोध्यादिक्षेत्राणांचक्रादिभिर्धृतत्वेपिचतुर्दशभुवनांतःपातित्वाद्ब्रह्मणासृष्टत्वाच्चाभ्योऽस्याश्चतुर्दशभुवनबहिर्भूतत्वाद्विश्वेश्वरसृष्टत्वाच्चाधिक्यमिति ॥ ८९ ॥ ९० ॥ काशीवासिकृतात्कर्मणःऋते विना ॥ ९१ ॥ तद्गणाःश्रीमद्रुद्रगणाः ॥ ९२ ॥ नियंतातत्त्वज्ञानोपदेष्टा ॥ तत्रापितनुत्यजामपिमध्ये ॥ नियंताशासकः ॥ ९३ ॥ तत्रकाश्याम् ॥ यत्रकृतात्पापादितिशेषः ॥ रुद्रयातना ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नकेवलंकाशीकृतात्पापाद्गुद्रयातनामात्रंकिंतुसुदुःसहंरुद्रपिशाचत्वमपिभवतीत्याह ॥ अहोइतिखेदे ॥ ९४ ॥ ९५ ॥ ननुकामातुराणांनभयंनलज्जेत्यादिदर्शनात्किमितिपापिभिःकाशीत्याज्ये त्याशंक्यसदृष्टांतमाह ॥ अपीति ॥ कामातुरोपीत्यर्थः ॥ अपिपापकृतापापकृतापीत्यर्थः ॥ दृष्टांतदार्ष्टांतिकयोर्यत्तच्छब्दावध्याहर्तव्यौ ॥ तथापापकृतेतिक्वचित् ॥ ९६ ॥ विपक्षेबाधकमाह ॥ परापवादेति ॥ ९७ ॥ पापिभिःकाशीनवस्तव्येत्येतत्कैमुत्यन्यायेनाह ॥ अभिलष्यंतीति ॥ धनंचेतिचकारेणवस्त्रादिकंगृह्यते ॥ युक्तारंतुमितिपाठेयुक्ताउद्युक्ताःकृताध्यवसायाइत्यर्थः ॥ भोक्तुमन्नंप्रतिग्रहैरितिचक्वचित् ॥ ९८ ॥ ९९ ॥ काशीवासाऽनधिकारिणोदर्शयति ॥ त्यक्त्वेतिपंचभिः ॥ १०० ॥ हेविप्रहेशिवशर्मन् ॥ १ ॥ प्रतीपाःप्रतिकूलाः ॥ २ ॥

पापमेवहिकर्तव्यंमतिरस्तियदीदृशी ॥ सुखेनान्यत्रकर्तव्यंमहीह्यस्तिमहीयसी ॥ ९५ ॥ अपिकामातुरोजंतुरेकांरक्षतिमातरम् ॥ अपिपापकृताकाशी रक्ष्यामोक्षार्थिनैकिका ॥ ९६ ॥ परापवादशीलेनपरदाराभिलाषिणा ॥ तेनकाशीनसंसेव्याक्वकाशीनिरयःक्वसः ॥ ९७ ॥ अभिलष्यंतियेनित्यंधनं चात्रप्रतिग्रहैः ॥ परस्वंकपटैर्वापिकाशीसेव्यानतैर्नरैः ॥ ९८ ॥ परपीडाकरंकर्मकाश्यांनित्यंविवर्जयेत् ॥ तदेवचेत्किमत्रस्यात्काशीवासोदुरात्मनाम् ॥ ॥ ९९ ॥ त्यक्त्वाविश्वेश्वरींभक्तिंयेऽन्यदेवपरायणाः ॥ सर्वथातैर्नवस्तव्याराजधानीपिनाकिनः ॥ १०० ॥ अर्थार्थिनस्तुयेविप्रयेचकामार्थिनोनराः ॥ अविमुक्तंनतैःसेव्यंमोक्षक्षेत्रमिदंयतः ॥ १ ॥ शिवनिंदापरायेचवेदनिंदापराश्चये ॥ वेदाचारप्रतीपायेसेव्यावाराणसीनतैः ॥ २ ॥ परद्रोहधियोयेचपरे र्ष्याकारिणश्चये ॥ परोपतापिनोयेवैतेषांकाशीनसिद्धये ॥ ३ ॥ मनसापिनयेकाशीमाभिनंदंतिदुर्धियः ॥ तेषांनिर्वाणवार्तापिदूरेदुर्वृत्तचेतसाम् ॥ ४ ॥ ज्ञानेननविनामोक्षःक्वचिदस्तीहभूतले ॥ तज्ज्ञानंनव्रतैर्लभ्यमपिचांद्रायणादिभिः ॥ ५ ॥ तुलापुरुषमुख्यैश्चदानैश्चश्रद्धयान्वितैः ॥ देशेकालेच विधिनापात्रेभ्यःप्रतिपादितैः ॥ ६ ॥ नयमैर्ब्रह्मचर्याद्यैर्नियमैर्नार्चनादिभिः ॥ शरीरशोषणैरुग्रैर्नतपोभिर्द्विजोत्तम ॥ ७ ॥ नमहामंत्रजप्यैश्चगुरुभिः प्रतिपादितैः ॥ नस्वाध्यायैर्यथोक्तैश्चनाग्निशुश्रूषणैः परैः ॥ ८ ॥ नसेवयागुरूणांचनश्राद्धैर्दैवतार्चनैः ॥ ननानातीर्थयात्राभिर्ज्ञानंसमाधिगम्यते ॥ ॥ ९ ॥ नयोगेनविनाज्ञानंयोगस्तत्त्वार्थशीलनम् ॥ गुरूपदिष्टमार्गेणसदाभ्यासवशेनच ॥ ११० ॥ तस्यांतरायाबहवःसुदूरश्रवणादयः ॥ अतो नप्राप्यतेज्ञानंयोगादेकेनजन्मना ॥ ११ ॥

तेषांकाशीनसिद्धयेतेषांनिर्वाणवार्तापिदूरइत्येतद्द्वयंतेषामंतकालेकाशीप्राप्त्यभावाभिप्रायेणेतिबोद्धव्यम् ॥ अथवांतकालेकाशीप्राप्तावपिझटित्यनायासेनकैवल्याभावाभिप्रायेण ॥ तथाचोक्तंपद्मपुराणे काशीमाहात्म्ये ॥ केवलंधर्मसाक्षेपःकर्णेजपतितद्वचः ॥ अधर्मिष्ठस्यतत्क्षेत्रेयातनांतेदिशेन्मतिम् ॥ काश्यांयोनिजधर्मेणमुमुक्षुस्तिष्ठतिद्विजः ॥ अनायासाविलंबाभ्यांसएवलभतेफलमिति ॥ ३ ॥ ४ ॥ काश्यामेकेनैवजन्मनामोक्षःप्राप्यतइतिवक्तुंज्ञानादिसाधनस्यैकेनजन्मनादुर्लभतामाह ज्ञानेनेतियावत्समाप्ति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ योगेनचित्तवृत्तिनिरोधेन ॥ तथाच पातंजलंसूत्रम् ॥ योगश्चित्तवृत्तिनिरोधइति ॥ तत्त्वानुशीलनहेतुत्वाद्योगएवतत्त्वार्थशीलनंनिदिध्यासनम् ॥ ११० ॥ ननुयोगानुष्ठानोत्पन्नबोधाभावेपिश्रवणादिभिर्ज्ञानं भविष्यतिनेत्याह ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सुदूरेति ॥ श्रवणमादिर्येषांश्रवणादीनांतेश्रवणादयःश्रवणमननिदिध्यासनानिसमासार्थः ॥ चित्तवृत्तिनिरोधाभावेश्रवणादयएवनोत्पद्येरन्नितिभावः ॥ यद्वा दूरश्रवणदूरदर्शनादयो विघ्नाः ॥११॥
॥१२॥ तन्नतच्छ्रेयश्चेतितच्छ्रेयस्तस्यउदर्कउत्तरकालीनंफलम् ॥१३॥ अजोब्रह्मा ॥ महतिविष्णौमनोयस्यसमहामनाः ॥ ११४ ॥ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांद्वाविंशतितमो
ऽध्यायः ॥२२॥ ॥छ॥ ॥ त्र्यधिकेविंशतितमेऽध्यायेचारुमनोहरः॥ वर्ण्यतेकमलाजानेरभिषेकमहोत्सवः ॥ १ ॥ तच्छ्रेयसोप्युदर्कस्तेमहानस्तीत्युक्तंतत्रप्रष्टुंविज्ञापयति ॥ सत्यलोकइति ॥
किंचित्कैवल्यामितिहादिस्थम् ॥ १ ॥ भगवल्लोकप्राप्तावस्यकथाव्यासंगेनाविलंबःकारितोमयेत्यनुचितंमन्वानोऽतःपरंतन्माभूदित्याशयेनाह ॥ यत्त्वमिति ॥ पिपृच्छिषुःप्रष्टुमिच्छुः ॥

विनातपोजपाद्यैश्चविनायोगेनसुव्रत ॥ निःश्रेयोलभ्यतेकाश्यामिहैकेनैवजन्मना ॥१२॥ त्वयाशुद्धधियाकाश्यांयच्छ्रेयःसमुपार्जितम् ॥ तच्छ्रेयसोप्युदर्कस्तेमहानास्तिद्विजोत्तम ॥ १३ ॥ उक्त्वेतिविरराम्राजःशृण्वतोर्गणयोस्तयोः ॥ सोपिप्रमुदितश्चाभूच्छिवशर्मामहामनाः ॥ ११४ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे ब्रह्मकृतकाशीप्रशंसानामद्वाविंशतितमोऽध्यायः ॥ २२ ॥ ॥ शिवशर्मोवाच ॥ ॥ सत्यलोकेश्वरविधेसर्वेषांप्रपितामह ॥ किंचिद्विज्ञप्तुकामोस्मिनभयाद्वक्तुमुत्सहे ॥ १ ॥ ॥ ब्रह्मोवाच ॥ ॥ यत्त्वंप्रष्टुमनाविप्रज्ञातंतेतन्मनोगतम् ॥ पिपृच्छिषुस्त्वंनिर्वाणंगणौतत्कथयिष्यतः ॥२॥ नैतयोर्विष्णुगणयोरगोचरमिहास्तिहि ॥ सर्वमेतौविजानीतोयत्किंचिद्ब्रह्मगोलके ॥ ३ ॥ इत्युक्त्वासत्कृतास्तेवैब्रह्मणाभगवद्गणाः ॥ प्रणम्यलोककर्तारंतेऽपिहृष्टाःप्रतस्थिरे ॥ ४ ॥ पुनःस्वयानमारुह्यवैकुंठमभितोययुः ॥ गच्छतापिपुनस्तत्रद्विजेनापृच्छितौगणौ ॥ ५ ॥ ॥ शिवशर्मोवाच ॥ ॥ कियद्दूरंवयंप्राप्तागंतव्यंचकियत्पुनः ॥ पृच्छाम्यन्यच्चवांभद्रौब्रूतंप्रीत्यातदप्यहो ॥ ॥ ६ ॥ कांच्यवंतीद्वारवतीकाश्ययोध्याचपंचमी ॥ मायापुरीचमथुरापुर्यःसप्तविमुक्तिदाः ॥ ७ ॥ विहायषट्पुरीश्चान्याःकाश्यामेवप्रतिष्ठिता ॥ मुक्तिर्विश्वसृजातात्किंममसुक्तिर्नसंप्रति ॥ ८ ॥ इतिसर्वंममपुरःप्रसादाद्वक्तुमर्हतम् ॥ इतितद्वाक्यमाकर्ण्यगणावूचतुरादरात् ॥ ९ ॥ ॥ गणावूचतुः ॥ यथार्थंकथयावस्तेयत्पृष्टंभवतानघ ॥ विष्णुप्रसादाज्जानीवोभूतंभाविभवत्तथा ॥ १० ॥ विप्रावभासतेयावत्किरणैःपुष्पवंतयोः ॥ तावतीभूःसमुद्दिष्टाससमुद्राद्रिकानना ॥ ११ ॥

तन्निर्वाणम् ॥ २ ॥ तत्कथनेऽसामर्थ्यमेतयोर्नमंतव्यमित्याह ॥ नैतयोरिति ॥ ३ ॥ प्रतस्थिरेप्रचलिताः ॥ ४ ॥ अपृच्छिपृष्टम् ॥ तौगणौप्रति ॥ ५ ॥ ६ ॥ अन्यच्चेति
यदुक्तंतदाह ॥ कांचीति ॥ तथाचोक्तम् ॥ अयोध्यामथुरामायाकाशीकांचीह्यवंतिका॥पुरीद्वारवतीचैवसप्तैतामुक्तिदायिकाइति ॥ ७ ॥ मुक्तिःकैवल्यम् ॥ विश्वसृजाब्रह्मणाप्रोक्ता ॥ यथाभूमितले
विप्रपुर्यःसंतिसहस्रशः ॥ तथाकाशीनमंतव्याकापिलोकोत्तरात्वियम् ॥ त्वयाशुद्धधियाकाश्यांयच्छ्रेयःसमुपार्जितम् ॥ तच्छ्रेयसोप्युदर्कस्तेमहानास्तिद्विजोत्तमेतिच ॥ वदतेतिशेषः ॥ तत्तस्मात्सं
प्रतिममविदेहलक्षणामुक्तिःकिंनास्तीतितृतीयःप्रश्नः ॥ ८ ॥ अर्हतमर्हथोयोग्यौभवथइतियावत् ॥ इतीत्यगस्त्यवाक्यम् ॥ ९ ॥ भूतमतीतं भाविभविष्यत् भवद्वर्तमानम् ॥ १० ॥ कियद्दूरंवयं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

प्राप्ताइतिप्रथमप्रश्नस्योत्तरंवक्तुंप्रसंगात्पृथिव्यंतरिक्षयोःप्रमाणमाहतुः विप्रेतिसार्धेन ॥ हेविप्रपुष्पवंतयोःसूर्याचंद्रमसोः ॥ एकयोक्त्यापुष्पवंतौदिवाकरनिशाकरावित्यमरः ॥ ११ ॥ विस्तार परिमंडलंयथास्यात् ॥ तत्रविस्तारोदैर्घ्यम् ॥ परिमंडलंवर्तुलाकारता ॥ भूमेःसकाशादुपरीत्यग्रिमस्यानुषंगः ॥ योजनानांनियुतेलक्षे ॥ एकंशतसहस्रंतुनियुतंप्रोच्यतेबुधैरितिब्रह्मांडदर्शनात् ॥ ॥ १२ ॥ लक्ष्योदृश्यः ॥ लक्षयोजनंयथास्याल्लक्षयोजनमभिव्याप्येतिवा ॥ उच्छ्रितमुच्चम् ॥१३॥ सौम्योबुधः ॥ भौमोमंगलः ॥ १४ ॥ सुरेज्योदेवानांपूज्योबृहस्पतिः ॥ नियुतद्वयेलक्षद्वितये ॥ द्विलक्षयोजनेनप्रमाणेनउत्सेधःउच्चः ॥ सौरिःशनिः ॥१५॥ दशायुतंलक्षंतावत्समुच्छ्रायमुच्चामित्यर्थः ॥ सहस्राणांशताल्लक्षात् ॥ १६ ॥ भूर्लोकस्यस्वरूपमाह ॥ पादगम्यंहीति ॥१७॥१८॥१९॥ उपरिष्टादिति ॥ एतेनाष्टकोटियोजनपरिमितंदत्मवयमतिक्रांताइतिसूचितम् ॥ २० ॥ गंतव्यंचाकियत्पुनरित्यस्यद्वितीयप्रश्नस्योत्तरमाहतुः ॥ सत्यादुपरीति ॥ एतेनाष्टकोटियोजनमार्गोगंतव्योऽस्ती

नक्षत्रधंडलंसो वियच्चतावदुपरिविस्तारपरिमंडलम् ॥ योजनानांचनियुतेभूमेर्भानुर्व्यवस्थितः ॥ १२ ॥ भानोःसकाशादुपरिलक्षेलक्ष्यःक्षपाकरः ॥ नक्षत्रधंडलंसो माल्लक्षयोजनमुच्छ्रितम् ॥ १३ ॥ उडुमंडलतःसौम्यउपरिष्टाद्विलक्षतः ॥ द्विलक्षेतुबुधाच्छुक्रःशुक्राद्भौमोद्विलक्षके ॥ १४ ॥ माहेयादुपरिष्टाच्चसुरेज्यो नियुतद्वये ॥ द्विलक्षयोजनोत्सेधःसौरिर्देवपुरोहितात् ॥ १५ ॥ दशायुतसमुच्छ्रायंसौरेःसप्तर्षिमंडलम् ॥ सप्तर्षिभ्यःसहस्राणांशतादूर्ध्वंध्रुवःस्थितः ॥ ॥ १६ ॥ पादगम्यंहियत्किंचिद्वस्त्वस्तिधरणीतले ॥ तद्भूर्लोकइतिख्यातःसाब्धिद्वीपाद्रिकाननम् ॥ १७ ॥ भूर्लोकाच्चभुवर्लोकोब्रध्नावधिरुदाहृतः ॥ आदित्यादाध्रुवंविप्रस्वर्लोकइतिगीयते ॥ १८ ॥ महर्लोकःक्षितेरूर्ध्वमेककोटिप्रमाणतः ॥ कोटिद्वयेतुसंख्यातोजनोभूर्लोकतोजनैः ॥ १९ ॥ चतुष्कोटिप्रमाणस्तुतपोलोकोऽस्तिभूतलात् ॥ उपरिष्टात्क्षितेरष्टौकोट्यःसत्यमीरितम् ॥ २० ॥ सत्यादुपरिवैकुंठोयोजनानांप्रमाणतः ॥ भूर्लोकात्प रिसंख्यातःकोटिषोडशसंमितः ॥ २१ ॥ यत्रास्तेश्रीपतिःसाक्षात्सर्वेषामभयप्रदः ॥ ततस्तुषोडशगुणःकैलासोऽस्तिशिवालयः ॥ २२ ॥ पार्वत्यास हितःशंभुर्गजास्यस्कंदनंदिभिः ॥ यत्रतिष्ठतिविश्वेशःसकलःसपरःस्मृतः ॥ २३ ॥ तस्यदेवस्यखेलोऽयंस्वलीलामूर्तिधारिणः ॥ सविश्वेशइतिख्यात स्तस्याज्ञाकृदिदंजगत् ॥ २४ ॥ सर्वेषांशासकश्चासौतस्यशास्तानचापरः ॥ स्वयंसृजतिभूतानिस्वयंपातितथात्तिच ॥ २५ ॥ सर्वज्ञएकःसप्रोक्तःस्वे च्छाधीनविचेष्टितः ॥ तस्यप्रवर्तकःकोपिनहिनैवनिवर्तकः ॥ २६ ॥

तिध्वनितमितिभावः ॥ यद्यपिवैकुंठलोकोब्रह्मांडाद्बहिर्भागवतादौवर्ण्यतेतथाप्यत्रकल्पभेदेनवैकुंठलोकांतर्भेदेनवात्रोच्यतइतिज्ञातव्यम् ॥ २१ ॥ प्रसंगाद्भूर्लोकात्कैलासप्रमाणमाहतुः ॥ ततइति ॥ ततोवैकुंठात्षोडशगुणःषोडशकोटिसंमितः ॥ २२ ॥ कैलासंविशिनष्टि ॥ पार्वत्येति ॥ कलामायाभवानीवातत्सहितःसकलःसर्वस्वरूपोवा ॥२३॥ तस्यखेलोलीलारूपोऽयंप्रपंचः ॥ तस्यविशेषणंस विश्वेशइत्यारभ्यतस्येत्यतः प्राक्तनेनग्रंथेन ॥ विश्वेशोयमितिक्वचित्पाठः ॥ तस्यकीदृशस्य ॥ स्वलीलामूर्तिधारिणःस्वलीलयामाययाशरीरधारिणः ॥ तस्याज्ञाकृदिदंजगत् ॥ तथाचश्रुतिः ॥ भीषास्माद्वातःपवतेभीषोदेतिसूर्यः ॥ भीषास्मादिंद्रश्चाग्निश्चमृत्युर्धावतिपंचमइति ॥ मद्भयाद्वातिवातोयमितिस्मृतेश्च॥२४॥२५॥ तस्यशास्तानचापरइत्येतदेवाविवृणोति ॥ तस्यप्रवर्तकइति ॥ २६ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

माययासमूर्तम् ॥ श्रुतिचोदितंश्रुत्याप्रतिपादितम् ॥ यद्वा ॥ अमूर्तंवाय्वाकाशरूपम् ॥ मूर्तंपृथिव्यप्तेजोलक्षणंपरंब्रह्मचयत्तत्सइत्यर्थः ॥ तथाचश्रुतिः ॥ द्वेवावब्रह्मणोरूपेमूर्तंचामूर्तंचेति॥ ब्रह्मणोविशे
षणंसर्वव्यापीतिसार्धद्वयम् ॥ २७ ॥ सर्वेभ्यः कारणेभ्योमहदादिभ्योयत्परंप्रधानंतस्मादपिपरतरमतिदूरमतएवपरम् ॥ किंतस्यरूपंकिंवातत्रप्रमाणंतत्राह ॥ आनंदमिति ॥ श्रुतयश्चसत्यंज्ञानमनंतं
ब्रह्मेत्याद्याः ॥ २८ ॥ तर्हिमानेनविषयीकृतत्वादनात्मत्वमनित्यत्वंचस्यादित्यतआहतुः ॥ संविदंतइति ॥ नसंविदतेनविषयीकुर्वंते ॥ संविदंतीतिक्वचित ॥ अतन्निरसनद्वारावृत्तिविषयत्वद्वारावावेदावि
षयत्वमतोनायंदोषइतिभावः ॥ किमत्रप्रमाणंवेदएवेत्याह ॥ यतइति ॥ २९ ॥ यस्मादेतादृग्ब्रह्मसशंभुस्तस्मात्सस्वयंवेद्यःस्वभानान्यानपेक्षः ॥ तत्रहेतुः ॥ परंज्योतिःस्वयंज्योतिरित्यर्थः ॥ अत्रायं
पुरुषःस्वयंज्योतिरितिश्रुतेः॥प्रमाणानिकेवलंगोचरेयस्यसप्रमाणैकगोचरः प्रमाणानांमुख्यप्रकाशकइत्यर्थः ॥ चक्षुषश्चक्षुरित्यादिश्रुतेः ॥ पूर्वोक्तरीत्यावेदांतैकवेद्यइतिवा ॥ ३० ॥ माययानानारूपो
पिवस्तुतोऽरूपः ॥ गोचरोविषयः ॥ अंतकवपुरंतकस्वरूपः ॥ यद्वा वस्तुतोऽनंतोपिमाययापरिच्छिन्नस्वरूपः ॥ अंतकृच्चैवेतिक्वचित ॥३१॥ ननुतर्ह्येवंविधस्यसर्वव्यापिनश्चिद्घनैकरसस्यकुतःकैलासाव

अमूर्तंयत्परंब्रह्मसमूर्तंश्रुतिचोदितम् ॥ सर्वव्यापिसदानित्यंसत्यंद्वैतविवर्जितम् ॥ २७॥ सर्वेभ्यःकारणेभ्यश्चपरात्परतरंपरम् ॥ आनंदंब्रह्मणोरूपंश्रुतयो
यत्प्रचक्षते ॥ २८॥ संविदंतेनयंवेदाविष्णुर्वेदनवैविधिः ॥ यतोवाचोनिवर्तंतेह्यप्राप्यमनसासह ॥ २९ ॥ स्वयंवेद्यःपरंज्योतिःसर्वस्यहृदिसंस्थितः ॥
योगिगम्यस्त्वनाख्येयोयःप्रमाणैकगोचरः ॥ ३० ॥ नानारूपोप्यरूपोयःसर्वगोपिनगोचरः ॥ अनंतोप्यंतकवपुःसर्ववित्कर्मवर्जितः ॥३१॥ तस्येदमै
श्वरंरूपंखंडचंद्रावतंसकम् ॥ तमालश्यामलगलंस्फुरद्भालविलोचनम् ॥ ३२ ॥ लसद्वामार्धनारीकंकृतशेषशुभांगदम् ॥ गंगातरंगसत्संगसदाधौ
तजटातटम् ॥ ३३ ॥ स्मरांगजरजःपुंजपूजितावयवोज्ज्वलम् ॥ विचित्रगात्रविधृतमहाव्यालविभूषणम् ॥ ३४ ॥ महोक्षस्यंदनगमंविरुताजगवायुधम् ॥
गजाजिनोत्तरासंगंदशार्धवदनंशुभम् ॥ ३५ ॥ उत्त्रासितमहामृत्युमहाबलगणावृतम् ॥ शरणार्थिकृतत्राणंनतनिर्वाणकारणम् ॥ मनोरथपथातीतं
वरदानपरायणम् ॥ ३६ ॥ तस्यतत्त्वस्वरूपस्यरूपातीतस्यभोद्विज ॥ परावरेरुद्ररूपेसर्वंव्याप्यावतिष्ठतः ॥ ३७ ॥ निराकारोपिसाकारःशिवएवहि
कारणम् ॥ मुक्तयेभुक्तयेवापिनशिवान्मोक्षदोपरः ॥ ३८॥ यथातेनाखिलंह्येतत्पार्वतीपतिसात्कृतम् ॥ इदंचराचरंसर्वंदृश्यादृश्यमरूपिणा ॥ ३९ ॥

स्थितत्वंतत्राहतुः ॥ तस्येदमिति ॥ ऐश्वरमीश्वरसंबंधि ॥ तदेवरूपंविशिनष्टि ॥ खंडचंद्रेतिपादाधिकपंचभिः ॥ चंद्रस्यखंडःखंडचंद्रश्चंद्रकलेत्यर्थः ॥ सोऽवतंसःशिरोभूषणंयस्यतत् ॥
भालंललाटम् ॥ ३२ ॥ शेषोऽनंतः ॥ गंगातरंगानांयःसत्संगःसमीचीनसंगस्तेनधौतंप्रक्षालितंजटानांतटंयस्मिंस्तत् ॥ तरंगसंदोहेतिक्वचित् ॥ ३३ ॥ स्मरःकामस्तदंगादग्धाज्जा
तोयोरजःपुंजोभस्मराशिस्तेनपूजिताउद्धूलीकृतायेऽवयवास्तैरुज्ज्वलम् ॥ व्यालाःसर्पाः ॥ ३४ ॥ महानुक्षाबलीवर्दएवस्यंदनस्तेनगमोगमनंयस्यतत् ॥ गजासुरस्याजिनंचर्मैवउत्तरासंगमु
त्तरीयंवस्त्रंयस्यतत् ॥ ३५ ॥ उच्चैस्त्रासितोमहामृत्युर्येनतत् ॥ सकालकालःकालमृषिकभक्षकइतिश्रुतिस्मृतिभ्याम् ॥ ३६ ॥ उपसंहरतस्तस्येतिद्वाभ्याम् ॥ सर्वव्याप्यावतिष्ठतस्तस्य
परावरेसगुणनिर्गुणेरुत्संसारदुःखंतद्द्रातिनाशयतीतिरुद्रंतद्रूपेसंसारदुःखनाशकेरूपेइत्यर्थः ॥ रुद्रसंज्ञकेइतिवा ॥ ३७ ॥ ३८ ॥ ननुसगुणनिर्गुणेरुद्रस्यैवरूपेचेत्तर्हिकथंजगदीश्वरत्वंविष्णोः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

प्रख्यातमित्याशंकायामाहतुः ॥ यथेति ॥ तेनारूपिणासर्वेश्वरेण ॥ अखिलमग्रिमंसर्वमिति॥चपदद्वयंसंकोचव्यावृत्त्यर्थम् ॥ इदंजगद्यथापार्वतीपतिसात्कृतंमृडानीपत्यधीनंकृतं हिप्रसिद्धौ ॥ ३९ ॥ तथामृडानीकांतेनविष्णुसाद्विष्णवधीनमखिलंजगद्विधायकृत्वास्वच्छंदलीलयाहेविप्र ॥ यद्वा विनापक्षिणागरुडेनप्रातिगच्छतीतितथाहेगरुडगामिन्निति भाविगरुडवाहनत्वंसूच्यते ॥ तेनह्यनाख्येयमितिपाठेवक्तुमप्यशक्यमृइदंचराचरमित्यर्थः ॥ ४० ॥ तर्हिशिवविष्ण्वोस्तरतमभावेनवैषम्यान्मुमुक्षुभिश्चनैयत्येनकआश्रयणीयइतिपृच्छायामाहतुः॥ यथाशिवइति ॥:तथाचहरिवंशे ॥ योवैविष्णुःसवैरुद्रइति॥भविष्येच ॥ यथाशिवस्तथाविष्णुरिति ॥ ४१ ॥ विष्णुसादखिलंजगद्विधायक्रीडचतइत्युक्तं तदेवप्रपंचयाति आहूयपूर्वमित्यारभ्यइतितइत्यतःप्राक्तनेनग्रंथेन ॥ आहूयेत्यादिल्यबंतक्त्वां

तथामृडानीकांतेनविष्णुसादखिलंजगत् ॥ विधायक्रीड्यतेविप्रनित्यंस्वच्छंदलीलया ॥ ४० ॥ यथाशिवस्तथाविष्णुर्यथाविष्णुस्तथाशिवः ॥ अंतरं शिवविष्ण्वोश्चमनागपिनविद्यते ॥ ४१ ॥ आहूयपूर्वंब्रह्मादीन्समस्तान्देवतागणान् ॥ विद्याधरोरगादींश्चसिद्धगंधर्वचारणान् ॥ ४२ ॥ निजसिंहासनसमंकृत्वासिंहासनंशुभम् ॥ उपवेश्यहरिंतत्रच्छत्रंकृत्वामनोहरम् ॥४३॥ श्लक्ष्णंकोटिशलाकंचविश्वकर्मविनिर्मितम् ॥ पांडुरंरत्नदंडंचस्थूलमुक्तावलंबितम् ॥ ४४ ॥ कलशेनविचित्रेणह्युपरिष्टाद्विराजितम् ॥ सहस्रयोजनायामंसर्वरत्नमयंशुभम् ॥४५॥ पट्टसूत्रमयैरम्यैश्चामरैश्चपरिष्कृतम् ॥ राजाभिषेकयोग्यैश्चद्रव्यैःसर्वौषधादिभिः ॥ ४६ ॥ प्रत्यक्षतीर्थपाथोभिःपंचकुंभैर्मनोहरैः ॥ सिद्धार्थाक्षतदूर्वाभिर्मंत्रैःस्वयमुपस्थितैः ॥ ४७ ॥ देवानां चतुर्थर्षीणांसिद्धानांफणिनामपि ॥ आनीयमंगलकराःकन्याःषोडशषोडश ॥ ४८ ॥ वीणामृदंगाब्जभेरीमरुडिंडिमझर्झरैः ॥ आनकैःकांस्यतालाद्यैर्वाद्यैर्ललितगायनैः ॥४९॥ ब्रह्मघोषमहारावैरापूरितनभोंगणे ॥ शुभेतिथौशुभेलग्नेताराचंद्रबलान्विते ॥५०॥ आबद्धमुकुटंरम्यंकृतकौतुकमंगलम् ॥ मृडानीकृतशृंगारंसुश्रियासुश्रियायुतम् ॥५१॥ अभिषिच्यमहेशेनस्वयंब्रह्मांडमंडपे ॥ दत्तंसमस्तमैश्वर्यंयन्निजंनान्यगामिच ॥ ५२ ॥ ततस्तुष्टावदेवेशःप्रमथैःसहशार्ङ्गिणम् ॥ ब्रह्माणंलोककर्तारमुवाचचवचस्त्विदम् ॥ ५३ ॥ ममवंद्यस्त्वयंविष्णुःप्रणमत्वममुंहरिम् ॥ इत्युक्त्वाथस्वयंरुद्रोननामगरुडध्वजम् ॥ ५४ ॥ ततोगणेश्वरैःसर्वैर्ब्रह्मणाचमरुद्गणैः ॥ योगिभिःसनकाद्यैश्चसिद्धैर्देवर्षिभिस्तथा ॥ ५५ ॥ विद्याधरैःसगंधर्वैर्यक्षरक्षोप्सरोगणैः ॥ गुह्यकैश्चारणैर्भूतैःशेषवासुकितक्षकैः ॥ ५६ ॥ पतत्रिभिःकिंनरैश्चसर्वैःस्थावरजंगमैः ॥ ततोजयजयेत्युक्त्वानमोस्त्वितिनमोस्त्विति ॥ ५७ ॥ ततोहरिर्महेशेनसंसदिद्युसदांतदा ॥ एतैर्महारवैरम्यैश्चानर्चिपरमार्चिषा ॥ ५८ ॥

तपदानांतृतीयांतानांचकेषांचित्पदानामभिषिच्यमहेशेनेत्यग्रिमेणसंबंधः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ प्रत्यक्षतीर्थपाथोभिःप्रत्यक्षाणियानितीर्थानितेषांपाथोभिर्जलैःप्रत्यक्षैस्तीर्थैरेवानीतैःपाथोभिरित्यर्थः॥प्रत्यक्षफलजनकतीर्थपाथोभिरितिवा ॥ प्रक्षाल्यतीर्थैतिक्वचित्पाठः ॥ सिद्धार्थःश्वेतसर्षपः ॥४७॥४८॥ अब्जःशंखः॥मरुर्डमरुः ॥४९॥५०॥ मृडानीकृतशृंगारंभवानीरचितवेषम् ॥ सुश्रियापद्मयुतंशोभनयाश्रियासमेतम् ॥ कथंभूतयासुश्रिया ॥ शोभनकांतिमत्या ॥५१॥५२॥५३॥ ततस्तुष्टावेत्युक्तंतामेवस्तुतिंलेशतोदर्शयंतौइदंतयानिर्दिष्टंवचनमाहतुः॥ ममवंद्यस्त्विति॥ तुशब्दएवार्थे ॥ अयंविष्णुर्ममवंद्यएवनानुज्ञेयोऽतस्त्वमप्यमुंहरिंकेवलंप्रणमेत्यर्थः [illegible] ॥आनर्चिपूजितः॥परमार्चिषाउपलक्षितोहरिः ॥ परमाशिषेति

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पाठपरमाशिषाऽनर्चीत्यर्थः ॥ ५८ ॥ तामेवाशिषमाहतुस्त्वंकर्तेत्यादिना ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ अवांतरप्रकृतमुपसंहरतोवैकुंठेतिद्वाभ्याम् ॥ ६५ ॥ ६६ ॥ परम प्रकृतमुपसंहरतः॥ इतितइति ॥६७॥ एतदध्यायश्रवणपठनजपफलमाहेदंत्वित्यादिना॥६८॥६९॥७०॥७१॥७२॥ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांत्रयोविंशतितमोऽध्यायः ॥२३॥ चतुर्भिरधिकेविंशेऽध्यायेऽत्यंतमनोरमे ॥ कैवल्यंपरमानंदंवर्ण्यतेशिवशर्मणः ॥१॥ इदानींकथयिष्यावस्तवनिर्वाणकारणमित्युक्तंपूर्वतद्वसप्रपंचंकथयतः॥ शिवशर्मन्निति॥उदर्कमुत्तरकालभाविसुकृत

त्वंकर्तासर्वभूतानांपाताहर्तात्वमेवच ॥ त्वमेवजगतांपूज्यस्त्वमेवजगदीश्वरः ॥ ५९ ॥ दाताधर्मार्थकामानांशास्तादुर्नयकारिणाम् ॥ अजेयस्त्वंचसंग्रामेममापिहिभविष्यसि ॥ ६० ॥ इच्छाशक्तिःक्रियाशक्तिर्ज्ञानशक्तिस्तथोत्तमा ॥ शक्तित्रयमिदंविष्णोगृहाणप्रार्पितंमया ॥ ६१ ॥ त्वद्द्वेष्टारोहरेनूनंमयाशास्याःप्रयत्नतः ॥ त्वद्भक्तानांमयाविष्णोदेयंनिर्वाणमुत्तमम् ॥ ६२ ॥ मायांचापिगृहाणेमांदुष्प्रणोद्यांसुरासुरैः ॥ ययासंमोहितंविश्वमकिंचिज्ज्ञंभविष्यति ॥ ६३ ॥ वामबाहुर्मदीयस्त्वंदक्षिणोसौपितामहः ॥ अस्यापिहिविधेःपाताजनितापिभविष्यसि ॥ ६४ ॥ वैकुंठैश्वर्यमासाद्यहरेरित्थंहरःस्वयम् ॥ कैलासेप्रमथैःसार्धंस्वैरंक्रीडत्युमापतिः ॥ ६५ ॥ तदाप्रभृतिदेवोसौशार्ङ्गधन्वागदाधरः ॥ त्रैलोक्यमखिलंशास्तिदानवांतकरोहरिः ॥६६॥ इतितेकथिताविप्रलोकानांचपरिस्थितिः ॥ इदानींकथयिष्यावस्तवनिर्वाणकारणम् ॥ ६७ ॥ इदंतुपरमाख्यानंशृणुयाद्यःसमाहितः ॥ स्वर्लोकमभिगम्याथकाश्यांनिर्वाणमाप्नुयात् ॥ ६८ ॥ यज्ञोत्सवेविवाहेचमंगलेष्वखिलेष्वपि ॥ राज्याभिषेकसमयेदेवस्थापनकर्मणि ॥ ६९ ॥ सर्वाधिकारदानेपुनर्ववेश्मप्रवेशने॥पठितव्यंप्रयत्नेनतत्कार्यपरिसिद्धये ॥७०॥ अपुत्रोलभतेपुत्रमधनोधनवान्भवेत् ॥ व्याधितोमुच्यतेरोगाद्बद्धोमुच्येतबंधनात्॥७१॥ जप्यमेतत्प्रयत्नेनसततंमंगलार्थिना ॥ अमंगलानांशमनंहरनारायणप्रियम् ॥७२॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यांसंहितायां चतुर्थे काशीखंडे पूर्वार्द्धे चतुर्भुजाभिषेकोनामत्रयोविंशतितमोऽध्यायः ॥ २३ ॥ ॥ छ ॥ गणावूचतुः ॥ ॥ शिवशर्मन्नुदर्कंतेकथयावोनिशामय ॥ त्वमत्रवैष्णवेलोकेभुक्त्वाभोगान्सुपुष्कलान् ॥ १ ॥ ब्रह्मणोवत्सरंपूर्णंरममाणोऽप्सरोगणैः ॥ सुतीर्थमरणोपात्तपुण्यशेषेणवैपुनः ॥ २ ॥ भविष्यसिमहीपालोनगरेनंदिवर्धने ॥ राज्यंप्राप्यासपत्नंचसमृद्धबलवाहनम् ॥३॥ कृष्टिभिर्हृष्टपुष्टैश्चरम्यहाटकभूषणैः ॥ संजुष्टमिष्टापूर्तानांधर्माणांनित्यकर्तृभिः॥४॥

फलमित्यर्थः ॥ त्वमत्रेति ॥ वैष्णवेवैकुंठे ॥ १ ॥ २ ॥ भविष्यसीति ॥ राज्यंप्राप्यमहीपालःसन्नंदिवर्धनेहर्षजनकेतन्नाम्निनगरेभविष्यसीत्यन्वयः ॥ ३ ॥ राज्यंविशिनष्टि चतुरक्षरन्यूनसप्तदशभिः॥कृष्टिभिःपंडितैःसंजुष्टंसंसेवितमित्यन्वयः॥ वर्णैश्चेतिकचित् ॥ हाटकंसुवर्णम्॥इष्टानिअंतर्वेद्यांदीयमानानिदानानिपूर्तानिवापीकूपतडागादिनिर्माणानितेषांकर्मणांनित्यकर्तृभिः ॥ ४ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सदासंपन्नानिसस्यानियस्मिंस्तत् ॥ अतएवसूर्वरक्षेत्रसंकुलंसूर्वराणिशोभनफलसस्याढ्यभूमीनियानिक्षेत्राणितैःसंकुलंव्याप्तम् ॥५॥ राजिभिःपंक्तिभिः ॥ यत्रराज्ये ॥६॥ सुपुष्पेति ॥ भूमयोऽत्र विशेष्याअन्यानिविशेषणानि ॥ ससदाफलपादपाःसदाफलानियेषांतैःपादपैःसहवर्तमानाः ॥ कासाराःसरांसि ॥ ७ ॥ सदंभोयस्याःसासदंभानिम्नगाराजिर्नदीवृंदम् ॥ पक्षांतरेसदंभादंभोधर्मध्वजित्वंतत्सहिताजनताजनसमूहोयत्रनेत्यर्थः ॥ सर्वत्रशब्दश्लेषालंकारोयम् ॥ कुलानिगोत्राणितान्येवकुलीनानिकुलीनशब्दवाच्यानि ॥ कौपृथिव्यांलीनानिकुलीनानीत्यन्यायधनपक्षेव्याकर्तव्यम् ॥ ८ ॥ नारीषुविभ्रमोनामसौरतभावप्रकाशनम् ॥ विद्वत्सुविभ्रमोऽज्ञानम् ॥ कुटिलगामिन्योवक्रगामिन्यः ॥ प्रजापक्षेविमार्गगामिन्यः ॥ विषयेदेशे ॥ ९ ॥ तमोयुक्ताअंधकारमिश्राःक्षपारात्रयः ॥ बहुलेषुकृष्णपक्षेषु ॥ पक्षांतरेतमोगुणयुक्ताः ॥ रजोयुजःऋतुकालीनशोणितयुक्ताः ॥ पक्षांतरेरजोगुणयुजः ॥ १० ॥ अनंधोऽगर्विष्ठः ॥ पक्षांतरेंऽधोऽन्नंभक्तमितियावत्तद्रहितमनंधोभोजनंभुजिक्रिया ॥ नविद्यतेऽयोलोहंयत्रतत्स्यंदनंतथा ॥ सुवर्णादिमयमित्यर्थः ॥ पक्षांतरेनयोनीतिस्तद्रहितोऽनयः ॥ ११ ॥ दंडोनालंदांडाइतिप्रसिद्धः ॥ परशुःकुठारः ॥ वालव्यजनंचाम

सदासंपन्नसस्यंचसूर्वरक्षेत्रसंकुलम् ॥ सुदेशंसुप्रजंसुस्थंसुतृणंबहुगोधनम् ॥ ५ ॥ देवतायतनानांचराजिभिःपरिराजितम् ॥ सुयूपायत्रवैग्रामाःसुवित्तर्द्धिविराजिताः ॥ ६ ॥ सुपुष्पकृत्रिमोद्यानाःससदाफलपादपाः ॥ सपद्मिनीककासारायत्रराजंतिभूमयः ॥ ७ ॥ सदंभानिम्नगाराजिर्नयत्रजनताक्वचित् ॥ कुलान्येवकुलीनानिनचान्यायधनानिच ॥ ८ ॥ विभ्रमोयत्रनारीषुनविद्वत्सुचकर्हिचित् ॥ नद्यःकुटिलगामिन्योनयत्रविषयेप्रजाः ॥ ९ ॥ तमोयुक्ताःक्षपायत्रबहुलेषुनमानवाः ॥ रजोयुजःस्त्रियोयत्रनधर्मबहुलानराः ॥ १० ॥ धनैरनंधोयत्रास्तिमनोनैवचभोजनम् ॥ अनयःस्यंदनंयत्रनचवैराजपूरुषः ॥ ११ ॥ दंडःपरशुकुद्दालवालव्यजनराजिषु ॥ आतपत्रेषुनान्यत्रक्वचित्क्रोधापराधजः ॥१२॥ अन्यत्राक्षिकवृंदेभ्यःक्वचिन्नपरिदेवनम् ॥ आक्षिकाएवदृश्यंतेयत्रपाशकपाणयः ॥ १३ ॥ जाड्यवार्ताजलेष्वेवस्त्रीमध्याएवदुर्बलाः ॥ कठोरहृदयायत्रसीमंतिन्योनमानवाः ॥ १४ ॥ औषधेष्वेवयत्रास्तिकुष्ठयोगोनमानवे ॥ वेधोप्यंतःसुरत्नेषुशूलंमूर्तिकरेषुवै ॥ १५ ॥

रम् ॥ पक्षांतरेक्रोधादपराधाद्वाजातोधनग्रहणादिरूपोदंडः ॥ १२ ॥ अक्षैःसारिभिर्व्यवहरंतीत्याक्षिकास्तेषांवृंदेभ्यःसमूहेभ्यः ॥ परिदेवनंद्यूतक्रीडा ॥ पक्षांतरे परिदेवनंप्रलापः ॥ आक्षिकाएवपाशकपाणयः ॥ पक्षांतरेपाशाएवपाशकारज्जवस्तेपाणिषुयेषांतेतथा ॥ यत्रचानृतवादिनइतिक्वचित्पाठःसचिंत्यः ॥ १३ ॥ जाड्यंशैत्यम् ॥ पक्षांतरेजाड्यंमौर्ख्यम् ॥ स्त्रीमध्याःस्त्रीणांमध्यप्रदेशादुर्बलाःकृशाः ॥ पक्षांतरेदुर्बलाधनादिबलहीनाः ॥ कठोरंक्षुरधाराभंहृदयंयासांताःकठोरहृदयाःसीमंतिन्योनार्यः ॥ तथाचभागवते ॥ शरत्पद्मोत्सवंवक्त्रंवचश्चश्रवणामृतम् ॥ हृदयंक्षुरधाराभंस्त्रीणांकोवेदचेष्टितमिति ॥ स्वभावत्वान्नायंविगुणः ॥ यद्वा कठोरहृदयाःकठिनस्तनाइत्यर्थः ॥ पक्षांतरेसमानएवार्थः ॥१४॥ कुष्ठयोगःकुष्ठइतिप्रसिद्धस्यऔषधविशेषस्यकुष्ठशब्दस्यप्रयोगः ॥ पक्षांतरेकुष्ठस्यश्वित्रापरपर्यायस्यरोगस्ययोगःसंबंधः ॥ वेधोप्यंतःसुरत्नेषुशोभनरत्नेष्वेवांतर्मध्येवेधश्छिद्रम् ॥ पक्षांतरेवेधस्ताडनम् ॥ वेधोप्यनःसुरत्नेष्वितिक्वचित्पाठः ॥ तत्रानःसुशकटेषु ॥ शूलंमूर्तिकरेषुच ॥ मूर्तयोविश्वेश्वरप्रतिकृतयः ॥ यद्वा मूर्तयोमूर्तिमंतस्तासांकरेष्वेवशूलम् ॥ पक्षांतरेशूलंरोगविशेषः ॥ वेधस्तिथिषुनक्षत्रेशल्योयोगचयेषुवै इतिपाठेतिथिषुवेधोदशमीविद्धैकादश्यादिरूपः ॥ नक्षत्रवेधएक

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्यांतिथौनक्षत्रयोःसंबंधः ॥ शूलःशूलयोगःअन्येषांयोगानांचयेषु॥पक्षांतरेवेधस्ताडनमित्युक्तमेव ॥१९॥ सात्त्विकभावोभक्तिःस्वभर्तृपुत्रीणांस्वस्त्रीषुचपुंसाम् ॥ संज्वरःकामजनितप्रक्षोभः ॥ पक्षांतरेसंज्वरोधनादिनिमित्तःसंतापः ॥ कलुषस्यपापस्यदारिद्र्यंनधनादेः ॥१६॥ नविद्यतेकंसुखंयस्मात्तदकंपापंतस्यसदादुर्लभत्वंनपुण्यस्य ॥ सुकृतेनचवस्तुनः सुकृतेपुण्यनिमित्तेवस्तुनोऽर्थस्यदुर्लभत्वं नचनास्ति ॥ पुण्यार्थंसर्वेपिधनंव्ययंतीत्यर्थः ॥ दुर्लभत्वंसदेकस्यसुकृतेतरवस्तुनइतिपाठेसुकृतेतरवस्तुनःपापस्येतिव्याकर्तव्यम् ॥ इभागजाएवप्रमत्तानजनाः ॥ वीच्योस्तरंगयोरेवजलाशयेसरोवरादौ युद्धंनतुपरस्परस्पर्धयाजनानाम् ॥१७॥ दानहानिर्मदोदकत्यागः॥पक्षांतरेदानहानिर्दानाभावः ॥ द्रुमेष्वेवहिकंटकाः॥ पक्षांतरेऽन्यत्रकंटकाःकंटकतुल्यादुःखदाइत्यर्थः॥जनेष्वेवविहरणंविहाराक्रीडा॥ स्त्रीत्वमार्षम् ॥ विहरणानिविहाराइतिबहुवचनंवा ॥ पक्षांतरेविगतहाराविहारा ॥ १८ ॥ बाणेष्वेवगुणविश्लेषोज्यापरित्यागः ॥ पक्षांतरेऽन्यत्रगुणानामुदारतादीनांविश्लेषोविच्छेदोनेत्यर्थः ॥ पुस्तकेपुस्तिकायामेवदृढाबंधोक्तिःपुस्तकंदृढंबंधनीयमितिवचनम् ॥ तथाचोक्तम् ॥ तैलाद्रक्षजलाद्रक्षरक्षमांश्लथबंधनात् ॥ आखुभ्यःपरहस्तेभ्यएवंवदतिपुस्तकमिति ॥ पक्षांतरेऽन्यत्रायंदृढं

कंपःसात्त्विकभावोत्थोनभयात्कापिकस्यचित् ॥ संज्वरःकामजोयत्रदारिद्र्यंकलुषस्यच ॥ १६ ॥ दुर्लभत्वंसदाकस्यसुकृतेनचवस्तुनः ॥ इभाएवप्रमत्तावैयुद्धंवीच्योर्जलाशये ॥ १७ ॥ दानहानिर्गजेष्वेवद्रुमेष्वेवहिकंटकाः ॥ जनेष्वेवविहाराहिनकस्यचिदुरःस्थली ॥ १८ ॥ बाणेषुगुणविश्लेषोबंधोक्तिःपुस्तकेदृढा ॥ स्नेहत्यागःसदैवास्तियत्रपाशुपतेजने ॥ १९ ॥ दंडवार्तासदायत्रकृतसंन्यासकर्मणाम् ॥ मार्गणाश्चापकेष्वेवभिक्षुका ब्रह्मचारिणः ॥ २० ॥ यत्रक्षपणकाएवदृश्यंतेमलधारिणः ॥ प्रायेमधुव्रताएवयत्रचंचलवृत्तयः ॥ २१ ॥ इत्यादिगुणवद्देशेत्वयिराज्यंप्रशासति ॥ धर्मेणराजधर्मज्ञशौंडीर्यगुणशालिनि ॥ २२ ॥

वध्यतामितिवचनंनास्तीत्यर्थः ॥ अपराधाभावात् ॥ पाशुपतेपाशुपतयोगयुक्तेपरमहंसेएव स्नेहत्यागोममताभावः ॥ यद्वा पाशुपतेसंन्यासिन्येवस्नेहत्यागःस्नेहद्रव्याभ्यंगस्नेहाक्तभैक्षादित्यागः ॥ तथाचश्रुतिः ॥ प्राणसंधारणार्थंयथामेदोवृद्धिर्नजायते ॥ औषधवदशनमाचरेत् ॥ हिंसातैलादिमैथुनंचप्रतिषिद्धानि ॥ अभ्यंगंचैवतांबूलंवर्जयेत्परदारवदित्यादिः ॥ पक्षांतरेऽन्यत्रस्नेहस्यदयायाःस्नेहद्रव्यस्यघृतादेर्वात्यागोनास्तीत्यर्थः ॥१९॥ कृतसंन्यासकर्मणामेकदंडित्रिदंडिनामेवदंडवार्तावंशदंडधारणकथा ॥ पक्षांतरेऽन्यत्रराजदंडवार्ताराजदंडकथानास्तीत्यर्थः ॥ चापकेषुचापेषुधनुःष्विति यावत् ॥ एवंमार्गणाबाणाः ॥ पक्षांतरेऽन्यत्रमार्गणायाचकानसंतीत्यर्थः ॥ ब्रह्मचारिणएवभिक्षाहारोपजीविनः ॥ संन्यासिनांत्वत्यादरेणनिमंत्रणमेवभवतातिभावः ॥ २० ॥ क्षपणकाअवधूता एवमलधारिणोदेहमलधारिणोदृश्यंते ॥ पक्षांतरेनान्येइत्यर्थः ॥ मधुव्रताभ्रमराएवचंचलवृत्तयः ॥ पक्षांतरेनान्यइत्यर्थः ॥ भ्रमरेष्वपिकेचनचंचलवृत्तयोनभवंतीतिप्रायेग्रहणम् ॥ २१ ॥ उपसंहरति ॥ इत्यादीति ॥ पूर्वोक्तप्रकारगुणवतिदेशेधर्मेणन्यायेनराज्यंराज्ञःकर्मप्रजापालनादित्वयिप्रशासतिकुर्वतिसतिलावण्येनांगसौंदर्येणाजिताप्राप्ताशोभनाश्रीर्याभिस्तासां राज्ञीनामयुतं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दशसहस्रंतासुचकुमाराणांशतत्रयंभाविभविष्यतीतितृतीयेनान्वयः ॥ राजानंविशेषयतः शौंडीर्येतिसपादसार्धेन ॥ शौंडीर्यंशूरता ॥ सौंदर्येतिक्कचित् ॥ तत्रसौंदर्यंशोभातिशयः ॥ रूपंकरचरणादिघटनसौष्ठवंलावण्यमितियावत् ॥ शौर्यंदाक्ष्यम् ॥ औदार्यंदातृत्वंमहत्त्वंवा ॥ २२ ॥ २३ ॥ वृद्धकालइतिसार्धपंचकंवाक्यम् ॥ नाम्नावृद्धकालइतिख्यातस्त्वंमध्येराजसभंराजसभायामध्ये दूरात्कार्पटिकैरक्तवस्त्रधारितपस्विविशेषैर्दृष्टःसन्पश्चात्तैःसर्वैःकार्पटिकैरनेकशःशोभनाशीर्वादैरभिनंदितआनंदेनसंवर्धितोभविष्यसीत्यन्वयः ॥ कथंभूतैःस्वाशीर्वादैः ॥ तत्कर्मभाविसदृशैस्तद्यद्वैकुंठभोगावसानपुण्यंकर्मतस्यभावियत्फलंतत्सदृशैस्तद्योग्यैर्यथार्थैरित्यर्थः ॥ त्वद्भाविकर्मसदृशैरितिपाठेपिसएवार्थः ॥ त्वंकथंभूतः ॥ उग्रःप्रतापवान् ॥ २४ ॥ श्रियाधनसंपत्त्यासंतर्पितामार्गणायाचकायेनसः ॥ श्रीसमर्पितेतिपाठेपिसएवार्थः ॥ २५ ॥ संततमवभृथेनयज्ञसमाप्त्यनंतरंक्रियमाणेनस्नानेनक्लिन्नाआर्द्रामूर्धजाःकेशायस्यसः ॥ सत्तीर्थोदकसंक्लिन्नेतिपाठेसत्तीर्थान्युत्कृष्टानियानिका

सौभाग्यभाजिरूपाढ्येशौर्यौदार्यगुणान्विते ॥ सीमंतिनीनांरम्याणांलावण्यार्जितसुश्रियाम् ॥ २३ ॥ राज्ञीनामयुतंभाविकुमाराणांशतत्रयम् ॥ वृद्धकालइतिख्यातउग्रःपरपुरंजयः ॥ २४ ॥ विजितानेकसमरःश्रीसंतर्पितमार्गणः ॥ अनेकगुणसंपूर्णःपूर्णचंद्रनिभद्युतिः ॥ २५ ॥ संततावभृथक्लिन्नमूर्धजःक्षितिपर्षभः ॥ प्रजापालनसंपन्नःकोशप्रीणितभूसुरः ॥ २६ ॥ पदारविंदंगोविंदंहृदिध्यायन्नतंद्रितः ॥ वासुदेवकथालापपरिक्षितदिनक्षपः ॥ २७ ॥ कदाचिदुपविष्टःसन्मध्येराजसभंद्विज ॥ दूरात्कार्पटिकैर्दृष्टोवाराणस्याःसमागतैः ॥ २८ ॥ तत्कर्मभाविसदृशैस्तदात्वमभिनंदितः ॥ तैःसर्वैराजशार्दूलस्वाशीर्वादैरनेकशः ॥ २९ ॥ श्रीमद्विश्वेश्वरोदेवोविश्वेषांजगतांगुरुः ॥ काशीनाथस्तुतेकुर्यात्कुमतेरपवर्जनम् ॥ ३० ॥ नैःश्रेयसींचसंपत्तिंयोदेयात्स्मरणादपि ॥ काशीनाथःसतेदिश्याज्ज्ञानंमलविवर्जितम् ॥ ३१ ॥ येनपुण्येनतेप्राप्तंराज्यंप्राज्यमकंटकम् ॥ तत्पुण्यशेषतोभूयाद्विश्वनाथेमतिस्तव ॥ ३२ ॥

वेरीतुंगभद्राकृष्णावेणागौतम्यादीनि ॥ तथाचोक्तम् ॥ कावेरीतुंगभद्राचकृष्णावेणाचगौतमी ॥ भागीरथीतिविख्याताःपंचगंगाःप्रकीर्तिताइति ॥ तेषामुदकैःसंक्लिन्नामूर्धजायस्यसइत्यर्थः ॥ कोशेनकोशस्थेनन्यायार्जितधनेनप्रीणितास्तर्पिताभूसुराब्राह्मणायेनसः ॥ २६॥ गोविंदस्येदंगौविंदम् ॥ पदारविंदेकृष्णस्येतिपाठेपदारविंदेइतिद्वितीयाद्विवचनम् ॥ वासुदेवकथालापेनपरिक्षिप्तेनिर्वाहितेदिनक्षपेदिवसरात्रीयेनसः ॥ २७ ॥ २८ ॥ २९ ॥ स्वाशीर्वादमेवाहतुः ॥ श्रीमद्विश्वेश्वरइतिपंचकेन ॥ कुमतेरज्ञानस्यअपवर्जनंनाशनम् ॥ ३० ॥ नचात्रसाधनप्रयासइत्याह ॥ नैःश्रेयसींकैवल्याख्याम् ॥ स्मरणादपिशब्दादुच्चारणादपि ॥ तथाच सकृदुच्चारितंयेनहरिरित्यक्षरद्वयम् ॥ बद्धःपरिकरस्तेनमोक्षायगमनंप्रतीति ॥ नन्वज्ञानंज्ञानेनैवनिवर्त्यमतस्तदभावात्कथंतस्यापवर्जनंतत्राहुः ॥ काशीनाथःसइति॥ सप्रसिद्धः॥ दिश्यादुपदिशतु॥ ननुतथापिसार्वज्ञ्यादिज्ञानदानेसदोषस्तदवस्थएवेत्याशंक्याहुर्मलविवर्जितमज्ञानतत्कार्ययोर्नाशकामित्यर्थः॥ ३१॥ननुपुण्यंविनाकथंविश्वनाथस्मरणं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

घटेतत्राहुः ॥ येनपुण्येनेति ॥ प्राज्यमुत्कृष्टंप्रजासुसुखम् ॥ तत्रहेतुरकंटकंशत्रुराहितम् ॥ ३२ ॥ ननुतथापिप्रसन्नःसन्नेकमेवफलंदद्यान्नचिरजीवनमारभ्यमोक्षावसानमित्यत्राहुः ॥ यस्यप्रसादा दिति ॥ अंबरंवस्त्रम् ॥ अंगनाउत्तमास्त्री ॥ वरांगनाइतिवापाठः ॥ समृद्धयोराज्यादिविभूतयः ॥ परमकारुणिकत्वात्तस्येतिभावः ॥ ३३ ॥ ३४ ॥ त्वमिति ॥ इतिआशीःपरंपरांपूर्वोक्तामाशी र्वादधारांश्रुत्वा ॥ इदमिदम् ॥ अयंचासौवृत्तांतश्चेतिवा इदंवृत्तांतआवाभ्यामिदानींकथ्यमानस्तत्त्वंस्मरिष्यसीत्यर्थः ॥ ३५ ॥ आकारेतिसार्धवाक्यम् ॥ आकारगोपनमभिप्रायसंगोपनम् ॥ सुमुहूर्त

यस्यप्रसादात्सुलभमायुःपुत्रांबरांगनाः ॥ समृद्धयःस्वर्गमोक्षौसविश्वेशःप्रसीदतु ॥ ३३ ॥ नामश्रवणमात्रेणयस्यविश्वेशितुर्विभोः ॥ महापातकविच्छेदः सविश्वेशोऽस्तुतेहृदि ॥ ३४ ॥ त्वंवृद्धकालोभूपालःश्रुत्वेत्याशीःपरंपराम् ॥ स्मरिष्यसीदंवृत्तांतंपुलकांकवपुस्तदा ॥ ३५ ॥ आकारगोपनंकृत्वातेभ्यो दत्त्वाधनंबहु ॥ सुमुहूर्तमनुप्राप्यसुतेराज्यंविधायच ॥ ३६ ॥ अनंगलेखयाराज्ञ्याततःकाशींगमिष्यसि ॥ दत्त्वादानानिभूरीणिप्रीणयित्वाऽर्थिनोजनान् ॥ ३७ ॥ स्वनाम्नातत्रसंस्थाप्यालिंगंनिर्वाणकारणम् ॥ प्रासादंतत्रकृत्वोच्चैस्तदग्रेकूपमुत्तमम् ॥ ३८ ॥ विधायविधिवत्तत्रकलशारोपणादिकम् ॥ मणिमाणिक्यचांपेयदुकूलेभाश्वगोधनम् ॥ ३९ ॥ महाध्वजपताकाश्चच्छत्रचामरदर्पणम् ॥ देवोपकरणंभूरिविश्राण्यश्रमवर्जितः ॥ ४० ॥ व्रतो पवासनियमैःपरिक्षीणकलेवरः ॥ मध्याह्नेनिर्जनेतत्रद्रक्ष्यस्येकंतपोधनम् ॥ ४१ ॥ अतीवजीर्णवपुषंपरिपिंगजटान्वितम् ॥ मूर्तिमंतमिवप्रांशुंधर्मं जनमनोहरम् ॥ ४२ ॥ भारंशरीरयष्टेश्चदृढयष्ट्यांसमर्प्यच ॥ गर्भागाराद्विनिष्क्रम्याभ्यायांतंरंगमंडपे ॥ ४३ ॥ उपविश्यसमीपेतेप्रक्ष्यत्येवमनुक्रमात् ॥ कोसित्वंकिमिहासित्वंद्वितीयइवकस्त्वयम् ॥ ४४ ॥ प्रासादःकारितःकेनजानास्येपततोवद ॥ अस्यलिंगस्यकिंनामप्रायोजानेनबाधकात् ॥ ४५ ॥ पृष्टस्त्वमितितेनाथतदावृद्धतपस्विना ॥ कथयिष्यस्यहंराजावृद्धकालइतिश्रुतः ॥ ४६ ॥ दाक्षिणात्यइहप्राप्तस्त्वेतयासहकांतया ॥ ध्यायामिलिंगमे तच्चप्रार्थयामिनकिंचन ॥ ४७ ॥

शोभनंलग्नम् ॥ ३६ ॥ दत्त्वेतिसार्धश्लोकंवाक्यम् ॥ तत्रक्त्वांतल्यबंतानांपदानांतत्रकाश्यांद्रक्ष्यस्येकंतपोधनमित्यनेनान्वयः ॥ ३७ ॥ ३८ ॥ चांपेयदुकूलंपीतवस्त्रम् ॥ ३९ ॥ विश्राण्यदत्त्वा ॥ श्रमवर्जितःकार्पण्यजन्यखेदरहितः ॥ ४० ॥ ४१ ॥ मूर्तिमंतंधर्ममिवेत्यन्वयः ॥ प्रांशुमुच्चंमहांतंधर्ममितिवा ॥ ४२ ॥ गर्भागाराच्छिवालयात् ॥ ४३ ॥ उपविश्येत्यर्धवाक्यम् ॥ सतपोधनइति शेषः ॥ प्रक्ष्यतिप्रश्नंकरिष्यति ॥ प्रश्नमेवाहतुः कोसीतिसार्धेन ॥ द्वितीयइवकस्त्वयमित्यनंगलेखामुद्दिश्य ॥ अनेनसम्यग्दृष्टिबलाभावःसूचितः ॥ ४४ ॥ ४५ ॥ ४६ ॥ दाक्षिणात्योदक्षिण



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

देशोद्भवः ॥ एतयाऽनंगलेखया ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ भवानितिगणवाक्यम् ॥ ५१ ॥ ५२ ॥ जोषंतूष्णीम् ॥ ५३ ॥ नुन्नः प्रेरितः प्रार्थितइतियावत् ॥ ५४ ॥ तदंब्विति ॥ भूयाद्भ
विष्यति ॥ सुपार्वणशशिप्रभः शोभनपूर्णिमाचंद्रसदृशः ॥ कोशोन्मुक्तोरगोनिर्मोकरहितसर्पः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ अन्यानिपुण्यक्षेत्राणिकाशीप्रापिकराणीतिवक्तुंतयोः पूर्वजन्मवृत्तांत

प्रासादस्यास्यजटिलस्वयंकारयिताशिवः ॥ विशेषतोऽस्यलिंगस्यनामनोवेद्मिनिश्चितम् ॥ ४८ ॥ इतिश्रुत्वानरपतेर्वाक्यंप्राहजटाधरः ॥ सत्यमुक्तंत्व
यैकंहिलिंगनामनवेत्सियत् ॥ ४९ ॥ पश्येयंत्वामहंनित्यमुपविष्टंमनिश्चलम् ॥ श्रुतोभविष्यतितवप्रासादोयेनकारितः ॥ ५० ॥ ममाग्रेतत्समा
चक्ष्वयदिजानासितत्त्वतः ॥ आकर्ण्येतिवचस्तस्यपुनः प्राहभवानिति ॥ ५१ ॥ कर्ताकारयिताशंभुःकिमतथ्यंब्रवीम्यहम् ॥ अथवाचिंतयाकिंमेतप
स्विन्ननयाविभो ॥ ५२ ॥ इतित्वयिस्थितेजोषंसपुनर्वृद्धतापसः ॥ पिपासुरस्मिपानीयमानीयाशुप्रयच्छम ॥ ५३ ॥ इतितेनचनुन्नस्त्वंवार्यानी
यचकूपतः ॥ पाययिष्यसितंवृद्धंतापसंतत्क्षणाच्चसः ॥ ५४ ॥ तदंबुपानतोभूयात्सुपार्वणशशिप्रभः ॥ तरुणोरूपसंपन्नःकोशोन्मुक्तोरगोयथा ॥ ५५ ॥
जाताश्चर्येणभवतापुनरेवाभ्यभाषिसः ॥ कःप्रभावोहिभगवन्नेषयेनभवान्पुनः ॥ ५६ ॥ परित्यज्यात्रजरसंनवोभ्राजसिसांप्रतम् ॥ अस्तिचेदवकाशस्ते
ततोब्रूहितपोधन ॥ ५७ ॥ तपोधनउवाच ॥ ॥ वृद्धकालक्षितिपतेजानेत्वांसुमहामते ॥ इमामपिचजानेऽहंतवपत्नींपतिव्रताम् ॥ ५८ ॥ जन्मनोऽस्मा
दियंराजन्नासीद्द्विप्रस्यकन्यका ॥ तुर्वसोर्वेदवपुषःशुभाचाराशुभानना ॥ ५९ ॥ तेनदत्ताविवाहार्थंनैध्रुवायमहात्मने ॥ सचकालवशंप्राप्तोनैध्रुवोऽप्राप्तयौ
वनः ॥ ६० ॥ वैधव्यंपालयंत्येषामृताऽवंत्यांशुभव्रता ॥ तेनपुण्येनसंजातापांड्यस्यनृपतेःसुता ॥ ६१ ॥ परिणीतात्वयाराजन्पतिव्रतरतासदा ॥
त्वयासहेहसंप्राप्तामुक्तिंप्राप्स्यत्यनुत्तमाम् ॥ ६२ ॥ अयोध्यायामथावंत्यांमथुरायामथापिवा ॥ द्वारवत्यांचकांच्यांवामायापुर्यामथोनृप ॥ ६३ ॥
अपिपातकिनोयेचकालेननिधनंगताः ॥ तेहिस्वर्गादिहागत्यकाश्यांमोक्षमवाप्नुयुः ॥ ६४ ॥ अवैमित्वामपिनृपद्विजोऽभूः पूर्वजन्मनि ॥ माथुरः
शिवशर्माख्योमायापुर्यांभवान्मृतः ॥ ६५ ॥

माह जन्मनोऽस्मादियमित्यादिना ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ नन्ववंत्यांमोक्षपुर्यांमृतायाः कथंपुनर्जन्मतत्राह ॥ अयोध्यायामित्यादि ॥ ६३ ॥ ६४ ॥ एवंभार्यायाः पूर्ववृत्तांत



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मुक्कातस्याप्याह अवैमीत्यादिना ॥ ६९ ॥ ६६ ॥ ६७ ॥ अन्यच्चेति ॥ स्फुटंनिश्चितम् ॥ एतदेवयुक्तमितिभावः ॥ ६८ ॥ तदेवदर्शयति ॥ सुकृतंनैवेति ॥ ६९ ॥ तस्मादिति ॥ निधानव न्निधिवत् ॥ ७० ॥ निश्चितमिति ॥ हिहकारावत्यंतनिश्चयार्थौ ॥ प्रसादाद्यपीतिकचित् ॥ ७१ ॥७२॥७३॥ कूपइति ॥ कालंजराव्याधिविघातकमुदकंयस्यसः ॥ तदेवदर्शयति ॥ जराव्याधिवि घातकृदिति ॥ कालद्मइतिपाठेकालंमृत्युंदमयतीतितथा ॥७४॥७५॥ नकुष्ठमिति ॥ कालदमोदकात्पीतात्स्पृष्टाद्वाकुष्ठादयोरोगानप्रतिष्ठंतीत्यन्वयः॥तत्रकुष्ठंश्वित्रम् ॥ कुष्ठंश्वित्रमित्यमरः ॥ विस्फो

तत्पुण्यात्प्राप्यवैकुंठंभुक्काभोगान्मनोरमान् ॥ तत्पुण्यशेषात्क्षितिपोजातस्त्वंनंदिवर्धने ॥ ६६ ॥ वृद्धकालावनीपालतेनैवसुकृतेनच ॥ मोक्षक्षेत्रमिदं प्राप्तोमुक्तिंप्राप्स्यस्यनुत्तमाम् ॥ ६७ ॥ अन्यच्चशृणुराजेंद्रत्वयायत्समुदीरितम् ॥ कर्ताकारयिताशंभुःप्रासादस्येतितत्स्फुटम् ॥ ६८ ॥ सुकृतंनै वसततमाख्यातव्यंकदाचन ॥ कृतंमयेतिकथनात्पुण्यंक्षयातितत्क्षणात् ॥ ६९ ॥ तस्मात्सर्वप्रयत्नेनगोपनीयंनिधानवत् ॥ सुकृतंकीर्तनाद्व्यर्थंभवे द्गस्महुतंतथा ॥ ७० ॥ निश्चितंविश्वनाथेनप्रेरितेनत्वयाऽनघ ॥ कृतंहिकृतकृत्येनप्रासादादिहवेद्म्यहम् ॥ ७१ ॥ वृद्धकालेश्वरंनामलिंगमेतन्महीपते ॥ जानीह्यनादिसंसिद्धंनिमित्तंकिंतुवैभवान् ॥ ७२ ॥ दर्शनात्स्पर्शनात्तस्यपूजनाच्छ्रवणान्नतेः ॥ वृद्धकालेशलिंगस्यसर्वंप्राप्नोतिवांछितम् ॥ ७३ ॥ कूपःकालोदकोनामजराव्याधिविघातकृत् ॥ यदीयजलपानेनमातुःस्तन्यमपानवान् ॥ ७४ ॥ कृतकूपोदकस्नानःकृतैतल्लिंगपूजनः ॥ वर्षेणसि द्धिमाप्नोतिमनोभिलषितांनरः ॥ ७५ ॥ नकुष्ठंनचविस्फोटानरंघानविचर्चिका ॥ पीतात्स्पृष्टात्प्रतिष्ठंतिकफःकालतमोदकात् ॥ ७६ ॥ नाग्निमांद्यंनै वशूलंनमेहोनप्रवाहिका ॥ नमूत्रकृच्छ्रंनापामापानायस्यास्यसेवनात् ॥ ७७ ॥ भूतज्वराश्चयेकेचिद्येकेचिद्विषमज्वराः ॥ तेक्षिप्रमुपशाम्यंतिह्ये तत्कूपोदसेवनात् ॥ ७८ ॥ तवाग्रतोममजरापलितंचयथाविधि ॥ एतत्कूपोदपानेनक्षणान्नष्टंनवोऽभवम् ॥ ७९ ॥ वृद्धकालेश्वरेलिंगेसेवितेनदरि द्रता ॥ नोपसर्गानवारोगानपापंनाघजंफलम् ॥ ८० ॥ उत्तरेकृत्तिवासस्यवाराणस्यांप्रयत्नतः ॥ वृद्धकालेश्वरंलिंगंद्रष्टव्यंसिद्धिकामुकैः ॥ ८१ ॥

टःपिटकः ॥ विस्फोटःपिटकःस्त्रियामित्यमरः ॥ रंघारंघणीरोगविशेषः ॥ विचर्चिकाकिलासम् ॥ किलाससिध्मेकच्छ्वांतुपामपामेविचर्चिकेत्यमरः ॥७६॥ मेहोव्याधिविशेषः ॥ व्याधिभेदाविद्रधिः स्त्रीज्वरमेहभगंदराइत्यमरः ॥ प्रवाहिकाग्रहणी ॥ ग्रहणीरुक्प्रवाहिकेत्यमरः ॥ मूत्रकृच्छ्रमश्मरी ॥ अश्मरीमूत्रकृच्छ्रंस्यादित्यमरः ॥ पामविचर्चिकयोरवांतरभेदः ॥७७॥७८॥७९॥८०॥८१॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सानंगलेखाराज्ञीकमनंगलेखयाराज्ञ्यासहितम् ॥ ८२ ॥ ८३ ॥ ८४ ॥ स्वमुदर्कंस्वीयमुत्तरकालीनंफलम् ॥ ८५ ॥ ८६ ॥ भौमानीति ॥ सुंदरानंधपंग्वादिरहितान् ॥ सद्गुणानितिकश्चित् ॥ ८७ ॥ विश्वेश्वरमिति ॥ निर्वाणपदंकैवल्यस्थानमीयिवान्प्राप्तवान् ॥ ८८ ॥ ८९ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांचतुर्विंशतितमोऽध्यायः ॥ २४ ॥ ॥ छ ॥ पंचाधिकतमेविंशेऽध्यायेकलशजन्मनः ॥ वर्ण्यतेत्रसभार्यस्यशिखिवाहनदर्शनम् ॥ १ ॥ एवंतावत्प्रथमतोऽध्यायत्रयेणवृंदारकहिरण्यगर्भसंवादद्वारेणकाशीमाहात्म्यंमनाक्प्रपंच्यततोऽप्यगस्त्यमहालक्ष्मीलोपामुद्रासंवादद्वारेणाधिकतरंप्रपंच्यततोप्यगस्त्यकार्तिकेयसंवादेनाधिकतमंप्रपंचयितुमुपक्रमते ॥ शृण्विति ॥ विरजाविगतरजोगुणःशुद्धसत्त्वइत्यर्थः ॥ १ ॥

इत्युक्त्वातंमहीपालंहस्तेधृत्वातपोधनः ॥ सानंगलेखाराज्ञीकंतस्मिँल्लिंगेलयंययौ ॥ ८२ ॥ महाकालमहाकालमहाकालेतिकीर्तनात् ॥ शतधामुच्यते पापैर्नात्रकार्याविचारणा ॥ ८३ ॥ इत्थंभवित्रीतेमुक्तिःकैटभारातिदर्शनात् ॥ भोगान्भुक्त्वाबहुविधान्वैकुंठनगरेशुभे ॥ ८४ ॥ इतिसंहृष्टतनूरुहःसविप्रोभगवत्तद्गणवक्त्रतोनिशम्य ॥ स्वमुदर्कमथार्ककोटिरम्यंहरिलोकंपरिलोकयांचकार ॥ ८५ ॥ ॥ मैत्रावरुणिरुवाच ॥ ॥ लोपामुद्रेसविप्रेंद्रोभोगान्भुक्त्वामनोरमान् ॥ मायापुर्यांकृतप्राणत्यागपुण्यबलेनच ॥ ८६ ॥ वैकुंठलोकादागत्यपत्तनेनंदिवर्धने ॥ भौमानिभुक्त्वासौख्यानिपुत्रानुत्पाद्यसुंदरान् ॥ ॥ ८७ ॥ तेषुराज्यंविनिक्षिप्यप्राप्यवाराणसींपुरीम् ॥ विश्वेश्वरंसमाराध्यनिर्वाणपदमीयिवान् ॥ ८८ ॥ एतत्पुण्यतमाख्यानंविप्रस्यशिवशर्मणः ॥ श्रुत्वापापविनिर्मुक्तोज्ञानंपरममृच्छति ॥ ॥ ८९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे शिवशर्मनिर्वाणप्रापणंनामचतुर्विंशोध्यायः ॥ २४ ॥ ॥ व्यासउवाच ॥ ॥ शृणुसूतप्रवक्ष्यामिकथांकलशजन्मनः ॥ यामाकर्ण्यनरोभूयाद्विरजाज्ञानभाजनम् ॥ १ ॥ गिरिंप्रदक्षिणीकृत्यश्रीसंज्ञंकलशोद्भवः ॥ सपत्नीकोददर्शाथरम्यंस्कंदवनंमहत् ॥ २ ॥ सर्वर्तुकुसुमाढ्यंचरसवत्फलपादपम् ॥ सुसेव्यकंदमूलाढ्यंसुवल्कलमहीरुहम् ॥ ३ ॥ निवीतश्वापदगणंससरित्पल्वलावृतम् ॥ स्वच्छगंभीरकासारंसारंसर्वभुवःपरम् ॥ ४ ॥ नानापतत्रिसंघुष्टंनानामुनिजनोषितम् ॥ तपःसंकेतनिलयमिवैकंसंपदांपदम् ॥ ५ ॥ लोहितोनामतत्रास्तिगिरिःस्वर्णगिरिप्रभः ॥ सुकंदरप्रस्रवणःस्वसानुशिखरप्रभः ॥६॥

गिरिमिति ॥ कलशोद्भवःकुंभसंभवःकार्तिकेयवनंदृष्टवान् ॥ तत्रचवनेषडाननमद्राक्षीदित्यग्रिमेणान्वयः ॥ २ ॥ गिरिंविशिनष्टिचतुर्भिः ॥ सर्वेति ॥ सौगंधिकानांकंदःशालूकंमूलमितियावत् ॥ तद्व्यतिरिक्तमन्यन्मूलम् ॥ यद्वा कंदोवर्तुलाकारआर्द्रकहरिद्रासूरणादिः ॥ मूलमधःसूक्ष्ममुपरिविस्तृताकारंमूलकादिताभ्यामाढ्यम् ॥ ३ ॥ नितरांवीतोगतःश्वापदानांहिंस्रस्वभावानांव्याघ्रादीनांगणोयत्रतत्तथा ॥ विनीतेतिपाठेविनीतस्त्यक्तक्रौर्यःश्वापदानांगणोयत्रतत्तथा ॥ सरिद्भिःसहितानियानिपल्वलान्यल्पोदकसरांसितैरावृतम् ॥ स्वच्छानिनिर्मलानिगंभीराण्यगाधानिसरोवराणियस्मिंस्तत्स्वच्छगंभीरकासारम् ॥ ४ ॥ तपःसंकेतनिलयंतपसोरहस्यस्थानमिवेत्युत्प्रेक्षा ॥ एकंमुख्यम् ॥ ५ ॥ किंचलोहितोलोहितगिरिरितिदक्षिणायांप्रसिद्धःपर्वतस्तत्रवनेऽस्ति ॥ स्वर्ण



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

गिरिप्रस्थः सुमेरुरिवसुंदरः ॥ शोभनाः कंदरादर्यः प्रस्रवणानिचनिर्झरायत्रसः ॥ सानवः प्रस्थाः पर्वतैकदेशसमभागाः ॥ शिखराणिशृंगाणि ॥ स्वानांस्वसंबंधिनांसानुशिखराणामेभिर्वाप्रभाशोभायत्रसः ॥ सुइतिकचित् ॥ सुसानुशिखरीत्यन्यत्र ॥ ६ ॥ एकशकलमेकखंडमइहवनेउच्चैर्यथास्यात्तथातपस्तप्तुमागतमिवेत्युत्प्रेक्षा ॥ ७ ॥ साक्षाद्ब्रह्म ॥ यत्साक्षादपरोक्षाद्ब्रह्मेतिश्रुतेः ॥ तदेवषडाननम् ॥ भक्तानुजिघृक्षयागृहीतलीलाशरीरमित्यर्थः ॥ ८ ॥ ९ ॥ सगुणागुणभेदेनभक्त्यापरमयामुदा ॥ पद्यैरष्टभिरस्तौषीदगस्त्योगिरिजासुतम् ॥ षडाननायनमोस्त्वित्यन्वयः ॥ षडाननंविशिनष्टि वृंदारकेत्यारभ्येत्यमित्यतः प्राक्तनेनग्रंथेन ॥ वृंदारकवृंदैर्देवसमूहैर्वंद्येअभिवंद्येपादारविंदेचरणकमलेयस्यतस्मै ॥ सुधाकरायामृताब्धयेपरमानंदायेत्यर्थः ॥ सएषपरमानंदइत्यादिश्रुतेः ॥ षडाननायषण्णामृतूनामाननंप्रापणंयेनतस्मैसंवत्सरादिकालरूपायेत्यर्थः ॥ षण्मुखायेतिवा ॥ अमितविक्रमायानंतपराक्रमायेत्यर्थः ॥ गौरीब्रह्मविद्यानिर्मलत्वात्तयाहृदानंदस्यहृदयाभिव्यंग्यानंदस्यसमुद्भवोयस्माद्बुद्धिवृत्त्यभिव्यंग्यत्वात्तस्मै ॥ तथाचश्रुतिः ॥ दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिरिति ॥ पार्वत्याहृदयाह्लादजनकायेतिवा ॥ १० ॥ प्रणतानांभक्तानांवाआर्तिहंत्रेसंसारदुःखनाशकाय ॥ समस्तभक्तवृंदस्यमनोरथानांमनोभिलषितानांधर्मार्थकाममोक्षाणांकर्त्रेसंपादयित्रे ॥ परतारकस्यपरवंचकस्यरथानांमनोरथानांदात्रेखंडयित्रे ॥ नतानामितिपाठेनतानांसमस्तस्य

कैलासस्यैकशकलंकर्मभूमाविहागतम् ॥ तपस्तप्तुमिवप्रोच्चैर्नानाश्चर्यसमन्वितम् ॥ ७ ॥ तत्राद्राक्षीन्मुनिश्रेष्ठोऽगस्त्यः साक्षात्षडाननम् ॥ प्रणम्यदंडवद्भूमौसपत्नीकोमहातपाः ॥ ८ ॥ तुष्टावगिरिजासूनुंसूक्तैःश्रुतिसमुद्भवैः ॥ तथास्वकृतयास्तुत्याप्रबद्धकरसंपुटः ॥ ९ ॥ अगस्तिरुवाच ॥ ॥ नमोस्तुवृंदारकवृंदवंद्यपादारविंदायसुधाकराय ॥ षडाननायामितविक्रमायगौरीहृदानंदसमुद्भवाय ॥ १० ॥ नमोस्तुतुभ्यंप्रणतार्तिहंत्रेकर्त्रेसमस्तस्यमनोरथानाम् ॥ दात्रेरथानांपरतारकस्यहंत्रेप्रचंडासुरतारकस्य ॥ ११ ॥ अमूर्तमूर्तायसहस्रमूर्तयेगुणायगुण्यायपरात्पराय ॥ अपारपारायपरापरायनमोस्तुतुभ्यंशिखिवाहनाय ॥ १२ ॥ नमोस्तुतेब्रह्मविदांवरायदिगंबरायांबरसंस्थिताय ॥ हिरण्यवर्णायहिरण्यबाहवेनमोहिरण्यायहिरण्यरेतसे ॥ १३ ॥

प्रपंचस्यकर्त्रेछेदकायेतिव्याकर्तव्यम् ॥ परतारकस्यप्रचंडस्यासुरस्यतारकस्यहंत्रेनाशयित्रे ॥ अथवापरंप्रतारकंज्ञानंप्रणवरूपषडक्षररामंत्रराजरूपंवानतानांतद्दात्रे ॥ शेषंपूर्ववत् ॥ ११ ॥ अमूर्तमूर्तायअमूर्तेवाय्वाकाशेमूर्तानिपृथिव्यप्तेजांसि ॥ मूर्तंचामूर्तंचेतिश्रुतेः ॥ तद्रूपायापंचीकृतभूतपंचकात्मकहिरण्यगर्भायेत्यर्थः ॥ सहस्रमूर्तयेपंचीकृतभूतपंचकात्मकविराड्रूपायेत्यर्थः ॥ गुणायरजःसत्त्वतमआत्मकायाकारप्रक्षेपंविना अगुणायनिर्गुणायेतिवा ॥ गुण्यायगुणेभ्योहितंगुण्यंप्रधानंतस्यत्रिगुणात्मकत्वात्तद्रूपाय ॥ गुणाग्रगण्यायेतिपाठेगुणाएवअग्रेगण्यायस्यतस्मैनिर्दोषायेत्यर्थः ॥ परात्परायप्रधानादपिश्रेष्ठायदूरायेतिवा ॥ प्रधानात्परतःपरइतिश्रुतेः ॥ अपारोऽगम्यःपारोऽवधिर्यस्यसतथातस्मै ॥ अपरिच्छिन्नायेत्यर्थः ॥ अपाराजीवास्तान्ज्ञानदानेनपारयतीत्यपारपारस्तस्माइतिवा ॥ परापरायमाययाकार्यकारणरूपाय ॥ शिखिवाहनायमयूररथाय ॥ १२ ॥ ब्रह्मविदांवरायतत्त्वज्ञानिनामादिगुरवे ॥ दिगंबरायदिग्वाससे ॥ अम्बरसंस्थितायाकाशवासाय ॥ यद्वांऽबरसंस्थितायअम्बरशरीरत्वेनस्थिताय ॥ आकाशशरीरंब्रह्मेतिश्रुतेः ॥ हिरण्यवर्णायस्वर्णकांतये ॥ तथाचोक्तम् ॥ ध्येयःसदासवितृमंडलमध्यवर्तीनारायणःसरसिजासनसन्निविष्टः ॥ केयूरवान्मकरकुण्डलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रइति ॥ हिरण्यबाहवे हिरण्यानिस्वर्णमयानिकेयूरादीनिबाहुषुहस्तादिषुयस्यतस्मै ॥ हिरण्यायस्वर्णरूपाय ॥ शुद्धसत्त्वात्मकायेतिवा ॥ हिरण्यंरेतोयस्यतस्मैअग्नि

१ 'रथौस्यन्दनवानीरौ' इत्यजयात् , रथानां वेतसानांदात्रेवेतसशस्त्रेणताडकायेतिवा ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्वरूपायरुद्ररूपायवेत्यर्थः ॥ तथाचभागवते ॥ यत्रयत्रापतन्मह्यांरेतस्तस्यमहात्मनः ॥ तानिरूप्यस्यहेम्नश्चक्षेत्राण्यासन्महीपतेःइति ॥ १३ ॥ तपःस्वरूपायसाक्षात्तपोरूपाय ॥ तपोधनाय तपएवधनमैश्वर्ययस्यतस्मै ॥ तपोधनानांतपसःफलानांप्रतिपादकायप्रदायकाय ॥ सदाकुमारायसर्वदापञ्चषडब्दार्भकरूपाय ॥ हिप्रसिद्धौ ॥ सनत्कुमारायेतिवा ॥ मारमारिणेकामजेत्रे ॥ एतत्तुकल्पभेदाभिप्रायेणवोद्धव्यम् ॥ देवसेनायागंधर्वकन्यायावनपर्वणिपरिणेतृत्वदर्शनाद्गुहस्य ॥ वैष्णवेच ॥ श्रीर्देवसेनामैत्रेयदेवसेनापतिर्हरिरिति ॥ यद्वा ब्रह्मणोवरदानात्सदाकुमारत्वम् ॥ तदुक्तंस्कांदे ॥ पुत्रस्तेभवितादेविमहायोगवलान्वितः ॥ सदाबालोऽथसुभगोधर्मज्ञोधर्मवत्सलइति ॥ मारयंतीतिमाराढुष्टास्तेषांमारिणइतिवा ॥ माररूपिणइतिपाठेकोटिकन्दर्पसुभगायेत्यर्थः ॥ तृणीकृतमैश्वर्ययेन विरागोऽस्यास्तीतिविरागी सचसचतस्मै ॥ १४ ॥ शरजन्मनेशरस्तंबोत्पत्तये ॥ शरस्तंबेनिक्षिप्ताद्भवयोर्वीर्यात्कार्तिकेयस्यजन्मेतिप्रसिद्धम् ॥ प्रभातसूर्यारुणदन्तपंक्तये प्रातःकालीनसूर्यसदृशदंतराजये ॥ बालायबालवत्प्रतीयमानाय ॥ अथवाऽबालपराक्रमाय अःविष्णुःसचासौबालश्चेत्यबालःश्रीकृष्णरामवामनादिस्तस्येवपराक्रमोयस्यतस्मै .॥ प्राकृतंव्याख्यानं

तपःस्वरूपायतपोधनायतपःफलानांप्रतिपादकाय ॥ सदाकुमारायहिमारमारिणेतणीकृतैश्वर्यविरागिणेनमः ॥ १४ ॥ नमोस्तुतुभ्यंशरजन्मनेविभो प्रभातसूर्यारुणदंतपंक्तये ॥ बालायचाबालपराक्रमायषाण्मातुरायालमनातुराय ॥ १५ ॥ मीढुष्टमायोत्तरमीढुषेनमोनमोगणानांपतयेगणाय ॥ स्वाहेयगांगेयचकार्तिकेयशैवेयतुभ्यंसततंनमोऽस्तु ॥ १७ ॥ नमोस्तुतेजन्मजरातिगायनमोविशाखायसुशक्तिपाणये ॥ १६ ॥ सर्वस्यनाथस्यकुमारकायक्रौंचारयेतारकमारकाय ॥ इत्थंपरिष्टुत्यसकार्तिकेयंनमोनमस्त्वित्यभिभाषमाणः ॥ द्विस्त्रिःपरिक्रम्यपुरोविवेशस्थितोमुनीशोपविशेतिचोक्तः ॥ १८ ॥ ॥ कार्तिकेयउवाच ॥ ॥ क्षेमोस्तिकुंभजमुनेत्रिदशैकसहायकृत् ॥ जानेत्वामिहसंप्राप्तंतथाविंध्याचलोन्नतिम् ॥ १९ ॥ अविमुक्तेमहाक्षेत्रेक्षेमंत्र्यक्षेणरक्षिते ॥ यत्रक्षीणायुषांसाक्षाद्द्विरूपाक्षोऽस्तिमोक्षदः ॥ २० ॥

स्पष्टम् ॥ षण्णांकृत्तिकानांमातॄणामपत्यंषाण्मातुरस्तस्मै ॥ अलमनातुरायात्यन्तदक्षाय ॥ १५ ॥ मीढुष्टमायसकामेषुफलसेचनकर्तॄणांमध्येश्रेष्ठाय ॥ उत्तरमीढुषेभाविफलानांदात्रे ॥ गणानांरुद्रपार्षदानांदेवसेनानांवापतयेस्वामिने ॥ जन्मजरेअतिक्रम्यगच्छतीतिजन्मजरातिगस्तस्मैषड्भावविकाररहितायेत्यर्थः ॥ विशाखायविशाखोनामकुमारस्यानुजस्तस्मै ॥ तथाचवैष्णवे ॥ अग्निपुत्रः कुमारस्तुशरस्तंबेव्यजायत ॥ तस्यशाखोविशाखश्चनगमेयश्चपृष्ठजइति ॥ सुशक्तिपाणये शोभनाशक्तिरस्त्रविशेषःपाणौयस्यतस्मै ॥ १६ .॥ सर्वस्यनाथस्येतिव्याधिकरणेषष्ठ्यौ ॥ विश्वनाथस्यापत्यायेत्यर्थः ॥ १७ ॥ इत्थमिति ॥ सोऽगस्त्यइत्थंपूर्वोक्तप्रकारेणपरिष्टुत्यस्तुत्वानमोनमइत्यभिभाषमाणः ॥ तुशब्दोभक्तिश्रद्धातिशयद्योतनार्थः ॥ द्विस्त्रिःपरिक्रम्यपंचवारान्प्रदक्षिणीकृत्यपुरःस्थितःपश्चाद्धेमुनीशउपविशेतिकुमारेणोक्तःसन्विवेशचेत्यर्थः ॥ १८ ॥ अग्रेकाशीमाहात्म्यकथनविश्वासायकुशलप्रश्नपूर्वकंत्वत्प्राप्त्यादिकंसर्वज्ञतयाजानामीत्याह ॥ क्षेमोस्तीति ॥ हेत्रिदशैकसहायकृत् ॥१९॥ ननुकाश्याःकुशलंत्यक्त्वाकिमितिममैवकुशलंपृच्छयेतत्राह ॥ अविमुक्तइति ॥ क्षेमंक्षेममेव ॥ तत्रहेतुः ॥ त्र्यक्षेणेति ॥ त्र्यक्षीशेतिपाठेत्र्यक्षश्चासौईशश्चेतित्र्यक्षीशः ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अदन्तताभावश्छांदसः ॥ किंचकुशलस्यकावार्तामोक्षोपियत्रातिसुलभइत्याह ॥ यत्रेति ॥ २० ॥ अतएवकचिदपिभूर्भुवःस्वस्तलादौताहक्क्षेत्रंमयाऽन्विष्यतापिनदृष्टम् ॥ तवतुमननशील त्वादेवदर्शनाभावःसंभाव्यतइतिसूचयति ॥ हेमुनेइति ॥ यादृगितिपाठे यादृगिदंक्षेत्रंताहक्क्षेत्रंकुत्रापिनदृष्टमित्यर्थः ॥ २१ ॥ काश्यांकृतवासत्वात्त्वंमत्तोपिश्रेष्ठइत्याशयेनाह ॥ अहमेकेति ॥ २२ ॥ तत्क्षेत्रम् ॥ २३ ॥ ईश्वरेति ॥ सुदुर्लभोपिकाशीवासईश्वरानुग्रहादेवसुलभःस्यादित्यर्थः ॥ २४ ॥ अन्यैवेति ॥ विधातुर्याऽतिरेकिणीहिरण्यगर्भस्यसृष्टेर्याभिन्नेत्यर्थः ॥ अतिकारिणीतिपाठेऽधिकेत्यर्थः ॥ २५ ॥ तर्ह्येताहक्क्षेत्रंकिमितिसर्वैर्नसेव्यतेतत्राह ॥ अहोइति ॥ अहोइतिखेदे ॥ दौर्बल्यंमांद्यम् ॥ दौर्विध्यंकुत्सितत्वम् ॥ माहात्म्यंधाष्ट्र्यम् ॥ २६ ॥ ननुतथापिवृद्धावस्थायामेवकाशीसे व्यानयौवनेमरणस्यानियतत्वादित्याह शरीरमितित्रिभिः ॥ आयुरेवमृगःसमृत्युनामृगयुनालुब्धकेनकृतलक्ष्यःकृतश्वासौलक्ष्यश्चेतितथालक्षीकृतइत्यर्थः ॥ २७ ॥ चपलाचपलंविद्युदिवास्थिरम् ॥

भूर्भुवःस्वस्तलेवापिनपातालतलेमलम् ॥ नोर्ध्वलोकेमयादृष्टंताहक्क्षेत्रंकचिन्मुने ॥ २१ ॥ अहमेकचरोप्यत्रतत्क्षेत्रप्राप्तयेमुने ॥ तप्येतपांसिनाद्या पिफलेयुर्मेमनोरथाः ॥ २२ ॥ नतत्पुण्यैर्नतद्दानैर्नतपोभिर्नतज्जपैः ॥ नलभ्यंविविधैर्यज्ञैर्लभ्यमैशादनुग्रहात् ॥ २३ ॥ ईश्वरानुग्रहादेवकाशीवासः सुदुर्लभः ॥ सुलभःस्यान्मुनेनूनंनवैसुकृतकोटिभिः ॥ २४ ॥ अन्यैवकाचित्सासृष्टिर्विधातुर्याऽतिरेकिणी ॥ नतत्क्षेत्रगुणान्वक्तुमीश्वरोऽपीश्वरो यतः ॥ २५ ॥ अहोमतेःसुदौर्बल्यमहोभाग्यस्यदौर्विधम् ॥ अहोमोहस्यमाहात्म्यंयत्काशीहनसेव्यते ॥२६॥ शरीरंजीर्यतेनित्यंसंजीर्यंतींद्रियाण्यपि ॥ आयुर्मृगोमृगयुनाकृतलक्ष्योहिमृत्युना ॥ २७ ॥ सापदंसंपदंज्ञात्वासापायंकायमुच्चकैः ॥ चपलाचपलंचायुर्मत्वाकाशींसमाश्रयेत् ॥ २८ ॥ यावन्नेत्यायुषश्चांतस्तावत्काशीनमुच्यते ॥ कालःकलालवस्यापिसंख्यातुंनैवविस्मरेत् ॥ २९ ॥ जरानिकटनिक्षिप्ताबाधंतेव्याधयोभृशम् ॥ तथा पिदेहोनानेहोनाहोकाशींसमीहते ॥ ३० ॥ तीर्थस्नानेनजप्येनपरोपकरणोक्तिभिः ॥ विनार्थंलभ्यतेधर्मोधर्मादर्थःस्वयंभवेत् ॥ ३१ ॥ विनैवार्थार्जनो पायंधर्मादर्थोभवेद्ध्रुवम् ॥ अतोऽर्थचिंतामुत्सृज्यधर्ममेकंसमाश्रयेत् ॥ ३२ ॥ धर्मादर्थोऽर्थतःकामःकामात्सर्वसुखोदयः ॥ स्वर्गोपिसुलभोधर्मात्काश्ये कादुर्लभापरम् ॥ ३३ ॥ उपायत्रयमेवात्रस्थाणर्निर्वाणकारणम् ॥ शर्वाण्यग्रेबभाणाद्धापरिनिर्णीयसर्वतः ॥ ३४ ॥

॥ २८ ॥ नचकाशींप्राप्यपुनरपिकुत्रचिद्गंतव्यमित्याह ॥ यावदिति ॥ २९ ॥ एवंमरणस्यानियतत्वाद्बालकावस्थायामेवाविमुक्तमाश्रयणीयमित्युक्तंपूर्वमिदानींवृद्धावस्थायामपियेकाशींनस माश्रयंतितेऽतिमंदाइत्याह ॥ जरेति ॥ नानेहोनानाव्यापारवान्सन् ॥ अहोखेदे ॥ ३० ॥ नन्वर्थस्यधर्महेतुत्वात्तदीहांपरित्यज्यकिमितिकाश्येवाश्रयणीयातत्राह ॥ तीर्थेति ॥ ३१ ॥ धर्मादर्थः स्वयंभवेदित्येतद्विवृण्वन्नुपसंहरति ॥ विनैवेति ॥ तदुक्तंभारतसावित्र्याम् ॥ ऊर्ध्वबाहुर्विरौम्येषनचकश्चिच्छृणोतिमे॥ धर्मादर्थश्चकामश्चसकिमर्थंनसेव्यतइति ॥३२ ॥ ननुतर्हिधर्मएवयत्रकुत्राप्यनुष्ठे यस्ततएवकाश्याप्तिरपिसेत्स्यतीतितत्राह ॥ धर्मादिति ॥ परंकेवलम् ॥ ३३ ॥ उपायेति ॥ स्थाणुर्विश्वेशःसर्वतःपरिनिर्णीयसर्वशास्त्रार्थंदृढंनिश्चित्यशर्वाण्यग्रेपार्वत्याःसंमुखेउपायत्रयंसाधनत्रय

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मेवअद्धासाक्षान्निर्वाणकारणंकैवल्यहेतुंवभाणकथितवान् ॥ परंपरयाअप्युपायाःसंतीतिभावः ॥ ३४ ॥ यद्यपिब्रह्मात्मैक्यज्ञानमेवसाक्षान्मुक्तेःकारणंतथापिज्ञानदूरीभावादेतत्त्रयस्यसाक्षान्मोक्षहेतुत्वमुक्तमितितदेवत्रयंदर्शयति ॥ पूर्वंपाशुपतोयोगइति ॥ पाशुपतोयोगोनामविभूत्यात्रिपुंड्रधारणंविभूत्युद्धूलनंच ॥ सितासितंप्रयागम् ॥ अनायासं नविद्यतेमोक्षदानेआयासोयस्मिंस्तदविमुक्तमानंदकाननम् ॥ अनायासंयथास्यात्तथायथावसरदेहपातमात्रेणविमुक्तिदमितिवा ॥ एतेनसितासिततीर्थेबुद्धिपूर्वकदेहत्यागेनैवमोक्षदमित्यायातम् ॥ अन्यथानायासमितिविशेषणवैयर्थ्यापत्तेः ॥ तथाचोक्तम् ॥ ब्रह्मज्ञानेनमुच्यंतेप्रयागमरणेनवा ॥ अथवास्नानमात्रेणगोमत्यांकृष्णसन्निधाविति ॥ ३५ ॥ ननुश्रीशैलशिखरंदृष्ट्वापुनर्जन्मनविद्यते ॥ पथिश्मशानेगृहमंडपेवारथ्याप्रदेशेष्वपियत्रतत्र ॥ इच्छन्ननिच्छन्पुरुषोत्तमाख्येदेहावसानेलभतेचमोक्षमित्यादिवचनैःश्रीशैलादीनामपिमोक्षहेतुत्वंश्रूयते सत्यं तत्तथैवेत्याह श्रीशैलेत्यारभ्यैतानीत्यतःप्राक्तनेन ॥ आद्यपदेनमंदरादयोगृह्यंते ॥ नानान्यायतनानिचनानायान्यन्यान्यायतनानिपुरुषोत्तमादीनितानिचेत्यर्थः ॥ ३६ ॥ सिंधूनांनदीनांसंभेदाःसंगमाः ॥ अरण्यानिनव ॥ तदुक्तम् ॥ सैंधवंदंडकारण्यंजंबूमार्गश्चपुष्क

पूर्वंपाशुपतोयोगस्ततस्तीर्थंसितासितम् ॥ ततोप्येकमनायासमविमुक्तंविमुक्तिदम् ॥ ३५ ॥ श्रीशैलहिमशैलाद्यानानान्यायतनानिच ॥ त्रिदंडधारणंचापिसंन्यासःसर्वकर्मणाम् ॥ ३६ ॥ तपांसिनानारूपाणिव्रतानिनियमायमाः ॥ सिंधूनामपिसंभेदाअरण्यानिबहून्यपि ॥ ३७ ॥ मानसान्यपिभौमानिधारातीर्थादिकानिच ॥ ऊषराश्चापिपीठानिह्यच्छिन्नाम्नायपाठनम् ॥ ३८ ॥ जपश्चापिमन्त्रूनांचतथाऽग्निहवनानिच ॥ दानानिनानाक्रतवोदेवतोपासनानिच ॥ ३९ ॥ त्रिरात्रंपंचरात्राणिसांख्ययोगादयस्तथा ॥ विष्णोराराधनंश्रेष्ठंमुक्तयेऽभिहितंकिल ॥ ४० ॥ पुर्यश्चापिसमाख्याताम्तृतजंतुविमुक्तिदाः ॥ कैवल्यसाधनानीहभवंत्येवविनिश्चितम् ॥ ४१ ॥ एतानियानिप्रोक्तानिकाशीप्रातिकराणिच ॥ प्राप्यकाशींभवेन्मुक्तोजंतुर्नान्यत्रकुत्रचित् ॥ ४२ ॥ अतएवहितत्क्षेत्रंपवित्रमतिचित्रकृत् ॥ विश्वेशितुःप्रियनित्यंविष्वग्ब्रह्मांडमंडले ॥ ४३ ॥ इदमेवहितत्क्षेत्रंकुशलप्रश्नकारणम् ॥ एह्येहिदेहिमेस्पर्शंनिजगात्रस्यसुव्रत ॥ ४४ ॥

रम् ॥ उत्पलारण्यमारण्यंनैमिषंकुरुजांगलम् ॥ हेमदमर्बुदंचैवनवारण्याःप्रकीर्तिताइति ॥ ३७ ॥ मानसानिमनःकार्याणिधृत्यादीनि ॥ भौमानिभूसंबंधीनि ॥ धारातीर्थंकौमारतीर्थंदक्षिणदेशेप्रसिद्धम् ॥ ऊषरारेणुकादयोनव ॥ तदुक्तम् ॥ यथाकालखलंसारंबदरीकंतथैवच ॥ रेणुकासूकरःकाशीकालीकालवटेश्वरः ॥ कालंजरोमहाकालऊषरानवकीर्तिताइति ॥ काशीत्यन्याकाचित् ॥ ऊषराणांमहोपरामितिवचनात् ॥ ३८ ॥ ३९ ॥ सांख्यमात्मानात्मविवेकः ॥ योगोऽष्टांगः ॥ आदिपदेनोपासनादयः ॥ ४० ॥ पुरीति॥पुर्यश्चायोध्याद्याःकाशीव्यतिरिक्ताः ॥ ४१ ॥ ननुएतान्यपिकैवल्यसाधनानिचेत्तर्हिकाश्याःकोविशेषः सत्यम् ॥ कैवल्यसाधनत्वमेषांसाक्षाद्विवक्षितंपरंपरयांवाऽत्यश्चेदोमितिब्रूमः ॥ आद्यश्चेत्तन्नेत्याह ॥ एतानीति ॥ मुक्तोविदेहमुक्तः ॥ ४२ ॥ अतइात ॥ यतोऽन्यत्सर्वंकाशीप्रातिकरमतइत्यर्थः ॥ अतिचित्रंकैवल्यम् ॥ ४३ ॥ इदमिति ॥ क्षेमोस्तिकुंभजमुनइतियःकुशलप्रश्नस्तस्यकारणमिदन्तत्क्षेत्रमेव ॥ हिंनिश्चितम् ॥ तत्क्षेत्रात्त्व



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मागतइतिकृत्वैवकुशलंपृच्छयतइत्यर्थः ॥ अतएहिएहिआगच्छागच्छ ॥ आदरेवीप्सा ॥ ४४ ॥ काश्याःसकाशात्समागच्छतःस्पर्शोवर्ततेयस्यसकाश्याःसमागच्छत्स्पर्शवान्समागच्छन्स्प
र्शवान्वायुर्वातस्यापिस्पर्शइष्यतेकिंपुनस्तवसाक्षात्ततआगतस्येतिभावः ॥ ४५ ॥ पुनन्ति तृणगुल्मादीनपीतिशेषः ॥ ४६ ॥ ४७ ॥ तवकृतार्थतायाःकिंवक्तव्यमित्याशयेनाह ॥ तवतत्रेति
॥ ४८ ॥ ४९ ॥ अमृतंसुधातदेवसरोवारिसरोजलंतद्विगाह्यालोड्य ॥ तद्वात्रस्पर्शजनितामृतसलिलेनस्नात्वेत्यर्थः ॥ ५० ॥ जयेति ॥ हेविश्वेशजयइतिवदन्नपि ॥ वदन्नितीतिपाठेइतिवदन्ने

अपिकाश्याःसमागच्छत्स्पर्शवत्स्पर्शइष्यते ॥ मयात्रतिष्ठतानित्यंकिंतुत्वंततआगतः ॥ ४५ ॥ त्रिरात्रमपियेकाश्यांवसंतिनियतेंद्रियाः ॥ तेषांपुनं
तिनियतंस्पृष्टाश्चरणरेणवः ॥ ४६ ॥ त्वंतुतत्रकृतावासःकृतपुण्यमहोच्चयः ॥ उत्तरप्रवहास्नानजातपिंगलमूर्धजः ॥ ४७ ॥ तवतत्रतुयत्कुंडमगस्ती
श्वरसंनिधौ ॥ तत्रस्नात्वाचपीत्वाचकृतसर्वोदकक्रियः ॥ ४८ ॥ पितॄन्पिंडैःसमभ्यर्च्यश्रद्धाश्राद्धविधानतः ॥ कृत्यकृत्योभवेज्जंतुर्वाराणस्याःफलं
लभेत् ॥ ४९ ॥इत्युक्त्वासर्वगात्राणिस्पृष्ट्वाकुंभोद्भवस्यच ॥ स्कंदोऽमृतसरोवारिविगाह्यसुखमाप्तवान् ॥५०॥ जयविश्वेशनेत्राणिविनिमील्यवदन्नपि ॥
ततःकिंचित्क्षणंदध्यौगुहःस्थाणुसुनिश्चलः ॥ ५१ ॥ स्कंदेविसर्जितध्यानेसुप्रसन्नमनोमुखे ॥ प्रतीक्ष्यवागवसरंपप्रच्छाथमुनिर्गुहम् ॥ ५२ ॥
॥ अगस्तिरुवाच ॥ ॥ स्वामिन्यथाभगवताभगवत्यैपुराऽकथि ॥ वाराणस्यास्तुमहिमाहिमशैलभुवेमुदा ॥ ५३ ॥ त्वयायथासमाकर्णितदुत्संग
निवासिना ॥ तथाकथयषड्वक्रतत्क्षेत्रंमेऽतिरोचते ॥५४॥ ॥ स्कंदउवाच ॥ ॥ शृणुष्वमैत्रावरुणेयथाभगवताऽकथि ॥ तत्क्षेत्रस्याविमुक्त
स्यममहमातुःपुरःपुरा ॥ ५५ ॥ श्रुतंचयत्तदुत्संगेस्थितेनस्थिरचेतसा ॥ माहात्म्यंतच्छृणुमुनेकथ्यमानंमयाऽनघ ॥ ५६ ॥ गुह्यानांपरमंगुह्यमविमुक्त
मिहेरितम् ॥ तत्रसंनिहितासिद्धिस्तत्रनित्यंस्थितोविभुः ॥५७॥ भूर्लोकेनैवसंलग्नंतत्क्षेत्रंत्वंतरिक्षगम् ॥ अयोगिनोनवीक्षंतेपश्यंत्येवचयोगिनः ॥
॥ ५८ ॥ यस्तत्रनिवसेद्विप्रसंयतात्मासमाहितः ॥ त्रिकालमपिभुंजानोवायुभक्षसमोभवेत् ॥ ५९ ॥ निमेषमात्रमपियोह्यविमुक्तेऽतिभक्तिभाक् ॥
ब्रह्मचर्यसमायुक्तंतेनतप्तंमहत्तपः ॥ ६० ॥

त्राणिविनिमील्यमुद्रयित्वा ॥ षडाननत्वान्नेत्राणीतिवहुवचनम् ॥ किंचिद्वाङ्मनसयोरगोचरंयत्स्वरूपंतत्क्षणंदध्यौचिंतितवानित्यर्थः ॥ ५१ ॥ ५२ ॥ विस्तरेणकाशीमाहात्म्यंश्रोतुंपृच्छति ॥
स्वामिन्निति ॥ ५३ ॥ अतिरोचतेऽतिशयेनरुचिजननम् ॥ अतिपावनमितिक्वचित् ॥ ५४ ॥ उक्तानुवादपूर्वकंश्रावयति ॥ शृणुष्वेति ॥ आत्मनेपदमार्षम् ॥ यथाऽकथि ॥ माहात्म्यमित्यनु
षज्जते ॥ शृणुष्वशृणिवत्यन्वयभेदान्नपौनरुक्त्यम् ॥ ५५ ॥ ५६ ॥ तत्राविमुक्तेसिद्धिःसन्निहिता ॥ तत्रहेतुस्तत्रनित्यमिति ॥ यत्रेतिक्वचित् ॥ ५७ ॥ ५८ ॥ ५९ ॥ ब्रह्मचर्यसमायुक्तंब्रह्म

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चर्येणसम्यगायुक्तम् ॥ ६० ॥ ६१ ॥ अपरस्वविपुष्टांगः नपरस्वेनविपुष्टमंगंयस्यसः ॥ परस्वपरिपुष्टांगइतिपाठेऽन्यत्रपरस्वपरिपुष्टांगोपीत्यर्थः ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ प्रकृतिरविद्या
॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ननुयावज्जीवंकाशीवासेपापमपिस्यात्तथाचरुद्रपिशाचत्वंदुर्वारम् ॥ यथाक्रमेलकस्य॥सत्यम् ॥ तथापिकाशीप्राप्तौतद्भोगानंतरंमुक्तेरवश्यंभावित्वात्तदपिसाध्यपक्षे
निक्षिप्याह ॥ कृत्वेति ॥ व्यतिरेकमाह ॥ काशींविनाक्रतुशतप्राप्यःस्वर्गःकिमपिवरंनत्वित्यर्थः ॥ स्वर्गभोगानंतरमधःपातादित्यर्थः ॥ क्रतुशतंप्राप्यस्वर्गेइतिक्वचित्पाठः ॥ ७१ ॥ ७२ ॥

यस्तुमासंवसेद्धीरोलघ्वाहारोजितेंद्रियः ॥ सर्वंतेनव्रतंचीर्णंदिव्यंपाशुपतंभवेत् ॥ ६१ ॥ संवत्सरंवसंस्तत्राजितक्रोधोजितेंद्रियः ॥ अपरस्वविपुष्टांगःपरान्नपरिवर्जकः ॥ ६२ ॥ परापवादरहितःकिंचिद्दानपरायणः ॥ समाःसहस्रमन्यत्रतेनतप्तंमहत्तपः ॥ ६३ ॥ यावज्जीवंवसेद्यस्तुक्षेत्रमाहात्म्यविन्नरः ॥ जन्ममृत्युभयंहित्वासयातिपरमांगतिम् ॥ ६४ ॥ नयोगैर्यागतिर्लभ्याजन्मांतरशतैरपि ॥ अन्यत्रहेलयासाऽत्रलभ्येशस्यप्रसादतः ॥६५॥ ब्रह्महायोऽभिगच्छेद्वैदेवाद्वाराणसींपुरीम् ॥ तस्यक्षेत्रस्यमाहात्म्याद्ब्रह्महत्यानिवर्तते ॥ ६६ ॥ आदेहपतनंयावद्योविमुक्तंनमुंचति ॥ नकेवलंब्रह्महत्याप्रकृतिश्चनिवर्तते ॥ ६७ ॥ अनन्यमानसोभूत्वातत्क्षेत्रंयोनमुंचति ॥ समुंचतिजरामृत्युंगर्भवासंसुदुःसहम् ॥ ६८ ॥ अविमुक्तंनिषेवेतदेवर्षिगणसेवितम् ॥ यदीच्छेन्मानवोधीमान्नपुनर्जननंभुवि ॥ ६९ ॥ अविमुक्तंनमुंचेतसंसारभयमोचनम् ॥ प्राप्यविश्वेश्वरंदेवंनसभूयोऽभिजायते ॥ ७० ॥ वातेनातुद्यमाकृत्वापापसहस्राणिपिशाचत्ववरंत्विह ॥ नतुक्रतुशतप्राप्यःस्वर्गःकाशापुरींविना ॥ ७१ ॥ अंतकालेमनुष्याणांभिद्यमानेषुमर्मसु ॥ वातेनातुद्यमानानांस्मृतिर्नैवोपजायते ॥ ७२ ॥ तत्रोत्क्रमणकालेतुसाक्षाद्विश्वेश्वरःस्वयम् ॥ व्याचष्टेतारकंब्रह्मयेनासौतन्मयोभवेत् ॥ ७३ ॥ अशाश्वतमिदंज्ञात्वामानुष्यंबहुकिल्बिषम् ॥ अविमुक्तंनिषेवेतसंसारभयनाशनम् ॥ ७४ ॥ विघ्नैरालोड्यमानोपियोऽविमुक्तंनमुंचति ॥ नैःश्रेयसींश्रियंप्राप्यदुःखांतंसोधिगच्छति ॥ ७५ ॥ महापापौघशमनींपुण्योपचयकारिणीम् ॥ भुक्तिमुक्तिप्रदामंतेकोनकाशींसुधीःश्रयेत् ॥ ७६ ॥ एवंज्ञात्वातुमेधावीनाविमुक्तंत्यजेन्नरः ॥ अविमुक्तप्रसादेनविमुक्तोजायतेयतः ॥ ७७ ॥ अविमुक्तस्यमाहात्म्यंषड्भिर्वक्त्रैःकथमया ॥ वक्तुंशक्यंनशक्नोतिसहस्रास्योपियत्परम् ॥ ७८ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखंडे पूर्वार्द्धे स्कंदागस्त्यदर्शनंनामपंचविंशतितमोऽध्यायः ॥ २५ ॥ ॥ अगस्तिरुवाच ॥ ॥ प्रसन्नोसियदिस्कंदमयिप्रीतिरिनुत्तमा ॥ तत्समाचक्ष्वभगवंश्चिरंयन्मेहृदिस्थितम् ॥ १ ॥ अविमुक्तमिदंक्षेत्रंकदारभ्यभुवस्तले ॥ परांप्रथितिमापन्नंमोक्षदंचाभवत्कथम् ॥ २ ॥

क्षेत्रवासिनांतथामरणेभगवतोदयालुतामाह ॥ तत्रोत्क्रमणकालइति ॥ तारकंप्रणवंषडक्षररामंमंत्रराजंवा ॥ ७३ ॥ ७४ ॥ ७५ ॥ अंतेअंतकालेपि ॥ ७६ ॥ ७७ ॥ सहस्रास्योऽनंतः ॥
यत्परंमाहात्म्यमित्यन्वयः ॥ ७८ ॥ ॥ इतिश्रीरामानंदकृतायांटीकायांपंचविंशतितमोऽध्यायः ॥ २५ ॥ ॥ छ ॥ ॥ षड्विंशतितमेऽध्यायेकाश्याविर्भावउच्यते ॥ आख्यानंमणिकर्ण्याश्चसर्वपापहरंपरम् ॥ १ ॥ एवंसंक्षेपेणकाशीमाहात्म्यंश्रुत्वाविस्तरेणश्रोतुंप्रार्थयते ॥ प्रसन्नोसीति ॥ १ ॥ अविमुक्तमिति ॥ इदंक्षेत्रंकदारभ्यकंकालमारभ्यपरांप्रथितिंप्रसिद्धि



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मापन्नम् ॥ अविमुक्तंनामचकथमापन्नम् ॥ मोक्षदंचकथमभवदितिप्रश्नत्रयम् ॥ २ ॥ कथमेषेतिचतुर्थः ॥ ईडचास्तुत्या॥तत्रासीदितिपंचमः ॥ तत्रक्षेत्रेकिंपुरासीदितिषष्ठः ॥ ३ ॥ वाराणसीत्यादि प्रश्नचतुष्टयम् ॥ ४ ॥ इतिचेतिचकारादानंदकाननमितिच ॥ एवंतावदेकादशप्रश्नाः ॥ ९ ॥ यद्यप्येषांप्रश्नानांप्रत्युत्तरंदुर्घटंतथापिजगन्मातुःप्रश्नानन्तरंयथैवेश्वरेणप्रत्युत्तारितंतथैवाहंकथयामिमातुः क्रोडेस्थित्वोभयोर्मेश्रुतत्वादित्याह ॥ प्रश्नभारोयमिति ॥ ६ ॥ ७ ॥ प्रथमप्रश्नोत्तरमाह महाप्रलयेत्यारभ्यस्कंदेत्यतःप्राक्तनेनग्रंथेन ॥ महाप्रलयकालेप्राकृतप्रलयसमयेसर्वंविश्वंतमोमयमासी दित्यन्वयः ॥ महाप्रलयकालस्वरूपमाह ॥ नष्टेस्थावरजंगमइति ॥ नष्टेऽदर्शनंगते ॥ तमोमयमज्ञानस्वरूपम् ॥ तमःशब्देनगुणैकदेशवाचिनातत्समुदायरूपाप्रकृतिरुक्ता ॥ तमसश्चोक्तिस्तत्काले विश्वस्यमूढात्मकत्वेनतस्यसुप्रतिपादत्वात् ॥ तथाचमनुः ॥ आसीदिदंतमोभूतमिति॥यद्वा तमोमयं तमसाआवरणात्मकेनअज्ञानेनव्याप्तमावृतमित्यर्थः॥तथाचश्रुतिः॥मृत्युनैवेदमावृतमासीदिति ॥ तमोमयमंधकारमयमितितुव्याख्यानंनचारुतरम्॥नाहोनरात्रिर्ननभोनभूमिर्नासीत्तमोज्योतिरभून्नचान्यदित्यादिविरोधात्॥अनर्केत्यादिद्वादशपदानिक्रियाविशेषणानि ॥८॥अप्रधानंविक्षेपात्मकाज्ञान

कथमेषात्रिलोकीडयागीयतेमणिकर्णिका ॥ तत्रासीत्किंपुरास्वामिन्यदानामरनिम्नगा ॥ ३ ॥ वाराणसीतिकाशीतिरुद्रावासइतिप्रभो ॥ अवापनामधे यानिकथमेतानिसापुरी ॥ आनंदकाननंरम्यमविमुक्तमनंतरम् ॥ ४ ॥ महाश्मशानइतिचकथंख्यातंशिखिध्वज ॥ एतदिच्छाम्यहंश्रोतुंसंदेहंमेऽपनो दय ॥ ५ ॥ ॥ स्कंदउवाच ॥ प्रश्नभारोयमतुलस्त्वयायःसमुदाहृतः ॥ कुंभयोनेऽमुमेवार्थमप्राक्षीदंबिकाहरम् ॥ ६ ॥ यथाचदेवदेवेनसर्वज्ञेननिवे दितम् ॥ जगन्मातुःपुरस्ताच्चतथैवकथयामिते ॥ ७ ॥ महाप्रलयकालेचनष्टेस्थावरजंगमे ॥ आसीत्तमोमयंसर्वमनर्कग्रहतारकम् ॥ ८ ॥ अचं द्रमनहोरात्रमनग्न्यनिलभूतलम् ॥ अप्रधानंवियच्छून्यमन्यतेजोविवर्धितम् ॥ ९ ॥ द्रष्टृत्वादिविहीनंचशब्दस्पर्शसमुज्झितम् ॥ व्यपेतगंधरूपं चरसत्यक्तमदिङ्मुखम् ॥ १० ॥ इत्थंसत्यंधतमसिसूचीभेद्येनिरंतरे ॥ तत्सद्ब्रह्मेतियच्छ्रुत्यासदेकंप्रतिपाद्यते ॥ ११ ॥ अमनोगोचरोवाचांविषयं नकथंचन ॥ अनामरूपवर्णंचनस्थूलंनचयत्कृशम् ॥ १२ ॥

हीनमस्वतंत्रंवा ॥ अन्यतेजोविवर्धितंसाक्षिचैतन्यभास्यम्॥अन्यतेजोविवर्जितमितिचपाठः॥९॥ द्रष्टृत्वादीत्यादिपदेनश्रोतृत्वादयोगृह्यंते॥द्रष्टृधात्रितिपाठेधातृपदेनधर्तुःपोष्टुर्वाग्रहणम् ॥ अदिङ्मुखंपूर्वा दिदिग्विभागरहितम् ॥१०॥इत्थमिति ॥ इत्थमंधंतमसिगाढांधकारेआवरणात्मकेऽज्ञानेसतितत्प्रसिद्धंसत्सद्रूपंकालत्रयाबाध्यमित्येतद्ब्रह्मासीदितिपूर्वक्रियायाअनुषंगः ॥ पश्चात्सृष्टिसमयेतस्यैकलस्यै कस्यद्वितीयेच्छाभवत्किलेतिसप्तमेनान्वयः ॥ सऐक्षतबहुस्यांप्रजायेय सद्वितीयमैच्छदित्यादिश्रुतिप्रसिद्धिंद्योतयितुंकिलेत्युक्तम् ॥ आवरणात्मकस्याज्ञानस्यांधतमःपदेनोपादानंब्रह्मविद्यामन्तरे णदुर्भेद्यत्वाभिप्रायेण ॥ अतएवसूचीभेद्येइतिविशेषणम् ॥ भेदकत्वसाम्यात्सूचीवत्सूचीब्रह्मविद्यातयाभेद्येनाश्यइत्यर्थः ॥ निरंतरेऽव्यवधानरहिते ॥ किंतद्ब्रह्मेत्याकांक्षायांतद्विशिनष्टि ॥ यच्छ्रु त्येत्यादिना ॥ यच्चसदासर्वदाकालत्रयेएकंसजातीयविजातीयस्वगतभेदशून्यम् ॥ एकमेवाद्वितीयमित्यादिश्रुत्याप्रतिपाद्यते ॥ ११ ॥ अमनोगोचरःमनोविषयोनभवतीत्यर्थः ॥ वाचांविषयंवि षयः ॥ पंढत्वमार्षम् ॥ कथंचनमुख्ययावृत्त्याफलव्याप्यत्वेनवानेत्यर्थः ॥ यतोवाचोनिवर्तंतेअप्राप्यमनसासहेतिश्रुतेः ॥ अनामरूपवर्णंनामरूपवर्णरहितम् ॥ स्थूलंकृशप्रतियोगि ॥ १२ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ह्रस्वंचदीर्घंचह्रस्वदीर्घंनह्रस्वदीर्घमह्रस्वदीर्घम् ॥ ह्रस्वमत्रदीर्घप्रतियोगि ॥ लघुगुरुप्रतियोगि ॥ अनामगोत्रंतदेतत् ॥ गार्ग्यस्थूलमनण्वह्रस्वदीर्घमित्यादिश्रुतेः ॥ उपचयोवृद्धिः ॥ अपचयोऽ
क्षयः ॥ चकाराभ्यांजन्मास्तित्वपरिणामविनाशानांनिरासः ॥ नजायतेम्रियतेवेत्यादिश्रुतेःस्मृतेश्च ॥ १३ ॥ ननुश्रुत्याप्रतिपाद्यत्वंवाचामविषयत्वंचयदुक्तंतत्परस्परविरुद्धमित्याशंकायामाह ॥
अभिधत्तइति ॥ सचकितंसशंकितंयथास्यात्तथा ॥ पुनःयद्ब्रह्मअस्तित्वेनलक्षणयावृत्त्यावृत्तिव्याप्यतेनत्वाश्रुतिरभिधत्तेकथंचिद्बोधयतीत्यर्थः ॥ तथाचश्रुतिः ॥ अस्तीत्येवोपलब्धव्यमिदम
प्रमेयंध्रुवमित्यादि ॥ तथामहिम्नस्तोत्रेच ॥ अतीतःपंथानंतवचमहिमावाङ्मनसयोरतद्व्यावृत्त्यायश्चकितमभिधत्तेश्रुतिरपीति ॥ पुनःकीदृशंब्रह्म ॥ यस्यसंज्ञोदितस्यसंज्ञयावेदांतादौव्यवह्रिय
माणस्य ॥ वेदप्रसिद्धम् ॥ संज्ञोज्झितस्यवैइतिपाठेसंज्ञयावार्जितस्यापि सत्यंज्ञानमित्याद्याःसंज्ञाःसंविकल्प्यन्ते परिकल्प्यंतइतिपाठेविकल्पनयोच्यंतेइतितृतीयेनान्वयः ॥ तत्रसत्यंकालत्रयाबाध्यम् ॥
ज्ञानंजडविरोधि ॥ अनंतंत्रिविधपरिच्छेदराहितम् ॥ आनंदम्आनन्दः ॥ परमविद्यातत्कार्यराहितम् ॥ महोज्योतिःस्वप्रकाशमितियावत् ॥ परंमहइतिवा ॥ १४ ॥ अप्रमेयंप्रमाणाविषयम् ॥

अह्रस्वदीर्घमलघुगुरुत्वपरिवर्जितम् ॥ नयत्रोपचयःकश्चित्तथाचापचयोपिच ॥ १३ ॥ अभिधत्तेसचकितंयदस्तीतिश्रुतिःपुनः ॥ सत्यंज्ञानमनंतं
चयदानंदंपरंमहः ॥ १४ ॥ अप्रमेयमनाधारमविकारमनाकृति ॥ निर्गुणंयोगिगम्यंचसर्वव्याप्येककारणम् ॥ १५ ॥ निर्विकल्पंनिरारंभंनिर्मायं
निरुपद्रवम् ॥ यस्येत्थंसंविकल्प्यंतेसंज्ञाःसंज्ञोदितस्यवै ॥ १६ ॥ तस्यैकलस्यचरतोद्वितीयेच्छाभवत्किल ॥ अमूर्तेनस्वमूर्तिश्चतेनाकल्पिस्वलीलया
॥ १७ ॥ सर्वैश्वर्यगुणोपेतासर्वज्ञानमयीशुभा ॥ सर्वगासर्वरूपाचसर्वदृक्सर्वकारिणी ॥ १८ ॥ सर्वैकवंद्यासर्वाद्यासर्वदासर्वसंकृतिः ॥ परिकल्प्येति
तांमूर्तिमीश्वरींशुद्धरूपिणीम् ॥ १९ ॥ अंतर्दधेपराख्यंयद्ब्रह्मसर्वगमव्ययम् ॥ २० ॥ अमूर्तंयत्पराख्यंवैतस्यमूर्तिरहंप्रिये ॥ अर्वाचीनपराचीनाईश्वरं
मांजगुर्बुधाः ॥ २१ ॥ ततस्तदैकलेनापिस्वैरंविहरतामया ॥ स्वविग्रहात्स्वयंसृष्टास्वशरीरानपायिनी ॥ २२ ॥ प्रधानंप्रकृतिंत्वांचमायांगुणवतींपराम् ॥
बुद्धितत्त्वस्यजननीमाहुर्विकृतिवर्जिताम् ॥ २३ ॥

अनाधारमन्याधारराहितम् ॥ अविकारंषड्भावविकाररहितम् ॥ अनाकृत्यशरीरम् ॥ निर्गुणंसुखादिगुणानामाश्रयभिन्नम् ॥ योगिगम्यंज्ञानिप्राप्यम् ॥ सर्वव्यापिसर्वव्यापकम् ॥ एकंकारणंमुख्यं
कारणम् ॥ अभिन्ननिमित्तोपादानंवा ॥ १५ ॥ निर्विकल्पंनिर्भेदम् ॥ निर्गताआरभ्यंतइत्यारंभाव्यापारायस्मिंस्तन्निरारंभंसृष्ट्यादिव्यापारहीनमित्यर्थः ॥ निर्मायंमायाराहितम् ॥ निरुपद्रवंसर्वान
र्थशून्यम् ॥ १६ ॥ द्वितीयेच्छाभवनानन्तरंकिंवृत्तमित्याकांक्षायामाह ॥ अमूर्तेनेति ॥ अमूर्तेनतेनब्रह्मणास्वलीलयास्वमाययास्वमूर्तिरकल्पिकल्पिता ॥ १७ ॥ स्वमूर्तिंविशिनष्टि सर्वैश्वर्येतिसार्धेन ॥ १८ ॥
सर्वस्यसम्यक्कृतिर्यस्याःसासर्वसंकृतिः ॥ ततःकिंकृतवांस्तत्राह ॥ परिकल्प्येति ॥ १९ ॥ २० ॥ एतावताप्रस्तुतेकिमायातमित्याशंक्यानुवादपूर्वकंतदाह ॥ अमूर्तमिति ॥ यद्वा कासाशुद्धस
त्त्वात्ममूर्तिरित्याशंक्यानुवादपूर्वकंतामाह ॥ अमूर्तमिति ॥ अर्वाचीनपराचीनाइदानींतनपूर्वतनाः ॥ द्वितीयांतपाठेकार्यकारणात्मकमीश्वरंमांबुधाजगुरित्यर्थः ॥ २१ ॥ ततःकिंवृत्तमित्याशंकाया
माह ॥ ततइति ॥ ततोब्रह्मणोऽतर्धानानंतरंस्वेच्छयाक्रीडतामयास्वशरीरानपायिनीमच्छरीराव्यभिचारिणीकाचिन्मूर्तिःसृष्टा ॥ २२ ॥ तामाह प्रधानमित्येकेन ॥ तांचत्वामाहुरितिसंबंधः ॥ कथं



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भूतांताम् ॥ प्रधानंप्रधीयतेऽर्यंतेप्रलयकालेकार्यजातमत्रेतिप्रधानम् ॥ नानाविधकार्याकारेणपरिणामित्वंसूचयति ॥ प्रकृतिमिति ॥ महदादिरूपेणपरिणतामित्यर्थः ॥ तस्याश्चप्रतिभासमा
त्रशरीरत्वमेवनवस्तुतत्त्वमित्याह ॥ मायामिति ॥ ननुकथमीश्वरस्यनित्यशुद्धबुद्धमुक्तस्वभावस्यमाययास्वभावविपरीतजन्मादितत्राह ॥ गुणवतीमिति ॥ सिसृक्षितदेहादिवैषम्यार्थमिदंविशेषणमिति
द्रष्टव्यम् ॥ ननुकथंतर्हिकैवल्येनावस्थानंतत्राह ॥ परामिति ॥ ब्रह्मविद्यामित्यर्थः ॥ अयमभिप्रायः ॥ यावदविद्यात्मनावरणविक्षेपौकरोतितावन्नोपरमति ॥ यदातुसैवविद्यारूपेणपरिणतातदाऽ
ज्ञानंतत्कार्यंचदग्ध्वानिरिंधनाग्निवत्स्वयमुपरमेदिति ॥ बुद्धितत्त्वस्यहैरण्यगर्भबुद्धेर्बुद्धिबुद्धिमतोरभेदोपचाराद्वाहिरण्यगर्भस्यजननीमुत्पादयित्रीम् ॥ विकृतिवर्जितांविवर्ताधिष्ठानभूतामित्यर्थः ॥२३॥
युगपदिति ॥ युगपदेकदैवत्वयाशक्त्याप्रकृत्याकालस्वरूपिणाकालेनपुरुषेणचसाकमेतत्क्षेत्रंमयाविनिर्मितम् ॥ प्रलयकालेऽकिंचित्करतयास्थितानांतत्तत्कार्यकारणसामर्थ्योत्पादनमेवैतेषांविनि
र्मितत्वम् ॥ तथाचप्रकृत्यादिवदस्यक्षेत्रस्यानादित्वंसाधितंभवतीति ॥ २४ ॥ अनुवादपूर्वकमविमुक्तनामचकथमापन्नमितिद्वितीयप्रश्नस्योत्तरमाह ॥ साशक्तिरितित्रयेण ॥ तस्मिन्क्षेत्रेरममाणा

युगपच्चत्वयाशक्त्यासाककालस्वरूपिणा ॥ मयाऽऽद्यपुरुषणैतत्क्षेत्रंचापिविनिर्मितम् ॥२४॥ स्कंदउवाच ॥ ॥ साशक्तिःप्रकृतिःप्रोक्तासपुमानीश्वरः
परः ॥ ताभ्यांचरममाणाभ्यांतस्मिन्क्षेत्रेघटोद्भव ॥ २५॥ परमानंदरूपाभ्यांपरमानंदरूपिणी ॥ पंचक्रोशपरीमाणेस्वपादतलनिर्मिते ॥ २६ ॥ मुनप्रल
यकालेपिनतत्क्षेत्रंकदाचन ॥ विमुक्तंहिशिवाभ्यांयदविमुक्तंततोविदुः ॥ २७ ॥ नयदाभूमिवलयंनयदाऽपांसमुद्भवः ॥ तदाविहर्तुमीशेनक्षेत्रमेतद्विनि
र्मितम् ॥ २८ ॥ इदंरहस्यंक्षेत्रस्यवेदकोपिनकुंभज ॥ नास्तिकायनवक्तव्यंकदाचिच्चर्मचक्षुषे ॥ २९ ॥ श्रद्धालवेविनीतायत्रिकालज्ञानचक्षुषे ॥ शिवभ
क्तायशांतायवक्तव्यंचमुमुक्षवे ॥ ३० ॥ अविमुक्तंतदारभ्यक्षेत्रमेतदुदीर्यते ॥ पर्यंकभूतंशिवयोर्निरंतरसुखास्पदम् ॥ ३१ ॥ अभावःकल्प्यतेमूढैर्य
दाचशिवयोस्तयोः ॥ क्षेत्रस्यास्यतदाभावःकल्प्योनिर्वाणकारिणः ॥ ३२ ॥ अनाराध्यमहेशानमनवाप्यचकाशिकाम् ॥ योगाद्युपायविज्ञोपिन
निर्वाणमवाप्नुयात् ॥ ३३ ॥

भ्यांताभ्यांशिवाभ्यांतत्क्षेत्रंप्रलयकालेपिनविमुक्तंयतस्ततोऽविमुक्तंविदुरित्यन्वयः ॥ २५ ॥ कथंभूतेक्षेत्रे ॥ स्वपादतलनिर्मितेमायावच्छिन्नैकदेशविनिर्मिते ॥ तथाश्रुतिः ॥ पादोऽस्यविश्वाभूता
नीति ॥ २६ ॥ २७ ॥ एतत्क्षेत्रंभौतिकंभूतारब्धत्वेनप्रतीयमानत्वात्संप्रतिपन्नवदित्याशंक्यस्मृतिबाधितत्वेनपरिहरति ॥ नयदेति ॥ यद्वा युगपच्चेत्यादिनेदंक्षेत्रंविनिर्मितमित्युक्तंतच्चकदेत्यपेक्षाया
माह ॥ नयदेति ॥ भूमिवलयंभूमिमण्डलम् ॥ २८ ॥ इदमिति ॥ भूतानारब्धत्वंक्रीडार्थमीश्वरेणविनिर्मितत्वंचेदंशब्दार्थः ॥ २९ ॥ ३० ॥ ३१ ॥ ननुनैयायिकादिभिरनुमानात्कार्यमात्र
स्याभावःप्रलयेस्वीक्रियते ॥ तथाचास्यापिकार्यत्वाविशेषात्प्रलयेनाँकिंभाव्यं नेत्याह ॥ अभावइति ॥ स्मृतिविरोधान्नानुमानमुदेतिनरशिरःकपालानुमानवदित्यर्थः ॥ स्मृतिवचनानितुपूर्वमेवलिखि
तानि ॥ नचनाहोनरात्रिर्ननभोनभूमिरितिविष्णुपुराणवचनविरोधः ॥ तस्यसामान्यविषयत्वात् ॥ नचतद्धेदंतर्ह्यव्याकृतमासीदितिश्रुतिविरोधः ॥ एवकाराभावात् ॥ नचसदेवसौम्येदमग्रआसीदि
तिश्रुतिवचनएवकारविरोधः ॥ एवकारस्यस्वायोगव्यवच्छेदकत्वात् ॥ अन्यथाप्रकृतेरप्यभावापातः ॥ अथवापुराणप्रक्रियानुसारेणैतदुच्यतइतिसंतोष्टव्यम् ॥ ३२ ॥ अनाराध्येति ॥ महेशम



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्किमसंपाद्यकाश्यामसृत्वावाऽष्टांगयोगाद्युपायेमोक्षसाधनेवानिष्णातोपिननिर्वाणमाप्नुयात् ॥ विघ्नबाहुल्याद्योगादीनामनेकांतफलत्वादित्यर्थः ॥ ३३ ॥ चकाराल्लब्धस्यैकादशप्रश्नस्योत्तरमाह ॥ आनंदेति ॥ अस्येति ॥ अस्यक्षेत्रस्येत्यन्वयः ॥ पुराप्रथमतः ॥ आनंदहेतुत्वात्परमानन्दावाप्तिमोक्षलक्षणस्यकारणत्वात् ॥ ३४ ॥ अथवाविमुक्तनामान्तरमानंदहेतुत्वमेवसाधयति ॥ आनंदेति ॥ एते आनन्दस्यकंदबीजानांमूलकारणानांब्रह्मात्मैकात्म्यलक्षणज्ञानानांतस्मिन्नानन्दकाननेयतःसर्वाणिलिंगानिअंकुराणितज्जनकानि ॥ षंढत्वमार्षम् ॥ तस्मादस्यानंदकाननंनामेत्यर्थः ॥ एते आनन्दस्यकंदबीजानां ... ॥ अविमुक्तनामनिर्वचनमुपसंहराति ॥ अविमुक्तमिति ॥ एतत्त्वानन्दवननाम्नोप्युपलक्षणम् ॥ कथमेषात्रिलोकीडयागी नमोक्षदंचाभवत्कथमितितृतीयप्रश्नस्याप्युत्तरमुक्तम् ॥ ३५ ॥ अविमुक्तनामनिर्वचनमुपसंहराति ॥ अविमुक्तमिति ॥ एतत्त्वानन्दवननाम्नोप्युपलक्षणम् ॥ कथमेषात्रिलोकीडयागी नमोक्षदंचाभवत्कथमितितृतीयप्रश्नस्याप्युत्तरमुक्तम् ॥ ३५ ॥ तथाचेति ॥ अविमुक्तमानन्दकाननंचनामद्वयमस्यक्षेत्रस्ययथासीत्तथाख्यातवानस्मि॥अथानंतरंमणिकर्णिकेतियथासीत्तथाख्या यतेमणिकर्णिकेतिचतुर्थप्रश्नस्यप्रत्युत्तरंवक्तुंप्रतिजानीते ॥ तथाचेति ॥ स्वभावतःस्वैरचारित्वेपिमोक्षफलदातृत्वमाह ॥ निर्वाणेति ॥ श्राणनन्दानम् ॥ काशिशायिनांकाश्यांमृतानाम् ॥ ३८ ॥ सृज्यंवि मिकययामीत्यर्थः ॥ ३६ ॥ ३७ ॥

अस्यानंदवनंनामपुराकारिपिनाकिना ॥ क्षेत्रस्यानंदहेतुत्वादविमुक्तमनंतरम् ॥ ३४ ॥ आनंदकंदबीजानामंकुराणियतस्ततः ॥ ज्ञेयानिसर्वलिंगा नितस्मिन्नानंदकानने ॥ ३५ ॥ अविमुक्तमितिख्यातमासीदित्थंघटोद्भव ॥ तथाचाख्याम्यथमुनेयथासीन्मणिकर्णिका ॥ ३६ ॥ प्रागानंदवनेतत्र शिवयोररममाणयोः ॥ इच्छेत्यभूत्कलशजसृज्यःकोप्यपरःकिल ॥ ३७ ॥ यस्मिन्न्यस्तेमहाभारेआवांस्वःस्वैरचारिणौ ॥ निर्वाणश्राणनंकुर्वःकेवलंका शिशायिनाम् ॥ ३८ ॥ सएवसर्वंकुरुतेसएवपरिपातिच ॥ सएवसंवृणोत्यंतेसर्वैश्वर्यनिधिःसच ॥ ३९ ॥ चेतःसमुद्रमाकुंच्यचिंताकल्लोलदोलितम् ॥ सत्त्वरत्नंतमोग्राहंरजोविद्रुमवल्लितम् ॥ ४० ॥ यस्यप्रसादात्तिष्ठावःसुखमानंदकानने ॥ परिक्षिप्तमनोवृत्तौक्वहिचिंतातुरेसुखम् ॥ ४१ ॥ संप्रधार्येतिस विभुःसर्वतश्चित्स्वरूपया ॥ तयासहजगद्धात्र्याजगद्धाताऽथधूर्जटिः ॥ ४२ ॥ सव्येव्यापारयांचक्रेदृशमंगेसुधामुचम् ॥ ततःपुमानाविरासीदेकस्त्रैलो क्यसुंदरः ॥ ४३ ॥ शांतःसत्त्वगुणोद्रिक्तोगांभीर्यजितसागरः ॥ तथाचक्षमयायुक्तोमुनेऽलब्धोपमोऽभवत् ॥ ४४ ॥ इंद्रनीलद्युतिःश्रीमान्पुंडरीकोत्तमे क्षणः ॥ सुवर्णाकृतिसुच्छायदुकूलयुगलावृतः ॥ ४५ ॥ लसत्प्रचंडदोर्दंडयुगलद्वयराजितः ॥ उल्लसत्परमामोदनाभीह्रदकुशेशयः ॥ ४६ ॥ एकः सर्वगुणावासस्त्वेकःसर्वकलानिधिः ॥ एकःसर्वोत्तमोयस्मात्ततोयःपुरुषोत्तमः ॥ ४७ ॥

शिनष्टि ॥ सएवसर्वमिति ॥ यःसृज्यःस्रष्टव्यःसएवंविधोविधेयइत्यर्थः ॥ संवृणोतिसंहरति ॥ ३९ ॥ चेतइति ॥ चेतएवसमुद्रस्तमाकुंच्यस्थिरीकृत्ययस्यप्रसादादावांसुखंतिष्ठावइतिसंप्र धार्यसव्येपार्श्वेदृशंव्यापारयांचक्रइतितृतीयेनान्वयः ॥ समुद्रसाम्यार्थानिविशेषणान्याह चिंतेतिपादत्रयेण ॥ चिंताएवकल्लोलास्तरंगास्तैर्दोलितमांदोलितम् ॥ सत्त्वगुणएवरत्नंयस्मिंस्तम् ॥ तमोगुणएवग्राहोजलचरोयस्मिंस्तम् ॥ रजोगुणएवविद्रुमाःप्रवालास्तैर्वल्लितमुच्छलितम् ॥ वेष्टितमितिपाठेपिसएवार्थः ॥ ४० ॥ व्यतिरेकमाह ॥ परिक्षिप्तेति ॥ परिक्षिप्ताइतस्ततोनीतामनोवृत्तिर्येन तस्मिंश्चितातुरेभोगैकचिंताविवशेपुरुषेक्वहिसुखंनकुत्रापिसुखमित्यर्थः ॥ चिंतांतरइतिपाठेचिंतांतरेयस्येतिबहुव्रीहिणापुरुषएवोच्यते ॥ ४१ ॥ चित्स्वरूपयाज्ञानरूपया ॥ तयापूर्वोक्तया ॥ धूर्जटिर्विश्वे श्वरः ॥ ४२ ॥ सव्येंऽगेइत्यन्वयः ॥ सुधामुचममृतस्राविणीम् ॥ ततोदृग्व्यापारानंतरंपुमानाविरासीत् ॥ तंविशिनष्टि ॥ एकइत्यादिना ॥ एकोमुख्यः ॥ ४३ ॥ शांतःसत्त्वगुणोपेतः ॥ अल ब्धोपमः नलब्धाउपमायेनसतथा ॥ ४४ ॥ दुकूलंपीतकौशेयम् ॥ ४५ ॥ कुशेशयंपद्मम् ॥ ४६ ॥ तच्छब्दएवार्थेकाकाक्षिन्यायेनोभयत्रसंबध्यते ॥ सर्वगुणाश्रयएकएवसर्वकलानिधिरप्येकए



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वेत्यर्थः ॥ निधिराश्रयः ॥ पुरुषोत्तमनामनिर्वक्ति एकइत्यर्धेन ॥ यस्मादेकोऽनौपचारिकोमुख्यइत्यर्थः ॥ सर्वोत्तमःसर्वाभ्यांक्षराक्षराभ्यामुत्तमः॥ क्षराक्षरेअतिक्रम्यवर्ततइत्यर्थः ॥ ततस्तस्माद्यः पुरुषोत्तमःसएतादृशआविरासीदितिपूर्वक्रिययैवान्वयः ॥४७॥ महांतंव्यापकंश्रेष्ठंवा ॥ महांतोमहिमानोयेषांतानितथाभूतानिभूषणानियस्यतम्॥४८॥ तवेति ॥ निःश्वासवदनायासेनाविर्भूतत्वाद्वेदानिःश्वसितमित्युपचारः ॥ सामानाधिकरण्यंवेदाःप्रमाणमितिवत् ॥ तथाचश्रुतिः ॥ अस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदोयजुर्वेदःसामवेदइति ॥ अवैष्यसिज्ञास्यसि ॥ ४९ ॥ बुद्धितत्त्वस्वरूपिणं समष्टिबुद्धितत्त्वाधिष्ठातारंहिरण्यगर्भरूपिणंनाभिकमलद्वारातदुत्पादकमित्यर्थः ॥ ज्ञानतत्त्वस्वरूपिणामितिवा ॥ ५० ॥ मौलौमस्तके ॥ दधौकृतवान् ॥ ५१ ॥ निजांगस्वेदसंदोहसलिलैःस्वगात्र

ततोमहांतंतंवीक्ष्यमहामहिमभूषणम् ॥ महादेवउवाचेदंमहाविष्णुर्भवाच्युत ॥ ४८ ॥ तवनिःश्वसितंवेदास्तेभ्यःसर्वमवैष्यासि ॥ वेददृष्टेनमार्गेणकुरुसर्वं यथोचितम् ॥ ४९ ॥ इत्युक्त्वातंमहेशानोबुद्धितत्त्वस्वरूपिणम् ॥ शिवयासहितोरुद्रोविवेशानंदकाननम् ॥ ५० ॥ ततःसभगवान्विष्णुर्मौलावाज्ञांनिधायच ॥ क्षणंध्यानपरोभूत्वातपस्येवमनोदधौ ॥ ५१ ॥ खनित्वातत्रचक्रेणरम्यांपुष्करिणींहरिः ॥ निजांगस्वेदसंदोहसलिलैस्तामपूरयत् ॥ ५२ ॥ समाःसहस्रंपंचाशत्तपउग्रंचचारसः ॥ चक्रपुष्करिणीतीरेतत्रस्थाणुसमाकृतिः ॥ ५३ ॥ ततःसभगवानीशोमृडान्यासहितोमृडः ॥ दृष्ट्वाज्वलंतंतपसानिश्चलंमीलितेक्षणम् ॥ ५४ ॥ तमुवाचहृषीकेशंमौलिमांदोलयन्मुहुः ॥ अहोमहत्त्वंतपसस्त्वहोधैर्यंचचेतसः ॥ ५५ ॥ अहोअनिंधनोवह्निर्ज्वलत्येषनिरंतरम् ॥ अलंतत्वामहाविष्णोवरंवरयसत्तम ॥ ५६ ॥ मृडस्याम्रेडितमिदंप्रत्यभिज्ञायभाषितम् ॥ उन्मीलितदृगंभोजःसमुत्तस्थौचतुर्भुजः ॥ ५७ ॥ श्रीविष्णुरुवाच ॥ ॥ यदिप्रसन्नोदेवेशदेवदेवमहेश्वर ॥ भवान्यासहितंत्वांतुद्रष्टुमिच्छामिसर्वदा ॥ ५८ ॥ सर्वकर्मसुसर्वत्रत्वामेवशशिशेखर ॥ पुरश्चरं तंपश्यामियथातन्मेवरस्तथा ॥ ५९ ॥ त्वदीयचरणांभोजमकरंदमधूत्सुकः ॥ मच्चेतोभ्रमरोभ्रांतिंविहायास्तुसुनिश्चलः ॥६०॥ ॥ श्रीशिवउवाच ॥ एवमस्तुहृषीकेशयत्त्वयोक्तंजनार्दन ॥ अन्यंवरंप्रयच्छामितमाकर्णयसुव्रत ॥ ६१ ॥ त्वदीयस्यास्यतपसोमहोपचयदर्शनात् ॥ यन्मयांदोलितोमौलिरहिश्रवणभूषणः ॥ ६२ ॥ तदांदोलनतःकर्णात्पपातमणिकर्णिका ॥ मणिभिःखचितारम्याततोऽस्तुमणिकर्णिका ॥ ६३ ॥

धर्मपूरजलैः ॥ ५२ ॥ स्थाणुसमाकृतिःस्थाणुसमाशाखादिविहीनवृक्षविशेषसमाआकृतिःशरीरंयस्यसतथा ॥ ५३ ॥ मीलितेक्षणंमुद्रितेक्षणम् ॥ ५४ ॥ ५५ ॥ अहोअनिंधनइत्युत्प्रेक्षा ॥ ५६ ॥ आम्रेडितंद्विस्त्रिरुक्तम् ॥ इदंपूर्वोक्तम् ॥ आम्रेडितंमहोग्रस्येतिक्वचित् ॥ भाषितंवचनम् ॥ ५७ ॥ ५८ ॥ यथापुरश्चरंतंपश्यामीतियत्तथातदेवमेवरइत्यर्थः ॥ ५९ ॥ त्वदीयेति ॥ त्वदीयचरणांभोजयोर्मकरंदःसएवमधुतदुत्सुकः ॥ ममचेतएवभ्रमरः ॥ पालनादिभ्रांतिंविहायाहमेवेश्वरइतिभ्रांतिंविहायवासुनिश्चलोऽस्त्वित्यर्थः ॥ ६० ॥ हेजनार्दनेत्यनेनसर्वारिजयन्तत्रसंचारयति ॥ ६१ ॥ मणिकर्णिकानामनिर्वक्ति त्वदीयस्येतिपंचभिः ॥ महोपचयदर्शनादतिशयवृद्धिदर्शनात् ॥ अहीसर्पौश्रवणयोर्भूषणेयस्यसमौलिस्तथा ॥ ६२ ॥ तदांदोलनतस्तस्यमौ

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मणिभिर्मुक्तादिभिःखचितात्यासारम्यामणिकर्णिकेतिपूर्वस्यानुषंगः ॥ तस्मान्नाम्नामणिकर्णिका
लेश्चालनात् ॥ यस्मात्कर्णान्मणिकर्णिकापपात ॥ मणिकर्णिकेत्येतदेवव्युत्पादयति ॥ मणिभिर्मुक्तादिभिःखचितात्यासारम्यामणिकर्णिकेतिपूर्वस्यानुषंगः ॥ चक्रेति ॥ ६४ ॥ अन्यंवरंप्रयच्छामीतियदुक्तंतत्कथयन्कथमेषेतिचतु
स्त्वित्यर्थः ॥ कर्णिकाकर्णालंकारविशेषःकुण्डलमितिवा ॥ ६३ ॥ तर्हिचक्रपुष्करिणीतिलोकैःकथमुच्यतेतत्राह ॥ चक्रेति ॥ ६४ ॥ अन्यंवरंप्रयच्छामीतियदुक्तंतत्कथयन्कथमेषेतिचतु
र्थंप्रश्नमुपसंहरति ॥ ममेति ॥ ६५ ॥ त्रिलोकीडचेतियद्विशेषणमुक्तंतदर्थंदर्शयितुमाह ॥ मुक्ताकुंडलेति ॥ इहमुक्ताकुंडलपातेनेत्यन्वयः ॥ वैप्रांसिद्धम् ॥ ६६ ॥ काशतइति ॥ तत्प्र
सिद्धम् ॥ अनाख्येयंवाचामगोचरम् ॥ एतेनकाशीतिनामधेयंकथमापेतिसप्तमप्रश्नस्योत्तरमुक्तंभवति ॥ ६७ ॥ अविचारितंयथास्यात् ॥ ६८ ॥ चतुर्षुजरायुजांडजस्वेदजोद्भिज्जेषु ॥ ६९ ॥
मणिश्रवणभूषणंमणियुक्तंश्रवणभूषणंपतितंयत्रतत्तीर्थवरंतथातस्मिन् ॥ संध्यामित्यादिश्लोकचतुष्टयमेकंवाक्यम् ॥ संध्यादिकर्मयोऽत्रकरोतितस्यकर्मणोविपाकःफलमक्षयाएकाविदेहकैवल्यरू

चक्रपुष्करिणीतीर्थंपुराख्यातमिदंशुभम् ॥ त्वयाचक्रेणखननाच्छंखचक्रगदाधर ॥ ६४ ॥ ममकर्णात्पपातेयंयदाचमणिकर्णिका ॥ तदाप्रभृतिलोके ऽत्रख्यातास्तुमणिकर्णिका ॥६५॥ ॥ श्रीविष्णुरुवाच ॥ ॥ मुक्ताकुंडलपातेनतवाद्रितनयाप्रिय ॥ तीर्थानांपरमंतीर्थंमुक्तिक्षेत्रमिहास्तुवै ॥६६॥ काशतेऽत्रयतोज्योतिस्तदनाख्येयमीश्वरः ॥ अतोनामापरंचास्तुकाशीतिप्रथितंविभो ॥ ६७ ॥ अन्यंवरंवरेदेवदेयःसोप्यविचारितम् ॥ सतेपरोपकारार्थं जगद्रक्षामणेशिव ॥ ६८ ॥ आब्रह्मस्तंबपर्यंतंयत्किंचिज्जंतुसंज्ञितम् ॥ चतुर्षुभूतग्रामेषुकाश्यांतन्मुक्तिमाप्स्यतु ॥६९॥ अस्मिंस्तीर्थवरेशंभोमणिश्रव णभूषणे ॥ संध्यांस्नानंजपंहोमंवेदाध्ययनमुत्तमम् ॥ तर्पणंपिंडदानंचदेवतानांचपूजनम् ॥ ७० ॥ गोभूतिलहिरण्याश्वदीपान्नांबरभूषणम् ॥ कन्या दानंप्रयत्नेनसप्ततंतूननेकशः ॥ ७१ ॥ व्रतोत्सर्गंवृषोत्सर्गंलिंगादिस्थापनंतथा ॥ करोतियोमहाप्राज्ञोज्ञात्वायुःक्षणगत्वरम् ॥ ७२ ॥ विपत्तिविपुलां चापिसंपत्तिमतिभंगुराम् ॥ अक्षयामुक्तिरेकास्तुविपाकस्तस्यकर्मणः ॥७३॥ अन्यच्चापिशुभंकर्मयदत्रश्रद्धयायुतम् ॥विनात्मघातमीशानत्यक्त्वाप्रायो पवेशनम् ॥७४॥ नैःश्रेयस्याःश्रियोहेतुस्तदस्तुजगदीश्वर ॥ नानुशोचतिनाख्यातिकृत्वाकालांतरेपियत् ॥७५॥ तदिहाक्षयतामेतुतस्येशत्वदनुग्रहात् ॥ तवप्रसादात्तस्येशसर्वमक्षयमस्तुतत् ॥ ७६ ॥ यदस्तियद्भविष्यच्चयद्भूतंचसदाशिव ॥ तस्मादेतच्चसर्वस्मात्क्षेत्रमस्तुशुभोदयम् ॥ ७७ ॥ यथासदा शिवत्वत्तोनकिंचिदधिकंशिवम् ॥ तथानंदवनादस्मात्किंचिन्मास्त्वधिकंक्वचित् ॥ ७८ ॥ विनासांख्येनयोगेनविनास्वात्मावलोकनम् ॥ विनाव्रततपो दानैःश्रेयोऽस्तुप्राणिनामिह ॥ ७९ ॥

पामुक्तिरस्तुइतिसर्वत्रप्रार्थना ॥ ७० ॥ गोभूतिलादीनांभूषणांतानांदानम् ॥ सप्ततंतूनग्निष्टोमादीन् ॥ तदुक्तम् ॥ अग्निष्टोमस्तथात्यग्निष्टोमउक्थोथषोडशी ॥ वाजपेयोऽतिरात्रोऽप्तोर्यामः
संस्थाइमेक्रमादिति ॥ ७१ ॥ लिंगादीत्यादिपदेनप्रतिमादयोगृह्यंते ॥ महाप्राज्ञइतिविशेषणस्यतात्पर्यमाह ॥ ज्ञात्वायुरितिपादत्रयेण ॥ ७२ ॥ ७३ ॥ अनुक्तंसंगृह्णाति ॥ अन्यच्चेति ॥
श्रद्धयायुतंयद्दत्तंचतन्नैःश्रेयस्याःश्रियोहेतुरस्त्वित्यग्रिमेणान्वयः ॥ तर्हिआत्मघातस्यापिकिंकैवल्यफलंनेत्याह ॥ विनेति ॥ तर्हिकिंकैवल्यमुद्दिश्यप्रायोपवेशनेनापिनात्मघातोविधेयोनेत्याह ॥
त्यक्त्वेति ॥ प्रायोपवेशनंत्यक्त्वाप्रकारांतरेणयआत्मघातस्तंविनेत्यर्थः ॥ ७४ ॥ नैःश्रेयस्याःकैवल्याख्यायाः ॥ ७५ ॥ ७६ ॥ ७७ ॥ शिवंकल्याणरूपम् ॥ ७८ ॥ सांख्येनात्मानात्म



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विवेकेन ॥ योगेनाष्टांगेन ॥ आत्मावलोकनंजीवब्रह्मणोरैक्यानुसंधानम् ॥ ७९ ॥ प्राणिनांश्रेयोऽस्त्वित्येतद्विवृणोति ॥ शशकाइति ॥ निर्वाणेकैवल्येदीक्षिताः ॥ ८० ॥ एनसःपापस्य ॥ ८१ ॥ कृतयुगंसत्ययुगम् ॥ सतामितिशत्रंतंपदम् ॥ ८२ ॥ ८३ ॥ ८४ ॥ श्रद्धाकाशीनिषेवणाच्छ्रद्धयाकाशीवासात् ॥ प्राणायामायुतस्ययदितिपाठेप्राणायामेनईषद्युतस्ययुक्तस्यजनस्य

शशकामशकाःकीटाःपतंगास्तुरगोरगाः ॥ पंचक्रोश्यांमृताःकाश्यांसंतुनिर्वाणदीक्षिताः ॥ ८० ॥ नामापिगृह्णतांकाश्याःसदैवास्त्वेनसःक्षयः ॥ ८१ ॥ सदाकृतयुगंचास्तुसदाचास्तूत्तरायणम् ॥ सदामहोदयश्चास्तुकाश्यांनिवसतांसताम् ॥ ८२ ॥ यानिकानिपवित्राणिश्रुत्युक्तानिसदाशिव ॥ तेभ्योऽधिकतरंचास्तुक्षेत्रमेतत्त्रिलोचन ॥ ८३ ॥ चतुर्णामपिवेदानांपुण्यमध्ययनाचयत् ॥ तत्पुण्यंजायतांकाश्यांगायत्रीलक्षजाप्यतः ॥ ८४ ॥ अष्टांगयोगाभ्यासेनयत्पुण्यमपिजायते ॥ तत्पुण्यंसाधिकंभूयाच्छ्रद्धाकाशीनिषेवणात् ॥ ८५ ॥ कृच्छ्रचांद्रायणाद्यैश्चयच्छ्रेयःसमुपार्ज्यते ॥ तदेकेनोपवासेनभवत्वानंदकानने ॥ ८६ ॥ अन्यत्रयत्तपस्तप्त्वाश्रेयःस्याच्छरदांशतम् ॥ तदस्तुकाश्यांवर्षेणभूमिशय्याव्रतेनहि ॥ ८७ ॥ आजन्ममौनव्रततोयदन्यत्रफलंस्मृतम् ॥ तदस्तुकाश्यांपक्षाहःसत्यवाक्परिभाषणात् ॥ ८८ ॥ अन्यत्रदत्त्वासर्वस्वंसुकृतंयत्समीरितम् ॥ सहस्रभोजनात्काश्यांतद्भूयादयुताधिकम् ॥ ८९ ॥ मुक्तिक्षेत्राणिसर्वाणियत्संसेव्योदितंफलम् ॥ पंचरात्रात्तदत्रास्तुनिषेव्यमणिकर्णिकाम् ॥ ९० ॥ प्रयागस्नानपुण्येनयत्पुण्यंस्याच्छिवप्रदम् ॥ काशीदर्शनमात्रेणतत्पुण्यंश्रद्धयास्त्विह ॥ ९१ ॥ यत्पुण्यमश्वमेधेनयत्पुण्यंराजसूयतः ॥ काश्यांतत्पुण्यमाप्नोतुत्रिरात्रशयनाद्यमी ॥ ९२ ॥ तुलापुरुषदानेनयत्पुण्यंसम्यगाप्यते ॥ काशीदर्शनमात्रेणतत्पुण्यंश्रद्धयास्तुवै ॥ ९३ ॥ इतिविष्णोर्वरंश्रुत्वादेवदेवोजगत्पतिः ॥ उवाचचप्रसन्नात्मातथाऽस्तुमधुसूदन ॥ ९४ ॥ ॥ श्रीमहादेवउवाच ॥ ॥ शृणुविष्णोमहाबाहोजगतःप्रभवाप्यय ॥ विधेहिसृष्टिंविविधांयथावत्त्वंश्रुतीरिताम् ॥ ९५ ॥ पितेवसर्वभूतानांधर्मतःपालकोभव ॥ विध्वंसनीयाविविधाधर्मध्वंसविधायिनः ॥ ९६ ॥ धर्मेतरपथस्थानामुपसंहृतयेहरे ॥ हेतुमात्रंभवान्यस्मात्स्वकर्मनिहताहिते ॥ ९७ ॥ यथापरिणतंसस्यंपतेत्प्रसवबंधनात् ॥ तेपरीणतपाप्मानःपतिष्यंतितथास्वयम् ॥ ९८ ॥ येचत्वामवमन्यंतेदर्पिताःस्वतपोबलैः ॥ तेषांचैवोपसंहृत्यैप्रभविष्याम्यहंहरे ॥ ९९ ॥ उपपातकिनोयेचमहापातकिनश्चये ॥ तेपिकाशींसमासाद्यभविष्यंतिगतैनसः ॥ १०० ॥ इदंममप्रियंक्षेत्रंपंचक्रोशीपरीमितम् ॥ ममाज्ञाप्रभवेदत्रनान्याज्ञाप्रभवेदिह ॥ १ ॥

साधिकंतत्पुण्यंभूयादित्यर्थः ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ शिवप्रदंमोक्षप्रदंकल्याणप्रदंवा ॥ ९१ ॥ यमीसंयमवान् ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ प्रसवबंधनाद्वृंतात् ॥ परीणतपाप्मानःफलोन्मुखपापाः ॥ ९८ ॥ ९९ ॥ १०० ॥ इदमिति ॥ यत्त्विदानीमन्याज्ञापिप्रभवतीतिप्रतीयतेतत्त्वीश्वरेच्छयैवेतिभावः ॥ यद्वात्रमूर्तिमतःसतोममा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ज्ञैवेहप्रभवेन्नान्यस्यअन्तर्धानेत्वन्यस्याप्याज्ञाप्रभवतीति ॥ अथवामोक्षप्रदानरुद्रपिशाचभोगादौममाज्ञैवप्रभवेदिहनान्यस्यब्रह्मविष्णुधर्मराजादेरिति ॥ एतदेववादिष्यति पापिनामित्यादिना ॥ १ ॥ अत्युग्रतेजसाकृत्वायत्तेजस्तेनभ्रमान्वितस्ततःप्रसरन् ॥ त्रैलोक्यस्याविभ्रमआश्चर्यबुद्धिर्यस्मात्सः ॥ अत्युग्रतपसांतेजोविभ्रत्त्रैलोक्यविभ्रममितिक्वचित्पाठः ॥ अत्युग्रतेजसामितिचान्यत्र ॥ सचस्पष्टएव ॥ २ ॥ पापिनामपीत्यपिशब्दोधार्मिकान्समुच्चिनोति ॥ तत्रधार्मिकाणांशासनंकैवल्यप्रापणमेवपापिनांरुद्रपिशाचभोगप्रापणमितिविवेकः ॥ ३ ॥ ४ ॥ प्रियस्येत्यादिकर्मणि षष्ठीत्रयम् ॥ ५ ॥ ६ ॥ तत्पुण्यादन्तकालेकाशीस्मरणपुण्यात् ॥ ७ ॥ ८ ॥ ९ ॥ विष्णोइति ॥ अस्यायमर्थः ॥ हेविष्णोऽविमुक्तेयःसंवासोनिवासः ॥ कीदृशः ॥ कर्मनिर्मूलनक्षमः कर्मवासनोत्पाटनदक्षः ॥ सनिर्वाणायसायुज्यायविश्वेश्वरचतुर्भुजादिमूर्त्यधिष्ठात्रापरमात्मनैक्यायविदेहकैवल्यायवाजायते ॥ इहकाश्यांदेहत्यागद्वारेतिशेषः ॥ केषामित्यतआह ॥ द्वित्राणांहिप वित्राणामिति ॥ पवित्राणांदौर्लभ्यसूचनार्थंद्वित्राणामित्युक्तम् ॥ पापिनांत्वत्रैवरुद्रपिशाचभोगानंतरंनिर्वाणंशशकमशकादीनांचतारतम्येनसालोक्यसामीप्यसारूप्यसार्ष्टिलक्षणामुक्तिरितिहिश

पुनर्विष्णुर्मयाप्रोक्तोमृडानिशुभलोचने ॥ अत्युग्रतेजसातेजोभ्रमंस्त्रैलोक्यविभ्रमः ॥ २ ॥ पापिनामपिजंतूनामविमुक्तनिवासिनाम् ॥ नान्यःशास यिताविष्णोतेषांशास्ताऽहमेवहि ॥ ३ ॥ योजनानांशतस्थोपियोऽविमुक्तंस्मरेद्धृदि ॥ बहुपातकपूर्णोपिनसपापैःप्रबाध्यते ॥४॥ ममप्रियस्यक्षेत्रस्ययो ऽविमुक्तस्यसंस्मरेत् ॥ प्राणप्रयाणसमयेदूरगोप्यथवानपि ॥५॥ सपापपूगमुत्सृज्यस्वर्गभोगान्समश्नुते ॥ काशीस्मरणपुण्येनस्वर्गाद्भ्रष्टोहिजायते॥६॥ पृथिव्यामेकराड्भूत्वाभुक्त्वाभोगाननेकशः ॥ प्राप्याविमुक्तंतत्पुण्यान्निर्वाणपदभाग्भवेत् ॥ ७ ॥ बहुकालमुषित्वाऽत्रनियतेंद्रियमानसः ॥ यद्यन्यत्र विपद्येतदैवयोगाच्छुचिस्मिते ॥ ८ ॥ सोपिस्वर्गसुखंभुक्त्वाभूत्वाक्षितिपतीश्वरः ॥ पुनःकाशीमवाप्याथविंदेन्नैःश्रेयसींश्रियम् ॥ ९ ॥ विष्णोऽविमुक्तेसं वासःकर्मनिर्मूलनक्षमः ॥ द्वित्राणांहिपवित्राणांनिर्वाणायेहजायते ॥ ११० ॥

ब्दार्थः ॥ तत्रसालोक्यमेकस्मिँल्लोकेऽवस्थानम् ॥ सामीप्यंसमीपेऽवस्थानम् ॥ सारूप्यंतुल्यरूपप्राप्तिः ॥ सार्ष्टिर्जगत्सृष्ट्यादिवर्जंतुल्यप्रभावइतिभेदः ॥ इतोऽन्यथाव्याख्यानेपुराणांतरविरोधः पूर्वापरविरोधश्च ॥ यद्वा द्वित्राणांपवित्राणामविमुक्तेयःसंवासःसम्यग्वसतिःससंवासएवयत्रकुत्रापिमृतानांतेषांद्वित्राणांपवित्राणामिहास्मिन्जन्मन्येवनिर्वाणायभवति ॥ यथा घण्टाकर्णह्रदेस्ना त्वादृष्ट्वाविश्वेश्वरंविभुम् ॥ यत्रकुत्रमृतोवापिवाराणस्यांमृतोभवेत्तद्वदिति ॥ अत्रमरणानंतरंसर्वेषांमुक्तिःस्थिरैव ॥ अथवाऽविमुक्तेयःसंवासःसर्वेषांमरणद्वाराकर्मनिर्मूलनक्षमःसइहजीवदवस्थायां द्वित्रा णांपवित्राणांनिर्वाणायजीवन्मुक्तयेजायतइत्यर्थः ॥ यद्वा हेविष्णोऽविमुक्तेयःसंवासोमरणावधिवासःसद्वित्राणांपवित्राणांहिएवनिश्चितंवानिर्वाणायकैवल्यायइहमरणाऽव्यवधानसमयेसत्वरंजायते ॥ पापिनांतुकालभैरवयातनानंतरंमोक्षायभवतीत्यर्थः ॥ अन्यत्सर्वंपूर्ववत् ॥ तथाचोक्तंपाद्मे ॥ अस्यांनिवासोनिर्वाणंसाधयत्यंजसामुने ॥ केवलंधर्मसापेक्षःकर्णेजपातितद्वचः ॥ अधार्मिष्ठस्यतत्क्षेत्रे यातनांतेदिशेन्मतिम् ॥ वाराणस्यांनिवसतिरपवर्गफलप्रदा ॥ द्वित्राणांचपवित्राणांकल्प्यतेसत्वरंबलइति ॥ ११० ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ११ ॥ १२ ॥ महिमनिमहत्त्वे ॥ १३ ॥ १४ ॥ भयात्त्रासात् ॥ केषामित्यतआह ॥ त्रिशूलेति ॥ १५ ॥ १६ ॥ १७ ॥ स्वशाखावारुणैःस्वशाखोक्तस्नानसंबंधिभिः ॥ अपामार्गः प्रसिद्धःशैखरिकापरपर्यायः ॥ अपामार्गःशैखरिकोधामार्गवमयूरकौ ॥ प्रत्यक्पर्णीकीशपर्णीकिणिहीखरमंजरीत्यमरः ॥ १८ ॥ १९ ॥ १२० ॥ बर्हींषिकुशाः ॥ २१ ॥ २२ ॥

विष्णुरुवाच ॥ ॥ देवेशक्षेत्रमाहात्म्यंयोनजानातितत्त्वतः ॥ नश्रद्दधातिम्रियतेमृतेतस्येहकागतिः ॥ ११ ॥ ॥ शिवउवाच ॥ ॥ अन्यत्रकृत्वापापा निबह्वनिसुमहांतिच ॥ अश्रद्दधानोऽतत्त्वज्ञोयद्यत्रचविपद्यते ॥ १२ ॥ महिमन्यनभिज्ञोपिक्षेत्रस्यास्यजनार्दन ॥ तस्ययागतिरुद्दिष्टातांनिशामयसुव्रत ॥ १३ ॥ पंचक्रोशींप्रविशतस्तस्यपातकसंततिः ॥ बहिरेवप्रतिष्ठेतनांतर्निर्विशतेक्वचित् ॥ १४ ॥ भयाद्बहिःस्थितायांचतस्यपातकसंततौ ॥ त्रिशूल पाशपाणीनांगणानांसीमचारिणाम् ॥ १५ ॥ प्रवेशमात्रादनघसर्वैरेनोभिरुज्झितः ॥ संस्नायमणिकर्णिक्यांपुण्यंप्राप्नोत्यनुत्तमम् ॥ १६ ॥ सर्वतीर्थेषुसं स्नानाद्यत्पुण्यंसमवाप्यते ॥ तत्पुण्यमाप्यतेसम्यङ्मणिकर्ण्येकमज्जनात् ॥ १७ ॥ विधिनातत्रसंस्नायमृद्गोमयकुशादिभिः ॥ स्वशाखावारुणैर्मंत्रैर्दूर्वापामार्गदर्भकैः ॥ १८ ॥ सर्वतीर्थेषुयत्पुण्यंसर्वदानेषुयत्फलम् ॥ मणिकर्ण्यांविधिस्नातःश्रद्धयातदवाप्नुयात् ॥ १९ ॥ अश्रद्धयापियःस्नातोम णिकर्ण्यांविधानतः ॥ सोपिपुण्यमवाप्नोतिस्वर्गप्राप्तिकरंपरम् ॥ १२० ॥ श्रद्धयाविधिवत्स्नात्वाकृत्वादेवादितर्पणम् ॥ तिलबर्हिर्यवैःसम्यक्सर्व यज्ञफलंलभेत् ॥ २१ ॥ श्रद्दधानोविधिस्नातःकृतसर्वोदकक्रियः ॥ जपन्देवान्समभ्यर्च्यसर्वमंत्रफलंलभेत् ॥ २२ ॥ स्नात्वामौनेनविश्वेशदर्शना न्नियतेंद्रियः ॥ सर्वव्रतकृतंश्रेयोलभेद्वाचंयमःशिवे ॥ २३ ॥ स्नानेदेवार्चनेजप्येमलमूत्रविसर्जने ॥ मौनंकुर्यात्प्रयत्नेनदंतधावनहोमयोः ॥ २४ ॥ विश्वेश्वरंसमभ्यर्च्यसूपचारैर्विधानतः ॥ यावज्जीवंशिवार्चायाः फलमाप्नोतिवैसकृत् ॥ २५ ॥ दत्त्वाल्पमपिदेवेशिन्यायेनोपार्जितंधनम् ॥ अविमुक्तेम हक्षेत्रेनदरिद्रोभवेत्क्वचित् ॥ २६ ॥ विविधंधनमावर्ज्ययोऽविमुक्तेनयच्छति ॥ संप्राप्यनिधनंमूढोऽन्यत्रशोचतिसर्वदा ॥ २७ ॥ रम्याणियानिरत्ना निगोगजाश्वांबराण्यपि ॥ कृतानितानिश्रेयोर्थमाविमुक्तनिवासिनाम् ॥ २८ ॥

सर्वव्रतकृतमशेषव्रतैःसंपादितम् ॥ सर्वयज्ञकृतमितिक्वचित् ॥ श्रेयःफलम् ॥ वाचंयमोमौनी ॥ शिवेहेपार्वति ॥ वाचंयमात्र्वतानितिक्वचित् ॥ अत्रवाङ्नियमस्यमहत्फलांतरमाह ॥ वाचामिति ॥ वाचंयमान्मौनात्तान्पूर्वोक्तान्सर्वान्कामान्लभतइत्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ रम्याणीति ॥ यानिरम्याणिरत्नादीनितान्यविमुक्तनिवासिनांश्रेयोर्थं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कृतानिदानद्वाराविधात्रेतिशेषः ॥ २८ ॥ तर्हिकिंस्वर्गाद्यर्थमेवतद्धनंनेत्याह ॥ विश्वेशप्रीणनार्थायैवेति ॥ तत्रदृष्टांतः ॥ निधनंवायथेत्यर्थः ॥ २९ ॥ १३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ प्राकृतैःप्रकृतिकार्यैः ॥ ३८ ॥ पाशान्कथयन्कैमुत्यन्यायमाह ॥ चतुर्विंशतिभिरिति ॥ चतुर्विंशतिभिःप्रकृतिमहदहंकारपंचतन्मात्रषोडशविकारैः ॥ त्रिगुणैस्तमोरजःसत्त्वात्मकैः ॥ क्रिययाधर्मार्थकामादिलक्षणया ॥ दृढैरच्छेद्यैः ॥ ३९ ॥ १४० ॥ ४१ ॥ ४२ ॥ प्राज्यमुत्कृष्टम् ॥ ४३ ॥ ४४ ॥ नपापेभ्यो

विश्वेशप्रीणनार्थायधनंनिधनमेववा ॥ न्यायेनकाश्यांयःकुर्यात्सधन्यःसचधर्मवित् ॥ २९ ॥ योसौविश्वेश्वरोदेवःकाशीपुर्यांसुमेस्थितः ॥ लिंगरूपधरःसाक्षान्ममश्रेयास्पदंहितत् ॥ १३० ॥ अविमुक्तंमहत्क्षेत्रंपंचक्रोशपरीमितम् ॥ ज्योतिर्लिंगंतदेकंहिज्ञेयंविश्वेश्वराभिधम् ॥ ३१ ॥ एकदेशस्थितमपियथामार्तंडमंडलम् ॥ दृश्यतेसर्वगंसर्वैःकाश्यांविश्वेश्वरस्तथा ॥ ३२ ॥ निष्प्रत्यूहेनयोगेननानाजन्मार्जितेनच ॥ यत्फलंलभ्यतेऽन्यत्रतत्काश्यांत्यजतस्तनुम् ॥ ३३ ॥ तप्त्वातपांसिसर्वाणिबहुकालंजितेंद्रियैः ॥ यत्फलंलभ्यतेऽन्यत्रतत्काश्यामेकरात्रतः ॥ ३४ ॥ अक्षेत्रमहिमज्ञोपिश्रद्धाहीनोपिकालतः ॥ काशीप्रवेशादनघोऽमृतत्वंलभतेनृतः ॥ ३५ ॥ कृत्वाप्येनांसिचोग्राणिकालात्प्राप्याथकाशिकाम् ॥ त्यक्त्वातनुंप्रसादान्ममामेवप्रतिपद्यते ॥ ३६ ॥ विनाममप्रसादंवैकःकाशींप्रतिपद्यते ॥ विनाब्रध्नंविशालाक्षिदिनकृत्कइहोच्यते ॥ ३७ ॥ अप्राप्यकाशींकोदेविनिरंतरसुखंलभेत् ॥ ब्रह्माद्याःप्राकृतैःपाशैर्यतोबद्धानिरंतरम् ॥ ३८ ॥ चतुर्विंशतिभिःपाशैस्त्रिगुणैःक्रिययादृढैः ॥ कंठेबद्धाविमुच्यंतेकथंकाशींविनाजनाः ॥ ३९ ॥ बहूपसर्गोयोगोयंकृच्छ्रसाध्यंतपोहियत् ॥ योगाद्भ्रष्टस्तपोभ्रष्टोगर्भक्लेशसहःपुनः ॥ १४० ॥ कृत्वापिकाश्यांपापानिकाश्यामेवम्रियेतचेत् ॥ भूत्वारुद्रपिशाचोपिपुनर्मुक्तिमवाप्स्यति ॥ ४१ ॥ काश्यांमृतानांजंतूनांदैवात्पापकृतामपि ॥ नपातोनरकेतेषांतेषांशास्ताहमेवयत् ॥ ४२ ॥ कार्यंविज्ञायसापायंस्मृत्वागर्भस्यवेदनाम् ॥ त्यक्त्वाराज्यमपिप्राज्यंसेव्याकाशीनिरंतरम् ॥ ४३ ॥ अतर्कितंसमभ्येत्ययमदूताःसुदारुणाः ॥ बद्ध्वापाशैर्हनिष्यंतिक्षिप्रंकाशींततःश्रयेत् ॥ ४४ ॥ नपापेभ्योभयंयत्रनभयंयत्रवैयमात् ॥ नगर्भवासभीर्यत्रतांकाशींकोनसंश्रयेत् ॥ ४५ ॥

भयंयत्रेति ॥ अत्रकृतानांपापानांपंचक्रोशयात्रादिनाविनाशात् ॥ तथाचपाद्मे ॥ संचितंयद्बहिःक्षेत्राद्वाराणस्यांतथैवच ॥ अंतर्गृहेकृतंयच्चजन्मांतरकृतंचयत् ॥ इत्युपक्रम्य ब्रह्महत्यादिपापानिप्रदक्षिणपदेपदे ॥ नश्यंतिसकलान्येवमत्क्षेत्रस्यप्रदक्षिणादिति ॥ अन्यत्रजन्मांतरेवाकृतानांप्रवेशदर्शनादिनाक्षयात् ॥ तथाचात्रैवोक्तम् ॥ पंचक्रोशींप्रविशतइति ॥ ब्रह्मवैवर्तेच ॥ कालाद्भयंनास्तियत्रयत्रपापभयंनहि ॥ जन्मांतरसहस्रेषुकृतंनश्यतिदर्शनादिति॥यत्तुपाद्मपुराणेकाशीमाहात्म्येपंचाध्याय्यांभृगुणोक्तंकाशीकृतमहापातकोपपातकानांभोगादेवक्षयइति तत्तुपंचक्रोश्यादियात्राव्यतिरेकेणेतिज्ञात



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

व्यम् ॥ अन्यथापंचक्रोश्यादियात्राविधायकशास्त्रंपीडयेत ॥ ४५ ॥ प्राप्यंप्राप्तव्यम् ॥ प्राप्तमितिक्वचित् ॥ ४६ ॥ ४७ ॥ ४८ ॥ दूरमिति ॥ अहंयुवामरणंममदूरेइतिचित्तेनधार्यंनधारणं
कर्तव्यम् ॥ तुशब्दादेतादृशंवचनंनश्रोतव्यमित्यर्थः ॥ किंतुनिभृतंनिश्चलंगुप्तंवायथास्यात्तथायममहिषग्रीवाभरणघंटारवोविषयांतरव्यासंगंविहायश्रोतव्यः ॥ घंटाग्रीवंमहिषमारुह्ययमोमांनेतुमागत
इतिसदाभावनीयमित्यर्थः ॥ तस्मान्नैकटचाच्छीघ्रमेववार्धकमप्राप्येतियावत् ॥ प्रकर्षेणोत्कटाअधिकायाश्रमघटाश्रमसमूहस्तामप्राप्यजीर्णांपर्णकुटींहित्वाजीर्णपर्णकुटीसदृशंतुच्छंगृहंहित्वापटुमतिः
सुबुद्धिर्धूर्जटेःपुरींगच्छेदित्यर्थः ॥ प्रकटोत्कटइतिपाठेकाशीप्राप्तावत्युत्कंठावानित्यर्थः ॥ प्रकटोत्कटश्रुतिपुटीमितिपाठेकाशीविशेषणम् ॥ गुणवर्णनादिश्रवणेच्छयाप्रकटोत्कटमतिशयोत्कटंश्रुतिपुटं
श्रवणयुगलंयस्यांतामिति ॥ ४९ ॥ १५० ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांषड्विंशोध्यायः ॥ २६ ॥ ॥ छ ॥ : ॥ छ ॥ ॥ छ ॥ ॥ सप्ताधिकतमे

अद्यप्रातःपरश्वोवामरणंप्राप्यमेवच ॥ यावत्कालविलंबोस्तितावत्काशींसमाश्रयेत् ॥ ४६ ॥ प्राप्तेतुमरणेपुंसांपुनर्जन्मपुनर्मृतिः ॥ अपुनर्भवभू
मिंचतस्मात्काशींश्रयेद्बुधः ॥ ४७ ॥ पुत्रक्षेत्रकलत्राख्यांत्यक्त्वामायांहिवैष्णवीम् ॥ भवांतरेनेकरूपांभवघ्नींकाशिकांश्रयेत् ॥४८॥ ॥ स्कंदउवाच ॥
दूरेमेमरणंयुवाहमधुनाधार्यंनचित्तेत्विति श्रोतव्योनिभृतंकृतांतमहिषग्रैवेयघंटारवः ॥ नैकट्यात्प्रकटोत्कटश्रमघटामप्राप्यहित्वाद्रुतंजीर्णांपर्णकुटींततः
पटुमतिर्गच्छेत्पुरींधूर्जटेः ॥ ४९ ॥ व्यासउवाच ॥ अगस्त्यस्यपुरःसूतकथयित्वाकथामिमाम् ॥ सर्वपापप्रशमनींपुनःस्कंदउवाचह ॥ १५० ॥
इति श्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थे काशीखंडेपूर्वार्द्धेमणिकर्णिकाख्यानंनामषड्विंशोऽध्यायः ॥ २६ ॥ ॥ छ ॥ ॥ छ ॥
स्कंदउवाच ॥ वाराणसीतिप्रथितंयथाचानंदकाननम् ॥ तथाचकथयामीहदेवदेवेनभाषितम् ॥ १ ॥ ॥ ईश्वरउवाच ॥ ॥ निशामयमहाबाहोवि
ष्णोत्रैलोक्यसुंदर ॥ प्राप्तंवाराणसीत्याख्यामविमुक्तंयथातथा ॥ २ ॥ निर्दग्धान्सागराञ्छ्रुत्वाकपिलक्रोधवह्निना ॥ अश्वमेधाश्वसंयुक्तान्पूर्व
जान्स्वान्भगीरथः ॥ ३ ॥ सूर्यवंशेमहातेजाराजापरमधार्मिकः ॥ आरिराधयिषुर्गंगांतपसेकृतनिश्चयः ॥४॥ हिमवंतंनगश्रेष्ठममात्यन्यस्तराज्यधूः ॥
जगामयशसांराशिरुद्दिधीर्षुःपितामहान् ॥ ५ ॥ ब्रह्मशापाग्निनिर्दग्धान्महादुर्गतिगानपि ॥ विनात्रिमार्गगांविष्णोकोजंतूंस्त्रिदिवंनयेत् ॥ ६ ॥

विंशेध्यायेपापप्रमोदनः ॥ सुखमोक्षप्रदायाःश्रीगंगायामहिमोच्यते ॥ १ ॥ अतीतेऽध्यायेइदंक्षेत्रंयंकालमारभ्यपरांप्रथितिमापन्नम्आनंदकाननमविमुक्तंकाशीतिनामात्रितयादिकंचनिरूप्यात्र
प्रथमतोवाराणसीतिषष्ठप्रश्नस्योत्तरंवक्तुंप्रतिजानीते ॥ वाराणसीति ॥ १ ॥ २ ॥ निर्दग्धानिति ॥ भगीरथःकपिलस्ययःक्रोधस्तेनजातोयस्तेषांस्वदेहजोऽग्निस्तेन ॥ यथाश्रुतव्याख्यानेनसाधुवादो
मुनिकोपभर्जिताइत्यादिभागवतवचनविरोधात् ॥ सागरान्सगरस्यपुत्रान्स्वस्यपूर्वजान्पितामहान्निर्दग्धान्श्रुत्वातपसेकृतनिश्चयःसन्हिमवंतंजगामेतितृतीयेनान्वयः ॥ अश्वमेधस्यांगभूतेऽश्वेरक्षणार्थं
संयुक्तान्पित्रानियुक्तान् ॥ संसक्तानितिपाठेसंलग्नानित्यर्थः ॥ ३ ॥ ४ ॥ अमात्येषुन्यस्तानिक्षिप्ताराज्यधूःराज्यभारोयेनसतथा ॥ ५ ॥ ननुपितॄणामुद्धारार्थमन्यदेवांकिंचित्साधनमनुष्ठेयंकिंहिमालयं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

गत्वागंगाराधनेनतत्राह ॥ ब्रह्मशापेति ॥ ६ ॥ ननुकथंतस्याजलमय्याएतादृशंसामर्थ्यंतत्राह ॥ ममैवेति ॥ ७ ॥ तिस्रइच्छाज्ञानक्रियारूपाःसत्त्वरजस्तमोरूपावाशक्तयोयस्याःसात्रिशक्तिः ॥ आनंदाऽमृतरूपासुखात्मककैवल्यस्वरूपा ॥ धर्मस्यशुद्धत्वंनिर्व्याजत्वम् ॥ अविद्यातत्कार्ययोर्धारणाद्धर्मः ॥ शुद्धश्चासौधर्मश्चेतिशुद्धधर्मःपरमात्मातत्स्वरूपिणीशुद्धधर्मस्वरूपिणी ॥ ८ ॥ किमत्रप्रमाणमहमेवेश्वरइत्याह ॥ यामेतामिति ॥ यद्वा कासेत्यपेक्षायामंगुल्यानिर्दिशति ॥ यामेतामिति ॥ स्वलीलयास्वस्यक्रीडया ॥ स्वमौलिनेतिक्वचित् ॥ परब्रह्मस्वरूपिणींपरब्रह्मस्वरूपपरिपूर्णाम् ॥९॥१०॥ सांगाषडंगसहिता ॥ तानिचषडंगानिशिक्षाकल्पोव्याकरणंछन्दोनिरुक्तज्योतींषि ॥ चतुर्विधाचतुष्प्रकाराऋग्यजुःसामाथर्वरूपेत्यर्थः ॥ चतुर्मितेतिपाठेचतुर्द्धामितापरिमितागंगाऽलकनंदाचक्षुर्भद्रे

ममैवसापरामूर्तिस्तोयरूपाशिवात्मिका ॥ ब्रह्मांडानामनेकानामाधारःप्रकृतिःपरा ॥ ७ ॥ शुद्धविद्यास्वरूपाचत्रिशक्तिःकरुणात्मिका ॥ आनंदामृतरूपाचशुद्धधर्मस्वरूपिणी ॥ ८ ॥ यामेतांजगतांधात्रींधारयामिस्वलीलया ॥ विश्वस्यरक्षणार्थायपरब्रह्मस्वरूपिणीम् ॥ ९ ॥ त्रैलोक्येयानितीर्थानिपुण्यक्षेत्राणियानिच ॥ सर्वत्रसर्वेयेधर्माःसर्वयज्ञाःसदक्षिणाः ॥ १० ॥ तपांसिविष्णोसर्वाणिश्रुतिःसांगाचतुर्विधा ॥ अहंत्वंचकश्चापिदेवतानांगणाश्चये ॥ ॥ ११ ॥ पुरुषार्थाश्चसर्वेवैशक्तयोविविधाश्रयाः ॥ गंगायांसर्वएवैतेसूक्ष्मरूपेणसंस्थिताः ॥ १२ ॥ सस्नातःसर्वतीर्थेषुसर्वक्रतुषुदीक्षितः ॥ चीर्णसर्वव्रतःसोपियस्तुगंगांनिषेवते ॥ १३ ॥ तपांसितेनतप्तानिसर्वदानप्रदःसच ॥ सप्राप्तयोगनियमोयस्तुगंगांनिषेवते ॥१४॥ सर्ववर्णाश्रमेभ्यश्चवेदविद्भ्यश्चवैतथा ॥ शास्त्रार्थपारगेभ्यश्चगंगास्नायीविशिष्यते ॥ १५ ॥ मनोवाक्कायजैर्दोषैर्दुष्टोबहुविधैरपि॥ वीक्ष्यगंगांभवेत्पूतःपुरुषोनात्रसंशयः ॥१६॥ कृतेसर्वत्रतीर्थानित्रेतायांपुष्करंपरम् ॥ द्वापरेतुकुरुक्षेत्रंकलौगंगैवकेवलम् ॥ १७ ॥ पूर्वजन्मांतराभ्यासवासनावशतोहरे ॥ गंगातीरेनिवासःस्यान्मदनुग्रहतःपरात् ॥ १८ ॥ ध्यानंकृतेमोक्षहेतुस्त्रेतायांतच्चवैतपः ॥ द्वापरेतद्द्वयंयज्ञाःकलौगंगैवकेवलम् ॥ १९ ॥ योदेहपतनाद्यावद्गंगातीरंनमुंचति ॥ सहिवेदांतविद्योगीब्रह्मचर्यव्रतीसदा ॥ २० ॥ कलौकलुषचित्तानांपरद्रव्यरतात्मनाम् ॥ विधिहीनक्रियाणांचगतिर्गंगांविनानहि ॥ २१ ॥ अलक्ष्मीःकालकर्णीचदुःस्वप्नोदुर्विचिंतितम् ॥ गंगागंगेतिजपनात्तानिनोपविशंतिहि ॥ २२ ॥ गंगाहिसर्वभूतानामिहामुत्रफलप्रदा ॥ भावानुरूपतोविष्णोसदासर्वजगद्धिता ॥ २३ ॥

तिपरिगणितेतियावत् ॥ कश्चापिब्रह्मापि ॥ अयमेवपाठः ॥ गणामरुदादयः ॥ ११ ॥ पुरुषार्थाधर्मार्थकाममोक्षाः ॥ मूर्तिमंतोप्येतेसूक्ष्मरूपेणादृश्यरूपेणसंस्थिताइत्यर्थः ॥ १२ ॥ ॥ १३ ॥ सर्वदानप्रदःसर्वदानंप्रकर्षेणददातीतितथा ॥ सर्वदानव्रतइतिपाठेसर्वाणिदानानिव्रतानिचयस्यसः ॥ १४ ॥ १५ ॥ पूतोमुक्तः ॥ मुक्तिस्त्वदर्शनाद्देवीत्युक्तत्वात् ॥ पवित्रोवा ॥ दृष्टाजन्मशतंपापंहंतिगंगेत्युक्तेः ॥ १६ ॥ १७ ॥ १८ ॥ तच्चवैतपःतद्ध्यानंतपश्चमोक्षहेतुरितिसर्वत्रान्वेति ॥ कलौगंगैवेति ॥ तथाचोक्तम् ॥ अग्निहोत्रादिकर्माणिसापायानिकलौयुगे ॥ गंगास्नानंहरेर्नामनिरपायमिदंद्वयमिति ॥ १९ ॥ २० ॥ २१ ॥ कालकर्णीकाकविष्ठाराक्षसीविशेषोवा ॥ दुःस्वप्नंदुष्टस्वप्नः ॥ षंढत्वमार्षम् ॥ दुःस्वप्नइत्येववापाठः ॥ २२ ॥ भावानुरूपतो



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भक्त्यनुसारेण ॥ २३ ॥ २४ ॥ गंगायांतत्तीरइत्यर्थः ॥ २५ ॥ २६ ॥ श्रद्धेति ॥ श्रद्धासाध्यत्वाच्छ्रद्धाधर्मइत्युपचारः ॥ एवमग्रेपि ॥ तथाचोक्तंगीतायाम् ॥ श्रद्धावाँल्लभतेज्ञानमिति ॥ श्रद्धयाग्निःसमिद्ध्यतइतिश्रुतेश्च ॥ २७ ॥ २८ ॥ ब्रह्मांडबाह्यस्थमिति ॥ तथाचभागवते ॥ यज्ञलिंगस्यविष्णोर्विचक्रमतोवामपादांगुष्ठनखनिर्भिन्नोर्ध्वांडकटाहविवरेणांतःप्रविष्टायाबाह्यजलधारेति ॥

यज्ञदानतपोयोगजपाःसनियमायमाः ॥ गंगासेवासहस्रांशंनलभंतेकलौहरे ॥ २४ ॥ किमष्टांगेनयोगेनकिंतपोभिःकिमध्वरैः ॥ वासएवहिगंगायां ब्रह्मज्ञानस्यकारणम् ॥ २५ ॥ अपिदूरस्थितस्यापिगंगामाहात्म्यवेदिनः ॥ अयोग्यस्यापिगोविंदभक्त्यागंगाप्रसीदति ॥ २६ ॥ श्रद्धाधर्मःपरः सूक्ष्मःश्रद्धाज्ञानंपरंतपः ॥ श्रद्धास्वर्गश्चमोक्षश्चश्रद्धयासाप्रसीदति ॥ २७ ॥ अज्ञानरागलोभाद्यैःपुंसांसंमूढचेतसाम् ॥ श्रद्धानजायतेधर्मेगंगायां चविशेषतः ॥ २८ ॥ बहिःस्थितंजलंयद्वन्नारिकेलांतरेस्थितम् ॥ तथाब्रह्मांडबाह्यस्थंपरब्रह्मांबुजाह्नवी ॥ २९ ॥ गंगालाभात्परोलाभःक्वचिदन्योन विद्यते ॥ तस्माद्गंगामुपासीतगंगैवपरमःपुमान् ॥ ३० ॥ शक्तस्यपंडितस्यापिगुणिनोदानशीलिनः ॥ गंगास्नानविहीनस्यहरेजन्मनिरर्थकम् ॥ ३१ ॥ वृथाकुलंवृथाविद्यावृथायज्ञावृथातपः ॥ वृथादानानितस्येहकलौगंगांनयोभजेत् ॥ ३२ ॥ गुणवत्पात्रपूजायांनस्याद्वैतादृशंफलम् ॥ यथागंगाजलस्ना नपूजनेविधिनाफलम् ॥ ३३ ॥ ममतेजोग्निगर्भेयंममवीर्यातिसंवृता ॥ दाहिकासर्वदोषाणांसर्वपापविनाशिनी ॥ ३४ ॥ स्मरणादेवगंगायाःपापसं घातपंजरम् ॥ शतधाभेदमायातिगिरिर्वज्रहतोयथा ॥ ३५ ॥ गंगांगच्छतियस्त्वेकोयस्तुभक्त्यानुमोदयेत् ॥ तयोस्तुल्यंफलंप्राहुर्भक्तिरेवात्रकारणम् ॥ ॥ ३६ ॥ गच्छंस्तिष्ठन्स्वपन्ध्यायन्भुंजञ्जाग्रत्स्वपन्वदन् ॥ यःस्मरेत्सततंगंगांसहिमुच्येतबंधनात् ॥ ३७ ॥ पितॄनुद्दिश्ययोभक्त्यापायसंमधुसं युतम् ॥ गुडसर्पिस्तिलैःसार्धंगंगांभसिविनिक्षिपेत् ॥ ३८ ॥ तृप्ताभवंतिपितरस्तस्यवर्षशतंहरे ॥ यच्छंतिविविधान्कामान्परितुष्टाःपितामहाः ॥ ॥ ३९ ॥ लिंगेसंपूजितेसर्वमर्चितंस्याज्जगद्यथा ॥ गंगास्नानेनलभतेसर्वतीर्थफलंतथा ॥ ४० ॥ गंगायांतुनरःस्नात्वायोलिंगंनित्यमर्चति ॥ एकेनजन्मनामुक्तिंपरांप्राप्नोतिसध्रुवम् ॥ ४१ ॥ अग्निहोत्रंचयज्ञाश्चव्रतदानतपांसिच ॥ गंगायांलिंगपूजायाःकोट्यंशेनापिनोसमाः ॥ ४२ ॥

तथाभगवत्पादीयवचनंच ॥ ब्रह्मांडंखंडयंतीहरशिरसिजटावल्लिमुल्लासयंतीस्वर्लोकादापतंतीकनकगिरिगुहागंडशैलात्स्खलंती ॥ क्षोणीपृष्ठेलुठंतीदुरितचयचमूंनिर्भरंभर्त्सयंतीपाथोधिंपूरयंतीसुरनगरस रित्पावनीनःपुनात्विति ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ममवीर्यातिसंवृताममप्रभावातिशयेनसंपन्नामत्सदृशीत्यर्थः ॥ अभिसंवृतेतिपाठेपिसएवार्थः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ हैतुकाःसत्क्रियासुहेतुभिःसंदेहोत्पादकाः ॥ बहुसंशयाद्दृष्टादृष्टकर्मसुनानासंशयवंतः ॥ ५४ ॥ ५५ ॥ ५६ ॥ सिद्धयोऽणिमाद्याः ॥ सिद्धिलिंगानिसिद्धिदानिलिंगानिप्रत्यक्षमाहात्म्यभांजीतिवा ॥ स्पर्शलिंगानियत्संपर्केणलोहादयःसुवर्णा



गंगांगंतुंविनिश्चित्यकृत्वाश्राद्धादिकंगृहे ॥ स्थितस्यसम्यक्संकल्पात्तस्यनंदंतिपूर्वजाः ॥ ४३ ॥ पापानिचरुदंत्याशुहाक्वयास्यामइत्यलम् ॥ लोभमोहादिभिःसार्धंमंत्रयंतिपुनःपुनः ॥ ४४ ॥ यथानगंगांयात्येषतथाविघ्नंप्रकुर्महे ॥ गंगांगतोयथाचैषनउच्छित्तिंविधास्यति ॥ ४५ ॥ गृहाद्गंगावगाहार्थंगच्छतस्तुपदेपदे ॥ निराशानिव्रजंत्येवपापान्यस्यशरीरतः ॥ ४६ ॥ पूर्वजन्मकृतैःपुण्यैस्त्यक्त्वालोभादिकंहरे ॥ व्युदस्यसर्वविघ्नौघान्गंगांप्राप्नोतिपुण्यवान् ॥ ४७ ॥ अनुषंगेणमौल्येनवाणिज्येनापिसेवया ॥ कामासक्तोपिवामर्त्योगंगास्नातोदिवंव्रजेत् ॥ ४८ ॥ अनिच्छयापिसंस्पृष्टोदहनोहियथादहेत् ॥ अनिच्छयापिसंस्नातागंगापापंतथादहेत् ॥ ४९ ॥ तावद्भ्रमतिसंसारेयावद्गंगांनसेवते ॥ संसेव्यगंगांनोजंतुर्भवक्लेशंप्रपश्यति ॥ ५० ॥ योगंगांभसिनिस्नातोभक्त्यासंत्यक्तसंशयः ॥ मनुष्यचर्मणानद्धःसदेवोनात्रसंशयः ॥ ५१ ॥ गंगास्नानार्थमुद्युक्तोमध्येमार्गंमृतोयदि ॥ गंगास्नानफलंसोपितदाप्नोतिनसंशयः ॥ ५२ ॥ माहात्म्यंयेचगंगायाःशृण्वंतिचपठंतिच ॥ तेप्यशेषैर्महापापैर्मुच्यंतेनात्रसंशयः ॥ ५३ ॥ दुर्बुद्धयोदुराचाराहैतुकाबहुसंशयाः ॥ पश्यंतिमोहिताविष्णोगंगामन्यनदीमिव ॥ ५४ ॥ जन्मांतरकृतैर्दानैस्तपोभिर्नियमैर्व्रतैः ॥ इहजन्मनिगंगायांनृणांभक्तिःप्रजायते ॥ ५५ ॥ गंगाभक्तिमतामर्थेमहेंद्रादिपुरेषुच ॥ हर्म्याणिरम्यभोगानिनिर्मितानिस्वयंभुवा ॥ ५६ ॥ सिद्धयःसिद्धिलिंगानिस्पर्शलिंगान्यनेकशः ॥ प्रासादारत्नरचिताश्चिंतामणिगणाअपि ॥ ५७ ॥ गंगाजलांतस्तिष्ठंतिकलिकल्मषभीतितः ॥ अतएवहिसंसेव्याकलौगंगेष्टसिद्धिदा ॥ ५८ ॥ सूर्योदयेतमांसीववज्रपातभयान्नगाः ॥ तार्क्ष्येक्षणाद्यथासर्पामेघावाताहताइव ॥ ५९ ॥ तत्त्वज्ञानाद्यथामोहःसिंहंदृष्ट्वायथामृगाः ॥ तथासर्वाणिपापानियांतिगंगेक्षणात्क्षयम् ॥ ६० ॥ दिव्यौषधैर्यथारोगालोभेनचयथागुणाः ॥ यथाग्रीष्मोष्मसंपत्तिरगाधह्रदमज्जनात् ॥ ६१ ॥



भवंतीतादृशपाषाणघटितानिलिंगानीत्यर्थः ॥ स्पर्शमात्रेणधर्मार्थकाममोक्षसाधकानिलिंगानीतिवा ॥ रत्नरचितारत्नैर्विनिर्मिताः ॥ रत्नखचिताइतिपाठेरत्नैर्निबद्धाइत्यर्थः ॥ ॥ ५७ ॥ अतएवेति ॥ यतःसिद्धादयःपापभीतितस्तद्बाधापरिहारार्थंगंगाजलमाश्रित्यतिष्ठंतिअतस्तस्याःसेव्यत्वमित्यर्थः ॥ ५८ ॥ ५९ ॥ ६० ॥ संपत्तिःसंपन्नतासंप्राप्तिर्वा ॥

CC-0. Shri Krishna Museum Kurukshetra. Digitized by eGangotri

संततिरितिकचित् ॥ ६१ ॥ ६२ ॥ ६३ ॥ दंभोधर्मध्वजित्वम् ॥ कौटिल्यंमत्सरः ॥ मायावंचनापरप्रतारणमित्येतत् ॥ ६४ ॥ ६५ ॥ ६६ ॥ नास्तिकास्त्यक्तवेदप्रामाण्यावौद्धादिप्रभे दाइत्यर्थः ॥ ६७ ॥ दिवःकांतिमत्याःस्वप्रकाशपरमसुखस्वरूपायानिर्वृतेरित्यर्थः ॥ सोपानमारोहमार्गम् ॥ ६८ ॥ श्रीमतीजाह्नवीत्यत्रपुंवद्भावाभावआर्षः ॥ ६९ ॥ ७० ॥ ७१ ॥ ॥ ७२ ॥ ७३ ॥ शिवभक्तस्यलक्षणमाह ॥ हरेयइति ॥ ७४ ॥ वात्याचक्रवातः ॥ पुण्यरूपंतोयंवोढुंशीलंयस्याःसापुण्यवाहिनी ॥ ७५ ॥ ७६ ॥ ७७ ॥ तदालयकरस्तयोःशिववि

तूलशैलःस्फुलिंगेनयथानश्यतितत्क्षणात् ॥ तथादोषाःप्रणश्यंतिगंगांभःस्पर्शनाद्ध्रुवम् ॥ ६२ ॥ क्रोधेनचतपोयद्वत्कामेनचयथामतिः ॥ अनये नयथालक्ष्मीर्विद्यामानेनवैयथा ॥ ६३ ॥ दंभकौटिल्यमायाभिर्यथाधर्मोविनश्यति ॥ तथानश्यंतिपापानिगंगायादर्शनेनतु ॥ ६४ ॥ मानुष्यंदुर्लभं प्राप्यविद्युत्संपातचंचलम् ॥ गंगांयःसेवतेसोत्रबुद्धेःपारंपरंगतः ॥ ६५ ॥ विधूतपापायेमर्त्याःपरंज्योतिःस्वरूपिणीम् ॥ सहस्रसूर्यप्रतिमांगंगांपश्यं तितेभुवि ॥ ६६ ॥ साधारणांभसापूर्णांसाधारणनदीमिव ॥ पश्यंतिनास्तिकागंगांपापोपहतलोचनाः ॥ ६७ ॥ संसारमोचकश्चाहंजनानामनुकंपया ॥ गंगातरंगरूपेणसोपानंनिर्ममेदिवः ॥ ६८ ॥ सर्वएवशुभःकालःसर्वोदेशस्तथाशुभः ॥ सर्वोजनोदानपात्रंश्रीमतीजाह्नवीतटे ॥ ६९ ॥ यथाश्वमेधो यज्ञानांनगानांहिमवान्यथा ॥ व्रतानांचयथासत्यंदानानामभयंयथा ॥ ७० ॥ प्राणायामश्चतपसांमंत्राणांप्रणवोयथा ॥ धर्माणामप्यहिंसाचकाम्यानां श्रीर्यथावरा ॥ ७१ ॥ यथात्मविद्याविद्यानांस्त्रीणांगौरीयथोत्तमा ॥ सर्वदेवगणानांचयथात्वंपुरुषोत्तम ॥ ७२ ॥ सर्वेषामेवपात्राणांशिवभक्तोयथा वरः ॥ तथासर्वेषुतीर्थेषुगंगातीर्थंविशिष्यते ॥ ७३ ॥ हरेयश्चावयोर्भेदंनकरोतिमहामतिः ॥ शिवभक्तःसविज्ञेयोमहापाशुपतश्चसः ॥ ७४ ॥ पापपां सुमहावात्यापापद्रुमकुठारिका ॥ पापेंधनदवाग्निश्चगंगेयंपुण्यवाहिनी ॥ ७५ ॥ नानारूपाश्चपितरोगाथागायंतिसर्वदा ॥ अपिकश्चित्कुलेस्माकंगं गास्नायीभविष्यति ॥ ७६ ॥ देवर्षीन्परिसंतर्प्यदीनानाथांश्चदुःखितान् ॥ श्रद्धयाविधिनास्नात्वादास्यतेसलिलांजलिम् ॥ ७७ ॥ अपिनःसकुले भूयाच्छिवेविष्णौचसाम्यदृक् ॥ तदालयकरोभक्त्यातस्यसंमार्जनादिकृत् ॥ ७८ ॥ अकामोवासकामोवातिर्यग्योनिगतोपिवा ॥ गंगायांयोमृतोमर्त्यो नरकंसनपश्यति ॥७९॥ तीर्थमन्यत्प्रशंसंतिगंगातीरेस्थिताश्चये ॥ गंगांनबहुमन्यंतेतेस्युर्निरयगामिनः ॥८०॥ मांचत्वांचैवयोद्वेष्टिगंगांचपुरुषाधमः॥ स्वकीयैःपुरुषैःसार्धंसघोरंनरकंव्रजेत् ॥ ८१ ॥ षष्टिर्गणसहस्राणिगंगांरक्षंतिसर्वदा ॥ अभक्तानांचपापानांवासेविघ्नंप्रकुर्वते ॥ ८२ ॥ कामक्रोधमहामो हलोभादिनिशितैःशरैः ॥ घ्नंतितेषांमनस्तत्रस्थितिंचापनयंतिच ॥ ८३ ॥

ष्णोःप्रासादकर्ता ॥ तस्यतयोरालयस्यसंमार्जनादिकृद्रजोवारणादिकृत् ॥ आदिपदेनोक्षणलेपनादीनिगृह्यंते ॥ ७८ ॥ तिर्यग्योनिगतोपिवेत्यपिशब्दाज्जलजंत्वादीनिगृह्यंते ॥ मर्त्योमरण धर्मायःकश्चिदपीत्यर्थः ॥ ७९ ॥ गंगांनबहुमन्यंतेसर्वतीर्थाधिकांनमन्यंतइत्यर्थः ॥ ८० ॥ ८१ ॥ ८२ ॥ मोहोऽविवेकस्तस्यमहत्त्वंनामतत्त्वज्ञानमंतरेणापारिच्छेद्यत्वम् ॥ घ्नंत्युच्चाटयंति ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तत्रगंगातीरे ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥८८ ॥ तिथिनक्षत्रपूर्वादियत्संकल्पवाक्यंतन्नापेक्ष्यमित्यर्थः ॥ पर्वादीतिपाठेआदिपदेनादिनादिकंगृह्यते ॥८९॥ भागीरथीतीरंसिद्धिक्षेत्रम् ॥ तथाचोक्तम् ॥ गंगातीरेवसेन्नित्यंभिक्षुर्मोक्षपरायणः॥ सिद्धिक्षेत्रंतुतज्ज्ञेयंयावद्धनुःशतत्रयमिति ॥ यस्तुभागीरथींगंगांसुखसेव्यांनसेवतइतिक्वचित्पाठस्तदातुगंगामित्युक्तेकावेर्यादावतिप्रसंगःस्यादेतदु क्तंभागीरथीमिति ॥ कावेरीतुंगभद्राचकृष्णावेणीचगौतमी ॥ भागीरथीतिविख्याताःपंचगंगाःप्रकीर्तिताइति॥तासामपिगंगात्वात् ॥ भागीरथीमित्युक्तेभगीरथेनाधिष्ठितांभागीरथीमित्ययोध्यापुर्यां दावपियातितद्व्यवच्छेदार्थमाह ॥ गंगामिति ॥ ९० ॥ ९१ ॥ प्रतिकृतेःप्रतिमायाः ॥ ९२ ॥ वाचकप्रीणनाढ्यनैर्द्रव्यैर्वाचकस्यसन्तर्पणादित्यर्थः ॥ ९३ ॥ ९४ ॥ मंत्रजप्तैःॐनमःशिवायेत्यने

गंगांसमाश्रयेद्यस्तुसमुनिःसचपंडितः ॥ कृतकृत्यःसाविज्ञेयःपुरुषार्थचतुष्टये ॥ ८४ ॥ गंगायांचसकृत्स्नातोहयमेधफलंलभेत् ॥ तर्पयंश्चपितॄंस्तत्र तारयेन्नरकार्णवात् ॥ ८५ ॥ नैरंतर्येणगंगायांमासंयःस्नातिपुण्यवान् ॥ शक्रलोकेसवसतियावच्छक्रःसपूर्वजः ॥ ८६ ॥ अब्दंयःस्नातिगंगायांनैरंतर्ये णपुण्यभाक् ॥ विष्णोर्लोकंसमासाद्यससुखंसंवसेन्नरः ॥ ८७ ॥ गंगायांस्नातियोमर्त्योयावज्जीवंदिनेदिने ॥ जीवन्मुक्तःसविज्ञेयोदेहांतेमुक्तएवसः ॥ ॥८८॥ तिथिनक्षत्रपर्वादिनापेक्ष्यंजाह्नवीजले ॥ स्नानमात्रेणगंगायांसंचितावंविनश्यति ॥ ८९ ॥ पंडितोपिसमूर्खःस्याच्छक्तियुक्तोप्यशक्तिकः ॥ यस्तुभागीरथीतीरंसुखसेव्यंनसंश्रयेत् ॥ ९० ॥ किंवायुषाप्यरोगेणविकासिन्याथकिंश्रिया ॥ किंवाबुद्ध्याविमलयायदिगंगांनसेवते ॥ ९१ ॥ यःकारयेदायतनंगंगाप्रतिकृतेर्नरः ॥ भुक्त्वासभोगान्प्रेत्यापियातिगंगासलोकताम् ॥ ९२॥ शृण्वंतिमहिमानंयेगंगायानित्यमादरात् ॥ गंगास्नानफलं तेषांवाचकप्रीणनाढ्यनैः ॥९३॥ पितॄनुद्दिश्ययोलिंगंस्नपयेद्गांगवारिणा ॥ तृप्ताःस्युस्तस्यपितरोमहानिरयगाअपि ॥ ९४ ॥ अष्टकृत्वोमंत्रजप्तैर्वस्त्रपूतैः सुगंधिभिः ॥ प्रोचुर्गांगजलैःस्नानंघृतस्नानाधिकंबुधाः ॥ ९५ ॥ अष्टद्रव्यविमिश्रेणगंगातोयेनयःसकृत् ॥ मागधप्रस्थमात्रेणताम्रपात्रस्थितेनच ॥ ९६ ॥ भानवेऽर्घंप्रदद्याच्चस्वकीयपितृभिःसह ॥ सोतितेजोविमानेनसूर्यलोकेमहीयते ॥ ९७ ॥ आपःक्षीरंकुशाग्राणिघृतंमधुगवांदधि ॥ रक्तानि करवीराणिरक्तचंदनमित्यपि ॥ ९८ ॥ अष्टांगार्घोयमुद्दिष्टस्त्वतीवरवितोषणः ॥ गांगैर्वार्भिःकोटिगुणोज्ञेयोविष्णोऽन्यवारितः ॥ ९९ ॥ गंगातीरे स्वशक्त्यायःकुर्याद्देवालयंसुधीः ॥ अन्यतीर्थप्रतिष्ठातोभवेत्कोटिगुणंफलम् ॥ १०० ॥ अश्वत्थवटचूतादिवृक्षारोपेणयत्फलम् ॥ कूपवापीतडागा दिप्रपासत्रादिभिस्तथा ॥ १ ॥

नवक्ष्यमाणविंशत्यक्षरगंगामंत्रेणवाभिमंत्रितैः ॥ स्नानंलिंगादेरितिशेषः ॥ ९५ ॥ अष्टद्रव्यविमिश्रेणेतिश्लोकद्वयंवाक्यम् ॥ अष्टद्रव्याण्यापइत्यनेनस्वयंव्याकरिष्यति ॥ मागधप्रस्थमात्रेणसार्ध द्वादशपलपरिमितेन ॥९६॥९७॥ अष्टद्रव्याण्येवाह ॥ आपइतिसार्धेन ॥ क्षीरंघृतंदधीतित्रयाणांगवामित्यनेनसंबंधः ॥९८॥ गांगैरित्यर्धवाक्यम् ॥ कोटिगुणोऽर्घइतिशेषः ॥९९॥ गंगातीरइति ॥ अन्यतीर्थप्रतिष्ठातःपुण्यतीर्थेषुप्रतिष्ठापनात्करणादित्येतत् ॥ देवालयस्येतिशेषः ॥ १०० ॥ अश्वत्थेतिसार्धवाक्यम् ॥ चूतादीत्यादिपदेनपिचुमंदादयोगृह्यंते ॥ तथाचोक्तम् ॥ अश्वत्थमेकंपिचुमंदमे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कंन्यग्रोधमेकंदशतिंतिणीश्च ॥ कपित्थबिल्वामलकत्रयंचपंचाम्रवापीनरकंनपश्येदिति ॥ कूपउदपानः ॥ वापीदीर्घिका॥तडागःपद्माकरः ॥ आदिपदेनकासारादयोगृह्यंते ॥ प्रपापानीयशालिका ॥
सत्रंयज्ञःसदान्नदानंवा ॥ आदिपदेनब्राह्मणतर्पणादीनिगृह्यंते ॥ १ ॥ पुष्पवाटयादीत्यादिशब्देनाम्रवाटयादयोगृह्यंते ॥ २ ॥ गंगागंडूषपानतःगंगाजलस्यचुलुकमात्रपानात् ॥ ३ ॥ ४ ॥
अक्षयश्चिरकालावस्थायि॥अपीतिनिश्चये ॥ ५ ॥ पादुकायुग्मंस्थंडिलादौचंदनादिनिर्मितम् ॥ ६ ॥ ७ ॥ ८ ॥ गंगाभजनशीलस्येतिश्लोकद्वयंवाक्यम् ॥९॥ दुःखसंकटेदुःखसंबाधे ॥ ११० ॥
दीर्घायुष्यमित्यादिद्वितीयांतेषुचतुर्षुपदेषुप्राप्नोतीतिशेषः ॥ लभेदिति वैक्रिययावान्वयः ॥ वासोभिरित्यादितृतीयांतेषुचतुर्षुपदेषुचगंगातटइत्यनुषज्जते ॥ वासोभिर्दत्तैरितिशेषः ॥११॥१२ ॥ धेनुमि

अन्यत्रयद्भवेत्पुण्यंतद्गंगादर्शनाद्भवेत् ॥ पुष्पवाटयादिभिश्चापिगंगास्पर्शंततोऽधिकम् ॥ २ ॥ कन्यादानेनयत्पुण्यंयत्पुण्यंगोऽन्नदानतः ॥ तत्पुण्यंस्या
च्छतगुणंगंगागंडूषपानतः ॥ ३ ॥ चांद्रायणसहस्रेणयत्पुण्यंस्याज्जनार्दन ॥ ततोऽधिकफलंगंगाऽमृतपानादवाप्नुयात् ॥ ४ ॥ भक्त्यागंगावगाहस्य
किमन्यत्फलमुच्यते ॥ अक्षयःस्वर्गवासोपिनिर्वाणमथवाहरे ॥ ५ ॥ गंगायाःपादुकायुग्मंनित्यमर्चतियोनरः ॥ आयुःपुण्यंधनंपुत्रान्स्वर्गमोक्षौच
विंदति ॥ ६ ॥ नास्तिगंगासमंतीर्थंकलिकल्मषनाशनम् ॥ नास्तिमुक्तिप्रदंक्षेत्रमविमुक्तसमंहरे ॥ ७ ॥ गंगास्नानरतंमर्त्यंदृष्ट्वैवयमकिंकराः ॥ दिशो
दशपलायंतेसिंहंदृष्ट्वायथामृगाः ॥ ८ ॥ गंगाभजनशीलस्यगंगातटनिवासिनः ॥ अर्चांकृत्वायथान्यायमश्वमेधफलंलभेत् ॥ ९ ॥ गोभूहिरण्यदानेन
भक्त्यागंगातटेशुभे ॥ नरोनजायतेभूयःसंसारेदुःखकंटके ॥११० ॥ दीर्घायुष्यंचवासोभिर्ज्ञानंपुस्तकदानतः ॥ अन्नदानेनसंपत्तिंकीर्तिकन्याप्रदानतः
॥ ११ ॥ अन्यत्रयत्कृतंकर्मव्रतंदानंजपस्तपः ॥ गंगातटेतुतत्सर्वंहरेकोटिगुणंभवेत् ॥ १२ ॥ धेनुंसवत्सांयोदद्याद्गंगातीरेविधानतः ॥ गोरोमसं
ख्ययाविष्णोयुगान्सर्वसमृद्धिमान् ॥ १३ ॥ गोलोकेममलोकेवाकामधेनुप्रदानतः ॥ भुंजानःसर्वकामांस्तुदिव्यान्नानाविधान्बहून् ॥ १४ ॥
देवानामप्यलभ्यांश्चभुक्त्वातुसहबांधवैः ॥ पितृभिश्चसुहृद्भिश्चसर्वरत्नविभूषितः ॥ १५ ॥ जायतेसत्कुलेपश्चाद्धनधान्यसमाकुले ॥ रत्नकांचनसंपन्नेशी
लविद्यासमन्विते ॥ १६ ॥ भुक्त्वासविपुलान्भोगान्पुत्रपौत्रसमन्वितः ॥ पुनर्गंगांसमासाद्यकाश्यामुत्तरवाहिनीम् ॥ १७ ॥ विश्वेश्वरंसमाराध्यप्राग्ज
नुर्वासनावशात् ॥ कालादेहांतमासाद्यब्रह्मसंपद्यतेततः ॥ १८ ॥

तिषड्भिःश्लोकैर्वाक्यम् ॥ सवत्सांवत्ससहिताम् ॥ योनैचिकीमितिक्वचित्पाठस्तत्रनैचिकींगोषुमध्येउत्तमाम् ॥ उत्तमागोषुनैचिकीत्यमरः ॥ योद्विमुखीमितिचान्यत्र ॥ तत्रद्विमुखींप्रसूयमानाम् ॥
पयस्विनीमितिचापरत्र ॥ तत्रपयस्विनींबहुदुग्धदोग्ध्रीम् ॥ १३ ॥ कामधेनुप्रदानतःपूर्वोक्तायाःकामधेनोर्दानात् ॥ कामधेनुव्रजावृतइतिक्वचित् ॥ तत्रगोलोकेकामधेनुसमूहेनवृतःममलोकेचेन्मदी
यैर्गणैर्वृतइतिज्ञेयम्॥उभयत्रवातथा ॥१४॥१५॥ शीलंसदाचारः विद्याउपासनादिरूपा ताभ्यांसमन्विते ॥१६॥१७॥ प्राग्जनुर्वासनावशात्पूर्वजन्मसंस्कारात्भ्यासात ॥ ब्रह्मविदेहकैवल्यम् ॥१८ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विवर्तनद्वयमितिपंचभिःश्लोकैर्वाक्यम् ॥ विवर्तनद्वयंनिवर्तनद्वयमित्यर्थः ॥ अयमेववापाठः ॥ षष्टिदंडप्रमाणमप्यंशमित्यर्थः ॥ तदुक्तम् ॥ चतुर्हस्तोभवेद्दंडस्त्रिंशद्दंडानिवर्तनमिति ॥ १९ ॥ ॥ १२० ॥ २१ ॥ मोचयित्वामोक्षंदापयित्वापांचभौतिकींपंचभूताकारेणपरिणतामविद्यांछित्त्वादेहेऽभिमानंत्यक्त्वेत्यर्थः ॥ पंचपर्विकामितिपाठेतमोमोहोमहामोहस्तामिस्रोह्यंधसंज्ञितइतिविष्णुपुराणोक्तानिपंचपर्वाणियस्यास्तामित्यर्थः ॥ २२ ॥ युंजानोघटयन्कुर्वन्नित्येतत् ॥ योगंजीवपरमात्मनोरैक्यम् ॥ अष्टांगयोगव्यवच्छेदार्थमुत्तममितिविशेषणम् ॥ अथवाऽविमुक्तप्राप्यदेहावसाने परंकैवल्यंगच्छतीति ॥ २३ ॥ सुवर्णेतिश्लोकचतुष्टयंवाक्यम् ॥ सुवर्णमात्रमपिअशीतिरक्तिकामात्रमपिसुवर्णंस्वर्णंसुवर्णायशोभनवर्णायब्राह्मणायेत्यर्थः ॥ सुवर्णंशोभनवर्णमत्युत्कृष्टमित्यर्थः ॥ २४ ॥ खचितेसंबद्धे ॥ २५ ॥ ब्रह्मांडांतरसंस्थेषुसर्वलोकेष्वितिसंबंधः ॥ यावदाभूतसंप्लवंभूतानांप्रलयावधिपर्यंतमित्यर्थः ॥ यावदाहूतसंप्लवमितिपाठेआहूतपदेनाहुतिकार्यंजगदु

विवर्तनद्वयमपिभूमेर्भागीरथीतटे ॥ नरोददातियोभक्त्यातस्यपुण्यफलंशृणु ॥ १९॥ तद्भूमित्रसरेणूनांसंख्ययायुगमानया ॥ महेंद्रचंद्रलोकेषुभुक्त्वाभोगान्मनःप्रियान् ॥ १२० ॥ सप्तद्वीपपतिर्भूत्वामहाधर्मपरायणः ॥ नरकस्थान्पितन्सर्वान्प्रापयेत्त्रिदिवंहरे ॥२१॥ स्वर्गस्थांश्चपितॄन्सर्वान्मोचयित्वामहाद्युतिः ॥ अंतेज्ञानासिनाछित्त्वाह्यविद्यांपांचभौतिकीम् ॥ २२ ॥ परंवैराग्यमापन्नोयुंजानोयोगमुत्तमम् ॥ प्राप्याथवाविमुक्तंचपरंब्रह्माधिगच्छति ॥ ॥ २३ ॥ सुवर्णमात्रमपियःसुवर्णंसंप्रयच्छति ॥ सुवर्णायसुवर्णंचहरेभागीरथीतटे ॥ २४ ॥ सहेमरत्नखचितेविमानेसर्वगेशुभे ॥ सर्वैश्वर्यसमायुक्तःसर्वलोकेषुपूजितः ॥ २५ ॥ ब्रह्मांडांतरसंस्थेषुभुंजन्भोगान्मनोरमान् ॥ सर्वैःसंपूजितोविष्णोयावदाभूतसंप्लवम् ॥ २६ ॥ एकराट्चततोभूत्वाजंबूद्वीपेप्रतापवान् ॥ ततोऽविमुक्तमासाद्यपदंनिर्वाणमृच्छति ॥ २७ ॥ जन्मर्क्षेतुकृतेस्नानेगंगायांभक्तिपूर्वकम् ॥ जन्मप्रभृतिपापौघात्संचितान्मुच्यतेक्षणात् ॥ २८ ॥ वैशाखेकार्तिकेमाघेगंगास्नानंसुदुर्लभम् ॥ दर्शेशतगुणंपुण्यंसंक्रांतौचसहस्रकम् ॥२९॥ चंद्रसूर्यग्रहेलक्षंव्यतीपातेत्वनंतकम् ॥ अयुतंविषुवेचैवनियुतंत्वयनद्वये ॥ १३० ॥ सोमग्रहःसोमदिनेरविवाररवग्रहः ॥ तच्चूडामणिपर्वाख्यंतत्रस्नानमसंख्यकम् ॥ ३१ ॥ स्नानंदानंजपोहोमोयद्यच्चूडामणौकृतम् ॥ तदक्षयंसर्वमिहविष्णोभागीरथीतटे ॥ ३२ ॥ श्रद्धयाभक्तियुक्तस्तुगंगांस्नात्वाविधानतः ॥ ब्रह्महापिविशुद्ध्येतकिंपुनस्त्वन्यपातकी ॥ ३३ ॥ कृमिकीटपतंगाद्यायेमृताजाह्नवीतटे ॥ कूलात्पतंतियेवृक्षास्तेपियांतिपरांगतिम् ॥ ३४ ॥ ज्येष्ठेमासिसितेपक्षेदशम्यांहस्तसंयुते ॥ गंगातीरेतुपुरुषोनारीवाभक्तिभावतः ॥ ३५ ॥

च्यते ॥ दीर्घश्छांदसः ॥ तथाचश्रुतिः ॥ अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायुतेवृष्टिर्वृष्टेरन्नंततःप्रजाइति ॥ आहुतिकार्यप्रलयपर्यंतमित्यर्थः ॥ २६ ॥ एकएवराजतइत्येकराट्चक्रवर्तीत्यर्थः ॥ २७ ॥ २८ ॥ दर्शेऽमावास्यायाम् ॥ २९ ॥ अमावास्यायुक्तोरविवासरोव्यतीपातोयोगविशेषोवा ॥ अयुतंविषुवेचेति ॥ विषुवेमेषसंक्रमणे ॥ अक्षय्यंवैधृतौचैवेतिपाठेवैधृतिरपियोगविशेषएव ॥ नियुतंलक्षम् ॥ एकंशतसहस्रंतुनियुतंलक्षमुच्यतइतिब्रह्मांडदर्शनात् ॥ १३० ॥ असंख्यकमसंख्यातफलजनकमित्यर्थः ॥ ३१ ॥ इहजगतिभागीरथीतटेभागीरथ्यांतत्तटेचेत्यर्थः ॥ तत्रतीरंधनुःशतत्रयपरिमितमितिज्ञातव्यम् ॥ गंगातीरेवसेन्नित्यंभिक्षुर्मोक्षपरायणः ॥ सिद्धिक्षेत्रंतुतज्ज्ञेयंयावद्धनुःशतत्रयमितिवचनादित्युक्तमेव ॥ ३२ ॥ ३३ ॥ ३४ ॥ ज्येष्ठइतिस



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पादश्लोकोवाक्यम् ॥ हस्तसंयुतेहस्तनक्षत्रसंयुक्तइतिज्येष्ठमासस्यासितपक्षस्यवाविशेषणम् ॥ हस्तसंयुतेहस्तसंयुतायामितिवा ॥ ज्येष्ठेमासिसितेपक्षेदशमीहस्तसंयुतेतिभविष्यदर्शनात् ॥ ३५ ॥ गंगामितिपादोनश्लोकद्वयंवाक्यम् ॥ गंगांदशविधैर्दशप्रकारैःपुष्पादिभिर्दशकृत्वोदशवारान्पूजयेदित्यन्वयः ॥ कथंभूतैःपुष्पादिभिः ॥ दशदशोन्मितैः प्रतिवारंदशदशसंख्ययापरिमितैः ॥ ३६ ॥ दशांगधूपानांलक्षणंचैतत् ॥ षड्भागकुष्ठोद्विगुणोगुडश्चलाक्षात्रयंपञ्चनखस्यभागाः ॥ हरीतकीसर्जरसश्चमांसीभागत्रयंचैवतुशैलजस्य ॥ घनस्यचत्वारिपुरस्यचैकोदशांगधूपःकथितोमुनींद्रैरिति ॥ ३७ ॥ प्रसृतीरञ्जलीन् ॥ मन्त्रतोमंत्रेण ॥ ३८ ॥ मंत्रंदर्शयन्मन्त्रमुद्धरति नमइतिसार्धेन ॥ ३९ ॥ मनुनामंत्रेण ॥ ४० ॥ ४१ ॥ पंचामृतेनविशोधितांस्नापिताम् ॥ ध्यानमाह चतुर्भुजामितिसार्धत्रयेण ॥ ततोध्यायेदितिद्वितीयश्लोकस्यप्रथमंचरणंप्रथमतोज्ञातव्यम् ॥ ४२ ॥ लावण्यंसौंदर्यंतदेवामृतंतस्यनिष्पंदःस्रवणम् ॥ निष्यंदेतिपाठेपिसएवार्थस्तेनसंशीलंती

निशायाजागरंकुर्याद्गंगांदशविधैर्हरे ॥ पुष्पैःसुगंधैर्नैवेद्यैःफलैर्दशदशोन्मितैः ॥३६॥ प्रदीपैर्दशभिर्धूपैर्दशांगैर्गरुडध्वज ॥ पूजयेच्छ्रद्धयाधीमान्दशकृत्वो विधानतः ॥ ३७ ॥ साज्यांस्तिलान्क्षिपेत्तोयेगंगायाःप्रसृतीर्दश ॥ गुडसक्तुमयान्पिंडान्दद्याच्चदशमंत्रतः ॥ ३८ ॥ नमःशिवायैप्रथमंनारायण्यैपदं ततः ॥ दशहरायैपदमितिगंगायैमंत्रएषवै ॥ ३९ ॥ स्वाहांतःप्रणवादिश्चभवेद्विंशाक्षरोमनुः ॥ पूजादानंजपोहोमोऽनेनैवमनुनास्मृतः ॥ ४० ॥ हेम्नारूप्येणवाशक्त्यागंगामूर्तिंविधायच ॥ वस्त्राच्छादितवक्त्रस्यपूर्णकुंभस्यचोपरि ॥ ४१ ॥ प्रतिष्ठाप्यार्चयेद्देवींपंचामृतविशोधिताम् ॥ चतुर्भुजांत्रिनेत्रांचनदीनदनिषेविताम् ॥ ४२ ॥ लावण्यामृतनिष्पंदसंशीलद्गात्रयष्टिकाम् ॥ पूर्णकुंभसितांभोजवरदाभयसत्कराम् ॥ ४३ ॥ ततोध्यायेत्सुसौम्यां चचंद्रायुतसमप्रभाम् ॥ चामरैर्वीज्यमानांचश्वेतच्छत्रोपशोभिताम् ॥ ४४ ॥ सुधाप्लावितभूपृष्ठांदिव्यगंधानुलेपनाम् ॥ त्रैलोक्यपूजितपदांदेवर्षिभिरभिष्टुताम् ॥ ४५ ॥ ध्यात्वासमर्च्यमंत्रेणधूपदीपोपहारतः ॥ मांचत्वांचविधिंब्रध्नंहिमवंतंभगीरथम् ॥ ४६ ॥ प्रतिमाग्रेसमभ्यर्च्यचंदनाक्षतनिर्मितान् ॥ दशप्रस्थतिलान्दद्याद्दशविप्रेभ्यआदरात् ॥ ४७ ॥ पलंचकुडवःप्रस्थआढकोद्रोणएवच ॥ धान्यमानेनबोद्धव्याःक्रमशोमीचतुर्गुणाः ॥ ४८ ॥ मत्स्यकच्छपमंडूकमकरादिजलेचरान् ॥ हंसकारंडवबकचक्रटिट्टिभसारसान् ॥ ४९ ॥

गात्रमेवयष्टिकायस्यास्ताम् ॥ पूर्णकुम्भसिताम्भोजाभ्यांसहितावरदाभयाभक्तानांभयनिवारकाःसंतःकरायस्यास्ताम् ॥ ४३ ॥४४॥ ४५ ॥ विधिंब्रह्माणम् ॥ ब्रध्नंसूर्यम् ॥ ४६ ॥ ४७ ॥ प्रस्थस्यमानन्दर्शयन्पलादीनांचतुर्णामपिमानमाह ॥ पलंचेति ॥ अमीपलादयः ॥ धान्यमानेनमुष्टिपरिमितधान्यप्रमाणेन ॥ पलद्वयंतुप्रसृतिर्मुष्टिरेकंपलंस्मृतम् ॥ अष्टमुष्टिभवेत्किंचित्किंचिदष्टौतुपुष्कलमितिस्मृतेः ॥ क्रमाच्चतुर्गुणाबोद्धव्याज्ञातव्याइत्यर्थः ॥ अयमर्थः ॥ मुष्टिपरिमितंधान्यमेकंपलम् ॥ चतुर्भिःपलैरेकःकुडवः ॥ चतुर्भिःकुडवैरेकःप्रस्थः ॥ यद्यपिपलद्वयंतुप्रसृतिरित्युक्तंतथापिमतभेदादयंपरिमाणभेदइतिज्ञातव्यम् ॥ चतुर्भिःप्रस्थैरेकआढकः ॥ चतुर्भिराढकैरेकोद्रोणइति ॥ ४८ ॥ कारंडवःपक्षिविशेषः ॥ चक्रश्चक्रवाकः ॥ टिट्टिभःपक्षिविशेषः ॥ सारसः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पुष्करः ॥ ४९ ॥ स्वर्णरूप्यताम्रपृष्ठविनिर्मितान्स्वर्णादिमयपात्रोपरिचन्दनादिलिखितानित्यर्थः ॥ पिष्टविनिर्मितानितिकचित् ॥ १५० ॥ ५१ ॥ ५२ ॥ परुषमेवपारुष्यंकठोरवचनमित्यर्थः ॥ असंबद्धप्रलापोनिष्प्रयोजनवाग्व्यवहारः ॥ ५३ ॥ वितथाभिनिवेशोमिथ्याभूतेषुकार्येष्वाग्रहः ॥ ५४ ॥ ५५ ॥ उद्धरेदिति ॥ घोरान्नरकादित्यन्वयः ॥ ५६ ॥ स्तोत्रमेवाह ॥ ॐनमइति ॥ मंगलार्थेॐकारः ॥ शिवायैनिःश्रेयसरूपिण्यै ॥ भगीरथःस्वर्गाद्धामानीतवानितिगंगा ॥ तदुक्तंभविष्ये ॥ यस्माद्भगीरथोदेविस्वर्गाद्धांत्वामिहानयत् ॥ अतस्त्वंमुनिभिःसर्वैर्गंगेतिपरिगीयसइति ॥ शिवदायैनिःश्रेयसदायै ॥ नमोनमइत्यादरेवीप्सा ॥ विष्णुरूपिण्यैवैष्णव्यै ॥ ब्रह्ममूर्त्यैसावित्र्यै ॥ ५७ ॥ रुद्ररूपिण्यैमाहेश्वर्यै ॥ विष्ण्वादित्रितयरूपिण्याइतिवार्थः ॥ शंकरसंबंधिन्यैशांकर्यै ॥ सर्वदेवस्वरूपिण्यैसर्वदेवतामयाइत्यर्थः ॥ भेषजमूर्तयेसंसाररोगस्येतिशेषः ॥ यद्वा ॥ रोगमात्रस्यौषधमूर्तये ॥ उक्तंच ॥ शरीरेजर्जरीभूतेव्याधिभिःपरिपीडिते ॥ औषधंजाह्नवीतोयंवैद्योनारायणोहरिरिति ॥ ५८ ॥ नकेवलंसंसाररोगस्यरोगमात्रस्यवाऔषधरूपायैकिंतुसर्वस्यप्राणिमात्रस्यसर्वेषांरोगाणांभिषक्छ्रेष्ठ्यैश्रेष्ठवैद्यरूपायै ॥ स्थास्नुभ्योवृक्षादिभ्योजंगमे

यथाशक्तिस्वर्णरूप्यताम्रपृष्ठविनिर्मितान् ॥ अभ्यर्च्यगंधकुसुमैर्गंगायांप्रक्षिपेद्व्रती ॥ १५० ॥ एवंकृत्वाविधानेनवित्तशाठ्यविवर्जितः ॥ उपवासीवक्ष्यमाणैर्दशपापैःप्रमुच्यते ॥ ५१ ॥ अदत्तानामुपादानंहिंसाचैवाविधानतः ॥ परदारोपसेवाचकायिकंत्रिविधंस्मृतम् ॥ ५२ ॥ पारुष्यमनृतंचैवपैशुन्यंचैवसर्वशः ॥ असंबद्धप्रलापश्चवाङ्मयंस्याच्चतुर्विधम् ॥ ५३ ॥ परद्रव्येष्वभिध्यानंमनसानिष्टचिंतनम् ॥ वितथाभिनिवेशश्चमानसंत्रिविधंस्मृतम् ॥ ॥ ५४ ॥ एतैर्दशविधैःपापैर्दशजन्मसमुद्भवैः ॥ मुच्यतेनात्रसंदेहःसत्यंसत्यंगदाधर ॥ ५५ ॥ उद्धरेन्नरकात्पूर्वान्दशघोराद्दशावरान् ॥ वक्ष्यमाणमिदंस्तोत्रंगंगाग्रेश्रद्धयाजपेत् ॥ ५६ ॥ ॐनमःशिवायैगंगायैशिवदायैनमोनमः ॥ नमस्तेविष्णुरूपिण्यैब्रह्ममूर्त्यैनमोस्तुते ॥ ५७ ॥ नमस्तेरुद्ररूपिण्यैशांकर्यैतेनमोनमः ॥ सर्वदेवस्वरूपिण्यैनमोभेषजमूर्तये ॥ ५८ ॥ सर्वस्यसर्वव्याधीनांभिषक्छ्रेष्ठ्यैनमोस्तुते ॥ स्थास्नुजंगमसंभूतविषहंत्र्यैनमोस्तुते ॥ ५९ ॥ संसारविषनाशिन्यैजीवनायैनमोस्तुते ॥ तापत्रितयसंहंत्र्यैप्राणेश्यैतेनमोनमः ॥ १६० ॥ शांतिसंतानकारिण्यैनमस्तेशुद्धमूर्तये ॥ सर्वसंशुद्धिकारिण्यैनमःपापारिमूर्तये ॥ ६१ ॥ भुक्तिमुक्तिप्रदायिन्यैभद्रदायैनमोनमः ॥ भोगोपभोगदायिन्यैभोगवत्यैनमोस्तुते ॥ ६२ ॥ मंदाकिन्यैनमस्तेस्तुस्वर्गदायैनमोनमः ॥ नमस्त्रैलोक्यभूषायैत्रिपथायैनमोनमः ॥ ६३ ॥

भ्यःसर्पादिभ्यश्चसंभूतंयद्विषंतस्यहंत्र्यै ॥ ५९ ॥ संसारेयद्विषंसंसारएववाविषंतस्यनाशिन्यै ॥ जीवनायैजीवयतीतिजीवनाजलस्वरूपावातस्यैजीवनरूपायाइतिवा ॥ तापत्रितयसंहंत्र्यैआध्यात्मिकाधिभौतिकाधिदैविकदुःखत्रयस्यसम्यक्छेत्र्यै ॥ प्राणेश्यैजीवरूपायैअंतर्यामिरूपायैइतिवा ॥ प्राणस्यप्राणइतिश्रुतेः ॥ १६० ॥ शांतिरारोग्यम् ॥ संतानोवंशः अथवाशांतेःसंतानःशांतिपरंपरातत्कारिण्यैशांतिसंतानकारिण्यै ॥ शुद्धमूर्तयेनिर्मलमूर्तये ब्रह्ममूर्तयइतिवा ॥ शुद्धमपापविद्धमितिश्रुतेः ॥ सर्वस्यप्राणिमात्रस्यसंशुद्धिकारिण्यै ॥ पापस्यपापमात्रस्यशत्रुमूर्तये ॥ ॥ ६१ ॥ भुक्तिमुक्तिप्रदायिन्यैसुखमोक्षप्रदायिन्यै ॥ भद्रदायैकल्याणदायै ॥ भुज्यतेनेनेतिभोगःसाधनम् उपभोगःसुखंफलमित्येतत् वैपरीत्यंवा ॥ यद्वा भोगऐहिकउपभोगःपारलौकिकस्तद्दायिन्यै ॥ रातेर्दातुःपरायणमितिश्रुतेः ॥ भोगवत्यैपातालांतर्गतसरिद्रूपिण्यै ॥ भोगवतीतिचाधइतिभागवतदर्शनात् ॥ ६२ ॥ मंदाकिन्यैवियद्गंगायै ॥ स्वर्गदायैआनंददात्र्यै ॥ त्रैलोक्य



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भूषायैत्रैलोक्यस्यालंकरणरूपायै ॥ त्रिपथायैत्रिषुलोकेषुपंथामार्गोयस्याःसातथा त्रयाणांधर्मार्थकाममोक्षाणांपंथामार्गभूताइतिवातद्रूपायै ॥ ६३ ॥ त्रिषुशुक्लेषुशुद्धेषुगंगाद्वारप्रयागसागर संगमेषुसम्यक्स्थासंस्थास्थितिर्यस्यास्तस्यै ॥ तदुक्तंवाराहे ॥ सर्वत्रसुलभागंगात्रिषुस्थानेषुदुर्लभा ॥ गंगाद्वारेप्रयागेचगंगासागरसंगमइति ॥ यद्वा त्रिषुकालेषुशुक्लेनशुद्धेनब्रह्मरूपेणेतियावत सम्यक्स्थितिर्यस्यास्तस्यै ॥ तदुक्तम् ॥ योऽसौनिरंजनोदेवश्चित्स्वरूपीजनार्दनः ॥ सएवद्रवरूपेणगंगांभोनात्रसंशयइति ॥ यद्वा महेश्वरचंद्रमंडलहिमालयेषुकैलासेषुवात्रिशुक्लेषुसंस्थायै ॥ यद्वा त्रिशुक्लवच्छंखकुंदेंदुवत्संस्थाआकृतिर्यस्यास्तस्यै ॥ तथाचश्रूयतेगंगास्तोत्रे॥ शंखकुंदेंदुधवलामहापातकनाशिनीति॥क्षमावत्यैक्षमाकर्त्र्यै,॥ त्रिहुताशनसंस्थायैदक्षिणाग्निर्गार्हपत्याहवनीयौत्रयो त्रयस्तेषुसंस्थायै ॥ तेजोवत्यैदीप्तिमत्यै ॥ ६४ ॥ नंदायैअलकनंदायै ॥ भामासत्यभामेतिवत् ॥ लिंगधारिण्यैशिवलिंगधारिण्यै ॥ सिद्धयःसिद्धलिंगानिस्पर्शलिंगान्यनेकशः ॥ गंगाजलां तस्तिष्ठंतीत्यत्रैवोक्तेः ॥ सुधाधारात्मनेअमृतस्रोतोरूपायै ॥ विश्वमुख्यायैब्रह्मांडश्रेष्ठायै ॥ रेवत्यैनक्षत्ररूपायै रेवतराजपुत्र्यैइतिवा ॥ ६५ ॥ बृहत्यैपरिपूर्णायै ॥ लोकधात्र्यै प्राणिमात्रजनन्यैपुष्टिकारिण्याइतिवा ॥ विश्वमित्रायैप्राणिमात्रस्यहितायै ॥ नंदिन्यैसमृद्धिकारिण्यैवसिष्ठकामधेनुरूपायैइतिवा ॥ ६६ ॥ पृथ्व्यैभूमिरूपायै ॥ शिवामृतायैनिर्मलजलायै ॥

नमस्त्रिशुक्लसंस्थायैक्षमावत्यैनमोनमः ॥ त्रिहुताशनसंस्थायैतेजोवत्यैनमोनमः ॥ ६४ ॥ नंदायैलिंगधारिण्यैसुधाधारात्मनेनमः ॥ नमस्तेविश्वमुख्या यैरेवत्यैतेनमोनमः ॥ ६५ ॥ बृहत्यैतेनमस्तेस्तुलोकधात्र्यैनमोस्तुते ॥ नमस्तेविश्वमित्रायैनंदिन्यैतेनमोनमः ॥ ६६ ॥ पृथ्व्यैशिवामृतायैचसुवृषायै नमोनमः ॥ परापरशताढ्यायैतारायैतेनमोनमः ॥ ६७॥ पाशजालनिकृंतिन्यैअभिन्नायैनमोस्तुते ॥ शांतायैचवरिष्ठायैवरदायैनमोनमः ॥६८॥ उग्रायै सुखजग्ध्यैचसंजीविन्यैनमोस्तुते ॥ ब्रह्मिष्ठायैब्रह्मदायैदुरितघ्न्यैनमोनमः ॥ ६९ ॥ प्रणतार्तिप्रभंजिन्यैजगन्मात्रेनमोस्तुते ॥ सर्वापत्प्रतिपक्षायैमं गलायैनमोनमः ॥ ७० ॥ शरणागतदीनार्तपरित्राणपरायणे ॥ सर्वस्यार्तिहरेदेविनारायणिनमोस्तुते ॥ ७१ ॥ निर्लेपायैदुर्गहंत्र्यैदक्षायैतेनमोनमः ॥ परापरपरायैचगंगेनिर्वाणदायिनि ॥ ७२ ॥

सुवृषायैशोभनधर्मरूपायै ॥ परेब्रह्मादयःअपरेऽस्मदादयस्तेषांशतैराढ्याव्याप्ताऽपरिमितसमष्टिव्यष्टिजीवाधारेत्यर्थः ॥ यद्वा परेब्रह्मणोऽपरेअनुत्कृष्टायेभ्यस्तादृशानांपरमहंसानांब्रह्मविदांशतै राढ्यांव्याप्तासेवितेतियावत्तस्यै ॥ तारायैतारयतीतितारांप्रणवोवातारस्तद्रूपायै ॥ तेतुभ्यम् ॥ ६७ ॥ पाशश्चतुर्विंशतितत्त्वान्येवजालमानायोवंधनहेतुत्वात्तन्निकृंतिन्यै ॥ अभिन्नायैभेदरहितायै ॥ शांतायैनिरुपद्रवायै ऋष्यशृंगभार्यारूपायैवा ॥ वरिष्ठायैसर्वश्रेष्ठायै ॥: वरदायैभक्तेभ्योऽभीष्टदात्र्यै ॥ ६८ ॥ उग्रायैप्रलयकालेसर्वसंहर्त्र्यै कालरात्र्यैइत्यर्थः ॥ उस्रायैइतिपाठेतेजोरूपायै इत्यर्थः ॥ सुखजग्ध्यैसुखभोक्त्र्यै ॥ सुखजग्ध्यैइतिपाठेपिसएवार्थः ॥ संजीविन्यैसम्यग्जीवितुंजीवयितुंवाशीलंयस्यास्तस्यै ॥ पाठांतरेसम्यग्जीवयतीतिसंजीवनीतस्यैइति ॥ ब्रह्मिष्ठायैब्रह्मण्यायै ब्राह्मणभक्तायैइतियावत् ॥ ब्रह्मनिष्ठायैइतिवा ॥ ब्रह्मदायैवेददात्र्यैकैवल्यदायैइतिवा ॥ दुरितघ्न्यैअज्ञाननाशिन्यैपापमात्रनाशिन्यैइतिवा ॥ ६९ ॥ प्रणतार्तिप्रभंजिन्यैभक्तपीडोपशमयित्र्यै ॥ जगन्मात्रेप्रपंचजनयित्र्यैजगद्धितैषिण्यैइतिवा ॥ सर्वापत्प्रतिपक्षायैभक्तानांसर्वापन्निराकर्त्र्यै ॥ मंगलायैकल्याणरूपिण्यैमंगलागौरीरूपायैइतिवा ॥ ७० ॥ शरणागताश्चदीनाश्चआर्ताश्चतेषांपरि त्राणंसंरक्षणंतत्रपरायणेदक्षे ॥ दर्शनादिनासर्वस्यप्राणिमात्रस्यार्तिहरे ॥ नारायणिजलायनेनारायणशक्तिरूपेवा ॥ ७१ ॥ निर्लेपायैअविद्यातत्कार्यरहितायै ॥ दुर्गहंत्र्यैदुर्गनाम्नोऽसुरस्यनाशिन्यै ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दक्षायैअघटितघटनापटीयस्यै ॥ परापरपरायैक्षगक्षराभ्यामतीतायैसर्वोत्तमायैइत्यर्थः ॥ हेगंगेनिर्वाणदायिनिकैवल्यदे ॥ ७२ ॥ हेगंगेममाग्रतःसंमुखेभूयाभव ॥ हेगंगेमेपृष्ठतःपश्चाद्भागेतिष्ठ ॥ हेगंगेमेपार्श्वयोर्दक्षिणवामभागयोरेधिभव ॥ हेगंगेत्वयिमेस्थितिःस्थैर्यमस्तु ॥ गंगापदस्यावृत्तिर्नामसुप्राधान्यख्यापनाय ॥ ७३ ॥ किंबहुना ॥ आदाविति ॥ आदौत्वंकारणत्वेनअंतेत्वमवधित्वे नमध्येचाकिंचित्सत्तास्फूर्तिप्रदत्वेनतत्सर्वंत्वमेवेत्यर्थः ॥ गांगतेहेगंगेइत्यर्थः ॥ शिवेपरमसुखस्वरूपे ॥ किंचत्वमिति ॥ मूलप्रकृतिरविद्यात्वम् ॥ पुमान्पुरुषः ॥ परईश्वरः ॥ हेगंगेशिवःसुखरूपः परमात्माचत्वमित्यर्थः ॥ शिवेहेशिवशक्ते ॥ हीतितत्त्वमासिसर्वंखल्विदंब्रह्मेत्यादिप्रामाण्यंसूचयाति ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ तस्यांप्रसिद्धायांज्येष्ठेमासिशुक्लपक्षे

गंगेममाग्रतोभूयागंगेमेतिष्ठपृष्ठतः ॥ गंगेमेपार्श्वयोरेधिगंगेत्वय्यस्तुमेस्थितिः ॥ ७३ ॥ आदौत्वमंतेमध्येचसर्वंत्वंगांगतेशिवे ॥ त्वमेवमूलप्रकृतिस्त्वं पुमान्परएवहि ॥ गंगेत्वंपरमात्माचशिवस्तुभ्यंनमःशिवे ॥ ७४ ॥ यइदंपठतेस्तोत्रंशृणुयाच्छ्रद्धयापियः ॥ दशधामुच्यतेपापैःकायवाक्चित्तसंभवैः ॥ ॥ ७५ ॥ रोगस्थोरोगतोमुच्येद्विपद्भ्यश्चविपद्युतः ॥ मुच्यतेबंधनाद्बद्धोभीतोभीतेःप्रमुच्यते ॥ ७६ ॥ सर्वान्कामानवाप्नोतिप्रेत्यचत्रिदिवंव्रजेत् ॥ दिव्यं विमानमारुह्यदिव्यस्त्रीपरिवीजितः ॥ ७७ ॥ गृहेपिलिखितंयस्यसदातिष्ठतिधारितम् ॥ नाग्निचौरभयंतस्यनसर्पादिभयंक्वचित् ॥ ७८ ॥ ज्येष्ठेमासे सितेपक्षेदशमीहस्तसंयुता ॥ संहरेत्त्रिविधंपापंबुधवारेणसंयुता ॥ ७९ ॥ तस्यांदशम्यामेतच्चस्तोत्रंगंगाजलेस्थितः ॥ यःपठेद्दशकृत्वस्तुदरिद्रोवापि चाक्षमः ॥ ८० ॥ सोपितत्फलमाप्नोतिगंगांसंपूज्ययत्नतः ॥ पूर्वोक्तेनविधानेनयत्फलंसंप्रकीर्तितम् ॥ ८१ ॥ यथागौरीतथागंगातस्माद्गौर्यास्तुपूजने ॥ योविधिर्विहितःसम्यक्सोपिगंगाप्रपूजने ॥ ८२ ॥ यथाऽहंत्वंतथाविष्णोयथात्वंतुतथाह्युमा ॥ उमायथातथागंगाचतूरूपंनभिद्यते ॥ ८३ ॥ विष्णुरुद्रां तरंचैवश्रीगौर्योरंतरंतथा ॥ गंगागौर्यंतरंचैवयोब्रूतेमूढधीस्तुसः ॥ ८४ ॥ इति श्रीस्कांदेमहापुराणेएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धे गंगामहिमवर्णनपूर्वकदशहरास्तोत्रकथनंनामसप्तविंशतितमोऽध्यायः ॥ २७ ॥

जातायामित्यर्थः ॥ ८० ॥ ८१ ॥ तर्हिमत्तोपिसाश्रेष्ठेतिदेव्याआशयमालक्ष्याहभगवान् ॥ यथागौरीति ॥ यतएवमतस्तस्माद्गौर्यास्त्विति ॥ ८२ ॥ तर्ह्यहमेवसर्वनिकृष्टइतिविष्णो राशयमालक्ष्यब्रूतेविश्वेश्वरः ॥ यथाहंत्वामिति ॥ ८३ ॥ एतदेवव्यतिरेकमुखेनद्रढयति ॥ विष्णुरुद्रेति ॥ अन्तरंभेदम् ॥ तथाचभागवतंवाक्यम् ॥ नतेमय्यच्युतेऽजेचभिदामण्वपिचक्षतइति ॥ यथामतियथाशक्तिरामानंदोमुनिर्महान् ॥ व्याकरोद्भगवत्पद्याःस्तोत्रंदशहराभिधम् ॥ ८४ ॥ ॥ इतिश्रीरामानन्दकृतायांकाशीखण्डटीकायांसप्तविंशतितमोऽध्यायः ॥ २७ ॥ ॥ छ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अष्टाधिकतमेविंशेवाहीकाख्यानपूर्वकम् ॥ गंगायाभूरिमाहात्म्यंवर्ण्यतेशंभुनाहरिम् ॥ १ ॥ अतीताध्यायादिभागेविष्णुंसंबोध्यनिर्दग्धान्सगरान्श्रुत्वागंगामाराराधयिषुर्भगीरथोहिमवंतंजगामे त्याद्युक्तमीश्वरेणतत्रप्राकृतानांसंदेहापनुत्तयेसंदिहानेवभवानीविश्वेशंपरिपृच्छति किंचिदितिद्वयेन ॥ १ ॥ २ ॥ भाविनिभूतवदुपचारइतिन्यायेनभाव्यपिभूतवन्निर्दिश्यतइत्यभिप्राये णप्रत्युत्तरयति ॥ संदेहोत्रेतिसार्धेन ॥ ३ ॥ कृथाःकुरु ॥ ४ ॥ यद्वद्यथा ॥ ५ ॥ ६ ॥ त्रिषुलोकेषुस्रोतोयस्याःसात्रिस्रोतास्तांत्रिस्रोतसम् ॥ ७ ॥ पितृकर्मणितर्पणादौ ॥ ८ ॥

उमोवाच ॥ ॥ किंचित्प्रष्टुमनानाथस्वसंदेहापनुत्तये ॥ वदखेदोयदिनतेत्रिकालज्ञानकोविद ॥ १ ॥ तदाभगीरथोराजाक्वभागीरथीतदा ॥ यदा विष्णुस्तपस्तेपेचक्रपुष्करिणीतटे ॥ २ ॥ ॥ शिवउवाच ॥ ॥ संदेहोऽत्रनकर्तव्योविशालाक्षिसदामले ॥ श्रुतौस्मृतौपुराणेषुकालत्रयमुदीर्यते ॥ ॥ ३ ॥ भूतंभाविभवच्चापिसंशयंमावृथाकृथाः ॥ इत्युक्त्वापुनराहेशोगंगामाहात्म्यमुत्तमम् ॥४॥ ॥ अगस्त्यउवाच ॥ पार्वतीनंदनपुनर्ब्रुनद्याःपरितो वद ॥ महिमोक्तोहरौयद्वद्देवदेवेनवैतदा ॥ ५ ॥ स्कंदउवाच ॥ मुनऽत्रमैत्रावरुणेयथादेवेनभाषितम् ॥ शृणुत्रिपथगामिन्यामाहात्म्यंपातकापहम् ॥६॥ त्रिस्रोतसंसमासाद्यसकृत्पिंडान्ददातियः ॥ उद्धृताःपितरस्तेनभवांभोधेस्तिलोदकैः ॥ ७ ॥ यावंतश्चतिलामर्त्यैर्गृहीताःपितृकर्मणि ॥ तावद्वर्षसहस्राणि पितरःस्वर्गवासिनः ॥ ८ ॥ देवाःसपितरोयस्माद्गंगायांसवदास्थिताः ॥ आवाहनंविसर्गंचतेषांतत्रततोनहि ॥ ९ ॥ पितृवंशेमृतायेचमातृवंशेतथैवच ॥ गुरुश्वशुरबंधूनांयेचान्येबांधवामृताः ॥ १० ॥ अजातदंतायेकेचिद्येचगर्भेप्रपीडिताः ॥ अग्निविद्युच्चोरहताव्याघ्रदंष्ट्रिभिरेवच ॥ ११ ॥ उद्बंधनमृतायेचपतिताआत्मघातकाः ॥ आत्मविक्रयिणश्चोरायेतथाऽयाज्ययाजकाः ॥ १२ ॥ रसविक्रयिणोयेचयेचान्येपापरोगिणः ॥ अग्निदागरदाश्चैवगोघ्नाश्चै वस्ववंशजाः ॥ १३ ॥ असिपत्रवनेयेचकुंभीपाकेचयेगताः ॥ रौरवेष्वंधतामिस्रेकालसूत्रेचयेगताः ॥१४॥ जात्यंतरसहस्रेषुभ्राम्यंतेयेस्वकर्मभिः ॥ येतुपक्षिमृगादीनांकीटवृक्षादिवीरुधाम् ॥ १५ ॥ योनिंगतास्त्वसंख्याताःसंख्यातानामशोभनाः ॥ प्रापितायमलोकंतुसुघोरैर्यमकिंकरैः ॥ १६ ॥ येऽबांधवाबांधवावायेऽन्यजन्मनिबांधवाः ॥ येपिचाज्ञातनामानोयेचापुत्राःस्वगोत्रजाः ॥ १७ ॥

॥ ९ ॥ पितृवंशेमृतायेचेत्यादीनामेतान्मंत्रान्समुच्चार्येत्यग्रिमेणान्वयः ॥ १० ॥ ११ ॥ १२ ॥ पापरोगिणःकुष्ठरोगवंतःपापनिमित्तरोगिणइतिवा ॥ १३ ॥ असिपत्राद्याःपंचनरकविशेषाः ॥ ॥ १४ ॥ १५ ॥ संख्यातानामशोभनाःसंख्यातानामपिपक्ष्यादीनांमध्येयेऽशोभनानिकृष्टाइत्यर्थः ॥ स्वकर्मभिरशोभनाइतिपाठेस्पष्टएवार्थः ॥ १६ ॥ येअबांधवाइतिच्छेदः ॥ १७ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ एतानिति ॥ एतान्पितृवंशेइत्यारभ्यमुक्तिमाप्नुयुरित्यंतान् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ यत्रत्यामृतसंतृप्ताःकाश्युत्तरवहासवजलेनसंहृष्टाः ॥ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ खंडस्फुटितसंस्कारंदेवालयादीनामितिशेषः ॥ तत्रखंडंभग्नंस्फुटितंविदीर्णंतयोः स्यामत्वमृतामिति ॥ स्यामसवेम ॥ तुनिश्चितम् ॥ अमृतंकैवल्यम् ॥

विपेणचमृतावैयेयेवैशृंगिभिराहताः ॥ कृतघ्नाश्चगुरुघ्नाश्चयेचामित्रद्रुहस्तथा ॥ १८ ॥ स्त्रीबालघातकायेचयेचविश्वासघातकाः ॥ असत्यहिंसानिरताः सदापापरताश्चये ॥ १९ ॥ अश्वविक्रयिणोयेचपरद्रव्यहराश्चये ॥ अनाथाःकृपणादीनामानुष्यंप्राप्तुमक्षमाः ॥ २० ॥ तर्पिताजाह्नवीतोयैर्नरेणविधिनासकृत् ॥ प्रयांतिस्वर्गतिंतेपिस्वर्गिणोमुक्तिमाप्नुयुः ॥२१॥ एतान्मंत्रान्समुच्चार्ययःकुर्यात्पितृतर्पणम् ॥ श्राद्धंपिंडप्रदानंचसविधिज्ञइहोच्यते ॥ २२ ॥ स्वःसिंधुःसर्वतःपुण्याब्रह्महत्यापहारिणी ॥ काश्यां कामप्रदानितीर्थानित्रैलोक्येयानिकानिचित् ॥ तानिसर्वाणिसेवंतेकाश्यामुत्तरवाहिनीम् ॥ २३ ॥ विशेषतोविष्णोयत्रचोत्तरवाहिनी ॥ २४ ॥ गायंतिगाथामेतांवैदेवर्षिपितरोगणाः ॥ अपिदृग्गोचरानःस्यात्काश्यामुत्तरवाहिनी ॥२५॥ यत्रत्यामृतसंतृप्तास्तापत्रितयवर्जिताः ॥ स्यामत्वमृतमेवाद्धाविश्वनाथप्रसादतः ॥ २६ ॥ गंगैवकेवलामुक्त्यैनिर्णीतापरितोहरे ॥ अविमुक्तेविशेषेणममाधिष्ठानगौरवात् ॥ २७ ॥ ज्ञात्वाकलियुगंघोरंगंगाभक्तिःसुगोपिता ॥ नविंदंतिजनागंगांमुक्तिमार्गैकदायिकाम् ॥ २८ ॥ अनेकजन्मनियुतंभ्राम्यमाणस्तुयोनिषु ॥ निर्वृतिंप्राप्नुयात्कोत्रजाह्नवीभजनंविना ॥ २९ ॥ नराणामल्पबुद्धीनामेनोविक्षिप्तचेतसाम् ॥ गंगैवपरमंविष्णोभेषजंभवरोगिणाम् ॥ ३० ॥ खंडस्फुटितसंस्कारंगंगातीरेकरोतियः ॥ ममलोकेचिरंकालंतस्याक्षयसुखंहरे ॥ ३१ ॥ गंतुमुद्दिश्ययोगंगांपरार्थंस्वार्थमेववा ॥ नगच्छतिपरंमोहात्सपतेत्पितृभिःसह ॥ ३२ ॥ सर्वाणियेषांगांगेयैस्तोयैःकृत्यानिदेहिनाम् ॥ भूमिस्थाअपितेमर्त्याअमर्त्याएववैहरे ॥ ३३ ॥ चरमेपिवयोभागेस्वःसिंधुंयोनिषेवते ॥ कृत्वाप्येनांसिबहुशःसोपियायाच्छुभांगतिम् ॥३४॥ यावदस्थिमनुष्याणांगंगातोयेषुतिष्ठति ॥ तावदब्दसहस्राणिस्वर्गलोकेमहीयते ॥३५॥ विष्णुरुवाच ॥ ॥ देवदेवजगन्नाथजगतांहितकृत्प्रभो ॥ कीकसंचेत्पतेद्दैवाद्दुर्वृत्तस्यदुरात्मनः ॥३६॥ जलेद्युनद्यानिष्पापेकथंतस्यपरागतिः ॥ अपमृत्युविपन्नस्यतदीशविनिवेद्यताम् ॥ ३७ ॥ ॥ महेश्वरउवाच ॥ ॥ अत्रार्थेकथयिष्यामिपुरावृत्तमधोक्षज ॥ शृणुष्वैकमनाविष्णोवाहीकस्यद्विजन्मनः ॥ ३८ ॥ पुराकलिंगविषयेद्विजोलवणविक्रयी ॥ संध्यास्नानविहीनश्चवेदाक्षरविवर्जितः ॥ ३९ ॥ वाहीकोनामतोयज्ञसूत्रमात्रपरिग्रहः ॥ परिग्रहश्चतस्यासीत्कौविंदीविधवानवा ॥ ४० ॥

संस्कारःसंधानमित्यर्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ लोकानुजिघृक्षयाऽजानन्निवभगवान्परिपृच्छति ॥ देवदेवेति ॥ कीकसमस्थि ॥ ३६ ॥ ३७ ॥ लोकविश्रंभणायाख्यायिकयोत्तरमाह ॥ अत्रार्थइति ॥ वाहीकस्यनाम्नेतिशेषः ॥ ३८ ॥ कलिंगविषयेउत्कलाद्दक्षिणस्यांदिशि ॥ ३९ ॥ परिग्रहोभार्या ॥ कौविंदीतंतुवायपत्नी ॥ विधवाविगतभर्तृका ॥ नवानूतनवयस्का ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

गृहेइतिकश्चित् ॥ ४० ॥ दुर्भिक्षेति ॥ वृषलीसाकुविंदीप्राणाधारंप्राणजीवनोपायंविनादुर्भिक्षपीडितेनपतिनावाहीकेनसहदेशाद्देशांतरंगतवतीत्यर्थः ॥ यद्वा तेनप्रसिद्धेनान्येनकेनचिद्वृषलीपतिनासार्धं सवाहीकोययावित्यन्वयः ॥ ४१ ॥ अथसंगवर्जितःसन् तत्रमध्येदंडकारण्यंदंडकारण्यस्यमध्येव्याघ्रेणघातितःसइत्यन्वयः ॥ ४२ ॥ गृध्रोदाक्षायणः ॥ तस्यवाहीकस्य ॥ ४३ ॥ गृध्रयोरितिश्लोकद्वयंवाक्यम् ॥ आमिषंगृध्न्वोराकांक्षतोः ॥ पादगुल्फंचरणग्रंथिः ॥ षंढत्वमार्षम् ॥ कंकोत्रगृध्रएव ॥ ४४ ॥ मध्येगंगंगंगायामध्येऽपतदित्यन्वयः ॥ द्वंद्वकारिणोर्युद्धकारिणोःसतोः ॥ ४५ ॥ द्वीपीव्याघ्रः ॥ ४६ ॥ कशाभिरश्वप्रणोदिनीभिः ॥ आराभिर्मर्मभेदिकाभिःपरितोदितःसमंततोभेदितःसर्वांगेव्यथितइतिवा ॥ ४७ ॥ आपृच्छिपृष्टः ॥ मापतेलक्ष्मीपते ॥

दुर्भिक्षपीडितेनाथवृषलीपतिनाविना ॥ प्राणाधारंतदातेनदेशाद्देशांतरंययौ ॥ ४१ ॥ मध्येऽथदंडकारण्यंक्षुत्क्षामःसंगवर्जितः ॥ व्याघ्रेणघातितस्तत्र नरमांसप्रियेणसः ॥ ४२ ॥ तस्यवामपदंगृध्रोगृहीत्वोदपतत्ततः ॥ मांसाशिनाऽन्यगृध्रेणतस्ययुद्धमभूद्दिवि ॥ ४३ ॥ गृध्रयोरामिषंगृध्न्वोःपरस्परजयैषिणोः ॥ अवापतत्पादगुल्फंकंकचंचुपुटात्तदा ॥ ४४ ॥ तस्यवाहीकविप्रस्यव्याघ्रव्यापादितस्यह ॥ मध्येगंगंदैवयोगादपतद्द्वंद्वकारिणोः ॥ ४५ ॥ यदैवहतवान्द्वीपीतंवाहीकमरण्यगम् ॥ तस्मिन्नेवक्षणेबद्धःसपाशैःक्रूरकिंकरैः ॥ ४६ ॥ कशाभिर्घातितोत्यंतमाराभिःपरितोदितः ॥ वमन्रुधिरमास्येननीतस्तैःसयमाग्रतः ॥ ४७ ॥ आपृच्छिधर्मराजेनचित्रगुप्तोथमापते ॥ धर्माधर्मंविचार्यास्यकथयाशुद्विजन्मनः ॥ ४८ ॥ वैवस्वतेनपृष्टोथचित्रगुप्तोविचित्रधीः ॥ सर्वदासर्वजंतूनांवेदितासर्वकर्मणाम् ॥ ४९ ॥ जगादयमुनावंधुंवाहीकस्यद्विजन्मनः ॥ जन्मकर्मदिनारभ्यदुर्वृत्तस्यशुभेतरम् ॥ ५० ॥ चित्रगुप्तउवाच ॥ ॥ गर्भाधानादिकंकर्मप्राकृतंनास्यकेनचित् ॥ जातकर्मकृतंनास्यपित्राऽज्ञानवताहरे ॥ ५१ ॥ गर्भैनःशमनेहेतुःसमस्तायुःसुखप्रदम् ॥ एकादशेह्निनामास्यनकृतंविधिपूर्वकम् ॥ ५२ ॥ स्यातःस्याद्येनविधिनासर्वत्रविधिपावनम् ॥ नाकार्षीन्निर्गमंचास्यचतुर्थेमासिमंदधीः ॥ ५३ ॥ जनकःशुभतिथ्यादौविदेशगमनापहम् ॥ षष्ठेऽन्नप्राशनंमासिनकृतंविधिपूर्वकम् ॥ ५४ ॥ सर्वदाभिष्टमश्नातिकर्मणायेनभास्करे ॥ नचूडाकरणंचास्यकृतमब्देयथाकुलम् ॥ ५५ ॥ कर्मणायेनकेशाःस्युःस्निग्धाःकुसुमवर्षिणः ॥ नाकारिकर्णवेधोस्यजनित्रासमयेशुभे ॥ ५६ ॥ सुवर्णग्राहिणौयेनकर्णौस्यातांचसुश्रुती ॥ मौंजीबंधोप्यभूदस्यव्यतीतेब्देऽष्टमेहरे ॥ ब्रह्मचर्याभिवृद्ध्यैयोब्रह्मग्रहणहेतुकः ॥ ५७ ॥ मौंजीमोक्षणवार्तापिकृतानास्यजनुःकृता ॥ गार्हस्थ्यंप्राप्यतेयस्मात्कर्मणोऽनंतरंवरम् ॥ ५८ ॥

किंपृष्टंतदाह ॥ धर्मेति ॥ धर्मश्चाधर्मश्चधर्माधर्मम् ॥ समाहारत्वादेकवचनम् ॥ लेखकइतिपाठेपापपुण्यलेखनकर्तेत्यर्थः ॥ ४८ ॥ ४९ ॥ यमुनायाबंधुंभ्रातरंयमम् ॥ जन्मकर्मादिनारभ्य जन्मैवकर्मजन्मकर्मतद्दिनमारभ्येत्यर्थः ॥ कर्मजन्मदिनारभ्येतिपाठःसुगमः ॥ शुभेतरमशुभंपापमित्येतत् ॥ ५० ॥ अज्ञानवताऽज्ञेन ॥ ५१ ॥ ५२ ॥ येननामकरणेन ॥ ५३ ॥ ॥ ५४ ॥ येनान्नप्राशनकर्मणा ॥ ५५ ॥ येनचूडाकरणेन ॥ ५६ ॥ येनकर्णवेधेन ॥ सुश्रुतीशोभनाश्रुतिःश्रवणंययोस्तौकर्णौतथा ॥ योमौंजीबंधः ॥ ५७ ॥ जनुःकृता जन्मकर्त्रापित्रेत्यर्थः ॥ रमापतइतिकश्चित् ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यस्मान्मौंजीमोक्षणात्॥५८॥ऊढाविवाहिता ॥ त्यक्तकुलाध्वगापरित्यक्तकुलाचारात्यक्तकुलाध्वानंशीघ्रंवागच्छतीतितथाऽव्यभिचारिणीत्यर्थः॥ त्यक्तकुलाऽध्वगेतिपदद्वयंवा॥ त्यक्ताइतिपाठेयथाकथं चिदूढाकुलाध्वगासाध्व्यपिवृषलीपतिनातेनत्यक्तेत्यर्थः ॥ ५९ ॥ दुरोदरपरायणोद्यूतैकरतः ॥ ६० ॥ रुमायामिति ॥ रुमायांलवणाकरेभूप्रदेशे ॥ हताताडितासतीगौर्मृतेत्यन्वयः ॥ ६१ ॥ ॥६२॥६३॥ भक्षयदभक्षयत् ॥ अयमेववापाठः ॥ ६४ ॥ सौरेहेसूर्यज ॥:कवलीकृतोग्रासीकृतोभक्षितइतियावत् ॥ प्रोतोविद्धः ॥ ६५ ॥ दंदशूकैःसर्पैः ॥ शुकैरितिपाठेशुकैर्वृश्चिकैरित्यर्थः ॥ सदा कृतमनिष्टंयेनससदाकृतानिष्टः ॥ अवश्यसापेक्षत्वात्समासाभावाभावः ॥ कस्येत्याकांक्षायामाह ॥ आत्मनइति ॥ ६६ ॥ आस्फालितंताडितंकुट्टितमित्येतत् ॥ कराभ्यामितिशेषः ॥ काष्ठेष्टलो

यथाकथंचिदूढाऽथपत्नीत्यक्तकुलाध्वगा ॥ वृषलीपतिनातेनपरदारापहारिणा ॥५९॥ आरभ्यपंचमाद्वर्षात्परस्वस्यापहारकः ॥ अभूदेषदुराचारोदुरो दरपरायणः ॥ ६० ॥ रुमायांवसताऽनेनहतागौरेकवार्षिकी ॥ एकदादृढदंडेनलिहंतीलवणंमृता ॥ ६१ ॥ जननींपादघातेनबहुशोऽसावताडयत् ॥ कदाचिदपिनोवाक्यंपितुःकृतमनेनवै ॥ ६२ ॥ विषंभक्षितवानेषबहुशःकलहप्रियः ॥ जनोपतापशीलोसौकृतोदरविदारणः ॥ ६३ ॥ धत्तूरकरवी रादिबहुधोपविषाणिच ॥ क्रीडाकलहमात्रेणभक्षयच्चैषदुर्मतिः ॥ ६४ ॥ दग्धोसावग्निनासौरेश्वभिश्चकवलीकृतः ॥ शृंगिभिःपरितःप्रोतोविषाणाग्रैरसौ बहु ॥ ६५ ॥ दंदशूकैर्भृशंदष्टोदुष्टःशिष्टैर्विगर्हितः ॥ काष्ठेष्टलोष्ठैःपापिष्ठःकृतानिष्टःसदात्मनः ॥ ६६ ॥ आस्फालितंशिरोनेनासकृच्चापिदुरात्मना ॥ यदर्च्यतेसदासद्भिरुत्तमांगमनेकधा ॥ ६७ ॥ असौहिब्राह्मणोमंदोगायत्रीमपिवेदन ॥ कामतोमत्स्यमांसानिजग्धान्येतेनदुर्धिया ॥ ६८ ॥ आत्मार्थं पायसमसौपर्यपाक्षीदनेकधा ॥ लाक्षालवणमांसानांसपयोदधिसर्पिषाम् ॥६९॥ विषलोहायुधानांचदासीगोवाजिनामपि ॥ विक्रेताऽसौसदामूढस्तथा वैकेशचर्मणाम् ॥ ७० ॥ शूद्रान्नपरिपुष्टांगःपर्वण्यहनिमैथुनी ॥ पराङ्मुखोदैवपित्र्यकर्मण्येषदुरात्मवान् ॥ ७१ ॥ पक्षिणोघातितानेनमृगाश्चापिपरः शतम् ॥ अकारणद्रुमच्छेदीसदानिर्दयमानसः ॥ ७२ ॥ उद्वेगजनकोनित्यंनिजबंधुजनेष्वपि ॥ असत्यवादीसततंसदाहिंसापरायणः ॥ ७३ ॥ अदत्तदानःपिशुनःशिश्नोदरपरायणः ॥ किंबहूक्तेनरविजसाक्षात्पातकमूर्तिमान् ॥ ७४ ॥ रौरवेप्यंधतामिस्रेकुंभीपाकेऽतिरौरवे ॥ कालसूत्रेकृमिभु जिपूयशोणितकर्दमे ॥ ७५ ॥ असिपत्रवनेघोरेयंत्रपीडेसुदंष्ट्रके ॥ अधोमुखेपूतिगंधेविष्टागर्त्तेष्वभोजने ॥७६॥ सूचीभेद्येऽथसंदंशेलालापेक्षुरधारके ॥ प्रत्येकंनरकेत्वेषपात्यतांकल्पसंख्यया ॥ ७७ ॥ धर्मराजःसमाकर्ण्यचित्रगुप्तमुखादिति ॥ निर्भर्त्स्यतंदुराचारंकिंकरानादिदेशह ॥ ७८ ॥

ष्ठैरितिवानुषंजनीयम् ॥ ६७ ॥ कामतोजग्धानिभक्षितानि ॥ अनेनाकामतोभक्षणेनदोषइतिध्वनितम् ॥ तथाचाहमनुः ॥ देवान्पितॄन्समभ्यर्च्यखादन्मांसंनदुष्यतीत्यादि ॥ ६८ ॥ पायसंपरमा न्नम् ॥ पर्यपाक्षीत्पक्कवान् ॥ लाक्षेति ॥ लाक्षालवणादीनांविक्रेतेत्यग्रिमेणान्वयः ॥ ६९ ॥ केशाश्चामराण ॥ ७० ॥ अहनिदिवसेच ॥ ७१ ॥ शतात्परेपरःशतमसंख्याताइत्यर्थः ॥ ७२ ॥ ७३ ॥ उपसंहरन्नुशास्तिंदर्शयति ॥ किंबहूक्तेनेति ॥ ७४ ॥ रौरवाद्यानरकविशेषाः ॥ ७५ ॥ ७६ ॥ कल्पसंख्ययाब्रह्मणोदिनगणनया ॥ ७७ ॥ आदिदेशाज्ञप्तवान् ॥ ७८ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

आदेशप्रकारमाह ॥ भ्रूसंज्ञयाहृतैर्भ्रूचालनेनोक्तैरित्यर्थः ॥ भ्रूसंज्ञयाथतैरीतिक्वचित्पाठः ॥ तत्र भ्रूसंज्ञयाऽऽदिदेशेत्यन्वयः ॥ ७९ ॥ ८० ॥ तत्पादगुल्फम् ॥ ८१ ॥ ८२ ॥८३॥ काप्येषानिरंजनचित्स्वरूपा ॥ योऽसौनिरंजनोदेवश्चित्स्वरूपीजनार्दनः ॥ सएवद्रवरूपेणगंगांभोनात्रसंशयइति ॥ सदाशिवस्येयंसादाशिवी ॥ ८४ ॥ निरंजनस्यकथंद्रवरूपेणप्रवृत्तिरित्याशंकायामाह ॥ करुणेति ॥ ८५ ॥ अतएवएषानान्यसरित्समेत्याह ॥ यथाऽन्याइति ॥ ८६ ॥ श्रुत्यक्षराणीति ॥ हेमुनेश्रुत्यक्षराणिउपनिषदक्षराणिनिश्चोत्यानिष्पीडचउपनिषदर्थान्निश्चित्येत्येतत् ॥ तद्द्रवैस्ते

भ्रूसंज्ञयाहृतैर्नीतःसबद्धानिरयालयम् ॥ आक्रंदरावोयत्रोच्चैःपापिनांरोमहर्षणः ॥ ७९ ॥ ॥ ईश्वरउवाच ॥ ॥ यातनास्वतितीव्रासुवाहीकेसंस्थितेतदा ॥ तत्कालपुण्यफलदेगाङ्गेयांभसिनिर्मले ॥ ८० ॥ पतितंतद्विगृध्रास्याद्वाहीकस्यद्विजन्मनः ॥ हरेर्विमानंतत्कालमापन्नंसुरसद्मतः ॥ ८१ ॥ घंटावलंबितंदिव्यंदिव्यस्त्रीशतसंकुलम् ॥ आरुह्यदेवयानंसदिव्यवेषधरोद्विजः ॥ ८२ ॥ वीज्यमानोऽप्सरोवृंदैर्दिव्यगंधानुलेपनः ॥ जगामस्वर्गभुवनंगंगास्थिपतनाद्धरे ॥ ८३ ॥ स्कंदउवाच ॥ ॥ वस्तुशक्तिविचारोयमद्भुतःकोपिकुंभज ॥ द्रवरूपेणकाप्येषाशक्तिःसादाशिवीपरा ॥ ८४ ॥ करुणामृतपूर्णेनदेवदेवेनशंभुना ॥ एषाप्रवर्तितागंगाजगदुद्धरणायवै ॥ ८५ ॥ यथान्याःसरितोलोकेवारिपूर्णाःसहस्रशः ॥ तथैषानानुमंतव्यासद्भिस्त्रिपथगामिनी ॥८६॥ श्रुत्यक्षराणिनिश्चोत्यकारुण्याच्छंभुनामुने ॥ निर्मितातद्द्रवैरेषागंगागंगाधरेणवै ॥ ८७ ॥ योगोपनिषदामेतंसारमाकृष्यशंकरः ॥ कृपयासर्वजंतूनांचकारसरितांवराम् ॥ ८८ ॥ अकलानिधयोरात्र्योविपुष्पाश्चैवपादपाः ॥ यथातथैवतेदेशायत्रनास्त्यमरापगा ॥ ८९ ॥ अनयाःसंपदोयद्वन्मखायद्वददक्षिणाः ॥ तद्वद्देशादिशःसर्वाहीनागंगांभसाहरे ॥ ९० ॥ व्योमांगणमनर्कंचनक्तेऽदीपंयथागृहम् ॥ अवेदाब्राह्मणायद्वद्गंगाहीनास्तथादिशः ॥ ९१ ॥ चांद्रायणसहस्रंतुयःकुर्यादेहशोधनम् ॥ गंगामृतंपिबेद्यस्तुतयोर्गंगांबुपोऽधिकः ॥ ९२ ॥ पादेनैकेनयस्तिष्ठेत्सहस्रंशरदांशतम् ॥ अब्दंगंगांबुपोयस्तुतयोर्गंगांबुपोऽधिकः ॥ ९३ ॥ अवाक्छिराःप्रलंबेद्यःशतसंवत्सरान्नरः ॥ भीष्मसूवालुकातल्पशयस्तस्माद्वरोहरे ॥ ९४ ॥ पापतापाभितप्तानांभूतानामिहजाह्नवी ॥ पापतापहरायद्वद्गंगानान्यत्तथाकलौ ॥ ९५ ॥ तार्क्ष्यवीक्षणमात्रेणफणिनोनिर्विषायथा ॥ निष्प्रभाणितथैनांसिभागीरथ्यवलोकनात् ॥ ९६ ॥ गंगातटोद्भवांमृत्स्नांयोमौलौबिभृयान्नरः ॥ बिभर्तिसोऽर्कबिंबंवैतमोनाशायनिश्चितम् ॥ ९७ ॥

पानुपनिषदक्षराणांद्रवैरसैस्तत्प्रतिपाद्यैर्ब्रह्मानंदैरित्यर्थः ॥ रसोवैसःरसं ह्येवायंलब्ध्वानंदीभवतीतिश्रुतेः ॥ कारुण्याच्छंभुनासर्वेषामानंदकारणेनगंगाधरेणएषागंगाविनिर्मितेत्यर्थः ॥ ८७ ॥ एतदेवविवृणोति ॥ योगोपनिषदामिति ॥ योगोब्रह्मात्मनोरैक्यंतत्प्रतिपादकोपनिषदामित्यर्थः ॥ एतंब्रह्मानंदम् ॥ ८८ ॥ अकलानिधयश्चंद्ररहिताः ॥ ८९ ॥ अनयानीतिरहिताः ॥ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ भीष्मसूवालुकातल्पशयः भीष्मंसूतइतिभीष्मसूर्गंगातस्यावालुकाएवतल्पंशय्यातत्रशेतइतितथा ॥ ९४ ॥ ९५ ॥ ९६ ॥ गंगातटोद्भवांगंगातीरेजाताम् ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वंशद्वयंमातृवंशंपितृवंशंचेत्यर्थः ॥ ९९ ॥ गंगातटोत्तरामितिपाठेगंगातीरादुत्तरउत्तरणमुद्धारोयस्याःसातथातामित्यर्थः ॥ तमोनाशायपापनाशायपरंपरयाऽज्ञाननाशायेतिवा ॥ ९७ ॥ ९८ ॥ अयमर्थः ॥ गंगायाः कीर्तनादिति ॥ कीर्तनाद्गंगेत्यादिनामकीर्तनाद्दर्शनात्स्पर्शात्पानावगाहनात्पानादवगाहनाच्चपुण्यापुण्यर्द्धिनाशयोर्धर्मोपचयाधर्मनाशयोर्गंगादशोत्तरगुणाज्ञेयाइत्यन्वयः ॥ कीर्तनाद्यावान्पुण्योपचयोभवत्यपुण्यनाशश्चतावतोपिदशगुणोदर्शनात् एवंतावतोपिदशगुणःस्पर्शात् एवंतावतोपिदशगुणः पानात् एवंतावतोपिदशगुणोऽवगाहनादिति ॥ १०० ॥ १ ॥ २ ॥ श्रुतिमृइरावतीमित्यादिकाम् ॥ विनिश्चितार्थामसंदेहार्थाम् ॥ ३ ॥ श्रुतिमेवदर्शयति ॥ इरावतीमित्यादिनाविशुद्धिकामइत्यंतेन ॥ गंगांश्रितासःश्रिताआश्रिताइत्यर्थः ॥ मृतासइतिपाठे

श्रुताभिलषितादृष्टास्पृष्टापीताऽवगाहिता ॥ पुंसांवंशद्वयं व्यसनैरभिभूतस्यधनहीनस्यपापिनः ॥ गंगैवकेवलंतस्यगतिरुक्तानचान्यथा ॥ ९८ ॥ नसुतैर्नचवावित्तै गंगातारयेन्नात्रसंशयः ॥ ९९ ॥ कीर्तनाद्दर्शनात्स्पर्शाद्गंगापानावगाहनात् ॥ दशोत्तरगुणाज्ञेयापुण्यापुण्यर्द्धिनाशयोः ॥ १०० ॥ र्नान्येनापिसुकर्मणा ॥ तत्फलंप्राप्यतेमर्त्यैर्गंगामाप्ययदाप्यते ॥ १ ॥ जात्यंधाःपंगवस्तेवैजीवंतोप्यथतेमृताः ॥ समर्थाअपियेगंगांनस्नायुर्मोक्षग र्भिणीम् ॥ २ ॥ श्रुतिंनिशामयहरेगंगामाहात्म्यभाषिणीम् ॥ विनिश्चितार्थांश्रुत्वाश्रयेद्गंगांनरोत्तमः ॥ ३ ॥ इरावतींमधुमतींपयस्विनीममृतरूपा मूर्जस्वतीम् ॥ त्रिदिवप्रसूतांगंगांश्रितासस्त्रिदिवंव्रजंति ॥ ४ ॥ ऋषिजुष्टांविष्णुपदींपुराणांसुपुण्यधारांमनसाहिलोके ॥ सर्वात्मनाजाह्नवींयेप्रपन्नास्ते ब्रह्मणःसदनंसंप्रयांति ॥५॥ लोकानिमान्नयतियाजननीवपुत्रान्स्वर्गंसदासर्वगुणोपपन्ना ॥ स्थानमिष्टंब्राह्ममभीप्समानैर्गंगासदैवात्मवशैरुपास्या ॥६॥ उस्रैर्जुष्टामिषतींविश्वरूपामिरावतींजनयित्रींगुहस्य ॥ शिष्टैःसेव्याममृतांब्रह्मकांतांगंगांश्रयेदात्मविशुद्धिकामः ॥ ७ ॥ गंगायांतुनरःस्नात्वाब्रह्मचारी समाहितः ॥ विधूतपापोभवतिवाजपेयंचविंदति ॥ ८ ॥ अशुभैःकर्मभिर्ग्रस्तान्मज्जमानान्महार्णवे ॥ पततोनिरयेगंगासंश्रितानुद्धरेत्सदा ॥ ९ ॥ ब्रह्मलोकस्तुलोकानांसर्वेषामुत्तमोयथा ॥ सरितांसरसांवापिवरिष्ठाजाह्नवीतथा ॥ ११० ॥ अन्यत्रसम्यक्संकल्प्यतपःकृत्वासमात्रयम् ॥ यत्फलं तद्भवेद्भक्त्यागंगायांघटिकाऽर्धतः ॥ ११ ॥ स्वर्गस्थस्यनसाप्रीतिर्भुंजतःसुखमक्षयम् ॥ यास्याद्गंगातटेपुंसांरात्रौचंद्रोदयेसति ॥ १२ ॥ जरारोग भिपन्नंतुकुणपंजाह्नवीजले ॥ धैर्येणतृणवत्त्यक्त्वाप्रविशेदमरावतीम् ॥ १३ ॥ वार्योघैःसततंयस्याःप्लाव्यतेशशिमंडलम् ॥ भूयोधिकतरांशोभांबिभर्तितदहः क्षये ॥ १४ ॥ आप्लुतस्यजलेयस्याःसद्योनश्यतिपातकम् ॥ महतःश्रेयसःप्राप्तिस्तत्क्षणादेवजायते ॥ १५ ॥ पितृभ्यःश्रद्धयायत्रदत्तास्त्वापःस्ववंशजैः ॥ प्रयच्छंतिपरांतृप्तिंशरदांत्रयमच्युत ॥ १६ ॥ तारयेत्क्षितियान्मर्त्यानधःस्थांश्चसरीसृपान् ॥ स्वर्गेस्वर्गसदोविष्णोगंगात्रिपथगाततः ॥ १७ ॥

गंगायांमृताःसंतस्त्रिदिवंसुखात्मकंकैवल्यंव्रजन्तीत्यर्थः ॥ तथाचोक्तम् ॥ गंगायांचजलेमोक्षइति ॥ इरावत्यादयःपंचनदीप्रभेदास्तदात्मिकाम् ॥ अर्थांतरत्वेस्पष्टएवार्थः ॥ ४ ॥ ब्रह्मणःसदनं वैकुण्ठम् ॥ ५ ॥ ६ ॥ उस्रैर्देवैस्तेजोमयत्वात् ॥ इषतीमिच्छतीमिच्छांकुर्वतीमित्यर्थः ॥ इरावतीमिराभूवागाद्यातद्वतीम् ॥ ब्रह्मकांतांब्राह्मणानांकमनीयामाभिलषितांसावित्रीरूपांवा ॥७॥८॥ ॥ ९ ॥११०॥११॥१२॥१३॥ यस्यावार्योघैःशशिमंडलंप्लाव्यतेइत्यादिकंसार्धश्लोकंपरमंतीर्थमित्यग्रेणान्वयः ॥ तच्छशिमंडलम् ॥ अहःक्षयेरात्रौ ॥१४॥१५॥१६॥ क्षितौयांतिगच्छंतीतिक्षिति



CC-0.Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यास्तान् ॥ क्षितिजानितिवापाठः ॥ त्रिपथगानामनिर्वक्ति ॥ तारयेदिति ॥ त्रीन्पथःत्रयश्चतेपंथानश्चतान्वागच्छतीतितथा ॥ १७ ॥ १८ ॥ १९ ॥ १२० ॥ २१ ॥ २२ ॥ २३ ॥
॥ १२४ ॥ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायामष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ॥ छ ॥ ॥ नमोभगवतेतस्मैब्रह्मविष्णुशिवात्मने ॥ परब्रह्मस्वरूपिण्यैगंगायैचनमोनमः ॥
॥ १ ॥ एकोनत्रिंशदध्यायेगंगानामसहस्रकम् ॥ वर्ण्यतेभूरिमाहात्म्यंसर्वाघौघविदारणम् ॥ २ ॥ पूर्वोक्तापरिमितगुणगणायागंगायाःस्नानमंतरेणनृणांजन्मव्यर्थंस्यादतोऽशक्तदूरदेशस्थ
तानांयेनोपायांतरेणतद्भवतितत्किमस्तीतिसर्वलोकोपकारायपृच्छति विनेतिद्वाभ्याम् ॥ १ ॥ २ ॥ उपायांतरमेवविकल्प्यानुपृच्छति दानंवेतिद्वयेन ॥ मंत्रस्तोत्रमितिपाठएकवद्भावः ॥ ३ ॥

तीर्थानामुत्तमंतीर्थंसरितामुत्तमासरित् ॥ स्वर्गदासर्वजंतूनांमहापातकिनामपि ॥ १८ ॥ अध्युष्टाःकोटयोविष्णोसंतितीर्थानिसर्वतः ॥ दिविभुव्यंतरिक्षेचजाह्नव्यांतानिकृत्स्नशः ॥ १९ ॥ ज्ञात्वाज्ञात्वाचगंगायांयःपंचत्वमवाप्नुयात् ॥ अनात्मघातीस्वर्गीस्यान्नरकान्सनपश्यति ॥ १२० ॥ गंगैवसर्वतीर्थानिगंगैवचतपोवनम् ॥ गंगैवसिद्धिक्षेत्रंहिनात्रकार्याविचारणा ॥ २१ ॥ यत्रकामफलावृक्षामहीयत्रहिरण्मयी ॥ जाह्नवीस्नायिनस्तत्रनिवसंतिघटोद्भव ॥ २२ ॥ धेनुंभागीरथीतीरेसुशीलांचपयस्विनीम् ॥ वासोरत्नैरलंकृत्वाब्राह्मणायददातियः ॥ २३ ॥ यावंतितस्यालोमानिमुनेतत्संततेरपि ॥ तावद्वर्षसहस्राणिसस्वर्गसुखभुग्भवेत् ॥ १२४ ॥ ॥ इति श्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायां चतुर्थे काशीखंडेपूर्वार्द्धे गंगामहिमानामाष्टाविंशतितमोऽध्यायः ॥२८॥ ॥ अगस्त्यउवाच ॥ ॥ विनास्नानेनगंगायांनृणांजन्मनिरर्थकम् ॥ उपायांतरमस्त्यन्यद्येनस्नानफलंलभेत् ॥१॥ अशक्तानांचपंगूनामालस्योपहतात्मनाम् ॥ दूरदेशांतरस्थानांगंगास्नानंकथंभवेत् ॥ २ ॥ दानंवाऽथव्रतंवाऽथमंत्रःस्तोत्रंजपोऽथवा ॥ तीर्थांतराभिषेकोवादेवतोपासनंतुवा ॥ ३ ॥ यद्यस्तिकिंचित्षडक्रगंगास्नानफलप्रदम् ॥ विधानांतरमात्रेणतद्वदप्रणतायमे ॥ ४ ॥ त्वत्तोनवेदस्कंदान्योगंगागर्भसमुद्भव ॥ परंस्वर्गतरंगिण्यामहिमानंमहामते ॥ ५ ॥ ॥ स्कंदउवाच ॥ ॥ संतिपुण्यजलानीहसरांसिसरितोमुने ॥ स्थानेस्थानेचतीर्थानिजितात्माध्युषितानिच ॥६॥ दृष्टप्रत्ययकारीणिमहामहिमभांज्यपि ॥ परंस्वर्गतरंगिण्याःकोट्यंशोपिनतत्रवै ॥ ७ ॥ अनेनैवानुमानेनबुद्ध्यस्वकलशोद्भव ॥ दध्रेगंगोत्तमांगेनदेवदेवेनशंभुना ॥८॥ स्नानकालेऽन्यतीर्थेषुजप्यतेजाह्नवीजनैः ॥ विनाविष्णुपदींक्वान्यत्समर्थमघमोचने ॥९॥ गंगास्नानफलंब्रह्मन्गंगायामेवलभ्यते ॥ यथाद्राक्षाफलस्वादोद्राक्षायामेवनान्यतः ॥१०॥ अस्त्युपायइहत्वेकःस्याद्येनाविकलंफलम् ॥ स्नानस्यदेवसरितोमहागुह्यतमोमुने ॥११॥

विधानांतरमात्रेणकेवलानुष्ठानांतरेण ॥ विधानांतरमत्रेशेतिक्वचित् ॥ ४ ॥ अन्यएवकश्चित्प्रष्टव्यइतिनवाच्यमित्याह ॥ त्वत्तइति ॥ यतस्त्वंगंगागर्भसमुद्भवोऽतस्त्वत्तःपरोगंगामाहात्म्यंनजानातीत्यर्थः ॥ ५ ॥ यद्यपिपृथिव्यांमध्येमध्येप्रत्यक्षफलजनकानिमुनिभिरध्युषितानिमहामहिमयुक्तान्यपितीर्थानिसंतितथापिगंगायाःकोट्यंशस्यांशोपितेषुनास्त्यतोगंगास्नानजंफलंगंगायामेवलभ्यतेनान्यत्रेतिसदृष्टांतमुत्तरमाह संतिपुण्यजलानीतिपंचभिः ॥ ६ ॥ प्रतीयतइतिप्रत्ययःफलम् ॥ ७ ॥ ८ ॥ ९ ॥ द्राक्षागोस्तनी ॥ १० ॥ तर्ह्यंधपंग्वादीनांकथंनिस्तारइत्यतआह ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अस्त्युपायइति ॥ ११ ॥ १२ ॥ इदंनाम्नांसहस्रमित्यन्वयः ॥ १३ ॥ शिवसंतोषसंततिशिवसंतोषस्यसंततिः परंपरायत्रतत्तथा ॥ संतोषकृदितिक्वचित् ॥ १४ ॥ स्तवेषुमध्येराजंतइति स्तवराजास्तेषुशोभनंशोभायमानंचारुतरमित्यर्थः ॥ वेदोपनिषदावेदांतेनतज्जन्यविद्ययावा ॥ १५ ॥ १६ ॥ प्रथमतोगंगानामसहस्रंवक्ष्यन्मंगलमाचरति ॥ ॐनमोगंगादेव्याइति ॥ नन्वत्रा कारायादिक्षकारायंतानिनामानिक्रमेणदृश्यंतेतत्किमितिमध्येऋॠऌॡअःङञठणथादीनिनामानिनोपलभ्यंतइति ॥ नचपतितानीतिवाच्यम् ॥ बहुपुस्तकेष्वदृष्टेः ॥ गणनायांकृतायांकिंचिद धिकानिनवशतान्येवलभ्यंतइति ॥ अत्रोच्यते ॥ संपूर्णसहस्रनाम्नांकीर्तनादिनासद्यएवसशरीराणांप्राणिमात्राणांवैकुंठशिवलोकादिप्राप्तेरकांडएवसृष्टयाद्युच्छेदाद्दकारादिनववर्णानांकियतांनाम्नां संगोपनंगंगयैवकृतमिति ॥ यथादर्शनमात्रेणसर्वजंतूनांसशरीराणांसद्योवैकुंठलोकप्राप्तिवारणायपुरुषोत्तमाख्येक्षेत्रेऽगवैकल्यंश्रीपुरुषोत्तमस्ययथावाबदरिकाश्रमेश्रीनारायणस्येति ॥ नचतर्हि सांगाभावात्फलाभावः ॥ अग्निहोत्रादिकर्माणिसापायानिकलौयुगे ॥ गंगास्नानंहरेर्नामनिरपायमिदंद्वयम् ॥ नेहाभिक्रमनाशोऽस्तिप्रत्यवायोनविद्यते॥स्वल्पमप्यस्यधर्मस्यत्रायतेमहतोभयादित्यादिस्मृ तेर्यथाकथंचित्कृतस्यापिगंगास्नानस्यहरिहरगंगादिनामोच्चारणस्यचफलावश्यंभावात्॥ अस्तुवायथातथाकिमस्माकंवराकाणांतच्चिंतया॥ यथास्थितिनाम्नांसहस्रस्यसमावेशोयथाभवतितथाव्याख्यायत इति ॥ अत्रोंकाररूपिणीत्यादिशब्दानां पुनरुक्तानामपिवृत्तिभेदान्नपौनरुक्त्यम्॥गणनाथांबिकाढुंढिविघ्नेशजननीत्यादीनांवृत्त्येकत्वेपिशब्दभेदान्नपौनरुक्त्यम्॥अर्थैक्यपौनरुक्त्यंनदोषाय॥योऽसौनिरंज

शिवभक्तायशांतायविष्णुभक्तिपरायच ॥ श्रद्धालवेत्वास्तिकायगर्भवासमुमुक्षवे ॥ १२ ॥ कथनीयंनचान्यस्यकस्यचित्केनचित्क्वचित् ॥ इदंरहस्यं परमंमहापातकनाशनम् ॥ १३ ॥ महाश्रेयस्करंपुण्यंमनोरथकरंपरम् ॥ द्युनदीप्रीतिजनकंशिवसंतोषसंतति ॥ १४ ॥ नाम्नांसहस्रंगंगायाःस्तवराजेषुशो भनम् ॥ जप्यानांपरमंजप्यंवेदोपनिषदांसमम् ॥ १५ ॥ जपनीयंप्रयत्नेनमौनिनावाचकंविना ॥ शुचिस्थानेषुशुचिनासुस्पष्टाक्षरमेवच ॥ १६ ॥

स्कंदउवाच ॥ ॥ ॐनमोगंगादेव्यै ॥ ॐकाररूपिण्यजराऽतुलाऽनंताऽमृतस्रवा ॥ अत्युदाराऽभयाऽशोकाऽलकनंदाऽमृताऽमला ॥ १७ ॥

नोदेवश्चित्स्वरूपीजनार्दनः ॥ सएवद्रवरूपेणगंगांभोनात्रसंशयइतिस्मृतेर्गंगायाःपरब्रह्मरूपत्वात्सैवात्रविशिष्यते ॥ तत्रापिस्त्रीलिंगशब्दागंगायानपुंसकशब्दागंगांभसःपुँल्लिंगशब्दाजनार्दनस्यविशेषण मितिद्रष्टव्यम् ॥ तत्रोंकारस्याकारोकारमकारात्मकत्वादोंकाररूपिणीत्यस्याकारादित्वंबोद्धव्यम् ॥ यद्वा ॐकारस्यसर्ववर्णात्मकत्वान्मांगलिकत्वाच्चादावुपादानंयुक्तमितितदादित्वम् ॥ तदुक्तम् ॥ ॐकारप्रभवावेदाॐकारप्रभवाःसुराः ॥ ॐकारप्रभवंसर्वंत्रैलोक्यंसचराचरम् ॥ ॐकारश्चाथशब्दश्चद्वावेतौब्रह्मणःपुरा ॥ कंठंभित्त्वाविनिर्यातौतस्मान्मांगलिकावुभौ ॥ स्रवत्यनोंकृतंपूर्वंपरस्माच्चविशीर्य तेइत्यादि ॥ ॐकाररूपिणीति ॥ यद्यपिब्रह्मादिशब्दाःपरदेवतायावाचकास्तथापिश्रुतिप्रामाण्यात्परदेवतायानेदिष्ठमभिधानमोंकारः ॥ अतएवपरदेवताप्रतिपत्ताविदंपरंसाधनम् ॥ तच्चाद्विप्रका रेणप्रतीकत्वेनाभिधानत्वेनच ॥ तथाविष्ण्वादिप्रतिमाभेदेन ॥ एवमोंकाररूपिणीपरादेवताप्रतिपत्तव्या ॥ तथाह्योंकारालंबनस्यपरादेवताप्रसीदाति ॥ एतदालंबनंश्रेष्ठमेतदालंबनंपरम् ॥ एतदालंबनं ज्ञात्वाब्रह्मलोकेमहीयतइतिश्रुतेः॥तथाचायमर्थः॥ॐकाररूपिणी ॐकारप्रतीकाॐकारवाचकासर्वात्मकत्वात्प्रणवस्वरूपाचेत्यर्थः॥नविद्यतेजराऽपक्षयलक्षणापंचमीविकृतिर्यस्याःसाऽजरा॥ नविद्यतेतुला परिमाणंयस्याःसाऽतुला ॥ नविद्यतेदेशतःकालतोवस्तुतोंतःपरिच्छेदःषष्ठोविकारोविनाशोवायस्याःसाऽनंता ॥ अमृतंधर्मद्रवात्मकंतोयंस्रवतिवहतिमोहिनीरूपेणदेवेभ्योवाऽमृतंसुधांददातीत्यमृतस्रवा॥ अतिशयेनोदारादात्रीमहतीत्यतिक्रांताउदारादातारोमहांतोवाययासाअत्युदारा ॥ नविद्यतेभयंयस्यायस्याःसकाशादितिवासाऽभया ॥ अद्वितीयत्वात् ॥ द्वितीयाद्वैभयंभवतीतिश्रुतेः ॥ नविद्यतेशोको



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यस्मायस्याःसकाशादितिवासाऽशोका ॥ तत्रकोमोहःकःशोकएकत्वमनुपश्यतइतिश्रुतेः ॥ अलकनंदाभारतवर्षगागंगा ॥ साचसप्तधा ॥ तदुक्तंवैष्णवे ॥ समंताद्ब्रह्मणःपुर्यागंगा पततिवैदिवः ॥ सातत्रपतितादिक्षुचतुर्धाप्रतिपद्यते ॥ सीताचालकनंदाचचक्षुर्भद्राचवैक्रमादित्यादि ॥ अमृतासुधास्वरूपा ॥ नविद्यतेमृतंमरणंयस्यायस्याःसकाशादितिवासाऽमृतेतिवा ॥ नजायते म्रियतेवाविपश्चिदित्यादिश्रुतेः॥ अमलानिर्मलाशुद्धसत्त्वेत्यर्थः ॥ नविद्यतेसंसारलक्षणंमलंयस्यायस्याःसकाशादितिवासाऽमलाइतिवा ॥१७॥ अःविष्णुर्नाथोयेषांतेऽनाथाविष्णुभक्तास्तेषुसंसारांगारपा पच्यमानेषुवत्सलास्निग्धाऽनाथवत्सला ॥ अमोघानामतःशांतनोर्भार्यावस्थायाम् ॥ ब्रह्मपुत्रमहाभागशांतनोःकुलनंदन ॥ अमोघागर्भसंभूतगृहाणार्घ्यंनमोस्तुतइतिस्मृतेः ॥ नविद्यंतेमोघाव्यर्थाधर्मा र्थवाममोक्षायस्यायस्याःसकाशादितिवा साऽमोघाऽव्यर्थापरमार्थेतियावदितिवा ॥ सत्यंज्ञानमनंतमित्यादिश्रुतेः॥अपामपंचीकृतानांजलानांयोनिःकारणम् ॥ ताआपऐक्षतेतिश्रुतेः ॥ अपएवससर्जादा विातिस्मृतेश्च ॥ समुद्रात्मकत्वाद्वाऽपांयोनिःकारणम् ॥ यथासर्वासामपांसमुद्रएकायोनिरितिश्रुतेः ॥ अमृतंमोक्षंभक्तेभ्यःप्रददात्यभक्तेभ्योवाप्रकर्षेणखंडयतीत्यमृतप्रदा ॥ नकेनापिप्रमाणेनव्य ज्यतइत्यव्यक्तंब्रह्म ॥ येत्वक्षरमनिर्देश्यमव्यक्तंपर्युपासतइतिस्मृतेः ॥ प्रकृतिर्वाऽव्यक्तम् ॥ नारायणःपरोऽव्यक्तादितिस्मृतेः ॥ तल्लक्षणातत्स्वरूपाऽव्यक्तलक्षणा ॥ नकेनापिक्षोभ्यतइत्यक्षोभ्या कूटस्थेत्यर्थः ॥ नकेनाप्यऽवच्छिद्यतइत्यनवच्छिन्नात्रिविधपरिच्छेदशून्येत्यर्थः ॥ एकमेवाद्वितीयमितिश्रुतेः ॥ नविद्यतेपरउत्कृष्टोयस्याःसाऽपरा ॥ अवतारादिषुकदापिकेनचिन्नजितेत्य

अनाथवत्सलाऽमोघाऽपांयोनिरमृतप्रदा ॥ अव्यक्तलक्षणाऽक्षोभ्याऽनवच्छिन्नाऽपराजिता ॥ १८ ॥ अनाथनाथाऽभीष्टार्थसिद्धिदाऽनंगवर्धिनी ॥
अणिमादिगुणाऽधाराग्रगण्याऽलीकहारिणी ॥ १९ ॥ अचिंत्यशक्तिरनघाऽद्भुतरूपाऽघहारिणी ॥ अद्रिराजसुताऽष्टांगयोगसिद्धिप्रदाऽच्युता ॥ २० ॥

जिता ॥ अपराजितेत्यत्रयद्यप्येकनामप्रतिभातितथापिसहस्रसंख्यापरिपूर्त्यर्थमेवव्याख्यायतइत्येवमेताहशेस्थलेअग्रेपिबोद्धव्यम् ॥ १८ ॥ अःविष्णुर्नाथोयेषांतैरनाथैर्वैष्णवैःसंसारांगारदंदह्यमानै र्वानाथ्यतेप्रार्थ्यतेइत्यनाथनाथा ॥ भक्तानांयेऽभीष्टाऽर्थास्तेषांसिद्धिदातत्प्रापिका ॥ अभक्तानांसिद्धिखंडिकावेत्यभीष्टार्थसिद्धिदेत्यर्थः ॥ अनंगवर्धिनीकामवर्धिनीकामच्छेत्रीवा ॥ वृधुच्छेदने इतिधातुः ॥ नविद्यतेअंगंयस्यासावनंगःपरमात्मातंवर्धयितुंप्रापयितुंशीलंयस्याःसाऽनंगवर्धिनीतिवा ॥ अणिमाआदिर्येषांतेअणिमादयः ॥ आदिपदेनमहिमागरिमालघिमेशित्ववशित्वप्राप्तिप्राका म्यानिगृह्यंते ॥ तेगुणायस्याःसाऽणिमादिगुणा ॥ अःविष्णुराधारोयस्याःसाआधारातदेकाश्रयेत्यर्थः ॥ तत्पादपद्मनिःसृतत्वात् ॥ अग्रेप्रथमतोगण्यतइत्यग्रगण्यासर्वेषांमध्येश्रेष्ठेत्यर्थः ॥ एषसर्वे श्वरइत्यादिश्रुतेः ॥ अलीकंमिथ्याभूतमनिर्वचनीयमज्ञानंतत्कार्यंहर्तुंशीलंयस्याःसाऽलीकहारिणी॥ यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदित्यादिश्रुतेः॥१९॥ अचिंत्याशक्तिर्मायाख्यायस्याऽचिंत्यादुर धिगम्याचसाशक्तिश्चिच्छक्तिश्चेतिवासाऽचिंत्यशक्तिः ॥ ममामायादुरत्ययेतिस्मृतेः ॥ नविद्यतेऽघमज्ञानंतत्कार्यलक्षणंपापलक्षणंवायस्यायस्याःसकाशादितिवासाऽनघा ॥ निरवद्यंनिरंजनमिति श्रुतेः ॥ गंगातारयतेपुंसामुभौवंशौभवार्णवादितिस्मृतेश्च ॥ अद्भुतमाश्चर्यरूपंयस्याःसाऽद्भुतरूपा ॥ आश्चर्योऽस्यवक्ताकुशलोऽस्यमन्ता ॥ आश्चर्यवत्पश्यतिकश्चिदेनमित्यादिश्रुतिस्मृतिभ्याम् ॥ अघंहर्तुंशीलंयस्याःसाऽघहारिणी ॥ तदुक्तम् ॥ दृष्टाजन्मशतंपापंस्पृष्टाजन्मशतानिच ॥ स्नानाज्जन्मसहस्राणिहंतिगंगाकलौयुगइति ॥ अद्रिराजस्याहिमवतःसुताकन्याऽद्रिराजसुता ॥ तथाच

१—अतःविष्णुतःधारायस्याःसाअधारा—विष्णुधारेत्यर्थः । अकारादिनामत्वात् ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वालकांडेरामायणे ॥ शैलेंद्रोहिमवान्नामरत्नानामाकरोमहान् ॥ तस्यकन्याद्वयंनामरूपेणाप्रातिमंभुवीत्यादि॥अष्टौयमनियमासनप्राणसंरोधप्रत्याहारधारणाध्यानसमाधिलक्षणान्यंगानिसाधनत्वेनय
स्मिन्सचासौजीवात्मनोरैक्यचिंतनयोगश्चतस्यसिद्धिप्रदामुक्तिप्रदेत्यर्थः ॥ स्वस्वरूपान्नच्यवतइत्यच्युता॥२०॥अक्षुण्णाअखंडिताचासौशक्तिश्चअक्षुण्णाऽकुंठिताशक्तिर्यस्याइतिवा साऽक्षुण्णशक्तिः ॥
असून्प्राणान्ददातिप्रवर्तयतिखंडयतीतिवाऽसुदा ॥ प्राणस्यप्राणमितिश्रुतेः ॥ अनंतानितीर्थानियस्यांसाऽनंततीर्था ॥ सर्वतीर्थमयीगंगेतिस्मृतेः ॥ अमृतममृतवत्स्वादुअमृतनिमित्तंवाउदकं
यस्याःसाऽमृतोदका ॥ अनंतोऽपरिच्छिन्नोमहिमामहत्त्वंयस्याःसाऽनंतमहिमा ॥ नविद्यतेपारोऽवधिर्यस्याःसाऽपारा ॥ सुखमेवसौख्यम् अनंतंसौख्यंब्रह्मसुखंप्रददातीत्यनन्तसौख्यप्रदा ॥ अन्नं
ददातीत्यन्नदामुक्तिप्रदेत्यर्थः ॥ २१ ॥ अशेषाःसमग्रादेवतामूर्तौयस्याःसाअशेषदेवतामूर्तिः ॥ सर्वदेवमयोहरिरितिस्मृतेः ॥ नघोराअघोराशांतस्वभावेत्यर्थः ॥ सरस्वतीरजोरूपातमोरूपा
कलिंदजा ॥ सत्त्वरूपाचगंगात्रनयंतिब्रह्मनिर्गुणमित्युक्तेः ॥ अमृतरूपिणीकैवल्यरूपा ॥ तदेतद्ब्रह्मामृतमभयमितिश्रुतेः ॥ अमृतवर्षिणीतिक्वचित्पाठः ॥ अविद्यैवजालमावरकत्वात्तस्याःशमनी
नाशकर्त्रीअविद्याजालशमनी ॥ अप्रतर्क्यांवाङ्मनसयोरगम्यांगतिंप्रत्यग्ब्रह्मैक्यरूपांप्रददातीतिअप्रतर्क्यगतिप्रदा ॥ हिनिश्चये ॥ एवमग्रेपि ॥ २२ ॥ अशेषाणांविघ्नानाममंगलानामाधिदैविका
धिभौतिकाध्यात्मिकानांसंहर्त्रीअशेषविघ्नसंहर्त्री ॥ एवार्थेतुशब्दः ॥ एवमग्रेपि ॥ अशेषैर्गुणैःसर्वज्ञत्वादिलक्षणैर्गुंफिताग्रथिताव्याप्ताअशेषगुणगुंफिता ॥ अज्ञानमेवतिमिरंतमस्तस्यज्योतिर्नाश

अक्षुण्णशक्तिरसुदाऽनंततीर्थाऽमृतोदका ॥ अनंतमहिमाऽपाराऽनंतसौख्यप्रदाऽन्नदा ॥ २१ ॥ अशेषदेवतामूर्तिरघोराऽमृतरूपिणी ॥ अविद्याजालश
मनीह्यप्रतर्क्यगतिप्रदा ॥ २२ ॥ अशेषविघ्नसंहर्त्रीत्वशेषगुणगुंफिता ॥ अज्ञानतिमिरज्योतिरनुग्रहपरायणा ॥ २३ ॥ अभिरामाऽनवद्यांग्यनंतसारा
ऽकलंकिनी ॥ आरोग्यदाऽऽनंदवल्लीत्वापन्नार्तिविनाशिनी ॥ २४ ॥ आश्चर्यमूर्तिरायुष्याह्याढ्याऽऽद्याऽऽप्राऽऽर्यसेविता ॥ आप्यायिन्याप्तविद्याऽऽ
ख्यात्वानंदाऽऽश्वासदायिनी ॥ २५ ॥

कम् ॥ आश्रयत्वविषयत्वयोःप्रदानेनतत्प्रकाशकमितिवा ॥ भक्तानामनुग्रहायपरायणाव्यग्राअनुग्रहपरायणा ॥२३॥ अभिरमंत्यस्यांयोगिनइत्यभिरामा ॥ रमंतेयोगिनोऽनन्तेसत्यानंदेचिदात्मनि ॥
इतिरामपदेनासौपरंब्रह्माभिधीयतइतिस्मृतेः ॥ नावद्यंदुष्टमंगंस्वरूपंयस्याःसानवद्यांगी ॥ निर्दोषंहिसमंब्रह्मेतिस्मृतेः ॥ अनन्तःसारःस्थिरोंऽशोयस्याःसाऽनंतसारा ॥ अनंतेप्रपंचेसारभूताइतिवा ॥
नविद्यतेकलंकोयस्याःसाऽकलंकिनी ॥ आरोग्यंददातीत्यारोग्यदा ॥ रोगएवरोग्यम्आसमन्ताद्रोग्यंद्यतिखण्डयतीतिवाआरोग्यदा ॥ आनन्दवल्लीसुखलतिका ॥ सएषपरमानंदइतिश्रुतेः ॥ आप
न्नार्तिविनाशिनीभक्तपीडोपशमनी ॥ २४ ॥ आश्चर्यामूर्तिःस्वरूपंयस्याःसाआश्चर्यमूर्तिः ॥ आश्चर्यरूपिणीतिक्वचित्पाठः ॥ आयुर्भ्योहिताआयुष्या ॥ आढ्यापरिपूर्णेत्यर्थः ॥ आदौभवा
आद्या ॥सर्वकारणमित्यर्थः ॥ आसमंतात्प्रातिपूरयतीत्याप्रा ॥ प्रापूरणइतिधातुः ॥ तदुक्तंवैष्णवे ॥ समंताद्ब्रह्मणःपुर्यांगंगापततिवैदिवः ॥ सातत्रपतितादिक्षुचतुर्धाप्रतिपद्यतइत्यादि ॥
पृथ्वीमयाद्दोरूपासतीआसमंताच्चतुःसमुद्रान्व्याप्नोतीतिवाआप्रा ॥ सर्वात्मकत्वाद्गंगायाः ॥ तदुक्तंकालिदासेन ॥ पयोधरीभूतचतुःसमुद्रांजुगोपगोरूपधरामिवोर्वीमिति ॥ आप्तेतिक्वचित्पाठः ॥ आर्यैः
पूज्यैर्विश्वेश्वरादिभिःसेविताउपासिताआर्यसेविता॥आप्यायितुंतृप्तिंजनयितुं शीलंयस्याःसाआप्यायिनी ॥ आप्ताचासौविद्याचेतिआप्तविद्या॥स्वतोऽपरोक्षब्रह्मात्मैकत्वविद्येत्यर्थः॥आप्ताप्राप्ताविद्याययेति
वा ॥ आसमन्तात्ख्याप्रकथनंयस्याःसाआख्याप्रसिद्धेत्यर्थः ॥ प्रसिद्धत्वंचास्याः सितासितेसरितेयत्रसंगते ॥ इमंमेगंगेयमुनेसरस्वतिइत्याद्ययाश्रुत्याबोद्धव्यम् ॥ आनन्दासुखस्वरूपा ॥ विज्ञा



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नमानंदंब्रह्मेतिश्रुतेः ॥ आश्वासंनिर्भयंदातुंशीलंयस्याःसाआश्वासदायिनी ॥२५॥ अलसस्यभावआलस्यन्तद्धंतुंशीलंयस्याःसाआलस्यघ्नी॥आलस्यमूलकामक्रोधादिसर्वदोषहंत्रीत्यर्थः ॥ आपदांहंत्री
आपदामाध्यात्मिकाधिदैविकाधिभौतिकानांदुःखानांहंत्रीनाशयित्री ॥ तत्रकोमोहःकःशोकएकत्वमनुपश्यतइतिश्रुतेः॥आनंदंब्रह्मसुखममृतंसुधातद्वयंभक्तेभ्योवर्षितुंशीलंयस्याःसाआनंदामृतवर्षिणी॥
आनन्दामृतवाहिनीतिपाठेआनंदात्मकंयदमृतंजलंतद्वोढुंशीलंयस्याःसातथा ॥ योऽसौनिरंजनोदेवइत्यादिस्मृतेः ॥ इरावतीनदीप्रभेदस्तद्रूपेरावती ॥ इराइंदिरालक्ष्मीस्तद्वतीतिवा ॥ तथाचात्रैवोक्तम् ॥
इरावतींमधुमतीमित्यादि ॥ इष्टान्ददातीतीष्टदात्री ॥ इष्टाऽभिप्रेतापरमप्रेमास्पदेत्यर्थः ॥ इष्टापूज्येतिवा ॥ तु इष्टंहुतंपूर्तंवापीकूपतडागादिनिर्माणंतयोःफलंप्रददातीतिइष्टापूर्तफलप्रदा ॥ २६ ॥
इतिहासःपुरावृत्तंश्रुतिर्वेदस्ताभ्यामीड्यःस्तुत्योऽर्थःप्रयोजनंपुरुषार्थोवायस्याःसाइतिहासश्रुतीड्यार्था ॥ इदमपिकथंननामद्वयंस्वीकृतम् ॥ तु इहास्मिँल्लोकेऽमुत्रचपरलोकेशुभंसुखंमोक्षंचप्रददाती
तिइहामुत्रशुभप्रदा ॥ सुखदामोक्षदागंगागंगैवपरमागतिरितिस्मृतेः ॥ इज्यायांशीलंस्वभावोयेषांतेइज्याशीलाः समंब्रह्म ॥ निर्दोषंहिसमंब्रह्मेतिस्मृतेः ॥ तद्वंतेयेषांतेसमिनस्तेषुज्येष्ठाकर्मिणां
ज्ञानिनांचोभयेषांमध्येवापूज्येत्यर्थः ॥ समीइतिपाठेदैर्घ्यंछांदसम् ॥ तुइंद्रादिपरिवंदितादेवेंद्रादिभिर्नुतास्तुताचेत्यर्थः ॥ २७ ॥ इलापृथ्वीतस्याअलंकरणरूपामाला ॥ तथाचोक्तम् ॥
वसुधाशृंगारहारावलीति ॥ इद्धादीप्तास्वप्रकाशेत्यर्थः ॥ अत्रायंपुरुषःस्वयंज्योतिरितिश्रुतेः ॥ आत्मास्वप्रकाशः सच्चिद्रूपत्वात् ॥ प्रभाकराभिमतसंविद्वदित्यनुमानाच्च ॥ तु इंदिरालक्ष्मीः
सारम्यंमंदिरमाश्रयोयस्याःसाइंदिरारम्यमंदिरा ॥ इंदिरायावारम्यमंदिररूपा ॥ अयनमित् ॥ संपदादित्वाद्भावेक्विप् ॥ इत्ज्ञानस्वरूपेत्यर्थः ॥ सर्वेगत्यर्थाज्ञानार्थाइतिन्यायात् ॥ इंदिरादिसं

आलस्यघ्न्यापदांहंत्रीह्यानंदामृतवर्षिणी ॥ इरावतीष्टदात्रीष्टात्विष्टापूर्तफलप्रदा ॥ २६ ॥ इतिहासश्रुतीड्यार्थात्विहामुत्रशुभप्रदा ॥ इज्याशीलस
मिज्येष्ठात्विंद्रादिपरिवंदिता ॥ २७॥ इलालंकारमालेद्धात्विंदिरारम्यमंदिरा ॥ इदिंदिरादिसंसेव्यात्वीश्वरीश्वरवल्लभा ॥ २८ ॥ ईतिभीतिहरेड्याचत्वी
डनीयचरित्रभृत् ॥ उत्कृष्टशक्तिरुत्कृष्टोडुपमंडलचारिणी ॥२९॥ उदितांबरमार्गोस्त्रोरगलोकविहारिणी ॥ उक्षोर्वरोत्पलोत्कुंभाउपेंद्रचरणद्रवा ॥३०॥

सेव्यालक्ष्म्यादिभिःसेवनीया ॥ आदिपदेनभवानीप्रमुखागृह्यंते ॥ माहेश्वरीरूपेणमौलिधृतत्वादिप्रतीतेः ॥ तु ईश्वरीईशनशीलासर्वनियंत्रीपरादेवतेतियावत् ॥ एषसर्वेश्वरइत्यादिश्रुतेः ॥
ईश्वरवल्लभाईश्वरस्यविश्वेश्वरस्यवल्लभाकांता ॥ मातःशैलसुतासपत्निवसुधेत्यादिस्मृतेः ॥ वल्लभाइष्टाऽभिप्रेतावेत्यर्थः ॥ २८ ॥ ईतीनामातिवृष्ट्यनावृष्टिशलभमूषकशुकप्रत्यर्थिनृपाणांभीति
स्तांहरतीतितथा ॥ ईड्यास्तुत्या ॥ तु ईडनीयानिचरित्राणितानिबिभर्तीतिईडनीयचरित्रभृत् ॥ उत्कृष्टाशक्तिर्यस्याउत्कृष्टस्यविष्णोःशक्तिर्वाउत्कृष्टशक्तिः ॥ उत्कृष्टाउत्तमा ॥ उडुपश्चं
द्रस्तस्यमंडलंलोकंचर्तुंशीलंयस्याःसाउडुपमंडलचारिणी ॥ प्लावयित्वेंदुमंडलमित्युक्तेः ॥ २९ ॥ उदितउदयंप्रापितोंऽबरमार्गोययासाउदितांबरमार्गा ॥ उस्रादेवीद्योतनात्मिकेतियावत् ॥
तेजोरूपत्वात् ॥ उरगलोकेविहर्तुंशीलंयस्याःसाउरगलोकविहारिणी ॥ भोगावतीचपातालइत्युक्तेः ॥ उक्षतिफलसेकंकरोतीतिउक्षा ॥ उर्वराफलसस्याढ्याभूस्तत्स्वरूपा ॥ यद्वा उरुर्महां
श्चासौअःविष्णुश्चेतिउर्वोमहाविष्णुस्तंरातिप्रापयतीतिउर्वरा ॥ उत्पलाउत्पलस्वरूपा ॥ सर्वात्मकत्वाद्गंगायाः ॥ यद्वा उत्कृष्टंपातीत्युत्पोनारायणस्तं[illegible]तिप्रापयतीत्युत्पला ॥ उत्उत्कृष्टाःकुंभा
यस्याःसाउत्कुंभा ॥ यत्संबंधादपवित्राअपिकुंभाःपवित्राभवंति ॥ तदुक्तम् ॥ अपिचांडालभांडस्थंयज्जलंपावनंमहत् ॥ सेयंगंगाकुरुश्रेष्ठयथेष्टमव[illegible]ह्यताम् ॥ उच्छब्देनगर्गरीषुपूर्यमाणासुजायमा
नाध्वनयउच्यंते ॥ उत्एवंविधैर्ध्वनिभिर्युक्ताःकुंभायस्यांसातयेतिवा ॥ उदंभेतिपाठेउद्गतोदंभोयस्याःसाउदंभेत्यर्थः ॥ गंगानामसहस्रेऽस्मिन्विवृतेप्रथमेशते ॥ यदहष्टमभूदत्रतद्धि

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

उदाराऽदात्रीमहती ॥ एवमग्रेपि ॥ चःसमुच्चये ॥ उदन्वत्पूर्तिहेतुः उदन्वतःसमुद्रस्यपूर्तेःपूरणस्यहेतुःकारणम् ॥ ...शेसमर्पितम् ॥ १ ॥ उपेंद्रचरणद्रवावामनपादावनेजनजला ॥ ३० ॥ तदुक्तंवासिष्ठे ॥ गंगाजलाभिषेकेणयथातृ
तिवा ॥ उत्साहप्रवर्धिनीम्रियमाणानांदर्शनादिनाहर्षकारिणी ॥ उद्वेगंदौस्थ्यंहंतीत्युद्वेगघ्नी ॥ उष्णशमनीतापनाशिनीतृप्तिदायिनीतियावत् ॥ तदुक्तंवासिष्ठे ॥ गंगाजलाभिषेकेणयथातृ
प्तिर्भवेन्मम ॥ तथात्वद्दर्शनात्प्रीतिरंतःशीतयतीवमामिति ॥ उष्णरश्मिसुतायाःसूर्यकन्यायायमुनायाःप्रियाअभीष्टाउष्णरश्मिसुताप्रिया ॥ ३१ ॥ उत्पत्तिस्थितिसंहारकारिणीब्रह्मविष्णुशिवरू
पिणीत्यर्थः ॥ उपरिपृथिव्याःस्वर्गलोकस्यब्रह्मांडस्यवाउपरिचर्तुशीलंयस्याःसाउपरिचारिणी ॥ ऊर्जंवलंप्राणंवाधरतीत्यूर्जधरा ॥
ऊर्जंवलधारणाप्राणधारणावातद्वतीऊर्जावतीच ॥ ऊर्जंवहंतीऊर्जंवहंतीरमृतंघृतमित्यादिमन्त्ररूपा ॥ ऊर्मयस्तरंगास्तेषांमालावर्ततेयस्याःसाऊर्मिमालिनी ॥ ३२ ॥ ऊर्ध्वरेतसांभिक्षुकाणांप्रियाऽभीष्टाऊर्ध्वरेतःप्रिया ॥ तथाचोक्तम् ॥ गंगातीरेवसे
न्नित्यंभिक्षुर्मोक्षपरायणः ॥ सिद्धिक्षेत्रंतुतज्ज्ञेयंयावद्धनुःशतत्रयमिति ॥ ऊर्ध्वमध्वामार्गोयस्याःसाऊर्ध्वाध्वा ॥ त्रिपादूर्ध्वउदैत्पुरुषइतिश्रुतेः ॥ ऊर्मीस्तरंगान्शोकमोहजरामृत्युक्षुत्पिपासादी
न्वादेहाध्यासंवालातिगृह्णातीत्यूर्मिला ॥ ऊर्ध्वगतिप्रदास्वर्गमोक्षादिगतिप्रदेत्यर्थः ॥ ऋषिसमूहैःस्तुताऋषिवृन्दस्तुता ॥ ऋद्धिःसमृद्धिरूपाकौवेरीशक्तिरूपावा ॥ देवर्षिपितॄणामृणत्रयंविनाश
यितुंशीलंयस्याःसाऋणत्रयविनाशिनी ॥ चऋणेतिविसंधिरार्षएव ॥ एवमुत्तरत्रापि ॥ ३३ ॥ ऋतंसत्यंब्रह्मबिभर्तीतिऋतंभरा ॥ ऋद्धिदात्रीसमृद्धिदात्रीच ॥ ऋक्स्वरूपाऋग्वे

उदन्वत्पूर्तिहेतुश्चोदारोत्साहप्रवर्धिनी ॥ उद्वेगघ्न्युष्णशमनीउष्णरश्मिसुताप्रिया ॥३१॥ उत्पत्तिस्थितिसंहारकारिण्युपरिचारिणी ॥ ऊर्जंवहंत्यूर्जधरो
र्जावतीचोर्मिमालिनी ॥ ३२ ॥ ऊर्ध्वरेतःप्रियोर्ध्वाध्वाह्यूर्मिलोर्ध्वगतिप्रदा ॥ ऋषिवृंदस्तुतर्द्धिश्चऋणत्रयविनाशिनी ॥ ३३ ॥ ऋतंभरर्द्धिदात्री
चऋक्स्वरूपाऋजुप्रिया ॥ ऋक्षमार्गवहर्क्षार्चिर्ऋजुमार्गप्रदर्शिनी ॥ ३४ ॥ एधिताऽखिलधर्मार्थात्वेकैकामृतदायिनी ॥ एधनीयस्वभावैज्यात्वे
जिताशेषपातका ॥ ३५ ॥ ऐश्वर्यदैश्वर्यरूपाह्यैतिह्यंह्यैंदवीद्युतिः ॥ ओजस्विन्योषधीक्षेत्रमोजोदौदनदायिनी ॥ ३६ ॥ ओष्ठामृतौन्नत्यदात्रीत्वौषधं
भवरोगिणाम् ॥ औदार्यचंचुरौपेंद्रीत्वौग्रीह्यौमेयरूपिणी ॥ ३७ ॥

दात्मिका ॥ ऋजुप्रियाअकुटिलप्रिया ॥ ऋक्षाणांचन्द्रादिनक्षत्राणांमार्गंवहतीतिऋक्षमार्गवहा ॥ ऋक्षाणांचन्द्रादीनामिवार्चिर्दीप्तिर्यस्यास्तेषांवाऽर्चिर्दीप्तिर्यस्याःसकाशात्साऋक्षा
र्चिः ॥ शंखकुंदेंदुधवलेतिवाराहोक्तेः ॥ तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभातीतिश्रुतेश्च ॥ ऋजुमार्गप्रदर्शिनीमोक्षमार्गप्रकाशिनी ॥ ३४ ॥ एधितौवर्धितावखिलौसमग्रौ
धर्मार्थौययासाएधिताखिलधर्मार्था ॥ तु एकामुख्याऽनुपमेतियावत् अद्वितीयेतिवा ॥ एकमेवाद्वितीयमितिश्रुतेः ॥ एकामृतदायिनीएकमद्वितीयंयद्ब्रह्मामृतंतद्दायिनी ॥ एधनीयस्वभावा
एधनीयोवर्धनीयःस्वभावोयस्याःसाएधनीयस्वभावा ॥ पापानिएजंतिकंपंतेयेभ्यस्तेएजास्तेषुसाध्वीएज्यापूज्या ॥ एजितानिकंपितान्यशेषपातकानिययासाएजिताशेषपातका ॥ ३५ ॥
ऐश्वर्यंददातीत्यैश्वर्यदा ॥ ऐश्वर्यरूपाईश्वरधर्मस्वभावा ॥ हिऐतिह्यंप्रमाणविशेषरूपा॥हिऐंदवीद्युतिश्चांद्रमसीकांतिः॥कांतिस्तेजःप्रभासत्ताचंद्राग्न्यर्कर्क्षविद्युतामितिभागवतोक्तेः ॥ ओजइंद्रियसामर्थ्यं
तद्वतीओजस्विनी ॥ ओषधीनांफलपाकांतानांक्षेत्रंभूरूपम् ॥ ओजइंद्रियसामर्थ्यंददातीत्योजोदा ॥ ओजदेतिपाठेसकाराभावआर्षः ॥ ओदनदायिनीअन्नदात्रीअन्नपूर्णेत्यर्थः ॥ ३६ ॥ ओष्ठेऽ
मृतंयस्याःसाओष्ठामृताऽमृतवदनामधुरभाषिणीतियावत् ॥ उन्नतेर्भावऔन्नत्यंतद्दात्रीऔन्नत्यदात्री॥तु औषधंभवरोगिणांसंसाररोगवतामगदस्वरूपं संसाररोगनिवर्तकमित्यर्थः ॥ उदारस्यभावऔदार्यं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तत्रचंचुरादक्षा ॥ उपेंद्रोवामनस्तस्येयंपत्नीऔपेंद्रीलक्ष्मीरूपेत्यर्थः ॥ यदाहपराशरः ॥ पुनश्चपद्मादुद्भूतायदादित्योभवद्धरिरीति ॥ उपेंद्रचरणावनेजनीरूपावा ॥ तु उग्रस्येयमौग्री संहारकारिणी शक्तिरित्यर्थः ॥ हि औमेयोगणेशःकार्तिकेयोवातद्रूपिणी ॥ यद्वा उमायाइदम्औमेयन्तच्चतद्रूपंचेत्यौमेयरूपंतद्वर्ततेयस्याइत्यौमेयरूपिणी ॥ उमायथातथागंगेतिवचनात् ॥ ३७ ॥ अम्बराध्ववहाआकाशमार्गगा ॥ अंविष्णुंवांतिगच्छंत्यंवांवैष्णवाः ॥ विभक्तेरलोपआर्षः ॥ तेषुभक्तेषुतिष्ठतीत्यंवष्ठा ॥ वैश्यायांभार्यायांब्राह्मणोत्पन्नजातिविशेषावा ॥ विप्रान्मूर्द्धाभिषिक्तोहिक्षत्रियायांविशःस्त्रियाम् ॥ अंवष्ठःशूद्र्यांनिषादोजातःपारशवोपिवाइतियाज्ञवल्क्योक्तेः॥अम्बरस्यमाअंवरमाआकाशशोभातांलातिकरोतीत्यंवरमाला अंवरस्यमालेवांवरमाला॥ अंबुजान्येवईक्षणानिअंबुजेइववाईक्षणेयस्याःसांवुजेक्षणा ॥ अंविकादुर्गामातृस्वरूपावा ॥ अंवुमहायोनिरपांमूलकारणम् ॥ अपएवससर्जादाविति स्मृतेः ॥ तदपोऽसृजतइतिश्रुतेश्च ॥ अंधोन्नंददातीत्यंधोदा ॥ अन्धकहारिणीअन्धकनामानंदैत्यंहर्तुंशीलंयस्याःसांधकहारिणी ॥ अन्धयतीत्यंधकमज्ञानंतद्धारिणीतिवा ॥ त्वन्धहारिणीतिपाठेप्ययमेवार्थः ॥ ३८ ॥ अंशूनांतेजसांमालासमूहोयस्यांसांशुमाला ॥ हिअंशुमतीतेजोवती ॥ तु अंगीकृतःपुत्रत्वेनषडाननोययासांऽगीकृतषडानना ॥ अंकीकृतेतिवापाठः ॥ स्वाहेयगांगेयेत्याद्यत्रैवोक्तेः ॥ अन्धतामिस्रंनरकविशेषस्तद्धंत्री ॥ अन्धुर्धर्मकूपस्तत्स्वरूपाकूपमात्ररूपावा ॥ अञ्जतीत्यंजनाऽविद्यातत्स्वरूपा ॥ हनुमज्जनयित्रीरूपावा ॥ हि अञ्जनावतीअविद्यावती ॥ ३९ ॥ कल्याणकारिणीशुभकारिणी ॥ काम्यतइतिकाम्या ॥ कम

अंवराध्ववहांऽवष्ठांवरमालांबुजेक्षणा ॥ अंबिकांबुमहायोनिरंधोदांधकहारिणी ॥ ३८ ॥ अंशुमालाह्यंशुमतीत्वंगीकृतषडानना ॥ अंधतामिस्रहंत्र्यंधुरंजनाह्यंजनावती ॥ ३९ ॥ कल्याणकारिणीकाम्याकमलोत्पलगंधिनी ॥ कुमुद्वतीकमलिनीकांतिःकल्पितदायिनी ॥ ४० ॥ कांचनाक्षीकामधेनुःकीर्तिकृत्क्लेशनाशिनी ॥ क्रतुश्रेष्ठाक्रतुफलाकर्मबंधविभेदिनी ॥ ४१ ॥ कमलाक्षीक्लमहराकृशानुतपनद्युतिः ॥ करुणार्द्राचकल्याणीकलिकल्मषनाशिनी ॥ ४२ ॥कामरूपाक्रियाशक्तिःकमलोत्पलमालिनी ॥ कूटस्थाकरुणाकांताकूर्मयानाकलावती ॥ ४३ ॥

लानामुत्पलानांचगंधोवर्ततेयस्यःसाकमलोत्पलगंधिनी ॥ कुमुदानिवर्ततेयस्यांसाकुमुद्वती ॥ कुमुदशब्दस्याकारलोपश्छांदसः ॥ कमलानिवर्ततेयस्यांसाकमलिनी ॥ कांतिश्चंद्रतेजोरूपा ॥ शीतभानौप्रसादइत्यत्रैवोक्तेः ॥ कल्पितदायिन्यभीष्टदायिनी ॥ ४० ॥ कांचनेइवाक्षिणीयस्याःसाकांचनाक्षी ॥ कामधेनुःकामधुक्सुरभिरितियावत् ॥ धेनूनामस्मिकामधुगितिभगवद्वचनात् ॥ कीर्तिकृद्यशःकर्त्री ॥ अविद्याऽस्मितारागद्वेषाभिनिवेशाःपंचक्लेशास्तन्नाशिनी ॥ क्रतुभ्यःश्रेष्ठाक्रतुश्रेष्ठा अश्वमेधादियागाधिकफलप्रदेत्यर्थः ॥ कुतोऽवीचिर्वीचिस्तवयदिगतालोचनपथंत्वमापीतापीतांबरपुरनिवासंवितरसि ॥ त्वदुत्संगेगंगेयदिपततिकायस्तनुभृतांतदामातःशातक्रतवपदलाभोप्यतिलघुरित्याद्युक्तेः ॥ क्रतूनांफलंयस्यांसाक्रतुफला ॥ कर्मैवबंधःकर्मबंधस्तद्विभेदिनीभेत्री ॥ ४१ ॥ कमलेइवाक्षिणीयस्याःसाकमलाक्षी ॥ क्लमहराश्रांतिहरा ॥ कृशानुर्वह्निस्तपनःसूर्यस्तयोरिवद्युतिर्यस्याःसाकृशानुतपनद्युतिः ॥ सूर्यकोटिप्रतीकाशइत्यादिस्मृतेः ॥ करुणार्द्राकरुणयार्द्रास्निग्धाव्याप्तेतियावत् ॥ चकल्याणंवर्ततेयस्याःसाकल्याणी ॥ कलिकल्मषनाशिनीकलिकालोत्पन्नानांपापानांनाशिनी ॥ कलौगंगैवकेवलमितिस्मृतेः ॥४२॥ कामामिच्छैवरूपंयस्याःकामेनस्वेच्छयावारूपंयस्याःसाकामरूपा॥क्रियायांशक्तिर्यस्याःसाक्रियाशक्तिःसूत्रात्मकस्वरूपेत्यर्थः ॥ क्रियाशक्तिरूपावा ॥ कमलोत्पलानांमालावर्ततेयस्याःसाकमलोत्पलमालिनी ॥ कूटयतिच्छलत्यात्मानमानंदत्वादिकमावृत्यसंसारेपातयतीतिकूटोऽज्ञानंतत्रतिष्ठतितद[illegible]स्थितिर्यस्यांसा॥यद्वा कूटोगिरिशृंगंतद्वन्निष्क्रियतयातिष्ठति ॥ यद्वा कालत्रयव्यापकतयाएक

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

साकूर्मयाना ॥ कलाश्चतुःषष्टिकलावर्ततेयस्याःसाकलावती ॥४३ ॥
रूपाषड्भावविकाररहिताकूरस्था॥करुणादयास्वरूपा॥कांताकमनीया॥कूर्मोयानंकूर्मवत्कूर्मेणलक्षणविशेषेणवायानंगमनंयस्याः साकूर्मयाना ॥ कलाश्चतुःषष्टिकलावर्ततेयस्याःसाकलावती ॥४३ ॥ जह्नुंप्रतीपंशांतनुंकामितवती
कमलालक्ष्मीरूपा ॥ कल्पलतिकाकल्पलतात्मिकासर्वकामपूरणीत्यर्थः ॥ कालीकालिकारूपा ॥ कलुषवैरिणीपातकनाशिनी ॥ कमनीयजलानिर्मलपानीया ॥ जह्नुंप्रतीपंशांतनुंकामितवती
तिकम्राकामुकेत्यर्थः॥ तथाचादिपर्वहरिवंशयोः ॥ पतिलोभेनयंगंगापातित्वेऽभिससारह ॥ त्वामहंकामयेराजन्कुरुश्रेष्ठभजस्वमाम्॥ भविष्यामिमहीपालमहिषीतेवशानुगेति ॥ कपर्दिसुकपर्दगाशिवस्य
शोभनजटाजूटगा ॥ ४४ ॥ कालकूटंसमुद्रमथनोत्पन्नंविषंतस्यकालाऽज्ञानयोर्वानाशिनीकालकूटप्रशमनी ॥ कदंबकुसुमानिप्रियाणियस्याःसाकदंबकुसुमप्रिया ॥ गंगानामसहस्रेऽस्मि
न्द्वितीयेविवृतेशते ॥ यदृष्टमभूदत्रताद्विश्वेशेसमर्पितम् ॥ २ ॥ कलिंदःपर्वतस्तद्भवाकालिंदीयमुनातद्रूपा ॥ केलिःक्रीडातयातस्यांवामनोहराकेलिललिता ॥ कलामधुरायेकल्लोलास्तद्रूनयः ॥
मनोहरास्तरंगावातेषांमालावर्ततेयस्यांसाकलकल्लोलमालिका ॥४५॥ क्रांतंव्याप्तिमतिक्रांतंवालोकत्रयंययासाक्रांतलोकत्रया ॥ सभूमिंसर्वतःस्पृत्वाऽत्यतिष्ठद्दशांगुलमितिश्रुतेः ॥ कंडूयतेकुट्टत्यविद्यां
तत्कार्यमितिकंडूः कंडूतिरूपावा ॥ कंडूर्मृकंडुः ॥ भीमोभीमसेनइतिवत् ॥ तस्यतनयस्यमार्कंडेयस्यवत्सलास्निग्धा ॥ खड्गोऽस्याअस्तीतिखड्गिनी॥खड्ग धारायाइवाभादीप्तिर्यस्याःसाखड्गधाराभा ॥
पापकाननच्छेत्रीत्वान्निर्मलत्वसादृश्याद्वा ॥ खेआकाशेगच्छतीतिखगा ॥ खंडेंदुधारिणीशकलचंद्रधारिणी चंद्रकलावतंसेत्यर्थः ॥ ४६ ॥ खेआकाशेखेलेनलीलयागच्छतीतिखेखेलगामिनी ॥

कमलाकल्पलतिकाकालीकलुषवैरिणी ॥ कमनीयजलाकम्राकपर्दिसुकपर्दगा ॥ ४४ ॥ कालकूटप्रशमनीकदंबकुसुमप्रिया ॥ कालिंदीकेलिललिता कलकल्लोलमालिका ॥ ४५ ॥ क्रांतलोकत्रयाकंडूःकंडूतनयवत्सला ॥ खड्गिनीखड्गधाराभाखगाखंडेंदुधारिणी ॥ ४६ ॥ खेखेलगामिनीखस्थाखंडेंदुतिलकप्रिया ॥ खेचरीखेचरीवंद्याख्यातिःख्यातिप्रदायिनी ॥४७॥ खंडितप्रणतावौघाखलबुद्धिविनाशिनी ॥ खातैनःकंदसंदोहाखड्गखट्वांगखेटिनी ॥ ४८ ॥ खरसंतापशमनीखनिःपीयूषपाथसाम् ॥ गंगागंधवतीगौरीगंधर्वनगरप्रिया ॥ ४९ ॥

खेआकाशेब्रह्मणिवा॥कंब्रह्मखंब्रह्मेतिश्रुतेः ॥ तिष्ठतीतिखस्था ॥ खंडेंदुतिलकप्रियाविश्वेश्वरकांता ॥ खेआकाशेचरतीतिखेचरी ॥ खेचरीणांसिद्धांगनानांवंद्याखेचरीवंद्या ॥ ख्यातिःप्रख्यातिःप्रतिष्ठे
तियावत् ॥ आख्यात्यन्यथाख्यात्यसत्ख्यात्यात्मख्यात्यनिर्वचनीयख्यात्येतत्पंचकख्यातिर्वातद्रूपा ॥ ख्यातिप्रदायिनीप्रतिष्ठाकारिणी ॥ ४७ ॥ खंडितोदूरीकृतःप्रणतानांभक्तानामघौघोयया
सांखंडितप्रणतावौघा ॥ खलानांबुद्धिःखलरूपावाबुद्धिस्तस्याविनाशिनी ॥ खाताउत्खाताउत्पाटिताइतियावत् ॥ एनसांपापानांकंदसंदोहोमूलकारणनिकरोययासाखातैनःकंदसंदोहा ॥
खड्गश्वखट्वांगंचलोहादिनिर्मितद्वादशांगंखट्वायाःखुराकारोवाऽस्त्रविशेषःखेटंचायुधविशेषश्चर्मवा एतानिवर्ततेयस्याःसाखड्गखट्वांगखेटिनी ॥ खड्गखट्वांगाभ्यांखेटितुंक्रीडितुंशीलंयस्याःसाइति
वा ॥ अस्मिन्पक्षेडकारस्यटकारआर्षः ॥ ४८ ॥ खरसंतापशमनीतीक्ष्णसंतापनाशिनी ॥ दुष्टजन्यसंतापशमनीतिवा ॥ खनिःपीयूषपाथसाममृततुल्योदकानाममृतोदकयोर्वाखनिःआकर
स्थानम् ॥ गंगानिरंजनचित्स्वरूपा ॥ योऽसौनिरंजनोदेवश्चित्स्वरूपीजनार्दनः ॥ सएवद्रवरूपेणगंगांभोनात्रसंशयइतिस्मृतेः ॥ स्वर्गाद्गंगांभगीरथःपृथ्वीमानीतवानितिवागंगा ॥ तदुक्तंभविष्ये ॥
यस्माद्भगीरथोदेविस्वर्गाद्गांत्वामिहानयत् ॥ अतस्त्वंमुनिभिःसर्वैर्गंगेतिपरिकीर्त्यसइति ॥ गंधवतीपृथ्वीरूपा ॥ गौरीपार्वतीनदीप्रभेदोवाजलेशमहिषीवा ॥ नदीभेदेपिगौरीस्याज्जलेशस्योपियापितीति

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वचनात् ॥ गंधर्वनगरेतत्तुल्येप्रपंचेप्रियाऽभीष्टासारभूतेत्यर्थः ॥ तदुक्तम् ॥ असारेखलुसंसारेसारमेतच्चतुष्टयम् ॥ काश्यांवासःसतांसंगोगंगांभःशिवपूजनमिति ॥ गंधर्वाणांयानिनगरा
णितत्स्थानांजनानांवाप्रियागंधर्वनगरप्रिया ॥ ४९ ॥ गंभीरमनवगाह्यमंगंस्वरूपंयस्याःसागंभीरांगी ॥ गुणमयीत्रिगुणात्मिकामायासर्वज्ञत्वादिगुणावा ॥ गतआतंकःसंत्रासोयस्यायस्याः
सकाशादितिवासागतातंका ॥ गतेर्ज्ञानात्मनोविश्वनाथस्यप्रियागतिप्रिया ॥ गतिर्ज्ञानंप्रियंयस्याःसागतिप्रियेतिवा ॥ चतुर्विधाभजंतेमामित्युपक्रम्यज्ञानीत्वात्मैवमेमतमितिभगवदुक्तेः ॥
गम्यतइतिगतिःफलंसाचासौप्रियापरमप्रेमास्पदाचेतिगतिप्रियाइतिवा ॥ गतिप्रदेतिक्वचित् ॥ गणनाथोगणेशस्तस्यांबिकामातागणनाथांबिका ॥ गीयतइतिगीता ॥ वेदेरामायणे
चैवपुराणेभारतेतथा ॥ आदौमध्येतथाचांतेहरिःसर्वत्रगीयतइतिस्मृतेः ॥ भगवद्गीतारूपावा ॥ गद्यपद्यैश्चपरिष्टुतागद्यपद्यपरिष्टुता ॥ ५० ॥ गांधारयतीतिगांधारी ॥ विभक्तेरलो
पआर्षः ॥ वाराहीशक्तिरित्यर्थः ॥ धृतराष्ट्रपत्नीरूपावा ॥ गर्भशमनीजन्मशातनी ॥ गतिभ्रष्टानांपतितानामपिगतिप्रदा ॥ तदुक्तंभविष्ये ॥ मातापिसंत्यजेत्पुत्रंब्रह्मह
त्यादिकारिणम् ॥ त्वंपुनर्गर्हितंमग्नंपुनीषेदीनवत्सलेति ॥ गतिभ्रष्टागतिप्रदेतिपाठेसविशेषणमेकंनाम ॥ गतेर्दैवत्वगतेर्भ्रष्टामानुषत्वंप्राप्तेत्यर्थः ॥ तथाचोक्तम् ॥ ब्रह्महस्तात्परिभ्रष्टे

गंभीरांगीगुणमयीगतातंकागतिप्रिया ॥ गणनाथांबिकागीतागद्यपद्यपरिष्टुता ॥ ५० ॥ गांधारीगर्भशमनीगतिभ्रष्टगतिप्रदा ॥ गोमतीगुह्यविद्यागौर्गो
प्त्रीगगनगामिनी ॥ ५१ ॥ गोत्रप्रवर्धिनीगुण्यागुणातीतागुणाग्रणीः ॥ गुहांबिकागिरिसुतागोविंदांघ्रिसमुद्भवा ॥ ५२ ॥ गुणनीयचरित्राचगायत्रीगिरि
शप्रिया ॥ गूढरूपागुणवतीगुर्वीगौरववर्धिनी ॥ ५३ ॥ ग्रहपीडाहरागुंद्रागरघ्नीगानवत्सला ॥ घर्महंत्रीघृतवतीघृततुष्टिप्रदायिनी ॥ ५४ ॥

ति ॥ हरिवंशेच ॥ इयमप्यायतापांगीगंगासर्वांगशोभना ॥ रूपिणीवैसरिच्छ्रेष्ठातत्रत्वामुपयास्यतीति ॥ स्वयंगतिभ्रष्टाऽन्येषांगतिप्रदेतिविरुद्धालंकारोऽयम् ॥ द्वारकास्थानैमिषारण्य
स्थावानदीगोमतीतद्रूपा ॥ गुह्यविद्याब्रह्मविद्या ॥ गौःपृथ्वीरूपागोरूपावेदरूपावाणीरूपावास्वर्गरूपावा गोप्त्रीपालयित्री ॥ गगनेगंतुंशीलंयस्याःसागगनगामिनीआकाशगामिनी
इत्यर्थः ॥ ५१ ॥ गांत्रायतइतिगोत्रोभगीरथःपर्वतवृन्दंवातेनप्रवर्धितुंशीलंयस्याःसागोत्रप्रवर्धिनी भक्तानांगोत्रप्रवर्तयित्रीतिवा ॥ गुणेभ्योहितागुण्या ॥ गुणानतीतागुणातीतानिर्गुणेत्यर्थः ॥
गुणाग्रणीःगुणानांनियंत्री ॥ गुहांबिकाकार्तिकेयजननी ॥ गिरिसुतागिरेर्हिमवतःप्रसूतापार्वतीरूपावा ॥ गोविंदस्यांघ्रेःसमुद्भवोयस्याःसागोविंदांघ्रिसमुद्भवा ॥ ५२ ॥ गुणनीयानिगण
नयोग्यानिविचारणीयानिचरित्राणियस्याःसागुणनीयचरित्रा ॥ च गातारंत्रायतइतिगायत्री ॥ गिरिशस्येश्वरस्यप्रियागिरिशप्रिया ॥ गूढंप्रच्छन्नंरूपंयस्याःसागूढरूपा ॥ गुणाःशांत्यादय
स्तद्वतीगुणवती ॥ गुर्वीमहती ॥ गौरवंमहत्त्वंवर्धयितुंगौरवेणवावर्धितुंशीलंयस्याःसागौरववर्धिनी ॥ ५३ ॥ ग्रहपीडांहरतीतिग्रहपीडाहरा ॥ गुंद्रामुस्तातदात्मिका ॥ सर्वात्मकत्वात् ॥ गूह
तिस्वरूपमितिगुरविद्यातांद्रातिकुत्सतेनाशयतीत्येतत्गुंद्राइतिवा ॥ विभक्तेःश्रवणमार्षम् ॥ गरघ्नीविषघ्नी ॥ गानवत्सलागीतप्रियेत्यर्थः ॥ घर्महंत्रीसन्तापहंत्री॥घृतंघृततुल्यमुदकमास्तियस्याःसाघृत

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वती ॥ घृतेनयातुष्टिस्तांप्रदातुंशीलंयस्याःसाघृततुष्टिप्रदायिनी ॥ ५४ ॥ घँटारवःप्रियोयस्याः साघण्टारवप्रिया ॥ घोरोयोऽघौघस्तद्विध्वंसकारिणी घोराघौघविध्वंसकारिणी॥घ्राणेंद्रियस्यघ्राणमा त्रेणवातुष्टिकरीघ्राणतुष्टिकरी ॥ घोषानितंबपादभूषणकांच्यःकिंकिण्यश्चतावर्ततेयस्याःसाघोषा ॥ अर्शआदित्वादच् ॥ तरंगस्रोतोभ्यांघोषयतीति आभीरपल्लीरूपावेतिघोषा ॥ घनएकर सोयआनंदस्तत्स्वरूपा ॥ स्त्रीत्वंछांदसंबहुव्रीहिर्वा ॥ राहोःशिरइतिवद्भेदोपचारात् ॥ सएषपरमानंदइतिश्रुतेः ॥ अतएवघनप्रियानिबिडप्रिया ॥ परमप्रेमास्पदत्वात् ॥ घनानांमेघानांवाप्रियाघन प्रिया ॥ आकाशगंगारूपेणतेषांप्लावनात् ॥५५॥ सर्वेषांपापानामज्ञानतत्कार्यस्यवाघातुकानाशिका ॥ घूर्णितानिजलानियस्याःसाघूर्णितजला ॥ घृष्टाघूर्णितापातकसंततिर्ययासाघृष्टपातकसंततिः ॥ घटकोटिभिःप्रपीताआपोयस्याःसाघटकोटिप्रपीतापा ॥ घटितंसंपादितमशेषमंगलंययासाघटिताशेषमंगला ॥ ५६ ॥ घृणावतीदयावती ॥ घृणनिधिर्दयासमुद्रः ॥ ह्रस्वआर्षः ॥ घस्मरासर्वभक्षण शीला ॥ सकालकालइतिश्रुतेः ॥ कालमूषिकभक्षकइतिस्मृतेश्च ॥ घूकानांबकानांनादोविद्यतेयस्याःसाघूकनादिनी ॥ घुसृणेनदेवांगनानामंगरागेणापिंजराईषत्पीतवर्णातनुर्यस्याःसाघुसृणापिंज रतनुः ॥ घर्घरनामाह्लदविशेषस्तत्स्वरूपिणी ॥ घर्घरइतिध्वनिर्यस्याःघर्घरनाम्नाह्लदेनतत्संगमनिमित्तेनस्वनोयस्याइतिवासाघर्घरस्वना ॥ ५७ ॥ चंद्रिकाज्योत्स्नारूपा ॥ चंद्रकांतमणिरिवां

घंटारवप्रियाघोराऽघौघविध्वंसकारिणी ॥ घ्राणतुष्टिकरीघोषाघनानंदाघनप्रिया ॥५५॥ घातुकाघूर्णितजलाघृष्टपातकसंततिः ॥ घटकोटिप्रपीतापाघ टिताशेषमंगला ॥ ५६ ॥ घृणावतीघृणनिधिर्घस्मराघूकनादिनी ॥ घुसृणापिंजरतनुर्घर्घराघर्घरस्वना ॥५७॥ चंद्रिकाचंद्रकांतांबुश्चंचदापाचलद्युतिः॥ चिन्मयीचितिरूपाचचंद्रायुतशतानना ॥ ५८ ॥ चांपेयलोचनाचारुश्चार्वंगीचारुगामिनी ॥ चार्याचारित्रनिलयाचित्रकृच्चित्ररूपिणी ॥ ५९ ॥ चंपूश्चंदनशुच्यंबुश्चर्चनीयाचिरस्थिरा ॥ चारुचंपकमालाढ्याचमिताशेषदुष्कृता ॥ ६० ॥

बुयस्याःसाचंद्रकांतांबुः ॥ चंचंत्यः स्फुरंत्यआपोयस्याःसाचंचदापा ॥ चंचलापेतिक्वचित्पाठः ॥ तत्रापिसएवार्थः ॥ चलंतीस्फुरंतीद्युतिर्यस्याःसाचलद्युतिः ॥ चिन्मयीज्ञानस्वरूपा ॥ सत्यं ज्ञानमनंतंब्रह्मेतिश्रुतेः ॥ चितिरूपाज्ञानस्वभावा ॥ चंद्राणामयुतशतमिवाननंयस्याःसाचंद्रायुतशतानना ॥ चंद्रायुतसिताननेतिक्वचित्पाठस्तत्रसितत्वंशुभ्रत्वम् ॥ ५८ ॥ चांपेयपुष्पेइवलोचने यस्याःसाचांपेयलोचना ॥ चारुर्मनोहरा ॥ चारूण्यंगानियस्याःसाचार्वंगी ॥ चारुयथास्यात्तथागंतुंशीलंयस्याःसाचारुगामिनी ॥ चरणंचारोज्ञानंतदर्हतिचार्यतेज्ञायतेवाचार्या ॥ उपनिषत्प्रति पाद्येत्यर्थः ॥ चरित्राण्येवचारित्राणितेषांनिलया सच्चारित्राश्रयेत्यर्थः ॥ चित्रंविचित्रंजगत्करोतीतिचित्रकृत् ॥ तदुक्तंवासिष्ठे ॥ कश्चव्योमनिचित्रकृदिति ॥ चित्रंविचित्रंरूपमस्याअस्तीति चित्ररूपिणी ॥ ५९ ॥ चंपूश्चंपकवृक्षस्तत्पुष्पंवातद्रूपा ॥ गद्यपद्यमयंकाव्यंचंपूरित्यभिधीयतइतिवचनात्तद्रूपावाचंपूः ॥ चंदनमिवशुचिसुगंधिनिर्मलंचांबुयस्याःसाचंदनशुच्यंबुः ॥ चर्च नीयाविचारणीयाचिंतनीयेतियावत् ॥ चिरकालंव्याप्यस्थिराचिरस्थिरा अनादिरित्यर्थः ॥ गंगानामसहस्रेऽस्मिन्स्तृतीयेविवृतेशते ॥ यद्दृष्टमभूदत्रतद्विश्वेशेसमर्पितम् ॥ ३ ॥ चारुचं पकपुष्पाणांयामालास्ताभिराढ्याव्याप्ताचारुचंपकमालाढ्या ॥ चमितानिसंत्रासंप्रापितानिभक्षितानीत्येतदशेषदुष्कृतानिययासाचमिताशेषदुष्कृता ॥ चमुअदनइतिधातुः ॥ ६० ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चिदेवाकाशश्चिदाकाशस्तंवहतिप्रापयतीतिचिदाकाशवहा ॥ चिंत्याध्येया ॥ ध्येयःसदासवितृमण्डलमध्यवर्तीनारायणःसरसिजासनसन्निविष्टः॥केयूरवान्मकरकुण्डलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रइतिस्मृतेः ॥ चंचत्स्फुरत्स्वप्रकाशमित्यर्थः ॥ अत्रायंपुरुषःस्वयंज्योतिरितिश्रुतेः ॥ चामरवीजितावालव्यजनैःसेवितेत्यर्थः ॥ चोरितान्यशेषवृजिनानिययासाचोरिताशेषवृजिना ॥ चरितान्यशेषमण्डलानिब्रह्मलोकादिस्थानानिययासाचरिताशेषमंडला॥६१॥छेदिताखिलपापौघा छेदिताश्छिन्नाअखिलाःपापौघायय्यासाछेदिताखिलपापौघा॥छद्मघ्नीछद्मकपटमज्ञानंरोगविशेषंवाहंतीतिछद्मघ्नी॥ छलंकपटंछलयतीतिछलमज्ञानंवातद्धारिणी ॥ छन्नंव्याप्तंत्रिविष्टपतलंस्वर्गभुवनंययासाछन्नत्रिविष्टपतला ॥ छोटितानिदूरीकृतान्यशेषबंधनानियय्यासाछोटिताशेषबंधना ॥ छेदितेतिक्वचित्पाठः ॥ ६२ ॥ छुरितःक्षरितोऽमृतधाराणांजलप्रवाहाणामोघोययासाछुरितामृतधारौघा ॥ छिन्नानिच्छेदितान्येनांसिवृजिनानिययासाछिन्नैनाः ॥ छातैनाइतिक्वचित्पाठः ॥ छंदगामिनीस्वच्छंदचारिणीस्वतंत्रेत्यर्थः ॥ छत्रीकृतोमरालौघोहंससमूहोययासाछत्रीकृतमरालौघा ॥ छटीकृतानिछटांप्रापितानिप्रकटीकृतान्येतत् ॥ निजामृतानिस्वस्वरूपभूतानिजलानिययासाछटीकृतानिजामृता ॥६३॥ जह्नोरपत्यंजाह्नवी ॥ तथाचहरिवंशे ॥ राजर्षिणाततःपीतांगंगांदृष्ट्वामहर्षयः ॥ उपनिन्युर्महाभागांदुहितृत्वेनजाह्नवीमिति ॥ ज्याधनुर्गुणइवप्रतीयमाना ॥ तदुक्तम् ॥ लोलार्ककेशवौकोटीगंगाज्यानगरंधनुः ॥ कालिर्लक्ष्यःशरोविष्णुःशिवोधन्वीपुनातुमामिति ॥ जगतांमाताजगन्माताविश्वयोनिरित्यर्थः ॥ जप्याजपविषया ॥ जंघालादीर्घावीच्यस्तरंगायस्याःसाजंघालवीचिका ॥

चिदाकाशवहाचिंत्याचंचच्चामरवीजिता ॥ चोरिताशेषवृजिनाचरिताशेषमंडला ॥ ६१ ॥ छेदिताखिलपापौघाछद्मघ्नीछलहारिणी ॥ छन्नत्रिविष्टपतलाछोटिताशेषबंधना ॥ ६२ ॥ छुरितामृतधारौघाछिन्नैनाश्छंदगामिनी ॥ छत्रीकृतमरालौघाछटीकृतनिजामृता ॥६३॥ जाह्नवीज्याजगन्माताजप्याजंघालवीचिका ॥ जयाजनार्दनप्रीताजुषणीयाजगद्धिता ॥६४॥ जीवनंजीवनप्राणाजगज्ज्येष्ठाजगन्मयी ॥ जीवजीवातुलतिकाजन्मिजन्मनिबर्हिणी ॥ ॥ ६५ ॥ जाड्यविध्वंसनकरीजगद्योनिर्जलाविला ॥ जगदानंदजननीजलजाजलजेक्षणा ॥ ६६ ॥

जयतिसर्वोत्कर्षेणवर्ततइतिजयापार्वतीसखिरूपावा ॥ तथाचात्रैवदेवीवाक्यम् ॥ सुलक्षणाशुभाचारासखीमेऽस्तुशुभोदया ॥ यथाजयाचविजयेत्यादि ॥ जनार्दनस्यप्रीताजनार्दनोवाप्रीतोयस्याःसाजनार्दनप्रीता ॥ जुषणीयाश्रीरुद्रादिभिःसेवनीया ॥ तथाचभागवते ॥ यत्पादनिःसृतसरित्प्रवरोदकेनतीर्थेनमूर्ध्न्यधिकृतेनशिवःशिवोभूदिति ॥ जगतांहिताजगद्धिता ॥ ६४ ॥ जीवनंजीवनहेतुः ॥ जीवनेनजलेनप्राणिनांप्राणायस्याःसा जीवनेनप्राणयतिचेष्टयतीतिवाजीवनप्राणाब्रह्मस्वरूपा ॥ कोह्येवान्यात्कःप्राण्याद्यदेषआकाशआनंदोनस्यादितिश्रुतेः ॥ जगदिति ॥ परस्मात्पुरुषान्नभिन्नमिदंजगदित्यभिधीयतेब्रह्म ॥ ब्रह्मैवेदंविश्वमिदंवरिष्ठंपुरुषएवेदंविश्वमित्यादिश्रुतेः ॥ विश्वंविष्णुरितिस्मृतेश्च ॥ यद्वा गच्छतिसर्वंव्याप्नोतीतिजगत् ॥ नित्यःसर्वगतःस्थाणुरितिस्मृतेः ॥ ज्येष्ठाआद्यामूलकारणत्वात् ॥ जगन्मयीजगत्स्वरूपास्वाध्यस्तविश्वेत्यर्थः ॥ जीवजीवातुलतिका जीवानांप्राणिनांजीवनौषधरूपा ॥ यदाहामरः ॥ जीवातुर्जीवनौषधमिति ॥ जन्मिजन्मनिवर्हिणी जन्मिनामुत्पत्तिमतामुत्पत्तिनिराकर्त्री ॥ ६५ ॥ जाड्यस्याज्ञानस्यसन्तापस्यवाविध्वंसनंकर्तुंशीलंयस्याःसाजाड्यविध्वंसनकरी ॥ जगद्योनिर्जगतांकारणम् ॥ जलानांजडानामज्ञानामित्येतत् ॥ आविलेवकलुषितेवआवृतेवेतिवाजलाविला ॥ अज्ञानेनावृतंज्ञानंतेनमुह्यंतिजंतवइतिभगवदुक्तेः ॥ जलैर्धर्मद्रवरूपैराविलाव्याप्ताइ



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तिवा ॥ जगदानंदजननीदर्शनादिनाजनमात्रस्यसुखकर्त्री ॥ जलमिवजलंविष्णुः ॥ सलिलएकोद्रष्टेतिश्रुतेः ॥ तस्माज्जाताजलजा ॥ जलजेक्षणा कमलेक्षणा ॥ ६६ ॥ जनलोचनपीयूषाप्रा
णिमात्रनेत्रामृता ॥ जटातटविहारिणीईश्वरस्यजटाप्रदेशविहारिणी ॥ गंगाजलप्लावितकेशदेशेतिस्मृतेः ॥ जयंतीजयनशीला ॥ शक्रात्मजाऋषभकांतारूपावा ॥ अथाहभगवानृषभदे
वइत्यारभ्यजयंत्यामिंद्रदत्तायामितिभागवतोक्तेः ॥ जंजपूकानिपापानिहंतीतिजंजपूकघ्नी ॥ जन्तुपापघ्नीतिक्कचित्पाठः ॥ उत्पादितंज्ञानशरीरंययासाजनितज्ञानविग्रहा ॥ ६७ ॥ झल्लरी
वाद्यकुशलाझल्लर्यावाद्येऽभिज्ञा ॥ झलज्झालशब्दोजलशब्दानुकरणे झांकारझर्झराशब्दावपि ॥ झलज्झालशब्दायमानेनजलेनावृता ॥ झिंटीशेनमहादेवस्यमूर्तिविशेषेणश्रीकंठादिन्यासप्र
सिद्धेनवंद्याझिंटीशवंद्या ॥ तथाचोक्तंशारदातिलके ॥ श्रीकंठानंतसूक्ष्माश्चत्रिमूर्तिरमरेश्वरः ॥ अर्धीशोभारभूतिश्चातिथीशःस्थाणुकोहरः ॥ झिंटीशोभौतिकःसद्योजातश्चानुग्रहेश्वरः ॥
अक्रूरश्चमहासेनःषोडशेश्वरमूर्तयइति ॥ झांकारशब्दंकर्तुंशीलंयस्याःसाझांकारकारिणी ॥ झर्झराइतिजलशब्दोवर्ततेयस्याःसाझर्झरावती ॥ ६८ ॥ टीकितंसेवितमशेषंपातालंभोगावतीरूपे
णययासाटीकिताशेषपाताला ॥ एनांस्येवाद्रयस्तेषांपाटनेविदारणेटंकिकापाषाणविदारणशस्त्रविशेषरूपिणी ॥ टंकारशब्दोयथास्यात् टंकारशब्देनवानृत्यंतःकल्लोलायस्यांसाटंकारनृत्यत्कल्लो
ला ॥ टीकनीयःस्वतरंगैःसेवनीयोमहांस्तटोयस्याःसाटीकनीयमहातटा ॥ ६९ ॥ डंबरमाडंबरंवेगवत्तरमित्येतत् यथास्यात्तथाप्रवहतीतिडंबरप्रवहा ॥ डीनान्युड्डीयमानानियानिराजहं

जनलोचनपीयूषाजटातटविहारिणी ॥ जयंतीजंजपूकघ्नीजनितज्ञानविग्रहा ॥ ६७ ॥ झल्लरीवाद्यकुशलाझलज्झालजलावृता ॥ झिंटीशवंद्याझांकारका
रिणीझर्झरावती ॥ ६८ ॥ टीकिताशेषपातालाटंकिकैनोद्रिपाटने ॥ टंकारनृत्यत्कल्लोलाटीकनीयमहातटा ॥६९॥ डंबरप्रवहाडीनराजहंसकुलाकुला॥
डमड्डमरुहस्ताचडामरोक्तमहांडका ॥७०॥ ढौकिताशेषनिर्वाणाढक्कानादचलज्जला ॥ ढुंढिविघ्नेशजननीढणड्ढुणितपातका ॥७१॥ तर्पणीतीर्थतीर्था
चत्रिपथात्रिदशेश्वरी॥त्रिलोकगोप्त्रीतोयेशीत्रैलोक्यपरिवंदिता॥७२॥तापत्रितयसंहर्त्रीतेजोबलविवर्धिनी॥त्रिलक्ष्यातारणीतारातारापतिकरार्चिता ७३

सानांकुलानितैराकुलाव्याप्ताडीनराजहंसकुलाकुला ॥ डमदितिशब्दायमानोडमरुर्हस्तेयस्याःसाडमड्डमरुहस्ताच ॥ डामरोडामरकल्पोनवाक्षरदेवीमंत्रस्यप्रतिपादकोग्रंथोमहाराष्ट्रेषुप्रसिद्धस्तत्रो
क्तंप्रतिपादितंमहांडकंमंत्रमयंमहच्छरीरंयस्याःसाडामरोक्तमहांडका ॥ गंगागौर्योरभेदात् ॥ ७० ॥ ढौकितंभक्तेभ्यःसेवितंप्रापितमितियावत् ॥: अशेषनिर्वाणंसालोक्यसामीप्यसा
रूप्यसार्ष्टिसायुज्यलक्षणंपंचविधंकैवल्यंययासाढौकिताशेषनिर्वाणा :॥ ढक्कावाद्यविशेषस्तस्यानादवन्नादवंतिचलंतिजलानियस्याःसाढक्कानादचलज्जला ॥ ढुंढिश्चासौविघ्नेशश्चेतितथातस्यजननी
ढुण्ढिविघ्नेशजननी ॥ ढणादितिशब्दानुकरणे ॥ ढणच्छब्दोयथास्यात्तथाढुणितानिदूरीकृतानिपातकानिययासाढणड्ढुणितपातका ॥ ७१ ॥ सर्वांस्तर्पयतीतितृप्यंत्यस्यामनयेतिवासर्वेइतितर्पणी ॥
तीर्थानांनिपानागमर्षिजुष्टजलगुरूणांतीर्थंतीर्थत्वंययासातीर्थतीर्था ॥ यदाहामरः ॥ निपानागमयोस्तीर्थमृषिजुष्टेजलेगुरावितिति ॥ त्रिपथा त्रिषुलोकेषुपंथामार्गोयस्याःसात्रिपथा ॥ त्रिदशानांदेवा
नामीश्वरीत्रिदशेश्वरी ॥ त्रिदिवेश्वरीतिक्कचित्पाठः ॥ त्रिलोकंगोपायतीतित्रिलोकगोप्त्री ॥ तोयेशीजलानांतदधिष्ठातॄणामीश्वरी ॥ त्रिलोकस्थैर्जनैःपरितोऽभिवादितास्तुतावेतित्रैलोक्यपरिवंदिता ॥
॥ ७२ ॥ अध्यात्मिकाधिदैविकाधिभौतिकतापत्रयंसंहरतीतितापत्रितयसंहर्त्री ॥ तेजोबलेविवर्धयितुंशीलंयस्याःसातेजोबलविवर्धिनी ॥ त्रिषुलोकेषुलक्ष्यतेरूपंयस्याइतित्रिलक्ष्या ॥ तारयतिसर्वां



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्तरंत्यनयाऽस्यामितिवासर्वेइतितारणी ॥ तारयतिभक्तानितिताराप्रणवरूपानक्षत्ररूपावा ॥ अहल्याद्रौपदीसीतातारामंदोदरीतथेत्यत्रोक्ततारारूपावा ॥ तारापतिकरार्चिताचंद्ररश्मिभिःपूजिता ॥
अथवातारापतयेचंद्रायशिरोधारणेनकंसुखंरातीतितारापतिकरोरुद्रस्तेनार्चिता ॥७३॥ त्रैलोक्यपावनीपुण्या त्रैलोक्यंपावयंतीतित्रैलोक्यपावन्योगौतमीप्रमुखानद्यस्तासांमध्येपुण्यापुण्यातिशयहेतुः ॥
तुष्टिदासुखदा ॥ तुष्टिरूपिणीतुष्टिस्वरूपा ॥ तृष्णाइच्छातस्याश्छेत्रीतृष्णाछेत्री ॥ तीर्थमात्राणांसप्तानांवाब्रह्मपुत्राणांमातातीर्थमाता ॥ त्रिविक्रमपदोद्भवा त्रिविक्रमोवामनस्तस्यपादावनेजना
ज्जाता ॥ ७४ ॥ तपइंद्रियमनसामैकाग्र्यम् ॥ मनसश्चेंद्रियाणांचऐकाग्र्यंपरमंतपइत्युक्तेस्तन्मयीतपोमयीआलोचनमयीत्यर्थः ॥ तपोरूपाकृच्छ्रचांद्रायणादिरूपा ॥ तपःस्तोमफलप्रदातपोनिकर
फलदात्री ॥ त्रैलोक्यंव्याप्तुंशीलंयस्याःसात्रैलोक्यव्यापिनी ॥ सर्वव्यापिकेत्यर्थः ॥ तृप्तिस्तृप्तिस्वरूपा ॥ तृप्तिंसुखंकरोतीतितृप्तिकृत् ॥ तत्त्वरूपिणीचतुर्विंशतितत्त्वरूपिणी परमार्थरूपिणीतिवा ॥
॥ ७५ ॥ त्रैलोक्येसुंदरंसौंदर्यंयस्याःसात्रैलोक्यसुंदरी त्रैलोक्यमनोहरेतिवा ॥ तुर्याऽवस्थात्रयातीता ॥ तदुक्तम् ॥ अहंभावानहंभावौत्यक्त्वासदसतीतथा ॥ः यदसक्तंसमंस्वच्छंस्थितंतत्तुर्यमुच्यत
इति ॥ तुर्यस्यापिप्रतियोग्यधीननिरूप्यत्वेनकल्पितत्वात्तदतीतमतिक्रांतंयत्पदंपरंब्रह्मतत्प्रददातीतितुर्यातीतपदप्रदा ॥ त्रैलोक्यलक्ष्मीस्त्रैलोक्यसंपत् ॥ त्रैलोक्यस्यलक्ष्मीर्यस्याःसकाशादितिवा ॥
त्रीणिपदान्यस्याइतित्रिपदी ॥ त्रीणिपदाविचक्रमइतिश्रुतेः ॥ त्रिषुलोकेषुपदंस्थानमस्याइतिवा ॥ तथ्याकालत्रयाबाध्या ॥ सत्यंज्ञानमनंतंब्रह्मेतिश्रुतेः ॥ तीर्थेषुसाध्वीतीर्थ्याइतिवापाठः ॥

त्रैलोक्यपावनीपुण्यातुष्टिदातुष्टिरूपिणी ॥ तृष्णाछेत्रीतीर्थमातात्रिविक्रमपदोद्भवा ॥ ७४ ॥ तपोमयीतपोरूपातपःस्तोमफलप्रदा ॥ त्रैलोक्यव्यापिनी
तृप्तिस्तृप्तिकृत्तत्त्वरूपिणी ॥ ७५ ॥ त्रैलोक्यसुंदरीतुर्यातुर्यातीतपदप्रदा ॥ त्रैलोक्यलक्ष्मीस्त्रिपदीतथ्यातिमिरचंद्रिका ॥ ७६ ॥ तेजोगर्भातपःसारा
त्रिपुरारिशिरोगृहा ॥ त्रयीस्वरूपिणीतन्वीतपनांगजभीतिनुत् ॥७७॥ तरिस्तरणिजामित्रंतर्पिताशेषपूर्वजा ॥ तुलाविरहितातीव्रपापतूलतनूनपात् ॥
॥ ७८ ॥ दारिद्र्यदमनीदक्षादुष्प्रेक्षादिव्यमंडना ॥ दीक्षावतीदुरावाप्याद्राक्षामधुरवारिभृत् ॥ ७९ ॥

तिमिरमंधकारंतत्रचंद्रिकाकौमुदीवोज्ज्वला ॥ तिमिरमज्ञानंतस्यचंद्रिकानाशिकेत्यर्थइतिवा ॥ ७६ ॥ ईश्वरस्यतेजोवीर्यमग्निनात्यक्तंगर्भेयस्याःसातेजोगर्भा ॥ तपसांसारोबलंयस्याःसातपः
सारा ॥ तपसांसारभूतेतिवा ॥ त्रिपुरारेःशिरोगृहंयस्याःसात्रिपुरारिशिरोगृहा ॥ त्रयीस्वरूपिणीवेदत्रयरूपा ॥ तनोतिप्रपंचजातमितितन्वी ॥ उकारश्छांदसः ॥ सुंदरीतिवा ॥ गंगानामसहस्रे
स्मिंश्चतुर्थेविवृतेशते ॥ यद्दृष्टमभूदत्रतद्विश्वेशेसमर्पितम् ॥ ४ ॥ तपनांगजस्ययमस्यभीतिमपनुदतीतितपनांगजभीतिनुत् ॥ ७७ ॥ तरत्यज्ञानंतत्कार्यमितितरिःभक्तानांसं
सारार्णवनौस्वरूपेतिवा ॥ तरणिजोयमस्तस्यामित्रम् ॥ तदधिकारखंडनात् ॥ तरणिजायायमुनायामित्रमितिवा ॥ तर्पितास्तृप्तिंप्रापिताअशेषाभगीरथस्यपूर्वजाःप्रपितामहाअशेषाणां
जनानांपूर्वजाःपितृपितामहाद्याययेतिवासातर्पिताशेषपूर्वजा ॥ तुलाविरहितापरिमाणमतीतेत्यर्थः ॥ तीव्रपापान्येवतूलानितेषुतनूनपाद्वह्निस्तद्दाहिकेत्यर्थः ॥ ७८ ॥ दारिद्र्यदमनी
दौर्गत्यच्छेत्री ॥ दक्षाभुक्तिमुक्तिप्रदानेचतुरा ॥ दक्षभार्याप्रसूतिरूपावा ॥ प्रसूतिंमानवींदक्षउपयेमेह्यजात्मजइतिभागवतोक्तेः ॥ दीक्षेतिक्वचित् ॥ दुष्प्रेक्षाभक्तिमन्तरेणद्रष्टुमश
क्या ॥ दिव्यमलौकिकंमंडनंभूषणंयस्याःसादिव्यमंडना ॥ वैदिकीतांत्रिकीचदीक्षावर्ततेयस्याःसादीक्षावती ॥ दुरावाप्याज्ञानमन्तरेणप्राप्तुमशक्या ॥ तमेवविदित्वाऽतिमृत्युमेतिनान्यः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पंथाविद्यतेऽयनायेतिश्रुतेः ॥ द्राक्षामृद्वीकातद्वन्मधुरंवारिबिभर्तीतिद्राक्षामधुरवारिभृत् ॥ ७९ ॥ दर्शितंप्रकाशितंमायाविनेवगंधर्वनगरादिकमनेकंनानाविधंकुतुकंकौतुकंजगल्लक्षणमाश्चर्यंयया
सादर्शितानेककुतुका ॥ दुष्टानियानिदुर्जयदुःखानितानिहरतीतितथा ॥ दुष्टदुर्जयदुःखकृदितिपाठेदुष्टानांदुर्जयदुःखकृदित्यर्थः ॥ दैन्यंकार्पण्यंहरतीतिदैन्यहृत् ॥ दैत्यहृदितिपाठेदैत्यान्हराति
नाशयतीत्यर्थः ॥ दुरितानिहन्तीतिदुरितघ्नीच ॥ दनोरपत्यानिदानवास्तेषामरेर्विष्णोःपदाब्जात्पादपद्माज्जातादानवारिपदाब्जजा ॥ विष्णुपादार्घ्यसंभूतेतिस्मृतेः ॥ ८० ॥ दन्दशूकाः
सर्पास्तेषांविषंहंतीतिदंदशूकविषघ्नीच ॥ दारिताविदारिताऽघौघसंततिःपापपरंपराययासादारिताघौघसंततिः ॥ द्रवतीतिद्रुतावेगगामिनीतियावत् ॥ मन्दारपारिजातसंतानकल्पवृक्षहारिचंदनैर्व्याप्तादे
वद्रुमच्छन्ना ॥ दुर्वाराणिप्रायश्चित्तादिभिश्छेत्तुमशक्यान्यघानिपापानिविघातायितुंशीलंयस्याःसादुर्वाराघविघातिनी ॥ उक्तंच ॥ प्रायश्चित्तंयदिस्यात्तवजलकणिकाब्रह्महत्यादिपापेकस्त्वांस्तो
तुंसमर्थस्त्रिजगदघहरेदेविगंगेनमस्तेइति ॥ ८१ ॥ दमग्राह्यादमादिसाधनचतुष्टयैःप्राप्या ॥ तथाचश्रुतिः ॥ शांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वात्मन्येवात्मानंपश्येदिति ॥ देवमाताऽ
दितिस्वरूपा ॥ देवलोकप्रदर्शिनीब्रह्मलोकादिप्रापयित्री ॥ देवःस्वप्रकाशःसएवलोक्यतइतिलोकस्तत्प्रदर्शिनीतिवा ॥ देवदेवप्रियाविश्वेश्वरवल्लभा ॥ देवीद्योतमानास्वप्रकाशेत्यर्थः ॥

दर्शितानेककुतुकादुष्टदुर्जयदुःखहृत् ॥ दैन्यहृद्दुरितघ्नीचदानवारिपदाब्जजा ॥ ८० ॥ दंदशूकविषघ्नीचदारिताघौघसंततिः ॥ द्रुतादेवद्रुमच्छन्नादुर्वा
राघविघातिनी ॥ ८१ ॥ दमग्राह्यादेवमातादेवलोकप्रदर्शिनी ॥ देवदेवप्रियादेवीदिक्पालपददायिनी ॥ ८२ ॥ दीर्घायुःकारिणीदीर्घादोग्ध्रीदूषणव
र्जिता ॥ दुग्धांबुवाहिनीदोह्यादिव्यादिव्यगतिप्रदा ॥ ८३ ॥ द्युनदीदीनशरणंदेहिदेहनिवारिणी ॥ द्राघीयसीदाघहंत्रीदितपातकसंततिः ॥ ८४ ॥
दूरदेशांतरचरीदुर्गमादेववल्लभा ॥ दुर्वृत्तघ्नीदुर्विगाह्यादयाधारादयावती ॥ ८५ ॥

दिक्पालपददायिनीइंद्रादिपदप्रापयित्रीत्यर्थः ॥ ८२ ॥ दीर्घमायुःकर्तुंशीलंयस्याःसादीर्घायुःकारिणी ॥ दीर्घाऽनवच्छिन्ना ॥ दोग्ध्रीधर्मार्थकाममोक्षप्रसवा ॥ दूषणवर्जिताअविद्यात
त्कार्यरहितेत्यर्थः ॥ दुग्धमेवांबुवाहितुंशीलंयस्याःसातथा ॥ गोरूपधरापृथ्वीस्वरूपेत्यर्थः ॥ साहिदुग्धांबुनाचतुःसमुद्रंपूरितवती ॥ अतएवकालिदासोपिकथयतिस्म ॥ पयोधरीभूतचतुःसमु
द्रांजुगोपगोरूपधरामिवोर्वीमिति ॥ धर्मार्थकाममोक्षान्दुह्यतीतिदोह्या ॥ धर्मार्थकाममोक्षायस्याःप्राप्यन्तइत्यर्थः ॥ दिविभवादिव्याऽलौकिकीत्यर्थः ॥ दिव्यगतिप्रदाऽलौकिकपदप्रदेत्यर्थः ॥
॥ ८३ ॥ दिवोनदीद्युनदीस्वर्गंगेत्यर्थः ॥ दीनशरणं दीनानांमहापातकिनामपिशरणंरक्षित्री ॥ तदुक्तम् ॥ मातापिसंत्यजेत्पुत्रंब्रह्महत्यादिकारिणम् ॥ त्वंपुनर्गर्हितंमग्नंपुनीषेदीनवत्सलेइति ॥
देहिदेहनिवारिणी अविद्यानिरासेनजीवोपाधिभूतदेहद्वयविनाशिनीत्यर्थः ॥ द्राघीयसीदीर्घामहत्तरेतियावदित्यर्थः ॥ महांतंविभुमात्मानम् महतोमहीयानित्यादिश्रुतेः ॥ दाघहंत्रीसन्तापच्छेत्त्री ॥
दिताखंडितापातकसंततिःपापपरंपराययासादितपातकसंततिः ॥ ८४ ॥ दूरदेशांतरेचर्तुंशीलंयस्याःसादूरदेशांतरचरी ॥ दूरदेशस्थितापिस्वस्मर्तॄणांसर्वपापनाशिनीत्यर्थः ॥ श्रद्धाभक्तिध्यान
यमाद्यैर्विनानगम्यतइतिदुर्गमा ॥ तदुक्तम् ॥ श्रद्धाभक्तिध्यानयमाद्यैर्यतमानैर्ज्ञातुंशक्योदेवइहैवाशुयईशः ॥ दुर्विज्ञेयोजन्मशतैश्चापिविनातैस्तंसंसारध्वांतविनाशंहरिमीडइति ॥ देवानामभी



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शदेववल्लभा ॥ देवः श्रीविष्णुः श्रीरुद्रोवावल्लभोयस्याःसातथेतिवा ॥ दुर्वृत्तान्दुष्टान्पाप्मनोवाहंतीतिदुर्वृत्तघ्नी ॥ दुर्विगाह्याऽनुग्रहमंतरेणप्राप्तुमशक्या ॥ दुर्विगाहेतिपाठेपिसएवार्थः ॥ दयाधाराकृपा
विकरणम् ॥ दयावतीकृपायुक्ता ॥ ८९ ॥ दुर्दुःखेनासदनमासादनंज्ञानंप्राप्तिर्वायस्याःसा ॥ दानेपुरुषार्थचतुष्टयप्रदानेशीलंस्वभावोयस्याःसादानशीला ॥ द्रवितुंनिरंतरंगंतुंपापसंघान्वाद्राव
यितुंशीलंस्वभावोयस्याःसाद्राविणी ॥ द्रुहिणेनब्रह्मणास्तुताद्रुहिणस्तुता ॥ दैत्यदानवयोःसंशुद्धिंकर्तुंशीलंयस्याःसादैत्यदानवसंशुद्धिकर्त्री ॥ दुष्टांबुद्धिंहर्तुंशीलंयस्याःसादुर्बुद्धिहारिणी ॥ ८६ ॥
सरणंसारः दानेनसारोज्ञानंयस्याःसादानसारा ॥ तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसाऽनाशकेनेतिश्रुतेः ॥ दययासारोज्ञानंयस्याःसादयासारा ॥ द्यांदिवंभूमिंचविगाहितुंशीलं
यस्याःसाद्यावाभूमिविगाहिनी ॥ दृष्टंफलमैहिकसुखादिअदृष्टंफलंपारलौकिकंस्वर्गमोक्षादितयोःप्राप्तिर्यस्याःसादृष्टादृष्टफलप्राप्तिः ॥ देवसमूहैरभिवंदितास्तुत्यावादेवतावृंदवंदिता ॥ सर्वदेवैर्नमस्कृता
इतिवाराहोक्तेः ॥ ८७ ॥ दीर्घंमहद्व्रतंसंकल्पःसृष्ट्यादिलक्षणंयस्याःसादीर्घव्रता ॥ दीर्घादृष्टिर्ज्ञानंयस्याःसादीर्घदृष्टिरपरिच्छिन्नज्ञानस्वरूपावा ॥ दीप्तंशंखकुंदेंदुवदुज्ज्वलंतोयंयस्याःसादीप्ततोया ॥
तदुक्तंवाराहे ॥ शंखकुंदेंदुधवलेति ॥ दुःखेनालभनंप्राप्तिर्यस्याःसादुरालभा ॥ दुर्लभेत्यर्थः ॥ दंडयित्रीदंडकर्त्रीकारयित्रीतिवा ॥ दंडनीतिरर्थशास्त्ररूपा ॥ दुष्टेषुपापेषुदंडंधारयंतियेतेदुष्टदंड
धराराजादयस्तैरर्चिता ॥८८॥ दुरोदरंद्यूतादिदुर्वृत्तंतद्धंतुंशीलंयस्याःसादुरोदरघ्नी ॥ दावोवनाग्निस्तद्वदर्चिर्दीप्तिर्यस्याःसादावार्चिः ॥ द्रवतीतिद्रवत्स्वकार्यंव्याप्नुवत्परिपूर्णमित्यर्थः ॥ द्रव्याणां

दुरासदादानशीलाद्राविणीद्रुहिणस्तुता ॥ दैत्यदानवसंशुद्धिकर्त्रीदुर्बुद्धिहारिणी ॥८६॥ दानसारादयासाराद्यावाभूमिविगाहिनी ॥ दृष्टादृष्टफलप्राप्तिर्दे
वतावृंदवंदिता ॥ ८७ ॥ दीर्घव्रतादीर्घदृष्टिर्दीप्ततोयादुरालभा ॥ दंडयित्रीदंडनीतिर्दुष्टदंडधरार्चिता ॥ ८८ ॥ दुरोदरघ्नीदावार्चिर्द्रवद्द्रव्यैकशेवधिः ॥
दीनसंतापशमनीदात्रीदवथुवैरिणी ॥ ८९ ॥ दरीविदारणपरादांतादांतजनप्रिया ॥ दारिताद्रितटादुर्गादुर्गारण्यप्रचारिणी ॥ ९० ॥ धर्मद्रवाधर्मधुराधे
नुर्धीराधृतिर्ध्रुवा ॥ धेनुदानफलस्पर्शाधर्मकामार्थमोक्षदा ॥ ९१ ॥

सर्वपदार्थानामेकःशेवधिर्मुख्यानिधिर्मुख्यआश्रयइत्यर्थः ॥ द्रव्यैकशेवधिः ॥ दीनानांसंसारांगारेपापच्यमानानांसंतापानाध्यात्मिकादितापान्शमयितुंशीलंयस्याःसादीनसंतापशमनी ॥ दीनसंताप
शमनेतिपाठेपिसएवार्थः ॥ दात्रीपुरुषार्थचतुष्टयदानकर्त्री ॥ दवथुर्वैरिणीसंसारभयजन्यकंपनाशिनी ॥ ८९ ॥ दरीविदारणंपरंतात्पर्यंयस्याःसादरीविदारणपरा ॥ तदुक्तंवाराहे ॥ विंध्यपाषाण
भेदिनीति ॥ दांतावशीकृतेंद्रिया ॥ दांतजनानांप्रियादांतजनावाप्रियायस्याःसादांतजनप्रिया॥दारितमद्रितटंययासादारिताद्रितटा ॥ दुर्गनामानंदैत्यंहतवतीतिदुर्गागौरी ॥ तथाचात्रैवदेवीवाक्यम् ॥
अद्यप्रभृतिमेनामदुर्गेतिख्यातिमेष्यति ॥ दुर्गदैत्यस्यसमरेघातनादतिदुर्गमादिति ॥ तद्रूपा ॥ गंगागौर्यंतरंयच्चयोरभूतेमृढधीस्तुसइतिभविष्येदर्शनात् ॥ दुर्गारण्येदुर्गमेवनेदुर्गासुरएवारण्यंमृउभयत्रप्र
चर्तुंप्रहर्तुंचशीलंयस्याःसादुर्गारण्यप्रचारिणी ॥ ९० ॥ धर्मरूपोद्रवोयस्याधर्मात्मकद्रवस्वरूपावासाधर्मद्रवा ॥ तथाचवाराहे ॥ धर्मस्तुद्रवरूपेणब्रह्मणानिर्मितःपुरा ॥ तद्वैगंगेतिविख्यातेति ॥
धर्मधुराधर्मश्रेष्ठासर्वोत्कृष्टधर्मरूपेत्यर्थः ॥ अयंतुपरमोधर्मोयद्योगेनात्मदर्शनमितियाज्ञवल्क्योक्तेः ॥ धेनुःकामधेनुस्वरूपा ॥ धेनूनामस्मिकामधुगितिभगवद्वचनात् ॥ धीराविदुषी ॥ यद्वा
धियमद्वैतबुद्धिंरातिददातीतिधीरा ॥ उक्तंच ॥ ईश्वरानुग्रहादेवपुंसामद्वैतवासनेति ॥ धृतिर्धारिका ॥ ससेतुर्विधृतिर्लोकानामसंभेदायेतिश्रुतेः ॥ ध्रुवानित्यानिश्चलावा ॥ एतदप्रमेयंध्रुवमितिश्रुतेः ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कूटस्थमचलंध्रुवमितिस्मृतेश्च ॥ धेनुदानस्यफलंयस्मात्तादृशःस्पर्शोधेनुदानस्ययत्फलंपुण्यंतेनवास्पर्शोयस्याःसाधेनुदानफलस्पर्शा ॥ धेनुदानध्रुवस्पर्शेतिक्वचित्पाठः ॥ धर्मकामार्थमोक्षदापुरुषार्थ चतुष्टयदात्री ॥ ९१ ॥ धर्मरूपाएवोर्मयस्तद्वाहिनीधर्मोर्मिवाहिनी ॥ धुर्याश्रेष्ठा ॥ धात्रीजनयित्रीपोष्ट्रीपृथ्वीतिवा ॥ धात्रीविभूषणंपृथ्व्याअलंकरणम् ॥ धात्रीविभूषणेतिक्वचित्पाठः ॥ धर्मिणीजगदुत्पत्त्यादिधर्मवती पुण्यवतीतिवा ॥ धर्मेधर्मएववाशीलंस्वभावोयस्याःसाधर्मशीला ॥ धन्विनांकोटिभिःकृतमवनंयस्यास्तत्कोटीनांवाकृतमवनंययासाधन्विकोटिकृतावना ॥ तथा चोक्तम् ॥ धनुषांकोटिभिर्ब्रह्मतदर्धंजाह्नवीजलम् ॥ तदर्धंचहरेर्नामतदर्धंस्नानदानयोरिति ॥ ९२ ॥ ध्यातुःपुरुषस्यपापहराध्यातृपापहरा ॥ धातृपापहरेतिक्वचित्पाठः ॥ ध्येयाबुभुक्षुभिर्मुमुक्षुभिश्च चिंत्या ॥ धावनीपवित्रकारिणीगमनशीलावा ॥ धूतंविधूतंनाशितमित्येतत् कल्मषंययासाधूतकल्मषा ॥ गंगानामसहस्रेऽस्मिन्पंचमेविवृतेशते ॥ यद्दृष्टमभूदत्रतद्विश्वेशेसमर्पितम् ॥९॥ धर्मं रूपाधारा ॥ धर्मोध्रियतइतिवाधर्मधारा ॥ धर्माणांमध्येसाराश्रेष्ठाधर्मसारा ॥ धनंददातीतिधनदा ॥ धनवर्धिनीधनवृद्धिकर्त्री ॥ धृतिवर्द्धिनीतिक्वचित्पाठः ॥ ९३ ॥ धर्माधर्मलक्षणौयौगुणौतयो श्छेत्रीभेत्रीधर्माधर्मगुणच्छेत्री ॥ धत्तूरकुसुमानिप्रियाणियस्याःसाधत्तूरकुसुमप्रिया ॥ धर्मेशीतन्नियंत्री ॥ धर्मशास्त्रंजानातीतिधर्मशास्त्राद्वाज्ञानंबोधनंयस्याःसाधर्मशास्त्रज्ञा ॥ धनंचधान्यंचधन धान्येतयोर्वृद्धिकर्त्रीधनधान्यसमृद्धिकृत् ॥ ९४ ॥ धर्मलभ्यायोगैकप्राप्या ॥ धर्मस्वरूपंजलंयस्याःसाधर्मजला ॥ धर्मस्यप्रसवोयस्याःसाधर्मप्रसवा ॥ धर्मोदेयत्वेनवर्ततेयस्याःसाधर्मिणी

धर्मोर्मिवाहिनीधुर्याधात्रीधात्रीविभूषणम् ॥ धर्मिणीधर्मशीलाचधन्विकोटिकृतावना ॥ ९२ ॥ ध्यातृपापहराध्येयाधावनीधूतकल्मषा ॥ धर्मधाराधर्म साराधनदाधनवर्धिनी ॥ ९३ ॥ धर्माधर्मगुणच्छेत्रीधत्तूरकुसुमप्रिया ॥ धर्मेशीधर्मशास्त्रज्ञाधनधान्यसमृद्धिकृत् ॥ ९४ ॥ धर्मलभ्याधर्मजलाधर्म प्रसवधर्मिणी ॥ ध्यानगम्यस्वरूपाचधरणीधातृपूजिता ॥ ९५ ॥ धूर्धूर्जटिजटासंस्थाधन्याधीर्धारणावती॥नंदानिर्वाणजननीनंदिनीनुन्नपातका ॥ ९६ ॥ निषिद्धविघ्ननिचयानिजानंदप्रकाशिनी ॥ नभोंगणचरीनूतिर्नम्यानारायणीनुता ॥ ९७ ॥ निर्मलानिर्मलाख्यानानाशिनीतापसंप दाम् ॥ नियतानित्यसुखदानानाश्चर्यमहानिधिः ॥ ९८ ॥

साचसाचेतिसाविशेषणंनामैकम् ॥ धर्मस्यप्रसवलक्षणोधर्मोवर्ततेयस्याःसाधर्मप्रसवधर्मिणीतिवा ॥ ध्यानेनगम्यंस्वरूपंयस्याःसाध्यानगम्यस्वरूपाच ॥ धरणीपृथ्वीरूपा ॥ धातृपूजिताब्रह्मा चिंता ॥ ९५ ॥ धूनयतिपापानीतिधूः ॥ धूर्जटेरीश्वरस्यजटायांसंस्थासंस्थितिर्यस्याःसाधूर्जटिजटासंस्था ॥ धन्याकृतार्थाधनायहिताधन्येतिवा ॥ धीःसामान्यात्मिकाबुद्धिः ॥ धारणा वतीतद्विशेषरूपा ॥ नन्दातन्नाम्नी ॥ तदुक्तं नन्दाचालकनंदाचेति ॥ निर्वाणजननीकैवल्यसंपादयित्री ॥ नंदयितुंशीलंयस्याःसानंदिनी वसिष्ठधेनुरूपावा ॥ नुन्नानिदूरीकृतानि पातकानियया सानुन्नपातका ॥ ९६ ॥ निषिद्धाउत्सादिताविघ्ननिचयाययासानिषिद्धविघ्ननिचया ॥ निजानंदोब्रह्मानंदस्तंप्रकाशयितुंशीलंयस्याःसानिजानन्दप्रकाशिनी ॥ नभोंगणचरी आकाशमार्गवहा ॥ नूतिःस्तुतिस्वरूपा ॥ दीर्घत्वमार्षम् ॥ नम्यावंद्या ॥ नारायणीनारायणशक्तिः ॥ नुताब्रह्मेंद्रादिभिःस्तुता ॥ ९७ ॥ निर्गतःसंसाररूपोमलोयस्याःसानिर्मला ॥ निर्मलं संसारनाशकमाख्यानंकथनंयस्याःसानिर्मलाख्याना ॥ नाशिनीतापसंपदांतापपरंपराणांविघातिनी ॥ नियताएकरूपा ॥ नितरांयतासंयताइतिवा ॥ नित्यसुखंददातीतिनित्यसुखदा ॥ नानाश्चर्यमहानिधिःनानाश्चर्यंजगत्तस्यमहानिधिःपरममधिष्ठानमित्यर्थः ॥ ९८ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नदीसरिद्रूपा ॥ नदसरोमातानदानांसरसांचजनयित्री ॥ नायिकाश्रेष्ठासर्वनियन्त्रीत्यर्थः ॥ नृत्यकर्त्रीस्वरूपावेत्यर्थः ॥ नाकदीर्घिकास्वर्गवापीस्वरूपा ॥ नष्टानांसंसारेपतितानामुद्धरणे मोचनेधीरादक्षानष्टोद्धरणधीराच ॥ नंदयतिसमृद्धान्करोतीतिनन्दना ॥ नंदमानन्दंसमृद्धिंवादातुंशीलंयस्याःसानंददायिनी ॥ ९९ ॥ निर्णिक्तंपवित्रीकृतमशेषंभुवनंययासानिर्णिक्ताशेषभुवना निर्गतःसंगःसंबंधोयस्याःसानिःसंगा ॥ असंगोनहिसज्जतइतिश्रुतेः ॥ निर्गतउपद्रवआध्यात्मिकादिलक्षणोयस्याःसानिरुपद्रवा ॥ निर्गतआलंबआश्रयोयस्याःसानिरालंबा ॥ स्वमहिमप्रति ष्ठितेत्यर्थः ॥ सभगवान्कस्मिन्प्रतिष्ठितःस्वेमहिम्नीतिश्रुतेः ॥ निष्प्रपंचाप्रपंचाऽतीता ॥ एकमेवाद्वितीयमितिश्रुतेः ॥ निःशेषेणनाशितंमहामलमज्ञानंययासानिर्णाशितमहामला ॥ १०० ॥ निर्मल ज्ञानजननीब्रह्मात्मैकत्वज्ञानोत्पादिनी ॥ निःशेषायेप्राणितापाआध्यात्मिकादिलक्षणास्तान्हरतीतिनिःशेषप्राणितापहृत् ॥ नित्यउत्सवोयस्याःसानित्योत्सवा ॥ नित्येनसुखेनस्वरूपानंदेनानित्यं सर्वदावातृप्तानित्यतृप्ता ॥ नमस्कार्यानमस्कारविषया ॥ अंजनमज्ञानंतद्रहितानिरंजना ॥ १ ॥ निष्ठाकाष्ठानियमइतियावत् तद्वतीतिनिष्ठावती ॥ निर्निर्गतआतंकआशंकायस्याःसानिरा तंका ॥ तत्रकोमोहःकःशोकइतिश्रुतेः ॥ निर्निर्गतःपापलेपोयस्याःसानिर्लेपा ॥ शुद्धमपापविद्धमितिश्रुतेः ॥ निश्चलःकूटस्थआत्मायस्याःसानिश्चलात्मिका ॥ निर्गतमवद्यंदूषणंयस्याःसानिर

नदीनदसरोमातानायिकानाकदीर्घिका ॥ नष्टोद्धरणधीराचनंदनानंददायिनी ॥ ९९ ॥ निर्णिक्ताशेषभुवनानिःसंगानिरुपद्रवा ॥ निरालंबानिष्प्रप चानिर्णाशितमहामला ॥ १०० ॥ निर्मलज्ञानजननीनिःशेषप्राणितापहृत् ॥ नित्योत्सवानित्यतृप्तानमस्कार्यानिरंजना ॥ १ ॥ निष्ठावतीनिरातंका निर्लेपानिश्चलात्मिका ॥ निरवद्यानिरीहाचनीललोहितमूर्धगा ॥ २ ॥ नंदिभृंगिगणस्तुत्यानागानंदानगात्मजा ॥ निष्प्रत्यूहानाकनदीनिरयार्णवदी र्घनौः ॥ ३ ॥ पुण्यप्रदापुण्यगर्भापुण्यापुण्यतरंगिणी ॥ पृथुःपृथुफलापूर्णाप्रणतार्तिप्रभंजिनी ॥ ४ ॥ प्राणदाप्राणिजननीप्राणेशीप्राणरूपिणी ॥ पद्मालयापराशक्तिःपुरजित्परमप्रिया ॥ ५ ॥

वद्या ॥ निरवद्यंनिरंजनमितिश्रुतेः ॥ निरीहाचेष्टारहिता ॥ कूटस्थमचलंध्रुवमितिस्मृतेः ॥ च नीललोहितमूर्धगाविश्वेश्वरमस्तकगा ॥ २ ॥ नंदिभृंगिगणस्तुत्या नंदीचभृंगीचगणाश्चनं दिभृंगिगणास्तैस्तादेववागणौताभ्यांस्तुत्यास्तुत्यर्हा ॥ नागानागस्वरूपा ॥ नंदयतीतिनंदासमृद्धिदेत्यर्थः ॥ नगात्मजाहिमवतोदुहिता ॥ हिमाचलकृताश्रयेतिस्मृतेः ॥ निष्प्रत्यूहाविघ्नरहिता निर्गतःप्रत्यूहोयस्याइतिवा ॥ नाकनदीस्वर्गनदी ॥ निरयार्णवस्यपापसमुद्रस्यदीर्घानौः पारप्रापिकामहतीनौकेत्यर्थः ॥ ३ ॥ पुण्यंप्रददातीतिपुण्यप्रदा ॥ पुण्यंगर्भेयस्याःसापुण्यगर्भा ॥ पुण्यापुण्यस्वरूपा ॥ तद्धेतुत्वात् ॥ पुण्यरूपास्तरंगाविद्यंतेयस्याःसापुण्यनदीतिवापुण्यतरंगिणी ॥ पृथुर्महतीपरिपूर्णेत्यर्थः ॥ पृथ्ववताररूपावा ॥ पृथूनिमहांतिफलानियस्याःसापृथुफला ॥ पूर्णासर्वव्यापिका अनवच्छिन्नप्रवाहरूपावा ॥ प्रणतानामार्तिंप्रभंजितुंशीलंयस्याःसाप्रणतार्तिप्रभंजिनी ॥ ४ ॥ प्राणान्ददातिभक्तानामभक्तानांखंडयतीतिवा प्राणदा ॥ प्राणिजननीजंतूत्पा दिनी ॥ प्राणेशीप्राणानांनियंत्री ॥ प्राणोहिरण्यगर्भःसमष्टिरूपस्तद्रूपंवर्ततेयस्याःसाप्राणरूपिणी ॥ हिरण्यगर्भःसमवर्तताग्रेइत्यादिश्रुतेः ॥ पद्ममालयोयस्याःसापद्मालयालक्ष्मीस्वरूपे त्यर्थः ॥ पराशक्तिर्मायाख्यातद्रूपा ॥ परास्यशक्तिर्विविधैवश्रूयतइतिश्रुतेः ॥ पुरजितस्त्रिपुरारेःपरमाचासौप्रियाचेतिपुरजित्परमप्रिया ॥ ५ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्वमापीतापीतांबरपुरनिवासंवितरसीत्युक्तेः ॥ पावनीसर्वपापशोधनी ॥ प्रायश्चित्तं
परासर्वोत्कृष्टा ॥ नतत्समश्चाप्यधिकश्चदृश्यतइतिश्रुतेः ॥ परफलस्यकैवल्यस्यप्राप्तिर्यस्याःसा परफलप्राप्तिः ॥ त्वमापीतापीतांबरपुरनिवासंवितरसीत्युक्तेः ॥ पावनीसर्वपापशोधनी ॥ प्रकृष्टोऽर्थोयस्याःसाप्रकृष्टार्था ॥
यदिस्यात्तवजलकणिकाब्रह्महत्यादिपापेइत्युक्तेः ॥ च पयस्विनीप्रशस्तजलवतीपुण्यतोयेत्यर्थः ॥ परआनंदोययापरानंदस्वरूपावासापरानंदा ॥ स्त्रीत्वमार्षम् ॥ प्रकृष्टोऽर्थोयस्याःसाप्रकृष्टार्था ॥
प्रतितिष्ठत्यस्यांसर्वमितिप्रतिष्ठा ॥ पालनीपालनकर्त्री ॥ परापरस्वरूपा पूरयतीतिवापरा ॥ ६ ॥ पुराणेषुपठितापुराणपठितातत्प्रतिपाद्या ॥ अथवापुराणःपरमात्मातद्रूपत्वेनपठिताकथितेत्यर्थः ॥
प्रीतासर्वेषांप्रियतमा सर्वान्प्रीणातीतिवा ॥ प्रणवाक्षरम्ॐकारस्तद्रूपिणी ॥ पार्वतीभवानीरूपा ॥ प्रेमसंपन्नाप्रीतिसंयुक्तापरप्रेमास्पदेत्यर्थः ॥ पशूनांजीवानांपाशाश्चतुर्विंशतितत्त्वानितेषांविमोचनी
पशुपाशविमोचनी ॥ विनाशिनीतिपाठेपिसएवार्थः ॥ गंगानामसहस्रेस्मिन्विवृतेद्विस्त्रिकेशते ॥ यदृष्टमभूदत्रतद्विश्वेशेसमर्पितम् ॥६ ॥ ७ ॥ परमात्मस्वरूपाचपरब्रह्मैकलक्षणाच ॥ परब्रह्मप्रका
शिनीपरब्रह्मप्रकाशकारिणी ॥ परमानंदस्यनितरांस्पंदश्चलनंतद्रूप्यभिव्यक्तिर्यस्याःपुण्यकर्महेतुत्वात्सापरमानंदनिष्पंदा ॥ प्रायश्चित्तस्वरूपिणीसर्वपापैकप्रायश्चित्तरूपा ॥ प्रायश्चित्तंतुतत्रैवयत्र
गंगानवियतइतिस्मृतेः ॥ ८ ॥ पानीयरूपनिर्वाणाजलस्वरूपकैवल्यमेवजलस्वरूपेणतिष्ठतीत्यर्थः ॥ परित्राणपरायणाभक्तरक्षणेपराश्रयरूपा ॥ पापान्येवेंधनानितेषुदवज्वालावनाग्निशिखा ॥
पापारिःपापानांशत्रुः ॥ पापानिनाम्नानुदतीतिपापनामनुत् ॥ ९ ॥ परमैश्वर्यजननीअणिमाद्यैश्वर्यदात्री ॥ प्रकृष्टाज्ञाप्रज्ञास्वप्रकाशज्ञानैकस्वभावा ॥ प्राज्ञानविद्यतेज्ञोयस्याःसाऽज्ञाप्रकृष्टाऽ

पुराणपठिताप्रीताप्रणवाक्षररूपिणी ॥ पार्वतीप्रेमसंपन्नापशुपाश
परापरफलप्राप्तिःपावनीचपयस्विनी ॥ परानंदाप्रकृष्टार्थाप्रतिष्ठापालनीपरा ॥ ६ ॥ पुराणपठिताप्रीताप्रणवाक्षररूपिणी ॥ पार्वतीप्रेमसंपन्नापशुपाश
विमोचनी ॥ ७ ॥ परमात्मस्वरूपाचपरब्रह्मप्रकाशिनी ॥ परमानंदनिष्पंदाप्रायश्चित्तस्वरूपिणी ॥ ८ ॥ पानीयरूपनिर्वाणापरित्राणपरायणा ॥
पापेंधनदवज्वालापापारिःपापनामनुत् ॥ ९ ॥ परमैश्वर्यजननीप्रज्ञाप्राज्ञापरापरा ॥ प्रत्यक्षलक्ष्मीःपद्माक्षीपरव्योमामृतस्रवा ॥ ११० ॥ प्रसन्नरूपाप्र
णिधिःपूताप्रत्यक्षदेवता ॥ पिनाकिपरमप्रीतापरमेष्ठिकमंडलुः ॥ ११ ॥ पद्मनाभपदार्घ्येणप्रसूतापद्ममालिनी ॥ परर्द्धिदापुष्टिकरीपथ्यापूर्तिः
प्रभावती ॥ १२ ॥ पुनानापीतगर्भघ्नीपापपर्वतनाशिनी ॥ फलिनीफलहस्ताचफुल्लांबुजविलोचना ॥ १३ ॥

परावराइतिपाठेपरेहिरण्यगर्भादयःअवरानिकृष्टायस्याःसातथा ॥ प्रत्यक्षालक्ष्मीरपरोक्षानिर्वाणश्रीर्यस्याःसाप्रत्यक्षलक्ष्मीः साक्षाल्लक्ष्मीस्वरूपेतिवा॥
ज्ञाप्राज्ञा विदुषीतिवा ॥ परापराकार्यकारणरूपा ॥ परव्योमपरमाकाशरूपममृतंमरणरहितंस्वरूपंभक्तेभ्यःस्रवतिप्रयच्छतीतिपरव्योमामृतस्रवा ॥ आकाशस्तल्लिंगादितिन्यायात् ॥ ११० ॥ प्रसन्नमज्ञानं
पद्मेपद्मपत्रेइवाऽक्षिणीयस्याःसापद्माक्षी ॥ प्रकर्षेणनिधीयतेकार्यजातंप्रलयकालेऽस्यामितिप्रणिधिः ॥ पुनातीतिपूतापरमपवित्रस्वरूपा ॥ पवित्राणांपवित्रंयइतिस्मृतेः ॥ प्रत्यक्षदेवताऽ
तत्कार्यरूपमलेननसंस्पृष्टंरूपंस्वरूपंयस्याःसाप्रसन्नरूपा ॥ प्रकर्षेणनिधीयतेकार्यजातंप्रलयकालेऽस्यामितिप्रणिधिः ॥ पुनातीतिपूतापरमपवित्रस्वरूपा ॥ आदावादिपितामहस्यनियमव्यापा
परोक्षप्रत्यक्चैतन्यरूपा॥यत्साक्षादपरोक्षाद्ब्रह्मेतिश्रुतेः॥पिनाकिपरमप्रीताविश्वेश्वरस्यात्यंतवल्लभा॥परमेष्ठिनोब्रह्मणःकमंडलुराश्रयत्वेनयस्याःसापरमेष्ठिकमंडलुः ॥ आदावादिपितामहस्यनियमव्यापा
रपात्रेजलमित्युक्तेः ॥ ११ ॥ पद्मनाभपदार्घ्येणप्रसूताविष्णुपादार्घ्येणसंभूता ॥ पश्चात्पन्नगशायिनोभगवतःपादोदकंपावनम् ॥ विष्णुपादार्घ्यसंभूतेत्याद्युक्तेः ॥ पद्मनाभपदाघातप्रसूतेतिवापाठः ॥
पद्मानांमालावर्ततेयस्याःसापद्ममालिनी ॥ परामृद्धिंददातीतिपरर्द्धिदा ॥ पुष्टिंकरोतीतिपुष्टिकरी ॥ पथ्यासंसाररोगस्यपथ्यस्वरूपा ॥ पूर्तिःपरिपूर्णरूपाउदरादिभरणरूपावा॥प्रभावतीप्रकाशवती ॥
॥ १२ ॥ पुनातीतिपुनाना ॥ पीतानांपानकर्तॄणांपीतासतीतिवागर्भान्हंतीतिपीतगर्भघ्नी ॥ पापान्येवपर्वतास्तान्नाशितुंशीलंयस्याःसापापपर्वतनाशिनी॥फलंदेयत्वेनवर्ततेयस्याःसाफलिनी ॥ भक्तेभ्यो

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दातुंफलंहस्तेइवयस्याःसाफलहस्ता फलंमातुलिंगादिफलंहस्तेयस्याइतिवा ॥ च फुल्लांबुजानीवविकासितानिलोचनानियस्याःसाफुल्लांबुजविलोचना ॥ १३ ॥ फालितंखंडितमेनसांपापानांमहाक्षेत्रं ययासाफालितैनोमहाक्षेत्रा ॥ भोगवतीरूपेणसर्पलोकभूषणरूपाफणिलोकविभूषणम् ॥ फेनच्छलेनप्रणुन्नानिदूरीकृतानिएनांसिपापानिययासाफेनच्छलप्रणुन्नैनाः ॥ फुल्लंविकासितंयत्कैरवंकुमुदंतद्व धइवगंधस्तद्गंधोवावर्ततेयस्याःसाफुल्लकैरवगंधिनी ॥१४॥ फेनिलंफेनयुक्तंयदच्छमंबुतस्यययाधाराप्रवाहस्तेनाभादीप्तिर्यस्यास्तत्स्वरूपावा साफेनिलाच्छांबुधाराभा ॥ फुडितिशब्दानुकरणम् ॥ फुडि तिशब्देनोच्चाटितंपातकंययासाफुडुच्चाटितपातका ॥ फाणितंपक्वान्नविशेषमिवस्वादुसलिलंयस्याःसाफाणितस्वादुसलिला ॥ फांटंतक्रंतद्वत्पथ्यंयज्जलंतेनाविलासाफांण्टपथ्यजलाविला ॥ १५ ॥ विश्वेषांमाताविश्वमाताच ॥ विश्वेशीसर्वेश्वरीत्यर्थः ॥ विश्वासर्वस्वरूपा ॥ विश्वेश्वरस्यप्रियाविश्वेश्वरोवाप्रियोयस्याःसाविश्वेश्वरप्रिया ॥ ब्रह्मणेपरमात्मनेहिरण्यगर्भायवेदायब्राह्मणायवाहिता ब्रह्मण्या ॥ हिरण्यगर्भादीन्करोतीतिब्रह्मकृत् ॥ ब्रह्मणःशक्तिर्ब्राह्मी ब्रह्मणिभवानैष्कर्म्यलक्षणस्थितिरूपावा ॥ ब्रह्मिष्ठास्वमहिमस्थेत्यर्थः ॥ ब्राह्मणभक्तावा ॥ विगतंमलंपापंयस्मात्तथाभूत मुदकंयस्याःसाविमलोदका ॥ १६ ॥ विभावरीरात्रिरूपा भूरिद्युम्नभार्यारूपावा ॥ तथाचपाद्मे ॥ भूरिद्युम्नोमहाराजःक्षमामंडलपालकः॥ तस्यासन्छतसाहस्राःप्रमदाःकमलेक्षणाः ॥ तासांविभावरी श्रेष्ठावभूवतनुमध्यमेति ॥ च विरजाविगतंरजोयस्याःसाविरजाः ॥ शुद्धसत्वेत्यर्थः ॥ विक्रांतंव्याप्तमनेकंविष्टपंभुवनंययासाविक्रांतानेकविष्टपा ॥ विश्वमित्रंजगद्धितैषिणी ॥ विष्णुपदादुद्भूता

फालितैनोमहाक्षेत्राफणिलोकविभूषणम् ॥ फेनच्छलप्रणुन्नैनाःफुल्लकैरवगंधिनी ॥ १४ ॥ फेनिलाच्छांबुधाराभाफुडुच्चाटितपातका ॥ फाणितस्वादुस लिलाफांटपथ्यजलाविला ॥ १५ ॥ विश्वमाताचविश्वेशीविश्वाविश्वेश्वरप्रिया ॥ ब्रह्मण्याब्रह्मकृद्ब्राह्मीब्रह्मिष्ठाविमलोदका ॥ १६ ॥ विभावरीच विरजाविक्रांतानेकविष्टपा ॥ विश्वमित्रंविष्णुपदीवैष्णवीवैष्णवप्रिया ॥ १७ ॥ विरूपाक्षप्रियकरीविभूतिर्विश्वतोमुखी ॥ विपाशावैबुधीवेद्यावेदाक्षररस स्रवा ॥ १८ ॥ विद्यावेगवतीवंद्याबृंहणीब्रह्मवादिनी ॥ वरदाविप्रकृष्टाचवरिष्ठाचविशोधनी ॥ १९ ॥ विद्याधरीविशोकाचवयोवृंदनिषेविता ॥ बहूद काबलवतीव्योमस्थाविबुधप्रिया ॥ १२० ॥

विष्णुपदी ॥ विष्णोरियंवैष्णवी ॥ वैष्णवानांविष्णुभक्तानांप्रियावैष्णवप्रिया ॥ १७ ॥ विरूपाक्षेत्रिनेत्रेप्रियंकरोतीतिविरूपाक्षप्रियकरी ॥ विभूतिरणिमाद्यष्टैश्वर्यरूपा ॥ विश्वतःसर्वतोमुखानि यस्याःसाविश्वतोमुखी ॥ सर्वतःपाणिपादंतत्सर्वतोऽक्षिशिरोमुखमितिस्मृतेः ॥ विगतःपाशोबंधनंसंसाररूपंयस्याःसाविपाशानदीविशेषरूपावा ॥ तथाचभीष्मपर्वणि॥ दृषद्वतींविपाशांचविपापांस्थूल वालुकामिति ॥ विबुधस्यविष्णोरियंवैबुधीदेवलोकभवावा ॥ वेद्यावेत्तुंयोग्या ॥ वैद्येतिचान्यत्र ॥ वेदाक्षरेभ्योवेदांतेभ्योब्रह्मानंदरसंस्रवतिब्रह्मानंदरसस्यवास्रवोयस्याःसाब्रह्मानंदरसस्रवा ॥ १८ ॥ विद्याब्रह्मविद्यारूपा ॥ वेगवतीस्रोतोगामिनी ॥ वंद्याऽभिवंद्यास्तुत्यावा ॥ बृंहणीदेहेन्द्रियादीनांपरिणामयित्री ॥ ब्रह्मवदितुंशीलंयस्याःसाब्रह्मवादिनी ॥ वरंददातीतिवरदा ॥ विशेषेणप्रकृष्टाविप्र कृष्टासर्वोत्तमेत्यर्थः ॥ वरिष्ठाश्रेष्ठाच ॥ वीपक्षिणिहंसेशेतइतिविशोब्रह्माउःशंकरःदधातिधारयतिपोषयतीतिवाधोविष्णुस्तान्ब्रह्मरुद्रविष्णून्नयतिप्रापयतीतिविशोधनी विशेषेणशोधयतिपवित्रयतीतिवा ॥ १९ ॥ विद्यांधरतीतिविद्याधरी विद्याधरस्त्रीरूपिणीतिवा ॥ स्त्रीनाम्निकमलोद्भवेतिवैष्णवोक्तेः ॥ विगतःशोकोयस्याःसाविशोका ॥ वयोवृंदैःपक्षिसमूहैर्नितरांसेवितावयोवृंदनिषेविता ॥ बहून्युदकानियस्याःसाबहूदका ॥ बलंविद्यतेयस्याःसाबलवती ॥ व्योमस्थाभूताकाशस्था ॥ परमेव्योम्निप्रतिष्ठतीतिवाव्योमस्था ॥ परमेव्योमन्नित्यादिश्रुतेः ॥ विबुधानांदेवानांविश्वेश्वरस्य

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

…ध्वामियाविबुधप्रिया ॥ १२० ॥ वाणीवचनरूपासरस्वतीस्वरूपावा ॥ वेदःप्रतिपादकत्वेनवर्ततेयस्याःसावेदवती कुशध्वजदुहितृरूपावा वेदवतीहरणेउत्तरकांडेप्रसिद्धा रामायणे ॥ कृतेयुगेवेदवतीत्रेतायांजनकात्मजा ॥ द्वापरेद्रौपदीज्ञेयातेनकृष्णात्रिहायनीतिवचनाच्च॥ वित्ताज्ञानस्वरूपा ॥ ब्रह्मविद्यारूपस्तरंगोवर्ततेयस्याःसाब्रह्मविद्यातरंगिणी ब्रह्मविद्यानदीस्वरूपावा॥ ब्रह्मांडकोटिंकोटिपरिमितब्रह्मांडानिव्याप्तमंबुयस्याःसाब्रह्मांडकोटिव्याप्तांबुः ॥ ब्रह्महत्यापहारिणीब्राह्मणवधापहरणशीला ॥ २१ ॥ ब्रह्मेशविष्णुरूपाहिरण्यगर्भविश्वनाथनारायणरूपाच ॥ बुद्धिरंतःकरणभेदस्तद्रूपा ॥ बुद्धिर्बुद्धिमतामस्मीतिभगवद्वचनात् ज्ञानस्वरूपावा ॥ विभवमैश्वर्यं विगतोभवोयस्मिंस्तंमोक्षंवा वर्धयितुंशीलंयस्याःसाविभववर्धिनी ॥ विशेषेणलसितुंशीलंयस्यतादृशंसुखंविलासिनांवासुखंददातीतिविलासिसुखदा ॥ वैश्यावैश्यजातिरूपातत्स्त्रीरूपावा ॥ वश्याइतिपाठेईश्वराधीनेत्यर्थः ॥ तथाचभागवते ॥ स्रवंतिसरितोभीताइति ॥ विश्वाइतिपाठेविश्वबाहुकाकाशीस्थादेवताविशेषरूपेत्यर्थः ॥ व्यापिनीव्यापनशीलाच ॥ वृषारणिर्धर्मोत्पत्तेःकारणम् ॥ २२ ॥ वृषांकस्यवृषभध्वजस्यमौलिर्मस्तकंनिलयआश्रयोयस्याःसावृषांकमौलिनिलया ॥ विपन्नानांविपद्ग्रस्तानांस्वजलेमृतानांवाआर्तिपीडांप्रभंजितुंशीलंयस्याःसाविपन्नार्तिप्रभंजिनी ॥ विभिःपक्षिभिर्नीताप्राप्ताव्याप्तेतियावत् विनययुक्ताइतिवा ॥ विनताविशेषेणनतानम्रेत्यर्थः ॥ गरुडमातृरूपावा ॥ब्रध्नतनयागोरूपा ॥ सूर्यसुताहिगावइतिश्रुतेः ॥ यमुनारूपावा ॥ गंगानामसहस्रेऽस्मिन्विवृतेसप्तमेशते ॥ यदृष्टमभूदत्रतद्विश्वेशेसमर्पितम् ॥ ७ ॥ विनयेनयुक्ताविनयान्विता वीनांपक्षिणांनयेनसमुदायेनवाऽन्विता ॥ २३ ॥

**वाणीवेदवतीवित्ताब्रह्मविद्यातरंगिणी ॥ ब्रह्मांडकोटिव्याप्तांबुर्ब्रह्महत्यापहारिणी ॥ २१ ॥ ब्रह्मेशविष्णुरूपाचबुद्धिर्विभववर्धिनी ॥ विलासिसुखदावैश्याव्यापिनीचवृषारणिः ॥ २२ ॥ वृषांकमौलिनिलयाविपन्नार्तिप्रभंजिनी ॥ विनीताविनताब्रध्नतनयाविनयान्विता ॥ २३ ॥ विपंचीवाद्यकुशला वेणुश्रुतिविचक्षणा ॥ वर्चस्करीबलकरीबलोन्मूलितकल्मषा ॥ २४ ॥ विपाप्माविगतातंकाविकल्पपरिवर्जिता ॥ वृष्टिकर्त्रीवृष्टिजलाविधिर्विच्छिन्नबंधना ॥ २५ ॥ व्रतरूपावित्तरूपाबहुविघ्नविनाशकृत् ॥ वसुधारावसुमतीविचित्रांगीविभावसुः ॥ २६ ॥ विजयाविश्वबीजंचवामदेवीवरप्रदा ॥ वृषाश्रिताविषघ्नीचविज्ञानोर्म्यंशुमालिनी ॥ २७ ॥**

विपंचीवीणातद्रूपा ॥ वीणावेणुमृदंगादिवाद्यरूपायतेनमइत्यत्रैवोक्तेः ॥ वाद्यकुशलावादनमात्रेदक्षा ॥ वेणोःश्रुतौश्रवणेरागविशेषविज्ञानेविचक्षणानिपुणा ॥ वर्चस्करीतेजस्करी ॥ बलकरीसामर्थ्यकरी ॥ बलेनज्ञानेनसामर्थ्येनवाउन्मूलितानिकल्मषाणिययासाबलोन्मूलितकल्मषा ॥ २४ ॥ विगतःपाप्मायस्याःसाविपाप्मा ॥ विशेषेणगतआतंकोभयंयस्याःसाविगतातंका ॥ विकल्पपरिवर्जिताअशेषभेदरहिता ॥ वृष्टिकर्त्रीसवितृस्वरूपा ॥ आदित्याज्जायतेवृष्टिरितिस्मृतेः ॥ वृष्टिजला वृष्टेःकारणभूतंजलंयस्याःसा ॥ इंद्रकरिणीहिशुंडाभिर्गंगाजलमुद्धृत्यमेघेसंचारयतितदेववृष्टिरूपंजायतइतिलोकप्रसिद्धिः ॥ विदधातीतिविधिर्हिरण्यगर्भरूपेत्यर्थः ॥ विशेषेणाच्छिन्नंभक्तानांबंधनंययासाविच्छिन्नबंधना ॥ २५ ॥ भक्तानांव्रतस्यसंकल्पस्यानुसारेणरूपंयस्याःसाव्रतरूपा एकादश्यादिव्रतस्वरूपावा ॥ वित्तरूपाधनस्वरूपा ॥ बहूनांविघ्नानांविनाशंकरोतीतिबहुविघ्नविनाशकृत् ॥ बहुविघ्नविनाशहृदितिक्वचित् ॥ वसुधारावसोर्धारारूपा वसून्भीष्मादीन्मातृरूपेणधरतीतिवा ॥ वसुमतीस्वर्णादिमती पृथ्वीरूपावा ॥ विचित्राण्यंगानियस्याःसाविचित्रांगी ॥ विभावसुःसूर्यरूपावह्निरूपावा ॥ २६ ॥ विशेषेणजयतीतिविजया भवान्याःसखिरूपावा ॥ विश्वबीजंजगदुपादाननिमित्तभू [illegible] वामदेवी [illegible] पत्नीतिवा ॥ वरान्प्रददातीतिवरप्रदा ॥ वृषोधर्मआश्रितोयया

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

धर्मेणाश्रितेतिवावृषाश्रिता ॥ विषंसंसारदुःखंहंतीतिविषघ्नी ॥ तथाचोक्तम् ॥ संसारविषनाशिन्याइति ॥ च विज्ञानान्येवोर्मयोऽशवश्चतेषांमालावर्ततेयस्याःसाविज्ञानोर्म्यंशुमालिनी विज्ञानोर्मिश्चासावंशुमालिनीचेतिवा ॥ २७ ॥ भवायोद्भवायहिताभव्यासमीचीनेतिवा ॥ भोगोवर्ततेयस्याःसाभोगवती ॥ भागवतीतिपाठेभगवत्संबंधिनीविष्णुपदीत्यर्थः ॥ भद्रामंगलरूपा ॥ भवानीभवपत्नी ॥ भूतानिभावयत्युत्पादयतिपालयतीतिवाभूतभाविनी ॥ भूतानांचतुर्विधानांपोष्ट्रीपालयित्रीतिवा भूतधात्री ॥ भयंसंसारभयंहरतीतिभयहरा ॥ भक्तानांदारिद्र्यंहंतुंशीलंयस्याः साभक्तदारिद्र्यघातिनी ॥ २८ ॥ भुक्तिमुक्तिप्रदाभोगमोक्षप्रदा ॥ सुखदामोक्षदागंगागंगैवपरमागतिरितिस्मृतेः ॥ भेशीनक्षत्राणांनियंत्री ॥ चांद्रमसीशक्तिरित्यर्थः ॥ भाचासौईशीचेतिवा ॥ भक्तानांस्वर्गापवर्गौददातीतिभक्तस्वर्गापवर्गदा ॥ भगीरथेनानीतेतिभागीरथी ॥ भातीतिभानुःश्रीकृष्णउत्पादकतयावर्ततेयस्याःसाभानुमती तेजस्विनीतिवा ॥ भानुमतीहरणेहरिवंशेप्रसिद्धासहदेवपत्नीयादवस्यभानोःकन्यारूपावा ॥ तथाचहरिवंशे ॥ कन्यांभानुमतींनामभानोर्दुहितरंनृप ॥ एवंभानुमतीवीरसहदेवायदीयतामिति ॥ भाग्यंनियतिरूपम् ॥ भोगवतीपातालगासरित् ॥ भोगवतीतिचाधइतिस्मृतेः ॥ बिभर्तीतिभृतिर्भरणस्वरूपावा ॥ २९ ॥ भवप्रियारुद्रकांताभवएवप्रियोयस्याभवस्याभीष्टेतिवासातथा ॥ भवद्वेष्ट्रीसंसारनाशिनी ॥ तथाचश्रूयते ॥ त्वांभवःशिरसिसादरंदधेत्वंपुनर्भवकथांविलुंपसि ॥ वैपरीत्यमिहतेसुरापगेयेमृतास्तदमरत्वमीहसइति ॥ भूतिदाऐश्वर्यदा ॥ भूतिर्भूषणंयस्याःसाभूतिमैश्वर्यंवाभूषयतीतिभूतिभूषणा ॥ भूति

भव्याभोगवतीभद्राभवानीभूतभाविनी ॥ भूतधात्रीभयहराभक्तदारिद्र्यघातिनी ॥ २८ ॥ भुक्तिमुक्तिप्रदाभेशीभक्तस्वर्गापवर्गदा ॥ भागीरथीभानुमती भाग्यंभोगवतीभृतिः ॥ २९ ॥ भवप्रियाभवद्वेष्ट्रीभूतिदाभूतिभूषणा ॥ भाललोचनभावज्ञाभूतभव्यभवत्प्रभुः ॥ १३० ॥ भ्रांतिज्ञानप्रशमनीभिन्नब्रह्मांडमंडपा ॥ भूरिदाभक्तिसुलभाभाग्यवद्दृष्टिगोचरी ॥ ३१ ॥ भंजितोपप्लवकुलाभक्ष्यभोज्यसुखप्रदा ॥ भिक्षणीयाभिक्षुमाताभावाभावस्वरूपिणी ॥ ॥ ३२ ॥ मंदाकिनीमहानंदामातामुक्तितरंगिणी ॥ महोदयामधुमतीमहापुण्यामुदाकरी ॥ ३३ ॥

दक्षिणेतिपाठेभक्तेभ्यऐश्वर्यदानेसमर्थेत्यर्थः ॥ भवभूषणेतिक्वचित् ॥ त्रिलोचनस्याभिप्रायंजानातीतिभाललोचनभावज्ञा ॥ भूतंचभव्यंचभवच्चभूतभव्यभवंतितेषांप्रभुः ॥ १३० ॥ भ्रांतिज्ञानप्रशमनीमूलाज्ञाननाशनेनभ्रांतिज्ञानच्छेत्री ॥ भिन्नोविदारितोब्रह्मांडमंडपोययासाभिन्नब्रह्मांडमंडपा ॥ भूरिददातीतिभूरिदा ॥ भक्त्यासुखेनलभ्यतइतिभक्तिसुलभा ॥ भाग्यवद्दृष्टिगोचरीशुभादृष्टवतांनेत्रविषयः ॥ टावंतत्वंक्वचित् ॥ ३१ ॥ भंजितंनाशितंभक्तोपप्लवानामुपद्रवाणांकुलंसमूहोययासाभंजितोपप्लवकुला ॥ भक्ष्यंपक्वान्नंभोज्यंसिद्धान्नंताभ्यांसुखंप्रददातीतिभक्ष्यभोज्यसुखप्रदा ॥ भिक्षणीयावुभुक्षुभिर्मुमुक्षुभिश्चयाचनीया ॥ भिक्षूणांपरमहंसानांमातामोक्षस्तनदात्री ॥ भावयत्युत्पादयतीतिभावा ॥ भावस्वरूपिणीपदार्थस्वरूपिणी ॥ सर्वंखल्विदंब्रह्मइदंसर्वंयदयमात्मेतिश्रुतेः ॥ ३२ ॥ मन्दाकिनीस्वर्गंगा ॥ महानानंदोयस्याःसामहानंदा महांश्चासावानंदश्चेतिवा ॥ अस्मिन्पक्षेस्त्रीत्वमार्षम् ॥ मातापमातासर्वहितैषिणीतिवा ॥ पापानांमुक्त्यैतरंगोयस्याअस्तिसामुक्तितरंगिणी ॥ कुतोवीचिर्वीचिस्तवयदिगतालोचनपथमित्युक्तेः ॥ मुक्तिरूपास्तरंगावायस्याःसातथा ॥ महानुदयोयस्याःसामहोदया महोदयस्वरूपावा ॥ मधुमधुरंजलंयस्याअस्तिसामधुमती नदीविशेषरूपावा ॥ इरावतीमधुमतीत्यत्रैवोक्तेः ॥ महत्पुण्यंययासामहापुण्यामहापुण्यस्वरूपावा ॥ मुदाकरी मुदोहर्षस्याकरीआश्रयभूता ॥ टावंतत्वं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कचित् ॥३३॥ मुनिभिःस्तुतामुनिस्तुता ॥ मुनिभिःपूजितासैर्वैरितिस्मृतेः ॥ मोहहंत्रीअनाद्यज्ञानच्छेत्री ॥ महांतितीर्थानियस्यांसामहातीर्था ॥ सर्वतीर्थमयीगंगेत्युक्तेः ॥ महातीर्थरूपावा ॥ मधुम धुरसुदकंस्रवतीतिमधुस्रवा ॥ मामायालक्ष्मीर्वातयोर्नियंत्रीधवरूपावामाधवी ॥ तथाचहरिवंशे ॥ मायाऽविद्याहरेप्रोक्तातस्याईशोयतोभवान् ॥ तस्मान्माधवनामासिधवःस्वामीतिशब्दितइति ॥ माधवस्येयंमाधवीमधुवंशोद्भवासुभद्रारूपामधुविद्यावबोध्यत्वाद्वा ॥ मननाद्ध्यानयोगाच्चविद्धिभारतमाधवमितिव्यासवचनात् ॥ मानःपूजावर्ततेयस्याःसामानिनी ॥ प्रेमसंरंभोवामानः शांतनु भार्यावस्यायांसवर्ततेयस्याइतिवा ॥ मान्यापूज्या ॥ मनोरथपथमतिक्रम्यगच्छतीतिमनोरथपथातिगा सर्वव्यापिकेत्यर्थः ॥ ३४ ॥ मोक्षंददातिभक्तेभ्योऽभक्तेभ्यःखंडयतीतिवामोक्षदा ॥ मातिदाज्ञानदा ॥ मुख्याश्रेष्ठा ॥ महद्भाग्यंयेषांतैर्जनैःसेवितामहाभाग्यजनाश्रिता ॥ महान्वेगोवर्ततेयस्याःसामहावेगवती ॥ मेध्यापवित्रा ॥ पवित्राणांपवि त्रंयइतिस्मृतेः ॥ महाउत्सवरूपा ॥ महउद्भवउत्सवइतिवचनात् ॥ महिमानोभूषणानियस्याःसामहिम्नोवाभूषयतीतिमहिमभूषणा ॥ महिमभिर्वाभूष्यतइतितथा ॥ ३५ ॥ महान्प्रभावोयस्याःसामहाप्रभावा ॥ महती अपरिच्छिन्ना ॥ मीनाइवमीनाएववाचंचलानिलोचनानियस्याःसामीनचंचललोचना ॥ महताकारुण्येनकरुणयासंपूर्णाव्याप्तामहाकारुण्यसंपूर्णा ॥ महतीऋद्धिर्यस्याःसामहर्द्धिः ॥ च महांत्युत्पलानियस्यांसामहोत्पला ॥ ३६ ॥ मूर्तिमत्प्रत्यक्षशरीरवत् ॥ पश्यध्वंतदिमांगंगांप्रत्यक्षांपुरतःस्थितामित्युक्तेः ॥ मुंक्तिरमणीमुक्तिरूपारमणीसुंदरीस्त्री ॥ मणयोमाणिक्या

मुनिस्तुतामोहहंत्रीमहातीर्थामधुस्रवा ॥ माधवीमानिनीमान्यामनोरथपथातिगा ॥ ३४ ॥ मोक्षदामतिदामुख्यामहाभाग्यजनाश्रिता ॥ महावेगवतीमे ध्यामहामहिमभूषणा ॥ ३५ ॥ महाप्रभावामहतीमीनचंचललोचना ॥ महाकारुण्यसंपूर्णामहर्द्धिश्चमहोत्पला ॥ ३६ ॥ मूर्तिमन्मुक्तिरमणीमणिमा णिक्यभूषणा ॥ मुक्ताकलापनेपथ्यामनोनयननंदिनी ॥ ३७ ॥ महापातकराशिघ्नीमहादेवार्धहारिणी ॥ महोर्मिमालिनीमुक्तामहादेवीमनोन्मनी ॥ ॥ ३८ ॥ महापुण्योदयप्राप्यामायातिमिरचंद्रिका ॥ महाविद्यामहामायामहामेधामहौषधम् ॥ ३९ ॥ मालाधरीमहोपायामहोरगविभूषणा ॥ महामो हप्रशमनीमहामंगलमंगलम् ॥ १४० ॥

निचभूषणानियस्यास्तेषांवाभूषणरूपासामाणिमाणिक्यभूषणा ॥ मुक्तासमूहैर्मुक्तासमूहावानेपथ्यमलंकरणंयस्याःसामुक्ताकलापनेपथ्या ॥ मनांसिनयनानिचनंदयितुशीलयस्याःसामनोनयननं दिनी ॥ ३७ ॥ महापातकराशिघ्नीमहापातकसमूहानांछेत्री ॥ महादेवस्यार्धशरीरंहर्तुंशीलंयस्याःसामहादेवार्धहारिणी गौरीरूपेत्यर्थः ॥ महतीऊर्मिमालावर्ततेयस्याःसामहोर्मिमालिनी ॥ मुक्ता मुक्तस्वरूपा ॥ गंगानामसहस्रेऽस्मिन्नष्टमोविवृतेशते ॥ यदद्दष्टमभूदत्रताद्भिश्वेशेसमर्पितम् ॥ ८ ॥ महतीचासौदेवीचेतिमहादेवी ॥ मनांसिउन्मन्यतेउत्कृष्टज्ञानयुक्तानिकरोतीतिमनोन्मनी ॥ सत्त्वशु द्धिकारिणीत्यर्थः ॥ संधिरार्षः ॥३८॥ महतांपुण्यानामुदयेनफलेनप्राप्यागम्यामहापुण्योदयप्राप्या ॥ मायैवतिमिरमंधकारस्तस्यचंद्रिका नाशिकामायातिमिरचंद्रिका ॥ महतीचासौविद्याचेतिमहा विद्याब्रह्मविद्यास्वरूपेत्यर्थः ॥ महतीचासौमायाचेतिमहामाया ॥ स्वकार्यव्यापकत्वंमहत्त्वम् ॥ महतीमेधायस्याःसामहामेधा ब्रह्माकारबुद्धिरूपावा ॥ महच्चतदौषधंचमहौषधम् ॥ महामोहमहौषधमि तिपाठेद्वंद्वः॥महान्मोहोयस्याःसामहामोहा ॥ अत्रापिमहत्त्वंस्वकार्यव्यापकत्वमेव ॥ साचमहौषधंचेतितथा ॥ अत्रमहत्त्वंसंसाररोगनिवर्तकत्वम् ॥ अस्मिन्पक्षेनामद्वयमिदम् ॥ ३९ ॥ मालांवैजयंती रूपांधरतीतिमालाधरी मालाकारपत्नीरूपावा ॥ महानुपायःप्राप्तिसाधनश्रवणादिलक्षणोयस्याःसामहोपाया पुरुषार्थचतुष्टयेमहोपायस्वरूपावा ॥ महांतउरगावासुकिप्रभृतयोविभूषणानियस्याः



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सामहोरगविभूषणा ॥ महामोहप्रशमयतीतिमहामोहप्रशमनी ॥ महामंगलानामपिमंगलंमहामंगलमंगलम् ॥ मंगलानांचमंगलमितिस्मृतेः ॥ १४० ॥ सूर्यमंडलेचरतीतिमार्तंडमंडलचरी आकाशगंगारूपेणसूर्यमण्डलेचरतीतिवा ॥ महतीचासौलक्ष्मीश्चेतिमहालक्ष्मीः ॥ महत्त्वंनिरतिशयसाम्यत्वम् ॥ मदउज्झितोययामदेनवाउज्झितामदोज्झिता ॥ यशोब्रह्महत्याविदारिणी तिवर्ततेयस्याःसायशस्विनी ॥ यशोददातीतियशोदा नंदपत्नीरूपावा ॥ च योग्या योगायहितायोगगम्येतिवा ॥ युक्तआत्मायेषांतैःसेवितायुक्तात्मसेविता ॥ ४१ ॥ योगानांषडंगादीनां सिद्धिप्रदायोगसिद्धिप्रदा ॥ याज्यापूज्यायजमानस्वरूपावा ॥ यज्ञेशेनपरिपूरिताव्याप्ताऽधिष्ठितेतियावत् ॥ यज्ञेशपरिपूजितेतिकचित्पाठः ॥ तत्रयज्ञेशःपरिपूजितोययासायज्ञेशपरिपूजिता ॥ यद्वा यज्ञेशःश्रीकृष्णस्तेनपरिपूजितेतिव्याख्येयम् ॥ तथाचहरिवंशेपारिजातहरणे ॥ अथाययौविष्णुपदीस्मृताकृष्णेनभारत ॥ संपूज्यतांततःकृष्णःकृत्वास्नानमधोक्षजइति ॥ यज्ञेशीयज्ञाधि ष्ठात्रीदेवता ॥ स्मृतायज्ञफलंददातीतियज्ञफलदा ॥ अभक्तानांखंडयतीतिवा ॥ यजनीयापूजनीया ॥ यशस्करीभक्तानांकीर्तिकरी ॥ ४२ ॥ यमिसेव्याजितेन्द्रियैःसेवनीया ॥ योगेनमा यासंबंधेनयोनिःकारणंयोगयोनिः ॥ योगस्यषडंगादेर्हेतुरितिवा ॥ योगोजीवात्मनोरैक्यचिंतनंवर्ततेयस्याःसायोगिनी योगिनीगणरूपावा ॥ युक्ताबुद्धिर्ब्रह्मात्मैकत्वज्ञानंतद्ददातीतियुक्तबुद्धिदा ॥ युक्तेभ्योजितेन्द्रियेभ्योवाबुद्धिदा ॥ युक्तसिद्धिदेतिपाठेजीवन्मुक्तिरूपसिद्धिदेत्यर्थः ॥ योगश्चज्ञानंचयोगेनवाज्ञानंतत्प्रददातीतियोगज्ञानप्रदा ॥ युक्तासंयताजितेन्द्रियेतियावत् ॥ पुंश्चल्यापहृतंचेतः

मार्तंडमंडलचरीमहालक्ष्मीर्मदोज्झिता ॥ यशस्विनीयशोदाचयोग्यायुक्तात्मसेविता ॥ ४१ ॥ योगसिद्धिप्रदायाज्यायज्ञेशपरिपूरिता ॥ यज्ञेशीयज्ञफ लदायजनीयायशस्करी ॥४२॥ यमिसेव्यायोगयोनिर्योगिनीयुक्तबुद्धिदा ॥ योगज्ञानप्रदायुक्तायमाद्यष्टांगयोगयुक् ॥४३॥ यंत्रिताघौघसंचारायमलो कनिवारिणी॥ यातायातप्रशमनीयातनानामकृंतनी ॥४४॥ यामिनीशहिमाच्छोदायुगधर्मविवर्जिता ॥ रेवतीरतिकृद्रम्यारत्नगर्भारमारतिः ॥४५॥ रत्नाक रप्रेमपात्रंरसज्ञारसरूपिणी॥रत्नप्रासादगर्भाचरमणीयतरंगिणी॥४६॥रत्नार्चीरुद्ररमणीरागद्वेषविनाशिनी॥रमारामारम्यरूपारोगिजीवातुरूपिणी ॥४७॥

कोनिवारयितुंक्षमः ॥ आत्मारामेश्वरमृतेभगवंतमधोक्षजमितिवचनात् ॥ यमाद्यष्टांगयोगंयुनक्तीतियमाद्यष्टांगयोगयुक् ॥ ४३ ॥ यंत्रितोनिराकृतोऽघौघानांपापसमूहानांसंचारोययासायंत्रिताघौ घसंचारा ॥ यमलोकंनिवारयितुंशीलंयस्याःसायमलोकनिवारिणी ॥ यातायातेमरणजन्मनीप्रशमयतीतियातायातप्रशमनी ॥ यातनानांनाममात्रंकृंततीतियातनानामकृंतनी ॥ यातनामूल कृंतनीतिपाठेयातना नांमूलंपापम् ॥ यातनानांनिकृंतनीतिचक्वचित् ॥ ४४ ॥ यामिनीशहिमाच्छोदाचंद्ररश्मिवन्निर्मलोदका ॥ युगधर्मैर्हिंसानृतादिभिर्विवर्जितायुगधर्मविवर्जिता ॥ रेवतीग्रह विशेषोबलदेवकांतावा ।नक्षत्रीविशेषोवातद्रूपारेवती ॥ रतिंरमणंतत्कर्त्रीरतिकृत् ॥ रम्यारमणीया ॥ रत्नानिगर्भेयस्याःसारत्नगर्भासमुद्ररूपावा ॥ रमालक्ष्मीरूपा ॥ रतिःरमणंकामांगनावा ॥ ४५ ॥ रत्नाकरप्रेमपा त्रंसमुद्रस्यस्नेहाश्रयःकांतेत्यर्थः ॥ रसंब्रह्मरसंजानातीतिरसज्ञा ॥ रसोवैसइतिश्रुतेः ॥ षड्रसज्ञावा ॥ रसरूपिणीब्रह्मरूपिणी षड्रसस्वरूपावा ॥ रत्ननिर्मितादेवालयागर्भेयस्याः सारत्नप्रासादगर्भा ॥ प्रासादरत्नखचिताश्रिताममणिगणाअपि ॥ गंगाजलांतस्तिष्ठंतिकलिकल्मषभीतितइत्यत्रैवोक्तेः ॥ रत्नप्रसादगर्भेतिपाठेउत्कृष्टप्रसादगर्भेत्यर्थः ॥ च रमणीयास्तरंगावर्तंते यस्याःसारमणीयतरंगिणी ॥ ४६ ॥ रत्नानामिवार्चिर्दीप्तिर्यस्याःसारत्नार्चिः ॥ रुद्रंरमयतीतिरुद्ररमणी ॥ रागद्वेषविनाशिनीरागद्वेषयोर्हंत्री ॥ रमयतिनयनमनांसीतिरमा ॥ रामाउत्तमास्त्रीस्वरूपा



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सांवपत्नीकुंभांडदुहितावा॥तथा चवाणासुरयुद्धेहरिवंशे ॥ सांवायदीयतांरामाकुंभांडदुहिताशुभेति॥रमंतेऽस्यांयोगिनइतिवारामा ॥ तदुक्तम् ॥ रमंतेयोगिनोऽनंतेसत्यानंदेचिदात्मनि ॥ इतिरामपदे
नासौपरंब्रह्माभिधीयतइति ॥ रम्यंमनोहरंरूपंयस्याःसारम्यरूपा ॥ रोगिजीवातुरूपिणीसंसाररोगग्रस्तानांजीवनौषधिरूपिणी ॥ ४७ ॥ रुचिंकरोतीतिरुचिकृत् ॥ रोचयतीतिरोचनी ॥ रमालक्ष्मी
स्तस्यैहितारम्या ॥ रुचिंरातीतिरुचिरामनोहरावा ॥ रोगंसंसाररोगमात्रंवाहर्तुंशीलंयस्याःसारोगहारिणी ॥ राजंतेहंसायस्यांसाराजहंसा ॥ रत्नवतीअनेकरत्नसंयुक्ता ॥ रववतीतिपाठेसरय्वाः
संगमेनयोरवोध्वनिःसवर्ततेयस्याःसारववतीतिव्याख्येयम् ॥ तथाचवालकांडे ॥ ततारसरितंपुण्यांसरयूंसागरंगमाम् ॥ राघवस्तुसरिन्मध्येपप्रच्छमुनिपुंगवम् ॥ वारीणांभिद्यमानानांकिमेषवि
मलोध्वनिः ॥ राघवस्यतुतच्छ्रुत्वाजातकौतूहलःसच ॥ कथयामासधर्मात्मातस्यशब्दस्यनिश्चयम् ॥ कैलासेपर्वतेराममनसानिर्मितंसरः ॥ ब्रह्मणारघुशार्दूलमानसंनामतेनतत् ॥ तस्मात्प्रसू
तासरयूःसाऽयोध्यामभ्ययभावयत् ॥ सरःप्रसूतासरयूःपुण्याब्रह्मसरश्च्युता ॥ शब्दोऽयंविपुलस्तस्याजाह्नव्यामभिवर्तते ॥ वारिसंघर्षजोरामप्रणामंप्रयतःकुर्विति ॥ राजतांराजमानानांकल्लोलानां
राजिर्यस्याःसाराजत्कल्लोलराजिका ॥ राजकल्लोलेतिपाठेपिसएवार्थः ॥ ४८ ॥ रमणीयाएवरामणीयकारेखाजलधाराःसामुद्रोक्तावाकरचरणयोर्यस्याःसारामणीयकरेखा ॥ः रामणीयक
कवेशाचेतिक्वचित्पाठः ॥ तत्रवेशःशोभा ॥ च रुजांरोगाणामरीरुजारिः ॥ रोगेरोषोवर्ततेयस्याःसारोगरोषिणी ॥ रोषशोषिणीतिक्वचित्पाठः ॥ रोगशोषिणीतिचान्यत्र ॥ राकापूर्णचंद्रापौ

रुचिकृद्रोचनीरम्यारुचिरारोगहारिणी ॥ राजहंसारत्नवतीराजत्कल्लोलराजिका ॥ ४८ ॥ रामणीयकरेखाचरुजारीरोगरोषिणी ॥ राकारंकार्तिशमनी
रम्यारोलंबराविणी ॥ ४९ ॥ रागिणीरंजितशिवारूपलावण्यशेवधिः ॥ लोकप्रसूर्लोकवंद्यालोलत्कल्लोलमालिनी ॥ १५० ॥ लीलावतीलो
कभूमिर्लोकलोचनचंद्रिका ॥ लेखस्रवंतीलटभालघुवेगालघुत्वहृत् ॥ ५१ ॥ लास्यत्तरंगहस्ताचललितालयभंगिगा ॥ लोकबंधुर्लोकधात्रीलो
कोत्तरगुणोर्जिता ॥ ५२ ॥ लोकत्रयहितालोकालक्ष्मीर्लक्षणलक्षिता ॥ लीलालक्षितनिर्वाणालावण्यामृतवर्षिणी ॥ ५३ ॥

र्णमासीतत्स्वरूपा ॥ रंकानांदरिद्राणामार्तिंपीडांशमयतीतिरंकार्तिशमनी ॥ रम्यारमणीया ॥ रम्यःरमणीयःअःविष्णुराश्रयत्वेनवर्ततेयस्याःसेतिवा ॥ रोलंबानांभ्रमराणांरावोवर्ततेयस्याः
सारोलंबराविणी ॥ ४९ ॥ सृष्टिस्थितिसंहारेच्छारूपोरागोऽस्याअस्तीतिरागिणी रागमात्राश्रयावा ॥ रंजितमभिव्यक्तीकृतंशिवंकैवल्यं रंजितोऽनुरंजितःशिवईश्वरोवायथासारंजितशिवा ॥
रूपलावण्ययोःसौंदर्यांगसौष्ठवयोःशेवधिर्निधिराश्रयइत्यर्थः ॥ लोकप्रसूर्लोकानांजनयित्री ॥ लोकवंद्याजनैःस्तव्याऽभिवाद्यावा ॥ लोलतांलोलंतीवाकल्लोलानांमालावर्ततेयस्याःसालोलत्कल्लो
लमालिनी ॥ १५० ॥ लीलासृष्टिस्थितिसंहाररूपावर्ततेयस्याःसालीलावतीदिवोदासमहिषीवा॥एकदाऽऽवसरंप्राप्यदिवोदासस्यभूभुजः॥ राज्ञीलीलावतीनामराज्ञेतंविन्यवेदयादित्यत्रैवोक्तेः ॥ लोकभू
मिर्भुवनानामधिष्ठानम् ॥ लोकलोचनचंद्रिकाजनमात्रनेत्राणामाह्लादयित्री ॥ लेखंशास्त्रंस्रवंतीउत्पादयंतीलेखस्रवंती ॥ तथाचपारमार्षसूत्रम्॥शास्त्रयोनित्वादिति॥देवनदीतिवा॥लटस्यलंपटस्यजनस्ये
वभादीप्तिःप्रतीतिर्जह्वब्रह्मसभाप्रतीपस्थानादौयस्याःसालटभा ॥ लटभीरितिपाठेलंपटानांभीर्भयंयस्याइतिव्याख्येयम् ॥ सर्वनियंतृत्वात् ॥ लघुर्मंथरोवेगोयस्याःसालघुवेगा ॥ लघुत्वहृद्भक्तानां
लघुत्वहारिणी ॥ ५१ ॥ लास्यंतेनृत्यंतस्तरंगाएवहस्तायस्याःसालास्यत्तरंगहस्ता ॥ च ललितामनोहरालालिताख्याकाशीस्थादेवीवा ॥ लयभंग्यागमनपरिपाट्यागच्छतीतिलयभंगिगा ॥
लोकबंधुर्लोकमात्रहितैषिणी ॥ लोकधात्रीजनमात्रस्यपोष्ट्री ॥ लोकोत्तरगुणोर्जितालोकातिक्रांतगुणैरुद्रिक्ता ॥ ५२ ॥ लोकत्रयाणांहितंयथासालोकत्रयहिता ॥ लोक्यतेआलोच्यते





CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मुमुक्षुभिरितिलोकालोकस्वरूपावा ॥ लक्ष्मीर्लक्ष्मीस्वरूपा ॥ लक्षणैःसत्यज्ञानानंदादिस्वरूपलक्षणैर्जगजन्मादितटस्थलक्षणैःकरुणत्वादिगुणैःसमीचीनैःसामुद्रिकोक्तस्त्रीलक्षणैर्वालक्षिताऽन्विता
लक्षणलक्षिता ॥ लीलाभगवत्क्रीडास्वरूपा पद्मराजमहिषीरूपावा ॥ तथाचवासिष्ठे ॥ आसीदस्मिन्महापीठेकुलपद्मोविकासवान् ॥ पद्मोनामेत्युपक्रम्यतस्यासीत्सुभगा भार्यालीलानामविला
सिनीति ॥ लक्षितंदर्शितंनिर्वाणंययासालक्षितनिर्वाणा ॥ लावण्यमेवामृतंतद्वर्षिणी लावण्यामृतवर्षिणी ॥ यद्वा लवणार्णवस्यइदंलावण्यंरत्नादिसंपदमृतंकैवल्यंतेवर्षितुंशीलंयस्याःसातथा ॥
॥ ९३ ॥ वैश्वानरीआग्नेयीशक्तिःस्वाहादाहिकावातद्रूपा ॥ गंगानामसहस्रेऽस्मिन्विवृतेनवमेशते ॥ यदष्टमभूदत्रताद्विश्वेशेसमर्पितम् ॥ ९ ॥ वासवेंडचाइंद्रस्यस्तु त्या ॥ वंध्यत्वंपरिहर्तुं
शीलंयस्याःसावंध्यत्वपरिहारिणी ॥ वासुदेवस्यांघ्र्योःरेणून्हंतुंहर्तुंशीलंयस्याःसावासुदेवांघ्रिरेणुघ्नी ॥ इंद्रस्यकुलिशंनिवारयितुंशीलंयस्याःसावज्रिवज्रनिवारिणीच्यवना दिरूपेण ॥ ९४ ॥
शुभानिआसमंताद्वर्ततेयस्याःसाशुभावती ॥ शुभंफलंयस्याःशुभंवाफलतीतिशुभफला ॥ शांतिर्नैष्कर्म्यस्वरूपाशमरूपावाशांतिकर्मरूपावा ॥ शांतनोःसमुद्रांशस्यवल्लभाभार्याशांतनुवल्लभा ॥
शन्तनुरीरीतपाश्चास्त्यादीक्षणात्याश्चपठंति ॥ शूलमस्त्रमस्याअस्तीतिशूलिनी ॥ शैशवंशिशुसंबंधिवयोयस्याःसाशैशववयाः ॥ शीतलंयदमृतंजलंतद्वोढुंशीलंयस्याःसाशीतलामृतवाहिनी ॥ ९५ ॥

वैश्वानरीवासवेडचावंध्यत्वपरिहारिणी ॥ वासुदेवांघ्रिरेणुघ्नीवज्रिवज्रनिवारिणी ॥ ९४ ॥ शुभावतीशुभफलाशांतिःशांतनुवल्लभा ॥ शूलिनीशैशववयाः
शीतलाऽमृतवाहिनी ॥ ९५ ॥ शोभावतीशीलवतीशोषिताशेषकिल्बिषा ॥ शरण्याशिवदाशिष्टाशरजन्मप्रसूःशिवा ॥ ९६ ॥ शक्तिःशशांकविमलाश
मनस्वसृसंमता ॥ शमाशमनमार्गघ्नीशितिकंठमहाप्रिया ॥९७॥ शुचिःशुचिकरीशेषाशेषशायिपदोद्भवा ॥ श्रीनिवासश्रुतिःश्रद्धाश्रीमतीश्रीःशुभव्रता ॥
॥ ९८ ॥ शुद्धविद्याशुभावर्ताश्रुतानंदाश्रुतिस्तुतिः ॥ शिवेतरघ्नीशबरीशांबरीरूपधारिणी ॥ ९९ ॥

शोभावर्ततेयस्याःसाशोभावती ॥ शीलंवर्ततेयस्याःसाशीलवती ॥ शोषितमशेषंकिल्बिषंययासाशोषिताशेषकिल्बिषा ॥ शरण्याआश्रययोग्या ॥ शिवदाशिवंकल्याणंमोक्षंवाददातीतिशिवदा ॥
शिष्टासदाचारा शिष्टावशिष्टाऽवधिभूतावा ॥ शरजन्मप्रसूःकार्तिकेयजननी ॥ शिवाकल्याणरूपामोक्षरूपाईश्वरीरूपावा ॥ ९६ ॥ शक्तिर्मायाह्लादिनीवा ॥ शशांकविमलाचन्द्रवदाह्लाद
कारिणीचंद्रवन्निर्मलेतिवा ॥ शमनस्वसुर्यमुनायाःसंमताभिमताशमनस्वसृसंमता ॥ शमयतिनाशयत्यज्ञानंतत्कार्यंचेतिशमा ॥ शमनमार्गघ्नीयममार्गनिवारिणी ॥ शितिकंठमहाप्रियारुद्रस्यात्यंत
वल्लभा ॥ ९७ ॥ शुचिःपवित्रा ॥ शुचिकरीपवित्रकरी ॥ शेषा अवधिभूता अनंतशक्तिर्मंदिरारेवतीतिवा ॥ शुग्घ्नीतिपाठेशोकनाशिनीत्यर्थः ॥ शेषशायिपदोद्भवाअनंतशायिचरणोत्पन्ना ॥
श्रीनिवासोविष्णुस्तद्रूपेणश्रूयतइतिश्रीनिवासश्रुतिः ॥ श्रद्धाआस्तिक्यबुद्धिरूपा ॥ श्रीर्वर्ततेयस्याःसाश्रीमती ॥ श्रयंत्येतांयोगिनइतिश्रीर्ब्रह्मविद्यालक्ष्मीरूपावा॥ शुभानिव्रतानियस्याःसाशुभव्रता ॥
॥ ९८ ॥ शुद्धाचासौविद्याचेतिशुद्धविद्या ॥ शुभविद्येतिक्वचित् ॥ शुभआवर्तोऽम्भसांभ्रमोयस्याःसाशुभावर्ता ॥ श्रुतोज्ञातआनंदोययासाश्रुतानंदा ॥ श्रुतिभिर्वेदैःस्तुतिर्यस्याःसाश्रुतिस्तुतिः ॥
तथाचभागवते ॥ जयजयजह्यजामित्यादि ॥ शिवेतरंपापंतन्नाशिनीशिवेतरघ्नी ॥ शबरीशबरांगनाकिरातरूपधारिणीमहेश्वरस्यपत्नीत्वेन ॥ शंबरोमृगस्तत्पत्नीशांबरी ॥ ब्रह्मणाकामितायाःसर

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्वत्यामृगीरूपत्वेनतस्यारूपंधर्तुंशीलंयस्याःसाशांबरीरूपधारिणी ॥ ५९ ॥ श्मशानंशोधयतीतिश्मशानशोधनी ॥ यस्यांमृतानांपुनःश्मशानसंबंधोनभवतीत्यर्थः ॥ श्मशानंमहाश्मशानं काशीतच्छोधनीतिवा ॥ तथाचात्रैवोक्तम् ॥ गंगासंगात्ततोधिकेति ॥ शांताशांतस्वभावा दशरथात्मजायाऋष्यशृंगपत्नीतद्रूपावा ॥ तथाचहरिवंशे ॥ अथचित्ररथस्यापिपुत्रोदशरथोऽभवत् ॥ लोमपादइतिख्यातोयस्यशांतासुताऽभवदिति ॥ शश्वन्नित्या ॥ शतधृतिस्तुताब्रह्मणाभिवंदिता ॥ शालतेशोभतइतिशालिनी ॥ शालिर्धान्यावांतररूपंतेनयाशोभातयाढ्याव्याप्ताशालिशोभाढ्या ॥ शिखिवाहनःकार्तिकेयस्तद्रूपंगर्भंबिभर्तीतिशिखिवाहनगर्भभृत् ॥ १६० ॥ शंसनीयानिस्तुत्यर्हाणिचरित्राणियस्याःसाशंसनीयचरित्रा ॥ च शातितानिनाशितान्यशेषपातकानियया साशाति ताशेषपातका ॥ षड्गुणैश्वर्यसंपन्नाऐश्वर्यादिगुणषट्कान्विता ॥ षडंगानिशिक्षादीनिचश्रुतिश्चतदुभयरूपिणी ॥ ६१ ॥ षंढताऽवीर्यतातद्धारिसलिलंयस्याःसाषंढताहारिसलिला ॥ ष्टचायनदनदीशताष्टचायत्संघातंप्राप्नुवन्नदनदीनांशतंयस्यांसातथा ॥ ष्टचैस्त्यैशब्दसंघातयोरितिधातुः ॥ सरिद्वरानदीनांमध्येश्रेष्ठा ॥ सुरसानागमातृरूपा ॥ यद्वा शोभनोरसोयस्याः साशोभनब्रह्मरसरूपेत्यर्थः ॥ शोभनाप्रभायस्याःसासुप्रभा ॥ सुरदीर्घिकादेववापी ॥ ६२ ॥ स्वःसिंधुःस्वर्नदी ॥ सर्वदुःखघ्नीतापत्रयोन्मूलिनी ॥ सर्वव्याधिमहौषधंसर्वरो

श्मशानशोधनीशांताशश्वच्छतधृतिष्टुता ॥ शालिनीशालिशोभाढ्याशिखिवाहनगर्भभृत् ॥ १६० ॥ शंसनीयचरित्राचशातिताशेषपातका ॥ षड्गुणै श्वर्यसंपन्नाषडंगश्रुतिरूपिणी ॥ ६१ ॥ षंढताहारिसलिलाष्टचायन्नदनदीशता ॥ सरिद्वराचसुरसासुप्रभासुरदीर्घिका ॥ ६२ ॥ स्वःसिंधुःसर्वदुःखघ्नी सर्वव्याधिमहौषधम् ॥ सेव्यासिद्धिःसतीसूक्तिःस्कंदसूश्चसरस्वती ॥६३॥ संपत्तरंगिणीस्तुत्यास्थाणुमौलिकृतालया ॥ स्थैर्यदासुभगासौख्यास्त्रीषुसौ भाग्यदायिनी ॥ ६४ ॥ स्वर्गनिःश्रेणिकासूक्ष्मास्वधास्वाहासुधाजला ॥ समुद्ररूपिणीस्वर्ग्यासर्वपातकवैरिणी ॥ ६५ ॥ स्मृताघहारिणीसीतासंसारा ब्धितरंडिका ॥ सौभाग्यसुंदरीसंध्यासर्वसारसमन्विता ॥ ६६ ॥ हरप्रियाहृषीकेशीहंसरूपाहिरण्मयी ॥ हृताघसंघाहितकृद्धेलाहेलाघगर्वहृत् ॥६७॥

गाणांनिवर्तकम् ॥ सेव्यासेवनीया ॥ सिद्धिःकैवल्याऽणिमादिसिद्धिस्वरूपा ॥ सतीपतिव्रता भवपत्नीदाक्षायणीतिवा ॥ सूक्तिःशोभनोक्तिस्वरूपापुरुषसूक्तादिरूपावा ॥ स्कंदसूः कार्तिकेयजननी ॥ च सरस्वतीवाणीतदधिष्ठात्रीदेवतावा ॥ ६३ ॥ संपद्रूपास्तरंगायस्याःसासंपत्तरंगिणी ॥ स्तुत्यास्तुतेर्विषयः ॥ स्थाणुमौलिकृतालयारुद्रशिरःकृतावासा ॥ स्थैर्यदाभक्तेभ्यःस्वर्तीरैकस्थितिदा ॥ सुभगाशोभनकीर्तिमर्तप्रेयसीतिवा ॥ सौख्यासुखायहिता ॥ स्त्रीषुसौभाग्यंदातुंशीलंयस्याःसास्त्रीषुसौभाग्यदायिनी ॥ ६४ ॥ स्वर्गनिः श्रेणिकास्वर्गैकसोपाना ॥ तदुक्तंकाशीसारे ॥ याह्येषासर्वजंतूनांयास्वर्गसरणिर्नृणामिति ॥ सूक्ष्माइंद्रियाद्यगोचरा ॥ स्वधापितृपत्नीमंत्ररूपावा ॥ स्वाहाग्निभार्यामंत्ररूपावा ॥ सुधाऽमृतंतत्तुल्यंजलंयस्याःसासुधाजला ॥ समुद्ररूपिणीसमुद्रपत्नीतद्रूपावा ॥ समुद्रपूरणीतिक्वचित्पाठः ॥ स्वर्ग्यास्वर्गायहिता ॥ सर्वपातकवैरिणीब्रह्महत्यादिनाशिनी ॥ ६५ ॥ स्मृतासतीस्मृतानांवाऽघहारिणीस्मृताघहारिणी ॥ सीतालांगलपद्धतिः गंगाप्रभेदोविष्णोर्मायाजानकीतिवा ॥ संसाराऽब्धितरंडिकाभवसमुद्रेतरंडिका ॥ तरंडकमितिक्वचित् ॥ सौभाग्यरूपाचा सौसुंदरीचसौभाग्येनवासुंदरीसौभाग्यसुंदरी ॥ सम यगध्यासंध्याब्रह्मज्ञान[illegible]र्थः ॥ ६६ ॥ हरप्रियाशिवकांता ॥ हृषीकेशीइंद्रियाणांनियंत्री

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

हृषीकेशपत्नीतिवा ॥ हंसरूपाशुद्धस्वरूपाहंसरूपधारिणीतिवा ॥ तस्याहंहंसरूपेणसकाशमगमंतदेतिभागवतोक्तेः ॥ हिरण्मयीज्ञानस्वरूपास्वर्णमयीतिवा ॥ हृताघसंघाक्षपितपापसमूहा ॥ हितकृद्धितैषिणी ॥ हेलाश्रृंगारभावरूपा ॥ हईश्वरइलाभूमिराश्रयोयस्याःसेतिवा ॥ हेलाघगर्वहृत्लीलयापापमदनाशिनी ॥ अघंचगर्वश्चाघगर्वौहेलयातौहरतीतिवा ॥ ६७ ॥ क्षेमदाकल्याणदा ॥ क्षालिताघौघानाशितपापसंचया ॥ क्षुद्रविद्राविणीदुष्टानांविघातिनी ॥ क्षमापृथ्वीरूपासहनस्वभावावा १००० ॥ गंगानामसहस्रेऽस्मिन्विवृतेदशमेशते ॥ यद्दृष्टमभूदत्रतद्विश्वेशेसमर्पितम् ॥ ॥ १० ॥ ६८ ॥ ६९ ॥ श्रद्धयापठितंसदितिशेषः ॥ १७० ॥ ७१ ॥ वाडवब्राह्मण हेतत्त्वज्ञेत्यर्थः ॥ सब्राह्मणः केनस्यादितिश्रुतेः ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥

क्षेमदाक्षालिताघौघाक्षुद्रविद्राविणीक्षमा ॥ इतिनामसहस्रंहिगंगायाःकलशोद्भव ॥ कीर्तयित्वानरःसम्यग्गंगास्नानफलंलभेत् ॥६८॥ सर्वपापप्रशमनंसर्वविघ्नविनाशनम् ॥ सर्वस्तोत्रजपाच्छ्रेष्ठंसर्वपावनपावनम् ॥६९॥ श्रद्धयाभीष्टफलदंचतुर्वर्गसमृद्धिकृत् ॥ सकृज्जपादवाप्नोतिह्येकक्रतुफलंमुने ॥१७०॥ सर्वतीर्थेषुयःस्नातःसर्वयज्ञेषुदीक्षितः ॥ तस्ययत्फलमुद्दिष्टंत्रिकालपठनाच्चतत् ॥७१॥ सर्वव्रतेषुयत्पुण्यंसम्यक्चीर्णेषुवाडव ॥ तत्फलंसमवाप्नोतित्रिसंध्यंनियतःपठन् ॥ ७२ ॥ स्नानकालेपठेद्यस्तुयत्रकुत्रजलाशये ॥ तत्रसन्निहितानूनंगंगात्रिपथगामुने ॥ ७३ ॥ श्रेयोर्थीलभतेश्रेयोधनार्थीलभतेधनम् ॥ कामीकामानवाप्नोतिमोक्षार्थीमोक्षमाप्नुयात् ॥७४॥ वर्षंत्रिकालपठनाच्छ्रद्धयाशुचिमानसः ॥ ऋतुकालाभिगमनादपुत्रःपुत्रवान्भवेत् ॥ ७५ ॥ नाकालमरणंतस्यनाग्निचोराहिसाध्वसम् ॥ नाम्नांसहस्रंगंगायायोजपेच्छ्रद्धयामुने ॥ ७६ ॥ गंगानामसहस्रंतुजप्त्वाग्रामांतरंव्रजेत् ॥ कार्यसिद्धिमवाप्नोतिनिर्विघ्नोगेहमाविशेत् ॥७७॥ तिथिवारर्क्षयोगानांनदोषःप्रभवेत्तदा ॥ यदाजप्त्वाव्रजेदेतत्स्तोत्रंग्रामांतरंनरः ॥ ७८॥ आयुरारोग्यजननंसर्वोपद्रवनाशनम् ॥ सर्वसिद्धिकरंपुंसांगंगानामसहस्रकम् ॥ ७९ ॥ जन्मांतरसहस्रेषुयत्पापंसम्यगर्जितम् ॥ गंगानामसहस्रस्यजपनात्तत्क्षयंव्रजेत् ॥ १८० ॥ ब्रह्मघ्नोमद्यपःस्वर्णस्तेयीचगुरुतल्पगः ॥ तत्संयोगीभ्रूणहंतामातृहापितृहामुने ॥ ८१ ॥ विश्वासघातीगरदःकृतघ्नोमित्रघातकः ॥ अग्निदोगोवधकरोगुरुद्रव्यापहारकः ॥ ८२ ॥ महापातकयुक्तोपिसंयुक्तोप्युपपातकैः ॥ मुच्यतेश्रद्धयाजप्त्वागंगानामसहस्रकम् ॥ ८३ ॥

॥ ७८ ॥ ७९ ॥ १८० ॥ ८१ ॥ ८२॥ उपपातकैर्गोवधादिभिः ॥ इत्यादिबहुवचनांताःशब्दागणस्यसंसूचकाभवंतीतिन्यायाद्बहुवचनेनजातिभ्रंशकरणसंकलीकरणापात्रीकरणमलिनीकरणानिगृह्यंते ॥ तानिचमनुनोक्तानि ॥ ब्रह्महत्यासुरापानंस्तेयंगुर्वंगनागमः ॥ महांतिपातकान्याहुःसंसर्गश्चापितैःसह ॥ गोवधोऽयाज्यसंयाज्यंपारदार्यात्मविक्रयौ ॥ गुरुमातृपितृत्यागः स्वाध्यायाग्न्योःसुतस्यच॥परिवित्तिताऽनुजेनपरिवेदनमेवच॥तयोर्दानंचकन्यायास्तयोरेवचयाजनम्॥कन्यायादूषणंचैववार्धुषित्वंव्रताच्च्युतिः॥तडागारामदाराणामपत्यस्यचविक्रयः॥ व्रात्यताबांधवत्यागोभृतकाध्यापनंतया॥भृतादध्ययनंदानमपत्यानांचविक्रयः॥ सर्वाकरेष्वधीकारोमहायंत्रप्रवर्तनम् ॥ हिंसौषधीनांस्त्रीजीवोभिचारोमूलकर्मच ॥ इंधनार्थमशुष्काणांद्रुमाणामवपातनम् ॥ आत्मार्थंचाक्रियारंभोनिंदिता

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सादनंतथा॥अनाहिताग्नितास्तैन्यमृणानामनपक्रिया॥धान्यकुप्यपशुस्तेयमपत्यस्त्रीनिषेवणम्॥स्त्रीशूद्रविट्क्षत्रवधोनास्तिक्यंचोपपातकम्॥ ब्राह्मणस्यरुजः कृत्याघ्रातिरघ्रेयमद्ययोः॥ जैह्म्यंपुंसिचमैथुन्यंजातिभ्रंशकरंस्मृतम्॥खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा॥संकलीकरणंज्ञेयंमीनाहिमहिषस्यच॥ निंदितेभ्योधनादानंवाणिज्यंशूद्रसेवनम्॥ अपात्रीकरणंज्ञेयमसत्यस्यचभाषणम्॥ कृमिकीटवयोहत्यामद्यानुगतभोजनम् ॥ फलैधःकुसुमस्तेयमधैर्यंचमलावहमिति ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ १९० ॥ वेदपारायणात् उपवासपूर्वकंसमग्रायाःस्वशाखायाःपाठात् ॥

आधिव्याधिपरिक्षिप्तोघोरतापपरिप्लुतः ॥ मुच्यतेसर्वदुःखेभ्यःस्तवस्यास्यानुकीर्तनात् ॥ ८४ ॥ संवत्सरेणयुक्तात्मापठन्भक्तिपरायणः ॥ अभीप्सितांलभेत्सिद्धिंसर्वैःपापैःप्रमुच्यते ॥ ८५ ॥ संशयाविष्टचित्तस्यधर्मविद्वेषिणोऽपिच ॥ दांभिकस्यापिहिंस्रस्यचेतोधर्मपरंभवेत् ॥८६॥ वर्णाश्रमपथीनस्तुकामक्रोधविवर्जितः ॥ यत्फलंलभतेज्ञानीतदाप्नोत्यस्यकीर्तनात् ॥ ८७ ॥ गायत्र्ययुतजप्येनयत्फलंसमुपार्जितम् ॥ सकृत्पठनतःसम्यक्तदशेषमवाप्नुयात् ॥८८॥ गांदत्त्वावेदविदुषेयत्फलंलभतेकृती ॥ तत्पुण्यंसम्यगाख्यातंस्तवराजसकृज्जपात् ॥८९॥ गुरुशुश्रूषणंकुर्वन्यावज्जीवंनरोत्तमः॥ यत्पुण्यमर्जयेत्तद्भाग्वर्षंत्रिषवणंजपन् ॥१९०॥ वेदपारायणात्पुण्यंयदत्रपरिपठ्यते ॥ तत्षण्मासेनलभतेत्रिसंध्यंपरिकीर्तनात् ॥ ९१ ॥ गंगायाःस्तवराजस्यप्रत्यहंपरिशीलनात् ॥ शिवभक्तिमवाप्नोतिविष्णुभक्तोऽथवाभवेत् ॥ ९२ ॥ यःकीर्तयेदनुदिनंगंगानामसहस्रकम् ॥ तत्समीपेसहचरीगंगादेवीसदाभवेत् ॥ ९३ ॥ सर्वत्रपूज्योभवतिसर्वत्रविजयीभवेत् ॥ सर्वत्रसुखमाप्नोतिजाह्नवीस्तोत्रपाठतः ॥ ९४ ॥ सदाचारीसविज्ञेयःसशुचिस्तुसदैवहि ॥ कृतसर्वसुरार्चःसकीर्तयेद्यइमांस्तुतिम् ॥९५॥ तस्मिंस्तृप्तेभवेत्तृप्ताजाह्नवीनात्रसंशयः ॥ तस्मात्सर्वप्रयत्नेनगंगाभक्तंसमर्चयेत् ॥ ९६ ॥ स्तवराजमिमंगांगंशृणुयाद्यश्चवैपठेत् ॥ श्रावयेदथतद्भक्तान्दंभलोभविवर्जितः ॥९७॥ मुच्यतेत्रिविधैःपापैर्मनोवाक्कायसंभवैः ॥ क्षणान्निष्पापतामेतिपितॄणांचप्रियोभवेत् ॥९८॥ सर्वदेवप्रियश्चापिसर्वर्षिगणसंमतः ॥ अंतेविमानमारुह्यदिव्यस्त्रीशतसंवृतः ॥ ९९ ॥ दिव्याभरणसंपन्नोदिव्यभोगसमन्वितः ॥ नंदनादिवनेस्वैरंदेववत्सप्रमोदते ॥ २०० ॥ भुज्यमानेषुविप्रेषुश्राद्धकालेविशेषतः ॥ जपन्निदंमहास्तोत्रंपितॄणांतृप्तिकारकम् ॥ १ ॥ यावंतितत्रसिक्थानियावंतोऽम्बुकणाःस्थिताः ॥ तावंत्येवहिवर्षाणिमोदंतेस्वःपितामहाः ॥ २ ॥ यथाप्रीणंतिपितरोगंगायांपिंडदानतः ॥ तथैवतृप्नुयुःश्राद्धेस्तवस्यास्यानुसंश्रवात् ॥ ३ ॥ एतत्स्तोत्रंगृहेयस्यालिखितंपरिपूज्यते ॥ तत्रपापभयंनास्तिशुचितद्भवनंसदा ॥ ४ ॥ अगस्तेकिंबहूक्तेनशृणुमेनिश्चितंवचः ॥ संशयोनात्रकर्तव्यःसंदेग्धरिफलंनहि॥५॥ यावंतिमर्त्यैस्तोत्राणिमंत्रजालान्यनेकशः ॥ तावंतिस्तवराजस्यगांगेयस्यसमानिन॥६॥ यावज्जन्मजपेद्यस्तुनाम्नामेतत्सहस्रकम् ॥ सकीकटेष्वपिमृतोनपुनर्गर्भमाविशेत् ॥७॥ नित्यंनियमवानेतद्योजपेत्स्तोत्रमुत्तमम् ॥ अन्यत्रापिविपन्नःसगंगातीरेमृतोभवेत् ॥ ८ ॥

अत्रजगति ॥ ९१ ॥ ९२ ॥ सहचरीसखी ॥ तन्निकटेकृतवासेत्यर्थः ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ स्वैरंस्वेच्छया ॥ २०० ॥ भुज्यमानेष्विति ॥ इदंसहस्रनामयोजपन्भवतितस्यपितॄणामिदंस्तोत्रंतृप्तिकारकंभवतीत्यर्थः ॥ १ ॥ सिक्थानिअन्नलेशाःकणाइतियावत् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ कीकटेषुगयाप्रदेशेषु ॥ ७ ॥ ८ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मुक्तीति॥मुक्तेःकैवल्यस्यवीजभूतानियान्यक्षराणितेषामास्पदमाश्रयः मोक्षकारणभूतब्रह्मास्पदंवा मुक्तिबीजंचतदक्षरस्यब्रह्मणआस्पदंचेतिवा ॥९॥ प्रतिनिधिस्तुल्यम् ॥ सिस्नासुर्गंगायांमज्जनस्नान
मंतरेणापिगंगास्नानेच्छुः ॥ मातापिसंत्यजेत्पुत्रमितिशास्त्रप्रमाणतः ॥ त्राहिमांत्रिजगन्मातर्गंगेविष्णुपदोद्भवे ॥ २१० ॥ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायामेकोनत्रिंशत्तमोऽ
ध्यायः ॥ २९ ॥ ॥छ॥ अथत्रिंशत्तमेऽध्यायेरहस्यंश्रुतिसंमितम् ॥ धनंजयकथागर्भंवर्ण्यतेकाशिजंमहत् ॥ १ ॥ मणिकर्ण्यांगंगायाःसमागमात्क्षेत्रस्याधिक्यंवक्तुंगंगागमनप्रकारंश्रावयाति ॥
शृण्वाति ॥ सप्रसिद्धोभगीरथोगंगांभूमिमानिनायेतिद्वितीयेनान्वयः ॥ १ ॥ २ ॥ तर्हिऋजुमार्गेणपितामहायत्रमृतास्तत्रनेतव्याकिंवक्रगत्यामणिकर्ण्यामानयनेनतत्राह ॥ त्रयाणामिति ॥ ३ ॥
एतदेवस्पष्टयति ॥ आनंदकाननमिति ॥ आनंदकाननंप्रतिहरेःसंबंधिनीचक्रपुष्करिणी ॥ दैलीपिर्दिलीपस्यापत्यंभगीरथोगंगांसमानैषीत्प्रापयामासेत्यग्रिमेणान्वयः ॥ आनंदकाननंप्राप्ययाहरेश्चक्रपु

एतत्स्तोत्रवरंरम्यंपुराप्रोक्तंपिनाकिना ॥ विष्णवेनिजभक्तायमुक्तिबीजाक्षरास्पदम् ॥ ९ ॥ गंगास्नानप्रतिनिधिःस्तोत्रमेतन्मयेरितम् ॥ सिस्नासुर्जाह्नवीं तस्मादेतत्स्तोत्रंजपेत्सुधीः ॥ २१० ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेगंगासहस्रनामकथनंनामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ ॥ स्कंदउवाच ॥ ॥ शृण्वगस्त्यमहाभागसचराजाभगीरथः ॥ आराध्यश्रीमहादेवमुद्दिधीर्षुःपितामहान् ॥१॥ ब्रह्मशापविनिर्दग्धान्सर्वान्राजर्षिसत्तमः ॥ महतातपसाभूमिमानिनायत्रिवर्त्मगाम् ॥ २ ॥ त्रयाणामपिलोकानांहितायमहतेनृपः ॥ समानैषीत्ततोगंगांयत्रासीन्मणिकर्णिका ॥ ३ ॥ आनंदकाननंशंभोश्चक्रपुष्करिणीहरेः ॥ परब्रह्मैकसुक्षेत्रंलीलामोक्षसमर्पकम् ॥ ४ ॥ प्रापयामासतांगंगांदैलीपिःपुरतश्चरन् ॥ निर्वाणकाशनाद्यत्रकाशीतिप्रथितापुरी ॥ ५ ॥ अविमुक्तंमहाक्षेत्रंनमुक्तंशंभुनाक्वचित ॥ प्रागेवहिमुनेऽनर्घ्यंजात्यंजांबूनदंस्वयम् ॥ ६ ॥ पुनर्वारितरेणापिहीरेणयदिसंगतम् ॥ चक्रपुष्करिणीतीर्थंप्रागेवश्रेयसांपदम् ॥७॥ ततःश्रेष्ठतरंशंभोर्मणिश्रवणभूषणात् ॥ आनंदकाननेतस्मिन्नविमुक्तेशिवालये॥ ॥ ८ ॥ प्रागेवमुक्तिःसंसिद्धागंगासंगात्ततोधिका ॥ यदाप्रभृतिसागंगामणिकर्ण्यांसमागता ॥ ९ ॥ तदाप्रभृतितत्क्षेत्रंदुष्प्रापंत्रिदशैरपि ॥ कृत्वाकर्माण्यनेकानिकल्याणानीतराणिवा ॥ १० ॥ तानिक्षणात्समुत्क्षिप्यकाशीसंस्थोऽमृतोभवेत् ॥ तस्यांवेदांतवेद्यस्यनिदिध्यासनतोविना ॥ ११ ॥

ष्करिणीतामितिवा ॥ गांपयोदोग्धीतिवद्द्विकर्मकतावा ॥ आनंदकाननेगंगांप्रापयामासेत्यर्थः ॥ आनंदकाननंविशिनष्टि ॥ परब्रह्मैकसुक्षेत्रमित्यर्धेन ॥ परब्रह्मैवेतिकेचित् ॥४॥ पुनरपितदेवविशेषयन्पू
र्वोक्तनामद्वयनिर्वचनमनुवदतिनिर्वाणकाशनादित्येकेन॥यत्रानंदवने॥यद्वा गंगांविशिनष्टि ॥ निर्वाणेति ॥ यत्रयस्यांगंगायांकाश्यामुत्तरवाहिन्यांनिमित्तभूतायांनिर्वाणकाशनात्कैवल्यस्यप्रकाशनात्का
शीतिपुरीप्रथितातांगंगांसमानैषीदितिपूर्वेणैवान्वयः ॥५॥ अविमुक्तंचप्रथितमितिविपरिणम्यान्वयः ॥ तत्रहेतुर्नमुक्तमिति ॥ तदुक्तंमात्स्ये ॥ विमुक्तंनमयायस्मान्मोक्ष्यतेनकदाचन ॥ महत्क्षेत्रमिदं
तस्मादविमुक्तमितिस्मृतमिति ॥ यदर्थमनूदितंतद्दृष्टांतपुरःसरमाह प्रागेवेत्यारभ्यकृत्वाकर्माणीत्यतःप्राक्तनेन ॥ हेमुनेऽगस्त्यजांबूनदंसुवर्णंजात्यंसुजात्यंस्वयमनर्घ्यंपुनर्वारितरेणहीरकेणसंगतंसद्यथा
ऽनर्घ्यंभवतीत्यर्थः ॥ तथागंगासंगाच्चक्रपुष्करिणीतियोज्यम् ॥६॥७॥८॥९॥ इतराणिपापानि ॥ १० ॥ संस्थोमृतः ॥ तदुक्तंलैंगे ॥ नाविमुक्तेनरःकश्चिन्नरकंयातिकिल्बिषी ॥ ईश्वरानुग्रहादेवसर्वे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यांतिपरांगतिमिति ॥ काशीकृतानांपापानांपंचक्रोशयात्रादिनाक्षयादितिभावः ॥ निदिध्यासनतोनिदिध्यासनामित्यर्थः ॥ निदिध्यासनतामितिक्वचित् ॥ ११ ॥ सांख्येनात्मानात्मविवेकेन ॥ योगेनाष्टांगेन ॥ काश्यांसंस्थासंस्थितिर्मृतिःसम्यङ्मरणपर्यंतावस्थितिर्यस्यसतथा ॥ कंठेकालइत्यादिवदलुक्समासः ॥ विनाज्ञानेनदेहत्यागाव्यवहितसमयात्प्राक्साक्षात्कारंविनेत्यर्थः ॥ योगेनाष्टांगेन ॥ ज्ञानादेवतुकैवल्यमितिश्रुतेः ॥ १२ ॥ एतदेवस्फुटयाति ॥ यत्नतोऽयत्नतोवाशमादेरनुष्ठानादननुष्ठानाद्वेत्यर्थः ॥ १३ ॥ प्राकृतैर्गुणैःप्रकृतिगुणकार्यैःसंसारपाशैः ॥ १४ ॥ असिसंभेदयोगेनअस्याऽसिसंज्ञयानद्यासंभेदःसंभेदनंछेदनमितियावत् ॥ अर्थात्पाशानांसएवयोगउपायस्तेन ॥ असिधारयेत्युक्तेः ॥ यद्वा अस्यासहसंभेदोयस्यतदसिसंभेदंगंगांभस्तत्संबंधेनेत्यर्थः ॥ गंगासंगात्ततोऽधिकेत्युक्तेः ॥ प्राकृतंव्याख्यानमसिसंभेदस्यप्राशस्त्यमात्रविवक्षया ॥ असिसंभेदसंयोगेइतिक्वचित् ॥ १५ ॥ १६ ॥ स्वंदेहम् ॥ १७ ॥ पुरःकाश्याः ॥ रक्षामेवाह असिमितित्रयेण ॥ पापिना

विनासांख्येनयोगेनकाश्यांसंस्थोऽमृतोभवेत् ॥ कर्मनिर्मूलनवताविनाज्ञानेनकुंभज ॥ १२ ॥ शशिमौलिप्रसादेनकाशीसंस्थोऽमृतोभवेत् ॥ यत्नतोऽयत्नतोवापिकालात्त्यक्त्वाकलेवरम् ॥ १३ ॥ तारकस्योपदेशेनकाशीसंस्थोऽमृतोभवेत् ॥ अनेकजन्मसंसिद्धैर्बद्धोऽपिप्राकृतैर्गुणैः ॥ १४ ॥ असिसंभेदयोगेनकाशीसंस्थोऽमृतोभवेत् ॥ देहत्यागोऽत्रवैदानंदेहत्यागोत्रवैतपः ॥ १५ ॥ देहत्यागोऽत्रवैयोगःकाश्यांनिर्वाणसौख्यकृत् ॥ प्राप्योत्तरवहांकाश्यामतिदुष्कृतवानपि ॥ १६ ॥ यायात्स्वंहेलयात्यक्त्वातद्विष्णोःपरमंपदम् ॥ यमेंद्राग्निमुखादेवादृष्ट्वामुक्तिपथोन्मुखान् ॥ १७ ॥ सर्वान्सर्वेसमालोक्यरक्षांचक्रुःपुरापुरः ॥ असिंमहासिरूपांचपाप्यसन्मतिखंडनीम् ॥ १८ ॥ दुष्टप्रवेशंधुन्वानांधुनींदेवाविनिर्ममुः ॥ वरणांचव्यधुस्तत्रक्षेत्रविघ्ननिवारिणीम् ॥ १९ ॥ दुर्वृत्तसुप्रवृत्तेश्चनिवृत्तिकरणींसुराः ॥ दक्षिणोत्तरदिग्भागेकृत्वाऽसिंवरणांसुराः ॥ २० ॥ क्षेत्रस्यमोक्षनिक्षेपरक्षांनिर्वृतिमाप्नुयुः ॥ क्षेत्रस्यपश्चादिग्भागेतंदेहलिविनायकम् ॥ २१ ॥ स्वयंव्यापारयामासरक्षार्थंशशिशेखरः ॥ अनुज्ञातप्रवेशानांविश्वेशेनकृपावता ॥ २२ ॥ तेप्रवेशंप्रयच्छंतिनान्येषांहिकदाचन ॥ इत्यर्थेकथयिष्येऽहमितिहासंपुरातनम् ॥ आश्चर्यकारिपरमंकाशीभक्तिप्रवर्धनम् ॥ २३ ॥ ॥ स्कंदउवाच ॥ ॥ दक्षिणाब्धितटेकश्चित्सेतुबंधसमीपतः ॥ वणिग्धनंजयोनाममातृभक्तिसमन्वितः ॥ २४ ॥ पुण्यमार्गार्जितधनोधनतोषितमार्गणः ॥ मार्गणस्फारितयशायशोदातनयार्चकः ॥ २५ ॥

मसन्मतिमस्यतिखंडयतीत्यसिशब्दार्थंनिर्वक्ति ॥ पापीति ॥ १८ ॥ असिंविशिनष्टि ॥ धुनीमिति ॥ दुष्टानांप्रवेशनंधुनोतिनिवारयतीतिधुनीशब्दार्थमाह ॥ दुष्टेति ॥ व्यधुश्चक्रुः ॥ सर्वान्क्षेत्रविघ्नान्वारयतीतिवरणाशब्दार्थंनिर्वक्ति ॥ क्षेत्रेति ॥ १९ ॥ निर्वचनांतरमाह ॥ दुर्वृत्तसुप्रवृत्तेश्चेति ॥ दुर्वृत्तस्यसुप्रवृत्तेरितिक्वचित् ॥ पाठद्वयेप्येकएवार्थः ॥ दक्षिणेति ॥ दक्षिणदिग्भागेऽसिमुत्तरदिग्भागेवरणामित्यर्थः ॥ २० ॥ तेविशिनष्टि ॥ क्षेत्रस्यमोक्षेति ॥ क्षेत्रस्यकैवल्यज्ञानसंपादयित्रीमित्यर्थः ॥ निर्वाणस्थाप्यरक्षाकर्त्रीमितिवा ॥ तंप्रसिद्धम् ॥ २१ ॥ व्यापारयामासस्थापयामास ॥ फलितमाह ॥ अनुज्ञातेति ॥ २२ ॥ तेऽस्यादयः ॥ विश्वेशेनानुज्ञातानांधर्मानुषंगात्काशींप्राप्यापिबहिर्निर्गमइत्यस्मिन्नर्थेइतिहासमाह ॥ इत्यर्थइति ॥ २३ ॥ दक्षिणार्णवतीरेरामसेतुनिकटेधनंजयोनामवणिग्बभूवेतिशेषः ॥ तंविशिनष्टि मातृभक्तीतिपादाधिकपंचाभिः ॥ २४ ॥ मार्गणायाचकाः ॥ २५ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

संपत्तिर्धनादिसमृद्धिः ॥ आकारगोपकःस्वगुणाप्रख्यापकः ॥ २६ ॥ संपूर्णाश्चतुःषष्टिसंख्याकाःकलाविद्यायस्यससंपूर्णकलः ॥ निर्गतःकलंकोयस्मात्सउदयोयस्यसनिष्कलंकोदयः ॥ संपूर्ण कलोपिचंद्रोमृगलांछनाद्गुरुदाराभिमर्शाद्वासकलंकोदयएवेतितस्मादस्याधिक्यंध्वनितम् ॥ २७ ॥ सत्यानृतंवाणिज्यम् ॥ वर्णेतरोपिचतुर्वर्णेभ्योऽन्योपिसुवर्णेनशोभनब्राह्मणादिनावर्णेनकृतावर्ण नास्तुतिर्यस्यसः ॥ हीनवर्णोपिब्राह्मणवत्सदाचारइत्यर्थः ॥ पक्षांतरेसुवर्णस्यकृतेनकरणेनघटनेनेतियावत् ॥ वर्णनंकथनंयस्यसतथास्वर्णकारइत्यर्थः ॥ २८ ॥ सुखयानचरोनौकायानचारी ॥ नीरेःपानंपानंनौभिर्यानंयानम् ॥ शिशुभिर्लीलालीलाअन्यदपानमयानमलीलेतिदर्शनात् ॥ २९ ॥ ३० ॥ प्रावृण्नदीपूरसमंवर्षातरंगिण्योघसमम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ अधोमुखस्योर्ध्वपादस्यवृक्षेऽवलंबमानस्यगेदुराइतिप्रसिद्धस्यपक्षिविशेषस्यपत्नीवल्गुली ॥ उलूकीपेचिका ॥ ३५ ॥ दुःस्पर्शाद्दुष्टसंश्लेशात् दुःखात्मकात्स्पर्शादित्यर्थः ॥ ननुदुःस्पर्शेकुतःप्रवृत्ति स्तत्राह ॥ सुखाभासात्मकात् सुखमिवभासतइतिसुखाभासस्तदात्मकादित्यर्थः ॥ ३६ ॥ पातिव्रत्यभंगेदोषमुक्त्वातद्रक्षणेगुण माह ॥ अनेनैवशरीरेणेति ॥ अनेनैवशरीरेणरक्तमांसतयाप्रतीते

समुन्नतोपिसंपत्त्याविनयानतकंधरः ॥ आकरोपिगुणानांहिगुणिष्वाकारगोपकः ॥ २६ ॥ रूपसंपदुदारोपिपरदारपराङ्मुखः ॥ ससंपूर्णकलोप्यासी न्निष्कलंकोदयःसदा ॥ २७ ॥ ससत्यानृतवृत्तिश्चप्रायःसत्यप्रियोमुने ॥ वर्णेतरोप्यभूल्लोकेसुवर्णकृतवर्णनः ॥ २८ ॥ सदाचरणगोप्येषसुखयानचरः कृती ॥ अदरिद्रोपिमेधावीसोभूत्पापदरिद्रधीः ॥ २९ ॥ तस्यैवंवर्तमानस्यकदाचित्कालपर्ययात् ॥ जननीनिधनंप्राप्ताव्याधिताऽतिजरातुरा ॥ ३० ॥ तयाचयौवनंप्राप्यमेघच्छायातिचंचलम् ॥ प्रावृण्नदीपूरसमंस्वपतिःपरिवंचितः ॥ ३१ ॥ दिनत्रिचतुरस्थायियानारीप्राप्ययौवनम् ॥ भर्तारंवंचये न्मोहात्साऽक्षयंनरकंव्रजेत् ॥ ३२ ॥ शीलभंगेननारीणांभर्ताधर्मपरोपिहि ॥ पतेद्दुःखार्जितात्स्वर्गाच्छीलंरक्ष्यंततःस्त्रिया ॥ ३३ ॥ विष्ठागर्तेचनिरये स्वयंपततिदुर्मतिः ॥ आभूतसंप्लवंयावत्ततःस्याद्ग्रामसूकरी ॥ ३४ ॥ स्वविष्ठापायिनीचाथवल्गुलीवृक्षलंबिनी ॥ उलूकीवादिवांधास्याद्वृक्षकोटरवासिनी ॥ ॥ ३५ ॥ रक्षणीयंमहायत्नादिदंसुकृतभाजनम् ॥ वपुःपरस्यदुःस्पर्शात्सुखाभासात्मकास्त्रिया ॥ ३६ ॥ अनेनैवशरीरेणभर्तृसाद्विहितेनहि ॥ किंस तीनचतस्तंभभानुसुद्यंतमाज्ञया ॥ ३७ ॥ अत्रिपत्न्यनसूयाकिंभर्तृभक्तिप्रभावतः ॥ दधारनत्रयींगर्भेपतिव्रतपरायणा ॥ ३८ ॥

नेत्यर्थः ॥ सतीपतिव्रताउद्यंतमुद्गच्छंतंभानुंकिंनतस्तंभस्तंभितंकिंनचकारअपितुस्तंभितवत्येवेत्यर्थः ॥ कथंभूतेनशरीरेण ॥ भर्तृसाद्विहितेनभर्त्रधीनसंपादितेनेत्यर्थः ॥ तथाचश्रूयतेमार्कंडेयपुराणे ॥ कदाचिच्चोराननुधावंतोराजभटामांडव्यस्यऋषेस्तपश्चरतोमौनव्रतधारिणआश्रमेतान्संप्राप्यतेनसार्धंबद्धानीयराज्ञेनिवेद्यतदाज्ञयासर्वाञ्छूलेष्वारोपयामासुः ॥ तदैवांधकारभूतायांरजन्यांवेश्याभिला षुकंभर्तारंस्कंधमारोप्यतद्गृहंनयंतीपातिव्रताशूलस्थमांडव्यमज्ञानात्संघट्टयामास ॥ ततोदुःखाक्रांतेनतेनोक्तंयस्यप्रियंचिकीर्षत्यात्वयैवंकृतंसतुसूर्योदयेम्रियतांतच्छुत्वाऽतिदुःखितयातयोक्तंयद्यहंपति व्रतास्यांतदासूर्योनोदेतु तदातदाज्ञयासूर्योनोदयंचकारेति ॥ ३७ ॥ त्रयींवेदत्रयात्मिकां ब्रह्मविष्णुशिवांशसोमदत्तात्रेयदुर्वासोभिधामित्यर्थः ॥ एवंहिश्रूयतेतत्रैव ॥ पतिव्रतायावाक्यात्सू र्यानुदयेसृष्टिलोपमाकलय्यसेंद्रैर्देवैःसहिताब्रह्मविष्णुरुद्राअत्रिपत्नीमनसूयामूचुः ॥ पतिव्रतायाःशापभयात्सूर्योनोदेतितदभावाच्चजगन्नश्यत्यत:पतिव्रताशिरोमण्याभवत्याप्रसादनीयायथासूर्योद्गमा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यसास्त्राच्छंदंददाति ॥ तद्दातयोक्तंतदैवंमयासंपाद्यतेयदिभवंतोममपुत्राभवेयुः ॥ तथैवतैःस्वीकृतेतयाचतथासाधितेसोमदत्तदुर्वाससोब्रह्मविष्णुरुद्रांशास्त्रयःपुत्राःसवभूवुरिति ॥३८॥ नकेवलंपाति व्रत्यरक्षणंगुणमात्रंपरमसुखलाभश्चेत्याह ॥ इहकीर्तिश्चेति ॥ ३९ ॥ प्रस्तुतमाह ॥ सादुर्वृत्त्येति ॥ साधनंजयमातादुर्वृत्त्यापातिधर्मंपरित्यज्येतिसंबंधः ॥ सादुर्वृत्तेतिक्वचित् ॥ ४० ॥ ननु निकृष्टजातौजातस्यधनंजयस्यकथंपूर्वोक्तगुणत्वंतत्राह ॥ धनंजयोपिचेति ॥ अपिचेतिसमुच्चये ॥ शिवयोगिनासार्धंतपोदयात् शिवयोगिनःसंगमात्तपसउदयादित्यर्थः ॥ विसर्गलोपेऽपिसंधिरार्षः ॥ तपश्चदयाचतपोदयंतस्मादितिवा ॥ इत्थंपूर्वोक्तप्रकारेण इत्थंकेनापिभाग्योदयेनेतिवा ॥ ४१ ॥ इत्थंप्रसक्तानुप्रसक्तमुक्त्वाप्रस्तुतमाह ॥ धनंजयोपीति ॥ गंगामार्गस्थितोऽभवत् गंगामार्गेण गंगाद्वारमार्गेणसेतुबंधाद्येनमार्गेणहरिद्वारंगम्यतेतेनमार्गेणप्रस्थानंकृतवानित्यर्थः ॥ यद्वा गंगाःकावेर्याद्याःपंच ॥ तदुक्तम् ॥ कावेरीतुंगभद्राचकृष्णावेण्याचगौतमी ॥ भागीरथीतिविख्याताःपंच गंगाःप्रकीर्तिताइति ॥ तासांमार्गेवर्त्मनिस्थितःप्रस्थितोऽभूत् ॥ श्रीरंगानंतशायिराजमहेंद्रसिंहाद्रिकूर्मपुरुषोत्तमभागीरथीसंगमपथाप्रस्थानंकृतवानित्यर्थः ॥ त्रिस्थलींकर्तुमितिशेषः ॥ ४२ ॥

इहकीर्तिश्चविपुलास्वर्गेवासस्तथाऽक्षयः ॥ पातिव्रत्यात्स्त्रियालभ्यंसखित्वंचश्रियासह ॥ ३९ ॥ सादुर्वृत्त्यापरित्यज्यपतिधर्मंसनातनम् ॥ स्वच्छंदचा रिणीभूत्वामृतानिरयमुद्ययौ ॥ ४० ॥ धनंजयोपिचमुनेकेनचिच्छिवयोगिना ॥ सार्धंतपोदयादित्थंसोऽभवद्धर्मतत्परः ॥४१॥ धनंजयोपिधर्मात्मामा तृभक्तिपरायणः ॥ आदायास्थीन्यथोमातुर्गंगामार्गस्थितोऽभवत् ॥४२॥ पंचगव्येनसंस्नाप्यततःपंचामृतेनवै ॥ यक्षकर्दमलेपेनलिप्त्वापुष्पैःप्रपूज्यच ॥ ४३ ॥ आवेष्ट्यनेत्रवस्त्रेणततःपट्टांबरेणवै ॥ ततःसुरसवस्त्रेणततोमांजिष्ठवाससा ॥४४॥ नेपालकंबलेनाथमृदाचाऽथविशुद्धया ॥ ताम्रसंपुटकेकृत्वा मातुरंगान्यहोवणिक् ॥ ४५ ॥ अस्पृष्टहीनजातिःसशुचिष्मान्स्थंडिलेशयः ॥ आनयञ्ज्वरितोप्यासीन्मध्येमार्गंधनंजयः ॥४६॥ भारवाहःकृतस्तेनक श्चिद्दत्त्वोचितांभृतिम् ॥ किंबहूक्तेनघटजकाशीप्राप्ताऽथतेनवै ॥ ४७ ॥ धृत्वासंभृतिरक्षार्थंभारवाहंधनंजयः ॥ जगामापणमानेतुंकिंचिद्वस्त्वशनादिकम् ॥ ४८ ॥ भारवाह्यंतरंप्राप्यतस्यसंभृतिमध्यतः ॥ ताम्रसंपुटमादायधनंज्ञात्वागृहंययौ ॥ ४९ ॥

पंचगव्येनेत्यादिपंचभिर्वाक्यम् ॥ अहोकष्टेहर्षेवा ॥ वणिग्धनंजयोमातुरंगान्यस्थीनिताम्रसंपुटेकृत्वानयन्मध्येमार्गंमार्गस्यमध्येज्वरितोज्वरेणव्याप्तोऽपिशब्दात्सार्थहीनश्चासीदित्यन्वयः ॥ अथोव णिगितिपाठेआनयन्सन्अथोअनंतरंज्वरितआसीदित्यर्थः ॥ पुनःकिंकृत्वा ॥ यक्षकर्दमलेपेनकर्पूरागुरुकस्तूरीकंकोलपिष्टलेपेन ॥ यद्वा लिप्यतेऽनेनेतिलेपोयक्षकर्दमरूपोलेपस्तेनलिप्त्वा ॥ अथानं तरंविशुद्धयामृदागोपीचन्दनप्रमुखयाचलिप्त्वा ॥ पुनःकिंकृत्वा ॥ नेत्रवस्त्रेणगौडैर्नेत्रइतिप्रसिद्धेनवस्त्रेणवेष्टयित्वा ॥ अस्याग्रेपिचतुर्षुपदेषुसंबंधः ॥ सुरसवस्त्रेणाचिक्कणकार्पासवस्त्रेण ॥ मांजिष्ठ वाससामंजिष्ठेनरक्तवाससा ॥ नेपालकंबलेननेपालदेशोद्भवेनकंबलेन ॥ शुचिष्मान्पावित्र्यवान् ॥ स्थंडिलेशयोभूमिशायी ॥ भृतिःकर्ममूल्यम् ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ संभृ तिरक्षार्थंसामग्रीरक्षार्थम् ॥ आपणंपण्यवीथिकाम् ॥ अश्यतेभुज्यतइत्यशनंतदादिकंवस्तु ॥ आदिशब्देन[illegible]देवपूजाद्रव्यंगृह्यते ॥ ४८ ॥ अन्तरंछिद्रमवसरंवा ॥ ४९ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

संभृतिंसामग्रीम् ॥ ताम्रसंपुटवर्जितांताम्रसमुद्गकरहिताम् ॥ ५० ॥ चक्रंदअरोदीत् ॥ तदनुसारतः तस्यभारवाहकस्यानुसारतोऽनुसारायान्वेषणायेत्यर्थः ॥ ५१ ॥ संवसथंगृहम् ॥ ५२ ॥
भारंवहतीतिभारवाट् ॥ अरण्यान्यांमहारण्ये ॥ तानिअस्थीनि ॥ ५३ ॥ चैलशकलंयेनवस्त्रखंडेनसंछाद्यास्थीन्यानीतानितच्चैलशकलमित्यर्थः ॥ अन्तरेमध्येउपरीतिवा ॥ ५४ ॥
आशयाऽस्थीनिप्रासव्यानीतिवांछया ॥ आश्वस्याविश्रम्य विश्वासंकृत्वेतिवा ॥ आश्वास्येतिपाठेतत्पत्नींविश्वासंजनयित्वापृष्टवानित्यर्थः ॥ ५५ ॥ आश्वासमेवाह इत्युक्तेत्यतःप्राक्तनेन ॥ वसुध
नम् ॥ ५६ ॥ अस्थनामाधारसंपुटोऽस्थिसंपुटः ॥ अथसंपुटइतिपाठेपिसएवार्थः ॥ ५७ ॥ भोभिल्लिहेशबरि ॥ ५८ ॥ ५९ ॥ अधिकंबहु ॥ ६० ॥ अरण्यानींमहारण्यम् ॥ शबरोभिल्लः ॥ ६१ ॥

वासस्थानमथागत्यतमदृष्ट्वाधनंजयः ॥ त्वरावान्संभृतिंवीक्ष्यताम्रसंपुटवर्जिताम् ॥ ५० ॥ हाहेत्याताड्यहृदयंचक्रंदबहुशोभृशम् ॥ इतस्ततस्तमालोक्यगतस्तदनुसारतः ॥ ५१ ॥ अकृत्वाजाह्नवीस्नानमनवेक्ष्यजगत्पतिम् ॥ तस्यसंवसथंप्राप्तोभारवोढुर्धनंजयः ॥ ५२ ॥ भारवाडप्यरण्यान्यांताम्रसंपुटमध्यतः ॥ दृष्ट्वास्थीनिविनिःश्वस्यतानित्यक्त्वागृहंययौ ॥५३॥ वणिक्चतद्गृहंप्राप्यशुष्ककंठोष्ठतालुकः ॥ दृष्ट्वाऽथचैलशकलंतृणकुड्यंतरेतदा ॥५४॥ आशयाकिंचिदाश्वस्यतत्पत्नींपरिपृष्टवान् ॥ सत्यंब्रूहिनभेतव्यंदास्याम्यन्यदपिध्रुवम् ॥ ५५ ॥ वसुकृतेगतोभर्तामातुरस्थीनिमेऽर्पय ॥ वयंकार्पटिकाभद्रेभवामोनचदुःखदाः ॥ ५६ ॥ अज्ञात्वालोभवशतस्तेननीतोऽस्थिसंपुटः ॥ तस्यैषदोषोनोभद्रेमातुर्मेकर्मताहृशम् ॥५७॥ अथवानप्रसूदोषोमंदभाग्योऽस्मितत्सुतः ॥ सुतेनकृत्यंयत्कृत्यंतत्प्राप्तिर्नास्तिभिल्लिमे ॥५८॥ उद्यमंकृतवानस्मिनसिद्धश्चेन्मंदभाग्यतः ॥ आयातुसत्यवाक्यान्मेमाबिभेतुवनेचरः ॥ ॥ ५९ ॥ अस्थीनिदर्शयत्वाशुधनंदास्येऽधिकंततः ॥ इत्युक्तातेनसाभिल्लीव्याजहारनिजंपतिम् ॥ ६० ॥ लज्जानम्रशिराःसोऽथवृत्तांतंविनिवेद्यच ॥ निनायतामरण्यानींशबरस्तंधनंजयम् ॥६१॥ वनेचरोऽथतत्स्थानंदैवाद्विस्मृतवान्मुने ॥ दिग्भ्रांतिंसमवाप्याथपरिबभ्रामकानने ॥६२॥ इतोरण्यात्ततोयातिततोरण्यादितोव्रजेत् ॥ वनाद्वनांतरंभ्रांत्वाखिन्नःसोपिवनेचरः ॥ ६३ ॥ विहायमध्येऽरण्यानितंययौचस्वपक्कणम् ॥ द्वित्राण्यहानिसंभ्रम्यसकार्पटिकसत्तमः ॥ ६४ ॥ क्षुत्क्षामःशुष्ककंठोष्ठोहाहेतिपरिदेवयन् ॥ पुनःकाशीपुरींप्राप्तःपरिम्लानमुखोवणिक् ॥ ६५ ॥ तन्मंदभाग्यतांश्रुत्वालोकात्कार्पटिकोमुने ॥ कृत्वागयांप्रयागंचततःस्वविषयंययौ ॥ ६६ ॥ काश्यांप्रवेशंप्राप्यापितदस्थीनिघटोद्भव ॥ विनावैश्वेश्वरीमाज्ञांबहिर्यातानितत्क्षणात् ॥ ॥ ६७ ॥ एवंकाश्यांप्रविश्यापिपापीधर्मानुषंगतः ॥ नक्षेत्रफलमाप्नोतिबहिर्भवतितत्क्षणात् ॥ ६८ ॥

॥ ६२ ॥ वनादिति ॥ विहायमध्येरण्यानिसर्वेष्वरण्येषुमध्येयेष्वस्थीनिप्रक्षिप्तानितान्यरण्यानिविहाय वनाद्वनांतरंभ्रांत्वाखिन्नःसन्तंप्रसिद्धंस्वपक्कणंस्वीयंशबरालयंययावित्यन्वयः ॥ ६३ ॥
द्वेत्रीणिवाद्वित्राणिअहानिपंचदिनानीत्यर्थः ॥ ६४ ॥ परिदेवयन्परितापंकुर्वन् ॥ ६५ ॥ तन्मंदभाग्यतांतस्यामातुःपरपुरुषगामिताम् ॥ कर्पटेनरक्तवासआदिनाव्यवहरतीतिकार्पटिकः ॥
स्वविषयंस्वीयंदेशम् ॥ ६६ ॥ दृष्टांतंविनिगमयन्दार्ष्टांतिकेविनिगमयति काश्यामितिद्वयेन ॥ ६७ ॥ धर्मानुषंगतःप्राक्तनपुण्यवशादित्यर्थः ॥ क्षेत्रफलंकैवल्यम् ॥ तत्रहेतुर्बहिर्भवतीति ॥ ६८ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

परमप्रकृतमुपसंहरति ॥ तस्मादिति ॥ वाराणसीनामनिर्वक्ति ॥ असिश्चेतिसार्धेन ॥ यत्रयस्मिन्काननेअसिर्वरणाचद्वेनद्यौक्षेत्ररक्षाकृतौकृते क्षेत्ररक्षांकुरुतइतिक्षेत्ररक्षाकृतौ ॥ क्षेत्ररक्षाकरणेनिमित्त
इतिवा ॥ कृतेदेवैःसंपादिते ॥ ६९ ॥ तदारभ्यतंकालमारभ्यहेमहामुनेऽगस्त्यअसेश्चवरणायाश्चसंगमंप्राप्यकाशिकावाराणसीतिविख्याताप्रख्यातेत्यर्थः ॥ ७० ॥ अतिहर्षेणपुनरपिकाशींवर्ण
यति वाराणसीहेत्यारभ्यारुद्ररुद्राक्षेत्यतःप्राक्तनेनग्रंथेन ॥ इहजगतियावाराणसीसाकरुणामयदिव्यमूर्तिः करुणामयीचासौदिव्याऽलौकिकीमूर्तिश्च करुणामयीदिव्यामूर्तिर्यस्याःसातथेतिवा ॥
उभयत्रहेतुमाह ॥ उत्सृज्ययत्रेति ॥ यत्रयस्यांवाराणस्यांतनुभृत्प्राणिमात्रंसुखेनतुसुखेनैवतनुमुत्सृज्ययद्यस्माद्विश्वेशहङ्महसिविश्वस्येशोविश्वेशोविश्वश्चासावीशश्चेतिवासचासौदृग्ज्ञानंचतच्चतन्महः
स्वप्रकाशंचतस्मिन्विश्वेशहङ्महसिलक्ष्येतत्पदार्थइत्यर्थः ॥ सहसातत्क्षणादेहत्यागाव्यवहितमयइत्यर्थः ॥ रूपेणाखंडसच्चिदात्मकेनलक्ष्येणत्वंपदार्थेनप्रविश्यप्रत्यग्ब्रह्मणोरैक्यमनुभूयेत्येतत् ॥
तांप्रसिद्धांवितनुतांपदवींविगतदेहभावांकैवल्याख्यांमुक्तिंदधातिधारयतिप्राप्नोतीत्यर्थः ॥ ७१ ॥ जातइति ॥ वाराणसीतिनिगदतीत्यन्वयः ॥ किंनिगदति ॥ रेहेजंतोबहुषुतीर्थवरेषुनिमज्ज्यस्नाना
दिकंविधायत्वंजातोमृतश्चषड्भावविकारादीन्प्राप्तवानसीत्यर्थः ॥ जातुकदाचिदपितवशांतिर्नाभूत् ॥ अतोऽधुनाइहअस्यांमयिमृतःसन्नमृतत्वंप्राप्यसायुज्यंलब्ध्वास्मरशासनःस्याःविश्वेश्वरोभूयाः ॥

तस्माद्विश्वेश्वराज्ञैवकाशीवासेऽत्रकारणम् ॥ असिश्चवरणायत्रक्षेत्ररक्षाकृतौकृते ॥ ६९ ॥ वाराणसीतिविख्यातातदारभ्यमहामुने ॥ असेश्चवरणायाश्चसं
गमंप्राप्यकाशिका ॥ ७० ॥ वाराणसीहकरुणामयदिव्यमूर्तिरुत्सृज्ययत्रतुतनुंतनुभृत्सुखेन ॥ विश्वेशहङ्महसियत्सहसाप्रविश्यरूपेणतांवितनुतांपदवीं
दधाति ॥ ७१ ॥ जातोमृतोबहुषुतीर्थवरेषुरेत्वंजंतोनजातुतवशांतिरभून्निमज्ज्य ॥ वाराणसीनिगदतीहमृतोऽमृतत्वंप्राप्याधुनाममबलात्स्मरशासनः
स्याः ॥ ७२ ॥ अन्यत्रतीर्थसलिलेपतितोद्विजन्मादेवादिभावमयतेनतथातुकाश्याम् ॥ चित्रंयदत्रपतितःपुनरुत्थितिंनप्राप्नोतिपुल्कसजनोपिकिमग्र
जन्मा ॥ ७३ ॥ सैषापुरीसंसृतिरूपपारावारस्यपारंपुरहापुरारिः ॥ यस्यांपरंपौरुषमर्थमिच्छन्सिद्धिंनयेत्पौरपरंपरांसः ॥ ७४ ॥

तत्रहेतुर्ममबलादिति ॥ स्मरशासनस्येतिपाठेममस्मरशासनस्यचबलादमृतत्वंप्राप्यतवशांतिर्भवितेतिशेषइत्यर्थः ॥ अथवैवमन्वयः ॥ बहुषुतीर्थवरेषुनिमज्ज्यमृतः अंतर्जलेत्यक्तप्राणोपित्वंजात
इत्यर्थः ॥ अन्यत्समानम् ॥ ७२ ॥ एतद्विवृणोति ॥ अन्यत्रेति ॥ अन्यत्रायोध्यादौतीर्थसलिलेपतितोमृतःसन्द्विजन्मादेवादिभावंवैकुंठादिसालोक्यभावमयतेप्राप्नोतिकाश्यांतुतथानेत्यर्थः ॥
तुशब्दोक्तंविशेषंदर्शयति ॥ चित्रमिति ॥ अहोएतच्चित्रम् ॥ किंतत् ॥ अत्रकुत्रापिपुल्कसजनोपिपतितःसन्पुनरुत्थितिंपुनर्देहसंबंधंनप्राप्नोति ॥ अग्रजन्माब्राह्मणोनप्राप्नोतीतिकिंवक्तव्यमितियत् ॥
यद्वातुशब्दोक्तविशेषमेवहेतुमाह ॥ चित्रमिति ॥ यद्यस्मात ॥ शेषंपूर्ववत् ॥ ७३ ॥ सैषेति ॥ साएषाकाशीपुरी ॥ साकेत्याकांक्षायामाह ॥ यस्यांकाश्यांसप्रसिद्धःपुरा
रिस्त्रिपुरारिः परंपौरुषमर्थमिच्छन्पुरुषकारप्राप्यंपरमर्थंकैवल्यंदातुंवांछन्नित्यर्थः ॥ पौरपरंपरांपुरसंबंधिप्राणिसमुदायंसंसृतिरूपपारावारस्यसंसाररूपसमुद्रस्यपारमवधिमधिष्ठानंसमाप्तिंवायथा
स्यात्तथासिद्धिंतारकोपदेशरूपांब्रह्मविद्यामित्यर्थः ॥ नयेत्प्रापयेत् ॥ अर्थंसिद्धिंनित्यमितिपाठेपरंपौरुषमितिक्रियाविशेषणम् ॥ नित्यंपारंनयेदित्येवंसंबंधः ॥ कथंभूतः ॥ पुरहातत्त्व



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मस्यादिवाक्योत्थबुद्धिवृत्त्यभिव्यक्तःसन्जाग्रत्स्वप्नसुषुप्तिलक्षणंपुरंहंतीतितथा ॥ प्राकृतंव्याख्यानंस्पष्टम् ॥ पुरुषइतिपाठेपूर्णइत्यर्थः ॥ ७४ ॥ तीर्थांतराणीति ॥ कलुषितांपापसंबद्धां तनुंवाराणसीपरिसरेवाराणस्याःपर्यंतभुवि यत्रकुत्रापिप्रदेशइत्यर्थः ॥ हित्वात्यक्त्वादेहदशाप्तयेपिसायुज्यादिमुक्तिप्राप्तयेपिसंदेहभाग्भवतिकिमुतसामान्यदेवतांतरप्राप्त्यै ॥ विदेहकैवल्यमेवप्रा येणप्राप्नोतीतिभावः ॥ तथाचोक्तम् ॥ काश्यामवश्यंत्यजतांशरीरंशरीरिणांनास्तिपुनःशरीरम् ॥ यद्यस्तिकंठेगरलंललाटेत्रिलोचनंचंद्रकलाचमौलाविति ॥ अतएवसंदेहभाग्भवतीत्युक्तम् ॥ ७५ ॥ वाराणसीति ॥ यावाराणसीसायोगादष्टांगरूपाज्जीवब्रह्मणोरैक्यचिंतनरूपात्समरसीकरणादृतेपिसमंब्रह्मतत्ररसोरागस्तत्करणादृतेपि ब्रह्माभ्यासंविनापीत्यर्थः ॥ अयोगिजनतांजनतापहंत्रीयोगर हितजनसमुदायस्यअज्यतेऽनेनेत्यंजनमुपाधिरज्ञानमित्येतत् ॥ अजनेतिपाठेअजामेकामित्यादिश्रुतेरजनमज्ञानमेवजननंजनोजन्मेतिवा ॥ अस्मिन्पक्षेजन्मांतरभावित्वादाध्यात्मिकादितापत्रयस्यत त्कृतत्वमितिज्ञातव्यम् ॥ तत्कृताध्यात्मिकादितापत्रयच्छेत्रीत्यर्थः ॥ अयोगिजनतामज्ञजनसमूहंतद्ब्रह्मदर्शयतीतिवान्वयः ॥ तर्हितमेवविदित्वाऽतिमृत्युमेतिनान्यःपंथाविद्यतेऽयनायेत्यादिश्रुति विरोधइत्याशंक्याह ॥ तत्प्रसिद्धंतारकंप्रणवंषडक्षरराममंत्रराजंवाश्रवणगोचरतांप्रापयंतीतद्ब्रह्मदर्शयति ॥ कीदृशंब्रह्म ॥ येनब्रह्मदर्शनेनज्ञानात्मकेनब्रह्मणापुनर्भवोनभवतितादृशमित्यर्थः ॥ यद्य

तीर्थांतराणिमनुजःपरितोऽवगाह्यहित्वातनुंकलुषितांदिविदैवतंस्यात् ॥ वाराणसीपरिसरेतुविसृज्यदेहंसंदेहभाग्भवतिदेहदशाप्तयेपि ॥ ७५ ॥ वाराणसी समरसीकरणादृतेपियोगादयोगिजनतांजनतापहंत्री ॥ तत्तारकंश्रवणगोचरतांनयंतीतद्ब्रह्मदर्शयतियेनपुनर्भवोन ॥ ७६ ॥ वाराणसीपरिसरेतनुमि ष्टदात्रींधर्मार्थकामनिलयामहहाविसृज्य ॥ इष्टंपदंकिमपिहृष्टतरोभिलष्यलाभोस्तुमूलमपिनोयदवापशून्यम् ॥ ७७ ॥ आःकाशिवासिजनतानतुवं चिताभूद्भालेविलोचनवतावनितार्धभाजा ॥ आदाययत्सुकृतभाजनमिष्टदेहंनिर्वाणमात्रमपवर्जयतापुनर्भु ॥ ७८ ॥ वाराणसीस्फुरदसीमगुणैकभूमिर्यत्र स्थितास्तनुभृतःशशिभृत्प्रभावात् ॥ सर्वेगलेगरलिनोऽक्षियुजोललाटेवामार्धवामतनवोऽतनवस्ततोंऽते ॥ ७९ ॥

पिविश्वेशएवतारकोपदेष्टातथापिकाश्यांमृतानामेवोपदिशतीतिसैवदर्शयतीत्युच्यतइति ॥ ७६ ॥ वाराणसीति ॥ अहहेतिखेदे ॥ योजनःकिमपिवाङ्मनसयोरगोचरमिष्टंपदंस्थानमभिलष्यवाराणसी परिसरेइष्टदात्रींतनुम् ॥ इष्टदातृत्वेहेतुर्धर्मार्थकामनिलयाम् ॥ चतुर्णांनिलयत्वेपिमोक्षस्यासिद्धत्वादेवमुक्तम् ॥ आविसृज्यसवासनंकारणंत्यक्त्वेत्यर्थः ॥ हृष्टतरोहर्षवत्तरोभवति ॥ तस्यजनस्यलाभो स्तुलाभस्तावत्तिष्ठतुमूलमपिनोस्वयमपिनतिष्ठतीत्यर्थः ॥ यद्यतःशून्यंशून्यसदृशम् ॥ तथाच भागवते ॥ स्थिरचरजातयःस्युरजयोत्थनिमित्तयुजोविहरउदीक्षयायदिपरस्यविमुक्ततत ॥ नहिपरमस्य कश्चिदपरोनपरश्चभवेद्वियतइवापदस्यतवशून्यतुलांदधतइति ॥ अवापप्राप्तवान् ॥ विरोधालंकारोयम् ॥ ७७ ॥ एतद्विवृणोति ॥ आइति ॥ आःकोपेपीडायांवा ॥ भालेललाटेविलोचनवताविशिष्टनेत्र वता वनितार्धभाजावनितायाभवान्याअर्धंदेहंभजतइतिवनितार्धभाजातेनविश्वेश्वरेणकाशिवासिजनतानतुनिश्चितंवंचिताऽभूत् ॥ कुतइत्याशंक्यहेतुपूर्वकंतंविशिनष्टि ॥ यद्यस्मात्सुकृतस्यभाजनंपात्र मभिलषितदेहमादायगृहीत्वानिर्वाणमात्रमपवर्जयताप्रयच्छता ॥ कथंभूतंनिर्वाणमात्रम् ॥ अपुनर्भु नविद्यतेपुनर्भूर्जन्मयस्मिंस्तत् ॥ ७८ ॥ वाराणसीति ॥ यावाराणसीसास्फुरदसीमगुणैकभूमिः स्फुरंतश्चतेयेऽसीमगुणायेनिरवधिकागुणाः करुणामयत्वमोक्षदातृत्वाद्यास्तेषामेकभूमिर्मुख्यमधिष्ठानम् ॥ तत्रहेतुर्यत्रस्थिताइत्यादि ॥ यत्रयस्यांवाराणस्यांस्थितामरणपर्यंतंकृतवसतयः त्यक्तदेहा



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वामार्धवामतनवः त्र्यधोत्तरदेहास्ततस्तदनंतरमंतेसारूप्यमुक्तिभोगाऽवसानेऽतनवःकैवल्यभाजोभवंतीत्यर्थः ॥ यद्वा स्थिताःकृतवसतयोयेजीवंत इत्यर्थः ॥ यद्वा स्थिताःसंस्थितामृताइत्येतत् ॥ चतुर्भुजांस्त्रिनयनान्गंगोद्भासितमूर्धजानिति ॥ अस्मिन्पक्षेऽंतेदेहावसाने ॥ ७९ ॥ आनंदकाननमिति ॥ चक्रसरसी एवेत्यर्थः ॥ तथाचोक्तम् ॥ काश्यांतिष्ठंतियेकेचित्तान्पश्यंतिसुरोत्तमाः ॥ परमास्पदंमुख्यआश्रयः ॥ इहानंदकाननेविमुक्तयेयन्नतत्किंनकिंचिदपितुसर्वविमुक्तयइत्यर्थः ॥ ८० ॥ वाराण चक्रनिर्मितंसरइतिमणिकर्णिविशेषणम् ॥ स्वःसिंधुसंगतिर्गंगामेलनम् ॥ उवितर्केकिंसीदतिकिमर्थंगच्छतिअवसीदतीतिवा ॥ विहायागमनेहेतुगर्भाणिविशेषणान्याह ॥ वाराणासिसरिद्भ्यांदक्षिणोत्तरतः सीहेति ॥ इहसंसारेयावा राणस्यस्तिहस्फुटंतामिमांविहायमूढजंतुः ॥ देवामरणमिच्छंतिकाकथाइतरेजनाइति ॥ सम्यग्भेदःसंभेदस्ततखेदस्यतन्नाशस्यजननीकर्त्रीत्यर्थः ॥ दमनीतिवा सीमरूपाभ्यांवरिष्ठाश्रेष्ठा ॥ तथाचोक्तम् ॥ असीवरणयोर्मध्येपंचक्रोशंमहत्तरम् ॥ यद्वा वरिष्ठोयःसंभेदःसंगमस्तेनखेदजननीपापस्यसंसारस्यवेत्यर्थादिति ॥ द्युनद्यागंगयालसंतीश्रीर्यस्याःसातथा ॥ अमलायामोक्षलक्ष्म्या पाठः ॥ एकपद्यपाठेवरिष्ठोहढोयःसंभेदस्तस्येत्यादिपूर्ववत् ॥ अचलाप्रलयेपिनाशरहिता ॥ ८१ ॥ किमिति ॥ अहहखेदे ॥ भवतागर्भजमामनस्यंदुःखम् ॥ कृतांतोय विश्रामभूर्विश्रमणस्थानम् ॥ मोक्षलक्ष्म्याअमलत्वंनामस्वप्रकाशत्वम् ॥

आनंदकाननमिदंसुखदंपुरैवतत्रापिचक्रसरसीमणिकर्णिकाऽथ ॥ स्वःसिंधुसंगतिरथोपरमास्पदंचाविश्वेशितुःकिमिहतन्नविमुक्तयेयत् ॥ ८० ॥ वाराणसी हवरणासिसरिद्वरिष्ठासंभेदखेदजननीद्युनदीलसच्छ्रीः ॥ विश्रामभूमिरचलाऽमलमोक्षलक्ष्म्याहैनांविहायकिमुसीदतिमूढजंतुः ॥ ८१ ॥ किंविस्मृतं त्वहहगर्भजमामनस्यंकातांतदूतकृतबंधनताडनंच ॥ शंभोरनुग्रहपरिग्रहलभ्यकाशींमूढोविहायकिमुयातिकरस्थमुक्तिम् ॥ ८२ ॥ तीर्थांतराणिकलुषा णिहरंतिसद्यःश्रेयोददत्यपिबहुत्रिदिवंनयंति ॥ पानावगाहनविधानतनुप्रहाणैर्वाराणसीतुकुरुतेबतमूलनाशम् ॥ ८३ ॥ काशीपुरीपरिसरेमणिकर्णिकायां त्यक्तातनुंतनुभृतस्तनुमाप्नुवंति ॥ भालेविलोचनवतींगलनीललक्ष्मींवामार्धबंधुरवधूंविधुरावरोधाः ॥ ८४ ॥ ज्ञात्वाप्रभावमतुलंमणिकर्णिकायांयः पुद्गलंत्यजतिचाशुचिपूयगंधि ॥ स्वात्मावबोधमहसासहसामिलित्वाकल्पांतरेष्वपिसनैवपृथक्त्वमेति ॥ ८५ ॥

मस्तदीयाःकातांतायेदूतास्तत्कृतबंधनंताडनंचकिंविस्मृतमेव ॥ विस्मरणेहेतुमाह ॥ शंभोरनुग्रहस्यदयायाःपरिग्रहेणप्राप्त्यालभ्याचासौकाशीचेतितांविहायभवान्किमुयातिकिमर्थंयाति ॥ विस्मरणाभावेएतन्नघटतइतिभावः ॥ कथंभूताम् ॥ करस्थमुक्तिमिति साधनेसाध्योपचारः ॥ करस्थामुक्तिर्यस्यामितिबहुव्रीहिर्वा ॥ अतोभवान्मूढइति ॥ ८२ ॥ ननुतीर्थांतरकरणेना पिमुक्तिर्भविष्यत्यतस्तदर्थंयातीत्याशंक्याह ॥ तीर्थांतराणीति ॥ श्रेयःपुत्रपशुधनादि ॥ बतेतिखेदेहर्षेवा ॥ भवमूलनाशमितिवापाठः ॥ ८३ ॥ अधिकारिभेदमतमादायाह ॥ काशीपुरीति ॥ अन्यथासायुज्यमुक्तिर्मणिकर्णिकायामित्यनेनविरोधापत्तेः ॥ लक्ष्मींशोभाम् ॥ वामार्धेबंधुरासुन्दरीवधूर्भवानीयस्यास्ताम् ॥ विधुरावरोधागतावरोधागतावरणाज्ञानाइत्यर्थः ॥ स्वतन्त्राइ तिवा ॥ विबुधावरोधाइतिपाठेविबुधादेवाअवरोधोऽतःपुरेयेषांतेतथा ॥ विधुरावबोधाइतिपाठेविधुरोऽवबोधोऽज्ञानंदेहगेहादिविषयेयेषांतेतथा ज्ञानैकस्वभावाइत्यर्थः ॥ ८४ ॥ क्षेत्रप्रभावज्ञा नामधिकारिणांविशेषमाह ॥ ज्ञात्वेति ॥ प्रभावंमाहात्म्यंक्षेत्रस्यमणिकर्णिकायामेत्यर्थात् ॥ मणिकर्णिकायांपुद्गलंशरीरंयस्त्यजति ॥ कथंभूतम् ॥ विपूयगंधिपूयंपक्कशोणितम् ॥ विशेषे



CC-0. Shri Krishna Museum Kurukshetra. Digitized by eGangotri

णपूयगंधोवर्ततेयत्रतत्तथा ॥ स्वात्मावबोधमहसास्वरूपभूतप्रकाशचैतन्येनसहसातत्क्षणादेवमिलित्वाएकभावंप्राप्यपृथक्त्वंपृथग्भावंनैवेतिनैवप्राप्नोतीत्यर्थः ॥ ८५ ॥ ननु काशीवासयुगान्यष्टौदिनैकंपुरु
षोत्तमे ॥ तदेवाष्टगुणंपुण्यंविरजामुखदर्शने ॥ यागतिर्योगयुक्तस्यवाराणस्यांमृतस्यच ॥ सागतिर्घटिकार्धेनपुरुषोत्तमदक्षिणे ॥ सिंहाचलसमक्षेत्रंसमंताद्योजनत्रयम् ॥ गयाप्रयागकाशीभ्यःसत्यंशत
गुणाधिकमित्यादिवचनात्काशीतोपिमहत्तरंतीर्थांतरंश्रूयते तत्किमर्थमतिस्तुतिःक्रियतइत्याशंक्याह ॥ रागादीति ॥ काशीपुरीमपरतीर्थसमामन्यतीर्थसमांन्यूनामित्यर्थः ॥ येकल्पयंतिसमंतात्सर्वतः
सर्वत्रेत्यर्थः ॥ तैःसहनसंभाषणीयमित्यन्वयः ॥ कथंभूताः ॥ रागादिदोषैःपरिपूराणिपरिपूरितानिमनोहृषीकाणिअंतरिंद्रियबहिरिंद्रियाणियेषांतेतथा ॥ पाठान्तरे परिभूतान्यवशीकृतानिमनो
हृषीकाणियेषांतइत्यर्थः ॥ समस्ताइतिपाठेयेसर्वेइत्यर्थः ॥ कुतस्तैःसहनपरिभाषणीयमित्यतआह ॥ तेपापिनइति ॥ शतमप्यंधानांनपश्यतीतिन्यायादितिभावः ॥ कथंभूताम् ॥ अतुलः
परिमाणरहितोदिव्योऽलौकिकोमहाप्रभावोऽतिशयसामर्थ्यंयस्यास्ताम् ॥ विषयाभिमुखानांरागिणांतैस्तैर्वचनैस्तत्तत्तीर्थकरणेतुव्युत्पादनमात्रंक्रियतेनतुकाश्यादिभ्योऽधिकत्वमन्येषांतीर्थानांविधी
यते अन्यथातत्रतत्रविरोधप्रसंगात् ॥ ८६ ॥ वाराणसीमिति ॥ प्रायेणस्पष्टम् ॥ कुतःकस्मान्निमित्तात् ॥ राज्यादिलक्ष्मीप्राप्त्यर्थमितिचेत्तत्राह ॥ प्राप्येति ॥ अजोब्रह्मा ॥ आदिपदेनेन्द्रादयो
गृह्यंते ॥ तैरप्यसुलभामित्यपिशब्दस्योभयत्रसंबंधः ॥ स्थिरमोक्षलक्ष्मींस्वरूपावस्थानकैवल्यश्रियःसाधनभूतामितिसाधनेसाध्योपचारइत्यर्थः॥स्थिरमोक्षलक्ष्मीस्वरूपांवाराणसीमितिवा ॥ किमुकाम

रागादिदोषपरिपूरमनोहृषीकाःकाशीपुरीमतुलदिव्यमहाप्रभावाम् ॥ येकल्पयंत्यपरतीर्थसमांसमंतात्तेपापिनोनसहतैःपरिभाषणीयम् ॥ ८६ ॥
वाराणसींस्मरहरप्रियराजधानींत्यक्त्वाकुतोव्रजसिमूढदिगंतरेषु ॥ प्राप्याप्यजाद्यसुलभांस्थिरमोक्षलक्ष्मींलक्ष्मींस्वभावचपलांकिमुकामयेथाः ॥ ८७ ॥
विद्याधनानिसदनानिगजाश्वभृत्याःस्रक्चंदनानिवनिताश्चनितांतरम्याः ॥ स्वर्गोप्यगम्यइहनोद्यमभाजिपुंसिवाराणसीत्वसुलभाशलभादिमुक्तिः ॥ ८८ ॥
धात्राधृतानितुलयातुलनामवैतुंवैकुंठमुख्यभुवनानिचकाशिकाच ॥ तान्युद्ययुर्लघुतयान्यगियंगुरुत्वात्तस्थौपुरीहपुरुषार्थचतुष्टयस्य ॥ ८९ ॥ काशी
पुरीमधिवसन्निहनरोनरोपिह्यारोप्यमाणइहमान्यइवैकरुद्रः ॥ नानोपसर्गजनिसर्गजदुःखभारैःकर्मापनुद्यसविशेत्परमेशधाम्नि ॥ ९० ॥

येथाःकिमर्थंवांछेथाः ॥ केनापिभाग्योदयेनस्थिरमोक्षलक्ष्मींवाराणसींसाक्षादनायासेनलब्ध्वाचंचलायाराज्यादिलक्ष्म्याःप्राप्त्यर्थमन्यत्रगमनमनुचितमितिभावः ॥ ८७ ॥ अजाद्यसुलभामित्येतद्विवृ
णोति ॥ विद्येति ॥ अगम्यःअप्राप्यः ॥ पूर्वार्धेपियथायोग्यंविपरिणमय्यानयैवक्रिययासंबंधः ॥ तुशब्दःपूर्वोक्तवैलक्षण्यार्थः ॥ तदेववैलक्षण्यमाह ॥ शलभादिमुक्तिः शलभादीनामपिमुक्तिस्वरूपाशल
भादीनांमुक्तिर्यस्यांसेतिवा ॥ ८८ ॥ अन्यानिक्षेत्राणिकाशीसमानिनभवंतीतिकैमुत्यन्यायेनाह ॥ धात्रेति ॥ तुलयातुलनपात्रेण ॥ तुलनांपरिमाणम् ॥ वैकुंठमुख्यमादिर्येषांसत्यादीनांभुवनानांता
नितथाउद्ययुरूर्ध्वंययुः ॥ लघुतयाऽल्पत्वेन ॥ इयंकाशीन्यक्अधस्तस्थावित्यन्वयः ॥ ८९ ॥ काशीस्थोयःकश्चिदपिविश्वेश्वरइवमाननीयइत्याह ॥ काशीपुरीमिति ॥ इहकाश्यामारोप्यमाणःस्थाप्य
मानोऽर्थादीश्वरेण काशीपुरीमधिवसन्काश्यांतिष्ठन्नरःअनरोवापशुस्थावरादिर्योभवतिसएकरुद्रःकेवलविश्वेश्वरइवमान्योमाननीयः ॥ तत्रहेतुमाह ॥नानोपसर्गैर्जनिरुत्पत्तिर्येषांसर्गजदुःखभाराणांतैः ॥
यद्वा नानोपसर्गाआध्यात्मिकादितापाश्चनिसर्गःस्वभावश्चवासनेतियावत् ॥ तज्जनितैर्दुःखभारैःक्लेशनिवहैःकर्मपापकर्मापनुद्यज्ञानद्वारापरमात्मज्योतिषिप्रविशेदिति ॥ ज्ञानमुत्पद्यतेपुंसांक्षयात्पापस्य
कर्मणइतिश्रुतेः ॥ साधारण्येनवापुण्यपापलक्षणकर्मापनुद्य ॥ ९० ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्थिरापद्रस्तेनदेहेनस्वप्रकाशंपरानंदवपुरयंजनःकथंनगृह्णातीत्यनुक्रोशन्निवाह ॥ स्थिरापायमिति ॥ स्थिरापायंनिश्चलापदम् ॥ तत्रहेतुर्जननेति ॥ बुद्धिस्थत्वादस्यामितिनिर्देशः ॥ काशीस्थस्य विश्वेश्वरस्यदेव्याअग्रेकथनानुवादरूपत्वाद्वा ॥ अहहेत्यनुतापेऽप्रहर्षेआक्रोशेवा ॥ काश्यांकायंविहायस्वप्रकाशमत्यंतनिश्चलंस्वात्मानंदरूपंपदंवपुःस्वरूपंब्रह्मअसौविमूढोलोकःकथंकुतोनपरिगृह्णीत ॥ निकृष्टस्यत्यागेउत्कृष्टस्यचप्राप्तौदृष्टांतमाह ॥ स्फुटितंभग्नंकांस्यपात्रादिकंविनिमयन्परिवर्तयन्यथादृढतरंसमुज्ज्वलंपात्रादिकंगृह्णातितद्वत् ॥ काश्यांविनिमयन्नितिपाठेकाश्यामित्यस्यदृष्टांतेनसंबं धान्नपौनरुक्त्यम् ॥ ९१ ॥ पुनरप्याक्रोशन्निवाह ॥ अहोइति ॥ विपद्वारैर्विपत्तिसमूहैः ॥ सारैर्दृढैः ॥ ध्वंसितधनैर्विनाशितार्थैः ॥ क्षितावितिप्रतीत्यभिप्रायेण ॥ कथंभूतायाम् ॥ यत्रकाश्यां शिवोनिधनेमरणावसरेश्रुतौदक्षिणकर्णेकिंचिद्वाङ्मनसातीतंवस्तुकथयति ॥ ततःकिमतआह ॥ प्रविशतिनयेनेति ॥ उदरदरीमुदररूपांकंदराम् ॥ ९२ ॥ नन्वन्यत्रगत्वावनवाससमीरभक्षणादि नाकैवल्यंसाधनीयंकिंकाशीनत्याज्येत्याग्रहेणतत्राह ॥ काशिवासिनीति ॥ काशीवासिवनेचरयोर्यथासंख्यंद्वित्रीत्यादिविशेषणानि ॥ वनेचरोवानप्रस्थादिः ॥ अहोइत्याश्चर्ये ॥ तयोर्मध्ये पूर्वोक्तविशेषणविशिष्टेकाशीवासिनिजनेविशिष्टताश्रेष्ठत्वम् ॥ वनवासादेःकैवल्यासाधकत्वात्काशीवासस्यदुष्कृतिनोपिकैवल्यहेतुत्वात्काशीनत्याज्येतिभावः ॥ अविशिष्टतेतिपाठेकाशीवासिनितन्न गरवासिनिजनेवनेचरेकाशीस्थवनचरेइत्यादीतिबोद्धव्यम् ॥ ९३ ॥ विशिष्टतायांहेतुमाह ॥ नास्तीति ॥ अंतंमरणंकुर्वंतितेंऽतकृतस्तेषांप्राप्तमरणानामित्यर्थः ॥ विशेषगत्यभावेहेतुमाह ॥ यद्य

स्थिरापायंकायंजननमरणक्लेशनिलयंविहायास्यांकाश्यामहहपरिगृह्णीतनकुतः ॥ वपुस्तेजोरूपंस्थिरतरपरानंदसदनंविमूढोऽसौजंतुःस्फुटितमिवकां स्यंविनिमयन् ॥ ९१ ॥ अहोलोकःशोकंकिमिहसहतेहंतहतधीर्विपद्वारैःसारैर्नियतनिधनैर्ध्वंसितधनैः ॥ क्षितौसत्यांकाश्यांकथयतिशिवोयत्रनिधने श्रुतौकिंचिद्भूयःप्रविशतिनयेनोदरदरीम् ॥ ९२ ॥ काशिवासिनिजनेवनेचरेद्वित्रिभुज्यपिसमीरभोजने ॥ स्वैरचारिणिजितेंद्रियेप्यहोकाशिवासि निजनेविशिष्टता ॥ ९३ ॥ नास्तीहदुष्कृतकृतांसुकृतात्मनांवाकाचिद्विशेषगतिरंतकृतांहिकाश्याम् ॥ बीजानिकर्मजनितानियदूषरायांनांकूरयंति हरदृग्ज्वलितानितेषाम् ॥ ९४ ॥ शशकामशकाबकाःशुकाःकलविंकाश्चवृकाःसजंबुकाः ॥ तुरगोरगवानरानरागिरिजेकाशिमृताःपरामृतम् ॥ ९५ ॥

स्मादूषरायामूषरवत्यांकाश्यांपुण्यपापकर्ममात्रजनितानि बीजान्यदृष्टानितेषांनांकूरयंतिनारोहंत्युद्भवंतीत्यर्थः ॥ ऊषरायांहेतुंवदन्बीजानिविशिनष्टि ॥ हरदृग्ज्वलितानिहरचक्षुर्दग्धानि हरोपदिष्ट ज्ञानज्वलितानीतिवा ॥ नन्वेतत्काश्यांकृतपापानांकालभैरवयातनाश्रवणेनविरुध्यते ॥ न ॥ पापेप्रवृत्तिर्माभूदित्यभिप्रायेणविभीषिकामात्रंतत् ॥ तथाचोक्तम् ॥ ऊषरापुण्यपापानांधन्यावाराणसी पुरीति ॥ पाद्मेच ॥ उपपातकिनश्चैवमहापातकिनश्चये ॥ तेषांतत्क्षेत्रसामर्थ्यादघानिक्षयमाप्नुयुः ॥ लगोपि ॥ नाविमुक्तेनरःकश्चिन्नरकंयातिकिल्बिषी ॥ ईश्वरानुगृहीताहिसर्वेयांतिपरांगतिमिति ॥ काश्यनधिकरणपापकृद्विषयत्वाद्वैतस्य ॥ रुद्रयातनाप्रापककर्मातिरिक्तपुण्यपापकर्मदाहेनमुक्त्यभिप्रायेणवैतद्वचनम् ॥ तथाचकाशीकृतेभ्योऽकृतप्रायश्चित्तेभ्यःपापकर्मभ्योऽतिरिक्तकर्ममात्राणि कर्मजनितानीत्यत्रकर्मशब्देनविवक्षितानि ॥ क्षीयंतेचास्यकर्माणीत्यत्रप्रारब्धातिरिक्तानिकर्माणितत्त्वज्ञानेननाश्यानीतिवत् ॥ ९४ ॥ अधिकारिविशेषाणामेवात्रकैवल्यंनपश्वादीनामितिमतंनिराकुर्व न्नाह ॥ शशकाइति ॥ कलविंकाश्चटकाः ॥ चटकःकलविंकःस्यादित्यमरः ॥ परामृतंपरब्रह्मस्वरूपाभवंतीत्यर्थः ॥ अत्रयद्यपिमरणस्यसर्वेषामविशेषेणपरममुक्तिःफलत्वेनश्रूयतेतथापिशुचीनां परमात्मभक्तानांतदर्पितकर्मणांपरममुक्तिस्तदपकृष्टानामग्निप्रवेशादीनांसामीप्यंतिर्यक्प्रभृतीनामत्यंतपापीयसांचसारूप्यंततोप्यधमानांपतितानांसालोक्यमितिकेचित् ॥ चतुर्विधपरिमाणायांकाश्यां



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यथायथायोगपीठादिप्रकर्षस्तथामरणफलापकर्षइतिचान्ये॥तथाचपाद्मे ॥ परिमाणंचवक्ष्यामितन्निबोधतसत्तमाः॥मध्यमेश्वरमारभ्ययावद्देहलिविघ्नपम्॥सूत्रंसंस्थाप्यतद्दिक्षुभ्रामयेन्मंडलाकृति ॥ तत्र
याजायतेरेखातन्मध्येक्षेत्रमुत्तमम्॥काशीतियद्विदुर्वेदास्तत्रमुक्तिःप्रतिष्ठिता॥काश्यंतःपरमंक्षेत्रंविशेषफलसाधनम्॥वाराणसीतियत्ख्यातंतन्मानंनिगदामिवः॥दक्षिणोत्तरयोर्नद्योर्वरणासिश्चपूर्वतः॥ जाह्न
वीपश्चिमेवापिपाशपाणिर्गणेश्वरः॥तस्यामंतःस्थितंदिव्यंविशेषफलसाधनम्॥अविमुक्तमितिख्यातंतन्मानंचब्रवीमिवः॥विश्वेश्वराच्चतुर्दिक्षुधनुःशतयुगोन्मितम्॥ अविमुक्ताभिधंक्षेत्रंमुक्तिस्तत्रनसंशयः ॥
गोकर्णेशःपश्चिमेपूर्वतश्चगंगामध्यमुत्तरेभारभूतः ॥ ब्रह्मेशानौदक्षिणेसंप्रदिष्टस्तत्तुप्रोक्तंभवनंविश्वभर्तुरिति ॥ अस्तुवायथातथातथापिपरंपरयाकैवल्योपपत्तेः ॥ तथाचसति काश्यामवश्यंत्यजतांशरीरं
शरीरिणांनास्तिपुनःशरीरम् ॥ यद्यास्तिकंठेगरलंललाटेत्रिलोचनंचंद्रकलाचमौलावित्यादिवचनंचसमंजसंभवति ॥ ९५ ॥ एवंकाश्यांमृतानांकैवल्यमुक्त्वाजीवतांरुद्रसारूप्यमाह अरुद्रेति
द्वाभ्याम् ॥ अथवारुद्रावासइतिनामनिर्वक्तुंप्रथमंतावत्काशीस्थानांजंतुमात्राणांरुद्ररूपतामाह ॥ अरुद्रेति ॥ हेगिरींद्रजेनिरंतरंसर्वदाकाशिनिवासिनोजनाममपारिषदागणामताःसंमताइत्य
न्वयः ॥ ननुत्वत्पार्षदाअंतरिक्षेलोकेतिष्ठंतीतिप्रसिद्धंतत्राह ॥ धरांगताःकर्मभूमिंप्राप्तास्ततोप्येतेऽधिकाइत्यर्थः ॥ प्रसिद्धपारिषदसारूप्यमाह ॥ अरुद्राअभयंकराःशोभनाइतियावत् ॥ रुद्राक्षाएव
फणींद्राःशेषादयोभूषणानियेषांतेतथा ॥ यद्वा प्रसिद्धारुद्रानभवंतीत्यरुद्रास्तेचतेरुद्राक्षफणींद्रभूषणाश्च ॥ त्रिपुंड्रंनामांगुलित्रयेणललाटेदीयमानाविभूतिस्तदेवचंद्रार्धंधरंतीतितथा ॥ अथवारूप
कमंतरेणयथाश्रुतएवार्थः ॥ तथाचपाद्मे ॥ काश्यांवसंतियेजीवास्तान्पश्यंतिसुरोत्तमाः ॥ चतुर्भुजांस्त्रिनयनान्गंगोद्भासितमूर्धजानिति ॥९६॥ तर्हिकिंजनामनुष्याएवात्ररुद्रशरीरामत्स्यसृगालाद्याने

अरुद्ररुद्राक्षफणींद्रभूषणास्त्रिपुंड्रचंद्रार्धधराधरांगताः ॥ निरंतरंकाशिनिवासिनोजनागिरींद्रजेपारिषदाममताममम ॥ ९६ ॥ यावंतएवनिवसंतिचजंतवोऽत्र
काश्यांजलस्थलचराझषजंबुकाद्याः ॥ तावंतएवमदनुग्रहरुद्रदेहादेहावसानमधिगम्यमयिप्रविष्टाः ॥ ९७ ॥ येतुवर्षेषवोरुद्रादिविदेविप्रकीर्तिताः ॥
वातेषवोंऽतरिक्षेयेयेभुव्यन्नेषवःप्रिये ॥ ९८ ॥ रुद्रादशदशप्राच्यवाचीप्रत्यगुदक्स्थिताः ॥ ऊर्ध्वदिक्स्थाश्चयेरुद्राःपठ्यंतेवेदवादिभिः ॥ ९९ ॥

त्यतआह ॥ यावंतइति ॥ जलस्थलयोश्चरंतीतितथा ॥ एतस्यैवविवरणंझषजंबुकाद्याइति ॥ मत्स्यसृगालादयइत्यर्थः ॥ सर्वेषामविशेषेणकैवल्यावधिमाह ॥ देहावसानमिति ॥ मयिपर
मात्मनिईश्वरशरीरेवा ॥ ९७ ॥ एवंकाशीमाहात्म्यंनिर्वर्ण्यरुद्रावासंनामनिर्वक्ति येत्विति सार्धत्रयेण ॥ अथवैवंश्लोकद्वयेनभूमिकामारचय्यरुद्रावासंनामनिर्वक्ति येत्वितिसार्धत्रयेण ॥ वर्षेषवो
वर्षाण्येवेषवोबाणायेषांतेतथा ॥ वातेषवोवाताएवइषवोयेषांतेतथा ॥ अन्नेषवोऽन्नमेवेषवोबाणायेषांतेतथा ॥९८॥ रुद्राइत्यस्यावृत्तिःसर्वत्रान्वयार्था ॥ दशदशेत्युपलक्षणंयेकेचनेत्यर्थः ॥ चकारादधो
दिक्स्थाविदिक्स्थाश्चगृह्यंते ॥ वेदवेदिभिःश्रुत्यभिज्ञैः ॥ तथाचवेदवचनम् ॥ अथत्रीणियजूंष्युच्यंते नमोरुद्रेभ्योयेपृथिव्यांयेंतरिक्षेयेदिवियेषामन्नंवातोवर्षमिषवस्तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीची
र्दशोदीचीर्दशोर्ध्वास्तेभ्योनमस्तेनोमृडयंतुतेयंद्विष्मोयश्चनोद्वेष्टितंवोजंभेदधामीति ॥ अस्याःश्रुतेरयमर्थः ॥ अथपृथिव्यादिलोकत्रयभेदेनोद्दिष्टलोकभेदाच्चयजुस्त्रयंद्रष्टव्यम् ॥ तदाएवंपाठःसंप
द्यते ॥ नमोरुद्रेभ्यइत्युपक्रम्ययेपृथिव्यांयेषामन्नमिषवइत्याद्योमंत्रः ॥ येंऽतरिक्षेयेषांवातइषवइतिद्वितीयोमंत्रः ॥ येदिवियेषांवर्षमिषवइतितृतीयोमंत्रः ॥ तेभ्योदशप्राचीरित्यादिसर्वत्रसमानम् ॥ येरुद्राः
पृथिव्यांवर्ततेतेष्वपिरुद्रेषुयेषांरुद्रविशेषाणामन्नमेवेषवोबाणाअपथ्यान्नभक्षणेप्रवर्त्यवाअन्नार्थंचौर्यंकारयित्वावायान्हिंसंतितान्प्रतिहिंसकानांरुद्राणामन्नमेवेषवस्तेभ्यः पृथिव्यांस्थितेभ्योऽन्नबाणकेभ्य
श्चरुद्रेभ्योनमः ॥ तथायेरुद्राअंतरिक्षेवर्ततेतेषांमध्येपियेषांवातएवेषवस्तीव्रवायुनारोगानुत्पाद्याहिंसंतितेभ्योंऽतरिक्षवर्तिभ्योवातेषुभ्यश्चरुद्रेभ्योनमोऽस्तु ॥ तथायेरुद्रादिविवर्ततेतेष्वपियेषांरुद्रविशेषाणां

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दशमाचीः ॥ दशेत्युपलक्षणम् ॥ येकेचनरुद्राःपूर्वोक्तेष्वेवप्राचीःप्राचीदिग्जाः । प्रतीचीःप्रती वर्षमेवेषवोवाणाअतिवृष्टयनावृष्टिभ्यांप्राणिनोहिंसंतितेभ्योदिविस्थितेभ्योवर्षेषुभ्यश्चरुद्रेभ्योनमोऽस्तु ॥ दशोर्ध्वाइत्यधोदिक्स्थानांविदिक्स्थानांचोपलक्षणम् ॥ यत्रकुत्र चीदिग्जाः ॥ विभक्तिव्यत्ययेनोपचारात् ॥ तेभ्योनमोस्त्वित्यग्रिमेणनमःपदेनसंबंधः ॥ एवंदशदक्षिणादिषुदशोर्ध्वाऽतेषुयोज्यम् ॥ एवंदक्षिणादिषूर्ध्वांतेषुयोज्यम् ॥ चित्स्थितेभ्योरुद्रेभ्योनमइतिवाक्यार्थः ॥ अत्रकेचित् ॥ कीदृशोनमस्कारइतिसएवविशिष्यते ॥ दशप्राचीःप्राङ्मुखत्वेनांजलिकरणेदशांगुलयःप्रागग्राभवंति ॥ एवंदक्षिणादिषूर्ध्वांतेषुयोज्यम् ॥ दशदक्षिणादशप्रतीचीर्दशउदीचीर्दशऊर्ध्वास्तेभ्यस्तेभ्योनमोस्त्वितिव्या ईदृशैरंजलिविशेषैस्तेभ्योरुद्रेभ्योनमोऽस्तु ॥ यद्वा तेभ्योरुद्रेभ्योदशप्राचीरंगुलीःकरोमिनमस्कारार्थमितिसर्वत्रसंबद्ध्यते ॥ अतोविचार्ययद्युक्तंतदेवविद्वद्भिर्ग्राह्यमिति ॥ तेचरुद्रानोऽस्मा चक्षते ॥ तेषांमते ॥ रुद्रादशदशप्राच्यवाचीप्रत्यगुदक्स्थिताः ॥ ऊर्ध्वदिक्स्थाश्चयेरुद्राःपठ्यंतेवेदवादिभिरितिस्कांदवचनंविरुध्यते ॥ न्मृडयंतुसुखयंतुतेवयंनमस्कृतरुद्राःसंतोयंवैरिणंतूष्णीमवस्थितमपिद्विष्मःयश्चवैरीनोऽस्मांस्तूष्णीमवस्थितानपिद्वेष्टितद्रुभयविधंवैरिणंहेरुद्रावोयुष्माकंजंभेविदारितास्येदधामिस्थापयामीति ॥ ९९ ॥ तेचतेसर्वेचतेभ्यः ॥ १०० ॥ नामनिर्वचनप्रयोजनमाह ॥ तस्मादिति ॥ वर्णान्ब्राह्मणादीन् ॥ पूर्वोक्तान्रुद्राननूद्यनामनिर्वचनमाह ॥ असंख्याताइति ॥ अधिभूतलइत्यंतरिक्षादीनामुपलक्षणम् ॥

असंख्याताःसहस्राणियेरुद्राअधिभूतले ॥ तत्सर्वेभ्योऽधिकाःकाश्यांजंतवोरुद्ररूपिणः ॥१००॥ रुद्रावासस्ततःप्रोक्तमविमुक्तंघटोद्भव ॥ तस्मात्समर्च्य काशिस्थान्वर्णान्वर्णेतराश्रमान् ॥ १ ॥ श्रद्धयेश्वरबुद्ध्याचरुद्रार्चाफलभाङ्नरः ॥ २ ॥ श्मशब्देनशवःप्रोक्तःशानंशयनमुच्यते ॥ निर्वचंतिश्मशानार्थं मुनेशब्दार्थकोविदाः ॥ ३ ॥ महांत्यपिचभूतानिप्रलयेसमुपस्थिते ॥ शेरतेऽत्रशवाभूत्वाश्मशानंतुततोमहत् ॥ ४ ॥ अप्सुभूरिहलयेलयंव्रजेदापऔर्वं वदनोग्रकंदरे ॥ मातरिश्वनिमहातनूनपाद्व्योम्निसंक्षयतिवैसदागतिः ॥ ५ ॥ व्योमचापिलयमेत्यहंकृतौसापिषोडशविकारसंयुता ॥ लीयतेमहतिबुद्धिसं ज्ञकेहामहान्प्रकृतिमध्यगोभवेत् ॥ ६ ॥ सागुणत्रयमयीचनिर्गुणंतंपुमांसमवगुह्यतिष्ठति ॥ पंचविंशतितमःपरःपुमान्देहगेहपतिरेषजीवकः ॥ ७ ॥

यद्वा आश्रमाश्चब्रह्मचर्याद्याश्रमवंतः ॥ यद्वा वर्णेभ्यइतरेयेआश्रमाःआश्रमवंत वर्णेतराश्चरजकादयः ॥ आश्रमानिति ॥ आसमंताच्छ्रमंकुर्वंतीत्याश्रमाश्च पशुपक्षिरूपादयः ॥ महाश्मशाननामनिर्वक्ति श्मशब्देनेतिद्वाभ्याम् ॥ श्मशानार्थंश्मशा स्तान् ॥ वर्णत्वेनाश्रमित्वेनचसमर्च्येत्यर्थः ॥ १ ॥ नरोमनुष्यमात्रोरुद्रार्चाफलभाग्भवेदित्यर्थः ॥ २ ॥ अत्रकाश्यांशवीभूय ॥ ४ ॥ नशब्दयोरर्थम् ॥ ३ ॥ एवंश्मशानशब्दयोरर्थं प्रदर्श्यनिर्वचनमाह ॥ महांत्यपीति ॥ अपिशब्देनाहंकारादयोगृह्यंते ॥ शवामृताः ॥ शेरतेलीयंते ॥ तस्यवदनोग्रकंदरेमुखवर्तिम शयनमेव ॥ तस्माद्वाएतस्मादात्मनआकाशःसंभूतइत्यादिश्रुत्युक्तसृष्टिप्रातिलोम्येनदर्शयति अप्सुभूरितिचतुर्भिः ॥ इहाविमुक्ते ॥ और्वशब्देनात्रतेजोगृह्यते ॥ एतिप्राप्नोति ॥ अहंकृतौ हादर्यांतिजसीत्यर्थः ॥ मातरिश्वनिवायौमहातनूनपात् महाभूतलक्षणंतेजइत्यर्थः ॥ वशब्दःश्रुतिप्रसिद्धिद्योतनार्थः ॥ संक्षयतिलीयते ॥ सदागतिर्वायुः ॥ ५ ॥ तेचैकादशेन्द्रियपंचमहाभूतरूपास्तत्संयुताहैरण्यगर्भीसमष्टिबुद्धिर्महत्तत्त्वमितिवेदांतिमतंगृहीत्वामहां अहंकारे ॥ साअहंकृतिः ॥ अधिष्ठातृदेवैःसहेंद्रियाणामभेदविवक्षयाविकाराणांषोडशत्वम् ॥ तंप्रसिद्धंप्रकृत्यधिष्ठातारमितियावत् ॥ तमेवपुमांसंविशिनष्टि ॥ तंविशिनष्टि ॥ बुद्धिसंज्ञकइति ॥ आधिदैवाध्यात्मभेदेनवापदद्वयम् ॥ इहकेति ॥ प्रकृतिमध्यगःप्रकृतौलीनइत्यर्थः ॥ ६ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पंचविंशतितमइति ॥ पंचविंशतेःपूरणःपरःपुमान्प्रकृतेःपरःपुरुषइत्यर्थः ॥ देहएवगेहंतस्यदेहदैहिकयोर्वापतिः ॥ देहेंद्रियादीन्जीवयतीतिजीवकः ॥ ७ ॥ प्राकृतःप्रकृतिकार्यमात्रसंबंधी ॥ कीदृशः ॥ हंसयानहरिरुद्राणांवर्जितंवर्जनंयस्मिन्सतथा ॥ हंसयानोब्रह्मा ॥ तथाचोक्तं विष्णोःसामान्यलक्षणेपरेऽहमेवासमित्यस्मिन्श्लोकेकैवल्यदीपिकाकारेण ॥ नचसगुणेषुचतुर्ष्वव्याप्तिस्तेषामपिस्वरूपातिरोधानात् ॥ यत्तु ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे ॥ परस्यांतेकृतात्मानआविशंतिपरंपदमितितत्त्वश्वमेधादिनाहिरण्यगर्भत्वप्राप्तपरमितिज्ञातव्यम् ॥ कल्पभेदाभिप्रायेणवैतद्वचनम् ॥ यद्वा हंसैःपरमहंसैर्यान्ज्ञानंप्राप्तिर्वायस्य ॥ यद्वा हंतिविपक्षमितिहंसोगरुडःसयानंयस्यसतथा ॥ हंसयानश्चासौहरिश्चेतिव्याख्येयम् ॥ अथवा हंसयानहरिरुद्रैरपिवर्जितोरहितइत्यर्थः ॥ तथाचवासिष्ठे ॥ परमेष्ठ्यपिनिष्ठावान्हीयतेहरिरप्यजः ॥ भवोप्यभावमायातिकैवास्थामादृशेजनइति ॥ प्रकृत्यधिष्ठातुरपिपुरुषस्यपरमात्मनिलयमाह ॥ कालमूर्तिरित्यर्धेन ॥ कालमूर्तिः सर्वसंहारकः ॥ कलयतिसंहरत्यात्मसात्करोतीत्यर्थः ॥ परईश्वरः परमात्मेत्यर्थः ॥ तथाचश्रुतिरीश्वरोग्रइति ॥ ८ ॥ ईश्वरस्वरूपंदर्शयन्माधवोमाधवयोरैक्यमाह ॥ सवैइति ॥ वैशब्दः

प्राकृतःप्रलयएषउच्यतेहंसयानहरिरुद्रवर्जितः ॥ कालमूर्तिरथतंचपूरुषंहेलयाकलयतीश्वरःपरः ॥ ८ ॥ सवैमहाविष्णुरितीर्यतेबुधैस्तंवैमहादेवमुदाहरंति ॥ सोंऽतादिमध्यैःपरिवर्जितःशिवःसश्रीपतिःसोपिहिपार्वतीपतिः ॥ ९ ॥ दैनंदिनेऽथप्रलयेत्रिशूलकोटौसमुत्क्षिप्यपुरींहरःस्वाम् ॥ बिभर्तिसंवर्तमहास्थिभूषणस्ततोहिकाशीकलिकालवर्जिता ॥ ११० ॥ ॥ स्कंदउवाच ॥ ॥ वाराणसीतिकाशीतिरुद्रावासइतिद्विज ॥ महाश्मशानमित्येवंप्रोक्तमानंदकाननम् ॥११॥ इतिदेवीपुरःप्रोक्तंदेवदेवेनशंभुना ॥ यथाविष्णोःपुराख्यातंतथैवचमयाश्रुतम् ॥ तच्चत्वदग्रेकथितंरहस्यंकाशिजंमहत् ॥१२॥

प्रसिद्धावद्योती ॥ वेवेष्टिव्याप्नोतीतिविष्णुः ॥ जीवकालाकाशादिव्यावृत्त्यर्थंमहेतिविशेषणम् ॥ यद्वा विशतिव्याप्नोतीतिविष्णुः ॥ विशतेर्व्याप्तोतेर्वेतियास्कवचनात् ॥ यद्वा महाविर्महापक्षी जीवात्मा ॥ परमात्मनइवआत्मनोपिद्वासुपर्णेत्यादिश्रुत्योपचारवृत्त्यापक्षित्वस्याभिधानात् ॥ महावेर्जीवात्मनोजटायोर्वाकरुणामृतंस्नुतंयेनसमहाविष्णुः ॥ तथाचहनुमद्वाक्यम् ॥ योमहान्पूजितोव्यापीमहावेःकरुणामृतम् ॥ स्नुतंयेनजटायोश्चमहाविष्णुंनमाम्यहमिति ॥ देवनंदेवःस्वप्रकाशस्तस्यमहत्त्वंनामब्रह्मादिनियंतृत्वम् ॥ शिवआनंदरूपः ॥ ९ ॥ एवमर्थात्प्राकृतप्रलयेविश्वेश्वरस्यक्रीडाधिष्ठानत्वेनकाश्याःस्थितिमभिधायदैनन्दिनेपिस्थितिप्रकारमाह ॥ दैनंदिनइति ॥ अथवा ननुप्राकृतप्रलयेकाश्याअपिकिंलयेनभाव्यंनेत्याह ॥ दैनन्दिनइति ॥ अथोऽपिदैनन्दिनप्रलयेतावद्भिभर्त्येवंप्राकृतप्रलयेपिबिभर्तीत्यर्थः ॥ संवर्तमहास्थिभूषणःप्रलयकालीनब्रह्मस्थ्यलंकरणः ॥ कलिश्चकालश्चमृत्युस्ताभ्यांवर्जितारहिताअथवाताभ्यांमुक्तिप्रतिबंधहीनेत्यर्थः ॥ ११० ॥ वाराणस्यादिनामनिर्वचनमुपसंहरति ॥ वाराणसीति ॥ ११ ॥ काशीरहस्यकथनमुपसंहरति ॥ इतिदेवीपुरइति ॥ पुरोऽग्रतः ॥ यथाविष्णोःपुराख्यातंकथितंदेव्याःपुरःप्रोक्तंतथैवचतादृशमेवमातु

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

रुत्संगस्थितेनमयाश्रुतमित्यर्थः ॥ १२ ॥ अध्यायपाठादेःफलमाह ॥ जप्त्वेति ॥ पठित्वेत्यर्थः ॥ १३ ॥ अत्यौत्सुक्येनप्रश्नकरणेस्वच्छंदयति ॥ अतःपरमिति ॥ ११४ ॥ इतिश्रीरामानन्दकृतायांकाशीखण्डटीकायांत्रिंशत्तमोऽध्यायः ॥ ३० ॥ एकत्रिंशत्तमेऽध्यायेमहापुण्यप्रदंनृणाम् ॥ वर्ण्यतेकालराजस्यमाहात्म्यंजन्मनासह ॥ १ ॥ एतादृक्तपःप्रभाववानप्यहंश्रीकालराजेनकाश्यानिष्कासितइतिमनसिनिधायपरमसंभ्रमेणश्रीकालभैरवकथांप्रष्टुमुक्तानुवादपूर्वकंपूर्वोक्तांकथामात्मनस्तृप्त्यभावावेदनेनाभिनन्दति ॥ सर्वज्ञेति ॥ स्कंदितःशोषितोमारितस्तारकनामाऽसुरोयेनतत्संबोधनंतथा ॥ १ ॥ २ ॥ भैरवसंकथनमेवविस्तरेणपृच्छति ॥ कोसाविति ॥ कोसावित्यर्धेनैकःप्रश्नः ॥ अत्रअस्याम् ॥ किंरूपमित्यर्धेनप्रश्नत्रयम् ॥ ३ ॥ कथमाराधितइत्यर्धेनैकः ॥ आराधितइत्यर्द्धेनैकइतिषट्प्रश्नाः ॥ ४ ॥ भैरवकथांकथयिष्यन्प्रथमंप्रष्टारंस्तौति ॥ वाराणस्यामिति ॥ प्रेमभक्तिः ॥ वर्ततेजायते ॥ यथाप्रेमप्रवर्तेतइतिक्वचित् ॥ तवेतिशेषः ॥ कस्यचिदित्यत्रान्येतिच ॥ यथातेप्रेमवर्धतेइतिपाठेस्पष्टएवार्थः ॥ ५ ॥ श्रोतॄन्प्रोत्साहयति ॥ प्रादुर्भावमिति ॥ ६ ॥ श्रीभैरवाविर्भावंवक्तुंजगद्रक्षांप्रार्थयानोमंगलार्थंतंपूजयति ॥ पाणिभ्यामिति ॥ महा

जप्त्वाध्यायमिमंपुण्यंमहापातकनाशनम् ॥ श्रावयित्वाद्विजान्सम्यक्छिवलोकेमहीयते ॥ १३ ॥ अतःपरंकलशजकिंशुश्रूषसितद्वद ॥ काशीकथाकथ्यमानाममापिपरितोषकृत् ॥ ११४ ॥ इतिश्रीस्कंदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेवाराणसीमहिमवर्णनंनामत्रिंशत्तमोऽध्यायः ॥ ३० ॥ ॥ अगस्त्यउवाच ॥ ॥ सर्वज्ञहृदयानंदस्कंदस्कंदिततारक ॥ नतृप्तिमधिगच्छामिशृण्वन्वाराणसीकथाम् ॥ १ ॥ अनुग्रहोयदिमयियोग्योस्मिश्रवणेयदि ॥ तदाकथयमेनाथकाश्यांभैरवसंकथाम् ॥ २ ॥ कोसौभैरवनामात्रकाशिपुर्यांव्यवस्थितः ॥ किंरूपमस्यकिंकर्मकानिनामानिचास्यवै ॥३॥ कथमाराधितश्चैवसिद्धिदःसाधकस्यवै ॥ आराधितःकुत्रकालेक्षिप्रंसिद्ध्यतिभैरवः ॥४॥ ॥ स्कंदउवाच ॥ ॥ वाराणस्यांमहाभागयथातेप्रेमवर्तते ॥ तथानकस्यचिन्मन्येततोवक्ष्याम्यशेषतः ॥५॥ प्रादुर्भावंभैरवस्यमहापातकनाशनम् ॥ यच्छ्रुत्वाकाशिवासस्यफलंनिर्विघ्नमाप्नुयात् ॥ ६ ॥ पाणिभ्यांपरितःप्रपीड्यसुदृढंनिश्च्योत्यानिश्च्योत्यचब्रह्मांडंसकलंपचेलिमरसालोच्चैःफलाभंमुहुः ॥ पायंपायमपायतत्रिजगतीसुन्मत्तवत्तैरसैर्नृत्यंस्तांडवडंबरेणविधिनापायान्महाभैरवः ॥ ७ ॥

भैरवोऽपायतोऽज्ञानतत्कार्यलक्षणात्त्रिजगतींत्रिजगतीस्थंलोकंब्रह्मांडांतर्वर्तियत्किंचित्प्राणिजातमित्येतत् ॥ पायाद्रक्षतुमोचयत्वित्यन्वयः ॥ किंकुर्वन् ॥ तांडवाडंबरेणविधिनानृत्याटोपप्रकारेणनृत्यन्नृत्यंकुर्वन् ॥ सामान्यविशेषभावादपौनरुक्त्यम् ॥ कइव ॥ उन्मत्तवदुन्मत्तइव ॥ तत्रहेतुः ॥ तैरसैर्ब्रह्मांडांतर्वर्तितत्तद्भूतास्वादनरसैरित्यर्थः ॥ किंकृत्वेत्यपेक्षायांरसाधिकरणमाह ॥ सुदृढंयथास्यात्तथासकलंसंपूर्णम् ॥ यद्वा कलामायातत्सहितम् ॥ पाणिभ्यांपरितःसर्वतःप्रपीड्यातिशयेननिष्पीड्यनिश्च्योत्यानिश्च्योत्यचसंचुष्यसंचुष्य ॥ चकारःसमुच्चये ॥ नकेवलंप्रपीड्यनिश्च्योत्यनिश्च्योत्यचेत्यर्थः ॥ पायंपायंपीत्वापीत्वा ॥ मुहुर्वारंवारमतिशयेनेत्यर्थः ॥ कीदृशम् ॥ पचेलिमंपक्वशीलम् ॥ यद्रसालोच्चैःफलंमहदाम्रफलंतदाभंतत्तुल्यम् ॥ यद्वा पाणिभ्यांकरवन्निर्भयाभ्यामनुभवनित्यबोधाभ्यांमायासहितंब्रह्मांडंप्रपीड्यसंकुच्य ॥ तथाचोक्तम् ॥ नित्यबोधपरिपीडितंजगद्विभ्रमंतुदतिवाक्यजामतिः ॥ वासुदेवनिहतंधनंजयोहंतिकौरवकुलंयथापुनारीति ॥ निश्च्योत्यनिश्च्योत्य



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चमननंनिदिध्यासनाभ्यांक्षरणतामापाद्यचपीत्वापीत्वाअत्यंतंनाशंनीत्वासर्वसंहरणात्कालः कुयोगिनांभयंकरत्वाद्भैरवः परमात्मातत्त्वमस्यादिवाक्योत्थबुद्धिवृत्त्यभिव्यक्तस्तैरसैःप्रसिद्धैर्ब्रह्मानंदानुभवैर्नृ त्यंस्त्रिजगतीस्थंलोकंपायादित्यन्यत्समानम् ॥ योवारंवारंसकलंब्रह्मांडंपायंपायंवर्ततेसइदानींत्रिजगतींपायादित्यध्याहृत्ययोजनेतितुप्राकृतंव्याख्यानम् ॥ ७ ॥ महादेवस्वरूपाऽज्ञानाद्गर्वंकुर्वतोहिरण्य गर्भस्यशिरश्छेत्तुंकालभैरवमुत्पादितवानीश्वरइतिप्रथमप्रश्नस्योत्तरंवक्तुंब्रह्मादीनांतदज्ञानमाह ॥ कुंभयोनेइति ॥ ८ ॥ तयोरप्यवेदनेहेतुमाह ॥ नचित्रमिति ॥ ९ ॥ तर्ह्यनिर्मोक्षोदुर्ज्ञेयत्वादित्या शंक्याह ॥ वेदयेदिति ॥ १० ॥ ननुसर्वगत्वात्सर्वैर्दृश्यतामित्यतआह ॥ ससर्वगइति ॥ ननुदेवत्वेनसर्वैर्ज्ञायतएवेत्यतआह ॥ देववद्दृश्यतेमूढैरिति ॥ देववत्साधारणदेवतावत् ॥ ११ ॥ एत

कुंभयोनेनवेत्त्येवमहिमानंमहेशितुः ॥ चतुर्भजोपिवैकुंठश्चतुर्वक्रोपिविश्वकृत् ॥ ८ ॥ नचित्रमत्रभूदेवभवमायादुरत्यया ॥ तयासंमोहिताःसर्वेनावयं त्यपितंपरम् ॥ ९ ॥ वेदयेद्यदिचात्मानंसएवपरमेश्वरः ॥ तदाविंदंतिब्रह्माद्याःस्वेच्छयैवनतंविदुः ॥ १० ॥ ससर्वगोपिनेक्ष्येतस्वात्मारामोमहेश्वरः ॥ देववद्दृश्यतेमूढैरतीतोयोमनोगिराम् ॥ ११ ॥ पुरापितामहंविप्रमेरुशृंगेमहर्षयः ॥ प्रोचुःप्रणम्यलोकेशंकिमेकंतत्त्वमव्ययम् ॥ १२ ॥ समाययामहे शस्यमोहितोलोकसंभवः ॥ अविज्ञायपरंभावमात्मानंप्राहवर्षिणम् ॥ १३ ॥ जगद्योनिरहंधातास्वयंभूरेकईश्वरः ॥ अनादिमदहंब्रह्ममामनर्च्यनमु च्यते ॥ १४ ॥ प्रवर्तकोहिजगतामहमेकोनिवर्तकः ॥ नान्योमदधिकःसत्यंकश्चित्कोपिसुरोत्तमाः ॥ १५ ॥ तस्यैवंब्रुवतोधातुःक्रतुर्नारायणांशजः ॥ प्रोवाचप्रहसन्वाक्यंरोषताम्रविलोचनः ॥ १६ ॥ अविज्ञायपरंतत्त्वंकिमेतत्प्रतिपाद्यते ॥ अज्ञानंयोगयुक्तस्यनचैतदुचितंतव ॥ १७ ॥ अहंकर्ताहिलो कानांयज्ञोनारायणःपरः ॥ नमामनादृत्यविधेजीवनंजगतामज ॥ १८ ॥ अहमेवपरंज्योतिरहमेवपरागतिः ॥ मत्प्रेरितेनभवतासृष्टिरेषाविधीयते ॥ ॥ १९ ॥ एवंविप्रकृतौमोहात्परस्परजयैषिणौ ॥ पप्रच्छतुःप्रमाणज्ञानागमांश्चतुरोपितौ ॥ २० ॥ ॥ विधिक्रतूऊचतुः ॥ ॥ वेदाःप्रमाणंसर्वत्रप्रति ष्ठांपरमामिताः ॥ यूयमेवनसंदेहःकिंतत्त्वंप्रतितिष्ठत ॥ २१ ॥ श्रुतयऊचुः ॥ ॥ यदिमान्यावयंदेवौसृष्टिस्थितिकरौविभू ॥ तदाप्रमाणंवक्ष्यामो भवत्संदेहभेदकम् ॥ २२ ॥

देवदर्शयितुमितिहासमाह ॥ पुरेति ॥ तत्त्वंवस्तु ॥ १२ ॥ वर्षिणंश्रेष्ठम् ॥ १३ ॥ श्रेष्ठत्वमेवाह जगद्योनिरितिद्वयेन ॥ अनर्च्यापूज्याज्ञात्वेतिवा ॥ १४ ॥ १५ ॥ क्रतुर्यज्ञोयज्ञाधि ष्ठाताविष्णुरितियावत् ॥ यज्ञोवैविष्णुरितिश्रुतेः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ एवमितिस्कंदोक्तिः ॥ विप्रकृतौविरुद्धौ ॥ आगमान्मूर्तिधरान्वेदान् ॥ चतुरश्चतुःसंख्याकान् ॥ ॥ २० ॥ तयोःप्रश्नमेवदर्शयति ॥ वेदाःप्रमाणमिति ॥ तर्हिकिंप्रत्यक्षादीनामिवप्रामाण्यमस्माकंनेत्याह ॥ परमांप्रतिष्ठांयूयमेवेताः प्राप्ताइति ॥ अपौरुषेयत्वात्तर्काप्रतिष्ठानादितिन्यायोपबृंहित व्याससूत्राच्चेतिभावः ॥ प्रतितिष्ठतप्रतिजानीतआश्रयतेतिवा ॥ प्रतितिष्ठथेतिपाठेपिसएवार्थः ॥ प्रतितिष्ठतीतिचक्वचित्पाठः ॥ २१ ॥ श्रुतीनांप्रतिवचनमाह ॥ यदीति ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

हेदेवौ ॥ प्रमाणंयथार्थम् ॥ २२ ॥ श्रुत्युक्तमिति ॥ श्रुतीःप्रतिवेदान्प्रति ॥ किमूचतुस्तदाह ॥ युष्मदुक्तंप्रमाणंनाविति ॥ अयंभावः ॥ वेदवचनमेवतावान्निर्दुष्टत्वात्स्वतः प्रमाणंकिंपुनर्वक्तव्यंतदधिष्ठातॄणांमूर्तिमतांभवतामिति ॥ २३ ॥ चतुर्णांवेदानांचत्वारिवचनानिक्रमेणदर्शयाति ॥ यदिति ॥ यदंतःस्थानिप्रलयकाले ॥ यतःसर्वंप्रवर्ततेसृष्टिसमये ॥ ॥ २४ ॥ योगेनचाष्टांगेनज्ञानयोगेनवा ॥ २५ ॥ भासतेस्फुरति ॥ तथाचश्रुतिः ॥ नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोऽयमग्निः ॥ तमेवभांतमनुभातिसर्वंयस्यभासासर्वमिदंविभातीति ॥ २६ ॥ २७ ॥ स्मित्वाईषद्धास्यंकृत्वा ॥ क्रतुर्विधीयज्ञब्रह्माणौ ॥ मोहांध्येनांकितौ मोहेनाज्ञानेनजातंयदांध्यमज्ञत्वंतेनांकितौचिह्नितौयुक्तावितियावत् ॥ २८ ॥ कथमिति ॥ कथमसौपरंब्रह्मत्वमापन्नःप्राप्तइतिद्वितीयेनान्वयः ॥ विटंकवेशःकुत्सितालंकारःकुत्सिताकारइतिवा ॥ तदेवाह प्रमथनाथइत्यादिना ॥ पितृवनेश्मशानेशिवयाताद्दग्रूपयारममाणइतिसंबंधः ॥ तद्ब्रह्मक्वचकीदृ

श्रुत्युक्तमिदमाकर्ण्यप्रोचतुस्तौश्रुतीःप्रति ॥ युष्मदुक्तंप्रमाणंनौकिंतत्त्वंसम्यगुच्यताम् ॥ २३ ॥ ऋगुवाच ॥ ॥ यदंतःस्थानिभूतानियतःसर्वंप्रवर्तते ॥ यदाहुस्तत्परंतत्त्वंसरुद्रस्त्वेकएवहि ॥ २४ ॥ ॥ यजुरुवाच ॥ ॥ योयज्ञैरखिलैरीशोयोगेनचसमिज्यते ॥ येनप्रमाणंहिवयंसएकःसर्वदृक्छिवः ॥२५॥ ॥ सामोवाच ॥ ॥ येनेदंभ्राम्यतेविश्वंयोगिभिर्योविचिंत्यते ॥ यद्भासाभासतेविश्वंसएकस्त्र्यंबकःपरः ॥ २६ ॥ ॥ अथर्वोवाच ॥ ॥ यंप्रपश्यंतिदेवेशंभक्त्यानुग्रहिणोजनाः ॥ तमाहुरेकंकैवल्यंशंकरंदुःखतस्करम् ॥ २७ ॥ श्रुतीरितंनिशम्येत्थंतावतीवविमोहितौ ॥ स्मित्वाहतुःक्रतुविधीमोहांध्येनांकितौमुने ॥ २८ ॥ कथंप्रमथनाथोसौरममाणोनिरंतरम् ॥ दिगंबरःपितृवनेशिवयाधूलिधूसरः ॥ २९ ॥ विटंकवेशोजटिलोवृषगोव्यालभूषणः ॥ परंब्रह्मत्वमापन्नःक्वचतत्संगवर्जितम् ॥ ३० ॥ तदुदीरितमाकर्ण्यप्रणवात्मासनातनः ॥ अमूर्तोमूर्तिमान्भूत्वाहसमानउवाचतौ ॥ ३१ ॥ प्रणवउवाच ॥ नह्येषभगवाञ्छक्त्यास्वात्मनोव्यतिरिक्तया ॥ कदाचिद्रमतेरुद्रोलीलारूपधरोहरः ॥ ३२ ॥ असौहिभगवानीशः स्वयंज्योतिःसनातनः ॥ आनंदरूपातस्यैषाशक्तिर्नागंतुकीशिवा ॥ ३३ ॥

शम् ॥ संगवर्जितमसंगम् ॥ असंगोनहिसज्जतइतिश्रुतेः ॥ संगवर्जिनामितिपाठेसंगवर्जिनांपरमहंसानांप्राप्यंतद्ब्रह्मक्व चैताद्दक्संगवानयमतिशेषोतस्तत्परंब्रह्मकथमयंप्राप्तइत्यर्थः ॥ २९ ॥ ३० ॥ तदुदीरितमिति ॥ प्रणवात्माप्रणवोनामेश्वरादुत्पन्नोभगवतोबोधकोवेदोत्पत्तिहेतुस्तदात्मातत्स्वरूपः ॥ तदुक्तंभागवते ॥ ततोभूत्त्रिवृदोंकारोयोव्यक्तप्रभवःस्वराट् । यत्तल्लिंगंभगवतोब्रह्मणःपरमात्मन इति ॥ गीतासारेच ॐकारप्रभवावेदा ॐकारप्रभवाःस्वराः ॥ ॐकारप्रभवंसर्वंत्रैलोक्यंसचराचरमिति ॥ ब्रह्मनारायणयोरपिमोहइति ॥ हसमानोहसन् ॥ असहमानइतिक्वचित् ॥ ३१ ॥ प्रणववचनमाह ॥ नह्येषइति ॥ स्वात्मनोव्यतिरिक्तयाभिन्नयाशक्त्या एषकदाचिदपिरमतइतिनाहिकित्वभिन्नयेवेत्यर्थः ॥ ३२ ॥ तर्हिकीदृगस्यस्वरूपंशक्तेर्वेतिपृच्छायांतदाह ॥ असौहीति ॥ नागंतुकी



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नित्येत्यर्थः ॥ ३३ ॥ इत्येवमिति ॥ अजस्यहिअजस्यच ॥ ३४ ॥ ३५ ॥ ज्योतिरिति ॥ ददृशेददृशेविधिक्रतुभ्यामितिशेषः ॥ ३६ ॥ संभावयेद्वितर्कयेत् ॥ ३७ ॥ भालाक्षोललाटनेत्रः ॥ नागोडुपविभूषणःसर्पांगदचंद्रावतंसः ॥ ३८ ॥ ३९ ॥ ॥ ४० ॥ अथेति ॥ अथानंतरंसईश्वरःपद्मयोनेर्गिरंश्रुत्वाकोपतःपुरुषमुत्पाद्यतंप्र ाहेतिद्वितीयेनान्वयः ॥ स्वकोपतइतिक्वचित्पाठः ॥ किंरूपीमितिद्वितीयप्रश्नस्योत्तरमाह ॥ भैरवाकृतिमिति ॥ ४१ ॥ कानिनामानीतिचतुर्थस्यप्रश्नस्योत्तरमाह ॥ कालेति ॥ ४२ ॥ कालराजनामसान्वयमुक्त्वाकालभैरवनामनिर्वक्ति ॥ विश्वमिति ॥ ४३ ॥ पुनरपिनामद्वयंनिर्वक्ति आमर्दयिष्यतीतिद्वयेन ॥ आमर्दयिष्यतिपीडयिष्यति ॥ तुष्टःप्रायश्चित्तरूपत्वात्पीडायाः ॥ रुष्टइतिवापाठः ॥ ४४ ॥ ४५ ॥

इत्येवमुक्तेपितदामखमूर्तेरजस्यहि ॥ नाज्ञानमगमन्नाशंश्रीकंठस्यैवमायया ॥ ३४ ॥ प्रादुरासीत्ततोज्योतिरुभयोरंतरेमहत् ॥ पूरयन्निजयाभासाद्यावाभूम्योर्यदंतरम् ॥ ३५ ॥ ज्योतिर्मंडलमध्यस्थोददृशेपुरुषाकृतिः ॥ प्रजज्वालाथकोपेनब्रह्मणःपंचमंशिरः ॥ ३६ ॥ आवयोरंतरंकोसौबिभृयात्पुरुषाकृतिम् ॥ विधिःसंभावयेद्यावत्तावत्सहिविलोकितः ॥ ३७ ॥ स्रष्ट्राक्षणेनचमहान्पुरुषोनीललोहितः ॥ त्रिशूलपाणिर्भालाक्षोनागोडुपविभूषणः ॥ ३८ ॥ हिरण्यगर्भस्तंप्राहजानेत्वांचंद्रशेखरम् ॥ भालस्थलान्ममपुरारुद्रःप्रादुरभूद्भवान् ॥ ३९ ॥ रोदनाद्रुद्रनाम्नापियोजितोसिमयापुरा ॥ मामेवशरणंयाहिपुत्ररक्षांकरोमिते ॥ ४० ॥ अथेश्वरःपद्मयोनेःश्रुत्वागर्ववतींगिरम् ॥ सकोपतःसमुत्पाद्यपुरुषंभैरवाकृतिम् ॥ ४१ ॥ प्राहपंकजजन्मासौशास्यस्तेकालभैरव ॥ कालवद्राजसेसाक्षात्कालराजस्ततोभवान् ॥ ४२ ॥ विश्वंभर्तुंसमर्थोऽसिभरणाद्भैरवःस्मृतः ॥ त्वत्तोभेष्यतिकालोपिततस्त्वंकालभैरवः ॥ ४३ ॥ आमर्दयिष्यतिभवांस्तुष्टोदुष्टात्मनोयतः ॥ आमर्दकइतिख्यातिंततःसर्वत्रयास्यति ॥ ४४ ॥ यतःपापानिभक्तानांभक्षयिष्यतितत्क्षणात् ॥ पापभक्षणइत्येवतवनामभविष्यति ॥ ४५ ॥ यामेमुक्तिपुरीकाशीसर्वाभ्योपिगरीयसी ॥ आधिपत्यंचतस्यास्तेकालराजसदैवहि ॥ ४६ ॥ तत्रयेपापकर्तारस्तेषांशास्तात्वमेवहि ॥ शुभाशुभंनतत्कर्मचित्रगुप्तोलिखिष्यति ॥ ४७ ॥ एतान्वरान्प्रगृह्याऽथतत्क्षणात्कालभैरवः ॥ वामांगुलिनखाग्रेणचकर्तचशिरोविधेः ॥ ४८ ॥ यदंगमपराध्नोतिकार्यंतस्यैवशासनम् ॥ अतोयेनकृतानिंदातच्छिन्नंपंचमंशिरः ॥ ४९ ॥ यजुर्मूर्तिधरोविष्णुस्ततस्तुष्टावशंकरम् ॥ भीतोहिरण्यगर्भोपिजजापशतरुद्रियम् ॥ ५० ॥ आश्वास्यतौमहादेवःप्रीतःप्रणतवत्सलः ॥ प्राहस्वांमूर्तिमपरांभैरवंतंकपर्दिनम् ॥ ५१ ॥

कालभैरवायवरान्ददाति ॥ यामेइतिद्वाभ्याम् ॥ अनेनकिंकर्मास्येतितृतीयप्रश्नस्योत्तरमुक्तम् ॥ आधिपत्यंपालकत्वम् ॥ अतएवोक्तंकालभैरवाष्टकेऽस्माभिः ॥ ईश्वरदत्तनिजस्थलपालंकुंकुमचंदनमंडितभालम् ॥ भूतपिशाचपुरस्कृततालंनौमिसदाशिवभैरवदेवमिति ॥ ४६ ॥ ४७ ॥ एतानिति ॥ वामांगुलिनखाग्रेणवामकनिष्ठिकांगुलिनखाग्रेणेत्यर्थः ॥ ४८ ॥ ननुब्रह्मणःपंचशिरस्कत्वात्किमित्येकमेवशिरोऽच्छिनत्तत्राह ॥ यदंगमिति ॥ ४९ ॥ तुष्टावशतरुद्रियेणेत्यग्रिमस्यविपरिणमय्यानुषंगः ॥ शतरुद्रियंनमस्तेरुद्रमन्यवइत्यादिस्तोत्रम् ॥ ५० ॥ स्वांस्वीयाम् ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अतएवनीललोहितेत्यादिभेदेननिर्देशः ॥ तामेवापरांमूर्तिंदर्शयति ॥ भैरवमिति ॥ ५१ ॥ वैधसंवेधसःसंबंधि ॥ ५२ ॥ व्रतंचभिक्षाटनादिरूपंधारय ॥ धृतिलोकायदर्शयन्निति क्वचित् ॥ तत्रधृतिर्धैर्यम् ॥ एतदेवदर्शयति ॥ चरत्वमिति ॥ कापालव्रतंकपालधारणरूपंव्रतंसंकल्पम् ॥ संकल्पपूर्वंकंकपालधारणंकृत्वेत्यर्थः ॥ तथाचस्मृतिः ॥ शिरःकपालध्वजवान्भिक्षाशीकर्मवेदय न्नित्यादि ॥ अन्तर्हितोभैरवस्येतिशेषः ॥ ५३ ॥ सर्वात्मनांऽतर्धानमाह उत्पाद्येतिपंचभिः ॥ एकांकन्यामुत्पाद्यकालंकालभैरवमनुगच्छेतितांनियोज्यततोऽन्तर्धानंगतइतिपंचमेनान्वयः ॥ कन्यांस्त्रियम् ॥ तांविशिनष्टि रक्तांबरधरामितिसार्धद्वयेन ॥ रक्तस्रग्रक्तसमूहःसैवगंधःसएवलेपनमनुलेपनंयस्यास्ताम् ॥ ५४ ॥ ललंत्यावहिर्निःसरंत्याजिह्वयाऽतिशयभीषणामतिशयेनभयं कराम् ॥५५॥ कर्त्रीकरकविशेषस्तस्याःकर्परंखण्डंहस्ताग्रेयस्यास्तां हस्ताग्रकृतभग्नकरकामित्यर्थः ॥ यद्वा कर्त्रीदात्रविशेषः ॥ कर्परंरक्तपात्रम् ॥ दात्रेणच्छित्त्वारुधिरंग्रहीतुंतदुभयहस्ताग्रामित्यर्थः ॥ स्फुरंत्योपिंगेउग्रेतारकेकनीनिकेयस्यास्ताम् ॥ गर्जयंतींभर्त्सयंतीम् ॥ महान्वेगोयस्यास्ताम् ॥ भैरवस्यापिभीषणांभीतिहेतुंजनयंतीम् ॥ महोद्वेगंभैरवस्यापिभीषणमिति क्वचित्पाठः ॥ ५६ ॥

मान्योऽध्वरोसौभवतातथाशतधृतिस्त्वयम् ॥ कपालंवैधसंचापिनीललोहितधारय ॥ ५२ ॥ ब्रह्महत्यापनोदायव्रतंलोकायदर्शयन् ॥ चरत्वंसततं भिक्षांकापालव्रतमास्थितः ॥ इत्युक्त्वांऽतर्हितोदेवस्तेजोरूपस्तदाशिवः ॥ ५३ ॥ उत्पाद्यकन्यामेकांतुब्रह्महत्येतिविश्रुताम् ॥ रक्तांबरधरांरक्तांरक्तस्रग्गं धलेपनाम् ॥ ५४ ॥ दंष्ट्राकरालवदनांललज्जिह्वातिभीषणाम् ॥ अंतरिक्षैकपादाग्रांपिबंतींरुधिरंबहु ॥५५॥ कर्त्रीकर्परहस्ताग्रांस्फुरत्पिंगोग्रतारकाम् ॥ गर्जयंतींमहावेगांभैरवस्यापिभीषणाम् ॥ ५६ ॥ यावद्वाराणसींदिव्यांपुरीमेषगमिष्यति ॥ तावत्त्वंभीषणेकालमनुगच्छोग्ररूपिणि ॥ ५७ ॥ सर्वत्रते प्रवेशोस्तित्यक्त्वावाराणसींपुरीम् ॥ नियोज्यतामितिशिवोप्यंतर्धानंगतस्ततः ॥ ५८ ॥ तत्सान्निध्याद्भैरवोपिकालोभूत्कालकालतः ॥ सदेवदेववाक्ये नविभ्रत्कापालिकंव्रतम् ॥ ५९ ॥ कपालपाणिर्विश्वात्माचचारभुवनत्रयम् ॥ नात्याक्षीच्चापितंदेवंब्रह्महत्यासुदारुणा ॥ ६० ॥ सत्यलोकेपिवैकुंठेमहें द्रादिपुरीष्वपि ॥ त्रिजगत्पतिरुग्रोपिव्रतीत्रिजगतीश्वरः ॥६१॥ प्रतितीर्थंभ्रमन्नापिविमुक्तोब्रह्महत्यया ॥६२॥ अनेनैवानुमानेनमहिमात्ववगम्यताम् ॥ ब्रह्महत्यापनोदिन्याःकाश्याःकलशसंभव ॥ ६३ ॥

यावदिति ॥ यावदेषकालभैरवोवाराणसींप्रवेक्ष्यतितावदनुगच्छेत्यर्थः ॥ ५७ ॥ तत्रहेतुमाह ॥ सर्वत्रेति ॥ ५८ ॥ तत्सान्निध्यादिति ॥ तस्याब्रह्महत्यायाःसान्निध्यात्तयाभिभूतत्वादित्यर्थः ॥ भैरवोपिकालस्यभयजनकोपि ॥ एतदेवाह ॥ कालकालतः ॥ प्रथमांतात्तसिल् ॥ कालकालोपीत्यर्थः ॥ कालकालनइतिवापाठः ॥ कालःकृष्णवर्णोऽभूदित्यर्थः ॥ अतएवोक्तंकालभैरवाष्टकेऽ स्माभिः ॥ कज्जलसुन्दरदेहमनाथंमृत्युयमांतकभीषणकायम् ॥ नामविघूर्णितपापकदंवंनौमिसदाशिवभैरवदेवमिति ॥ अथवाअन्यंब्रह्महंतारमिवकिमितितंनाक्रमेत्तत्राह ॥ तत्सान्निध्याद्विश्वेश्वरसा न्निध्याद्भैरवोपिकालकालतःकालस्यापिभक्षकःकालःकलयतिजनयतिप्रकाशयतीतिवाकालःपरब्रह्मस्वरूपोऽभूदित्यर्थः ॥ अनुगमनंतुलोकसंग्रहार्थंकाश्यामहत्त्वख्यापनार्थंचेतिभावः ॥ एतदेवाह ॥ सदेवदेववाक्येनेति ॥ ५९ ॥ विश्वस्यात्माकारणभूतःप्रकाशकइत्यर्थः ॥ सत्यलोकादिभ्यःसर्वतीर्थेभ्यश्चकाश्याःश्रेष्ठतामाह नात्याक्षीदितिपंचभिः ॥ सुदारुणाऽतिभयंकरा ॥ अतिदारुणेतिपाठेपि सएवार्थः ॥६०॥ वैकुंठेपि ॥ त्रिजगत्पतिस्त्रिजगतांपालकः ॥ त्रिज[illegible] ॥६१॥ भ्रम[illegible]क्रमे ॥ प्रतितीर्थंभ्रमन्नपिब्रह्महत्ययानविमुक्तइत्यर्थः ॥६२॥६३॥

CC-0. Shri Krishna Museum Kurukshetra. Digitized by eGangotri

आयतनानिक्षेत्राणि ॥ चकारात्सत्यलोकादयःसंगृह्यंते ॥ अधित्रिलोकित्रिलोकीमध्यइत्यर्थः ॥ नोनिषेधे ॥ ६४ ॥ पापाचलाशनेःपापपर्वतवज्रस्यतन्नाशकस्येत्यर्थः ॥ ६५ ॥ वैकुंठेपिनात्या क्षीदितियदुक्तंतद्दर्शयति ॥ निकेतनंवैकुंठम् ॥ यद्वा नारायणनिकेतनंश्वेतद्वीपंमहाकालपुरंवा ॥ ६६ ॥ अथायांतमितिरुद्रस्यपरमोविष्णुर्विष्णोश्चपरमःशिवइतिहरिवंशोक्तभूतंरुद्रमेवकाल भैरवंदृष्ट्वाविष्णोर्दंडवद्भूमौपतनंनाश्चर्यमितिविष्णुभक्तैर्मनोनखेदनीयम् ॥ अतएवमहादेवाभेदेनस्तोष्यतिभगवान्अयंधातेत्यादिना :॥ एवंविष्णुंदृष्ट्वाशिवस्यापिनत्यादिकंनाश्चर्यमितिशिवभक्तैःसंतो ष्टव्यमिति ॥ ६७ ॥ भूमौतत्स्थाने ॥ देवादयश्चनिपेतुर्दंडवत्पतिताइत्यर्थः ॥ ६८ ॥ दंडपातानंतरंकिमकरोद्भगवानित्याकांक्षायामाह ॥ प्रणिपत्येति ॥ प्रणिपत्यसत्कृत्य ॥ ६९ ॥ ७० ॥

संतितीर्थान्यनेकानिबहून्यायतनानिच ॥ अधित्रिलोकिनोकाश्याःकलामर्हंतिषोडशीम् ॥ ६४ ॥ तावद्गर्जंतिपापानिब्रह्महत्यादिकान्यलम् ॥ याव न्नामनशृण्वंतिकाश्याःपापाचलाशनेः ॥ ६५ ॥ प्रमथैःसेव्यमानोऽयंत्रिलोकींविचरन्हरः ॥ कापालिकोययौदेवोनारायणनिकेतनम् ॥ ६६ ॥ अथायांतंमहाकालंत्रिनेत्रंसर्पकुंडलम् ॥ महादेवांशसंभूतंभैरवंभीषणाकृतिम् ॥ ६७ ॥ पपातदंडवद्भूमौदृष्ट्वातंगरुडध्वजः ॥ देवाश्चमुनयश्चैवदेवनार्यः समंततः ॥ ६८ ॥ निपेतुःप्रणिपत्यैनंप्रणतःकमलापतिः ॥ शिरस्यंजलिमारोप्यस्तुत्वाबहुविधैःस्तवैः ॥६९॥ क्षीरोदमथनोद्भूतांप्राहपद्मालयांहरिः ॥ प्रियेपश्याऽब्जनयनेधन्याऽसिसुभगेनघे ॥ ७० ॥ धन्योऽहंदेविसुश्रोणियत्पश्यावोजगत्पतिम् ॥ अयंधाताविधाताचलोकानांप्रभुरीश्वरः ॥ ७१ ॥ अनादिःशरणःशांतःपरःषड्विंशसंमितः ॥ सर्वज्ञःसर्वयोगीशःसर्वभूतैकनायकः ॥७२॥ सर्वभूतांतरात्माऽयंसर्वेषांसर्वदःसदा ॥ यंविनिद्राविनिःश्वासाः शांताध्यानपरायणाः ॥ ७३ ॥ धियापश्यंतिहृदयेसोयमद्यसमीक्ष्यताम् ॥ यंविदुर्वेदतत्त्वज्ञायोगिनोयतमानसाः ॥ ७४ ॥ अरूपोरूपवान्भूत्वासो यमायातिसर्वगः ॥ अहोविचित्रंदेवस्यचेष्टितंपरमेष्ठिनः ॥७५॥ यस्याख्यांब्रुवतांनित्यंनदेहःसोपिदेहधृक् ॥ यंदृष्ट्वानपुनर्जन्मलभ्यतेमानवैर्भुवि ॥७६॥ सोयमायातिभगवांस्त्र्यंबकःशशिभूषणः ॥ पुंडरीकदलायामेधन्येमेऽद्यविलोचने ॥ ७७ ॥ धिग्धिक्पदंतुदेवानांपरंदृष्ट्वाऽत्रशंकरम् ॥ लभ्यतेयन्ननिर्वाणं सर्वदुःखांतकृत्तुयत् ॥ ७८ ॥

अयमित्यंगुल्यानिर्दिशति ॥ स्वयमितिकचित् ॥ धाताधर्तापोष्टासामान्यतोंऽतर्यामिरूपेण ॥ विधाताविशेषतोमात्रादिरूपेणभृगोःपुत्रद्वयरूपोवा ॥ सर्वात्मकत्वात्कालराजस्य ॥७१॥ षड्विंशसंमितः परमात्मतयानिरूपितः ॥ ७२ ॥ सर्वभूतांतरात्मासर्वप्राणिनामंतर्यामी ॥ विनिःश्वासाजितप्राणाइत्यर्थः ॥ ७३ ॥ वेदतत्त्वंब्रह्मतज्ज्ञावेदतत्त्वज्ञाः ॥ ७४ ॥ ७५ ॥ ७६ ॥ त्र्यंबकस्त्रिनेत्रः ॥ पुंडरीकदलायामेपद्मपत्रवदायतेविस्तृतेइतियावत् ॥७७॥ परंपरमेश्वरंकेवलमितिवा ॥ किंतन्निर्वाणंतदाह ॥ सर्वदुःखांतकृत्तुयदिति ॥ अशेषानर्थोच्छित्तिकृद्देवयदित्यर्थः ॥ सर्वदुःखांतकर्तृयदितिक्वचित् ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सर्वदुःखांतकर्तृवदितिचान्यत्र ॥ तत्रकर्मकर्तृवदितिसाधर्म्येवैधर्म्येवादृष्टांतः ॥७८॥ एतदेवविवृणोति ॥ देवत्वादिति ॥ भारतवर्षस्यैवबाहुल्येनमोक्षादिस्थानत्वादितिभावः ॥७९॥८०॥८१॥८२॥ शक्तिपहेमायानियंतः ॥८३॥८४॥ यदघप्रतिघंतदघस्यप्रतिहंतृ ॥८५॥ स्मित्वाअहोईश्वरलीलेतिविस्मयेनईषद्धास्यंकृत्वा ॥ सर्वविष्टपनायकअशेषलोकपते॥८६॥ छादयितुंवंचयितुम् ॥ मायात्वमेव दर्शयति नाभीत्यादिना ॥८७॥८८॥ मदादयइत्यतद्गुणसंविज्ञानोबहुव्रीहिः॥ तदेवदर्शयति ॥ यथावदिति॥ यद्वा मदादयोऽहंविष्णुरादिर्येषांते मदादयस्तवमाययामोहिताः॥अतस्तवचेष्टितंयथावत्पर मार्थमिवावगच्छामि ॥ ८९ ॥ नैवतत्संगच्छतइत्याह ॥ संहारेति ॥ ९० ॥ ९१ ॥ अस्थ्नांस्रक्कीकसानांमाला ॥ तदाप्रदातस्मिंस्तस्मिन्संहारकाले ॥ ककुत्र ॥ नुपृच्छायाम् ॥ गताप्राप्ता

देवत्वादशुभंकिंचिदेवलोकेनविद्यते ॥ दृष्ट्वापिसर्वदेवेशंयन्मुक्तिंनलभामहे ॥ ७९ ॥ एवमुक्ताहृषीकेशःसंप्रहृष्टतनूरुहः ॥ प्रणिपत्यमहादेवमिदमाहवृषध्वजम् ॥ ८० ॥ किमिदंदेवदेवेनसर्वज्ञेनत्वयाविभो ॥ क्रियतेजगतांधात्रासर्वपापहराऽव्यय ॥ ८१ ॥ क्रीडेयंतवदेवेशत्रिलोचनमहामते ॥ किंकारणंविरूपाक्षचेष्टितंतेस्मरार्दन ॥ ८२ ॥ किमर्थंभगवञ्छंभोभिक्षांचरसिशक्तिप ॥ संशयोमेजगन्नाथनतत्त्रैलोक्यराज्यद ॥ ८३ ॥ एवमुक्तस्ततःशंभुर्विष्णुमेतदुदाहरत् ॥ ब्रह्मणस्तुशिरश्छिन्नमंगुल्यग्रनखेनह ॥ ८४ ॥ तदघप्रतिघंविष्णोचराम्येतद्व्रतंशुभम् ॥ एवमुक्तोमहेशेनपुंडरीकविलोचनः ॥ ८५ ॥ स्मित्वाकिंचिन्नतशिराःपुनरेवंव्यजिज्ञपत् ॥ यथेच्छसितथाक्रीडसर्वविष्टपनायक ॥ ८६ ॥ माययामांमहादेवनच्छादयितुमर्हसि ॥ नाभीकमलकोशात्तुकोटिशःकमलासनान् ॥ ८७ ॥ कल्पेकल्पेसृजामीशत्वन्नियोगबलाद्विभो ॥ त्यजमायामिमांदेवदुस्तरामकृतात्मभिः ॥ ८८ ॥ मदादयोमहादेवमाययातवमोहिताः ॥ यथावदवगच्छामिचेष्टितंतेशिवापते ॥ ८९ ॥ संहारकालेसंप्राप्तेसदेवानखिलान्मुनीन् ॥ लोकान्वर्णाश्रमवतोहरिष्यसियदाहर ॥ ९० ॥ तदाक्वतेमहादेवपापंब्रह्मवधादिकम् ॥ पारतंत्र्यंनतेशंभोस्वैरंक्रीडेत्ततोभवान् ॥ ९१ ॥ अतीतब्रह्मणामस्थ्नांस्रक्कंठेतवभासते ॥ तदातदाक्वनुगताब्रह्महत्यातवानघ ॥ ९२ ॥ कृत्वापिसुमहत्पापंत्वांयःस्मरतिभावतः ॥ आधारंजगतामीशंतस्यपापंविलीयते ॥ ९३ ॥ यथातमोनतिष्ठेतसंनिधावंशुमालिनः ॥ तथानभवभक्तस्यपापंतस्यव्रजेत्क्षयम् ॥ ९४ ॥ यश्चिंतयतिपुण्यात्मातवपादांबुजद्वयम् ॥ ब्रह्महत्यादिकमपिपापंतस्यव्रजेत्क्षयम् ॥ ९५ ॥ तवनामानुरक्तावाग्यस्यपुंसोजगत्पते ॥ अप्यद्रिकूटतुलितंनैनस्तमनुबाधते ॥ ९६ ॥ रजसातमसाविवर्धितंक्वनुपापंपरितापदायकम् ॥ क्वचतेशिवनाममंगलंजनजीवातुजगद्रुजापहम् ॥ ९७ ॥

आगतेतिवा ॥ ९२ ॥ कैमुत्यन्यायेनसदृष्टांतंपापाभावमाह कृत्वापीतिद्वयेन ॥ भावतोभक्त्या ॥ ९३ ॥ भवस्यतवभक्तोभवभक्तस्तस्यसन्निधौपापंनतिष्ठेदित्यस्यार्थमाह ॥ पापंतस्येति ॥ तथानतवभक्तस्याप्यघंसान्निध्यमृच्छतीतिपाठेऋजुरेवार्थः ॥ ९४ ॥ ९५ ॥ पुनरपिकैमुत्यन्यायमभिप्रेत्याह, तवेतित्रिभिः ॥ अद्रिकूटतुलितंपर्वतशृंगसदृशंपर्वतसमूहतुल्यंवा ॥ एनःपापम् ॥ ९६ ॥ विवर्धितंविशेषेणवर्धितम् ॥ विभावितमितिपाठेविशेषणभावितंसंपादितमित्यर्थः ॥ जनजीवातुजनानांजीवनौषधम् ॥ जीवातुर्जीवनौषधमितिवचनात् ॥ नकेवलंजीवनमात्रस्यौ



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पर्यंकंतुजगद्रुजापहंसंसाररोगनाशकंच ॥ पूर्वपदेषंढत्वमार्षंकर्मधारयोवा ॥ ९७ ॥ यदीति ॥ हेशिवयस्यपुरुषस्यजातुकदाचिदपिअंधकद्विषस्तवशिवशंकरचंद्रशेखरेतिनामओष्ठपुटाद्विनिःसृतं तस्यपुनरसकृत्पुनःपुनर्जायमानासंसृतिर्न ॥ तन्नहीतिपाठेतत्तस्यनहिनैवेत्यर्थः ॥ ९८ ॥ इतःपरमन्यच्छ्रेयोनास्तीतिबहुधासंबोधयन्प्रकृतमुपसंहराति ॥ परमात्मन्निति ॥ ९९ ॥ १०० ॥ ननुवैकुंठकैवल्यपतेस्तवकथमयंप्रलापस्तत्राह ॥ त्वद्दृष्टीति ॥ तृणंतुच्छम् ॥ परमितिपाठेपरंदूरंनिकृष्टमितियावत् ॥ १ ॥ विमलाशुद्धापवित्रेतियावत् ॥ मनोरथवतीअभीष्टवतीअमृतकल्पे त्यर्थः ॥ २ ॥ भिक्षाटनायेति ॥ अन्यत्रापिभिक्षाटनायनिरगान्निर्गंतुमुद्यतइत्यर्थः ॥ ३ ॥ अनेनमिषेणव्याजेनभवदर्शनंशिवदर्शनं भवस्यसंसारस्यदर्शनमितिवा ॥ ४ ॥ स्मेरास्यःप्रह

यदिजातुचिदंधकद्विषस्तवनामौष्ठपुटाद्विनिःसृतम् ॥ शिवशंकरचंद्रशेखरेत्यसकृत्तस्यनसंसृतिःपुनः ॥ ९८ ॥ परमात्मन्परंधामस्वेच्छाविधृतविग्रह ॥ कुतूहलंतवेशेदंक्वपराधीनतेश्वरे ॥ ९९ ॥ अद्यधन्योस्मिदेवेशयंनपश्यंतियोगिनः ॥ पश्यामितंजगन्मूलंपरमेश्वरमक्षयम् ॥ १०० ॥ अद्यमेपरमो लाभस्त्वद्यमेमंगलंपरम् ॥ त्वद्दृष्ट्यमृततृप्तस्यतृणंस्वर्गापवर्गदम् ॥ १ ॥ इत्थंवदतिगोविंदेविमलापद्मयातया ॥ मनोरथवतीनामभिक्षापात्रेसमर्पिता ॥ २ ॥ भिक्षाटनायदेवोपिनिरगात्परयामुदा ॥ दृष्ट्वाऽनुयायिनींतांतुसमाहूयजनार्दनः ॥ संप्रार्थयद्ब्रह्महत्यांविमुंचत्वंत्रिशूलिनम् ॥ ३ ॥ ॥ ब्रह्महत्यो वाच ॥ ॥ अनेनापिमिषेणाऽहंसंसेव्यामुंवृषध्वजम् ॥ आत्मानंपावयिष्यामिक्वपुनर्भवदर्शनम् ॥ ४ ॥ सातत्याजनतत्पार्श्वंव्याहृतापिमुरारिणा ॥ तमूचेऽथहरिंशंभुःस्मेरास्योवचनंशुभम् ॥ ५ ॥ त्वद्वाक्पीयूषपानेनतृप्तोस्मिबहुमानद ॥ वरंवृणीष्वगोविंदवरदोऽस्मितवानघ ॥ ६ ॥ नमाद्यंतियथाभैक्षैर्भिक्षवोप्यतिसंस्कृतैः ॥ यथामानसुधापानैर्नुन्नभिक्षाटनज्वराः ॥ ७ ॥ महाविष्णुरुवाच ॥ ॥ एषएववरःश्लाघ्योयदहंदेवताधिपम् ॥ पश्यामित्वां देवदेवंमनोरथपथातिगम् ॥ ८ ॥ अनभ्रेयंसुधावृष्टिरनायासोमहोत्सवः ॥ अयत्नोनिधिलाभोयद्वीक्षणंहरतेसताम् ॥ ९ ॥ अवियोगोऽस्तुमेदेवत्वदंघ्रि युगलेनवै ॥ एषएववरःशंभोनान्यंकंचिद्वरंवृणे ॥ १० ॥ ईश्वरउवाच ॥ ॥ एवंभवतुतेऽनंतयत्त्वयोक्तंमहामते ॥ सर्वेषामपिदेवानांवरदस्त्वंभविष्यसि ॥ ११ ॥ अनुगृह्येतिदैत्यारिंकेंद्रादिभुवनेचरन् ॥ भेजेविमुक्तिजननींनाम्नावाराणसींपुरीम् ॥ १२ ॥

सितवदनः ॥ स्मेराक्षइतिपाठेविकसितनेत्रइत्यर्थः ॥ ५ ॥ ६ ॥ ननुमनोरथवतींभिक्षांत्यक्त्वाकिमितिवाक्सुधापानेनैवतृप्तिरावेद्यतेतत्राह ॥ नमाद्यंतीति ॥ नमाद्यंतिनहृष्यंति ॥ नुन्नभिक्षाटन ज्वरागतभिक्षाटनक्लेशाः ॥ ननुभिक्षाटनज्वराइतिपाठे ननुनचविद्यतेभिक्षाटनज्वरोभिक्षाटनकृतोज्वरोयेषांतेतथेत्यर्थः ॥ ७ ॥ ८ ॥ ननुवरान्विहायकिमितिदर्शनमेवमृग्यतेतत्राह ॥ अनभ्रेति ॥ हेहरतेसतांत्वद्भक्तानाम् ॥ यद्वा सतांशिवविष्ण्वोरभेददर्शिनां तेतवयद्दर्शनं सतांतवचदर्शनमितिवा ॥ इयमनभ्रासुधावृष्टिर्वृष्ट्यपेक्षितसमयेमेघरहिताजलवृष्टिः ॥ निधिलाभःशेवधिलाभः ॥ ९ ॥ यतएवमतोऽवियोगोस्त्विति ॥ अथवातथापिममसंतोषार्थंकश्चिद्वरःप्रार्थ्यतामितिचेत्तत्राह ॥ अवियोगोस्त्विति ॥ अप्रार्थितमपिददाति ॥ सर्वेषामिति ॥ ११० ॥ ११ ॥ केंद्रादिभुवनेब्रह्मेंद्रादीनां

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

लोके ॥ १२ ॥ प्रसंगात्काशींस्तौति यत्रस्थितानामित्यारभ्यक्षेत्रेप्रविष्टइत्यतःप्राक्तनेन ॥ पदानिसत्यलोकादिस्थानानि ॥ नार्हतीत्यत्रहेतुगर्भंविशेषणमाह ॥ विपदांपदमाश्रयः ॥ १३ ॥ जटीपाशुपतादिः ॥ मुंडीएकदंडयादिः ॥ दिगंबरोऽवधूतादिः ॥ १४ ॥ अन्यतोऽन्यत्र ॥ तद्भिक्षाशीवाराणसीभिक्षाभोजी ॥ १५ ॥ भिक्षेति ॥ यत्रकाश्यांसंन्यासिभ्यआमलकपरिमिता पिदत्तायाभिक्षासामेरुणातुलितातुलनार्थमुन्मानपात्रेधृतासतीवाराणस्यांभिक्षागुरुर्गुर्वीस्यादित्यर्थः ॥१६ ॥ सीदत्कुटुंबिनेक्षुधापीडितकलत्रादिमते ॥ इज्यतेदेवैरितिशेषः ॥१७॥ निरुपायिनेजीवनोपायरहिताय ॥ तृट्क्षुधासंपन्नंदुःखम् ॥ यद्वा तृट्क्षुधास्तृषःक्षुधाश्चतदुभयजन्यंसामान्यंवादुःखंनोभुंक्तेनप्राप्नोतीत्यर्थः ॥ १८ ॥ संवासयितुःसम्यग्वासंकारयितुः ॥ तुएवअविकलमेवसमग्रमेवभवे

यत्रस्थितानांजंतूनांकलांनार्हतिषोडशीम् ॥ अपिब्रह्मादिदेवानांपदानिविपदांपदम् ॥ १३ ॥ वरंवाराणसीवासीजटीमुंडीदिगंबरः ॥ नान्यत्रच्छत्रसंछन्नवसुधामंडलेश्वरः ॥ १४ ॥ वरंवाराणसीभिक्षानलक्षाधिपताऽन्यतः ॥ लक्षाधीशोविशेद्गर्भंतद्भिक्षाशीनगर्भभाक् ॥ १५ ॥ भिक्षापियत्रभिक्षुभ्योदत्तामलकसंमिता ॥ सुमेरुणापितुलितावाराणस्यांगुरुर्भवेत् ॥ १६ ॥ वर्षाशनंहियोदद्यात्काश्यांसीदत्कुटुंबिने ॥ यावंत्यब्दानितावंतियुगानिसदिवीज्यते ॥ १७ ॥ वाराणस्यांवर्षभोज्यंयोदद्यान्निरुपायिने ॥ सकदाचित्तृट्क्षुधानोदुःखंभुंक्तेनरर्षभः ॥ १८ ॥ वाराणस्यांनिवसतांयत्पुण्यमुपजायते ॥ तदेवसंवासयितुःफलंत्वविकलंभवेत् ॥ १९ ॥ ब्रह्महत्यादिपापानियस्यानाम्नोपिकीर्तनात् ॥ त्यजंतिपापिनंकाशीसाकेनेहोपमीयते ॥ १२० ॥ क्षेत्रेप्रविष्टमात्रेऽथभैरवेभीषणाकृतौ ॥ हाहेत्युक्त्वाब्रह्महत्यापातालतलमाविशत् ॥ २१ ॥ कपालंब्रह्मणोरुद्रःसर्वेषामेवपश्यताम् ॥ हस्तात्पतितमालोक्यननर्तपरयामुदा ॥ २२ ॥ विधेःकपालंनामुंचत्करमत्यंतदुःसहम् ॥ हरस्यभ्रमतःक्वापितत्काश्यांक्षणतोऽपतत् ॥ २३ ॥ शूलिनोब्रह्मणोहत्यानापैतिस्मचयाक्वचित् ॥ साकाश्यांक्षणतोनष्टाकथंकाशीनदुर्लभा ॥२४॥ अतःप्रदक्षिणीकार्यापूजनीयापुरीत्वियम् ॥ २५ ॥ वाराणसीतिकाशीतिमहामंत्रमिमंजपन् ॥ यावज्जीवंत्रिसंध्यंतुजंतुर्जातुनजायते ॥ २६ ॥ अविमुक्तंमहाक्षेत्रंस्मरन्प्राणांस्तुयस्त्यजेत् ॥ दूरदेशांतरस्थोपिसोपिजातुनजायते ॥ २७ ॥ आनंदकाननेयस्यचित्तंसंस्मरतेसदा ॥ तत्क्षेत्रनामश्रवणान्नसभूयोऽभिजायते ॥ २८ ॥ रुद्रावासेवसेन्नित्यंनरोनियतमानसः ॥ एनसामपिसंभारंकृत्वाकालाद्विमुच्यते ॥ २९ ॥

दित्यर्थः ॥ १९ ॥ नाम्नोपिकीर्तनात् ॥ किंपुनःप्रवेशनादिकादितिभावः ॥ १२० ॥ २१ ॥ रुतंसंसारदुःखंभक्तानांद्रावयतीतिरुद्रःकालभैरवः ॥ २२ ॥ पुनरपिकाशींवर्णयति विधेरित्यारभ्यकपालमोचनमित्यतःप्राक्तनेन ॥ २३ ॥ २४ ॥ २५ ॥ अविमुक्तस्यमंत्रद्वयमाह ॥ वाराणसीति ॥२६॥२७॥ आनंदेति ॥ काश्यांयस्यचित्तंसंस्मरतेसम्यक्स्मरतिकालभैरवमितिशेषः ॥ सतत्क्षेत्रनामश्रवणादानंदकाननेतिनामश्रवणादपिभूयोनजायतइत्यर्थः ॥ आनंदकानने तत्क्षेत्रनामस्मरणादिति [illegible] पाठस्पष्टएवार्थः ॥ २८ ॥ नियतमानसत्वंदुःशकमित्याशंक्यपक्षांतरमाह ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एनसामपीति ॥ कालात्कालयतिक्षेत्रस्थानिपापानीतिकालंपंचक्रोऽश्यादिप्रदक्षिणंतस्मात् ॥ यद्वा कालाद्रुद्रपिशाचभोगानंतरमित्यर्थः ॥ २९ ॥ १३० ॥ कपालमोचनमिति ॥ इहकाश्या मन्यत्रापिकृतंयत्पातकंतत्सर्वमित्यर्थः ॥ ३१ ॥ तीर्थप्रवरेकपालमोचने ॥ ३२ ॥ ३३ ॥ अनिर्वाच्यावागगोचरा ॥ ३४ ॥ मुच्यंतेविदेहकैवल्यंप्राप्नुवंतीत्यर्थः ॥ योगेनब्रह्मात्मनोरैक्यज्ञानेन ॥ ॥ ३५ ॥ परंपदमित्यादिसाधनेसाध्योपचारात् ॥ ३६ ॥ विरुणद्धिविशेषेणावृणोतिपीडयतीतियावत् ॥ निरुणद्धीतिपाठेपिसएवार्थः ॥ अत्रोषित्वापीशभक्तैर्विरोधंचाचरेत्तुयइतिक्वचित्पाठः ॥३७॥ पापभक्षणामर्दकेतिनामद्वयंनिर्वक्ति कपालमोचनमितित्रिभिः ॥ तत्रैवमंदाकिन्यादक्षिणतटप्रदेशएव ॥ इदमायतनंश्रेष्ठंमणिमाणिक्यनिर्मितम् ॥ श्रीमतःकालराजस्यकलिकालार्तिहारिणः ॥ निज भक्तजनंपातियःपापातपापभक्षणः॥क्षेत्रविघ्नकरान्पापान्यातयन्यातनाशतैः॥इयंमंदाकिनीरम्यातपस्तप्तुमिहागता॥काशीवाससुखंप्राप्यनाद्यापिदिवमीहतेइत्यग्रेवक्ष्यमाणत्वात्॥ कालोदतीर्थस्यात्रैवसर्व

महाश्मशानमासाद्ययद्दैवाद्विपद्यते ॥ पुनःश्मशानशयनंनक्वापिलभतेपुमान् ॥ १३० ॥ कपालमोचनंकाश्यांयेस्मरिष्यंतिमानवाः ॥ तेषांविनंक्ष्य तिक्षिप्रमिहान्यत्रापिपातकम् ॥ ३१ ॥ आगत्यतीर्थप्रवरेस्नानंकृत्वाविधानतः ॥ तर्पयित्वापितॄन्देवान्मुच्यतेब्रह्महत्यया ॥ ३२ ॥ अशाश्वतमिदं ज्ञात्वावाराणस्यांवसंतिये ॥ देहांतेतत्परंज्ञानंतेषांदास्यतिशंकरः ॥ ३३ ॥ इयंकाशीपुरीविप्रसाक्षाद्रुद्रतनुःपरा ॥ अनिर्वाच्यापरानंदादुष्प्राप्येशविरो धिभिः ॥ ३४ ॥ अस्यास्तत्त्वमहंजानेशिवभक्तिपरोपिवा ॥ मुच्यंतेजंतवोऽत्रैवयथायोगेनयोगिनः ॥ ३५ ॥ परंपदमियंकाशीपरानंदइयंपुरी ॥ इयमेवपरंज्ञानंसेव्याऽसौमोक्षकांक्षिभिः ॥ ३६ ॥ अत्रोषित्वापीशभक्तान्विरुणद्धितुयःकुधीः ॥ पुर्यैद्रुह्यतिवामूढस्तस्यान्यत्रात्रनोगतिः ॥ ३७ ॥ कपालमोचनंतीर्थंपुरस्कृत्वातुभैरवः ॥ तत्रैवतस्थौभक्तानांभक्षयन्नघसंततिम् ॥ ३८ ॥ पापभक्षणमासाद्यकृत्वापापशतान्यपि ॥ कुतोबिभेतिपापेभ्यः कालभैरवसेवकः ॥ ३९ ॥ आमर्दयतिपापानिदुष्टानांचमनोरथान् ॥ आमर्दकइतिख्यातस्ततोऽसौकालभैरवः ॥ ४० ॥ कलिंकालंकलयतिसदाकाशी निवासिनाम् ॥ अतःख्यातिंपरांप्राप्तःकालभैरवसंज्ञिताम् ॥ ४१ ॥ सदैवयस्यभक्तेभ्योयमदूताःसुदारुणाः ॥ परमांभीरुतांप्राप्तास्ततोसौभैरवःस्मृतः ॥ ४२ ॥ मार्गशीर्षासिताष्टम्यांकालभैरवसंनिधौ ॥ उपोष्यजागरंकुर्वन्महापापैःप्रमुच्यते ॥ ४३ ॥

लोकाऽनादिसिद्धत्वात् ॥ कुलस्तंभस्थलंतुयातनास्थलम् ॥ एतदप्युक्तंतत्रैव ॥ अयंसहिकुलस्तंभोयत्रश्रीकालभैरवः॥क्षेत्रपापकृतःशास्तिदर्शयंस्तीव्रयातनामिति ॥ ३८ ॥ ३९ ॥ ४० ॥ प्रकारां तरेणकालभैरवनामनिर्वक्ति ॥ कलिमिति ॥ काशीनिवासिनांकलिंकलिनामानंकालंयुगंकलयतिनाशयतिअतोसौकालःस्मृतइतिशेषः ॥ अतःख्यातिमित्यर्धंततोसौभैरवःस्मृतइतिद्वितीयश्लोकस्यां नंतरंज्ञातव्यम् ॥ यद्वा ननुयथाश्रुतव्युत्पत्त्यनुसारेणकालसंज्ञितामितिवक्तव्येकथंकालभैरवसंज्ञितामित्युक्तं तत्राह ॥ सदैवेति ॥ अग्रेवक्ष्यमाणस्यप्रथमंसिद्धवन्निर्दिष्टत्वान्नायंदोषइतिभावः ॥ अथवाकलयतिभीरुतांप्रापयतीत्यर्थः ॥ तदाऋजुरेवार्थःश्लोकस्य ॥ ४१ ॥ इदानींप्रकारांतरेणभैरवनामव्युत्पादयति ॥ सदैवेति ॥ भक्तेभ्यएवबिभ्यतिकिंपुनस्तस्मादितिभावः ॥ ४२ ॥ कथ माराधितश्चेषआराधितःकुत्रकालइतिपंचमषष्ठप्रश्नयोरुत्तरमाह मार्गशीर्षेत्यादिना ॥ मार्गशीर्षाऽसिताष्टम्यामाग्रहायणिककृष्णाष्टम्याम् ॥ महापापैःकाश्यांकृतैः ॥ बहिःकृतानांप्रवेशमात्रेण

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नाशात् ॥ ४३ ॥ यत्किंचित्काशीकृतमित्येव ॥ दर्शनादत्र ॥ ४४ ॥ ४५ ॥ वार्षिकंविघ्नमितिसाधारणम् ॥ क्षेत्रस्थंबाहिःस्थंचेत्यर्थः ॥ ४६ ॥ भूमिजोमंगलस्तस्यचवासरे ॥ ४७ ॥ ४८ ॥ ॥ ४९ ॥ अत्वरस्त्वराराहितः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ प्रतिभूताष्टमीकुजामिति ॥ भूताचचतुर्दशीअष्टमीचकुजश्चमंगलवासरस्तेतथाभूताष्टमीकुजाःभूताष्टमीकुजान्प्रतीतिप्रति भूताष्टमीकुंजंनभजेदित्यन्वयः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायामेकात्रिंशोध्यायः ॥ ३१ ॥ ॥छ॥ ॥ द्वात्रिंशतितमेध्यायेसर्वपापैकनाशके ॥ हरिके

यत्किंचिदशुभंकर्मकृतंमानुषबुद्धितः ॥ तत्सर्वंविलयंयातिकालभैरवदर्शनात् ॥४४॥ अनेकजन्मनियुतैर्यत्कृतंजंतुभिस्त्वघम् ॥ तत्सर्वंविलयत्याशुका लभैरवदर्शनात् ॥ ४५॥ कृत्वाचविविधांपूजांमहासंभारविस्तरैः ॥ नरोमार्गासिताष्टम्यांवार्षिकंविघ्नमुत्सृजेत् ॥ ४६ ॥ अष्टम्यांचचतुर्दश्यांरविभूमिज वासरे ॥ यात्रांचभैरवींकृत्वाकृतैःपापैःप्रमुच्यते ॥ ४७ ॥ कालभैरवभक्तानांसदाकाशीनिवासिनाम् ॥ विघ्नंयःकुरुतेमूढःसदुर्गतिमवाप्नुयात् ॥ ४८ ॥ विश्वेश्वरेपियेभक्तानोभक्ताःकालभैरवे ॥ काश्यांतेविघ्नसंघातंलभंतेतुपदेपदे ॥ ४९ ॥ तीर्थेकालोदकेस्नात्वाकृत्वातर्पणमत्वरः ॥ विलोक्यकालराजं चनिरयादुद्धरेत्पितॄन् ॥ ५० ॥ अष्टौप्रदक्षिणीकृत्यप्रत्यहंपापभक्षणम् ॥ नरोनपापैर्लिप्येतमनोवाक्कायसंभवैः ॥५१॥ तस्मिन्नामर्दकेपीठेजप्त्वास्वाभी ष्टदेवताम् ॥ षण्मासंसिद्धिमाप्नोतिसाधकोभैरवाज्ञया ॥ ५२ ॥ वाराणस्यामुषित्वायोभैरवंनभजेन्नरः ॥ तस्यपापानिवर्धंतेशुक्लपक्षेयथाशशी ॥५३॥ यंयंसंचिंतयेत्काममंपापभक्षणसेवया ॥ बलिपूजोपहारैश्चतंतंससमवाप्नुयात् ॥ ५४ ॥ कालराजंनयःकाश्यांप्रतिभूताष्टमीकुजम् ॥ भजेत्तस्यक्षयेत्पुण्यं कृष्णपक्षेयथाशशी ॥ ५५ ॥ श्रुत्वाध्यायमिमंपुण्यंब्रह्महत्यापनोदकम् ॥ भैरवोत्पत्तिसंज्ञंचसर्वपापैःप्रमुच्यते ॥ ५६ ॥ बंधनागारसंस्थोपिप्राप्तोपि विपदंपराम् ॥ प्रादुर्भावंभैरवस्यश्रुत्वामुच्येतसंकटात् ॥ ५७ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेभैरवप्रादुर्भा वोनामैकत्रिंशोध्यायः ॥ ३१ ॥ ॥ अगस्त्यउवाच ॥ ॥ बर्हियानसमाचक्ष्वहरिकेशसमुद्भवम् ॥ कोसौकस्यसुतःश्रीमा कीदृगस्यतपोमहत् ॥ १ ॥ कथंचदेवदेवस्याप्रियत्वंससमुपेयिवान् ॥ काशीवासिजनीनोभूत्कथंवादंडनायकः ॥ २ ॥ एतदिच्छाम्यहंश्रोतुंप्रसादंकुरुमेविभो ॥ अन्नदत्वंचसंप्राप्तः कथमेषमहामतिः ॥ ३ ॥

शसमुत्पत्तिर्वर्ण्यतेऽतिमनोहरा ॥ १ ॥ एवंभूतोजितेंद्रियोप्यहंक्षेत्राद्बहिर्निष्कासितःकालराजवदनेनापीतिपरमाश्चर्येणदंडपाणेरप्युत्पत्त्यादिकंपृच्छति बर्हीतिचतुर्भिः ॥ बर्हियानमयूररथ ॥ १ ॥ समुपेयिवान्प्राप्तवान् ॥ काशीवासिजनीनोऽभूत्काशीवासिजनेषुप्रख्यातोऽभूत् ॥ [illegible] ॥ दंडनायकोदंडधर्ता ॥ २ ॥ अन्नदत्वंचकाशीवासिजनेष्वित्येव ॥ ३ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नृणामित्युपलक्षणंक्षेत्रवैरिमात्राणामित्यर्थः ॥ तत्रप्रथमश्लोकेप्रश्नचतुष्टयंद्वितीयेद्वयंतृतीयेएकश्चतुर्थेचैकइत्यष्टौप्रश्नाः ॥ ४ ॥ प्रश्नमभिनंदति ॥ सम्यगिति ॥ सम्यगासमंताद्धितंसमा हितम् ॥ सदाहितमितिक्वचित् ॥ कथानकमाभाषणंकथेत्यर्थः ॥ कथात्मकमितिपाठेकथारूपमित्यर्थः ॥ ५ ॥ कथानकमेवविशेषयन्श्रोतृप्ररोचनायतच्छ्रवणफलमाह ॥ यदाकर्ण्येति ॥ नरोमनुष्यमात्रः ॥ हेप्राज्ञेतिसाभिप्रायसंबोधनम् ॥ एतादृक्प्रश्नःपंडितस्यतवोचितइतिभावः ॥ ६ ॥ प्रथमप्रश्नत्रयस्यप्रत्युत्तरंवक्तुमाख्यायिकामाह ॥ रत्नभद्रइति ॥ यक्षोदेवयोनिविशेषः ॥ सुकृतंलक्षयतीतिसुकृतलक्षातथाविधाश्रीर्यस्यसतथोक्तः ॥ तत्रहेतुः ॥ परमधार्मिकइति ॥ ७ ॥ ८ ॥ शांभवेनशिवध्यानात्मकेन ॥ शांताःसर्वेंद्रियार्थाविषयायस्यसशांतसर्वेंद्रियार्थकः ॥ स्वार्थेकः ॥ त्यक्तेतिक्वचित् ॥ ९ ॥ पितरीति ॥ पितरिस्मृतेऽनंतरंसपूर्णभद्रोऽपत्यंविनासर्वान्मनोरथाँल्लेभइत्यग्रिमेणान्वयः ॥ कथंभूतः महायशाबृहत्कीर्तिः ॥ पुनःकीदृशः ॥ सुकृतेनोपात्ताये

संभ्रमोविभ्रमश्चोभौकथंतदनुगामिनौ ॥ विश्रांतिकारिणौक्षेत्रवैरिणांसर्वदानृणाम् ॥ ४ ॥ ॥ स्कंदउवाच ॥ ॥ सम्यगापृच्छिभवताकाशीवासिसमा हितम् ॥ कुंभसंभवविप्रर्षेदंडपाणिकथानकम् ॥ ५ ॥ यदाकर्ण्यनरःप्राज्ञकाशीवासस्ययत्फलम् ॥ निष्प्रत्यूहंतदाप्नोतिविश्वभर्त्तुरनुग्रहात् ॥ ६ ॥ रत्नभद्रइतिख्यातःपर्वतेगंधमादने ॥ यक्षःसुकृतलक्षश्रीःपुरापरमधार्मिकः ॥ ७ ॥ पूर्णभद्रंसुतंप्राप्यसोऽभूत्पूर्णमनोरथः ॥ वयश्चरममासाद्यभुक्त्वाभो गाननेकशः ॥ ८ ॥ शांभवेनाथयोगेनदेहमुत्सृज्यपार्थिवम् ॥ आससादाशवंशांतंशांतसर्वेंद्रियार्थकः ॥ ९ ॥ पितर्युपरतेसोऽथपूर्णभद्रोमहायशाः ॥ सुकृतोपात्तविभवभवसंभोगभुक्तिभाक् ॥ १० ॥ सर्वान्मनोरथाँल्लेभेविनास्वर्गैकसाधनम् ॥ गार्हस्थ्याश्रमनेपथ्यंपथ्यंपैतामहंमहत् ॥ ११ ॥ संसार तापसंतप्तावयवामृतसीकरम् ॥ अपत्यंपततांपोतंबहुक्लेशमहार्णवे ॥ १२ ॥ पूर्णभद्रोऽथसंवीक्ष्यमंदिरंसर्वसुंदरम् ॥ तद्बालकोमलालापविकलंत्यक्तमं गलम् ॥ १३ ॥ शून्यंदरिद्रहृदिवजीर्णारण्यमिवाथवा ॥ पांथवत्प्रांतरमिवखिन्नोऽतीवानपत्यवान् ॥ १४ ॥ आहूयगृहिणींसोऽथयक्षःकनककुंडलाम् ॥ उवाचयक्षिणींश्रेष्ठांपूर्णभद्रोवटोद्भव ॥ १५ ॥ नहर्म्यंसुखदंकांतेदर्पणोदरसुंदरम् ॥ मुक्तागवाक्षसुभगंचंद्रकांतशिलाजिरम् ॥ १६ ॥ पद्मरागेंद्रनीला र्चिरर्चिताट्टालकंक्वणत् ॥ विद्रुमस्तंभशोभाढ्यंस्फुरत्स्फटिककुडचवत् ॥ १७ ॥

विभवाःसमृद्धयस्तैर्येभवसंभोगाःसांसारिकाभोगास्तेषांभुक्तिंभजतइतितथा ॥ १० ॥ अपत्यंविशिनष्टि स्वर्गैकसाधनमिति षडक्षराधिकेनसार्धेन ॥ नेपथ्यंभूषणम् ॥ पैतामहंमहत्पथ्यंपितामहादी नामत्यंतहितकरमित्यर्थः ॥ ११ ॥ संसारतापैःसंतप्ताअवयवायेषांतेषाममृतसीकरंसुधाकणम् ॥ पततांबहुक्लेशमहार्णवेसंसारसागरेमज्जतांपोतंनावम् ॥ १२ ॥ पूर्णभद्रइति ॥ पूर्णभद्रःस्वर्गैकसाधनमपत्यं विनामंदिरंसंवीक्ष्यकनककुंडलामाहूयोवाचेतितृतीयेनान्वयः ॥ तत्प्रसिद्धंमंदिरमित्यन्वयः ॥ विकलंरहितम् ॥ १३ ॥ शून्यमितिदृष्टांतत्रयेणसंबध्यते ॥ पांथवत्पांथस्येव ॥ १४ ॥ पूर्णभद्रइतिपुनरुक्तिर न्वयार्था ॥ पूर्णंसंपूर्णभद्रंयस्यसतथेतिवा ॥ १५ ॥ किमुवाचतदाह ॥ नहर्म्यमिति ॥ हर्म्यंविशिनष्टि दर्पणेत्यादिनागर्भरूपेयतःप्राक्तनेनग्रंथेन ॥ गवाक्षंभित्तिच्छिद्रम् ॥ अजिरमंगणम् ॥ ॥ १६ ॥ पद्मरागाणामिंद्रनीलानांचार्चिर्भिर्दीप्तिभिरर्चिताअत्युज्ज्वलाअट्टालकायस्मिंस्तत् ॥ क्वणत्शब्दायमानंप्रतिस्वनवदित्यर्थः ॥ विद्रुमःप्रवालः ॥ कुडचंभित्तिः ॥ १७ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

प्रेंखत्पताकानिकरंप्रेंखंतीनांचलंतीनांपताकानांनिकरःसमूहोयस्मिंस्तत् ॥ कृष्णागुरुभिःकालागुरुभिर्योमहाधूपस्तेनजातोयोबहुलामोदोमहान्गंधस्तेनमोदितमामोदितम् ॥१८॥ पर्यंकानिखट्वाः ॥ अर्गलानिपरिघाः ॥ १९ ॥ राजिःसमूहः ॥ क्वणदित्युक्तंविवृणोति किंकिणीनादनादितमित्यादिना ॥ यद्वा क्वणदितिवेदाध्ययनादिभिरितिज्ञातव्यम् ॥ २० ॥ नूपुराराावेणसोत्कंठायेकेकिनो मयूरास्तेषांकेकारवैराकुलंव्याप्तम् ॥ गुरुमहत् ॥ सारिसारीकाक्रीडापक्षिणी ॥ शुकसारीतिक्वचित् ॥ २१ ॥ खेलत्क्रीडत्मरालयुगलंहंसयुग्मंयस्मिंस्तत् ॥ जीवंजीवकैश्चकोरैःकांतिमत्शो भायुक्तम् ॥ माल्यानांगंधैराकृष्टत्वाद्भ्रमराणांमाल्याहूतद्विरेफाणामित्युक्तम् ॥ तेषांमंजुगुंजैर्मनोहराव्यक्तैरासमंताद्रवैरावृतम् ॥ २२ ॥ कर्पूरैणमदयोर्यआमोदस्तेनसहितमुदरंयस्यतेनानिले नवीजितम् ॥ क्रीडावानरैर्दंष्ट्राग्रीकृतानिमणिमाणिक्यान्येवमणिमाणिक्यमयानिवादाडिमानियस्मिन् ॥ अथवाखेलावलीमुखैर्दंष्ट्राग्रीकृतानिमाणिक्यानिदाडिमफलानीवयस्मिन् ॥ २३ ॥

प्रेंखत्पताकानिकरंमणिमाणिक्यमालितम् ॥ कृष्णागुरुमहाधूपबहुलामोदमोदितम् ॥ १८ ॥ अनर्घ्यासनसंयुक्तंचारुपर्यंकभूषितम् ॥ रम्यार्गलकपाटाढ्यंदुकूलच्छन्नमंडपम् ॥ १९ ॥ सुरम्यरतिशालाढ्यंवाजिराजिविराजितम् ॥ दासदासीशताकीर्णंकिंकिणीनादनादितम् ॥ २० ॥ नूपुराराावसोत्कंठकेकिकेकारवाकुलम् ॥ कूजत्पारावतकुलंगुरुसारीकथावरम् ॥ २१ ॥ खेलन्मरालयुगलंजीवंजीवककांतिमत् ॥ माल्याहूतद्विरेफाणांमंजुगुंजारवावृतम् ॥ २२ ॥ कर्पूरैणमदामोदसोदरानिलवीजितम् ॥ क्रीडामर्कटदंष्ट्राग्रीकृतमाणिक्यदाडिमम् ॥ २३ ॥ दाडिमीबीजसंभ्रांतशुकतुंडात्तमौक्तिकम् ॥ धनधान्यसमृद्धंचपद्मालयमिवापरम् ॥ २४ ॥ कमलामोदगर्भंचगर्भरूपंविनाप्रिये ॥ गर्भरूपमुखंप्रेक्ष्यैकथंकनककुंडले ॥ २५ ॥ यद्युपायोऽस्तितद्ब्रूहिधिगपुत्रस्यजीवितम् ॥ सर्वंशून्यमिवाभातिगृहमेतदनंगजम् ॥ २६ ॥ धिगेतत्सौधसौंदर्यंधिगेतद्धनसंचयम् ॥ विनापत्यंप्रियतमेजीवितंचाधिगावयोः ॥ २७ ॥ प्रलपंतमिवप्रोच्चैःप्रियंकनककुंडला ॥ बभाषेऽतर्विनिःश्वस्ययक्षिणीसापतिव्रता ॥ २८ ॥ ॥ कनककुंडलोवाच ॥ ॥ किमर्थंखिद्यसेकांतज्ञानवानसियद्भवान् ॥ अत्रोपायोऽस्त्यपत्याप्त्यैविस्रब्धमवधारय ॥ २९ ॥ किमुद्यमवतांपुंसांदुर्लभंहिचराचरे ॥ ईश्वरार्पितबुद्धीनांस्फुरंत्यग्रेमनोरथाः ॥ ३० ॥ दैवंहेतुंवदंत्येवंभृशंकापुरुषाःपते ॥ स्वयंपुराकृतंकर्मदैवंतच्चनहीतरत् ॥३१॥ ततःपौरुषमालंब्यतत्कर्मपरिशांतये ॥ ईश्वरंशरणंयायात्सर्वकारणकारणम् ॥ ३२ ॥

दाडिमीबीजानीतिसंभ्रांतैःशुकैस्तुंडैःकृत्वाआत्तानिगृहीतानिमौक्तिकानियस्मिंस्तत् ॥ एतेनविशेषणद्वयेनमाणिक्यानांमुक्ताफलानांचबाहुल्यंसूचितम् ॥ २४ ॥ कमलानांकमलायावामोदआमोदोगर्भेवायस्मिन् ॥ गर्भरूपमुखंपुत्रमुखम् ॥ गर्भस्यापत्यस्यरूपयुक्तंमुखमितिवा ॥ २५ ॥ यद्युपायोऽस्तिपुत्रोत्पत्तावितिशेषः ॥ नविद्यतेंगजःपुत्रोयस्मिंस्तत ॥ २६ ॥ २७ ॥ प्रलपंतमितिलोकोक्तिः ॥ प्रोच्चैरिवेतिवान्वयः ॥ अन्तर्मनसि ॥ २८ ॥ यद्यतः ॥ २९ ॥ ३० ॥ नन्वदृष्टमेवफलसिद्धौकारणंकिमुद्यमेनतत्राह ॥ दैवमिति ॥ दैवमेवहेतुरितियद्वदंतीत्यर्थः ॥ एवमिति ॥ दैवंहेतुरेवंकापुरुषावदंतीत्यन्वयः ॥ एवंवदन्तं [illegible] ॥ [illegible]रास्वयंकृतंकर्मनेतरदिति ॥ ३१ ॥ पुरुषकारस्यकारणत्वेरिथतेफ

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

लितमाह ॥ ततइति ॥ तत्पापपुण्यलक्षणंकर्मयस्मात्तत्तत्कर्मअज्ञानंपुराकृतंकर्मेतिवातस्यपरिशांतयेनाशायईश्वरंशरणंयायाद्गच्छेदिति ॥ ३२ ॥ नकेवलमेतावदपित्वपत्यमिति ॥ ३३ ॥ विधातुरिति ॥ शांभवींभक्तिंविधातुःकर्तुर्यस्यकस्याचिदित्यर्थः ॥ ३४ ॥ तदेवदर्शयति नारायणोपीत्यादिना ॥ ३५ ॥ ३६ ॥ मृत्युंजयतीतिमृत्युंजयंसुतंनंदिनंशिलमत्तीतिशिलादःकश्चि दृषिर्लेभेलब्धवानिति ॥ शंभोरनुग्रहादित्यनुषज्जते ॥ उत्तरत्राप्यस्ययथासंभवमन्वयः ॥ एवंहिलैंगेश्रूयते ॥ शालंकायनात्मजःशिलादनामामुनिर्बहुकालंतपस्तेपे ततस्तपसातुष्टेनदेवराजेनागत्यवरं वरयेत्यभिहितम् ॥ शिलादोप्ययोनिजंमृत्युहीनंसुव्रतंपुत्रंवव्रे॥तच्छ्रुत्वेंद्रेणाभ्यधायि ॥ योनिजंमृत्युसंयुतंपुत्रंदास्याम्यन्यंनदास्यामियतोऽयोनिजामृत्युहीनानसंति यतःपितामहोप्ययोनिजोमृत्युहीनश्च नभवतिसोपिअंडजःपद्मजोमहादेवांगजोभवान्यास्तनयःपरार्धद्वयनाशेनश्यतिचेतिश्रूयते किमुतान्यस्यवार्ता किंतुयदिदेवेश्वरोरुद्रःप्रसीदतितदामृत्युहीनोऽयोनिजःपुत्रोदुर्लभोनभवति अन्यथामयावा ब्रह्मणावाविष्णुनावैताद्दशःपुत्रोदातुंनशक्यइत्येवंतमनुगृह्यमहेंद्रोययौ॥ ततोमहेंद्रेगतेभवमाराधयतःशिलादस्यदिव्यंवर्षसहस्रत्रयंक्षणमिवगतम् ततोवल्मीकेनावृतांगंतक्षिस्त्रीगणैर्वज्रसूचीमुखैश्चान्यैरक्त स्त्रीभिश्चसर्वतोनिर्मांसरुधिरत्वचंविज्ञायसगणःसोमःप्रादुरभूत् तपसाऽलंसर्वज्ञंसर्वशास्त्रार्थपारगंपुत्रंदास्यामीतिचोक्तवान् ततोभवंप्रणम्यशिलाशनउवाचायोनिजंमृत्युहीनंसुव्रतंपुत्रमिच्छामीति ततः श्रीरुद्रःप्राह पुराममावतारार्थंब्रह्मणामुनिभिर्देवैश्चाहमाराधितोऽतोहमेवायोनिजोमृत्युहीनोनंदिनामातवपुत्रोभविष्यामीति ततोयज्ञांगणंकर्षतःशिलादस्यशंभोराज्ञयानंदिकेश्वरोजातइति ॥ तथाहि ॥

अपत्यंद्रविणंदाराहाराहर्म्यंहयागजाः ॥ सुखानिस्वर्गमोक्षौचनदूरेशिवभक्तितः ॥ ३३ ॥ विधातुःशांभवींभक्तिंप्रियसर्वेमनोरथाः ॥ सिद्ध्योष्टौगृहद्वारंसे वंतेनात्रसंशयः ॥ ३४ ॥ नारायणोपिभगवानंतरात्माजगत्पतिः ॥ चराचराणामविताजातःश्रीकंठसेवया ॥ ३५ ॥ ब्रह्मणःसृष्टिकर्तृत्वंदत्तंतेनैवशंभुना ॥ इंद्रादयोलोकपालाजाताःशंभोरनुग्रहात् ॥ ३६ ॥ मृत्युंजयंसुतंलेभेशिलादोप्यनपत्यवान् ॥ श्वेतकेतुरपिप्रापजीवितंकालपाशतः ॥ ३७ ॥ क्षीरार्ण वाधिपतितामुपमन्युरवाप्तवान् ॥ अंधकोप्यभवद्भृंगीगाणपत्यपदोर्जितः ॥ ३८ ॥

सनत्कुमारंप्रतिनंदिकेश्वरवाक्यम् ॥ प्रजाकामःशिलादोऽभूत्पितामममहामुने ॥ सोपीहसुचिरंकालंतपस्तेपेसुदुश्चरामित्यादि ॥ ग्रंथगौरवभयात्समग्रंनलिख्यते ॥ एवमग्रेपि ॥ श्वेतकेतुरितितस्यैव नामांतरम् ॥ कालपाशितःकालेनपाशेनबद्धः ॥ एवंहिश्रूयतेतत्रैव ॥ श्वेतोनामकश्चिन्मुनिर्गतायुर्गिरिगह्वरेमहादेवमभ्यर्च्यस्तौतिस्म ततश्चप्राप्तकालंतंनेतुंकालःसान्निध्यमकरोत् तदाप्राप्तकालोपि श्वेतस्तंकालंदृष्ट्वाविश्वेशमभ्यर्चतोमेवराकःकालःकिंकरिष्यति यतोमृत्योरपिमृत्युरहंस्थितोऽस्मीतिभावयन्शंकरमनुस्मरन्शंकरंपूजयामास तंतादृशंनिर्भयंदृष्ट्वाकालःसस्मितमाह हेविप्रएह्येहिकिमन यापूजया यतोममाग्रतस्त्वांब्रह्मविष्णुमहेश्वराअपिपरित्रातुंनशक्नुवंति अनेनरुद्रेणममकिम् विधिवशादेवयस्माद्गतासुस्त्वंतस्मात्त्वांनेतुमहमुद्यतइति ततस्तस्यधर्ममिश्रितंभयंकरमेवंश्रुत्वासमुनिर्हारुद्रेति विललाप पश्चादेकयादृशाबाष्पमिश्रयासंप्रेक्ष्योवाचास्मिँल्लिंगेममवृषध्वजःस्वस्त्यस्तिचेत्त्वयाविधिनावाकिम् तस्माद्यथागतंतथागच्छ तदनंतरंतद्वचनंश्रुत्वातीक्ष्णदंष्ट्रोभयंकरःकालःपाशहस्तःसिंहनादं कृत्वामुहुर्मुहुरास्फोट्यकालप्राप्तंतंमुनिंबबंधआहच मयात्वंबद्धोसियमालयंनेतुंतवरुद्रेणममाकिंकृतमद्यकवासरुद्रस्तवभक्तिर्वाकुत्रपूजावाकुत्रपूजाफलंवाकुत्राहंवाक्वममभीतिर्वाक्वातोऽस्मिँल्लिंगेचेत्तवशंक रःकथंनिश्चेष्टइतिकथय तदनंतरंनंदिनागणेश्वरैश्चसहद्विजंनिहंतुमागतंकालंनिहंतुं भगवान्लिंगात्प्रादुर्बभूव ततश्चकालस्तंरुद्रंनिरीक्ष्यक्षणाज्जीवितंविससर्जपपातचेति ॥ तथाहि ॥ श्वेतोनाममुनिः श्रीमान्गतायुर्गिरिगह्वरइत्यादि ॥ ३७ ॥ क्षीरार्णवाधिपतितामिति ॥ एवंहिमहाभारतेश्रूयते ॥ उपमन्युःकिलदुग्धंपिबतोमुनिकुमारान्दृष्ट्वामातरंदुग्धंनिर्बंधेनयाचितवान् तन्मःताचदारिद्र्यवशाद्दुग्धा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भावात्पिष्टेनदुग्धंनिर्मायादात् तत्पीत्वासौननर्त्त तदेतत्सर्वंज्ञात्वाबालाजहसुः ततोहास्यकारणंपृष्टवतेतस्मैस्वदारिद्र्यंमातान्यवेदयत् ॥ तज्ज्ञात्वाश्रीमहादेवमाराध्यदुग्धसागराधिपत्यंसलेभइति॥अंधकार्पीति ॥ एवंहिवामनपुराणेश्रूयते ॥ अंधकोहिदैत्याधिपस्तत्सांनिधौनारदःसमागम्यबहुधातंस्तुत्वोवाच त्वंपुरुषरत्नंत्वत्सदृशंतवस्त्रीरत्नंनास्ति ततस्तेनोक्तम् तर्हिब्रह्मन्कथयकुत्रमत्सदृशंस्त्रीरत्नंविद्यतइति तदानारदेनोक्तंब्रह्मांडेत्रयमेवस्त्रीरत्नंविद्यते ॥ सत्यलोकेसावित्री वैकुंठेलक्ष्मीः मर्त्यभूमौकैलासेचपार्वतीति ॥ तत्रत्वंसामर्थ्यंचेन्निकटवर्त्तित्वात्पार्वतींसमानयेति ॥ ततःसकामाभिभूतःपार्वतीमभिलष्यप्रमथैःसार्धंवारंवारंबहुयुद्धंकुर्वन्नेकदेश्वरेणवर्षाणामयुतंत्रिशूलाग्रेप्रोतआतपेनातिशुष्कईश्वरध्यानेननिष्पापःसन्नीश्वरंतुष्टाव ततोमहेशेनानुगृहीतःपुत्रंपरिकल्प्यदेव्यादत्तस्ततःसगणानामाधिपत्येपदेऊर्जितउद्रिक्तोभृंगीशोनामबभूवेति ॥ ३८ ॥ जिगायशार्ङ्गिणमिति ॥ अत्रैवंकथालैंगे ॥ ब्रह्मणःक्षुतसंभवस्यलब्धवज्रस्यस्वकार्यार्थमिंद्रप्रेरणयास्वेच्छयैवनरशरीरेणसंजातनरपालस्यक्षुपस्यच्यवनात्मजस्यदधीचस्यचक्षत्रियएवश्रेष्ठोविप्रएवश्रेष्ठइतिभिन्नभावेनचिरप्रसंगाद्विवादोऽभूत्ततः कदाचिदष्टलोकपालानांवपुर्वयोधारयतोऽहमिंद्रोहंवह्निरहंयमादिरीश्वरइतित्वयाच्यावनेनाहंनावमंतव्यः किंतुसदासंपूजनीयइतितस्यक्षुपस्यमतंश्रुत्वादधीचआत्मनोमहत्त्वाद्वाममुष्ट्याक्षुपंमूर्ध्न्यताडयत् ततश्चक्रोधात्क्षुपोबलवांस्तपोऽन्वितोवज्रधरतुल्योवज्रेणदधीचंचिच्छेद ततोदधीचोभूमौनिपपात पतित्वाचदुःखाच्छुक्रंसस्मार शुक्रोप्यागत्यदधीचस्यदेहंयोगबलात्संधयामास आहच भोदधीचोमापतिंसमाराध्यावध्योभव मयापिमृतसंजीवनीविद्याततएवलब्धा शंभुभक्तानांमृत्युभयंनास्त्येव मृतसंजीवनीमपितुभ्यमहंददामीतिमृतसंजीवनमंत्रंकथितवान् तस्यतद्वाक्यंश्रुत्वातपसाशंकरमाराध्यवज्रास्थित्वमवध्यत्वंचावाप एवंपरमेश्वरमाराध्यावध्यत्वंवज्रास्थित्वंचप्राप्यपादमूलेनराजेंद्रंसभायांमूर्ध्निप्रयत्नतोऽताडयत् ततःक्षुपोदधीचंपुनरपिवज्रेणताडयामास तत्ताडनंतस्यवज्रबद्धशरीरस्यपरमेशस्यप्रभावान्मनागपिदुःखायनाभूत् तदादधीचस्यावध्यत्वमहीनत्वंचदृष्ट्वाक्षुपोविष्णुंपूजयामास पूजया

## जिगायशार्ङ्गिणंसंख्येदधीचिःशंभुसेवया ॥ प्राजापत्यपदंप्रापदक्षः संशील्यशंकरम् ॥ ३९ ॥

चसंतोषेणदत्तदर्शनंभगवंतंतुष्टावच स्तुत्याप्रत्यक्षीभूतस्यचविष्णोरग्रेतस्यकेभ्योपिभयाभावंचवामपादताडनादिकंचकथयित्वायथाऽहंतंजेष्यामितथाकर्तुमर्हतिभवानितिकथितवान् ॥ तदाविष्णुनोक्तंब्राह्मणमात्रस्यतावत्कस्यापिभयंनास्तिशिवभक्तानांतुप्राणिमात्राणाम् दधीचस्यतदुभयरूपत्वाद्भयंनास्तीतिकिंवक्तव्यम् तस्मात्तवविजयोनास्ति तथापि दक्षयज्ञेतस्यशापेनसुरैःसार्धंममविनाशोभविता पुनरुत्थानंचेति ॥ सप्रभुरस्यमेशापार्थंतस्यदुःखंकरोमिसर्वयत्नेनतमेत्यतवविजयाययत्नंकरिष्यामि तदातथास्त्वितिक्षुपेणाभिहितेब्राह्मणवेषंकृत्वादधीचस्याश्रमंप्राप्यतमभिवंद्यप्राह भोदधीचत्वत्तोहमेकंवरंवृणेतंदातुमर्हसीति ॥ ततस्तेनोक्तंतवाभिप्रेतंमयाज्ञातंब्राह्मणरूपेणक्षुपार्थंतेनाराधितोभक्तवात्सल्येनत्वंविष्णुरेवागतोसितथाप्यहंनबिभेमि रुद्रार्चकस्यभीतिरस्तिचेत्तर्हिसर्वज्ञस्त्वंवद देवदैत्यद्विजादप्येतस्मिन्जगतिनाहंबिभेमीति तदाविष्णुर्दधीचस्यवचःश्रुत्वाद्विजतांक्षणाद्विहायस्वरूपंगृहीत्वासस्मितंप्राह भवार्चनरतस्यतवभयंनास्त्येवसर्वज्ञएवभवांस्तथापिममनियोगात्सदसिक्षुपंप्रतिजयस्तवपरंतुत्वत्तोहंबिभेमीतिसकृद्वक्तुमर्हसीति एवंसांत्वंविष्णोर्वाक्यंश्रुत्वापिनाबिभेमीतितंप्राह ततस्तस्यतादृशंवचःश्रुत्वाकुपितोहरिस्तंदिधक्षुश्चक्रंमुमोच ततोदधीचस्यप्रभावात्सुदारुणमपितच्चक्रंक्षुपस्यसंनिधावेवकुंठितधारमभवत् कुंठितधारंतच्चक्रंदृष्ट्वादधीचआह शिवस्यएतच्चक्रंततस्त्वयालब्धंमांनजिघांसति अतोब्राह्माद्यैरस्त्रैर्मांहंतुंप्रयत्नंकुर्विति तस्यतद्वचःश्रुत्वासर्वाण्यस्त्राणितस्मैससर्जदेवाअपिविष्णोःसाहाय्यंचक्रुः तदाकुशमुष्टिमादायभवंसंस्मरन्दधीचिःससर्ज सचकुशमुष्टिर्दिव्यंकालाग्निसदृशप्रभंत्रिशूलमभवत् तेनचदेवान्दग्धुंसमतिंचक्रे तदस्त्रप्रभावान्नारायणादिभिस्त्यक्तान्यस्त्राणिचप्रणेशुर्देवाश्चदुद्रुवुः ततआत्मनःसदृशान्दिव्यान्लक्षायुतान्गणान्सभगवान्ससर्ज तान्सर्वानेकदैवसमुनिसत्तमोददाह ततस्तस्यविस्मापनार्थायहरिर्विश्वमूर्तिरभूत्तंदृष्ट्वादधीचेनोक्तंहेमहाविष्णोमायांत्यजममाप्येतादृशंविश्वरूपंत्वंपश्येत्युक्त्वास्वतनौविश्वरूपंदर्शयामास आहच हरिमनयामाययाकिम् तस्मान्मायांत्यक्त्वायोद्धुमर्हसीति एवंतस्यवचःश्रुत्वोत्तमंमाहात्म्यंचदृष्ट्वादेवाश्चभूयोपिदुद्रुवुर्ना



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

रायणंचनिश्चेष्टंब्रह्मावारयामास ततोब्रह्मणोवचनंनिशम्यतेननिर्जितस्तंमहामुनिंप्रणिपत्यभगवान्ययौ ततःक्षुपोपिदुःखातुरोभूत्वादधीचंब्राह्मणाएवश्रेष्ठाःमयाऽपराद्धंक्षमस्वेतिप्रार्थयामास ततोदधीचस्तंराजानमनुगृह्यसुरोत्तमान्दक्षयज्ञेविष्णुनागणैश्चसमंहेदेवाःध्वस्ताभवतेतिशशाप क्षुपंसंबोध्यब्राह्मणाएवपूज्याइत्याद्युक्त्वास्वोटजंप्रविवेश दधीचमभिवंद्यक्षुपोपिविस्मितःसन्जगामेति ॥ तथाहि॥ ब्रह्मपुत्रोमहातेजाराजाक्षुपइतिश्रुतः ॥ अभून्मित्रंदधीचस्यमुनींद्रस्यनरेश्वरइत्यादि ॥ संशील्यसम्यग्ध्यात्वा ॥ एतत्त्वीश्वरद्वेषात्पूर्वंपश्चाद्वाज्ञातव्यम् ॥३९॥ किंबहुनासंक्षेपतःशृण्वित्याह॥मनइति ॥ मनोरथपथातीतंवाचामगोचरंयत्पदंकैवल्यंतद्गोचरःप्रत्यक्षीभूतःसन्मृडःक्षणतस्तत्क्षणएवगोचरीकुर्यात्प्रत्यक्षीकुर्याद्दद्यादित्यर्थः ॥ ४० ॥ अन्वयमुक्त्वाव्यतिरेकमाह ॥ अनाराध्येति ॥ ४१ ॥

मनोरथपथातीतंयच्चवाचामगोचरम् ॥ गोचरोगोचरीकुर्यात्तत्पदंक्षणतोमृडः ॥ ४० ॥ अनाराध्यमहेशानंसर्वदंसर्वदेहिनाम् ॥ कोपिक्वापिकिमप्यत्रन लभेतेतिनिश्चितम् ॥ ४१ ॥ तस्मात्सर्वप्रयत्नेनशंकरंशरणंव्रज ॥ यदिच्छसिप्रियंपुत्रंप्रियसर्वजनीनकम् ॥ ४२ ॥ इतिश्रुत्वावचःपत्न्याःपूर्णभद्रः सयक्षराट् ॥ आराध्यश्रीमहादेवंगीतज्ञोगीतविद्यया ॥ ४३ ॥ दिनैःकतिपयैरेवपरिपूर्णमनोरथः ॥ पुत्रकाममवापोच्चैस्तस्यांपत्न्यांदृढव्रतः ॥ ४४ ॥ नादेश्वरंसमभ्यर्च्यकैःकैर्नापिस्वचिंतितम् ॥ तस्मात्काश्यांप्रयत्नेनसेव्योनादेश्वरोनृभिः ॥ ४५ ॥ अंतर्वत्न्यथकालेनतत्पत्नीसुषुवेसुतम् ॥ तस्यनाम पिताचक्रेहरिकेशइतिद्विज ॥ ४६ ॥ प्रीतिदायंददौचाथभूरिपुत्राननेक्षणात् ॥ पूर्णभद्रस्तथागस्त्यहृष्टाकनककुंडला ॥ ४७ ॥ बालोऽपिपूर्णचंद्राभवदनोमदनोपमः ॥ वृद्धिंप्रतिक्षणंप्रापशुक्लपक्षइवोडुराट् ॥ ४८ ॥ यदाष्टवर्षदेशीयोहरिकेशोऽभवच्छिशुः ॥ नित्यंतदाप्रभृत्येवंशिवमेकममन्यत ॥ ४९ ॥ पांसुक्रीडनसक्तोपिकुर्याल्लिंगंरजोमयम् ॥ शाद्वलैःकोमलतृणैःपूजयेच्चसकौतुकम् ॥ ५० ॥ आकारयतिमित्राणिशिवनाम्नाऽखिलानिसः ॥ चंद्रशेखरभूतेशमृत्युंजयमृडेश्वर ॥ ५१ ॥ धूर्जटेखंडपरशोमृडानीशत्रिलोचन ॥ भर्गशंभोपशुपतेपिनाकिन्नुग्रशंकर ॥ ५२ ॥ श्रीकंठनीलकंठेशस्मरारेपार्वतीपते ॥ कपालिन्भालनयनशूलपाणेमहेश्वर ॥ ५३ ॥ अजिनांबरदिग्वासःस्वर्धुनीक्लिन्नमौलिज ॥ विरूपाक्षाहिनेपथ्यगृणन्नामावलीमिमाम् ॥ ५४ ॥ सवयस्कानितिमुहुःसमाह्वयतिलालयन् ॥ शब्दग्रहैनगृह्णीतस्तस्यान्याख्यांहरादृते ॥ ५५ ॥ पद्यांनपद्यतेचान्यद्दृतेभूतेश्वराजिरात् ॥ दृष्टुंरूपांतरंतस्यवीक्षणेनविचक्षणे ॥ ५६ ॥

फलितमुपसंहरति ॥ तस्मादिति ॥ हेप्रियसर्वजनीनकंसर्वलोकश्रेष्ठमतिप्रसिद्धमित्यर्थः ॥ ४२ ॥ ४३ ॥ काम्यतइतिकामः पुत्ररूपंकामंपुत्रकामंपुत्ररूपमभिलाषामित्यर्थः ॥ पुत्ररूपंवरंवा ॥ ४४ ॥ नादेश्वरम्ॐकारम् ॥ ४५ ॥ ४६ ॥ प्रीतिदायंहर्षेणदेयंवस्त्रालंकरणादिकमित्यर्थः ॥ हृष्टाभूदितिशेषः ॥ हृष्टासतीददावितिपूर्वक्रियायावानुषंगः ॥ ४७ ॥ ४८ ॥ एवं वक्ष्यमाणप्रकारेण ॥ ४९ ॥ तमेवप्रकारंदर्शयति ॥ पांस्विति ॥ शाद्वलैर्हरिततृणैः ॥ ५० ॥ शिवनाम्नेत्युक्तंतदेवनामदर्शयति चंद्रशेखरेतिसपादत्रयेण ॥ ५१ ॥ खंडपरशोभग्नकुठार ॥ ५२ ॥ ५३ ॥ अहिनेपथ्यसर्पभूषण ॥ ५४ ॥ सवयस्कान्समानवयसोमित्राणीत्येतत् ॥ पूर्वस्यायमनुवादोऽन्वयार्थः ॥ शब्दग्रहौकर्णौ ॥ ५५ ॥ पद्यतेगम्यते ॥ वीक्ष

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

णेविशिष्टेचक्षुषी ॥ विचक्षणेनिपुणेचतुरेइतियावत् ॥ ५६ ॥ रसयेदास्वादयेत् ॥ रसनाजिह्वा ॥ शिवांघ्रिकमलामोदादन्यदितिशेषः ॥ घ्राणंघ्राणेंद्रियम् ॥ जिघृक्षतिग्रहीतुमिच्छति ॥ ५७ ॥ तत्कौतुककरौतत्सपर्याकरावित्यर्थः ॥ मनतिचिंतयति ॥ शिवसात्कृत्यशिवायसमर्प्य ॥ एतेनतस्यबाणलिंगाद्यन्यतमलिंगपूजकत्वंसूचितम् ॥ तथाचवचनम् ॥ बाणलिंगेस्वयं भूतेचंद्रकांतेहृदिस्थिते ॥ तत्रक्रतुशतंपुण्यंशंभोर्नैवेद्यभक्षणमिति ॥ सद्धियाशोभनधिया ॥ ५८ ॥ त्र्यक्षप्रत्यक्षगानित्रिलोचनाग्रेआनीयसमर्पितानीत्यर्थः ॥ अपिभिन्नक्रमेभक्ष्याणीत्यनेनसंब ध्यते ॥ ५९ ॥ ऐक्षिष्टअपश्यत ॥ भावंपदार्थम् ॥ चिकेतिज्ञानविषयीकरोतिजानातीत्येतत् ॥ कितज्ञानइतिधातुः ॥ ६० ॥ क्षणदासुरात्रिषु ॥ ६१ ॥ ६२ ॥ शिक्षामेवाह एतदित्या

रसयेत्तस्यरसनाहरनामाक्षरामृतम् ॥ शिवांघ्रिकमलामोदाद्घ्राणंनैवजिघृक्षति ॥ ५७ ॥ करौतत्कौतुककरौमनोमनतिनापरम् ॥ शिवसात्कृत्यपेया निपीयंतेतेनसद्धिया ॥ ५८ ॥ भक्ष्यंतेसर्वभक्ष्याणित्र्यक्षप्रत्यक्षगान्यपि ॥ सर्वावस्थासुसर्वत्रनसपश्येच्छिवंविना ॥ ५९ ॥ गच्छन्गायन्स्वपंस्तिष्ठ न्वच्छयानोऽदन्पिबन्नपि ॥ परितस्त्र्यक्षमैक्षिष्टनान्यंभावंचिकेतिसः ॥ ६० ॥ क्षणदासुप्रसुप्तोपिकयासीतिवदन्मुहुः ॥ क्षणंत्र्यक्षप्रतीक्षस्वबुध्यती तिसबालकः ॥ ६१ ॥ स्पष्टांचेष्टांविलोक्येतिहरिकेशस्यतत्पिता ॥ अशिक्षयत्सुतंसोऽथगृहकर्मरतोभव ॥ ६२ ॥ एतेतुरंगमावत्सतवैतेऽश्वकिशो रकाः ॥ चित्राणीमानिवासांसिसुदुकूलान्यमूनिच ॥ ६३ ॥ रत्नान्याकरशुद्धानिनानाजातीन्यनेकशः ॥ कुप्यंबहुविधंचैतद्गोधनानिमहांतिच ॥ ६४ ॥ अमत्राणिमहार्हाणिरौप्यकांस्यमयानिच ॥ पणनीयानिवस्तूनिनानादेशोद्भवान्यपि ॥ ६५ ॥ चामराणिविचित्राणिगंधद्रव्याण्यनेकशः ॥ एतान्य न्यानिबहुशस्त्वनेकेधान्यराशयः ॥ ६६ ॥ एतत्त्वदीयंसकलंवस्तुजातंसमंततः ॥ अर्थोपार्जनविद्याश्चसर्वाःशिक्षस्वपुत्रक ॥ ६७ ॥ चेष्टास्त्यजदरि द्राणांधूलिधूसरिणाममूः ॥ अभ्यस्यविद्याःसकलाभोगान्निर्विश्यचोत्तमान् ॥ ६८ ॥ तांदशांचरमांप्राप्यभक्तियोगंततश्चर ॥ असकृच्छिक्षितःपित्रेत्यव मन्यगुरोर्गिरम् ॥ ६९ ॥ रुष्टदृष्टिंचजनकंकदाचिदवलोक्यसः ॥ निर्जगामगृहाद्भीतोहरिकेशउदारधीः ॥ ७० ॥ ततश्चिंतामवापोच्चैर्दिग्भ्रांतिमपि चाप्तवान् ॥ अहोबालिशबुद्धित्वात्कुतस्त्यक्तंगृहंमया ॥ ७१ ॥ क्वयामिक्वस्थितेशंभोममश्रेयोभविष्यति ॥ पित्रानिर्वासितश्चाहंनचवेद्म्यर्थकिंचन ॥ ७२ ॥ इतिश्रुतंमयापूर्वंपितुरुत्संगवर्तिना ॥ गदतस्तातपुरतःकस्यचिद्वचनंस्फुटम् ॥ ७३ ॥

रम्यासकृदित्यतःप्राक्तनेनग्रंथेन ॥ अश्वकिशोरकास्तरुणाश्वाबालाश्वावेत्यर्थः ॥ ६३ ॥ आकरशुद्धानिजन्मशुद्धानि ॥ कुप्यंस्वर्णरजतातिरिक्तंस्फाटिकादिभाजनम् ॥ ६४ ॥ अमत्राणिपात्रा णि ॥ पणनीयानिविक्रयार्हाणि ॥ ६५ ॥ ६६ ॥ ६७ ॥ निर्विश्यभुक्त्वा ॥ ६८ ॥ ६९ ॥ भीतःपितुःसकाशात् ॥ स्नातइतिपाठेभोजनायकृतस्नानइत्यर्थः ॥ ७० ॥ चिंतामेव विलापद्वारास्पष्टयत्यहोइतिसार्धेन ॥ अहोइत्यादीनांहरिकेशोविचार्येति यातोवाराणसीमितित्रयोदशेनान्वयः ॥ ७१ ॥ ७२ ॥ कुत्रगच्छामिकुत्रवास्थितेममश्रेयोभविष्यतीत्येतद्द्वयंनिश्चि



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नोति श्रुतमित्यादिना ॥ ७३ ॥ तेषांपूर्वोक्तानांसर्वेषामपीत्यर्थः ॥ अग्रेपितेषामित्यत्रापिशब्दोद्रष्टव्यः ॥ येषांक्कापिगतिर्नास्तीत्येतस्यावृत्तिर्वाराणस्याअतिकारुणिकताद्योतनार्था ॥ ७४ ॥ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ आनंददंचेतिचकारादपमाननाशकमित्यपिज्ञेयम् ॥ ८१ ॥ रुचिरभिरुचिः ॥ वैनिश्चितम् ॥ आनंदजोदयःसुखजन्योल्लासविशेषोदयः ॥ सततमितिपाठश्चित्यः ॥ तेनस्वानंदजोदयइतिपाठेतेनाविश्वेशानुग्रहेण ॥ ८२ ॥ प्रकारांतरेणमहाश्मशाननामनिर्वचनंकुर्वन्नगतीनांगतित्वंविशेषतःसाधयति ॥ : भर्ज्यंतइति ॥ कर्मबीजानिकर्माणिबीजानितद्वासनासहितान्यज्ञानानिचेत्यर्थः ॥ ८३ ॥ यातोगतः ॥ ८४ ॥ तनुद्वेषीकाशीस्थानांतनुभृन्मात्राणांतनुमात्रद्वेषीप्रलयकालेवातनुमात्रद्वेषीविश्वनाथः ॥ वाराणसीमागत्यकिंकृतवानित्यत्राहानंदवनामिति ॥ सहरिकेशः ॥ ८५ ॥ कीदृशमस्यतपोमहदितितृतीयप्रश्नस्यप्रत्युत्तरंविशदयितुंप्रसंगमाह ॥ अथेति ॥ अथेतिवाक्यारंभे ॥ ८६ ॥

मात्रापित्रापरित्यक्तायेत्यक्तानिजबंधुभिः ॥ येषांक्कापिगतिर्नास्तितेषांवाराणसीगतिः ॥ ७४ ॥ जरयापरिभूतायेयेव्याधिविकलीकृताः ॥ येषांक्कापिगतिर्नास्तितेषांवाराणसीगतिः ॥ ७५ ॥ पदेपदेसमाक्रांतायेविपद्भिरहर्निशम् ॥ येषांक्कापिगतिर्नास्तितेषांवाराणसीगतिः ॥ ७६ ॥ पापराशिभिराक्रांतायेदारिद्र्यपराजिताः ॥ येषांक्कापिगतिर्नास्तितेषांवाराणसीगतिः ॥ ७७ ॥ संसारभयभीतायेयेबद्धाःकर्मबंधनैः ॥ येषांक्कापिगतिर्नास्तितेषांवाराणसीगतिः ॥ ७८ ॥ श्रुतिस्मृतिविहीनायेशौचाचारविवर्जिताः ॥ येषांक्कापिगतिर्नास्तितेषांवाराणसीगतिः ॥ ७९ ॥ येचयोगपरिभ्रष्टास्तपोदानविवर्जिताः ॥ येषांक्कापिगतिर्नास्तितेषांवाराणसीगतिः ॥ ८० ॥ मध्येबंधुजनेयेषामपमानंपदेपदे ॥ तेषांमानंददंचैकंशंभोरानंदकाननम् ॥ ८१ ॥ आनंदकाननेयेषांरुचिर्वैवसतांसताम् ॥ विश्वेशानुगृहीतानांतेषामानंदजोदयः ॥ ८२ ॥ भर्ज्यंतेकर्मबीजानियत्रविश्वेशवह्निना ॥ अतोमहाश्मशानंतदगतीनांपरागतिः ॥ ८३ ॥ हरिकेशोविचार्येतियातोवाराणसींपुरीम् ॥ यत्राविमुक्तेजंतूनांत्यजतांपार्थिवींतनुम् ॥ ८४ ॥ पुनर्नोतनुसंबंधस्तनुद्वेषिप्रसादतः ॥ आनंदवनमासाद्यसतपःशरणंगतः ॥ ८५ ॥ अथकालांतरेशंभुःप्रविश्यानंदकाननम् ॥ पार्वत्यैदर्शयामासनिजमाक्रीडकाननम् ॥ ८६ ॥ अमंदामोदमंदारंकोविदारपरिष्कृतम् ॥ चारुचंपकचूताढ्यंप्रोत्फुल्लनवमाल्लिकम् ॥ ८७ ॥ विकसन्मालतीजालंकरवीरविराजितम् ॥ प्रस्फुटत्केतकिवनंप्रोद्यत्कुरबकोर्जितम् ॥ ८८ ॥

आक्रीडंविशेषयन्नेतदेवविवृणोति अमंदेतिचतुर्विंशतिभिः ॥ एतेषांश्लोकानांदर्शयन्नित्थमाक्रीडंदेव्यैदेवोऽविशद्वनमित्यग्रिमेणान्वयः ॥ इत्थमेवंभूतम् ॥ एवंभूतत्वमेवाह ॥ अमंदेति ॥ अमंदामोदाःमहापरिमलामंदाराःपारिजातायस्मिन् कोविदारैश्चमारिकैःपरिष्कृतंभूषितम् ॥ चारुभ्यांचंपकचूताभ्यामाढ्यंपरिपूर्णमित्यर्थः ॥ प्रोत्फुल्लाविकसितानवानूतनामल्लिकास्तृणशून्यानियत्र ॥ ॥ ८७ ॥ विकसंतीनांमालतीनांजातीनांजालानिसमूहायत्र ॥ करवीरैःप्रतीहासैर्विराजितंप्रकाशितम् ॥ प्रस्फुटंतीनांविकसंतीनांकेतकीनांतृणजातिभेदानांवनानियत्र ॥ थाकारौस्त्रीकृतौहस्वौकाचिदितिह्रस्वः ॥ दीर्घएववापाठः ॥ प्रोद्यंतियानिकुरबकानिअम्लानस्यवृक्षस्यशोणकुसुमानितैरूर्जितमुद्रिक्तम् ॥ अम्लानस्तुमहासहा ॥ तत्रशोणेकुरबकस्तत्रपीतेकुरंटकइत्यमरः ॥ ८८ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

जृंभतामुज्जृंभतांविकसतामितियावत् ॥ विचकिलानांद्रुमविशेषाणामामोदोयस्मिन् ॥ लसंतीनांकंकेलीनामशोकानांपल्लवायस्मिन् ॥ नवमालतीनांनूतनमालतीनांपरिमलैर्गंधैराकृष्टैराकर्षितैः
षट्पदैर्नादितंनादयुक्तम् ॥ ८९ ॥ पुष्पेषुहिताःपुष्प्याः पुष्प्याणांपुन्नागाणांदेववल्लभानांनिकरःसमूहोयस्मिन् ॥ पुष्प्यदितिपाठेपुष्प्यतांपुष्पाणिजनयतांपुन्नागानामित्यर्थः ॥ बकुलानांकेस
राणामामोदैर्मोदितंसुगंधितम् ॥ मेदस्विनोवपावंतोऽतःस्निग्धाइत्यर्थः ॥ येपाटलास्तेषामामोदैःसदामोदितानिदिशांमुखानियत्र ॥ ९० ॥ बहुशःशाखादिषुलंबिनांरोलंबानांभ्रमराणाम् ॥
रोलंबोमधुलंपटइतिरत्नमाला ॥ माल्यासमूहेनमालितंसंजातमालंभूतलंयत्र ॥ चलत्सुचन्दनशाखाग्रेषुरममाणैःपिकैःकोकिलैराकुलंव्याप्तम् ॥ ९१ ॥ गुरुणामहताऽगुरुणाकालागुरुणामत्ताभद्रजा
तयोउत्कृष्टजातयोविहंगमायत्र ॥ नागकेसराणांशाखासुकौतुकार्थंविश्वकर्मणानिर्मिताःक्रीडार्थमागतावासुरांगनाएवयाःशाकास्थाःशालभंजयःपुत्तलिकास्ताभिर्विनोदितंविलासयुक्तम् ॥ अतएवपूर्व
मुक्तंनिजमाक्रीडकाननमिति ॥ ९२ ॥ मेरुतुंगनमेरुस्थच्छायासुमेरूच्चरुद्राक्षवृक्षजातच्छायासुक्रीडिताःक्रीडायुक्ताःकिंनरायत्र ॥ किंनरीमिथुनानांकिंनरपत्नीयुगलानांस्थानेस्थानेऽद्गुच्चैर्गीतंयत्र ॥

जृंभद्विचकिलामोदंलसत्कंकेलिपल्लवम् ॥ नवमल्लीपरिमलाकृष्टषट्पदनादितम् ॥ ८९ ॥ पुष्प्यपुन्नागनिकरंबकुलामोदमोदितम् ॥ मेदस्विपाटलामो
दसदामोदितदिङ्मुखम् ॥ ९० ॥ बहुशोलंबिरोलंबमालामालितभूतलम् ॥ चलच्चंदनशाखाग्ररममाणपिकाकुलम् ॥ ९१ ॥ गुरुणाऽगुरुणामत्तभद्र
जातिविहंगमम् ॥ नागकेसरशाखास्थशालभंजिविनोदितम् ॥ ९२ ॥ मेरुतुंगनमेरुस्थच्छायाक्रीडितकिंनरम् ॥ किंनरीमिथुनोद्गीतंगानवच्छुक
किंशुकम् ॥ ९३ ॥ कदंबानांकदंबेषुगुंजद्रोलंबयुग्मकम् ॥ जितसौवर्णवर्णोच्चकर्णिकारविराजितम् ॥ ९४ ॥ शालतालतमालालीहिंताली
लकुचावृतम् ॥ लसत्सप्तच्छदामोदंखर्जूरीराजिराजितम् ॥ नारिकेलतरुच्छन्नंनारंगीरागरंजितम् ॥ ९५ ॥ फलिजंबीरनिकरंमधूकमधुपाकुलम् ॥
शाल्मलीशीतलच्छायंपिचुमंदमहावनम् ॥ ९६ ॥ मधुरामोददमनच्छन्नंमरुबनोदितम् ॥ लवलीलोललीलाभृन्मंदमारुतलोलितम् ॥ ९७ ॥ भिल्ली
हल्लीसकप्रीतिझिल्लीरावविराविणम् ॥ क्वचित्सरःपरिसरक्रीडत्क्रोडकदंबकम् ॥ ९८ ॥

गानवंतोमधुरध्वनयःशुकाःकीरायेषुतथाभूताःकिंशुकाः पलाशायत्र ॥ ९३ ॥ कदंबानांहलिप्रियाणांकदंबेषुसमूहेषुगुंजंत्यव्यक्तशब्दवंतिरोलंबयुग्मकानिभ्रमरयुगलानियत्र ॥ जितःसौवर्णःसुवर्ण
संबंधीवर्णोयैस्तेचतेउच्चकर्णिकारामहापरिव्याधास्तैर्विराजितम् ॥ ९४ ॥ लसद्भिःसप्तच्छदैर्विशालत्वग्भिरामोदोयत्र ॥ खर्जूरीणांतृणद्रुमावांतरजातीनांराजिभिःपंक्तिभीराजितंशोभितम् ॥ नारि
केलतरुभिर्लांगलिवृक्षैश्छन्नंव्याप्तम् ॥ ऐरावतापरपर्याया यानागरंगाएवनारंग्यस्तासांरागैरंजितंव्याप्तमितियावत् ॥ नागेतिपाठेनागैःसमूहैरित्यर्थः ॥ ९५ ॥ फलिनांफलवतांजंबीराणांसमीरणानांनि
कराःसमूहायत्र ॥ मधूकेषुगुडपुष्पेषुयेमधुपाःभ्रमरास्तैराकुलम् ॥ शाल्मलीनांपिच्छिलानांशीतलाश्छायायत्र ॥ पिचुमन्दानांनिंबानांमहावनंयत्र ॥ ९६ ॥ मधुरोरम्यआमोदोयेषांतैर्दमन
कैराच्छन्नम् ॥ मरुबेणमरुबकेनपिंडीतकेननोदितमुच्छलितंमरूणांमरुबकानांवावनैरुदितंप्रकाशितम् ॥ मरुबमोदिनमितिपाठेस्पष्टएवार्थः ॥ लवल्यामुक्ताफलायालवालीतिगौडेप्रसिद्धायालोलांचंच
लांचालनरूपामितियावत् लीलांबिभर्त्तीतिलीलाभृत् योमंदमारुतस्तेनलोलितमांदोलितम् ॥ ९७ ॥ भिल्लीनांशबरस्त्रीणांहल्लीसकप्रीतौप्रीयतेऽनेनेतिप्रीतिःक्रीडनकंहल्लीसकाख्येनृत्यक्रीडनके



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वाद्यस्थानीयोझिल्लीनांभृंगारीणांकठोरध्वनिसूक्ष्मकीटानाम् ॥ भृंगारीचीरिकाचीरीझिल्लीकाचसमाइमाइत्यमरः ॥ रावःशब्दस्तेनविराविणंशब्दयुक्तम् ॥ क्वचित्कुत्रचित्सरसांपरिसरेषुपर्यंतभू
मिषुक्रीडतांक्रोडानांसूकराणांकदंबःसमूहोयत्र ॥ ९८ ॥ मरालीनांहंसीनांगलनालीस्थेषुबिसेषुपद्मिनीतंतुष्वासक्ताःसितच्छदाहंसायत्र ॥ हंसीकंठसंसक्तहंसमित्यर्थः ॥ विशोकस्यशोकर
हितस्यकोकमिथुनस्यचक्रवाकयुग्मस्यक्रीडाक्रेंकाराभ्यांलीलातज्जातिशब्दाभ्यांसुंदरंमनोहरम् ॥ ९९ ॥ बकशावकानांबकपोतानांसंचारोयत्र ॥ लक्ष्मणासुसारसयोषित्स्वासक्ताःसारसाःपुष्करा
ह्वायत्र ॥ मत्तैर्बर्हिणैर्मयूरैःसंघुष्टंसंनादितम् ॥ कपिंजलानांकपिञ्जलानालभेतेतिश्रुतिप्रसिद्धपक्षिविशेषाणांकुलैराकुलंव्याप्तम् ॥ १०० ॥ जीवंजीवैःपक्षिविशेषैर्लसन्तउल्लसंतोजीवाःप्राणिनो
यस्मिन् ॥ क्वणद्भिःशब्दायमानैःकारंडवैःपक्षिविशेषैरुत्कटमुच्चैर्व्याप्तमित्यर्थः ॥ दीर्घिकावारिसंचारिणावाप्युदकप्रसरणवताशीतेनवातेनवीजितंसेवितमित्यर्थः ॥ १ ॥ मंदांदोलितक
ह्लाराणामीषच्चलितसौगंधिकानांपरागैरजोभिःपरिपिंगलमत्यंतंपिंजरम् ॥ इदानींपुंरूपेणनिरूपयति ॥ उल्लसदिति ॥ विकसत्पद्मंवक्त्रंयस्यतत् ॥ नीलेंदीवरेपद्मेएवलोचनेयस्यतत् ॥ २ ॥
तमालःकालस्कन्धःकवरीभारःकेशपाशसमूहोयस्यतत् ॥ कवर्याएकत्वेपितदवयवानांबहुत्वाद्भारग्रहणम् ॥ विलसंत्योदाडिम्योरदादंतायस्यतत् ॥ विदलदितिपाठेविदलंत्योविदारं

मरालीगलनालीस्थबिसासक्तसितच्छदम् ॥ विशोककोकमिथुनक्रीडाक्रेंकारसुंदरम् ॥ ९९ ॥ बकशावकसंचारंलक्ष्मणासक्तसारसम् ॥ मत्तबर्हिणसं
घुष्टंकपिंजलकुलाकुलम् ॥ १०० ॥ जीवंजीवलसज्जीवंक्वणत्कारंडवोत्कटम् ॥ दीर्घिकावारिसंचारिशीतमारुतवीजितम् ॥ १ ॥ मंदांदोलितकह्लार
परागपरिपिंगलम् ॥ उल्लसत्पंकजमुखंनीलेंदीवरलोचनम् ॥ २ ॥ तमालकबरीभारंविलसद्दाडिमीरदम् ॥ भ्रमरालीलसद्भ्रूकंशुकनासाविराजितम्
॥ ३ ॥ महांधुश्रवणंदूर्वाश्मश्रुभिःपरिशोभितम् ॥ कमलामोदनिःश्वासंबिंबीफलरदच्छदम् ॥ ४ ॥ सुपद्मपत्रवसनंकर्णिकारविभूषणम् ॥ कम्रकं
बुलसत्कंठंशंकरस्कंधबंधुरम् ॥ ५ ॥ गंधसारसमासक्ताहीनदोर्दंडमंडितम् ॥ अशोकपल्लवांगुष्ठंकेतकीनखरोज्ज्वलम् ॥ ६ ॥

प्राप्नुवत्यइत्यर्थः ॥ भ्रमराल्यौभ्रमरपंक्तीलसंत्यौभ्रुवौयस्यतत् ॥ शुकःकीरएवशुकानांवायानासातयाविराजितम् ॥ ३ ॥ महान्तौअंधूकूपौश्रवणेयस्यतत् ॥ दूर्वाःशतपर्विकाएव ॥
दूर्वातुशतपर्विकेत्यमरः ॥ श्मश्रूणिपुंमुखरूढलोमानितैःपरिशोभितम् ॥ कमलस्यामोदोनिःश्वासोयस्यतत् ॥ बिंबीफलवत्गौंडेप्रसिद्धलोलाकुचाफलवद्रदच्छदौयस्यतत् ॥ ४ ॥
शोभनंपद्मपत्रंवसनंयस्यतत् ॥ कर्णिकाराःपरिव्याधाःसुपुष्पितवृक्षविशेषाविभूषणानियस्यतत् ॥ कम्रकंबुःकमनीयशुक्तिःशोभनवृक्षविशेषःसएवलसञ्छोभमानःकंठोयस्यतत् ॥ शुक्तिःशंखःखुरः
कोलदलंनखमित्यमरः ॥ यद्वा कम्रःकामुकोयःकंबुःशंखःसएवलसत्कंठोयस्यतत् ॥ कामातुरोहिशंखशब्दंकुर्वाणोभवतिसएवलसत्कंठत्वेनोत्प्रेक्ष्यतइत्यर्थः ॥ कामुकेकमितानुकःकम्रःकामयिता
भीकःकमनःकामनोभिकइत्यमरः ॥ शंकरः[1]शिवाख्योवितुन्नकापरपर्यायःकालानुसार्यापरपर्यायोवावृक्षविशेषः ॥ अथवितुन्नकः झटामलाझटातालीशिवातामलकीतिच । कालानुसार्यवृक्षाश्मपुष्प
शीतशिवानितु ॥ शैलेयमित्यमरः ॥ सएवस्कंधवंधुरेस्कंधस्थेवंधुरेउन्नताननतेयस्मिंस्तत् ॥ वंधुरंतून्नताननतमित्यमरः ॥ अथवाक्रीडार्थमागतःशंकरईशादिरुद्रएवमूर्त्तिभेदेनस्कंधवंधुरंस्कंधस्थंमूल
प्ररोहस्थंवंधुरमुन्नतावनतंयस्मिंस्तत् ॥ ५ ॥ गंधसारेचंदनेसमासक्तःसंलग्नोयःअहीनोऽहिश्रेष्ठःसएवदोर्दंडोहस्तस्तेनमंडितम् ॥ अशोकपल्लवौवंजुलपल्लवावंगुष्ठौयस्यतत् ॥ केतकयस्तृणद्रुम

१ शंकरःस्थाणुः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विशेषास्तएवनखरानखास्तैरुज्ज्वलम् ॥ ६ ॥ लसन्कंठीरवःसिंहएवउरोयस्यतत् ॥ गंडशैलोगिरेश्च्युतः पाषाणःसएवपृथुविस्तीर्णमुदरंयस्यतत् ॥ जलावर्तोंऽभसांभ्रमएवलसन्नाभिर्यस्यतत् ॥
तरुएवजंघायुगेताभ्यामान्वितम् ॥ ७ ॥ स्थलभाजौपद्मौचरणौयस्यतत् ॥ मत्तमातंगेनगंतुंशीलंयस्यतत् ॥ पुंस्त्वमार्षम् ॥ लसत्कदलीनांकेदारेषुवप्रेषु ॥ पुंनपुंसकयोर्वप्रःकेदारःक्षेत्रमित्यमरः ॥
दलंतःसंमर्दंतोयेचीनाहरिणाविशेषाः॥ कदलीकंदलीचीनश्चमूरुप्रियकावपि ॥ समूरुश्चेतिहरिणाअमीअजिनयोनयइत्यमरः ॥ तएवांशुकानिवस्त्राणितैरावृतम् ॥ यद्वा लसत्कदलीक्षेत्रेषुयानिदलानिक
दलीपत्राणितान्येवचीनांशुकानिचीनदेशोद्भववस्त्राणितैरावृतम् ॥ ८ ॥ विविधपुष्पस्रग्भिर्मालितंसंजातमालम् ॥ समंततःसर्वत्र ॥ चकारःसमुच्चये ॥ अकंटकिभिःकंटकरहितैस्तरुभिश्छन्नम् ॥
महिषैःश्वापदैश्चव्याघ्रादिभिर्मित्रैरिवैकत्रस्थितैरावृतम् ॥ ऐकपद्यपाठेकर्मधारयः ॥ अकंटकिनस्तरवोयस्मिंस्तत्तथा ॥ छन्नाःप्रच्छन्नाआवृतावैरंविहायएकत्रस्थिताइतियावत् ॥ येमहिषश्वापदास्तैरावृत

लसत्कंठीरवोरस्कंगंडशैलपृथूदरम् ॥ जलावर्तलसन्नाभितरुजंघायुगान्वितम् ॥ ७ ॥ स्थलभाक्पद्मचरणंमत्तमातंगगामिनम् ॥ लसत्कदलिके दारदलच्चीनांशुकावृतम् ॥ ८ ॥ नानासुकुममालाभिर्मालितंचसमंततः ॥ अकंटकितरुच्छन्नंमहिषश्वापदावृतम् ॥ ९ ॥ चंद्रकांतशिलासुप्तकृष्णे णहरितोडुपम् ॥ तरुप्रकीर्णकुसुमजितस्वर्लोकतारकम् ॥ दर्शयन्नित्थमाक्रीडंदेव्यैदेवोविशद्वनम् ॥ ११० ॥ ॥ देवदेवउवाच ॥ ॥ यथाप्रियतमा देविममत्वंसर्वसुंदरि ॥ तथाप्रियतरंचैतन्मेसदानंदकाननम् ॥ ११ ॥ अत्रानंदवनेदेविमृतानांमदनुग्रहात् ॥ वपुस्त्वमृततांप्राप्तमपुनर्भवविनस्तुते ॥ १२ ॥ भविनोयेविपद्यंतेवाराणस्यांममाज्ञया ॥ तेषांबीजानिदग्धानिश्मशानज्वलदग्निना ॥ १३ ॥ महाश्मशानेयेप्राप्तादीर्घनिद्रांगिरींद्रजे ॥ नपुनर्गर्भशयनेतेस्वपंतिकदाचन ॥ १४ ॥ ब्रह्मज्ञानेनमुच्यंतेनान्यथाजंतवःक्वचित् ॥ ब्रह्मज्ञानमयेक्षेत्रेप्रयागेवातनुत्यजः ॥ १५ ॥ ब्रह्मज्ञानंतदे वाहंकाशीसंस्थितिभागिनाम् ॥ दिशामितारकंप्रांतेमुच्यंतेतेतुतत्क्षणात् ॥ १६ ॥ गृह्णीयुःपापकर्माणिकाशीमृतविनिंदकाः ॥ सुकृतानिस्तुतिकृतो मुच्यंतेतेऽत्रजंतवः ॥ १७ ॥

मितिवा ॥ अकंटकिभिस्तरुभिश्छन्नाआच्छादितायेमहिषादयस्तैरावृतमितिवा ॥ ९ ॥ चंद्रकांतशिलासुप्तेनकृष्णसारेणहरितोहारिद्वर्णीकृतःकलंकितइतियावत् ॥ उडुपतिर्बिंबीभूतश्चंद्रोयत्रतत् ॥
तरुप्रकीर्णानियानिकुसुमानितैर्जिताःस्वर्लोकस्यास्तारकायेनतत् ॥ ११० ॥ काननंप्रविश्यकिमकरोत् ॥ काशींवर्णयामासेत्याह ॥ देवदेवउवाचेति ॥ यथाप्रियतमेत्यादीनामितिब्रुवाणोदेवेशो
हरिकेशमवैक्षतेत्यग्रिमेणान्वयः ॥ मेमम ॥ सदैवेतिक्वचित् ॥ ११ ॥ अत्रेति ॥ हेदेविअत्रानंदकाननेयेषांममानुग्रहान्मृतानांजंतूनांवपुःशरीरममृततांपुनर्मरणाभावंप्राप्तंतेपुनर्भविनएवपुनःसंसा
रिणोनभवंत्येवेत्यर्थः ॥ १२ ॥ श्मशानंकाशीसएवज्वलदग्निः ॥ यद्वा श्मशानेकाश्यांज्वलदग्निर्विश्वेशस्तेन ॥ १३ ॥ एतदेवविवृणोति ॥ महाश्मशानइति ॥ १४ ॥ ब्रह्मज्ञानमयेब्रह्मज्ञानप्राप्ति
साधने ॥ १५ ॥ संस्थितिर्मरणंसम्यक्स्थितिर्वा ॥ १६ ॥ काशीमरणादमुक्तिमुक्तीकथयतोदोषगुणावाह ॥ गृह्णीयुरिति ॥ अत्रयेजंतवोम्रियंतेतेनमुच्यंतेइतिकाशीमृतविनिंदकाःपापानिगृह्णीयुर्गृ

१ अमरमालायामाक्रीडशब्दस्यनपुंसकत्वमुक्तंतदभिप्रायेणेयंटीकाकृदुक्तिःसंगच्छते ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ह्वंति ॥ तेमुच्यंतइतिस्तुतिकृतःसुकृतानिगृह्वंतिप्राप्नुवंतीत्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ अंतंमरणंकुर्वंतीत्यंतकृतोमरणंप्राप्ताइत्यर्थः ॥ १२० ॥ २१ ॥ सम्यगभ्यासःसमभ्यासस्तस्मात् ॥ कृताभ्यासादितिकश्चित ॥ २२ ॥ ननुकेचिद्योगेनतपसावामुच्यंतइतिश्रूयते सत्यं तत्तुकलौनसिध्यतीत्याह ॥ नासध्यताात ॥ न्यायार्जितधनस्योत्सर्गस्त्यागोयस्यसनरः ॥ परइतिपाठेपरः केवलःसद्यःसिध्येदिति ॥ २३ ॥ उक्तमेवविवृणोति ॥ नव्रतमिति ॥ मुक्त्यैपरंपरयेत्यर्थः ॥ तदेवाह ॥ काशीदानैरित्यादिना ॥ २४ ॥ २५ ॥ प्राप्येप्राप्तुंयोग्ये ॥ प्राप्तइतिपाठेप्राप्त

ब्रह्मज्ञानंकुतोदेविकलिनोपहतात्मनाम् ॥ स्वभावचंचलाक्षाणांतद्ब्रह्मेहदिशाम्यहम् ॥ १८ ॥ योगिनोयोगविभ्रष्टाःपतंत्यैश्वर्यमोहिताः ॥ काश्यांप तित्वानपुनःपतंत्यपिमहालये ॥ १९ ॥ ब्रह्मज्ञानंनविंदंतियोगैरेकेनजन्मना ॥ जन्मनैकेनमुच्यंतेकाश्यामंतकृतोजनाः ॥ १२० ॥ यथेहमुच्यतेजं तुर्गिरिजेमदनुग्रहात् ॥ अविमुक्तेमहाक्षेत्रेनतथान्यत्रकुत्रचित् ॥ २१ ॥ बहुजन्मसमभ्यासाद्योगीमुच्येतवानवा ॥ मृतमात्रोविमुच्येतकाश्यामे केनजन्मना ॥ २२ ॥ नसिध्यतिकलौयोगोनसिध्यतिकलौतपः ॥ न्यायार्जितधनोत्सर्गःसद्यःसिध्येत्कलौनरः ॥ २३ ॥ नव्रतंनतपोनेज्यानजपो नसुरार्चनम् ॥ दानमेवकलौमुक्त्यैकाशीदानैरवाप्यते ॥ २४ ॥ कलौविश्वेश्वरोदेवःकलौवाराणसीपुरी ॥ कलौभागीरथीगंगाकलौदानंविशिष्यते ॥ २५ ॥ गंगोत्तरवहाकाश्यांलिंगंविश्वेश्वरंमम ॥ उभेविमुक्तिदेपुंसांप्राप्येदानबलात्कलौ ॥ २६ ॥ पुण्यवानितरोवापिममक्षेत्रस्यसेवया ॥ मुक्तो भवतिदेवेशिनात्रकार्याविचारणा ॥ २७ ॥ अविमुक्तस्यमाहात्म्यात्पुण्यपापेनकर्मणा ॥ देविप्रभवतःपुंसामपिजन्मशतार्जिते ॥ २८ ॥ अविमुक्तंनमो क्तव्यंतस्माद्देविमुमुक्षुणा ॥ हन्यमानेनबहुधाह्युपसर्गशतैरपि ॥ २९ ॥ विधायक्षेत्रसंन्यासंयेवसंतीहमानवाः ॥ जीवन्मुक्तास्तुतेदेवितेषांविघ्नंहराम्य हम् ॥ १३० ॥ नयोगिनांहृदाकाशेनकैलासेनमंदरे ॥ तथावासरतिर्मेऽस्तियथाकाश्यांरतिर्मम ॥ ३१ ॥ काशीवासिजनोदेविममगर्भेवसेत्सदा ॥ अतस्तंमोचयाम्यंतेप्रतिज्ञेयंयतोमम ॥ ३२ ॥ तामसींप्रकृतिंप्राप्यकालोभूत्वाचराचरम् ॥ ग्रसामिलीलयादेविकाशींरक्षामियत्नतः ॥ ३३ ॥

व्येइत्यर्थः ॥ २६ ॥ ननुभवतुपुण्यवतांदानेनकाश्यादिप्राप्त्यामोक्षइतरेषांतुकावार्तातत्राह ॥ पुण्यवानिति ॥ २७ ॥ २८ ॥ उपसर्गशतैर्विघ्नशतैः ॥ २९ ॥ १३० ॥ ३१ ॥ काशीस्थप्राणिमात्रमोचनेहेतुमाह ॥ काशीवासीति ॥ हेदेविकाशीवासिजनःकाशीस्थप्राणिमात्रोयतःसदाममगर्भेवसेत् ॥ प्राणेभ्योपिप्रियोममेतिकश्चित् ॥ अतस्तंकाशीवासिनंजनमंतेमोच यामि ॥ मोचयाम्येवेतिकश्चित् ॥ विपक्षेबाधकमाह ॥ यतइयंकाशीस्थप्राणिमात्रमोचनरूपा ॥ ममप्रतिज्ञा ॥ दृढाममेतिकश्चित् ॥ ३२ ॥ यतःकाशीममगर्भभूताऽतस्तामसीमिति ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तामसींतमोगुणोद्रेकाम् ॥ प्रकृतिंमायाम् ॥ तामसस्वभावंवा ॥ ३३ ॥ लयेकाशीरक्षणेहेत्वंतरमाह ॥ प्रेमपात्रमिति ॥ ३४ ॥ निर्वाणंविदेहकैवल्यम् ॥ ३५ ॥ ब्रह्मांडेति ॥ ब्रह्मांडमध्येहेलयाऽनायासेनकाश्यांयद्वद्यथामुक्तिर्व्यवस्थितातथाऽन्यतोन्यत्राष्टांगयोगस्ययुक्त्यायुंजनेनअभ्यासेनापिनेत्यर्थः ॥ ३६ ॥ कीदृगस्यतपोमहदितिचतुर्थस्यप्रश्नस्यप्रत्युत्तरंदातुंविश्वनाथेनदृष्टंहरिकेशंविशिनष्टि इतिब्रुवाणइत्यष्टभिः ॥ मध्येवनंवनमध्ये ॥ ३७ ॥ शुष्कस्नायुभिर्नीरसनाडीभेदैःपिनद्धश्छन्नोऽस्थिसंचयोयस्यतम् ॥ निश्चलाकृतिंनिश्चलशरीरम् ॥ वल्मीककीटावामलूरकीटाः ॥ वामलूरश्चनाकुश्चवल्मीकंपुंनपुंसकमित्यमरः ॥ तएवकीटकास्तेषामासमंतात्कोटयाशोषितमसृक्शोणितंयासांताअसृग्धराःशिरायस्यतम् ॥ ३८ ॥ निर्मांसोमांसरहितःकीकसचयोऽस्थिसमूहोयस्यतम् ॥ स्फटिकोपलनिश्चलंस्फटिकमयपर्वतवत्पाषाणवद्वास्थिरम् ॥ शंखादीनामिवलसंतीश्रीःशोभायस्यतम् ॥ तत्रमहाशंखःशुक्तिर्नरास्थिवा ॥ ३९ ॥ सत्वेंऽतःकरणेऽवलंबिताःस्थिताःप्राणायस्यतम् ॥ आयुःशेषेणप्रारब्धेनकर्मणारक्षितम् ॥ निःश्वासोच्छ्वासपवनस्यप्राणस्यवृत्तिभ्यांसूचितंज्ञापितंजीवितंजीवनंयस्यतम् ॥ १४० ॥ निमेषोन्मेषसंचारेणप्राणिधर्मेणअपिशुनाःपिशुनागुणेषुदोषारोपकाःकृताजंतवोव्याघ्रादयोयेनतम् ॥ तेषामस्मिन्व्याधबुद्धिर्जातेतिभावः ॥ पिंगेपिंगलेतारेकनीनिकेययोःस्फुरंतोरश्मयोययोस्तेचतेनेत्रेचताभ्यांदीपितानिदिशांमुखानियेनतम् ॥ ४१ ॥ सप्रसिद्धश्चासौतपोऽग्निश्चतस्यशिखैवदावोवनाग्निस्तेनचुंबितानिसंलग्नानिअतएवम्लानानिकाननानियेनतम् ॥ तत्तपोग्निशिखादावस्यचुंबितेनसंबंधेनम्लानानिकाननानियस्मादितिवा ॥ तेप्रसिद्धेचसौम्यदृशौचशांतनेत्रेतयोःसुधावर्षेणसंसिक्ताअखिलभूरुहायेनतम् ॥ ४२ ॥

प्रेमपात्रद्वयंदेविनितरांनेतरन्मम ॥ त्वंवातपोधनेगौरिकाशीवानंदभूमिका ॥ ३४ ॥ विनाकाशींनमेस्थानंविनाकाशींनमेरतिः ॥ विनाकाशींननिर्वाणंसत्यंसत्यंवदाम्यहम् ॥ ३५ ॥ ब्रह्मांडगोलकेयद्वन्मुक्तिःकाश्यांव्यवस्थिता ॥ अष्टांगयोगयुक्त्यावानतथाहेलयाऽन्यतः ॥ ३६ ॥ इतिब्रुवाणोदेवेशोहरिकेशमवैक्षत ॥ मध्येवनंतपस्यंतमशोकतरुमूलगम् ॥ ३७ ॥ शुष्कस्नायुपिनद्धास्थिसंचयंनिश्चलाकृतिम् ॥ वल्मीककीटकाकोटिशोषितासृगसृग्धरम् ॥३८॥ निर्मांसकीकसचयंस्फटिकोपलनिश्चलम् ॥ शंखकुंदेंदुतुहिनमहाशंखलसच्छ्रियम् ॥ ३९ ॥ सत्वावलंबितप्राणमायुःशेषेणरक्षितम् ॥ निःश्वासोच्छ्वासपवनवृत्तिसूचितजीवितम् ॥ १४० ॥ निमेषोन्मेषसंचारपिशुनीकृतजंतुकम् ॥ पिंगतारस्फुरद्रश्मिनेत्रदीपितदिङ्मुखम् ॥ ४१ ॥ तत्तपोग्निशिखादावचुंबितम्लानकाननम् ॥ तत्सौम्यदृक्सुधावर्षसंसिक्ताऽखिलभूरुहम् ॥ ४२ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नराकृतिंमनुष्यशरीरंधृत्वासाक्षात्तपइवतपस्यंतम् ॥ किंकृत्वेत्यपेक्षायामाह ॥ निराकांक्षंयथास्यात्तथानिराकृतिमाकारशून्यामनिर्वाच्यांकांचनभक्तिंकृत्वाविधाय ॥ निराकांक्षंयथास्यादिति यद्यपितथापिनिराकृतिंकांचनाकांक्षांकृत्वेत्यर्थः ॥ ४३ ॥ कुरंगशावैर्मृगपोतैर्गणशोयूथशोभ्रमद्भिःपरिवारितंवेष्टितम् ॥ नितांतमतिशयेनभीषणान्यास्यानियेषांतथाभूतैःपंचास्यैःसिंहैरीश्वर प्रयुक्तैःपरिरक्षितम् ॥ ४४ ॥ तंतथेति ॥ तंपूर्वोक्तंप्रसिद्धंवाहरिकेशंतथाभूतंपूर्वोक्तविशेषणविशिष्टमालोक्यदेवीभवानीदेवंविश्वेश्वरंव्याजिज्ञपद्विज्ञापयामास ॥ विज्ञापनप्रकारमाह ॥ हेईशामुं निजभक्तंतपस्विनंवरेणवरदानेनछंदयइच्छांपूरयअनुग्रहंकुर्वित्यथः ॥ ४५ ॥ एतदेवविवृणोति ॥ त्वदेकेति ॥ स्पष्टम् ॥ ४६ ॥ अवरुह्यावतीर्य शैलादिनानंदिनादत्तःकरावलंबो यस्यसः ॥ समाधिनासंकोचितंमुद्रितंनेत्रमेवपत्रंपद्मपत्रंयस्यतम् ॥ ४७ ॥ समक्षंप्रत्यक्षम् ॥ हर्षेणाकुलंगद्गदंचाक्षरंयथास्यात्तथाजगाद ॥ ४८ ॥ किंजगादतदाह ॥ जयेति ॥ जयो त्कर्षमाविष्कुरु ॥ इतःपरमन्यच्छ्रेयोनास्तीतिवहुधासंबोधयति ॥ हेकृपालोदयालो ॥ तवहस्तपंकजंप्राप्यामृतीभूतातनूलतादेहवल्लीयस्यतथाभूतोहमभवंजातोस्मि ॥ कथंभूतंहस्तपंकजम् ॥

साक्षात्तपस्यंतमिवतपोधृत्वानराकृतिम् ॥ निराकृतिंनिराकांक्षंकृत्वाभक्तिंचकांचन ॥४३॥ कुरंगशावैर्गणशोभ्रमद्भिःपरिवारितम् ॥ नितांतभीषणास्यै श्चपंचास्यैःपरिरक्षितम् ॥ ४४ ॥ तंतथाभूतमालोक्यदेवीदेवंव्यजिज्ञपत् ॥ वरेणच्छंदयेशामुंनिजभक्तंतपस्विनम् ॥ ४५ ॥ त्वदेकचित्तंत्वदधीनजी वितंत्वदेककर्माणमसुंत्वदाश्रयम् ॥ तीव्रैस्तपोभिःपरिशुष्कविग्रहंकुरुष्वयक्षस्यवैरनुग्रहम् ॥ ४६ ॥ देवोवृषेंद्रादवरुह्यदेव्याशैलादिनादत्तकरावलंबः ॥ समाधिसंकोचितनेत्रपत्रंपस्पर्शहस्तेनदयार्द्रचेताः ॥ ४७ ॥ ततःसयक्षोविनिमील्यचक्षुषीत्र्यक्षंपुरोवीक्ष्यसमक्षमात्मनः ॥ उद्यत्सहस्रांशुसहस्रतेजसं जगादहर्षाकुलगद्गदाक्षरम् ॥ ४८ ॥ जयेशशंभोगिरिजेशशंकरत्रिशूलपाणेशशिखंडशेखर ॥ स्पर्शात्कृपालोतवपाणिपंकजंप्राप्यामृतीभूततनूलतो ऽभवम् ॥ ४९ ॥ श्रुत्वोदितांतस्यमहेश्वरोगिरंमृद्वीकयासाम्यमुपेयुषींमृदु ॥ भक्तस्यधीरस्यमहातपोनिधेददौवराणांनिकरंतदामुदा ॥ १५० ॥ क्षेत्रस्ययक्षास्यममप्रियस्यमेभवाधुनादंडधरोवरान्मम ॥ स्थिरस्त्वमद्यादिदुरात्मदंडकःसुपालकःपुण्यकृतांचमत्प्रियः ॥ ५१ ॥ त्वंदंडपाणिर्भ वनामतोऽधुनासर्वान्गणान्छाधिममाज्ञयोत्कटान् ॥ गणाविमौत्वामनुयायिनौसदानाम्नायथार्थौनृषुसंभ्रमोद्भ्रमौ ॥ ५२ ॥

स्पर्शात्ममस्पर्शंकुर्वत् ॥ स्पर्शंकृपालोतवपाणिपद्मजमितिपाठेपाणिपद्माज्जातंस्पर्शंप्राप्येत्यर्थः ॥ ४९ ॥ कथंचदेवदेवस्येत्यादिप्रश्नचतुष्टयस्योत्तरंदातुंप्रक्रमते ॥ श्रुत्वेति ॥ हेमहातपोनिधे अगस्त्य ॥ विसर्गांतपाठेहरिकेशविशेषणम् ॥ महेश्वरस्तस्यहरिकेशस्यमृदुयथास्यात्तथागिरंश्रुत्वावराणांनिकरंप्रादादित्यन्वयः ॥ मृदुमितिपाठेगिरोविशेषणम् ॥ कथंभूताम् ॥ मृद्वीकयाद्राक्षय- मधुररसयेतियावत् ॥ साम्यंसमभावमुपेयुषींप्राप्नुवतीम् ॥१५०॥ वरसमूहमेवदशयात क्षेत्रस्येत्यादिना ॥ भोहरिकेशत्वंममप्रियस्यास्यक्षेत्रस्यममवराद्दंडनायकोदंडधारकोभव॥ अद्यदिनमादिअद्या दितद्यथास्यात्तथास्थिरःसन्नित्यर्थः ॥ दंडधारकत्वमेवदर्शयति ॥ दुरात्मनांदुष्टानांदंडकोदुरात्मदंडकः ॥ पुण्यकृतांसुपालकःसुष्ठुरक्षकः ॥ अनुपालकइतिक्वचित्पाठः ॥ तृतीयपादादौक्षेत्रस्थिता न्पाहीतिच ॥ ५१ ॥ शाधिनियमय ॥ उत्कटानुद्भटानपि ॥ [illegible] ॥ यथार्थबाधितोऽर्थोययोस्तौ ॥ तमेवाह ॥ सम्यग्भ्रमोयस्मादित्येकः उत्उत्कृष्टो

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भ्रमोयस्मादित्यपरस्तौ ॥ ५२ ॥ अपृष्टमपिकथयति ॥ त्वमिति ॥ काशीवासिनांजनानांत्वमंत्यभूषामंतिमकालीनामलंकृतिंकुरु ॥ गलेसुनीलंयस्याम् ॥ कंठेकालइत्यादिवदलुक् ॥ भुजगेंद्राःकंकणानिकरभूषणानियस्याम् ॥ भालेपुशोभनानिनेत्राणियस्याम् ॥ करिणांगजानांकृत्तयश्चर्माणिवासांसियस्याम् ॥ वामेमनोहरेईक्षणेनेत्रेयासांताभिरुपलक्षितोवामभागोयस्याम् ॥५३॥ मौलौमस्तकेलसतांकांतिमतांपिंगकपर्दानांपिंगलजटाजूटानांभारोवर्त्ततेयस्याम् ॥ विभूतिभिरग्निहोत्रजभस्मभिःसंक्षालितःपुण्योविग्रहोयस्याम् ॥ अहःस्वपिहिमांशोश्चंद्रस्यकलयालसंतीश्रीर्यस्याम् ॥ अहोइत्याश्चर्येसंबोधनेवा ॥ वृषेंद्रस्यलीलागत्यामंदंगंतुंशीलंयस्यास्ताम् ॥ ५४ ॥ त्वमन्नदइति ॥ अत्राधिकोक्तिर्व्युत्क्रमोक्तिश्चभक्तिरसावेशेनेतिबोद्धव्यम् ॥ ननुत्वमेवतारकोपदेशान्मोक्षदः कथमहमितिचेत्तत्राह ॥ मन्मुखसूपदेशतोमन्मुखनिःसृतशोभनोपदेशान्निमित्तात्त्वमेकएवमोक्षदइत्यर्थः ॥ हीत्यनेनशास्त्रसिद्धिंद्योतयाति ॥ सद्वसतिंसम्यङ्निवासम् ॥ ५५ ॥ विघ्नपूगैः

त्वमंत्यभूषांकुरुकाशिवासिनांगलेसुनीलांभुजगेंद्रकंकणाम् ॥ भालेसुनेत्रांकरिकृत्तिवाससंवामेक्षणालक्षितवामभागाम् ॥ ५३ ॥ मौलौलसत्पिंगकपर्दभारिणींविभूतिसंक्षालितपुण्यविग्रहाम् ॥ अहोहिमांशोःकलयालसच्छ्रियंवृषेंद्रलीलागतिमंदगामिनीम् ॥ ५४ ॥ त्वमन्नदःकाशिनिवासिनांसदात्वंप्राणदोज्ञानदएकएवहि ॥ त्वंमोक्षदोमन्मुखसूपदेशतस्त्वंनिश्चलांसद्वसतिंविधास्यसि ॥ ५५ ॥ त्वंविघ्नपूगैःपरिपीड्यपापिनःसंभ्रांतिमुत्पाद्यविनेष्यसेबहिः ॥ आनीयभक्तान्क्षणतोपिदूरतोमुक्तिंपरांदापयितासिपिंगल ॥ ५६ ॥ त्वत्सात्कृतेक्षेत्रवरेहियक्षराट्कस्त्वामनाराध्यविमुक्तिभाजनम् ॥ सभाजनंपूर्वतएवतेचरेत्ततःसमर्चांममभक्तआचरेत् ॥ ५७ ॥ त्वंग्रामवासप्रदएवमेपुरेऽध्यक्षस्त्वमेवेहचदंडनायकः ॥ दुष्टान्समुद्घाटयकाशिवैरिणःकाशींपुरींरक्षसदामुदान्वितः ॥ ५८ ॥ पूर्णभद्रसुतदंडनायकत्र्यक्षयक्षहरिकेशपिंगल ॥ काशिवासवसतांसदान्नदज्ञानमोक्षदगणाग्रणीर्भव ॥ ५९ ॥ मद्भक्तियुक्तोपिविनात्वदीयांभक्तिंनकाशीवसतिंलभेत ॥ गणेषुदेवेषुहिमानवेषुतदग्रमान्योभवदंडपाणे ॥ १६० ॥ ज्ञानोदतीर्थेविहितोदकक्रियोयस्त्वांसमाराधयितागणेशम् ॥ सएवलोकेकृतकृत्यतामगान्ममातुलानुग्रहतोऽत्रपुण्यवान् ॥ ६१ ॥ त्वंदक्षिणस्यांदिशिदंडपाणेसदैवमेनेत्रसमक्षमत्र ॥ त्वंदंडयन्प्राणभृतोदुरीहानिहास्वनॄन्स्वानभयंदिशन्वै ॥ ६२ ॥

प्रत्यूहसमूहैः ॥ पिंगलहेतपसापिंगलमूर्ते सूर्यपारिपार्श्वकस्यपिंगलस्यावतारत्वाद्वातथासंबोध्यते ॥ ५६ ॥ त्वदिति ॥ यक्षराट्हेयक्षराजक्षेत्रवरेऽस्मिन्नविमुक्तेत्वत्सात्त्वदधीनेकृतेसतिकस्त्वामनाराध्यापूजयित्वामुक्तिभाजनंमुक्तेःपात्रंस्यात् ॥ अतःपूर्वतएवप्रथममेवतेतवसभाजनंपूजनंचरेत् ॥ ततस्तदनंतरंममसमर्चांममभक्तआचरेत्कुर्यात् ॥ अन्यथाकृतेममभक्तएवनस्यादितिभावः॥५७॥ दंडनायकस्त्वमेधिसव ॥ ५८ ॥ ५९ ॥ तत्तस्माद्ग्रमान्यःप्रथमतएवपूज्यः ॥ १६० ॥ गणेशंगणानांनियंतारंत्वामिति ॥ ६१ ॥ हेदंडपाणेत्वमिहक्षेत्रेसदैवमेममनेत्रसमक्षंप्रत्यक्षमास्वतिष्ठेत्यन्वयः ॥ कुत्रेत्याकांक्षायामाह ॥ मेदक्षिणस्यांदिशीति ॥ किंकुर्वन् ॥ दुश्चेष्टान्प्राणभृतःप्राणिनोदंडयन् ॥ पुनःकिंकुर्वन् ॥ स्वान्भक्तान्नॄन्मनुष्यान्प्रतिअभयंदिशन् ॥ वैनिश्चये ॥ ६२ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विवेशपरिचचार ॥ ६३ ॥ निदेशतईश्वराज्ञया ॥ चद्दुष्टतइतिक्वचित्पाठः ॥ ६४ ॥ अहमिति ॥ तदनुसूययातद्गुणदोषाविष्कारेण ॥ गुणेषुदोषाविष्करणमेवाह ॥ वसन्नपीति ॥
काश्यांवसन्नपिसमयानसंभावितोयतःअतस्तदनुसूययाहमप्यत्रवसतिंचक्रइत्यर्थः ॥ त्वयेतिपाठोवाहुल्येननदृश्यतेसचिंत्यः ॥ ६५ ॥ मुनेइति ॥ हेमुनेएवंविधोवशीजितेन्द्रियोपिक्षेत्रंयस्त्वमत्याक्षी
स्त्यक्तवानसि ॥ यदात्याक्षीरितिपाठेआसमंततःसर्वात्मनेत्यर्थः ॥ तत्रत्यागेकामंनिराबाधंतस्यैवदंडपाणेरेवविक्रियांप्रातिकूल्यंहेतुमहंशंकेआशंकइत्यर्थः ॥ ६६ ॥ तद्विक्रियायांहेतुंदर्शयन्पू
र्वोक्तमेवविवृणोति ॥ मनागिति ॥ निर्वृतिःसुखम् ॥ ६७ ॥ ६८ ॥ अतःस्वयमपिकाशीवासायोद्रिक्तभक्तिस्तमेवप्रार्थयते ॥ रत्नभद्रेति ॥ उत्तमश्रेष्ठ ॥ शिवाप्तयेमोक्षाय ॥ ६९ ॥

॥ स्कंदउवाच ॥ ॥ इतिदत्त्वावरान्विप्रगिरीशोदंडपाणये ॥ वृषेंद्रमधिरुह्याथविवेशानंदकाननम् ॥ ६३ ॥ कुंभोद्भवतदारभ्ययक्षराड्दंडनायकः ॥ पुरींवाराणसींसम्यगनुशास्तिनिदेशतः ॥ ६४ ॥ अहमप्यत्रवसतिंचक्रेतदनुसूयया ॥ वसन्नपिमयाकाश्यांयतःसंभावितोनसः ॥ ६५ ॥ मुनेक्षेत्रंयदत्याक्षीस्त्वमप्येवंविधोवशी ॥ शंकेतत्राहमेवाद्धाकामंतस्यैवविक्रियाम् ॥ ६६ ॥ मनाग्विरुद्धाचरणंयदिद्विजविलक्षयेत् ॥ हरिकेशस्तदाकाश्यांक्वस्थितिःक्वचनिर्वृतिः ॥ ६७ ॥ दंडपाणिमनाराध्यकःकाश्यांसुखमाप्नुयात् ॥ प्रविविक्षुरहंकाशींदूरगोपिभजामितम् ॥ ६८ ॥ रत्नभद्रांगजोद्भूतपूर्णभद्रसुतोत्तम ॥ निर्विघ्नंकुरुमेयक्षकाशीवासंशिवाप्तये ॥ ६९ ॥ धन्योयक्षःपूर्णभद्रोधन्याकांचनकुंडला ॥ ययोर्जठरपीठेभूर्दंडपाणेमहामते ॥ १७० ॥ जययक्षपतेधीरजयपिंगललोचन ॥ जयपिंगजटाभारजयदंडमहायुध ॥ ७१ ॥ अविमुक्तमहाक्षेत्रसूत्रधारोग्रतापस ॥ दंडनायकभीमास्यजयविश्वेश्वरप्रिय ॥ ७२ ॥ सौम्यानांसौम्यवदनभीषणानांभयानक ॥ क्षेत्रपापधियांकालमहाकालमहाप्रिय ॥ ७३ ॥ जयप्राणदयक्षेंद्रकाशीवासान्नमोक्षद ॥ महारत्नस्फुरद्रश्मिचयचर्चितविग्रह ॥ ७४ ॥ महासंभ्रांतिजनकमहोद्भ्रांतिप्रदायक ॥ अभक्तानांचभक्तानांसंभ्रांत्युद्भ्रांतिनाशक ॥ ७५ ॥ प्रांतनेपथ्यचतुरजयज्ञाननिधिप्रद ॥ जयगौरीपदाब्जालेमोक्षेक्षणविचक्षण ॥ ७६ ॥

बुद्ध्याप्रत्यक्षीकृत्यतंस्तोतुमुपक्रमते ॥ धन्यइति ॥ हेदंडपाणेहेमहामतेययोर्जठरपीठेभवतीतिभूस्त्वंसपूर्णभद्रोधन्यःसाचकनककुंडलाधन्येति ॥ १७० ॥ स्तुतिमाह जयेत्यष्टभिः ॥
दंडएवमहायुधंयस्य ॥ ७१ ॥ सूत्रधारस्थपते ॥ ७२ ॥ महान्प्रियोमहाप्रियः ॥ ७३ ॥ महारत्नानांस्फुरतारश्मिचयेनचर्चितोविग्रहोयस्य ॥ ७४ ॥ अभक्तानांचेत्यस्यपूर्वेणान्वयः
॥ ७५ ॥ प्रांतेनेपथ्यचतुरअंतिमकालीनालंकरणेदक्ष ॥ गौरीपदाब्जालेभवानीपादपद्मभ्रमर ॥ मोक्षस्येक्षणेमोक्षइहास्तींभविष्यतीतिज्ञानेविचक्षणनिपुणमोक्षेक्षणविचक्षण ॥ मोक्षेषणेतिक्व

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चित् ॥ ७६ ॥ स्वफलमाह ॥ यक्षेति ॥ ७७ ॥ परफलमाह ॥ दंडपाणीतिद्वाभ्याम् ॥ श्रद्धयाजपन्नितिसंबंधः ॥ ७८ ॥ विपत्तिमरणम् ॥ ७९ ॥ एतदध्यायश्रवणपठनफलमाह ॥ श्रुत्वेति ॥ १८० ॥ इतिश्रीरामानंदकृतायांकाशीखण्डटीकायांद्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ छ ॥ ॥ चिद्वाप्यावर्णनंचित्रंचित्रकाशीक्षणांतरम् ॥ त्रयस्त्रिंशत्तमेऽध्यायेतथ्यंसंकथ्यतेध्रुवम् ॥ १ ॥ ज्ञानोदतीर्थेविहितोदकक्रियइत्युक्तंतत्रपृच्छति ॥ स्कन्देति ॥ विशेषतएतत्प्रश्नेहेतुमाह ॥ ज्ञानवापीमिति ॥ स्वर्गौकसोदेवाअपि ॥ अलमत्यर्थम् ॥ १ ॥ २ ॥ अनादीति ॥ देवयुगेसत्ययुगे ॥ ईशानःपूर्वोत्तरांतरालदिगधिष्ठाताऽष्टानांरुद्राणांमध्येएकतमः॥तथाचोक्तंवैष्णवेनीललोहितंरुद्रमुपक्रम्य ॥ भवंशर्वमहेशानंतथाभूतपतिंद्विज ॥ भीममुग्रंमहादेवमुवाचसपितामहइति ॥ निर्वाणकमलायामोक्षलक्ष्म्याःक्षेत्रमानंदकाननंप्राप्तइति तृतीयेनान्वयः ॥ ३ ॥ कदाप्राप्तइत्याकांक्षायांकालंनिर्दिशति नवर्षतियदेतिद्वाभ्याम् ॥ ४ ॥ क्षारस्वादुनीउदेउदकेययोस्तौक्षारस्वादूदौलवण

यक्षराजाष्टकंपुण्यमिदंनित्यंत्रिकालतः ॥ जपामिमैत्रावरुणेवाराणस्यातिकारणम् ॥ ७७ ॥ दंडपाण्यष्टकंधीमाञ्जपन्विघ्नैर्नजातुचित् ॥ श्रद्धयापरिभूयेतकाशीवासफलंलभेत् ॥ ७८ ॥ प्रादुर्भावंदंडपाणेःशृण्वन्स्तोत्रमिदंगृणन् ॥ विपत्तिमन्यतःप्राप्यकाशींजन्मांतरेलभेत् ॥ ७९ ॥ श्रुत्वाध्यायमिमंपुण्यंदंडपाणिसमुद्भवम् ॥ पठित्वापाठयित्वापिनविघ्नैरभिभूयते ॥ १८० ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडे पूर्वार्द्धे दंडपाणिप्रादुर्भावोनामद्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ अगस्त्यउवाच ॥ ॥ स्कंदज्ञानोदतीर्थस्यमाहात्म्यंवदसांप्रतम् ॥ ज्ञानवापींप्रशंसंतियतःस्वर्गौकसोप्यलम् ॥१॥ ॥ स्कंदउवाच ॥ ॥ घटोद्भवमहाप्राज्ञशृणुपापप्रणोदिनीम् ॥ ज्ञानवाप्याःसमुत्पत्तिंकथ्यमानांमयाधुना ॥२॥ अनादिसिद्धेसंसारेपुरादेवयुगेमुने ॥ प्राप्तःकुतश्चिदीशानश्चरन्स्वैरमितस्ततः ॥ ३ ॥ नवर्षतियदाभ्राणिनप्रावर्ततनिम्नगाः ॥ जलाभिलाषोनयदास्नानपानादिकर्मणि ॥ ४ ॥ क्षारस्वादूदयोरेवयदासीज्जलदर्शनम् ॥ पृथिव्यांनरसंचारेवर्तमानेक्वचित्क्वचित् ॥ ५ ॥ निर्वाणकमलाक्षेत्रंश्रीमदानंदकाननम् ॥ महाश्मशानंसर्वेषांबीजानांपरमूषरम् ॥ ६ ॥ महाशयनसुप्तानांजंतूनांप्रतिबोधकम् ॥ संसारसागरावर्तपतज्जंतुतरंडकम् ॥ ७ ॥ यातायातातिसंखिन्नजंतुविश्राममंडपम् ॥ अनेकजन्मगुणितकर्मसूत्रच्छिदाक्षुरम् ॥ ८ ॥ सच्चिदानंदनिलयंपरब्रह्मरसायनम् ॥ सुखसंतानजनकंमोक्षसाधनसिद्धिदम् ॥ ९ ॥ प्रविश्यक्षेत्रमेतत्सईशानोजटिलस्तदा ॥ लसत्त्रिशूलविमलरश्मिजालसमाकुलः ॥ १० ॥

जलार्णवौतयोः ॥ ५ ॥ क्षेत्रंविशिनष्टि निर्वाणेतितिभिः ॥ महांतिभूतानिश्मशवीभूयशानंशेरतेऽस्मिन्नितिमहाश्मशानम् ॥ तदुक्तम् ॥ श्मशब्देनशवःप्रोक्तःशानंशयनमुच्यतइति ॥ बीजानांकर्मणामूषरमनुद्भवहेतुम् ॥ ६ ॥ महाशयनसुप्तानामात्माज्ञानजृंभितानांजंतूनांप्रतिबोधकंज्ञानजनकम् ॥ संसारसागरावर्तेसंसाररूपस्यसमुद्रस्यजलस्थानीयानांरागादीनामावर्तेभ्रमेपततांजंतूनांतरंडकंवेलारूपमित्यर्थः ॥ यद्वा तरंडकंमहानौकास्वरूपंपद्मंभाषयातरंडोनामॐपिंगलोजयइतिदर्शनात् (?) ॥ ७ ॥ गमनागमनाभ्यामतिसंखिन्नानांजंतूनांविश्राममंडपंकैवल्यैकगृहम् ॥ अनेकजन्मभिर्गुणितानिग्रथितानियानिकर्मरूपाणिसूत्राणितेषांछिदायाश्छेदनस्यक्षुरमतितीक्ष्णधारंशस्त्रविशेषः ॥ विच्छेदकमित्यर्थः ॥ ८ ॥ सच्चिदानंदलक्षणस्यविश्वेश्वरस्यनिलयमाश्रयम् ॥ परब्रह्मचासौरसश्चेति ॥ रसोवैसः रसंह्येवायंलब्ध्वानंदीभवतीतिश्रुतेः ॥ [illegible] ॥ ९ ॥ प्रविश्येति ॥ सप्रसिद्धःपूर्वोक्तोवा ॥ एतत्पूर्वोक्तविशेषणवि

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शिष्टमेतत्क्षेत्रंप्रविश्यमहालिंगमालुलोकेददर्शेतिद्वितीयेनान्वयः ॥ कथंभूतोजटिलोजटावान् ॥ शोभमानत्रिशूलस्यनिर्मलरश्मिसमूहेनव्याप्तः ॥ १० ॥ किंतल्लिंगंयद्वैकुंठपरमेष्ठिनोर्यज्ञहिरण्यगर्भ योर्महाहमहमिकायांमहानहंमहानहमितिसंरब्धक्रियायाम् ॥ आदितःकालभैरवाध्यायेपूर्वमितिवा ॥ प्रादुरासप्रादुरभूत् ॥ ११ ॥ लिंगंविशिनष्टि ज्योतिरितिचतुर्भिः ॥ ज्योतिर्मयीभिर्माला भिर्देदीप्यमानाभिःपुष्पादिमालाभिस्तेजःपुंजैर्वाचतुर्दिक्षुव्याप्तमित्यर्थः ॥ वृंदारकादेवाऋषयश्चतेषांवृंदैःसमूहैर्निरंतरमर्च्यमानमित्यन्वयः ॥ १२ ॥ सिद्धानांकपिलादीनांयोगिनांचसनकादीनां स्तोमैःसमूहैश्चनिरंतरमर्च्यमानम् ॥ गंधर्वैर्निरंतरंगीयमानंचचारणैर्देवानांस्तुतिपाठकैर्निरंतरंस्तूयमानंचेत्यर्थः ॥ १३ ॥ अंगहारैर्नृत्यैरुर्वश्यादिभिरनेकधासेव्यमानम् ॥ नागकन्या भिर्मणिदीपकैर्मणिरूपैःप्रदीपैःसततंनीराज्यमानंनीराजनंप्राप्यमाणम् ॥ १४ ॥ विद्याधरकिन्नरांगनाभिःकालत्रयंव्याप्यकृतंमंडनंभूषणंयस्य कृतानिमंडनानिसर्वतोभद्रादीनिवायस्मैतत् ॥ अमरी भिर्देवस्त्रीभिश्चमरीराजिभिश्चामरपंक्तिभिर्वीज्यमानंदेवांगनाभिश्चामरव्यजनैःसेव्यमानमित्यर्थः ॥१५॥ अस्येतिअस्यप्रकृतस्यईशानस्यताल्लिंगंदृष्ट्वाइतिएतादृशीइच्छाभवत्॥कीदृशीत्याकांक्षायामाह॥

आलुलोकेमहालिंगंवैकुंठपरमेष्ठिनोः ॥ महाहमहमिकायांप्रादुरासयदादितः ॥ ११ ॥ ज्योतिर्मयीभिर्मालाभिःपरितःपरिवेष्टितम् ॥ वृंदैर्वृंदारकर्षीणां गणानांचनिरंतरम् ॥ १२ ॥ सिद्धानांयोगिनांस्तोमैरर्च्यमानंनिरंतरम् ॥ गीयमानंचगंधर्वैःस्तूयमानंचचारणैः ॥ १३ ॥ अंगहारैरप्सरोभिःसेव्यमा नमनेकधा ॥ नीराज्यमानंसततंनागीभिर्मणिदीपकैः ॥ १४ ॥ विद्याधरीकिन्नरीभिस्त्रिकालंकृतमंडनम् ॥ अमरीचमरीराजिवीज्यमानमितस्ततः ॥ १५ ॥ अस्येशानस्यतल्लिंगंदृष्ट्वेच्छेत्यभवत्तदा ॥ स्नपयामिमहल्लिंगंकलशैःशीतलैर्जलैः ॥ १६ ॥ चखानचत्रिशूलेनदक्षिणाशोपकंठतः ॥ कुंडं प्रचंडवेगेनरुद्रोरुद्रवपुर्धरः ॥ १७ ॥ पृथिव्यावरणांभांसिनिष्क्रांतानितदामुने ॥ भूप्रमाणाद्दशगुणैर्यैरियंवसुधावृता ॥ १८ ॥ तैर्जलैःस्नापयां चक्रेत्वस्पृष्टैरन्यदेहिभिः ॥ तुषारैर्जाड्यविधुरैर्जंजपूकौघहारिभिः ॥ १९ ॥ सन्मनोभिरिवात्यच्छैरनच्छैर्व्योमवर्त्मवत् ॥ ज्योत्स्नावदुज्ज्वलच्छायैः पावनैःशंभुनामवत् ॥ २० ॥ पीयूषवत्स्वादुतरैःसुखस्पर्शैर्गवांगवत् ॥ निष्पापधीवद्गंभीरैस्तरलैःपापिशर्मवत् ॥ २१ ॥ विजिताब्जमहागंधैःपाट लामोदमोदिभिः ॥ अदृष्टपूर्वलोकानांमनोनयनहारिभिः ॥ २२ ॥

स्नपयामीति ॥ १६ ॥ चखानकुंडंखनितवान् ॥ कुत्र ॥ विश्वेशस्थानाद्दक्षिणाशायाउपकंठतःकंठस्यसमीपमुपकंठंतस्मिन्विश्वेश्वरस्यदाक्षिणस्यांदिश्यतिसमीपइत्यर्थः ॥ १७ ॥ पृथिव्या वरणांभांसिपृथिव्याद्वितीयावरणांभांसि ॥ कथंभूतानि ॥ भूप्रमाणात्पंचाशत्कोटिलक्षणाद्दशगुणैर्यैरंभोभिर्जलैरियंवसुधावृतातानि ॥ १८ ॥ तैर्जलैःस्नापयांचक्रेइत्यन्वयः ॥ जलानिविशिनष्टि त्वस्पृष्टैरितिपादोनसप्तभिः ॥ तुएवअन्यप्राणिभिरस्पृष्टैरेवेत्यर्थः ॥ तुषारैस्तत्तुल्यैःशीतलैरित्यर्थः ॥ जाड्यविधुरैःजडस्यभावोजाड्यंतद्विधुरैर्ज्ञानैकस्वरूपैः ॥ जंजपूकौघहारिभिःपापनिकरध्वं सिभिः ॥ १९ ॥ सतांमनोभिःसंतिसमीचीनानियानिमनांसितैरिवात्यच्छैरत्यंतनिर्मलैः ॥ अनच्छैर्नीलीसदृशैर्व्योमवर्त्मवदाकाशमार्गैरिव ॥ नविद्यमानमच्छंयेभ्यस्तैरितिवा ॥ अतुच्छै रितिक्वचित् ॥ ज्योत्स्नावत्ज्योत्स्नाभिरिवोज्ज्वलाच्छायाकांतिर्येषांतैः ॥ पावनैःपवित्रैःशंभुनामवत्शिवनामभिरिव ॥ २० ॥ पीयूषवत्अमृतैरिवस्वादुतरैरत्यंतसुस्वादैः ॥ सुखंस्पर्शोयेषांतैः गवांगवद्गवामंगैरिव ॥ निष्पापधीवत्निष्कलुषबुद्धिभिरिवगंभीरैरगाधैः ॥ तरलैश्चंचलैःपापिशर्मवत्पापिनांसुखैरिव ॥ २१ ॥ विजितास्तिरस्कृतोऽब्जानांपद्मानांमहागंधोयैः ॥ पाटलायाःपाटले

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

रिववायआमोदोहर्षोगन्धोवातेनतस्मादपिवामोदितुंशीलंयेषांतैः ॥ नदृष्टानिपूर्वंयैस्तेऽदृष्टपूर्वास्तेचतेलोकाश्चतेषांमनोनेत्रहरणशीलैः ॥ २२ ॥ अज्ञानरूपतापसन्तप्तप्राणिप्राणानांमुख्यरक्षणशीलैः ॥ दधिदुग्धघृतमधुशर्कराणांकुंभैर्यत्स्नानंततोप्यतिफलंप्रददतीतितथातैः ॥ २३ ॥ श्रद्धयोपस्प्रष्टुमाचमितुंशीलंयेषांतेषांहृदयेषुलिंगत्रितयहेतुभिर्लिंगत्रितयजनकैः ॥ अज्ञानमविद्यातदेवतिमिरमंधकारस्तत्रार्कैस्तन्नाशकैरित्यर्थः ॥ ज्ञानस्यदानेप्रदानेनितरांदायकैःप्रदायकैः ॥ निदानकैरितिपाठेआदिकारणैरित्यर्थः ॥२४॥ विश्वभर्तुर्विश्वेशस्यकांतायाउमायाःपार्वत्याःस्पर्शनसुखादप्यतिसुखमातिशयितंसुखंकर्तुंशीलंयेषांतैः ॥ महावभृथसुस्नानेभ्योमहावभृथशोभनस्नानात्सकाशाद्यामहतीशुद्धिर्विधातुंशीलंयेषांतैः ॥ २५ ॥ सहस्रधारैरसंख्याताधाश्छिद्रैः ॥ सहस्रमुखावयवधारैरितिवा ॥ सहस्र

अज्ञानतापसंतप्तप्राणिप्राणैकरक्षिभिः ॥ पंचामृतानांकलशैःस्नपनातिफलप्रदैः ॥ २३ ॥ श्रद्धोपस्पर्शिहृदयलिंगत्रितयहेतुभिः ॥ अज्ञानतिमिरार्कार्भैर्ज्ञानदाननिदायकैः ॥ २४ ॥ विश्वभर्तुरुमास्पर्शसुखातिसुखकारिभिः ॥ महावभृथसुस्नानमहाशुद्धिविधायिभिः ॥ २५ ॥ सहस्रधारैःकलशैःसईशानोघटोद्भव ॥ सहस्रकृत्वःस्नपयामाससंहृष्टमानसः ॥ २६ ॥ ततःप्रसन्नोभगवान्विश्वात्माविश्वलोचनः ॥ तमुवाचतदेशानंरुद्रंरुद्रवपुर्धरम् ॥ २७ ॥ तवप्रसन्नोस्मीशानकर्मणानेनसुव्रत ॥ गुरुणानन्यपूर्वेणममातिप्रीतिकारिणा ॥ २८ ॥ ततस्त्वंजटिलेशानवरंब्रूहितपोधन ॥ अदेयंनतवास्त्यद्यमहोद्यमपरायण ॥ २९ ॥ ॥ ईशानउवाच ॥ ॥ यदिप्रसन्नोदेवेशवरयोग्योस्म्यहंयदि ॥ तदेतदतुलंतीर्थंतवनाम्नास्तुशंकर ॥ ३० ॥ ॥ विश्वेश्वरउवाच ॥ त्रिलोक्यांयानितीर्थानिभूर्भुवःस्वःस्थितान्यपि ॥ तेभ्योखिलेभ्यस्तीर्थेभ्यःशिवतीर्थमिदंपरम् ॥ ३१ ॥ शिवंज्ञानमितिब्रूयुःशिवशब्दार्थचिंतकाः ॥ तच्चज्ञानंद्रवीभूतमिहमेमहिमोदयात् ॥ ३२ ॥ अतोज्ञानोदनामैतत्तीर्थंत्रैलोक्यविश्रुतम् ॥ अस्यदर्शनमात्रेणसर्वपापैःप्रमुच्यते ॥ ३३ ॥ ज्ञानोदतीर्थसंस्पर्शादश्वमेधफलंलभेत् ॥ स्पर्शनाचमनाभ्यांचराजसूयाश्वमेधयोः ॥ ३४ ॥ फल्गुतीर्थेनरःस्नात्वासंतर्प्यचपितामहान् ॥ यत्फलंसमवाप्नोतितदत्रश्राद्धकर्मणा ॥ ३५ ॥ गुरुपुष्यासिताष्टम्यांव्यतीपातोयदाभवेत् ॥ तदात्रश्राद्धकरणाद्गयाकोटिगुणंभवेत् ॥ ३६ ॥ यत्फलंसमवाप्नोतिपितॄन्संतर्प्यपुष्करे ॥ तत्फलंकोटिगुणितंज्ञानतीर्थेतिलोदकैः ॥ ३७ ॥ सन्निहत्यांकुरुक्षेत्रेतमोग्रस्तेविवस्वति ॥ यत्फलंपिंडदानेनतज्ज्ञानोदेदिनेदिने ॥३८॥ पिंडनिर्वपणंयेषांज्ञानतीर्थेसुतैःकृतम् ॥ मोदंतेशिवलोकेतेयावदाभूतसंप्लवम् ॥ ३९ ॥ अष्टम्यांचचतुर्दश्यामुपवासीनरोत्तमः ॥ प्रातःस्नात्वाथपीतांभस्त्वंतर्लिंगमयोभवेत् ॥ ४० ॥

धारैःकलशैरितिव्यधिकरणेवातृतीये ॥ धारासमानार्थोधारशब्दोप्यस्ति ॥२६॥२७॥ अनेनकुंडोद्धृतजलस्नानेन ॥ गुरुणामहत्तरेण ॥ नविद्यतेऽन्यस्त्वत्तःपूर्वोयस्मिंस्तेनपूर्वंत्वदन्येनानाहृतेनेत्यर्थः॥ यद्वा नविद्यतेऽन्यत्पूर्वंयस्मात्प्रथमोत्पन्नेनेत्यर्थः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ शिवशब्दार्थंकथयन्ज्ञानोदमितिनामांतरंनिर्दिशति शिवमितिसार्धेन ॥ ३२ ॥ ३३ ॥ ३४ ॥ फल्गुतीर्थेगयांतर्गते ॥३५॥ अमावास्यायुक्तोरविवासरोव्यतीपातोयोगविशेषोवा ॥ गुरुपुष्यासिताष्टम्यांव्यतीपातोयोगोयदाभवेदित्येकंवाक्यम् ॥३६॥ पुष्करेचित्रकूटदेशांतर्गतपारियात्रपर्वताविदूरे ॥३७॥ सन्निहत्यांरामह्रदे ॥ सप्तम्यर्थेद्वितीया ॥ सन्निहत्यांप्राप्येतिशेषइतिवा ॥३८॥३९॥ [illegible] ॥ [illegible]ः ॥ पीत्वेतिवापाठः ॥ तुएवअंतर्लिंगमयोभवेदेवेत्यर्थः ॥ ४० ॥

CC-0. Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चुलुकत्रयंगंडूषत्रयम् ॥ ४१ ॥ ईशानतीर्थेईशानकृतेतीर्थेज्ञानोदे ॥ विशेषाद्विशेषेण ॥ ४२ ॥ श्रीलिंगंविश्वेशमीशानेश्वरंवाज्ञानेश्वरंवा ॥ ४३ ॥ ४४ ॥ तारयतीतितारकंतदाख्यंतन्नाम कम् ॥ ४५ ॥ क्षयेत्नश्येत् ॥ ज्ञानोदेक्षीयतइतिपाठेज्ञानोदाविषयेस्मरणान्नश्यतीत्यर्थः ॥ ४६ ॥ शाकिनीडाकिन्यवांतरभेदः ॥ झोटिंगाःप्रेतविशेषाः ॥ मोटिंगाइतिपाठेसएवार्थः ॥ गुर्जरदेशे प्रसिद्धाः ॥ कालकर्णीराक्षस्यवांतरभेदः ॥ ४७ ॥ द्वितीयकचतुर्थकाःद्व्याहिकचतुर्थाहिकज्वरविशेषाः ॥ उक्षणादभ्युक्षणात् ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१॥ निर्वृतिंब्रह्मानंदमाप्तवान् जीवन्मुक्तो बभूवेत्यर्थः ॥ ५२ ॥ ईशानस्यतज्जलप्राशनद्वारास्वानंदावाप्तिरित्येतन्नातिचित्रंप्राकृतानामपितद्दर्शनादितिकथयितुमितिहासमवतारयति ॥ कलशोद्भवेति ॥ ५३ ॥ तन्यतेवंशोऽनयेतितनया ॥

एकादश्यामुपोष्यात्रप्राश्नातिचुलुकत्रयम् ॥ हृदयेतस्यजायंतेत्रीणिलिंगान्यसंशयम् ॥४१॥ ईशानतीर्थेयःस्नात्वाविशेषात्सोमवासरे ॥ संतर्प्यदेवर्षि पितॄन्दत्त्वादानंस्वशक्तितः ॥ ४२ ॥ ततःसमर्च्यश्रीलिंगंमहासंभारविस्तरैः ॥ अत्रापिदत्त्वानानार्थान्कृतकृत्योभवेन्नरः ॥ ४३ ॥ उपास्यसंध्यांज्ञानोदेयत्पापंकाललोपजम् ॥ क्षणेनतदपाकृत्यज्ञानवाञ्जायतेद्विजः ॥ ४४ ॥ शिवतीर्थमिदंप्रोक्तंज्ञानतीर्थमिदंशुभम् ॥ तारकाख्यमिदंतीर्थंमोक्षतीर्थमिदंध्रुवम् ॥ ४५ ॥ स्मरणादपिपापौघोज्ञानोदस्यक्षयेद्ध्रुवम् ॥ दर्शनात्स्पर्शनात्स्नानात्पानाद्धर्मादिसंभवः ॥ ४६ ॥ डाकिनीशाकिनीभूतप्रेतवेतालराक्षसाः ॥ ग्रहाःकूश्मांडझोटिंगाःकालकर्णीशिशुग्रहाः ॥ ४७ ॥ ज्वरापस्मारविस्फोटद्वितीयकचतुर्थकाः ॥ सर्वेप्रशममायांतिशिवतीर्थजलेक्षणात् ॥ ॥ ४८ ॥ ज्ञानोदतीर्थपानीयैर्लिंगंयःस्नापयेत्सुधीः ॥ सर्वतीर्थोदकैस्तेनध्रुवंसंस्नापितंभवेत् ॥ ४९ ॥ ज्ञानरूपोहमेवात्रद्रवमूर्तिंविधायच ॥ जाड्यविध्वंसनंकुर्यांकुर्यांज्ञानोपदेशनम् ॥ ५० ॥ इतिदत्त्वावराञ्छंभुस्तत्रैवांतरधीयत ॥ कृतकृत्यमिवात्मानंसोप्यमंस्तत्रिशूलभृत् ॥ ५१ ॥ ईशानोजटिलोरुद्रस्तत्प्राश्यपरमोदकम् ॥ अवाप्तवान्परंज्ञानंयेननिर्वृतिमाप्तवान् ॥ ५२ ॥ ॥ स्कंदउवाच ॥ ॥ कलशोद्भवचित्रार्थमितिहासंपुरातनम् ॥ ज्ञानवाप्यांहियद्वृत्तंतदाख्यामिनिशामय ॥ ५३ ॥ हरिस्वामीतिविख्यातःकाश्यामासीद्द्विजःपुरा ॥ तस्यैकातनयाजातारूपेणाऽप्रतिमाभुवि ॥ ५४ ॥ नसमाशीलसंपत्त्यातस्याःकाचनभूतले ॥ कलाकलापकुशलास्वरेणजितकोकिला ॥ ५५ ॥ ननारीतादृगस्तीहनामरीकिन्नरीनच ॥ विद्याधरीननोनागीगंधर्वीनासुरीनच ॥ ५६ ॥ सर्वसौंदर्यनिलयासर्वलक्षणसत्खनिः ॥ अधिशेतेध्रुवंध्वांतंतन्मौलिंब्रध्नसाध्वसात् ॥५७॥ तदास्यंशरणंयातोमन्ये दर्शभयाच्छशी ॥ दिवापिनत्यजेत्तांतुत्रस्तश्चंडमरीचितः ॥ ५८ ॥ तद्भ्रूभ्रमरराजीवगंडपत्रलतांतरे ॥ उदंचन्न्यंचदुड्डीनगतेरभ्यासभाजिनी ॥ ५९ ॥

तांविशिनष्टि रूपेणेतिसपादपंचदशभिः ॥ ५४ ॥ ५५ ॥ तादृगितिसर्वत्रसंबध्यते ॥ किन्नरीतिचेतिपाठेइतिचेतिपक्षांतरे ॥ ५६ ॥ खनिर्गर्तःआश्रयइत्यर्थः ॥ तन्मौलिंतत्केशमित्यर्थः ॥ एतेनकेशानांनीलतासूचिता ॥ ब्रध्नसाध्वसात्सूर्यभयात् ॥ ५७ ॥ दर्शभयादमावास्यायांनाशभयादित्यर्थः ॥ दिवापिअपिशब्दान्नक्तमपि ॥ चंडमरीचितःसूर्यात् ॥ ५८ ॥ तस्याभ्रूर्दृशो रूर्ध्वस्थरोमालीगंडयोःकपोलयोर्यत्पत्रमलंकरणविशेषस्तदेवलतातस्याअभ्यंतरेमध्येउदंचंतीऊर्ध्वंगच्छंतीन्यंचंतीअधोगच्छंतीचयाउड्डीनगतिःखगगतिक्रियाविशेषस्तस्याअभ्यासभाजिनीसादृश्यभा



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

जिनीआवृत्तिभाजिनीतिवा ॥ भ्रमरराजीवभ्रमरपंक्तिरिवेतिसर्वत्रोत्प्रेक्षा ॥ उदंचदित्यादिपृथग्वा ॥ उदंचदित्यादिभाजिनीवेत्यर्थः ॥ ५९ ॥ तच्चारुलोचनक्षेत्रेतस्याश्चारुलोचनयोःक्षेत्रम् उपनासामूलंतस्मिंस्तत्समीपइत्यर्थः ॥ खंजनौखंजरीटौ ॥ शारदींशरत्संबंधिनीम् ॥ निर्विशेतेप्राप्नुतः ॥ एतेनलोचनयोराह्लादकारित्वंसूचितम् ॥ यद्वा कंब्रह्मखंब्रह्मेतिश्रुतेः खंब्रह्मानंदसुखंरूपदर्शनेनजनयतइतिखंजनौसर्वेषांलोचनेतस्याश्चारुरूपेक्षेत्रेविचरंतौपश्यंतौसदैवशारदींप्रीतिंप्राप्नुतइत्यर्थः ॥ ६० ॥ शोभनादंतायस्याःसासुदतीतस्यारदनश्रेणीछदेषुदंतपंक्तिरूपेषुपत्रेषुविषमेषुणाकामेनयादृशीकांचनीरेखाविहिताइंदौचंद्रे एतावतीईदृशीकलारेखांकेत्यर्थः ॥ ६१ ॥ तस्यारदनवाससीद्वेओष्ठौप्रायोबाहुल्येनमदनभूपालस्यहर्म्येगृहेयानिरत्नानितान्यंतरेययोस्तेतथैवेतिलुप्तोपमेत्यर्थः ॥ ६२ ॥ तस्याःकंबुवत्कंठरेखात्रितयस्यव्याजेनछलेनकामःस्वर्गादौस्त्रियामेषारेखांकाचिन्नेतितस्याःसर्वाधिक्यार्थंशपथंकरोतीवेत्यर्थः ॥ ६३ ॥ तस्यावक्षोरुहद्वयंमदनमहीपतेर्लसत्पटकुटीद्वयंशोभमानवस्त्रगृहद्वयमितिशंकेआशंके ॥ वस्त्रेणाच्छादितत्वात् ॥ कथंभूतम् ॥ अनर्घ्यरत्नकोशाढ्यममूल्यसुखरत्नसंचयसंपूर्णम् ॥ ६४ ॥ नतभ्रुवस्तस्या

तच्चारुलोचनक्षेत्रेविचरंतौचखंजनौ ॥ सदैवशारदींप्रीतिंनिर्विशेतेनिजेच्छया ॥ ६० ॥ सुदत्यारदनश्रेणीछेदेषुविषमेषुणा ॥ विहिताकांचनीरेखांकेंदावेतावतीकला ॥ ६१ ॥ प्रायोमदनभूपालहर्म्यरत्नांतरेशुभे ॥ जितप्रवालसुच्छायेतस्यारदनवाससी ॥६२॥ स्वर्गेमर्त्येचपातालेनैषारेखांकचित्स्त्रियाम् ॥ तत्कंठरेखात्रितयव्याजेनशपतेस्मरः ॥ ६३ ॥ शंकेचित्तभुवोराज्ञोलसत्पटकुटीद्वयम् ॥ अनर्घ्यरत्नकोशाढ्यंतस्यावक्षोरुहद्वयम् ॥ ६४ ॥ अनंगभूनियमतोऽदृश्येमध्येनतभ्रुवः ॥ रोमालीलक्षिकामूर्ध्वामिवयष्टिंविधिर्व्यधात् ॥ ६५ ॥ तस्यानाभीदरींप्राप्यकंदर्पोऽनंगतांगतः ॥ पुनःप्राप्तुमिवांगानितप्यतेपरमंतपः ॥ ६६ ॥ गुरुणैतन्नितंबेनमहामन्मथदीक्षया ॥ भुविकेकेयुवानोनस्वाधीनाःप्रापिताद्दशाम् ॥ ६७ ॥ ऊरुस्तंभेनचैतस्याःस्तंभवत्कस्यनोमनः ॥ तस्तंभेनमुनेर्वापिसुवृत्तेनसुवर्तनम् ॥ ६८ ॥ पादांगुष्ठनखज्योतिःप्रभयाकस्यनप्रभा ॥ विवेकजनिताऽध्वंसिमुनेतस्यामृगीदृशः ॥ ॥ ६९ ॥ साप्रत्यहंज्ञानवाप्यांस्नायंस्नायंशिवालये ॥ संमार्जनादिकर्माणिकुरुतेऽनन्यमानसा ॥ ७० ॥ तत्पादप्रतिबिंबेषुरेखाशष्पांकुरंचरन् ॥ नान्यद्वनांतरंयातिकाश्यांयूनांमनोमृगः ॥ ७१ ॥

अनंगभूनियमतःकामस्यस्थानपरिचयार्थंसम्भावितास्तिपरिमितस्यशरीरस्यमध्येयदृश्यंवरांगंभगःतस्मिन्रोमाल्यारोमपंक्त्यालक्षिकामूर्ध्वांयष्टिमिवविधिर्ब्रह्माव्यधात् ॥ यथांधकारेस्थितंवस्तुयष्ट्यालक्ष्यतेतथाऽदृश्यंवरांगंलक्षितुंरोमावल्यायष्टिंव्यधादित्यर्थः ॥ ६५ ॥ नाभीदरींनाभिगुहाम् ॥ अनेननिम्ननाभित्वंसूचितम् ॥ ६६ ॥ गुरुणाएतस्यानितंबेनमहान्योमन्मथःकामस्तस्यदीक्षयातद्विषयदीक्षानिमित्तेनभूर्लोकेयुवानो दृशांनेत्राणांस्वाधीनाःसुष्ठ्वधीनतांनप्रापितानकारिताअपितुसर्वएवप्रापिताः ॥ तन्नितंबैकदृष्टयोयुवानोबभूवुरित्यर्थः ॥ दशामितिपाठेदशांकामदशाम् ॥ स्वाधीनाःस्वनितंबैकनिष्ठाइत्यर्थः ॥ कामदशांप्रापिताइत्येववा ॥ अन्यत्सर्वंपूर्ववत् ॥ ६७ ॥ ऊरुरेवस्तंभऊरुस्तंभःकदल्यादिरूपस्तेनमुनेर्मननशीलस्यापिकस्यमनोनतस्तंभे ॥ ब्रह्माकारादिवृत्तिवृत्तान्नस्तंभितंननिवर्तितमपितुस्तंभितमेवस्तंभवत् ॥ यथास्तंभेनस्थाण्वादिनागमनादिप्रतिबध्यतेतद्वत् ॥ कीदृशेन ॥ सुवृत्तेनसुष्ठुवर्तुलेन ॥ कथंभूतंमनः ॥ सुवर्तनंशोभनवृत्तम् ॥६८॥ अध्वंसिध्वंसिता ॥ शृंगाररसनिमग्नोमाभूदितिसंबोधयतिमुने [illegible] ॥ ६९ ॥ स्नायंस्नायं [illegible] ॥ ७० ॥ तत्पादेति ॥ काश्यांयूनांतरुणानांमनएवमृगोमनोमृगस्तस्याः



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सुशीलायाःपादप्रतिबिंबेषुवालुकादिप्रदेशोत्थितेषुरेखाशष्पांकुरैरेखात्मकपद्मवज्रादिरूपकोमलतृणांकुरंचरन्आनंदकाननंरेखाशष्पांकुरंवनंवाविहायान्यद्वनांतरंस्थानंनसंयातीत्यर्थः ॥ ७१ ॥ तदास्येति ॥ तस्याआस्यपंकजंमुखपद्मंहित्वायूनांनेत्राण्येवालयस्तेषांमालयासमूहेनलतांतरंनासेविनसेवितम् ॥ कथंभूतम् ॥ अप्यामोदप्रसूनयुक्आमोदप्रसूनैःसुगंधिपुष्पैर्युनक्तीतितथाताहृशमपीत्यर्थः ॥ आसेवीतिविसंधिरार्षः ॥ ७२ ॥ प्रेक्षेतपश्यति ॥ शोभनंश्रवःश्रवणेन्द्रियंश्रवणंवायस्याःसासुश्रवाः ॥ नादत्तेनगृह्णातिनशृणोतीतियावत् ॥ ७३ ॥ सुशीलानाम्ना ॥ तदेवार्थतोनिर्वक्ति ॥ शीलसंपन्नेति ॥ रहएकांते ॥ तद्विरहातुरैस्तत्प्राप्त्यभावेनकातरैः ॥ बबंधचकार ॥ ७४ ॥ शीलेनसुचारित्रेणसहोर्जिताश्रीःशोभायस्याःसा ॥ ७५ ॥ ७६ ॥

तदास्यपंकजंहित्वायूनांनेत्रालिमालया ॥ नलतांतरमासेविअप्यामोदप्रसूनयुक् ॥ ७२ ॥ सुलोचनापिसाकन्याप्रेक्षेतास्यंनकस्यचित् ॥ सुश्रवाअपिसाबालानादत्तेकस्यचिद्वचः ॥ ७३ ॥ सुशीलाशीलसंपन्नारहस्तद्विरहातुरैः ॥ प्रार्थितापिसुरूपाढ्यैर्नाभिलाषंबबंधसा ॥ ७४ ॥ धनैस्तस्याजनेतापियुवभिःप्रार्थितोबहु ॥ नाशकत्तांसुलीलांसदातुंशीलोर्जितश्रियम् ॥ ७५ ॥ ज्ञानोदतीर्थभजनात्सासुशीलाकुमारिका ॥ बहिरंतस्तदाऽद्राक्षीत्सर्वंलिंगमयंजगत् ॥ ७६ ॥ कदाचिदेकदातांतुप्रसुप्तांसदनांगणे ॥ मोहितोरूपसंपत्त्याकश्चिद्विद्याधरोऽहरत् ॥ ७७ ॥ व्योमवर्त्मनितांरात्रौयावन्मलयपर्वतम् ॥ सनिनीषतितावच्चविद्युन्मालीसमागतः ॥ ७८ ॥ राक्षसोभीषणवपुःकपालकृतकुंडलः ॥ वसारुधिरलिप्तांगःश्मश्रुलःपिंगलोचनः ॥ ७९ ॥ राक्षसउवाच ॥ ॥ ममदृग्गोचरंयातोविद्याधरकुमारक ॥ अद्यत्वामेतयासार्धंप्रेषयामियमालयम् ॥८०॥ इतिश्रुत्वाथसावाक्यंव्याघ्राघ्रातामृगीयथा ॥ चकंपेऽतीवसंभीताकदलीदलवन्मुहुः ॥ ८१ ॥ निजघानत्रिशूलेनरक्षोविद्याधरंचतम् ॥ विद्याधरकुमारोपिनितरांमधुराकृतिः ॥ ८२ ॥ तद्भीषणत्रिशूलेनभिन्नोरस्कोमहाबलः ॥ जघानमुष्टिघातेनवज्रपातोपमेनतम् ॥ ८३ ॥ नरमांसवसामत्तंविद्युन्मालिनमाहवे ॥ चूर्णितोमुष्टिपातेनसोऽपतद्वसुधातले ॥ ८४ ॥ राक्षसोमृत्युवशगोवज्रेणेवमहीधरः ॥ विद्याधरोपितच्छूलघातेनविकलीकृतः ॥ ८५ ॥ उवाचगद्गदंवाक्यंविघूर्णितविलोचनः ॥ प्रियेमुधासमानीतासुशित्यर्धोक्तिमुच्चरन् ॥ ८६ ॥ जहौप्राणान्रणेवीरस्तांप्रियांपरितःस्मरन् ॥ ८७ ॥ अनन्यपूर्वसंस्पर्शसुखंसमनुभूयसा ॥ तमेवचपतिंमत्वाचक्रेशोकाग्निसात्तनुम् ॥ ८८ ॥

सदनांगणेगृहाजिरे ॥ कदाचिदेकदाकस्मिंश्चित्कालइत्यर्थः ॥ सुप्तांमत्तांप्रमत्तांवारहोयत्रोपगच्छति ॥ सपापिष्ठोविवाहानांपैशाचःकथितोऽष्टमइतिपैशाचविवाहस्यनिन्दितत्वान्नामग्रहणमकृत्वाकश्चिदित्युक्तम् ॥ ७७ ॥ ७८ ॥ वसामेदः ॥ श्मश्रुलोदीर्घचिबुकलोमा ॥ ७९ ॥ ममविद्युन्मालिनोदृग्गोचरंनेत्रविषयंयातोगतः ॥ दृग्गोचरंचिरंयातइतिपाठेचिरंबहुकालेन ॥ ८० ॥ व्याघ्रेणाघ्राताभक्षणार्थंविषयीकृता ॥ ८१ ॥ रक्षोराक्षसः ॥ चकारोऽप्यर्थे रक्षइत्यनेनसंबध्यते ॥ ८२ ॥ ८३ ॥ चूर्णितश्चूर्णयामास ॥ ८४ ॥ ८५ ॥ स्वैरव्यंजनैश्चमिलित्वाषडक्षरनाम्नोऽर्धोक्तिःसुशु ॥ उच्यतेतामुच्चरन्ब्रुवन् ॥ प्राणान्जहौ ॥ सुशीतीतिपाठश्चित्यः ॥ ८६ ॥ परितःसर्वतोभावेन ॥ ८७ ॥ नविद्यतेऽन्यःपूर्वोयस्मात्स्पर्शः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अनन्यपूर्वंःसचासौसंस्पर्शश्चतज्जन्यंसुखम् ॥ यद्वा नविद्यतेऽन्यत्पूर्वंयस्मात्संस्पर्शसुखात्तत्तथातच्चतत्संस्पर्शसुखंचेतितथा ॥ अनन्यपूर्वपुंस्पर्शेतिक्वचित् ॥ चकारादेवंच ॥ शोकाग्निसाच्छोकाग्नौतनुं शरीरंचक्रेचकार ॥ शोकेनजहावित्यर्थः ॥ ८८ ॥ ८९ ॥ पणीकृतोग्लहत्वेनदत्तःप्राणोयेनसतथा ॥ जनुर्जन्म ॥ मलयकेतुतस्तन्नाम्नःपितृतः ॥९०॥ कर्णाटेविद्यानगरे ॥९१॥ माल्यकेतुर्नाम्ना ॥ अनंगःकामस्तस्येवश्रीःशोभायस्यसः ॥ कामदेवइवातिसुन्दरइत्यर्थः ॥ पित्राकर्णाटेश्वरेण ॥ नाम्नाकलावती ॥ ९२ ॥ मलयजक्षोदंचंदनचूर्णम् ॥ बह्वमंस्तबहुमेने ॥९३॥ नेपथ्यमलंकरणम् ॥ अनर्घ्यममूल्यम् ॥ गर्भसुन्दरीसाहाजिकरूपवती ॥ ९४ ॥ ९५ ॥ औदीच्यउत्तरदिगुत्पन्नः ॥.९६ ॥ ९७ ॥ प्राणदेवताविश्वनाथस्तल्लिंगाधारत्वात्पटचापितथाताम् ॥ स्वंदेहम् ॥ अपिर्निश्चये ॥

लिंगत्रयशरीरिण्यास्तस्याःसान्निध्यतःसहि ॥ दिव्यंवपुःसमासाद्यराक्षसस्त्रिदिवंययौ ॥ ८९ ॥ रणेपणीकृतप्राणोविद्याधरसुतोपिसः ॥ अंतेप्रियांस्मरन्प्रापजनुर्मलयकेतुतः ॥ ९० ॥ ध्यायंतीसापितंबालाविद्याधरकुमारकम् ॥ विरहाग्नौविसृष्टासुःकर्णाटेजन्मभागभूत् ॥९१॥ सुतोमलयकेतोस्तांकालेनपरिणीतवान् ॥ माल्यकेतुरनंगश्रीःपित्रादत्तांकलावतीम् ॥ ९२ ॥ सापिप्राग्वासनायोगाल्लिंगार्चनरतासती ॥ हित्वामलयजक्षोदंविभूतिंबह्वमंस्तवै ॥ ९३ ॥ मुक्तावैदूर्यमाणिक्यपुष्परागेभ्यएवसा ॥ मेनेरुद्राक्षनेपथ्यमनर्घ्यंगर्भसुंदरी ॥ ९४ ॥ कलावतीमाल्यकेतुंपतिंप्राप्यपतिव्रता ॥ अपत्यत्रितयंलेभेदिव्यभोगसमृद्धिभाक् ॥ ९५ ॥ एकदाकश्चिदौदीच्योमाल्यकेतुंनरेश्वरम् ॥ चित्रकृच्चित्रपटिकांचित्रांदर्शितवानथ ॥ ९६ ॥ तांतुचित्रपटींराजाकलावत्यैसमर्पयत् ॥ साथचित्रपटींरम्यांसंप्रहृष्टतनूरुहा ॥ ९७ ॥ मुहुर्मुहुःप्रपश्यंतीरहसिप्राणदेवताम् ॥ विसस्मारस्वमपिचसमाधिस्थेवयोगिनी ॥ ९८ ॥ क्षणमुन्मील्यनयनेकृत्वानेत्रातिथिंपटीम् ॥ तर्जन्यग्रमथोत्क्षिप्यस्वात्मानंसमबोधयत् ॥९९॥ संभेदोयमसेरम्यउपलोलार्कमग्रतः ॥ उपश्रीकेशवपदंवरणैषासरिद्वरा ॥१००॥ स्वर्गेप्रार्थितसंस्पर्शासैषास्वर्गतरंगिणी ॥ उदग्वहाभिलष्यंतियांदिवोद्युसदःसदा ॥१॥ अलक्ष्यामोक्षलक्ष्मीर्यावेदांतेपरिपठ्यते ॥ विमुक्तयेसतांसैषाश्रीमतीमणिकर्णिका ॥ २ ॥ मरणंमंगलंयत्रसफलंयत्रजीवितम् ॥ स्वर्गस्तृणायतेयत्रसैषाश्रीमणिकर्णिका ॥ ३ ॥ यत्रसंपत्तिसंभारान्विश्राण्यनिधनेच्छया ॥ यतिव्रतंसमालंब्यतिष्ठतेमूलकंदभुक् ॥ ४ ॥

चकारादगृहादिकंच ॥ ९८ ॥ उन्मील्यविकचय्य ॥ नेत्रातिथिंनेत्रगोचरम् ॥ ९९ ॥ उपलोलार्कंलोलार्कसमीपे ॥ उपश्रीकेशवपदंश्रीकेशवस्थानस्यसमीपे ॥ १०० ॥ स्वर्गेप्रार्थितसंस्पर्शेत्यस्यायंभावः ॥ यद्यपिस्वर्गतरंगिणीगंगास्वर्गेवर्ततएवतथापिकाश्यधिकरणिकायाउदग्वहाया आतिशयितत्वेनदुर्लभत्वात्स्वर्गेप्रार्थितसंस्पर्शेत्युक्तमिति ॥ उदग्वहाउत्तरवाहिनी ॥ दिवोद्युसदःस्वर्गसंबंधिनोदेवाइत्यर्थः ॥ १ ॥ अलक्ष्यावाङ्मनसयोरगोचरा ॥ सतांतस्यामुत्सृष्टदेहानाम् ॥ सतीतिक्वचित्पाठः ॥ २ ॥ मंगलहेतुत्वान्मंगलम् ॥ सफलंमुक्तिलक्षणफलहेतुत्वात् ॥ ३ ॥ यत्रयस्यांस्थल्यांस्थानेवासंपत्तिसंभारान्धनस्तोमान्निधनेच्छयामरणवांछयाविश्राण्यदत्त्वायतिव्रतंविरागाहिंसादिलक्षणंसमालंब्याश्रित्यमूलकंदभुक्सुकृतीजनास्तिष्ठतेतिष्ठतिसैषाश्रीमणिकर्णिकेतिपूर्वेणाग्रिमेण



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वापंचानामन्वयः ॥ तत्रमूलकंदयोरपिंडपिंडाकारतयाभेदः ॥ तिष्ठंतेमोक्षकामुकाइतिक्वचित्पाठः ॥ ४ ॥ यत्रमृतान्प्रतिमुक्तिमार्गंदर्शयन्हरोवर्ततइतिशेषः ॥ कथंभूतः ॥ स्वमौलिबालचं द्रेणसहमंगांमार्गमाणः ॥ अधिकारिभेदेनसारूप्यमुक्तिदानार्थंस्वशिरःस्थचंद्रादिकंवाऽन्विष्यमाणइत्यर्थः ॥ मार्गमाणोध्रियमाणइतिवा ॥५॥ दुर्वारन्तत्त्वज्ञानमंतरेणाविनश्वरंप्रतारयति नाशयति ॥ शंकल्याणंकरोतीतिशंकरः ॥ तदेवाह ॥ यतःकर्णधारात्सन्मार्गप्रापकान्मृताअप्यमृतायंतेमुक्ताभवंति ॥ विरुद्धालंकारोयम् ॥ मृत्वापुनर्नजायन्तइत्यर्थः ॥ मृतानराइत्यन्वयः ॥ नराइ त्यधिकारप्रदर्शनार्थंनत्वन्येषांपरिसंख्यार्थम् ॥ कृमिकीटानामपिमुक्तिश्रवणात् ॥ ६ ॥ संसारसारपदवींसंसाररूपदृढमार्गःयत्रादवीयसिअदूरेस्यात् ॥ तत्रहेतुमाह ॥ कर्णेजपादिति ॥ कर्णे दक्षिणकर्णेतारकंजपतीतिकर्णेजपस्तस्मात् ॥ पुनःकीदृशात् ॥ करुणावरुणालयात्दयासमुद्रात् ॥ ७ ॥ तेनराइत्यन्वयः ॥ भवंमहादेवम् ॥ ८ ॥ यद्बलेनयस्याःप्रभावात् ॥ कृतांतंयमम् ॥ ९ ॥ अर्धोवाएषआत्मनोयत्पत्नीति ॥ आत्मावैजायतेपुत्रइतिचश्रुतेर्निजंदेहमित्यनेनस्त्रीपुत्रदेहयोरपिसंग्रहः ॥ अतएवसपत्नीकइत्युक्तम् ॥ पुत्रस्यत्वत्यंतबालत्वादेवानुल्लेखः ॥ व्यक्रीणात्विक्रीतवान् ॥

यत्रत्रिमार्गगांगंगांमार्गमाणोमृतान्हरः ॥ स्वमौलिबालचंद्रेणमुक्तिमार्गंप्रदर्शयन् ॥ ५ ॥ संसारंयत्रदुर्वारंप्रतारयतिशंकरः ॥ मृताअप्यमृतायंतेकर्णधारा द्यतोनराः ॥ ६ ॥ संसारासारपदवीयत्रस्याददवीयसी ॥ कर्णेजपान्महेशानात्करुणावरुणालयात् ॥ ७ ॥ अनेकभवसंभूतप्रभूतसुकृतैर्नराः ॥ कर्णेजपं भवंयत्रलभंतेतेभवापहम् ॥ ८ ॥ स्वीकृत्यक्षेत्रसंन्यासंयद्बलेनमहाधियः ॥ तृणंकृतांतंमन्यंतेसेयंश्रीमणिकर्णिका ॥ ९ ॥ तृणीकृत्यनिजंदेहंयत्रराज र्षिसत्तमः ॥ हरिश्चंद्रःसपत्नीकोव्यक्रीणाद्भूरियंहिसा ॥ ११० ॥ अभिलष्यंतियत्रत्यमपिवैकुण्ठवासिनः ॥ सैकतंमृदुलंतल्पंसैषाश्रीमणिकर्णिका ॥ ॥ ११ ॥ अनेकजन्मजनितकर्मसूत्रनियंत्रणम् ॥ उन्मुच्ययत्रमुक्ताःस्युःसैषाश्रीमणिकर्णिका ॥ १२ ॥ सत्यलोकेऽपियेलोकास्तेऽर्थयंतिनिरंत रम् ॥ यामहोदीर्घनिद्रायैसेयंश्रीमणिकर्णिका ॥ १३ ॥ अयंहिसकुलस्तंभोयत्रश्रीकालभैरवः ॥ क्षेत्रपापकृतःशास्तिदर्शयंस्तीव्रयातनाम् ॥ १४ ॥ अन्यत्रविहितंपापंनश्येत्काशीनिरीक्षणात् ॥ काश्यांकृतानांपापानांदारुणेयंतुयातना ॥१५॥ कपालमोचनंतीर्थमेतत्तदपिपावनम् ॥ कपालंपतितंयत्र विधेर्भैरवपाणितः ॥ १६ ॥ ऋणत्रयाद्विमुच्यंतेयत्रस्नातानरोत्तमाः ॥ तीर्थंविशुद्धिजनकंतदेतदृणमोचनम् ॥ १७ ॥

हीत्यनेनमार्कंडेयादिपुराणागमप्रसिद्धिंद्योतयति ॥ ११० ॥ यत्रत्यंयत्रस्थंसैकतंवालुकामयंमृदुलंकोमलंतल्पंशयनमित्यर्थः ॥ ११ ॥ नियंत्रणंबंधनम् ॥१२॥ अर्थयंतिप्रार्थयंति ॥ अहोआश्चर्ये ॥ दीर्घनिद्रायैकैवल्यावाप्त्यै ॥ १३ ॥ क्षेत्रपापकृतःक्षेत्रेपापकारिणोमनुष्यान् ॥ बहिःकृतानांपापानांक्षेत्रप्रवेशमात्रेणैवोपक्षयात् ॥ १४ ॥ ननु नाविमुक्तेनरःकश्चिन्नरकंयातिकिल्बिषी ॥ ईश्वरानुगृ हीताहिसर्वेयांतिपरांगतिमितिलैंगोक्तेःकथमिदंसंगच्छतइतिस्वयमेवाशंक्याहान्यत्रेति ॥ तुशब्दाद्यमयातनातोपीयंयातनाऽधिकेतिध्वनितम् ॥ दारुणारुद्रयातनेतिक्वचित् ॥ तत्ररुद्रःकालभैरवएव ॥ लैंगवचनेतुकिल्बिषीत्यत्रान्यत्रेतिज्ञातव्यम् ॥ यमयातनाविषयोवानरकशब्दः ॥ १५ ॥ तदपीत्यपिशब्दादन्यदपितीर्थांतरंपावनमितिध्वनितम् ॥ १६ ॥ ऋणत्रयाद्देवर्षिपितॄणामृणादित्यर्थः ॥ विशुद्धिजनकमंतःकरणशोधकम् ॥ १७ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

प्रणवाख्यमितिवाच्यवाचकयोरभेदोपचारात् ॥ अकारोकारमकारबिंदुनादाः पंचायतनानितैरुपेतस्तदाश्रयः ॥ १८ ॥ एतदेवाह ॥ अश्चेत्येकेन ॥ १९ ॥ मत्स्योदरीनदी ॥ तथाचब्राह्मे ॥ अथासावपिमूर्त्वस्तुनंदीमत्स्योदरींमुने ॥ जगामाथददर्शासौस्नायमानामथोर्वशीमिति ॥ यत्स्नातोयस्यांस्नातः ॥ जातुकदाचित् ॥ १२० ॥ त्रिलोचनंसारूप्यमुक्तिभाजम् ॥ तुशब्दआश्चर्ये ॥ अपिर्भिन्नक्रमेदेशांतरस्थितमित्यनेनसंबध्यते ॥ २१ ॥ दुर्वासाअपिअक्षांतिसारसर्वस्वोप्यतिक्रोधनोपीत्यर्थः ॥ तथाचोक्तंवैष्णवे ॥ अक्षांतिसारसर्वस्वंदुर्वाससमवेहिमामिति ॥ अनेनक्रोधाद्या विष्टानाम॰ ॰कारिणामप्यत्रफलंभवतीतिध्वनितम् ॥ २२ ॥ निर्वचनपूर्वकंस्वर्लीनेशंकथयति ॥ स्वयमिति ॥ २३ ॥ २४ ॥ २५ ॥ विनायकाविघ्नहेतवः ॥ २६ ॥ इयमिति ॥ क्षेत्राधिष्ठात्री

प्रणवाख्यंपरंब्रह्मयत्रनित्यंप्रकाशते ॥ सपंचायतनोपेतॐकारेशोयमद्भुतः ॥ १८ ॥ अश्चउश्चमकारश्चनादोबिंदुश्चपंचमः ॥ पंचात्मकंपरंब्रह्मयत्रनित्यं प्रकाशते ॥१९॥ एषामत्स्योदरीरम्यायत्स्नातोमानवोत्तमः ॥ मातुर्जातूदरदरींनविशेदेषनिश्चयः ॥१२०॥ त्रिलोचनोयंभगवान्कुर्यादेवत्रिलोचनम् ॥ निजभक्तंकृपायुक्तस्त्वपिदेशांतरस्थितम् ॥ २१ ॥ असौकामेश्वरोदेवोयःकामान्पूरयेत्सताम् ॥ दुर्वासाअपियत्रापनिजकाममहोदयम् ॥ २२ ॥ स्वयं लीनोमहेशोत्रभक्तकामसमृद्धये ॥ तस्मात्स्वर्लीनसंज्ञास्यदेवदेवस्यशूलिनः ॥ २३ ॥ वाराणस्यांमहादेवोयःपुराणेषुपठ्यते ॥ क्षेत्राभिमानीभगवां स्तत्प्रासादोयमद्भुतः ॥ २४ ॥ असौस्कंदेश्वरोदेवःश्रद्धयायद्विलोकनात् ॥ आजन्मब्रह्मचर्यस्यफलमाप्नोतिमानवः ॥ २५ ॥ विनायकेश्वरश्चायंसर्व सिद्धिप्रदायकः ॥ यत्सेवयाप्रणश्यंतिनृणांसर्वेविनायकाः ॥२६॥ इयंवाराणसीदेवीसाक्षान्मूर्त्तिमयीशुभा ॥ यस्याविलोकनात्पुंसांभूयोनोगर्भसंभवः॥ ॥२७॥ पार्वतीश्वरलिंगस्यमहदायतनंत्विदम् ॥ यत्रनित्यंमहेशानोगौर्यासहविमुक्तिदः ॥२८॥ एषभृंगीश्वरःश्रीमान्महापातकनाशनः ॥ जीवन्मुक्तो ऽभवद्भृंगीयस्यलिंगस्यसेवया ॥ २९ ॥ चतुर्वेदेश्वरश्चैषचतुर्वेदधरोविधिः ॥ लभेद्यद्वीक्षणाद्विप्रोवेदाध्ययनजंफलम् ॥ १३० ॥ यज्ञैःसंस्थापितंचैत ल्लिंगंयज्ञेश्वराभिधम् ॥ यदर्चनाल्लभेन्मर्त्यःसर्वयागफलंमहत् ॥ ३१ ॥ पुराणेश्वरनामैतल्लिंगमष्टादशांगुलम् ॥ अष्टादशानांविद्यानांस्यादाधारोयदी क्षणात् ॥ ३२ ॥ धर्मशास्त्रेश्वरश्चायंस्मृतिभिश्चप्रतिष्ठितः ॥ स्मृत्यध्ययनजंपुण्यंयद्विलोकनतोभवेत् ॥ ३३ ॥

देवतेत्यर्थः ॥ २७ ॥ आयतनंस्थानंगृहमितियावत् ॥ २८ ॥ जीवन्मुक्तोऽभवद्भृंगीति ॥ तथाचवासिष्ठंवचनम् ॥ एतद्व्रतत्रयंरामपुराचंद्रार्धमौलिना ॥ भृंगीशायतुसंप्रोक्तंयेनासौविज्वरःस्थित इति ॥ २९ ॥ चतुरोवेदान्धरतीतितथा ॥ चतुर्वक्त्रधरइतिक्वचित् ॥ विदधातीतिविधिःसर्वोत्पादकइत्यर्थः ॥ १३० ॥ ३१ ॥ अष्टादशांगुलंतिर्यगूर्ध्वमष्टादशांगुलपरिमितमित्यर्थः ॥ तदुपयोग माहाष्टादशेति ॥ ३२ ॥ प्रतिष्ठितःस्थापितः ॥ प्रलंबितइतिपाठेआश्रितइत्यर्थः ॥ ३३ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सर्वेषांजाडयमज्ञानंतद्विनाशकृत् ॥ यद्वा सर्वजाड्यंमूलाविद्यातूलारूपंतद्विनाशकृदिति ॥ विशुद्धिदमंतःकरणशुद्धिदमित्यर्थः ॥ ३४ ॥ बिभर्तिधारयाति ॥ ३५ ॥ ३६ ॥ पुरायुगेसत्ययुगे ॥३७॥
त्रिपुरेशस्यत्रिपुरस्थेशस्येत्यर्थः ॥ त्रिपुरैःत्रिपुरस्थैः ॥ ३८ ॥ ३९ ॥ १४० ॥ ४१ ॥ ४२ ॥ हइतिप्रसिद्धौ ॥ हीतिपाठेपिसएवार्थः ॥ ४३ ॥ ४४ ॥ खर्वविनायकःखर्वनामागणाधिपः ॥
तर्हिखर्वत्वात्खर्वफलदएवकिंनेत्याह ॥ अखर्वसिद्धिदइति ॥ शेषेणानंतेन ॥ ४५ ॥ संवर्तवह्निनासंकर्षणमुखानलेन ॥ शंखंपंचजननामानमसुरम् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

सारस्वतमिदंलिंगंसर्वजाड्यविनाशकृत् ॥ सर्वतीर्थेश्वरंलिंगमेतत्सद्योविशुद्धिदम् ॥३४॥ शैलेश्वरस्यलिंगस्यमंडपोयंमहाद्भुतः ॥ सर्वेषांरत्नजातानां योबिभर्तिपरांश्रियम् ॥ ३५ ॥ सप्तसागरसंज्ञंवैलिंगमेतन्मनोहरम् ॥ यद्वीक्षणाल्लभेन्मर्त्यःसप्ताब्धिस्नानजंफलम् ॥ ३६ ॥ असौमंत्रेश्वरःश्रीमान्मंत्रजाप्यफलप्रदः ॥ सप्तकोटिमहामंत्रैःस्थापितोयःपुरायुगे ॥३७॥ त्रिपुरेशस्यलिंगस्यपुरःकुंडमिदंमहत् ॥ त्रिपुरैःखानितंपूर्वंत्रिपुरारिप्रियंपरम् ॥३८॥ इदंबाणेश्वरंलिंगंसहस्रभुजपूजितम् ॥ द्विभुजस्यापिबाणस्यसहस्रभुजहेतुकम् ॥ ३९ ॥ वैरोचनेश्वरश्चैषपुरःप्रह्लादकेशवात् ॥ बलिकेशवनामासावेषनारदकेशवः ॥ १४० ॥ आदिकेशवपूर्वेणत्वयमादित्यकेशवः ॥ भीष्मकेशवनामासौदत्तात्रेयेश्वरस्त्वयम् ॥ ४१ ॥ दत्तात्रेयेश्वरात्पूर्वमेषआदिगदाधरः ॥ भृगुकेशवनामासावेषवामनकेशवः ॥ ४२ ॥ नरनारायणावेतौयज्ञवाराहकेशवः ॥ विदारनारसिंहोयंगोपीगोविंदएषह ॥ ४३ ॥ एषलक्ष्मीनृसिंहस्यप्रासादोरत्नकेतनः ॥ यस्यप्रसादात्प्रह्लादःपदमैंद्रमवाप्तवान् ॥ ४४ ॥ अखर्वसिद्धिदःपुंसामेषखर्वविनायकः ॥ शेषमाधवनामासौशेषेणस्थापितःपुरा ॥४५॥ यस्यभक्तानदह्यंतेत्वपिसंवर्तवह्निना ॥ शंखमाधवनामासौशंखंहत्वात्रसंस्थितः ॥४६॥ इदंसारस्वतंस्रोतःपरंब्रह्मरसायनम् ॥ सरस्वत्यामहानद्याःसंगमोयत्रगंगया ॥ ४७ ॥ यत्राप्लुतानराभूयःसंभवंतिनभूतले ॥ श्रीबिंदुमाधवस्त्वेषसाक्षाल्लक्ष्मीपतिःपरः ॥ ४८ ॥ श्रद्धयायंनमन्मर्त्योनवसेद्गर्भवेश्मनि ॥ नदारिद्र्यमवाप्नोतिव्याधिभिर्नाभिभूयते ॥ ४९ ॥ बिंदुमाधवभक्तोयस्तंयमोपिनमस्यति ॥ प्रणवात्मायएकोऽस्तिनादबिंदुस्वरूपधृक् ॥१५०॥ अमूर्तंयत्परंब्रह्मबिंदुमाधवएवसः ॥ एतत्पंचनदंतीर्थंपंचब्रह्मात्मसंज्ञकम् ॥५१॥ यत्रस्नातोनगृह्णीयाच्छरीरंपांचभौतिकम् ॥ एषासामंगलागौरीकाश्यांपरममंगलम् ॥ ५२ ॥ यत्प्रसादादवाप्नोतिनरोऽत्रचपरत्रच ॥ मयूखादित्यसंज्ञोयंरश्मिमालीतमोपहः ॥ ५३ ॥

॥ १५० ॥ पंचनदपदार्थमाह ॥ पञ्चेति ॥ अकारोकारमकारबिंदुनादाः किरणाधूतपापासरस्वतीगंगायमुनानद्योवा सद्योजातवामदेवाघोरतत्पुरुषेशानसंज्ञावा पंचब्रह्माणस्तदात्मकंतत्संज्ञकंतत्स्वरूपनामकम् ॥ ५१ ॥ ५२ ॥ यस्याःप्रसादान्नरःपरममंगलमाप्नोतिसैषामंगलागौरीत्यन्वयः ॥ रश्मिमालीसूर्यः ॥ तमोपहोऽज्ञाननाशकः अंधकारध्वंसकोवा ॥ ५३ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

गभस्तीशइतिपुंस्त्वमार्षम् ॥ दिव्यमहःस्वप्रकाशंज्योतिस्तत्प्रदम् ॥ मृकंडुसूनुनामार्कंडेयेन ॥ ५४ ॥ ५५ ॥ किरणमालिनः सूर्यस्य ॥ पातकधावनंपापस्यशोधनंनाशकमितियावत् ॥ ५६ ॥ लिंगात्म ॥ ५७ ॥ ५८ ॥ कपयोवानराः ॥ ५९ ॥ १६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ निर्वचनपूर्वकंरत्नेश्वरलिंगंदर्शयति ॥ यानीति ॥ ६४ ॥ ६५ ॥ कृत्तिवासेश्वरस्येत्यत्रादंतत्वमार्षम् ॥ ६६ ॥

गभस्तीशोमहालिंगमेतद्दिव्यमहःप्रदम् ॥ मृकंडुसूनुनाप्यत्रतपस्तप्तंपुरामहत् ॥ ५४ ॥ लिंगंसंस्थाप्यपरमंस्वनाम्नायुःप्रदंपरम् ॥ किरणेश्वरनामैत ल्लिंगंत्रैलोक्यविश्रुतम् ॥ ५५ ॥ सकृन्नतमिदंलोकंनयेत्किरणमालिनः ॥ धौतपापेश्वरंलिंगमेतत्पातकधावनम् ॥ ५६ ॥ निर्वाणनरसिंहोयंभक्त निर्वाणकारणम् ॥ मणिप्रदीपनागोयंमहामणिविभूषणः ॥ ५७ ॥ यदर्चनान्नरोजातुननागैःपरिभूयते ॥ कपिलेशमिदंलिंगंकपिलेनप्रतिष्ठितम् ॥ ॥ ५८ ॥ मुच्यंतेकपयोप्यस्यदर्शनात्किमुमानवाः ॥ प्रियव्रतेश्वरंलिंगंमहदेतत्प्रकाशते ॥५९॥ यस्यार्चनाल्लभेज्जंतुःप्रियत्वंसर्वजन्तुषु ॥ इदमायतनं श्रेष्ठंमणिमाणिक्यनिर्मितम् ॥ १६० ॥ श्रीमतःकालराजस्यकलिकालार्तिहारिणः ॥ निजभक्तजनंपातियःपापात्पापभक्षणः ॥ ६१ ॥ क्षेत्रवि प्रकरान्पापान्यातयन्यातनाशतैः ॥ इयंमंदाकिनीरम्यातपस्तप्तुमिहागता ॥ ६२ ॥ काशीवाससुखंप्राप्यनाद्यापिदिवमीहते ॥ स्नात्वात्रसंतर्प्यपि तॄञ्छ्राद्धंकृत्वाविधानतः ॥ ६३ ॥ नरोननरकंपश्येदपिदुष्कृतकर्मकृत् ॥ यानिकानिचलिंगानिकाश्यांसंतिसहस्रशः ॥ ६४ ॥ रत्नभूतमिदंतेषुलिंगं रत्नेश्वराभिधम् ॥ रत्नेश्वरप्रसादेनभुक्तारत्नान्यनेकशः ॥ ६५ ॥ पुरुषार्थमहारत्नंनिर्वाणंकोनलब्धवान् ॥ कृत्तिवासेश्वरस्यैषामहाप्रासादनिर्मितिः ॥ ॥ ६६ ॥ यांदृष्ट्वापिनरोदूरात्कृत्तिवासःपदंलभेत् ॥ सर्वेषामपिलिंगानांमौलित्वंकृत्तिवाससः ॥ ६७ ॥ ॐकारेशःशिखाज्ञेयालोचनानित्रिलोचनः ॥ गोकर्णभारभूतेशौतत्कर्णौपरिकीर्तितौ ॥६८॥ विश्वेश्वराविमुक्तौचद्वावेतौदक्षिणौकरौ ॥ धर्मेशमणिकर्णेशौद्वौकरौदक्षिणेतरौ ॥ ६९ ॥ कालेश्वरकपर्दी शौचरणावतिनिर्मलौ ॥ ज्येष्ठेश्वरोनितंबश्चनाभिर्वैमध्यमेश्वरः ॥ १७० ॥ कपर्दोस्यमहादेवःशिरोभूषाश्रुतीश्वरः ॥ चंद्रेशोहृदयंतस्यआत्मावीरेश्वरः परः ॥ ७१ ॥ लिंगंतस्यतुकेदारःशुक्रंशुक्रेश्वरंविदुः ॥ अन्यानियानिलिंगानिपरःकोटिशतानिच ॥ ७२ ॥ ज्ञेयानिनखलोमानिवपुषोभूषणान्यपि ॥ यावेतौदक्षिणौहस्तौनित्यनिर्वाणदौहितौ ॥ ७३ ॥

कंविश्वेश्वरशरीरंकथयति सर्वेषामित्यारभ्य यावेतावित्यतःप्राक्तनेनग्रन्थेन ॥ ६७ ॥ ६८ ॥ धर्मेशमणिकर्णेशावित्यत्रांतिमपदेटावंतत्वमार्षम् ॥ ६९ ॥ १७० ॥ आत्माऽहंकारः ॥ ७१ ॥ कोटि शतेभ्यःपराणिपरःकोटिशतानि अनंतानीत्यर्थः ॥ ७२ ॥ यावेतौविश्वेश्वराऽविमुक्तेश्वरावित्युक्ताऽनुवादोऽन्यत्प्रष्टुम् ॥ तदेवाह नित्येतिपादत्रयेण ॥ स्थितिसमयेऽभयंनविद्यतेभयंयस्मात्तत्तारकं



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वादस्त्वा ॥ नित्यंयन्निर्वाणं तद्दौनित्यंसर्वदावानिर्वाणप्रदावित्युत्तरेणान्वयः ॥ हीतिश्रुतिप्रसिद्धिंद्योतयति ॥ ७३ ॥ पितृलिंगंपित्रीश्वरम् ॥ ७४ ॥ ईशीईश्वरीचित्रघण्टाचासावीशीचेत्येकं पदंवा ॥ ७५ ॥ ७६ ॥ विश्वभुजाविश्वबाहुकावंदीनाम्ना ॥ ७७ ॥ ७८ ॥ स्रोतस्तीर्थंगंगायांप्रवाहरूपंवा ॥ ७८ ॥ ७९ ॥ १८० ॥ इतिश्रीरामानन्दकृतायांकाशीखण्डटीकायांत्रयस्त्रिंशत्तमो ध्यायः ॥ ३३ ॥ छ ॥ ॥ चतुस्त्रिंशत्तमेऽध्यायेसर्वपापैकहारके ॥ ज्ञानवापीप्रशंसाचवर्ण्यतेमरदुर्लभा ॥ १ ॥ ज्ञानवाप्याःप्रशंसांवक्तुंपुनरपिचित्रपटीदर्शनमेवप्रस्तावयति ॥ पुनरिति ॥ १ ॥ मणिकर्णिकायाआधिक्यद्योतनार्थंपुनःप्रशंसामाह संसारेत्यादिना ॥ अपसव्येनदक्षिणेन ॥ अपसर्पणेतिपाठेउपदेश्यानांभयराहितत्तयांतःकरणस्वास्थ्यार्थंदूरीकृतसर्पणहस्तेन श्रुतिंदक्षिणकर्णं

जंतूनामभयंदत्त्वापततांमोहसागरे ॥ इयंदुर्गाभगवतीपितृलिंगमिदंपरम् ॥ ७४ ॥ इयंहिचित्रघंटेशीघंटाकर्णह्रदस्त्वयम् ॥ इयंसाललितागौरीवि शालाक्षीयमद्भुता ॥ ७५ ॥ आशाविनायकस्त्वेषधर्मकूपोयमद्भुतः ॥ यत्रपिंडान्नरोदत्त्वापितॄन्ब्रह्मपदंनयेत् ॥ ७६ ॥ एषाविश्वभुजादेवीविश्वैकजननी परा ॥ असौवंदीमहादेवीनित्यंत्रैलोक्यवंदिता ॥ ७७ ॥ निगडस्थानपिजनान्पाशान्मोचयतिस्मृता ॥ दशाश्वमेधिकंतीर्थमेतत्त्रैलोक्यवंदितम् ॥ ७८ ॥ यत्राहुतित्रयेणापिअग्निहोत्रफलंलभेत् ॥ प्रयागाख्यमिदंस्रोतःसर्वतीर्थोत्तमोत्तमम् ॥७९॥ अशोकाख्यमिदंतीर्थंगंगाकेशवएषवै॥मोक्षद्वारमिदंश्रेष्ठंस्वर्ग द्वारमिदंविदुः ॥ १८० ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेज्ञानवापीवर्णनंनामत्रयस्त्रिंशत्तमोऽध्यायः ॥३३॥ ॥ स्कंदउवाच ॥ ॥ पुनर्ददर्शतन्वंगीचित्रपट्यांघटोद्भव ॥स्वर्गद्वारात्पुरोभागेश्रीमतींमणिकर्णिकाम् ॥ १ ॥ संसारसर्पदष्टानांजंतूनांयत्रशंकरः ॥ अपसव्येनहस्तेनब्रूतेब्रह्मस्पृशञ्छ्रुतिम् ॥ २ ॥ नकापिलेनयोगेननसांख्येननचव्रतैः ॥ यागतिःप्राप्यतेपुंभिस्तांदद्यान्मोक्षभूरियम् ॥ ३ ॥ वैकुंठेवि ष्णुभवनेविष्णुभक्तिपरायणाः ॥ जपेयुःसततंमुक्त्यैश्रीमतींमणिकर्णिकाम् ॥४॥ हुत्वाग्निहोत्रमपिचयावज्जीवंद्विजोत्तमाः ॥ अंतेश्रयंतेमुक्त्यैयांसेयंश्रीम णिकर्णिका ॥ ५ ॥ वेदान्पठित्वाविधिवद्ब्रह्मयज्ञरताभुवि ॥ यांश्रयंतिद्विजामुक्त्यैसेयंश्रीमणिकर्णिका ॥ ६ ॥ इष्ट्वाक्रतूनपिनृपाबहून्पर्याप्तदक्षिणान् ॥ श्रयंतेश्रेयसेधन्याःप्रांतेऽधिमणिकर्णिकम् ॥ ७ ॥ सीमंतिन्योपिसततंपतिव्रतपरायणाः ॥ मुक्त्यैपतिमनुव्रज्यश्रयंतिमणिकर्णिकाम् ॥ ८ ॥ वैश्याअ पिचसेवंतेन्यायोपार्जितसंपदः ॥ धनानिसाधुसात्कृत्वाप्रांतेश्रीमणिकर्णिकाम् ॥ ९ ॥

स्पृशन्ब्रह्मब्रह्मज्ञानंब्रूते ॥ कथयतीत्यर्थः ॥ २ ॥ कपिलेनदेवहूत्यैस्वमात्रेश्रीकपिलप्रोक्तेनसांख्येनात्मानात्मविवेकेन ॥ ३ ॥ यांमणिकर्णिकांजपेयुःसेयंमोक्षभूरितिपूर्वक्रियायाअनुषंगः ॥ ४ ॥ ॥ ५ ॥ ब्रह्मयज्ञरताज्ञानयज्ञरताः ॥ अतएवशंकराचार्यप्रभृतीनांमणिकर्ण्याश्रयणंश्रूयते ॥ यद्वा ब्रह्मवेदस्तद्यज्ञरताइत्यर्थः ॥ ६ ॥ मणिकर्णिकायाआधिंअधिमणिकर्णिकंतदुपरीत्यर्थः ॥ ७ ॥ सीमन्तिन्योनार्यःपतिमनुव्रज्यमृतंभर्तारमनुपश्चाद्गत्वाऽन्वावनुमरणंसहमरणंवाकृत्वेत्यर्थः ॥ ८ ॥ प्रांतेसाधुसात्कृत्वासत्पात्रेभ्योदत्त्वायांसेवन्तेसेयंमोक्षभूरितिशेषः ॥ प्रांतेसेवन्तइतिवान्वयः ॥ ९ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भजेयुर्भजन्ति ॥ १० ॥ ११ ॥ देवयज्ञपितृयज्ञमनुष्ययज्ञभूतयज्ञब्रह्मयज्ञाइतिपञ्चयज्ञाः ॥ त्यजेयुस्त्यजंति ॥ १२ ॥ मणिकर्णीमुपासतेइत्यादिषुयथायोग्यंयांयासेयंमोक्षभूरितिवा इमामितिवा
बोद्धव्यम् ॥१३॥ अनन्यसाधनांस्वतःसिद्धांस्वप्रकाशामितिवा ॥ मणिकर्णिकामंतरेणनविद्यतेऽन्यत्साधनंयस्याःसातथातामितिवा ॥१४॥ दंडयित्वेति ॥ तत्र मनोदण्डःप्राणायामः ॥ वाचोदंडो
मौनम् ॥ कायदण्डोवृथाव्यापारराहित्यम् ॥ तथाचभागवतेभगवद्वचनम् ॥ मौनाऽनीहानिलायामादण्डावाग्देहचेतसाम् ॥ नह्येतेसन्तियस्यांगवेणुभिर्नभवेद्यातिरिति ॥ नैःश्रेयसींचकैवल्यसंबंधि
नीम् ॥ १५ ॥ संन्यस्तेति ॥ अस्याविद्वद्विषयत्वादनन्येत्यस्याश्चविद्वद्विषयत्वादपौनरुक्त्यम् ॥ १६ ॥ अनन्येत्यादिश्लोकत्रयोक्तमुपसंहराते ॥ शिखीति ॥ शिखीत्रिदंडी ॥ मुंडीएकदंडी ॥
जटीपाशुपतादिः ॥ कौपीनीकेवलकौपीनमात्रग्राही ॥ मुमुक्षुरितिसर्वेषांविशेषणम् ॥ अन्योवायःकश्चिन्मुमुक्षुः ॥ १७ ॥ १८ ॥ तुशब्दोक्तविशेषमाह ॥ हेलयेति ॥ १९ ॥ उभाभ्यामनशनव्रत

त्यक्त्वापुत्रकलत्रादिसच्छूद्रान्यायमार्गगाः ॥ निर्वाणप्राप्तयेचैनांभजेयुर्मणिकर्णिकाम् ॥ १० ॥ यावज्जीवंचरंतोपिब्रह्मचर्यंजितेंद्रियाः ॥ निःश्रेयसेश्रयं
त्येनांश्रीमतींमणिकर्णिकाम् ॥ ११ ॥ अतिथीनपिसंतर्प्यपंचयज्ञरताअपि ॥ गृहस्थाश्रमिणोनेमांत्यजेयुर्मणिकर्णिकाम् ॥१२॥ वानप्रस्थाश्रमयुजो
ज्ञात्वानिर्वाणसाधनम् ॥ सक्रियम्येंद्रियग्राममंमणिकर्णीमुपासते ॥ १३ ॥ अनन्यसाधनांमुक्तिंज्ञात्वाशास्त्रैरनेकधा ॥ मुमुक्षुभिस्त्वेकदंडैःसेव्यतेमणिक
र्णिका ॥ १४ ॥ दंडयित्वामनोवाचंकायंनित्यंत्रिदंडिनः ॥ नैःश्रेयसींश्रियंप्राप्तुंश्रयंतेमणिकर्णिकाम् ॥ १५ ॥ संन्यस्ताखिलकर्माणोदंडयित्वाचलं
मनः ॥ एकदंडव्रतामुक्त्यैभजेयुर्मणिकर्णिकाम् ॥ १६ ॥ शिखीमुंडीजटीवापिकौपीनीवादिगंबरः ॥ मुमुक्षुःकोनसेवेतमुक्तिदांमणिकर्णिकाम् ॥१७॥
तपःकर्तुंनशक्तायेदानंवादातुमक्षमाः ॥ योगाभ्यासविहीनायेतेषामेषाविमुक्तिदा ॥ १८ ॥ संत्युपायाःसहस्रंतुमुक्तयेनतथामुने ॥ हेलयैषायथादद्या
न्निर्वाणंमणिकर्णिका ॥ १९ ॥ अनशनव्रतभृतेत्रिकालाभ्यवहारिणे ॥ प्रांतेदद्यात्समांमुक्तिमुभाभ्यांमणिकर्णिका ॥ २० ॥ यथोक्तमाचरेदेकोनिष्ठापा
शुपतंव्रतम् ॥ निरंतरंस्मरेदेकोह्यद्येनांमणिकर्णिकाम् ॥ २१ ॥ दृष्टात्रवपुषःपातेद्वयोश्चसदृशीगतिः ॥ तस्मात्सर्वंविहायाशुसेव्यैषामणिकर्णिका ॥
॥ २२ ॥ स्वर्गद्वारेविशेयुर्येविगाह्यमणिकर्णिकाम् ॥ तेषांविधूतपापानांक्वापिस्वर्गोनदूरतः ॥ २३ ॥ स्वर्गद्वाःस्वर्गभूरेषामोक्षभूर्मणिकर्णिका ॥ स्वर्गा
पवर्गावत्रैवनोपरिष्टान्नचाप्यधः ॥२४॥ दत्त्वादानान्यनेकानिविगाह्यमणिकर्णिकाम् ॥ स्वर्गद्वारंप्रविष्टायेनतेनिरयगामिनः ॥२५॥ स्वर्गापवर्गयोरर्थः
कोविदैश्चनिरूपितः ॥ स्वर्गःसुखंसमुद्दिष्टमपवर्गोमहासुखम् ॥ २६ ॥

त्रिकालाभ्यवहारिभ्याम् ॥ चतुर्थ्याद्विवचनमेतत् ॥ २० ॥ यथोक्तमितिसार्धवाक्यम् ॥ निष्ठातात्पर्यंतत्पूर्वकंपाशुपतव्रतंनियमम् ॥ कीदृशम् ॥ यथोक्तंसनत्कुमारसंहितायांयथावत्प्रोक्तंविभूतिभि
स्त्रिपुंड्रधारणादिरूपमेकआचरेदनुतिष्ठेत् ॥ एकोनिरंतरंहृद्येनांमणिकर्णिकांस्मरेत्तयोर्द्वयोरत्रमणिकर्ण्यांवपुषःपातेसदृशीगतिर्दृष्टेत्यर्थः ॥ २१ ॥ फलितमाह तस्मादित्यर्धेन ॥ २२ ॥ २३ ॥
स्वर्गद्वाःस्वर्गस्यद्वाररूपास्वर्गभूर्मोक्षभूश्चैषामणिकर्णिकेत्यर्थः ॥ तस्मात्स्वर्गापवर्गावत्रैवमणिकर्णिकायामेवनतूपरिष्टादप्यधःक्वापीत्यर्थः ॥ स्वर्गदेतिपाठेस्वर्गसुखंतद्ददातीतितथा ॥ अत्रैवे
त्यस्यायंभावः ॥ अत्रैवस्वर्गमोक्षौप्राप्यापितत्प्राप्त्यैमूढाअन्यत्रयांत्यत्रकस्मान्नायांतीत्यनुक्रोशतिभगवान्कार्त्तिकेयइति ॥ २४ ॥ २५ ॥ स्वर्गापवर्गावत्रैवेतिस्वानुभवेनदर्शयितुंस्वर्गापवर्गयोरर्थ



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

माह ॥ स्वर्गापवर्गयोरिति ॥ २६ ॥ इदानींतौदर्शयति मणिकर्णीतिद्वाभ्याम् ॥ २७ ॥ २८ ॥ ब्रह्मनालिकायामणिकर्णिकायाश्चिह्नमाह ॥ स्वर्गद्वारादिति ॥ सौभाग्यंसौंदर्यंभाग्यमै श्वर्यादिषाड्गुण्यंतयोरेकनिधिर्मुख्यआश्रयःकाचिदपरिमेयगुणगहना ॥ एकामुख्या ॥ २९ ॥ द्रुहिणाश्चतुर्मुखाः ॥ जग्मुर्गताः ॥ नैत्येवेशाएषामणिकर्णिकानएतिनगच्छतीत्यर्थः ॥ ॥ ३० ॥ सन्तीति ॥ मणिकर्णिकांपरितोव्याप्यवेष्टयित्वेत्यर्थः ॥ तावंतितीर्थानिसंतियावद्भिस्तीर्थैस्तिलमात्रापिएकतिलपरिमितापिभूमिर्नविरलीकृताननिरवकाशीकृतेत्यर्थः ॥ ३१ ॥ कोपिपुंजीवःस्त्रीजीवोवेत्यर्थः ॥ ३२ ॥ ३३ ॥ स्थूलमणिकर्णिकायाःप्रमाणमाह ॥ आमध्यादिति ॥ ३४ ॥ नगच्छतिनप्राप्नोति ॥ तत्रहेतुमाह ॥ एतदिति ॥ त्रिलोक

मणिकर्ण्युपविष्टस्ययत्सुखंजायतेसतः ॥ सिंहासनोपविष्टस्यतत्सुखंक्कशतक्रतोः ॥ २७ ॥ महासुखंयदुद्दिष्टंसमाधौविस्मृतात्मनाम् ॥ श्रीमत्यांम णिकर्ण्यांतत्सहजेनैवजायते ॥ २८ ॥ स्वर्गद्वारात्पुरोभागेदेवनद्याश्चपश्चिमे ॥ सौभाग्यभाग्यैकनिधिःकाचिदेकामहास्थली ॥ २९ ॥ यावंतोभास्वतः स्पर्शाद्भासंतेसैकताःकणाः ॥ तावंतोद्रुहिणाजग्मुर्नैत्येषामणिकर्णिका ॥ ३० ॥ संतितीर्थानितावंतिपरितोमणिकर्णिकाम् ॥ यावद्भिस्तिलमात्रापिनभू मिर्विरलीकृता ॥ ३१ ॥ यदन्वयेकोपिमुक्तःसंप्राप्यमणिकर्णिकाम् ॥ तद्वंश्यास्तत्प्रभावेणमान्याःस्वर्गौकसामपि ॥ ३२ ॥ तर्पिताःपितरोयेनसंप्राप्यम णिकर्णिकाम् ॥ सप्तसप्ततथासप्तपूर्वजास्तेनतारिताः ॥ ३३ ॥ आमध्याद्देवसरितआहरिश्चंद्रमंडपात् ॥ आगंगाकेशवादाचस्वर्द्वारान्मणिकर्णिका ॥ ॥ ३४ ॥ एतद्रजःकणतुलांत्रिलोक्यपिनगच्छति ॥ एतत्प्राप्त्यैप्रयततेत्रिलोकस्थोऽखिलोभवी ॥ ३५ ॥ कलावतीचित्रपटीपश्यंतीत्थंमुहुर्मुहुः ॥ ज्ञानवा पींददर्शाथश्रीविश्वेश्वरदक्षिणे ॥ ३६ ॥ यदंबुसततंरक्षेद्दुर्वृत्ताद्दंडनायकः ॥ संभ्रमोविभ्रमश्चासौदत्त्वाभ्रांतिंगरीयसीम् ॥ ३७ ॥ योष्टमूर्तिर्महादेवः पुराणेपरिपठ्यते ॥ तस्यैषांबुमयीमूर्तिर्ज्ञानदाज्ञानवापिका ॥ ३८ ॥ नेत्रयोरतिथीकृत्यज्ञानवापींकलावती ॥ कदंबकुसुमाकारांबभारक्षणतस्तनुम् ॥ ॥ ३९ ॥ अंगानिवेपथुंप्रापुःस्विन्नाभालस्थलीभृशम् ॥ हर्षबाष्पांबुकलिलेजातेतस्याविलोचने ॥ ४० ॥ तस्तंभगात्रलतिकासुखंवैवर्ण्यमापच ॥ स्वरोथगद्गदोजातोव्यभ्रंशत्तत्करात्पटी ॥ ४१ ॥

स्थस्त्रिलोकेवर्तमानः ॥ त्रिलोकीस्थइतिक्कचित् ॥ अखिलोभवीकृत्स्नःसंसारी ॥ अवनीमितिपाठेत्रिलोकस्थस्त्रिजगतीस्थोजनएतत्प्राप्त्यर्थमवनींप्रयततेपर्यटतीत्यर्थः ॥ ३५ ॥ ३६ ॥ ॥ ३७ ॥ रक्षणेहेतुमाह ॥ योष्टमूर्तिरिति ॥ पंचभूतसोमसूर्यात्मनःआत्मानंत्यज्वादीक्षितब्राह्मणांतावाष्टौमूर्तयः ॥ ३८ ॥ कदंबकुसुमाकारांकदंबकुसुमवद्रोमांचिताम् ॥ ३९ ॥ स्विन्नास्वेदार्द्राश्लथद्रूपावा ॥ हर्षबाष्पांबुनाकलिलेव्यामिश्रे ॥ बाष्पांबुनेतिसामान्यविशेषभावान्नपौनरुक्त्यम् ॥ विलोचनेविशिष्टेलोचनेइतिद्विवचनम् ॥ ४० ॥ तस्तंभनिश्चलाभूत् ॥

१ जन्मी—शरीरधारी ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

साकर्दंबकुसुमाकारत्वादिरूपावस्थाःयस्याःसातदवस्थाताम् ॥ विज्ञायतामवस्थामितिशेषः ॥ ४४ ॥
व्यभ्रंशादधःपपात ॥ ४१ ॥ स्वंदेहम् ॥ सौषुप्तायांसुषुप्तसंबंधिन्याम् ॥ ४२ ॥ ४३ ॥ अतिपटीयसीमतिशयेनपटुतराम् ॥४६॥
पेक्षितदृष्टम् ॥ ४५ ॥ अथेतिचेदर्थे ॥ इत्थंनचेत्कथमियमकांडादृनवसरात् ॥ ल्यब्लोपेपंचमी ॥ अकांडंप्राप्यपर्यमूमुहत्सर्वतोभावेनमोहंप्रापत्वतीत्यर्थः ॥ ४७ ॥ उपचारानेवदर्शयति
तन्मोहस्यनिदानंसचासौमोहश्चतस्यांवामोहस्तन्मोहस्तस्यकारणम् ॥ उपचर्यतेएभिरित्युपचाराव्यजनादयस्तैरनाकुलमनाबाधंयथास्यात्तथाउपचेरुरुपचारांश्चक्रुः ॥

किंकिंकिमेतदे
साक्षणंस्वंविसस्मारकाहंकाहंनवेत्तिच ॥ सौषुप्तायांदशायांचपरमात्मेवनिश्चला ॥ ४२ ॥ अथतत्परिचारिण्यस्त्वरमाणाइतस्ततः ॥ किंकिंकिमेतदे
तत्किंपृच्छंतिस्मपरस्परम् ॥ ४३ ॥ तदवस्थांसमालोक्यतांताश्चतुरचेतसः ॥ विज्ञायसात्त्विकैर्भावैरिदमूचुःपरस्परम् ॥ ४४ ॥ भवांतरेप्रेमपात्रमेतयै
क्षितुकिंचन ॥ चिरात्तेनचसंगत्यसुखमूर्च्छामवापह ॥ ४५ ॥ अथनेत्थंकथमियमकांडात्पर्यमूमुहत् ॥ प्रेक्षमाणारइश्चित्रपटीमतिपटीयसीम् ॥ ४६ ॥
तन्मोहस्यनिदानंताःसम्यगेवविचार्यच ॥ उपचेरुर्महाशांतैरुपचारैरनाकुलम् ॥ ४७ ॥ काचित्तांवीजयांचक्रेकदलीतालवृंतकैः ॥ बिसिनीवलयै
रन्याधन्यांतांपर्यभूषयत् ॥ ४८ ॥ अमंदैश्चंदनरसैरभ्यषिंचदमुंपरा ॥ अशोकपल्लवैरस्याःकाचिच्छोकमनीनशत् ॥ ४९ ॥ धारामंडपधारांबुसीकरै
स्तत्तनूलताम् ॥ इष्टार्थविरहग्लानांसिंचयामासकाचन ॥ ५० ॥ जलार्द्रवाससाकाचिदेतस्यास्तनुमावृणोत् ॥ कर्पूरक्षोदजालेपैरन्यास्तामन्वलेपयन्
॥ ५१ ॥ पद्मिनीदलशय्यांचकाचिद्धरचयन्मृदुम् ॥ काचित्कुलिशनेपथ्यंदूरीकृत्यतदंगतः ॥ ५२ ॥ मुक्ताकलापंरचयांचक्रेवक्षोजमंडले ॥ का
चिच्छशिसुखीतांतुचंद्रकांतशिलातले ॥ ५३ ॥ स्वापयामासतन्वंगींस्वच्छीतांबुशीतले ॥ दृष्ट्वोपचार्यमाणांतामित्थंबुद्धिशरीरिणी ॥ ५४ ॥ अति
तापपरीतांगीताःसखीःप्रत्यभाषत ॥ एतस्यास्तापशांत्यर्थंजानेहंपरमौषधम् ॥ ५५ ॥ उपचारानिमान्सर्वान्दूरीकुरुतमाचिरम् ॥ अपतापांकरोम्येनां
सद्यःपश्यतकौतुकम् ॥५६॥ दृष्ट्वाचित्रपटीमेषासद्योविह्वलतामगात् ॥ अत्रैवकाचिदेतस्याःप्रेमभूरस्तिनिश्चितम् ॥५७॥ अतश्चित्रपटीस्पर्शात्परितापं
विहास्यति ॥ वाक्याद्बुद्धिशरीरिण्यास्ततस्तत्परिचारिकाः ॥ ५८ ॥ निधायतत्पुरःप्रोचुःपटींपश्यकलावति ॥ तवानंदकरीयत्रकाचिदस्तीष्टदेवता ॥
॥ ५९ ॥ सापीष्टदेवतानाम्नातत्पटीदर्शनेनच ॥ सुधासेकमिवप्राप्यमूर्छांहित्वोत्थिताद्रुतम् ॥ ६० ॥ अवग्रहपरिम्लानावर्षासारैरिवौषधीः ॥
पुनरालोकयांचक्रेज्ञानदांज्ञानवापिकाम् ॥ ६१ ॥

काचिदित्यारभ्यसापीष्टेत्यतःप्राक्तनेन ॥ वृंतकैर्व्यजनैः ॥ बिसिनीवलयैःपद्मिनीकटकैः ॥ पर्यभूषयद्भूषयांचकार ॥ ४८ ॥ अमंदैःस्निग्धैः ॥ अनीनशन्नाशयामास ॥ ४९ ॥ ५० ॥
कर्पूरक्षोदजालेपैःकर्पूरचूर्णजैरालेपैः ॥ ५१ ॥ कुलिशनेपथ्यंवज्रालंकरणम् ॥ ५२ ॥ ५३ ॥ बुद्धियुक्तंशरीरंवर्ततेयस्याःसाबुद्धिशरीरिणीतिसान्वयासंज्ञा ॥ ५४ ॥ ५५ ॥ माचि
रंशीघ्रम् ॥ सत्वरमितिक्वचित् ॥ ५६ ॥ ५७ ॥ तत्परिचारिकाःकलावत्याःसख्यः ॥ ५८ ॥ ५९ ॥ ६० ॥ अवग्रहेणवृष्टिप्रतिघातेनसूर्यतापेनेतियावत् ॥ परिम्लानाईषच्छुष्काः ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ओषधीरोषध्यः ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ उपविश्वेश्वरंविश्वेश्वरसमीपे ॥ ६६ ॥ मध्येमार्गमार्गस्यमध्ये ॥ उपमलयाचलंमलयाचलसमीपे ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ॥ ७२ ॥ ७३ ॥ निर्वेक्ष्यामोतितरांप्राप्स्यामः ॥ महाभोगादितिपाठेनिर्वेक्ष्यामोनिर्विण्णाभाविष्यामइत्यर्थः ॥ ७४ ॥ साभक्तेभ्योज्ञानमुप्यतेदीयतेऽनयेतिज्ञानवापीनाम्नायथार्थाख्याभवितुमर्हती

स्पृष्ट्वाकलावतीतांतुवापींचित्रगतामपि ॥ लेभेभवांतरज्ञानंयथासीत्पूर्वजन्मनि ॥ ६२ ॥ पुनर्विचारयांचक्रेवापीमाहात्म्यमुत्तमम् ॥ अहोचित्रगतापीयंसं स्पृष्टाज्ञानवापिका ॥ ६३ ॥ ज्ञानंमेजनयामासभवांतरसमुद्भवम् ॥ अथतासांपुरोहृष्टाकथयामाससुंदरी ॥ ६४ ॥ निजंप्राग्भववृत्तांतंज्ञानवापीप्रभावजम् ॥ ॥ कलावत्युवाच ॥ ॥ एतस्माज्जन्मनःपूर्वमहंब्राह्मणकन्यका ॥ ६५ ॥ उपविश्वेश्वरंकाश्यांज्ञानवाप्यांरमेमुदा ॥ जनकोमेहरिस्वामीजनयित्रीप्रियं वदा ॥ ६६ ॥ आख्याममसुशीलेतिमांचविद्याधरोऽहरत् ॥ मध्येमार्गंनिशीथेथतदोपमलयाचलम् ॥ ६७ ॥ रक्षसासहतोवीरोराक्षसंसजघानह ॥ रक्षो पिमुक्तःशापात्तुदिव्यंवपुरवापह ॥ ६८ ॥ अवापजन्मगंधर्वस्त्वसौमलयकेतुतः ॥ कर्णाटनृपतेःकन्याबभूवाहंकलावती ॥ ६९ ॥ इतिज्ञानंममोद्भूतं ज्ञानवापीक्षणात्क्षणात् ॥ इतितस्यावचःश्रुत्वासापिबुद्धिशरीरिणी ॥ ७० ॥ ताश्चतत्परिचारिण्यःप्रहृष्टास्यास्तदाऽभवन् ॥ प्रोचुस्तांप्रणिपत्याथपुण्य शीलांकलावतीम् ॥ ७१ ॥ अहोकथंहिसालभ्यायत्प्रभावोयमीदृशः ॥ धिग्जन्मतेषांमर्त्येऽस्मिन्यैर्नैक्षिज्ञानवापिका ॥ ७२ ॥ कलावतिनमस्तुभ्यं कुरुनोपिसमीहितम् ॥ जनिंसफलयास्माकंनयनःप्रार्थ्यभूपतिम् ॥ ७३ ॥ अयंचनियमोस्माकमद्यारभ्यकलावति ॥ निर्वेक्ष्यामोमहाभोगान्दृष्ट्वातां ज्ञानवापिकाम् ॥ ७४ ॥ अवश्यंज्ञानवापीसानाम्नाभवितुमर्हति ॥ चित्रंचित्रगतापीहयातवज्ञानदायिनी ॥ ७५ ॥ ॐकृत्यतासांवाक्यंसास्वाकारंपरि गोप्यच ॥ प्रियाणिकृत्वाभूभर्तुःप्रस्तावज्ञाव्यजिज्ञपत् ॥ ७६ ॥ कलावत्युवाच ॥ जीवितेशनमेत्वत्तःकिंचित्प्रियतरंक्वचित् ॥ त्वामासाद्यपतिं राजन्प्राप्ताःसर्वेमनोरथाः ॥ ७७ ॥ एकोमनोरथःप्रार्थ्योममास्त्यत्रार्यपुत्रक ॥ विचारपथमापन्नस्तवापिसमहाहितः ॥ ७८ ॥ ममतुत्वदधीनायाः सुदुष्प्रापतरोमहान् ॥ तवस्वाधीनवृत्तेस्तुसिद्धप्रायोमनोरथः ॥ ७९ ॥ प्राणेशकिंबहूक्तेनयदिप्राणैःप्रयोजनम् ॥ तदाभिलषितंदेहिप्राणायास्यंत्यथा न्यथा ॥ ८० ॥ प्राणेभ्योपिगरीयस्यास्तस्यावाक्यंनिशम्यसः ॥ उवाचवचनंराजातस्याःस्वस्यापिचप्रियम् ॥ ८१ ॥ राजोवाच ॥ ॥ नाहंप्रिये तवादेयमिहपश्यामिभामिनि ॥ प्राणाअपिममक्रीतास्त्वयाशीलकलागुणैः ॥ ८२ ॥

त्यर्थः ॥ ७५ ॥ ॐकृत्यस्वीकृत्यस्वाकारंपटीदर्शनेनसात्विकभावेनाविवशंशरीरंपरिगोप्याच्छाद्यपूर्ववत्कृत्वेत्यर्थः ॥ व्यजिज्ञपद्विज्ञापयामास ॥ ७६ ॥ ७७ ॥ आपन्नःप्राप्तः ॥ ७८ ॥ ७९ ॥ अन्यथाभिलषितस्यादानेऽथानन्तरमेवप्राणायास्यंतीत्यन्वयः ॥ मेऽन्यथा[illegible]कचित ॥ ८० ॥ गरीयस्याअधिकायाः ॥ ८१ ॥ क्रीताःस्वाधीनाःकृताइत्यर्थः ॥ क्रांतइतिवापाठः ॥ कैः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शीलकलागुणैः शीलंसत्स्वभावः कलाश्चतुःषष्टिविधाः गुणाः पातिव्रत्याद्यास्तैः ॥ ८२ ॥ ८३ ॥ प्रार्थ्यप्रार्थनीयप्रार्थयितॄणामभावादपितवाप्राप्यंनास्तीत्याह ॥ कइति ॥ प्रार्थ्योयाच्यः ॥ पृथग्जनवत्प्राकृतलोकवत् ॥ नौआवयोः ॥ ८४ ॥ उक्तंविवृणोति ॥ देशइति ॥ देशोजनपदः ॥ कोशोभांडागारः ॥ बलंहस्त्यश्वरथपादातम् ॥ दुर्गंवार्क्षपार्वतमौदकंकृत्रिमंच ॥ तत्र वार्क्षंवृक्षनिर्मितम् ॥ पार्वतंपर्वतनिर्मितम् पर्वतभवंवा ॥ औदकमुदकनिर्मितम् ॥ कृत्रिमंप्राकारादि ॥ यदन्यच्छत्रचामरादितत्सर्वंत्वदीयमेवमेममनाकिंचित्किंतुस्वामिनइदंस्वाम्यंतन्मात्रमेवममास्ति ॥ ८५ ॥ तच्चममस्वाम्यंत्वहतेत्वांविनाऽन्यत्र ॥ अहमपित्वदीयएवेत्यर्थः ॥ ८६ ॥ महीजानेःपृथ्वीभर्तुः ॥ ८७ ॥ ८८ ॥ जनिर्जन्म ॥ ८९ ॥ ९० ॥ ९१ ॥ नवि

भवद्विधानांसाध्वीनांमन्येऽप्राप्यंनकिंचन ॥ ८३ ॥ कःप्रार्थ्यःप्रार्थनीयंकिंकोवाप्रार्थयिताप्रिये ॥ नपृथग्जनवदविलंबितमाचक्ष्वकृतंविद्धिकलावति ॥ ८४ ॥ देशःकोशोबलंदुर्गंयदन्यदपिभामिनि ॥ तत्त्वदीयंनमेकिंचित्स्वाम्यमात्रमिहास्तिमे ॥ ८५ ॥ तच्चस्वाम्यंममान्यत्रत्वहतेजीवितेश्वरि ॥ राज्यंत्यजेयंत्वद्वाक्यात्तृणीकृत्यापिमानिनि ॥ ८६ ॥ माल्यकेतोर्महीजानेरितिवाक्यंनिशम्यसा ॥ प्राहगंभीरयावाचावचश्चारुकलावती ॥ ८७ ॥ कलावत्युवाच ॥ नाथप्रजासृजापूर्वंसृष्टानानाविधाःप्रजाः ॥ प्रजाहितायसंसृष्टंपुरुषार्थचतुष्टयम् ॥ ८८ ॥ तद्विहीनाजनिरपिजलबुद्बुदवन्मुधा ॥ तस्मादेकोपिसंसाध्यःपरत्रेहचशर्मणे ॥ ८९ ॥ यत्रानुकूल्यंदंपत्योस्त्रिवर्गस्तत्रवर्धते ॥ यदुच्यतेपुराविद्भिरितितत्तथ्यमीक्षितम् ॥ ९० ॥ तवदास्यपिभोगाढ्याकिमुतांकस्थलीचरी ॥ तत्राप्यनन्यसंपत्तिस्तत्रस्वाधीनभर्तृता ॥ ९१ ॥ माद्विधानांतुदासीनांशतंतेऽस्तीहमंदिरे ॥ तथापिनितरांप्रेमस्वामिनोमयिदृश्यते ॥ ९२ ॥ विपश्चित्संचयेदर्थानिष्टापूर्तायकर्मणे ॥ तपोर्थमायुर्निर्विघ्नंदारांश्चापत्यलब्धये ॥ ९३ ॥ तवैतत्सर्वमस्तीहविश्वेशानुग्रहात्प्रिय ॥ पूरणीयोऽभिलाषोमेयदितद्वच्म्यहंशृणु ॥ ९४ ॥ तूर्णंप्रहिणुमांनाथविश्वनाथपुरींप्रति ॥ प्राणाःप्रयाताःप्रागेववपुःशेषास्मिकेवलम् ॥ ९५ ॥ माल्यकेतुःकलावत्याइत्याकर्ण्यवचःस्फुटम् ॥ क्षणंविचार्यस्वहृदिराजाप्रोवाचतांप्रियाम् ॥ ९६ ॥ प्रियेकलावतियदितवगंतव्यमेवहि ॥ राज्यलक्ष्म्यानयाकिंमेचलयात्वद्विहीनया ॥ ९७ ॥ नराज्यंराज्यमित्याहूराज्यश्रीःप्रेयसीध्रुवम् ॥ सप्तांगमपितद्राज्यंतयाहीनंतृणायते ॥ ९८ ॥ निःसपत्नंकृतंराज्यंभुक्ताभोगानिरंतरम् ॥ हृषीकार्थाःकृतार्थाश्चाविधृताआधृतिःप्रिये ॥ ९९ ॥



घतेऽन्यायस्याःसाअनन्याअनन्याचासौसंपत्तिश्चेतितथा ॥ अपत्यसंपत्तिरितिकचित्पाठः ॥ ९२ ॥ ९३ ॥ ९४ ॥ प्रहिणुप्रस्थापय ॥ ९५ ॥ स्वहृदिस्वांतःकरणे ॥ सहृदीतिकचित् ॥ सुहृदीतिचान्यत्र ॥ ९६ ॥ ९७ ॥ प्रेयसीप्रेमवतीमहिषी ॥ सप्तांगमिति ॥ स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानिचेतिसप्तांगानि ॥ तृणायतेतृणवदाचरति ॥ ९८ ॥ निरंतरंभोगान्भुक्ताहृषीकार्थाइंद्रियार्थाश्चविषयाःकृतार्थाःकृताइतिबहुवचनेनपरिणमय्यपूर्वक्रिययासंबन्धः ॥ जाताइतिशेषइतिवा ॥ भुक्ताभोगास्त्वयासहेतिकचित् ॥ आधृतिरासमंताद्धैर्यंविशेषेणधृता

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विधृतेत्यर्थः ॥ ९९ ॥ १०० ॥ प्रकृतीःपौरश्रेणीः ॥ १ ॥ पुत्राद्रत्नजातमर्थंप्रगृह्येतिसंबन्धः ॥ पुत्रदत्तमितिपाठेस्पष्टएवार्थः ॥ २ ॥ ३ ॥ अवैत्ज्ञातवती ॥ ४ ॥ ५ ॥ व्रजंसमूहम् ॥ दुकूलानिपट्टवस्त्राणि ॥ ६ ॥ दीपोऽस्यास्तीतिदीपीदीपाधारयष्टिरित्यर्थः ॥ दीप्यादीनांत्रयाणांद्वंद्वः ॥ दीर्घत्वमार्षम् ॥ ध्वजस्तंभयुक्ताःपताकाध्वजस्तंभपताकाः ॥ उल्लोचकानिचंद्रातपानि ॥ ७ ॥ न्यायार्जितंधनंसद्धनमुत्कृष्टंधनंवा ॥ ८ ॥ तौर्यत्रिकमहोत्सवैःनृत्यगीतवादित्रपूर्वकैर्महोत्सवैः ॥ ९ ॥ आचमक्रियाआचमनक्रिया ॥ राज्ञ्याकलावत्या ॥ ११० ॥

अपत्यान्यपिजातानिकिंकर्तव्यमिहास्तिमे ॥ अवश्यमेवगंतव्याऽऽवाभ्यांवाराणसीपुरी ॥ १०० ॥ माल्यकेतुःप्रियामित्थमाश्वास्यकृतनिश्चयः ॥ समाहूयचदैवज्ञान्प्रकृतीःपरिपूज्यच ॥ १ ॥ पुत्रेराज्यंनिधायाथराजाकाशींप्रतस्थिवान् ॥ रत्नजातंकियदपिपुत्रादर्थंप्रगृह्यच ॥ २ ॥ दृष्ट्वाविश्वेश्वरपुरीं हृष्टरोमानरेश्वरः ॥ मेनेकृतार्थमात्मानंसंसारांबुधिपारगम् ॥ ३ ॥ प्राग्जन्मवासनायोगात्सापिराज्ञीकलावती ॥ ग्रामांतरादागतेवपुरीमार्गानवैत्स्वयम् ॥ ४ ॥ मणिकर्ण्यामथस्नात्वाभूरिदत्त्वाततोवसु ॥ विश्वेशमर्चयित्वाथरत्नजातैरनेकशः ॥ ५ ॥ दत्त्वातत्रापिरत्नानिगजानश्वान्गवांव्रजम् ॥ दुकूलानि विचित्राणिपूजोपकरणानिच ॥ ६ ॥ सुवर्णरूप्यकलशान्दीपीदर्पणचामरान् ॥ ध्वजस्तंभपताकाश्चविचित्रोल्लोचकानिच ॥ ७ ॥ अथप्रदक्षिणी कृत्यमुक्तिमंडपमाविशत् ॥ तत्रधर्मकथांश्रुत्वादत्त्वातत्रापिसद्धनम् ॥ ८ ॥ सायंतनींमहापूजांपुनःकृत्वाक्षितीश्वरः ॥ तत्रजागरणंकृत्वातौर्यत्रिकमहो त्सवैः ॥ ९ ॥ अथप्रातःसमुत्थायकृत्वाशौचाचमक्रियाम् ॥ राज्ञ्याविनिर्दिष्टपथाज्ञानवापींनृपोययौ ॥ ११० ॥ नृपःसार्धंकलावत्यातत्रसस्नौप्रहृष्टवत् ॥ अर्थपिंडान्सनिर्वाप्यसंतर्प्यश्रद्धयापितॄन् ॥ ११ ॥ तत्ररूप्यसुवर्णादिपात्रेभ्यःप्रतिपाद्यच ॥ दीनांधकृपणानाथान्महार्हैरत्नजातकैः ॥ १२ ॥ प्रीण यित्वानरपतिःपारणांकृतवांस्ततः ॥ संस्कार्यरत्नसोपानैर्ज्ञानवापींकलावती ॥ १३ ॥ आबबंधरतिंतत्रसहभर्त्रातपस्विनी ॥ एकांतरोपवासैश्चकदा चित्त्र्यहोव्रतैः ॥ १४ ॥ षडहोभोजनैश्चापिपक्षार्धनियमैरथ ॥ पक्षांतरोपवासैश्चमासोपवसनादिभिः ॥ १५ ॥ चांद्रायणव्रतैःकृच्छ्रैर्भर्तुःशुश्रूषणैरपि ॥ निनायक्षणवत्कालमायुःशेषस्यसानघा ॥ १६ ॥ एकदाज्ञानवाप्यांतुप्रातःस्नात्वोपविष्टयोः ॥ आगत्यजटिलःकश्चिद्विभूतिंदत्तवान्करे ॥ १७ ॥ उवाचचप्रसन्नास्यआशीर्भिरभिनंद्यच ॥ उत्तिष्ठतंप्रकुरुतंमहानेपथ्यमद्यवै ॥ १८ ॥ तारकोदयसंप्राप्तिर्भवित्रीवांक्षणादिह ॥ यावदित्थंसमाचष्टजटिलो ऽग्रेतयोर्वचः ॥ १९ ॥ तावद्विमानमापन्नंसक्वणत्किंकिणीगणम् ॥ पश्यतांसर्वलोकानांचन्द्रमौलिरथोरथात् ॥ १२० ॥ उत्तीर्यतच्छ्रुतिपुटेकिमपि स्वयमादिशत् ॥ अनाख्यंयत्परंज्योतिरुच्चक्रामचतत्क्षणात् ॥ २१ ॥

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ महानेपथ्यंमहदलंकरणम् ॥ १८ ॥ १९ ॥ क्वणताशब्दवताकिंकिणीगणेनसहितंसक्वणत्किंकिणीगणम् ॥ प्रक्वणत्किंकिणी गणमितिक्वचित् ॥ १२० ॥ उत्तीर्यावतीर्यकिमपिवाङ्मनसयोरगोचरं [illegible] ॥ उक्तेश्रवणानंतरमनाख्यंयत्परंज्योतिर्वाङ्मनसातीतंस्वप्रकाशंब्रह्मतत्क्षणाच्छीघ्रमेव।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चक्रामप्राप्तवान् ॥ अर्थात्सकलावतीकोमाल्यकेतुरित्यर्थः ॥ अथवाऽनाख्यमित्यादेः पूर्वेणैवान्वयः ॥ उपदेशानंतरंतद्विमानंक्षणादुच्चक्रामऊर्ध्वमगमत् ॥ २१ ॥ तर्हिकिंदेवोऽत्रैवस्थितवान् नहीत्याह ॥ उद्द्योतयन्निति ॥ तेनैवविमानेननभोवर्त्मद्योतयन्देवश्चंद्रमौलिःस्वालयंकैलासंययावित्यर्थः ॥ यद्वा नभोवर्त्मउद्द्योतयद्विमानमुच्चक्रामेत्यन्वयः ॥ तर्हिदेवःकिंकृतवांस्तत्राह ॥ देवोपि स्वालयंवैश्वेश्वरलिंगंययौस्वप्रकाशज्योतिर्मयवैश्वेश्वरलिंगेएकीभावंप्राप्तवानित्यर्थः ॥ स्पष्टमन्यत् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ १२७ ॥ ॥ इतिश्रीरामानंदकृतायां काशीखंडटीकायांचतुस्त्रिंशत्तमोध्यायः ॥ ३४ ॥ ॥ छ ॥ पंचत्रिंशत्तमेऽध्यायेसदाचारोनिरूप्यते ॥ सामान्येनचतुर्वर्णाश्रमाणांचविशेषतः ॥:१ ॥ ज्ञानवाप्याःकथाश्रवणजनितानंदकंद

उद्योतयन्नभोवर्त्मदेवोपिस्वालयंययौ ॥ ॥ स्कन्दउवाच ॥ ॥ तदाप्रभृतिलोकेऽत्रज्ञानवापीविशिष्यते ॥ २२ ॥ सर्वेभ्यस्तीर्थमुख्येभ्यःप्रत्यक्ष ज्ञानदामुने ॥ सर्वज्ञानमयीचैषासर्वलिंगमयीशुभा ॥ २३ ॥ साक्षाच्छिवमयीमूर्तिर्ज्ञानकृज्ज्ञानवापिका ॥ सन्तितीर्थान्यनेकानिसद्यःशुचिकराण्य पि ॥ २४ ॥ परंतुज्ञानवाप्याहिकिलांनार्हंतिषोडशीम् ॥ ज्ञानवाप्याःसमुत्पत्तिंयःश्रोष्यतिसमाहितः ॥ नतस्यज्ञानविभ्रंशोमरणेजायतेक्वचित् ॥ २५ ॥ महाख्यानमिदंपुण्यंमहापातकनाशनम् ॥ महादेवस्यगौर्याश्चमहाप्रीतिविवर्धनम् ॥ २६ ॥ पठित्वापाठयित्वावाश्रुत्वावाश्रद्धयान्वितः ॥ ज्ञानवाप्याः शुभाख्यानंशिवलोकेमहीयते ॥ १२७ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेज्ञानवापीप्रशंसनंनामचतु स्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥ ॥ कुंभयोनिरुवाच ॥ ॥ अविमुक्तंमहाक्षेत्रंपरंनिर्वाणकारणम् ॥ क्षेत्राणांपरमंक्षेत्रंमंगलानांचमंगलम् ॥ १ ॥ श्मशा नानांचसर्वेषांश्मशानंपरमंमहत् ॥ पीठानांपरमंपीठमूषराणांमहोषरम् ॥ २ ॥ धर्माभिलाषिबुद्धीनांधर्मराशिकरंपरम् ॥ अर्थार्थिनांशिखिरथपरमार्थ प्रकाशकम् ॥ ३ ॥ कामिनांकामजननंमुमुक्षूणांचमोक्षदम् ॥ श्रूयतेयत्रयत्रैतत्तत्रतत्रपरामृतम् ॥ ४ ॥ क्षेत्रैकदेशवर्तिन्याज्ञानवाप्याःकथांपराम् ॥ श्रुत्वेमामितिमन्येहंगौरीहृदयनंदन ॥ ५ ॥ अणुप्रमाणमपियामध्येकाशिविकासिनी ॥ महीमहीयसीज्ञेयासासिद्धचैनमुधाक्वचित् ॥ ६ ॥ कियंतिसं तितीर्थानिनेहक्षोणीतलेऽखिले ॥ परंकाशीरजोमात्रतुलासाम्यंक्वतेष्वपि ॥ ७ ॥ कियंत्योनस्रवंत्योत्ररत्नाकरमुदावहाः ॥ परंस्वर्गतरंगिण्याःकाश्यां कासाम्यमुद्वहेत् ॥ ८ ॥ कियंतिसंतिनोभूम्यांमोक्षक्षेत्राणिषण्मुख ॥ परंमन्येऽविमुक्तस्यकोट्यंशोपिनतेष्वहो ॥ ९ ॥

वेनात्यौत्सुक्यादुक्तानुवादपूर्वकमविमुक्तंस्तुत्वाऽविमुक्तप्रापकंसदाचारंपृच्छति अविमुक्तमित्यादिना ॥ १ ॥ २ ॥ शिखिरथमयूरवाहन ॥ ३ ॥ यत्रयत्रत्वयाकथ्यमानेआख्याने ॥ एतदविमुक्तम् ॥ ४ ॥ क्षेत्रेति ॥ अणुप्रमाणंयथास्यात्तथामध्येकाशिकाशीमध्येयाविकासिनीप्रख्यातप्रकाशिनीतिवाअर्थात्कैवल्यस्य अतएवमहीयसीमहत्तरामहीवर्तते ॥ सासिद्धचैमुक्तयेइ तिक्वचित् ॥ कदाचिदपिमुधामिथ्यानेतिज्ञानवाप्याइमांकथांश्रुत्वाहंमन्येइतिद्वयोरन्वयः ॥ ५ ॥ ६ ॥ ७ ॥ रत्नाकरस्यसमुद्रस्यमुदंहर्षमावहंतीतिरत्नाकरमुदावहाः ॥ ८ ॥ ९ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

काशीमूर्तिमतीक्षेत्राधिष्ठात्रीदेवता ॥ यतोयस्मिन्क्षेत्ररूपेऽविमुक्ते ॥ १० ॥ त्रयाणांगंगाविश्वेश्वरकाशीनांसमाहारस्त्रयी ॥ नियतमवश्यंयथास्यात्तथेत्यर्थः ॥ ११ ॥ त्वतःतुएवअतएवमोक्षःकुतः ॥ तपआदेरभावात्सत्त्वशुद्ध्यभावादित्यर्थः ॥ १२ ॥ तर्हिकलौतपआदेरभावान्मोक्षोनास्त्येवकिंनेत्याह ॥ विनापीति ॥ १३ ॥ अतःकाशीप्राप्त्युपायंवदेतिपृच्छति ॥ किंकिमिति ॥ तत्रतावन्म नोरथमात्राणांसदाचारप्राप्यत्वात्तत्स्तुतिपूर्वकंसदाचारमेवप्रथमंवदेत्याह मन्यइतिसार्धद्वाभ्याम् ॥ १४ ॥ १५ ॥ एकमुखत्वादन्यैरेतद्वक्तुंनशक्यमितिद्योतयन्संबोधयति ॥ षण्मुखेति ॥ नच स्वयमूहित्वासंक्षेपेणवाकथनीयमित्याह ॥ देवदेवइति ॥ १६ ॥ सदाचारंवक्तुंप्रतिजानीते ॥ मित्रावरुणजेति ॥ देवपुत्रत्वात्तवैवैतच्छ्रवणेऽधिकारइतिद्योतयन्संबोधयति ॥ मित्रेति ॥ सदा चारंशिष्टाचारंसतांसाधूनांहितंहितकरम् ॥ शिवोदितमितिकश्चित् ॥ १७ ॥ सदाचारशीलिनासततंभाव्यमितिवक्तुंतद्विमुखाःपातकिनोऽनुभूतनानानरकास्तद्विपाकशेषेणतामसादिगुणत्रयसंकर तारतम्यानुबंधभिन्नानिस्थावरादिजन्मानियावन्मोक्षंक्रमेणवाप्नुवंतीत्याह स्थावराइतिश्लोकाभ्याम् ॥ स्थावरावृक्षादयः ॥ कृमयःपिपीलिकाद्याअनस्थिमंतः ॥ अब्जामत्स्यादयः ॥ पक्षिणो मयूरादयः ॥ पशवोगवादयः ॥ नरामनुष्याः ॥ एतेसर्वेक्रमेणस्थावरेभ्यःकृमयःकृमिभ्योऽब्जाइत्यादिक्रमेणधार्मिकाः ॥ अप्यर्थेतुशब्दोभिन्नक्रमे एतेभ्यअनेनसंबध्यते ॥ एतेभ्योपिसुराधार्मि

गंगाविश्वेश्वरःकाशीजागर्तित्रितयंयतः ॥ तत्रनैःश्रेयसीलक्ष्मीर्लभ्यतेचित्रमत्रकिम् ॥ १० ॥ कथमेषात्रयीस्कंदप्राप्यतेनियतंनरैः ॥ तिष्येयुगेविशेषेण नितरांचंचलेंद्रियैः ॥ ११ ॥ तपस्तादृक्क्ववातिष्येतिष्येयोगःक्वतादृशः ॥ क्ववाव्रतंक्ववादानंतिष्येमोक्षस्त्वतःकुतः ॥ १२ ॥ विनापितपसास्कंदविनायो गेनषण्मुख ॥ विनाव्रतैर्विनादानैःकाश्यांमोक्षस्त्वयेरितः ॥ १३ ॥ किंकिमाचरतास्कंदकाशीप्राप्येततद्वद ॥ मन्येविनासदाचारंनसिद्ध्येयुर्मनोरथाः ॥ १४ ॥ आचारःपरमोधर्मआचारःपरमंतपः ॥ आचाराद्वर्धतेह्यायुराचारात्पापसंक्षयः ॥ १५ ॥ आचारमेवप्रथमंतस्मादाचक्ष्वषण्मुख ॥ देवदेवो यथाप्राहतवाग्रेत्वंतथावद ॥ १६ ॥ ॥ स्कंदउवाच ॥ ॥ मित्रावरुणजाख्यामिसदाचारंसतांहितम् ॥ यदाचरन्नरोनित्यंसर्वान्कामानवाप्नुयात् ॥ १७ ॥ स्थावराःकृमयोऽब्जाश्चपक्षिणःपशवोनराः ॥ क्रमेणधार्मिकास्त्वेतेह्येतेभ्योधार्मिकाःसुराः ॥ १८ ॥ सहस्रभागःप्रथमाद्द्वितीयोनुक्रमात्तथा ॥ सर्वएते महाभागायावन्मुक्तिसमाश्रयाः ॥ १९ ॥

काइत्यर्थः ॥ १८ ॥ विशेषस्त्वमीषामुत्तरोत्तरमल्पीयस्त्वमित्याह ॥ सहस्रेति ॥ प्रथमात्प्रथमनिर्दिष्टात्स्थावरादिरूपाद्द्वितीयस्तदनन्तरंनिर्दिष्टःकृम्यादिरूपोऽनुक्रमात्सहस्रभागःप्रथमनिर्दिष्टाद्रूपा द्द्वितीयोनिर्दिष्टरूपःसहस्रस्यसहस्रस्यएकैकोंशइत्यर्थः ॥ सहस्रभागाद्द्वितीयादितिपाठेसहस्रंभागमंशमत्तिभजतीतिसहस्रभागात् ॥ तथा ॥ द्वितीयंद्वितीयत्वंप्रथमनिर्दिष्टादनन्तरनिर्दिष्टत्वंकृम्या दिरूपत्वमत्तिभजतइतिद्वितीयादितिपूर्वोक्तएवार्थः ॥ सर्वएतेमहाभागाःमहान्भागोभाग्यंयेषांतेतथा ॥ कियत्कालपर्यंतमेतेएवंरूपाभवंतीतिपृच्छायामाह ॥ यावन्मुक्तीति ॥ यावन्मुक्तिमुक्तिपर्यंतं समस्तुल्यःसंसारलक्षणआश्रयोयेषांतेस्युरित्यर्थः ॥ एतेनपापिनांबाहुल्यंधार्मिकाणामल्पत्वंमोक्षिणामल्पतमत्वंचोक्तम् ॥ तथाचोक्तंविष्णुपुराणे ॥ स्थावराःकृमयोऽब्जाश्चपक्षिणः पशवोनराः ॥ धा र्मिकास्त्रिदशास्तद्वन्मोक्षिणश्चयथाक्रमम् ॥ सर्वेप्येतेमहाभागायावन्मुक्तिसमाश्रयाः ॥ सहस्रभागःप्रथमाद्द्वितीयोनुक्रमात्तथेति ॥ यद्वा विशेषतस्त्वमीषामुत्तरोत्तरंमहाभागत्वमित्याह ॥ सहस्रेति ॥ अथवापूर्वोक्तमेवविवृणोति ॥ सहस्रभागेति ॥ प्रथमात्स्थावरादिरूपाद्द्वितीयोनुक्रमात्कृम्याद्यनुक्रमात्सहस्रभागात्सहस्रभागेनसहस्रगुणेनेतियावत् ॥ सर्वएतेमहाभागाइत्यादिपूर्ववत् ॥ १९ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ब्राह्मणेनसदाचारोऽवश्यमनुष्ठेयइतिवक्तुंसर्वेभ्योब्राह्मणानांश्रैष्ठ्यमाह चतुर्णामित्यादिना ॥ चतुर्णांजरायुजांडजस्वेदजोद्भिज्जानांप्राणिनश्रेष्ठावंतःकृम्यादयोबुद्ध्युपजीविनोज्ञानपूर्वकोपजीविनो हितानुसन्धानाःपश्वादयः ॥२०॥मतिमद्भ्योज्ञानवद्भ्योबुद्ध्युपजीविभ्यइतियावत् ॥ वाडवाब्राह्मणाः॥विद्वांसःशास्त्रार्थज्ञाः॥ कृतासंपादिताइदमित्थमितिबुद्धिर्निश्चयात्मिकायैस्तेकृतबुद्धयः ॥२१॥ कर्तारोनुष्ठातारः ॥ ब्रह्मतत्पराःपरमात्मैकनिष्ठाः ॥ २२ ॥ तपआलोचनम् ॥ यस्यज्ञानमयंतपइतिश्रुतेः ॥ विद्याब्रह्मविद्याताभ्यामविशेषतोऽविशेषात् ॥ २३ ॥ तर्हिकिंसाधारण्येनसर्वएवब्रा ह्मणोजगद्वर्तंवस्त्वर्हतिनेत्याह ॥ सदाचारइति ॥ यस्मादेवंतस्मात् ॥ २४ ॥ सदाचारस्यलक्षणमाह ॥ विद्वेषेति ॥ यंक्रियाकलापम् ॥ धर्ममूलंपुण्यस्यहेतुम् ॥२५॥ सदाचारानुष्ठानस्यफलमाह ॥ लक्षणैरिति ॥ अनसूयुर्गुणेषुदोषाविष्करणहीनः ॥ समाइत्यत्यंतसंयोगेद्वितीया ॥ २६ ॥ उदितंकथितम् ॥ २७ ॥ सदाचारंस्तुत्वादुराचारंनिन्दति ॥ दुराचाररतइति ॥ द्वेषरागयुक्ताःपुरुषाअधर्म

चतुर्णामपिभूतानांप्राणिनोऽतीवचोत्तमाः ॥ प्राणिभ्योपिमुनेश्रेष्ठाःसर्वेबुद्ध्युपजीविनः ॥ २० ॥ मतिमद्भ्योनराःश्रेष्ठास्तेभ्यःश्रेष्ठास्तुवाडवाः ॥ विप्रेभ्यो पिचविद्वांसोविद्वद्भ्यःकृतबुद्धयः ॥ २१ ॥ कृतधीभ्योपिकर्तारःकर्तृभ्योब्रह्मतत्पराः ॥ नतेषामर्चनीयोऽन्यस्त्रिषुलोकेषुकुंभज ॥ २२ ॥ अन्योन्यमर्च कास्तेवैतपोविद्याऽविशेषतः ॥ ब्राह्मणोब्रह्मणासृष्टःसर्वभूतेश्वरोयतः ॥ २३ ॥ अतोजगत्स्थितंसर्वंब्राह्मणोऽर्हतिनापरः ॥ सदाचारोहिसर्वार्होनाचारा द्विच्युतःपुनः ॥ तस्माद्विप्रेणसततंभाव्यमाचारशीलिना ॥ २४ ॥ विद्वेषरागरहिताअनुतिष्ठंतियंमुने ॥ विद्वांसस्तंसदाचारंधर्ममूलंविदुर्बुधाः ॥२५॥ लक्षणैःपरिहीनोपिसम्यगाचारतत्परः ॥ श्रद्धालुरनसूयुश्चनरोजीवेत्समाःशतम् ॥ २६ ॥ श्रुतिस्मृतिभ्यामुदितंस्वेषुस्वेषुचकर्मसु ॥ सदाचारंनिषेवे तधर्ममूलमतंद्रितः ॥ २७ ॥ दुराचाररतोलोकेगर्हणीयःपुमान्भवेत् ॥ व्याधिभिश्चाभिभूयेतसदाल्पायुःसुदुःखभाक् ॥ २८ ॥ त्याज्यंकर्मपराधीनं कार्यमात्मवशंसदा ॥ दुःखीयतःपराधीनःसदैवात्मवशःसुखी ॥ २९ ॥ यस्मिन्कर्मण्यंतरात्माक्रियमाणेप्रसीदति ॥ तदेवकर्मकर्तव्यंविपरीतंनचक्व चित् ॥ ३० ॥ प्रथमंधर्मसर्वस्वंप्रोक्तायान्नियमायमाः ॥ अतस्तेष्ववयेयतःकर्तव्योधर्ममिच्छता ॥ ३१ ॥ सत्यंक्षमार्जवंध्यानमानृशंस्यमहिंसनम् ॥ दमःप्रसादोमाधुर्यंमृदुतेतियमादश ॥ ३२ ॥ शौचंस्नानंतपोदानंमौनेज्याध्ययनंव्रतम् ॥ उपोषणोपस्थदंडौदशैतेनियमाःस्मृताः ॥ ३३ ॥

स्यमूलंयंक्रियाकलापंकुर्वंतिसदुराचारः ॥ २८ ॥ परायत्तंधर्म्यमपित्याज्यमित्याह ॥ त्याज्यमिति ॥२९॥ स्वाधीनमपिकर्मनसर्वंकार्यमित्याह ॥ यस्मिन्निति ॥ अन्तरात्मामनः ॥ तथाचमनुः ॥ मनःपूतंसमाचरेदिति ॥ ३० ॥ यद्यस्माद्धर्मसर्वस्वंप्रथमंयमानियमाश्चप्रोक्ताअतस्तेष्ववयमानियमेष्वेवधर्ममिच्छतायत्नःकर्तव्यइत्यर्थः ॥ प्रोक्तमितिक्वचित्पाठः ॥ ३१ ॥ तत्रक्रमम नादृत्यश्लोकाभ्यांयमनियमावाह सत्यमितिद्वाभ्याम् ॥ सत्यंयथादृष्टस्ययथाश्रुतस्यवाआत्मानुभवस्यपरबुद्धिसंक्रांतयेतथैवोच्चार्यमाणावाक्सत्यमुच्यते ॥ क्षमाआक्रुष्टस्यताडितस्यवाऽविकृत चित्तता ॥ आर्जवंमृदुताअवक्रतेतियावत् ॥ ध्यानंशिवस्यविष्णोर्वाचिन्तनम् ॥ आनृशंस्यममारात्मकता ॥ अहिंसाप्राणिमात्राणामपीडा ॥ दमोबाह्येंद्रियोपशमइंद्रियमात्रस्यवा ॥ प्रसादः प्रसन्नतास्वच्छतेतियावत् ॥ माधुर्यंमधुरतामधुरस्वभावइतियावत् ॥ मृदुताकोमलत्वाअकाठिन्यमितियावत् ॥ एतेदशयमाः ॥ ३२ ॥ शौचंद्विविधंबाह्याभ्यंतरभेदेन ॥ तत्रबाह्यंमृज्जलादिना

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अन्तर्भावशुद्ध्या ॥ स्नानंगंगादौमज्जनादि ॥ तपःकृच्छ्रचांद्रायणादि ॥ दानंद्रविणादेःसंत्यागः ॥ मौनंवृथावाचामनुच्चारणम् ॥ इज्यापंचयज्ञाद्यनुष्ठानम् ॥ अध्ययनंवेदपाठः॥व्रतंचातुर्मास्यादि ॥ उपोषणमेकादश्याद्युपवासः ॥ उपस्थदंडःपरदारादिपराङ्मुखता ॥ एतेदशनियमाःस्मृताः ॥ ३३ ॥ उपादेयकर्तव्यतामुक्त्वाहेयनिरोधनंदर्शयातिकामामित्येकेन ॥ ३४ ॥ शनैरिति ॥ वल्मीकशृंगंवामलूरकूटंयथावल्मीककीटाःक्रमेणसंवर्धयन्तितथाकायवाङ्मनोभिःपरपीडामकुर्वाणःशनैःशनैःपरलोकसहायंभूतंधर्मंसंचिनुयाद्वर्धयेदित्यर्थः ॥ ३५ ॥ धर्मस्यैवसहायित्वंप्रत्यक्षमवलंब्याह ॥ धर्मएवेति ॥ परिच्छदःकरितुरगप्रासादादिः ॥ बंधुःप्रीतिभाक् ॥ आदिपदेनदासादयोगृह्यंते॥३६॥ एकएवएकलः ॥ स्वार्थेलः ॥ ३७ ॥ धर्मएवसहायीस्यादित्येतद्विवृणोति ॥ देहमिति ॥३८॥ ननुयथाधर्मोनुगच्छतितथापापमपि ॥ सत्यम् ॥ तत्तुनकर्तव्यमित्याशयेनाह ॥ कृतीति ॥ तमोदुःखंसंसारंवा अज्ञानंवा ॥ धर्मानुष्ठानात्सत्त्वशुद्ध्याज्ञानोत्पत्तेः ॥३९॥ किंचश्रेष्ठेनैवधर्मोऽनुष्ठेयइति

कामंक्रोधंमदंमोहंमात्सर्यंलोभमेवच ॥ अमून्षडैरिणोजित्वासर्वत्रविजयीभवेत् ॥ ३४ ॥ शनैःशनैःसंचिनुयाद्धर्मंवल्मीकशृंगवत् ॥ परपीडामकुर्वाणः परलोकसहायिनम् ॥ ३५ ॥ धर्मएवसहायीस्यादमुत्रनपरिच्छदः ॥ पितृमातृसुतभ्रातृयोषिद्बंधुजनादिकः ॥ ३६ ॥ जायतेचैकलःप्राणीम्रियते ततथैकलः ॥ एकलःसुकृतंभुंक्तेभुंक्तेदुष्कृतमेकलः ॥ ३७ ॥ देहंपंचत्वमापन्नंत्यक्त्वाकौकाष्ठलोष्ठवत् ॥ बांधवाविमुखायांतिधर्मोयांतमनुव्रजेत् ॥३८॥ कृतीसंचिनुयाद्धर्मंततोऽमुत्रसहायिनम् ॥ धर्मंसहायिनंलब्ध्वासंतरेद्दुस्तरंतमः ॥ ३९ ॥ संबंधानाचरेन्नित्यमुत्तमैरुत्तमैःसुधीः ॥ अधमानधमां स्त्यक्त्वाकुलमुत्कर्षतांनयेत् ॥ ४० ॥ उत्तमानुत्तमानेवगच्छन्हीनांश्चवर्जयन् ॥ ब्राह्मणःश्रेष्ठतामेतिप्रत्यवायेनशूद्रताम् ॥ ४१ ॥ अनध्ययनशीलं चसदाचारविलंघिनम् ॥ सालसंचदुरन्नादंब्राह्मणंबाधतेऽतकः ॥ ४२ ॥ ततोऽभ्यसेत्प्रयत्नेनसदाचारंसदाद्विजः ॥ तीर्थान्यप्यभिलष्यंतिसदाचारिस मागमम् ॥ ४३ ॥ रजनीप्रांतयामार्धंब्राह्मःसमयउच्यते ॥ स्वहितंचिंतयेत्प्राज्ञस्तस्मिन्नुत्थायसर्वदा ॥ ४४ ॥ गजास्यंसंस्मरेदादौततईशंसहांबया॥ श्रीरंगंश्रीसमेतंतुब्रह्माण्याकमलोद्भवम् ॥ ४५ ॥ इंद्रादीन्सकलान्देवान्वसिष्ठादीन्मुनीनपि ॥ गंगाद्याःसरितःसर्वाःश्रीशैलाद्यखिलान्गिरीन् ॥ ४६ ॥ क्षीरोदादीन्समुद्रांश्चमानसादिसरांसिच ॥ वनानिनंदनादीनिधेनूःकामदुघादिकाः ॥ ४७ ॥

श्रेष्ठत्वसंपादनप्रकारमाह ॥ संबंधानित्येकेन ॥ ४० ॥ फलितमाह ॥ उत्तमानिति ॥ प्रत्यवायेननीचसंबन्धाचरणादिजनितपापेनेत्यर्थः ॥ ४१ ॥ अनध्ययनेति ॥ तथाचमनुः ॥ अनभ्यासाच्चवेदानामाचारस्यतुलंघनात् ॥ आलस्यादन्नदोषाच्चमृत्युर्विप्राञ्जिघांसतीति ॥ ४२ ॥ ततइति ॥ यतःसदाचारविलंघिनंमृत्युर्बाधतेततइत्यर्थः ॥ सदाचारानुष्ठायिनांमाहात्म्यमाह ॥ तीर्थानीति ॥ ४३ ॥ प्रतिदिनंब्राह्मंमुहूर्तमारभ्यधर्मोऽनुष्ठेयइत्येतदर्थंब्राह्मंमुहूर्तंलक्षयति रजनीत्यर्धेन ॥ रजनीप्रांतेयामार्धंघटिकाचतुष्टयम् ॥ यदर्थंब्राह्मोमुहूर्तोलक्षितस्तदाह ॥ स्वहितमिति ॥ स्वस्यहितंयस्मात्स्वहितंचिंतयेत् ॥ ४४ ॥ स्वहितमेवाह गजास्यमित्यारभ्यततआवश्यकमित्यतःप्राक्तनेनग्रंथेन ॥ अंबयाअंबिकया ॥ श्रीरंगंश्रीरंगपर्वतशायिनंविष्णुमित्यर्थः ॥ श्रीरंगशायिनिहरौरमतां मनोममइतिवचनात् ॥ श्रियोलक्ष्म्यारंगोहर्षोयस्मादितिवा ॥ अतएवश्रीसमेतमितिविशेषणम् ॥ ब्रह्माण्यासावित्र्या ॥ ४५॥४६॥ नंदनादीनीत्यादिपदेनचैत्ररथादीनिगृह्यंते ॥ कामदुघाकपिला ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

आदिपदेनसुरभ्यादयोगृह्यंते ॥ ४७ ॥ कल्पवृक्षादीत्यादिपदेनाश्वत्थादयोगृह्यंते ॥ कांचनमुख्यतःसुवर्णमुख्यान् ॥ उर्वशीमुख्यास्तत्प्रधानारंभातिलोत्तमाद्याः ॥ गरुडादीनित्यादिपदेनजटायुः प्रमुखागृह्यंते ॥ ४८ ॥ शेषोऽनंतस्तत्प्रमुखांस्तदादीनित्यर्थः ॥ ऐरावतादिकानित्यादिपदेनपुंडरीकादयोगृह्यंते ॥ ४९ ॥ ५०[१] ॥ ५१ ॥ ५२ ॥ वदान्यान्दातॄन् ॥ ५३ ॥ नैर्ऋतींयामीवारुण्योर्मध्याम् ॥ ५४ ॥ ५५ ॥ कर्णेउपवीतंवर्ततेयस्यसतथा ॥ ५६ ॥ रथ्याचसेव्यभूतलंचतस्मिन् ॥ ५७ ॥ अमलमित्यनेनसमलस्यालोकनेनदोषः ॥ ५८ ॥ नाकुलांनकुलाज्जातामि

कल्पवृक्षादिवृक्षांश्चधातून्कांचनमुख्यतः ॥ दिव्यस्त्रीरुर्वशीमुख्यागरुडादीन्पतत्रिणः ॥ ४८ ॥ नागांश्चशेषप्रमुखान्गजानैरावतादिकान् ॥ अश्वानुच्चैःश्रवोमुख्यान्कौस्तुभादीन्मणीञ्छुभान् ॥ ४९ ॥ स्मरेदरुंधतीमुख्याःपतिव्रतवतीर्वधूः ॥ नैमिषादीन्यरण्यानिपुरीःकाशीपुरीमुखाः ॥ ५० ॥ विश्वेशादीनिलिंगानिवेदानृक्प्रमुखानपि ॥ गायत्रीप्रमुखान्मंत्रान्योगिनःसनकादिकान् ॥ ५१ ॥ प्रणवादिमहाबीजंनारदादींश्चवैष्णवान् ॥ शिवभक्तांश्चबाणादीन्प्रह्लादादीन्दृढव्रतान् ॥ ५२ ॥ वदान्यांश्चदधीच्यादीन्हरिश्चंद्रादिभूपतीन् ॥ जननीचरणौस्मृत्वासर्वतीर्थोत्तमोत्तमौ ॥ ५३ ॥ पितरंचगुरूंश्चापिहृदिध्यात्वाप्रसन्नधीः ॥ ततश्चावश्यकंकर्तुंनैर्ऋतींदिशमाश्रयेत् ॥ ५४ ॥ ग्रामाद्धनुःशतंगच्छेन्नगराच्चचतुर्गुणम् ॥ तृणैराच्छाद्यवसुधांशिरःप्रावृत्यवाससा ॥ ५५ ॥ कर्णोपवीत्युदग्वक्त्रोदिवसेसंध्ययोरपि ॥ विण्मूत्रेविसृजेन्मौनीनिशायांदक्षिणामुखः ॥ ५६ ॥ नतिष्ठन्नाप्सुनोविप्रगोवह्न्यनिलसंमुखः ॥ नफालकृष्टेभूभागेनरथ्यासेव्यभूतले ॥ ५७ ॥ नालोकयेद्दिशोभागाञ्ज्योतिश्चक्रंनभोमलम् ॥ वामेनपाणिनाशिश्नंधृत्वोत्तिष्ठेत्प्रयत्नवान् ॥ ५८ ॥ अथोमृदंसमादायजंतुकर्करवर्जिताम् ॥ विहायमूषकोत्खातांशौचोच्छिष्टांचनाकुलाम् ॥ ५९ ॥ गुह्येदद्यान्मृदंचैकांपायौपंचांबुसांतराः ॥ दशवामकरेचापिसप्तपाणिद्वयेमृदः ॥ ६० ॥ एकैकांपादयोर्दद्यात्तिस्रःपाण्योर्मृदस्तथा ॥ इत्थंशौचंगृहीकुर्याद्गंधलेपक्षयावधि ॥ ६१ ॥ क्रमाद्द्वैगुण्यमेतस्माद्ब्रह्मचर्यादिषुत्रिषु ॥ दिवाविहितशौचस्यरात्रावर्धंसमाचरेत् ॥ ६२ ॥ रुज्यर्धंचतदर्धंचपथिचौरादिबाधिते ॥ तदर्धंयोषितांचापिसुस्थेन्यूनंनकारयेत् ॥६३॥ अपिसर्वनदीतोयैर्मृत्कूटैश्चापिगोमयैः ॥ आपादमाचरञ्छौचंभावदुष्टोनशुद्धिभाक् ॥६४॥ आर्द्रधात्रीफलोन्मानामृदःशौचेप्रकीर्तिताः ॥ सर्वाश्चाहुतयोप्येवंग्रासाश्चांद्रायणेपिच ॥६५॥ प्रागास्यउदगास्योवासूपविष्टःशुचौभुवि ॥ उपस्पृशेद्विहीनायांतुषांगारास्थिभस्मभिः ॥ ६६ ॥

त्यर्थः ॥ नाकुलीमितिपाठेस्पष्टएवार्थः ॥ ५९ ॥ ६० ॥ तिस्रःपाण्योर्मृदस्तथेति ॥ एतेनपूर्वोक्ताभिःसप्तभिर्मिलित्वाद्वयोर्हस्तयोर्दशमृदोदातव्याइत्यर्थः ॥ ६१ ॥ क्रमादिति ॥ एतस्माद्गृहस्थशौचाद्ब्रह्मचारिणोद्विगुणम् ॥ ब्रह्मचारिशौचाद्वानप्रस्थस्यद्विगुणम् ॥ वानप्रस्थशौचात्संन्यासिनोद्विगुणंशौचमित्यर्थः ॥ ६२ ॥ ६३ ॥ निर्मलांतःकरणएवशौचफलभाक्नदुष्टांतःकरणइत्याहापिसर्वेति ॥ ६४ ॥ शौचमृदःपरिमाणमाह :आर्द्रधात्रीत्यर्धेन ॥ अथधात्रीतिपाठेऽथशब्दोऽर्थांतरे ॥ प्रसंगादाहुतिचांद्रायणग्रासयोरपिपरिमाणमाह सर्वाश्चेतिपादद्वयेन ॥ ६५ ॥ ६६ ॥



१ अत्रामलमितिपदच्छेदोन, मलंविष्ठांपश्येदित्यर्थएवयुक्तः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ब्राह्मतीर्थेनांगुष्ठमूलेन ॥ ६७ ॥ ६८ ॥ शिरइति ॥ जलेजलमध्ये ॥ शुष्कंवस्त्रंपरिधायेत्यर्थः ॥ ६९ ॥ आचमनप्रकारमाह ॥ त्रिःपीत्वेति ॥ खानिइंद्रियाणिविशोधयेत्विशेषेणशुद्धानिकुर्या दित्यर्थः ॥ एतदेवविवृणोति अंगुष्ठेत्यादिना ॥ ७० ॥ ७१ ॥ ७२ ॥ सांबुयथास्यात्तथासर्वत्रसंस्पृशेदित्यर्थः ॥ तथाचदक्षः ॥ प्रक्षाल्यपादौहस्तौचत्रिःपिबेदंबुवीक्षितम् ॥ संवृत्यांगुष्ठमूले नद्भिःप्रमृज्यात्ततोमुखम् ॥ संहताभिस्त्रिभिःपूर्वमास्यंतुसमुपस्पृशेत् ॥ अंगुष्ठेनप्रदेशिन्याघ्राणंपश्चादनन्तरम् ॥ अंगुष्ठानामिकाभ्यांतुचक्षुःश्रोत्रेपुनःपुनः ॥ कनिष्ठांगुष्ठयोर्नाभिंहृदयंतुतलेनवै ॥ सर्वाभिस्तुशिरःपश्चाद्बाहूचाग्रेणसंस्पृशेदिति ॥ ७३ ॥ द्विराचमननिमित्तान्याह आचांतःपुनराचामेदितिद्वयेन ॥ ७४ ॥ ७५ ॥ सहेतुकंदंतधावनप्रकारमुत्थापयति ॥ अथेति ॥ विपक्षेबाधक

अनुष्णाभिरफेनाभिरद्भिर्हृद्गाभिरत्वरः ॥ ब्राह्मणोब्राह्मतीर्थेनदृष्टिपूताभिराचमेत् ॥ ६७ ॥ कंठगाभिर्नृपःशुद्ध्येत्तालुगाभिस्तथोरुजः ॥ स्त्रीशूद्रावा स्यसंस्पर्शमात्रेणापिविशुद्ध्यतः ॥ ६८ ॥ शिरःप्रावृत्यकंठंवाजलेमुक्तशिखोऽपिच ॥ अक्षालितपदद्वंद्वआचांतोप्यशुचिर्मतः ॥ ६९ ॥ त्रिःपीत्वां बुविशुद्ध्यर्थंततःखानिविशोधयेत् ॥ अंगुष्ठमूलदेशेनद्विर्द्विरोष्ठाधरौस्पृशेत् ॥ ७० ॥ अंगुलीभिस्त्रिभिःपश्चात्पुनरास्यंस्पृशेत्सुधीः ॥ तर्जन्यंगुष्ठको द्याचघ्राणरंध्रेपुनःपुनः ॥ ७१ ॥ अंगुष्ठानामिकाग्राभ्यांचक्षुःश्रोत्रेपुनःपुनः ॥ कनिष्ठांगुष्ठयोगेननाभिरंध्रमुपस्पृशेत् ॥ ७२ ॥ स्पृष्ट्वातलेनहृदयं समस्ताभिःशिरःस्पृशेत् ॥ अंगुल्यग्रैस्तथास्कंधौसांबुसर्वत्रसंस्पृशेत् ॥ ७३ ॥ आचांतःपुनराचामेत्कृतेरथ्योपसर्पणे ॥ स्नात्वाभुक्त्वापयःपीत्वाप्रारंभे शुभकर्मणाम् ॥ ७४ ॥ सुप्त्वावासःपरीधायतथादृष्ट्वाप्यमंगलम् ॥ प्रमादादशुचिंस्पृष्ट्वाद्विराचांतःशुचिर्भवेत् ॥ ७५ ॥ अथोमुखविशुद्ध्यर्थंगृह्णीया द्दंतधावनम् ॥ आचांतोप्यशुचिर्यस्मादकृत्वादंतधावनम् ॥ ७६ ॥ प्रतिपद्दर्शषष्ठीषुनवम्यांरविवासरे ॥ दंतानांकाष्ठसंयोगोदहेदासप्तमंकुलम् ॥ ७७ ॥ अलाभेदंतकाष्ठानांनिषिद्धेवाथवासरे ॥ गंडूषाद्द्वादशग्राह्यामुखस्यपरिशुद्धये ॥ ७८ ॥ कनिष्ठाग्रपरीमाणंसत्वचंनिर्व्रणंऋजुम् ॥ द्वादशांगुलमानं चसार्द्रंस्याद्दंतधावनम् ॥ ७९ ॥ एकैकांगुलह्रासेनवर्णेष्वन्येषुकीर्तितम् ॥ आम्राम्रातकधात्रीणांकंकोलखदिरोद्भवम् ॥ ८० ॥ शम्यपामार्गखर्जूरीशे लुश्रीपर्णिपीलुजम् ॥ राजादनंचनारंगंकषायकटुकंटकम् ॥ ८१ ॥ क्षीरवृक्षोद्भवंवापिप्रशस्तंदंतधावनम् ॥ जिह्वोल्लेखनिकांचापिकुर्याच्चापाकृतिंशुभाम् ॥ ८२ ॥ अन्नाद्यायव्यूहध्वंसोमोराजायमागमत् ॥ समेमुखंप्रमार्क्ष्यतेयशसाचभगेनच ॥ ८३ ॥

माह ॥ आचांतइति ॥ ७६ ॥ सहेतुकंदंतधावनकाष्ठनिषेधसमयमाह ॥ प्रतिपदिति ॥ ७७ ॥ ननुतर्हिदंतकाष्ठानामभावेप्रतिषिद्धदिनेवाकिंविधेयंतत्राह ॥ अलाभइति ॥ ७८ ॥ दंतकाष्ठस्य मानमाह ॥ कनिष्ठेति ॥ कनिष्ठाग्रपरीमाणमितिविस्तरेण ॥ द्वादशांगुलमानंचेतिदैर्घ्येण ॥ ७९ ॥ अन्येषुक्षत्रियादिषुकीर्तितंकथितम् ॥ नूदितमितिक्वचित् ॥ किंवृक्षोद्भवंदंतकाष्ठंविधेय मित्यत्राह ॥ आम्रेति ॥ ८० ॥ राजादनमित्यर्धकार्यकारणयोरभेदाभिप्रायेण ॥ ८१ ॥ जिह्वाधावनमाह ॥ जिह्वेति ॥ जिह्वाउल्लिख्यतेशोध्यतेययासाजिह्वोल्लेखनिका ॥ चापाकृतिधनुराका राम् ॥ ८२ ॥ दंतधावनमंत्रद्वयमाह ॥ अनाद्यायेति ॥ तत्रप्रथममंत्रस्यायमर्थः ॥ अन्नाद्यायअन्नादनायभक्षणायनिर्मलतांप्राप्यव्यूहध्वंस्थिरपंक्तयादृढीभवत ॥ यतःसोमोराजाचंद्रोयंकाष्ठरूपं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वनस्पतिंप्रत्यागतःसमेदीप्तिकारीशोभनकृत् मेममसुखमास्यंप्रमाक्ष्यतेप्रमाक्ष्यतिशोधयिष्यतीत्यर्थः ॥ केन ॥ यशसाकीर्त्याभगेनभाग्येनच ॥ दंतधावनस्यनित्यकाम्यत्वादुभयथाफलसंबंधः ॥ सोमोवनस्पतीनामितिश्रुतेः ॥ वनस्पतीनामाधिपत्येयमग्निंसूर्यंचप्रतिसोमोराजागतोभक्ष्यतया ॥ अथवाहेदंताव्यूहध्वंमलाद्विभक्तानिर्मलाभवत ॥ यतोयंवनस्पतिर्मेदंतकाष्ठरूपःसोमोराजाआगत इत्याकारप्रश्लेषेणव्याख्येयेति ॥ ८३ ॥ द्वितीयोमंत्रःस्पष्टएव ॥ ८४ ॥ ८५ ॥ ८६ ॥ उपवासेपीति ॥ दंतधावनमित्यनेनद्वादशगंडूषादिभिर्दंतानांशोधनमेवात्रविवक्षितंनतुदंतकाष्ठानांभक्षणम् ॥ प्रतिपद्दर्शषष्ठीषुनवम्येकादशीषुच ॥ व्रतश्राद्धोपवासेषुदंतकाष्ठंनभक्षयेदितिनिषेधात् ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ प्राजापत्योव्रतविशेषः ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ उपग्रहीप्रगृहीतकुशइत्यर्थः ॥ उरुंहीति ॥ उरुंहिराजावरुणश्चकारसूर्यायपंथामन्वेतवाउ ॥ अपदेपादाप्रतिधातवेऽकरुतापवक्ताहृदयाविधश्चित ॥ नमोवरुणायाभिष्ठितोवरुणस्यपाश

आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते ॥ ८४ ॥ मंत्रावेतौसमुच्चार्ययःकुर्याद्दंतधावनम् ॥ वनस्पतिगतःसोमस्तस्यनित्यंप्रसीदति ॥ ८५ ॥ मुखेपर्युषितेयस्माद्भवेदशुचिभाङ्नरः ॥ ततःकुर्यात्प्रयत्नेनशुद्ध्यर्थंदंतधावनम् ॥ ८६ ॥ उपवासेपिनोदुष्येद्दंतधावनमंजनम् ॥ गंधालंकारसद्वस्त्रपुष्पमालानुलेपनम् ॥ ८७ ॥ प्रातःसंध्यांततःकुर्याद्दंतधावनपूर्विकाम् ॥ प्रातःस्नानंचरित्वाचशुद्धेतीर्थेविशेषतः ॥ ८८ ॥ प्रातःस्नानाद्यतःशुद्ध्येत्कायोयंमलिनःसदा ॥ छिद्रितोनवभिश्छिद्रैःस्रवत्येवदिवानिशम् ॥ ८९ ॥ उत्साहमेधासौभाग्यरूपसंपत्प्रवर्तकम् ॥ मनःप्रसन्नताहेतुःप्रातःस्नानंप्रशस्यते ॥ ९० ॥ प्रस्वेदलालाद्याक्लिन्नोनिद्राधीनोयतोनरः ॥ प्रातःस्नानात्ततोर्हःस्यान्मंत्रस्तोत्रजपादिषु ॥ ९१ ॥ प्रातःप्रातस्तुयत्स्नानंसंजातेचारुणोदये ॥ प्राजापत्यसमंप्राहुस्तन्महाघविघातकृत् ॥ ९२ ॥ प्रातःस्नानंहरेत्पापमलक्ष्मींग्लानिमेवच ॥ अशुचित्वंचदुःस्वप्नंतुष्टिंपुष्टिंप्रयच्छति ॥ ९३ ॥ नोपसर्पंतिवैदुष्टाःप्रातःस्नायिजनंक्वचित् ॥ दृष्टादृष्टफलंयस्मात्प्रातःस्नानंसमाचरेत् ॥ ९४ ॥ प्रसंगतःस्नानविधिंवक्ष्यामिकलशोद्भव ॥ विधिस्नानंयतःप्राहुःस्नानाच्छतगुणोत्तरम् ॥ ९५ ॥ विशुद्धांमृदमादायबर्हींषितिलगोमयम् ॥ शुचौदेशेपरिस्थाप्यत्वाचम्यस्नानमाचरेत् ॥ ९६ ॥ उपग्रहीबद्धशिखोजलमध्येसमाविशेत् ॥ उरुंहीतिमंत्रेणतोयमावर्त्यसुस्थितः ॥ ९७ ॥ येतेशतंततोजप्त्वातोयस्यामंत्रणायच ॥ सुमित्रियानोमंत्रेणपूर्वंकृत्वाजलांजलिम् ॥ क्षिपेद्द्वेष्यंसमुद्दिश्यजपन्दुर्मित्रियाइति ॥ ९८ ॥

इतिमंत्रस्यशेषः ॥ उरुंविस्तीर्णंहिअतिशयेनराजावरुणःचकारकृतवान् ॥ सूर्याय षष्ठ्यर्थेचतुर्थी सूर्यस्यपंथानम् ॥ अन्वेतवैयःअन्वहमागमनाय ॥ अपदेपादाप्रतिधातवेकःयत्रपदंदत्तंप्रतिमुद्रान्यायेननोपलक्ष्यतेअस्मिन्अपदेअंतरिक्षलोके पादापादानाम् षष्ठीबहुवचनस्थानेआकारः ॥ प्रतिधातवेप्रतिनिधानायअकःकृतवान्आलंबनमितिशेषः ॥ सूर्यस्येव ॥ उतापवक्ताहृदयाविधश्चित ॥ उतापिचापवक्ताअपवदिताक्षेप्ताहृदयाविधश्चित् ॥ चिच्छब्दोऽप्यर्थे ॥ हृदयंयोविध्यतिमर्माण्युच्चार्यपिशुनःतस्याप्यपवक्ताऽपवदिताकिमुतान्येषामितिशेषः ॥ यइत्थंभूतोवरुणःसोऽवभृथायतीर्थंददात्वितिशेषः ॥ अपउच्चक्रमयन्नाचयति ॥ नमोवरुणायनमोस्तुवरुणायाभिष्ठितआक्रांतोवरुणस्यपाशेनालंबंधनायेति ॥ ९७ ॥ येतेशतमिति ॥ वरुणयेसहस्रंयज्ञियाः पाशावितताममहांतः ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तेभिर्नोद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतःस्वर्काइतिमंत्रशेषः ॥ शतसहस्रशब्दावत्रबहुत्वार्थौ ॥ तथाचायमर्थः ॥ भोवरुणयेतवशतंसहस्रम संख्यातायज्ञियायज्ञकालेभवायज्ञियाःश्रेयःप्रत्यूहाःपाशाः कर्मावरोधकाबंधनप्रकाराःवितताविस्तृतामहांतोवृहत्तरास्तेभिस्तैः तेभ्यःसकाशादित्यर्थः ॥ नोऽस्मानद्यइदानींसवितासर्वेषांप्रसविताउतापिचविष्णुर्व्यापकःविश्वेसर्वेमुंचंतुमोचयंतुमरुतोदेवाः स्वर्काःसुरोचनाःस्वंचनाःस्वर्चनावेति ॥ सुमित्रियानइति ॥ आपओषधयःसंत्वितिमंत्रशेषः ॥ अस्यार्थः ॥ सुमित्रियाःसाधुमित्रत्वेनावस्थितानोऽस्माकमापओषधयश्चसंत्विति ॥ दुर्मित्रिया इति॥तस्मैसंतुयोऽस्मान्द्वेष्टियंचवयंद्विष्मइतिमंत्रशेषः ॥ अस्यार्थः ॥ दुर्मित्रियादुष्टमित्रत्वेनावस्थिताआपओषधयश्चेत्यनुवर्तते तस्मैसंतुयोऽस्मान्द्वेष्टियंचशत्रुंद्विष्मोवयमिति ॥९८॥ इदंविष्णुरिति ॥ विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपांसुरइतिमंत्रशेषः ॥ अस्यार्थः ॥ इदंजगत्विष्णुर्विचक्रमेविक्रांतवान् ॥ सर्वप्राणिनांभूतेंद्रियमनोजीवभावेनविशतीतिविष्णुः ॥ किंचत्रेधानिदधेपदंपद्यते ज्ञायतेऽनेनेतिपदंभूम्यंतरिक्षद्युलोकेषुअग्निवायुसूर्यरूपेणत्रेधानिहितवान्पदम् ॥ किंचसमूढमस्यपांसुरे लुप्तोपमैतत् ॥ अस्यैवविष्णोरन्यत्पदांतरंविज्ञानघनानंदमजमद्वैतमक्षरमित्येवंलक्षणंसमूढमंत र्हितमविज्ञातमकृतात्मभिःपांसुरेपांसुलेप्रदेशेनिहितमिवनदृश्यतेतद्द्रष्टव्यमितिवाक्यशेषः ॥ ९९ ॥ आपोअस्मानिति ॥ मातरःशुंधयंतुघृतेननोघृतप्वःपुनंतु ॥ विश्वंहिरिप्रंप्रवहंतिदेवीरितिमंत्रशेषः ॥ अस्यार्थः ॥ आपोअस्मान्मातरःशुंधयंतुआपउच्यंतेयाएताआपोजगतोनिर्मात्र्यस्ताअस्मान्शुंधयंतुशोधयंतु ॥ किंचघृतेननोऽस्मान्घृतप्वः घृतेनयाःपुनंतिताघृतप्वः घृतंह्यपांपरमंतेजःपवित्रंचतद्धि सुपूतंयद्घृतेनपुनंतीतिश्रुतेः ॥ सुवर्णप्राशोघृतप्राशइतिमेध्यानीतिगौतमः ॥ पुनंतुयज्ञयोग्यंकुर्वंतु ॥ स्तुतिपूर्वंहियाच्ञादिक्रियतेनचात्रस्तुतिरतआह ॥ विश्वंहिरिप्रंप्रवहंतिदेवीः॥हिशब्दोयस्मादर्थे ॥

इदंविष्णुरिमंजप्त्वालिंपेदंगानिमृत्स्नया ॥ मृदैकयाशिरःक्षाल्यद्वाभ्यांनाभेस्तथोपरि ॥ ९९ ॥ नाभेरधस्तुतिसृभिःपादौषड्भिर्विशोधयेत् ॥ मज्जे त्प्रवाहाभिमुखआपोअस्मानिमंजपन् ॥१००॥ उदिदाभ्यःशुचिरितिमंत्रउन्मज्जनेमतः ॥ मानस्तोकइमंजप्त्वालिंपेद्गात्राणिगोमयैः ॥ १ ॥ इमंमे वरुणेत्यादिमंत्रैःस्वात्माभिषेचनम् ॥ तत्त्वायामितथात्वन्नःसत्वंनश्चाप्युदुत्तमम् ॥ २ ॥

तयोरिप्रमितिपापनामनीभवतःयस्मात्स्वभावतएवसर्वपापंप्रकर्षेणवहंतिदेव्यइति ॥ १०० ॥ उदिदाभ्यःशुचिरिति ॥ आपूतएमीतिमंत्रशेषः ॥ अस्यार्थः ॥ उदेमिउद्गच्छामि ॥ इच्छब्दोऽनर्थकः ॥ आभ्योऽद्भ्यःशुचिःसन्नापूतश्चयावदिति ॥ मानस्तोकइति॥तनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामिनोवधीर्हविष्मंतःसदमित्त्वाहवामहइतिमंत्रशेषः ॥ अस्यार्थः॥मारीरिषः रिषतिर्हिंसाकर्मा ॥ माहिंसीः ॥ नोऽस्माकंतोकेपुत्रविषयेतनयेपौत्रविषयेमाहिंसीः ॥ नोऽस्माकमायुषिविषयभूते मानोगोषुमाहिंसीःनोऽस्माकंगोषुविषयभूतासुमानोअश्वेषुमाहिंसीःनोस्माकमश्वेषु विषयभूतेषु ॥ यद्वा विभक्तिव्यत्ययेनव्याख्यानम् ॥ मारीरिषःअस्माकंतोकंतनयमायुर्गाअश्वान् ॥ मानोवीरानरुद्रभामिनोवधीर्मावधीर्नोस्माकंवीरान्हेरुद्र ॥ भामिनः भामःक्रोधःक्रोधसंयुक्तान् ॥ कःप्रत्युपकारइतिचेद्धविष्मंतःहविषासंयुक्ताःसंतःसदंसदाकालमुइत् इच्छब्दएवार्थे त्वामेवहवामहेआह्वयामः ॥ यागार्थमनन्यशरणावयमित्यभिप्रायः ॥१॥ इमंमेवरुणेत्यादीति ॥ आदिशब्देनश्रुधी हवमद्याचमृडय ॥ त्वामवस्युराचकेइतिमन्त्रशेषोगृह्यते ॥ अस्यार्थः ॥ इमंमेममहेवरुणश्रुधिशृणुहवमात्मानमद्यास्मिन्मृडयसुखयमाकालांतरमपेक्षस्व ॥ किंकारणम् ॥ यतस्त्वामहमाचके आचकइतिकांतिकर्मा ॥ कामये ॥ कथंभूतः ॥ अवस्युरात्मनोऽवनंपालनमिच्छन्निति ॥ तत्त्वायामीति ॥ ब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशंसमा नआयुःप्रमोषीरितिमन्त्रशेषः ॥ अस्यार्थः ॥ तत्त्वातदाशास्तइतिश्रवणादिहप्रयोगः ॥ त्वात्वांयामियाचामि ॥ ब्रह्मणात्रयीलक्षणेनवंदमानः ॥ हविर्भिरुपयुयतैः ॥ अतआह ॥ अहे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इमानःअक्रुध्यन् हेवरुणइहकर्मणिवर्तमानःअस्माकंप्रयोजनंयज्ञसमाप्तिलक्षणंबोधिबुध्यस्व ॥ बुद्ध्वाचउरुशंसहबहुसस्तव्यं मानआयुःप्रमोषीर्माऽस्माकमायुरवखंडयेति ॥ त्वन्नइति ॥ अग्नेवरु
णस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः ॥ याजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषा ॅ सिप्रमुमुग्ध्यस्मादितिमन्त्रशेषः ॥ अस्यार्थः ॥ हेअग्नेत्वंनःअस्मान्प्रतिविद्वान्जानानःवरुणस्यदेवस्यहेडःक्रोधःअवया
सिसीष्ठाः ॥ यद्दुउपक्षये ॥ अस्यण्यंतस्यलिङ्येतद्रूपमवपूर्वस्य ॥ अपगमय ॥ यस्माच्चत्वंयाजिष्ठोयज्ञकृत्तमोवाह्नितमोवोढृतमोहाविषाशोशुचानोदेदीप्यमानोभवसितस्मात्प्रार्थये ॥ विश्वाविश्वानिद्वे
षांसिसर्वाणिदौर्भाग्यानिप्रमुमुग्धिविमुंचअस्मदस्मत्तइति ॥ सत्वंनइति ॥ अग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौअवयक्ष्वनोवरुण ॅ रराणोवीहिमृडीक ॅ सुवहोनएधीतिमन्त्रशेषः ॥
अस्यार्थः ॥ सत्वमेवंप्रार्थ्यमानोनोऽस्माकंहेअग्नेअवमःअवितृतमःपालयितृतमोभव ॥ उतीउत्याऽवनेन नेदिष्ठश्चांतिकतमःअस्याउषसोव्युष्टौव्युष्टिकालेऽस्मिन्नेवाहनीत्यभिप्रायः ॥ ततोऽवयक्ष्व
अवपूर्वोयजिर्नाशनेवर्ततेइहतुधात्वर्थयोगात्स्वकीयमेवार्थंब्रवीति ॥ अवगत्ययज ॥ नोऽस्माकंवरुणंरराणोरादानेददद्धाहविस्ततोब्रवीमिवीहिमृडीकंभक्षयपुरोडाशंसुखकरम् ॥ ततःसुहवःस्वाह्वानः
अस्माकमेधीति ॥ उदुत्तममिति ॥ वरुणपाशमस्मदवाधमंविमध्यम ॅ श्रथाय ॥ अथावयमादित्यव्रतेतवानागसोअदितयेस्यामेतिमन्त्रशेषः ॥ अस्यार्थः ॥ उदित्ययमुपसर्गःश्रथायेति
संवध्यते ॥ हेवरुणउत्तमन्तावत्पाशमुत्श्रथाय श्लथशैथिल्ये ॥ श्लथीकृत्यउत्ऊर्ध्वंनयास्मदस्मत्तः ॥ अवाधममधर्मंचपाशमवाचीनंश्लथय विमध्यमंस्थानस्थितमेवश्लथय ॥ अथैवंकृतेसति
वयंहेआदित्यअदितेःपुत्रतवकर्मणिवर्तमानाअनागसोऽनपराधाःसंतोऽदितयेऽदीनतायैस्यामेति ॥ २ ॥ धाम्नोधाम्नइति ॥ राजंस्ततोवरुणनोमुंचेतिमन्त्रशेषः ॥ अस्यार्थः ॥ हेवरुणराजन्धाम्नो
धाम्नः धामशब्दःस्थानवचनः ॥ यतोयतःपाशसमन्वितात्स्थानाद्भिभीमस्ततस्ततोनोऽस्मान्विमुंचेति ॥ मापोमौषधीरिति ॥ हिंसीरित्येवशेषः ॥ अस्यार्थः ॥ हृदयशूलमुपगूहतिमापोमौष

## धाम्नोधाम्नस्तथामापोमौषधीरितिसंजपेत् ॥ यदाहुरघ्न्यामुंचंतुमेतिचावभृथेतिच ॥ ३ ॥

धीरिदंवैपशोःसंज्ञप्यमानस्येत्युपक्रम्यहृदयशूलंशुक्समवैतीत्युक्तम् ॥ अतएवमुच्यते ॥ माहिंसीरपोमाचौषधीर्हिंसीरिति ॥ यदाहुरघ्न्याइति ॥ वरुणेतिशपामहेततोवरुणनोमुञ्चेतिमन्त्रशेषः ॥
अस्यार्थः ॥ अघ्न्याइतिगोनामप्रकरणात् ॥ इहानुबंध्याविषयंबहुवचनमनुबंध्याबहुत्वेऽर्थवत् ॥ एकानुबंध्यापक्षेतुपूजार्थम् ॥ यद्देदेश्लोकमन्त्रवाक्यान्याहुरहन्तव्याअघ्न्याअवंध्याःवंद्याःपूज
नीयाइतिकरणोवाक्यस्यार्थमभिनयेनदर्शयति ॥ वयंहेवरुणशपामहे ॥ इतिकरणःप्रदर्शनार्थः ॥ शपतिर्हिंसार्थः ॥ एवमनेनविधिनाऽहिंस्याअघ्न्याअतएववयंत्वांशपामहे ॥ ततोवरुणनोमुं
चततस्तस्मादेनसःवरुणनोऽस्मान्विमुंचेति ॥ मुंचंतुमेति ॥ शपथ्यादथोवरुण्यादुत ॥ अथोयमस्यपड्वीशात्सर्वस्माद्देवकिल्बिषात्इतिमंत्रशेषः ॥ अस्यार्थः ॥ मुंचंतुमाशपथ्यात्शपथेभवः
शपथ्यस्तस्माच्छपथ्यात्शपथनिमित्तात्किल्बिषादोषधयोमामांमुंचंतु ॥ अथोअपिचवरुण्यात्वरुणेभवोवरुण्यस्तस्माद्वरुण्यात्वरुणनिबंधनात्किल्बिषान्मांमुंचंतु ॥ उतअपिचयमस्ययमयातिनियम
यतिसर्वंजगदितियमस्तस्ययमस्यसंबंधिनः पड्वीशात् पड्वीशशब्दोबंधनवचनः ॥ बंधनाद्बंधननिमित्तात्किल्बिषान्मांमुंचंतु ॥ अथोऽपिचदेवकिल्बिषाद्देवतापराधनिमित्तात्किल्बिशान्मांमुंचंतु ॥
किंचात्रबहुनोक्तेनसर्वस्मात्किल्बिषाद्ब्रह्महत्यादिपापान्मांमुंचंत्विति ॥ अवभृथेति ॥ निचुंपुणनिचेरुरसिनिचुंपुणः ॥ अवदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृतंपुरुराव्णोदेवरिषस्पाहीतिमंत्रशेषः ॥
अस्यार्थः ॥ अवभृथोयज्ञः हेअवभृथवयमवाचीनंपात्राण्यस्मिन्भ्रियंतइत्यवभृथः ॥ निचुंपुनःनीचैःक्वणत्वांशुअवभृथेष्ट्या चरंतीतिश्रुतेः ॥ यस्त्वंनीचैश्चरणोऽसिनीचैःक्वणंश्चतंत्वांप्राप्यैव अवदेवैर्दे
वकृतमेनोयासिषंकृतमेनोयासिषंकृतवान् ॥ अवनीतवान् ॥ किमवनीतवान् ॥ एनःपापम् ॥ कैःसखिभूतैर्देवैः ॥ किंविषयंदेवकृतंदेवविषयेयत्कृतम् ॥ अवमर्त्यैर्मर्त्यकृतमवनीतवांश्चमर्त्यैर्म
नुष्यैऋत्विग्भिःसखिभूतैः मर्त्यकृतंमनुष्यविषयेकृतंपापम् ॥ अतस्त्वंहेअवभृथदेवरिषःपाहि ऋषतिर्हिंसार्थः ॥ रिषहिंसायांक्विबंतस्तस्यपंचमीरिषःबंधात्पाहिगोपाय ॥ कथंभूताद्बंधात् ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पुरुराव्णः ॥ गदाने ॥ बहुकर्मोपभोगसंतानदातुःसंसारलक्षणाद्वंधात् ॥ यद्वा पुरुशब्देनरुवंतिप्राणिनोऽस्मिन्संसार्यमाणाःपुरुराव्णइतिचेति ॥ ३ ॥ आपोदेवतायेषांतेतथा ॥ महाव्याहृतिभिर्भूर्भुवःस्वर्महर्जनस्तपःसत्यमितिसप्तभिः ॥ ४ ॥ गायत्र्यागायत्रीमन्त्रेणेत्यर्थः ॥ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयादितिगायत्रीमंत्रः ॥ अस्यार्थः ॥ तदितिषष्ठ्याविपरिण-म्यते तस्यसवितुःसर्वस्यप्रसवदातुरादित्यांतरपुरुषस्यदेवस्यहिरण्यगर्भोपाध्यवच्छिन्नस्यदेवस्यवाविज्ञानानंदस्वभावस्यब्रह्मणोवरेण्यंवरणीयंभर्गः भर्गशब्दोवीर्यवचनः वरुणा द्वाअभिषिंचनाद्भर्गोऽपचक्रामवीर्यंवैभर्गइतिश्रुतिः ॥ तेनहिपाप्मानंभृज्जतिदहति ॥ भृजीभर्जने ॥ अथवाभर्गस्तेजोवचनः ॥ यद्वा मंडलंपुरुषोरश्मयइत्येतत्रितयमभिप्रेयते ॥ देवस्य देवनादिगुणयुक्तस्यधीमहि ध्यैचिंतायाम्अस्यछांदसंसंप्रसारणम् ॥ ध्यायामश्चितयामोनिदिध्यासनंतद्विषयंकुर्मइतियावत् ॥ धियोयोनः धीशब्दोबुद्धिवचनःकर्मवचनोवा ॥ बुद्धिःकर्मा णिवायःसवितानोऽस्माकंप्रचोदयात् ॥ चुदसंचोदने ॥ प्रकर्षेणचोदयतिप्रेरयति ॥ तस्यसवितुःसंबंधिवीर्यंतेजोवाध्यायामइतिसंबंधः ॥ वाक्यभेदेनवायोजना ॥ तत्सवितुर्वरणीयंवीर्यंतेजोवादे वस्यध्यायामः ॥ यश्चबुद्धीःप्रचोदयात्प्रेरयत्यस्माकंतंचध्यायामः ॥ सचसवितैवभवति ॥ लिंगव्यत्ययेनवायोजना ॥ तत्सवितुर्वरणीयंभर्गोदेवस्यध्यायामः ॥ धियोयोभर्गःअस्माकंप्रे रयतीति ॥ आपोहिष्ठेतितिसृभिःकंडिकाभिरितिशेषः ॥ तत्रमयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवो यस्यक्षयायजिन्वथ ॥ आपोजनयथाचनइतिमंत्रशेषः ॥ अस्यार्थः ॥ द्वितीयपादेतच्छ्रवणात्यदोऽध्याहारः ॥ हेआपःयायूयंमयोभुवःमयइतिसुखनाम सुखेनभावयित्र्यःस्थभवथसर्वप्राणिनाम् ॥

अब्देवताइमेमंत्राःप्रोक्ताःस्वात्माभिषेचने ॥ प्रणवेनततोविप्रोमहाव्याहृतिभिस्ततः ॥ ४ ॥ आत्मानंपावयेद्विद्वान्गायत्र्याचततःकृती ॥
आपोहिष्ठेतितिसृभिःप्रत्यृचंपावनंस्मृतम् ॥ ५ ॥ एतेपिपावनामंत्राइदमापोहविष्मतीः ॥ देवीरापअपोदेवाद्रुपदादिवसंज्ञकाः ॥ ६ ॥

छन्दसःपरिपूर्तिकरोहिशब्दः ॥ तानोऽस्मान्ऊर्जेऽन्नायदधातनस्थापयत ॥ यथावयंसर्वस्यभोक्तारोभवेमतथाकुरुतेत्यभिप्रायः ॥ महेमहतेईरणायरमणीयायचक्षसेदर्शनायाऽस्मान्दधातनइत्यनु वर्तते ॥ एतदुक्तंभवति ॥ महत्त्वयदर्शनंपरब्रह्मलक्षणंरमणीयंतदस्माकंकुरुतेति ॥ अथवाहिशब्दोयस्मादर्थे कृत्वाव्याख्यायते ॥ नहिवेदेमात्रामात्रस्यानर्थक्यमिष्यतेसंभवेसति ॥ आपोहि आपःयस्मात्कारणान्मयोभुवःतानऊर्जेताशब्दस्यपंचम्यासन्नेतितस्माद्धेतोरस्मान्अन्नायस्थापयतमहतेरमणीयायचक्षसेदर्शनीयाय ॥ योवःयश्चवोयुष्माकंशिवतमःशांततमोरसस्तस्यभाजयतभागिनः कुरुतइहैवस्थितानस्मान्उशतीरिव ॥ वशकांतौ ॥ कृतसंप्रसारणस्यैतद्रूपम् ॥ कामयमानाइवमातरः मातृशब्दःसंबंधवचनः यथाकामयमानामातरःपुत्रस्यकल्याणंतैस्तैरर्थैर्भाजयेयुरेवंभाजयत ॥ तस्माअरम् ॥ अलमितिप्राप्तेलकारस्यरेफश्छांदसः ॥ हेआपस्तस्यचरसस्याधस्तनमंत्रयाचितस्यवोयुष्मत्संबंधिनःअलंपर्याप्तंगमामगच्छामवयम् ॥ पर्याप्तंनामरसविषयेवैतृष्ण्यंसदातृप्तिर्वा ॥ यस्यक्षयायजिन्वथ क्षयोनिवासइत्याद्युदात्तः ॥ षष्ठ्यर्थेचतुर्थी ॥ यस्येतिसामानाधिकरण्यादेशः ॥ यस्याहुतिपरिमाणभूतस्यक्षयस्यनिवासस्यएकदेशेनजिन्वथ ॥ जिन्वथिःप्रीतिकर्मा ॥ तर्पयथ पंचाहुतिपरिणामक्रमेणेदंब्रह्मादिस्तंबपर्यंतंजगत् ॥ तत्रचहेआपःजनयथालंवनम्अस्मत्तःनोऽस्मान्भोक्तृत्वेनपानदेवत्वमाशास्यतेति ॥ प्रत्यृचमृचमृचंप्रतिपावनंपावित्र्यंस्मृतंब्रह्मविद्भिरितिशेषः ॥ परमितिपाठेपरमुत्कृष्टम् ॥ ५ ॥ एतेवक्ष्यमाणाअपिमन्त्राःपावनाःपावित्र्यजनकाः ॥ इदमापइति ॥ प्रवहतावद्यंचमलंचयत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेअभीरुणम् ॥ आपोमातस्मादेनसःपव मानश्चमुंचत्विविति मंत्रशेषः ॥ अस्यार्थः ॥ हेआपइदंपशुसंज्ञपननिमित्तंपापंप्रवहतअपनयत ॥ किंचावद्यमवद्वनीयंचयद्यभिद्रोहादि मलंचयत्यच्चमलंशरीरसंलग्नंमूत्रपुरीषादिप्रसिद्धंतच्चप्रवहतअपन



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यत॥ यच्चाभिदुद्रोहानृतम् द्रुहजिघांसायाम्॥यदपिचाभिद्रुग्धवानस्मिअसत्यमुच्चार्यम्॥यच्चशेपेअभीरुणम्॥शपआक्रोशे यच्छपितवानस्मिअभीरुणमपराधिनमनपराधीतिनबिभेतियद्वाऽभिलुनातिछिन त्तिमर्माणियदुश्चरितंतत् ॥ यच्चाभीरुणम् ॥ आपःमा मांतस्मादेनसःपापात्पवमानःसोमोवायुर्वामुंचतुपृथक्करोत्विति ॥ हविष्मतीरिति ॥ इमाआपोहविष्मांआविवासति ॥ हविष्मान्देवोअध्व रोहविष्मांअस्तुसूर्यइतिमंत्रशेषः ॥ अस्यार्थः ॥ लिंगोक्ताहविष्मतीहविषासंयुक्ताइमाआपः हविष्मान्हविषासंयुक्तोयजमानआविवासति ॥ आविपूर्वोवसतिः ॥ परिचरतीत्यर्थः ॥ यजमानोहविः प्रदानायपरिचरति ॥ हविष्मानध्वरोयज्ञःस्वशरीरनिष्पत्त्यर्थंहविष्मान्भवतुहविःसंपन्नोस्तु ॥ सुशोभनतयाईरणात्सूर्योदेवोयजमानस्यफलदानायस्वतृप्त्यर्थंहविष्मान्भवतुहविःसंपन्नोऽस्त्विति ॥ देवीरापइति ॥ अपान्नपायोवऊर्मिर्हविष्यः ॥ इंद्रियावान्मदिन्तमइतिमंत्रशेषः ॥ अस्यार्थः ॥ हेदेव्यआपःअपान्नपात्संज्ञकोयोवऊर्मिस्तरंगःकल्लोलोहविष्यःहविर्योग्यःयज्ञियः इंद्रियावान् दीर्घ श्छांदसः ॥ वीर्यवान् मदितमः मदयितृतमइति ॥ अपोदेवाइति ॥ मधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥ याभिर्मित्रावरुणावभ्यषिंचन्याभिरिंद्रमनयन्नत्यरातीरितिमंत्रशेषः ॥ अस्यार्थः ॥मधुमतीःमधुरतयास्वादुरसोपेतामधुमत्यस्तामधुमतीःऊर्जस्वतीर्विशिष्टान्नरसवतीः राजस्वःराजसुवः ॥ षुञ्प्राणिप्रसवे॥ राजानंसुवतेजनयंतीतिराजसुवःचितानादेवतात्वमनेनचेतयमानाः परिहृष्टचारिण्यःअब्देवताः ॥ भकारश्छांदसः ॥ अगृभ्णन्गृहीतवंतः॥ अपोविशिनष्टि ॥ याभिर्मित्रावरुणाविति ॥ याभिरद्भिर्मित्रावरुणौदेवाअभ्यषिंचन् मित्रावरुणयोरभिषेकंकृतवंतः ॥ याभिरिंद्रमनयन्याभिरिंद्रंदेवराजम्अतिअरातीरदानशीलाः शत्रुसेनाअनयन् शत्रूनतीत्यअतिक्रम्यअधःकृत्यानयन्आनीतवंतः ताअपोगृभ्णन्नितिशेषइति ॥ द्रुपदादिवसंज्ञकाइति ॥ मुमुचानः स्विन्नःस्नातोमलादिव ॥ पूतंपवित्रेणेवाज्यमापः शुंधंतुमैनसइतिमंत्रशेषः ॥ अस्यार्थः ॥ द्रोःपादोद्रुपदः ॥ द्रुशब्दोवृक्षवचनः ॥ द्रुपदोवृक्षमयःपादःपादुकः ॥ एकवचनमविवक्षितम् गमन

शन्नोदेवीरपोदेवीस्तथापा ंरसमित्यपि ॥ पुनंतुमेतिचनवपावमान्यःप्रकीर्तिताः ॥ ७ ॥

साधनत्वेनपादुकाभ्याम् ॥ मुमुचानोमुच्यमानोयथापुमान्गमनावसानेक्लेशेनमुच्यते स्विन्नःस्वेदंप्राप्तःपुमांस्तन्निवृत्त्यर्थंस्नातोमलादिवयथामलाद्विमुच्यते ॥ पूतंपवित्रेणेवाज्यंयथापवित्रेणपूतमाज्यं पवित्राद्विमुच्यतेपृथक्क्रियतेतथाआपःशुंधंतु मैनसःमामांयथाउपासिताआपएनसःपापात्सकाशाच्छुंधंतु प्रस्विन्नस्यकृतस्नान्मलात्तापादिकृतःअतःशुद्धिविशेषतोमेपापनिवृत्तिशंधंतु पृथक्कुर्वंत्विति ॥ ॥ ६ ॥ शन्नोदेवीरिति ॥ अभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनइतिमंत्रशेषः ॥ अस्यार्थः ॥ नोस्माकंदेवीर्देव्यआपोऽभिष्टयेऽभिषेकायाभीष्टायवापीतयेपानायचशंसुखरूपाभवंतु ॥ शंयोरभिस्रवंतुनःयोरोगाणांपृथक्करणहेतोःशंसुखरूपाःसत्यआपोनोऽस्मानभिस्रवंत्विति ॥ आपोदेवीरिति ॥ उपसृजमधुमतीरयक्ष्मायप्रजाभ्यः ॥ तासामास्थानादुज्जिहतामोषधयःसुपिप्पला इतिमंत्रशेषः ॥ अस्यार्थः ॥ सिंधुद्वीपआपिन्यंकुमारिणीबृहती ॥ विधूममग्नइत्यानंतर्यादत्रकर्तृत्वेनाग्निर्विवक्ष्यतेद्यौर्वा ॥ प्रजाभ्यः ॥ अत्रविभक्तिव्यत्ययः ॥ प्रजानामयक्ष्मायअयक्ष्माव्याधिरयक्ष्मा र्थमधुमतीर्देवीरापउपसृजेतिसंबंधः ॥ देवीर्देवनादिगुणसंयुक्तामधुमतीःरसवतीर्वृष्टिरूपाआपउपसृजनिक्षिप ॥ तासांभूमिगतानामपामास्थानादपांरससंबंधितयाअपांरससंपृक्तमुज्जितंक्षेत्रलक्षणस्था नात्सुपिप्पलाःसुष्ठुपिप्पलंफलंयासामोषधीनांताः सुपिप्पलाः फलपाकांताओषधयःशाल्यादयउज्जिहताम् ओहाङ्गतौ उद्गच्छंत्विति ॥ अपांरसमिति ॥ उद्वयसंसूर्येसंतंसमाहितम् ॥ अपांरसः स्ययोरसस्तंवोगृह्णाम्युत्तममितिमंत्रशेषः ॥ अस्यार्थः ॥ रसःसारःसोऽपांवायुः ॥ एषवाअपांरसोयोयंपवतेइतिश्रुतिः ॥ उद्वयसम्उद्गतंवयोऽन्नंयस्माद्वायोस्तमुद्वयसंवायुंसूर्येसंतंसमाहितमित्यनयोः पदयोर्व्यत्ययोऽर्थसंबंधात्सूर्येसमाहितंसंतंसमारोपितंस्थापितंसंतंगृह्णामीतिवक्ष्यमाणेनसंबंधः ॥ अपांरसस्ययोरसस्तंवोगृह्णाम्युत्तमम् अपांरसोवायुस्तस्यापिरसःसारःप्रजापतिःसहियज्ञलोककालाग्नि वायुसूर्यऋग्यजुःसामादिवपुस्तंवयःशब्देनाह॥अपोगृह्णामिउत्तममुत्कृष्टतमम्॥यद्वा वयःशब्दोऽनर्थकः॥अपांरसस्यवायोर्योरसःप्रजापतिस्तंगृह्णामीतितस्मिन्पक्षेयोजना॥पुनंतुमेतीति ॥ पावमान्यःपा



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वित्र्यकर्त्र्यः ऋचइत्यर्थः ॥तत्रपुनंतुमापितरःसोम्यासःपुनंतुमापितामहाः पुनंतुप्रपितामहाः पवित्रेणशतायुषेतिप्रथमोमंत्रः॥ पुनंतुमापितरःसोम्यासः सोमार्हाःसोम्याःसोमसंपादिनोवासोम्याःसोम्याए वसोम्यासःपितरोमामांयजमानंपुनंतुशोधयंतु॥पितामहाःपितुःपितरोमामांपुनंतु तत्पितरःप्रपितामहाःपुनंतु॥ केनपुनंतु पवित्रेणपवनहेतुभूतेनशतायुषा येनपवित्रेणपूतःशतायुर्भवतितत्पवित्रंशतायुस्तेन शतायुषापवित्रेणमांपुनंतु पावनंचपापनोदनम् शुद्धिफलग्रहणयोग्यताशुद्धिमापादयंत्विति ॥ पुनंतु मापितामहाःपुनंतुप्रपितामहाः ॥ पवित्रेणशतायुषाविश्वमायुर्व्यश्नवैइतिद्वितीयोमंत्रः ॥ अस्यार्थः ॥ पुनंतुमामांपितामहाश्चपुनंतुशतायुषापवित्रेणपुनंतु प्रपितामहाश्चपुनंतुविश्वमायुरेतेःसर्वैर्दत्तंविश्वंसर्वमायुर्व्यश्नवै ॥ अशूङ्व्याप्तौ ॥ अहंव्यश्नवैव्यश्नुयामिति ॥ अग्नआयूंषिपवसआसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनामितितृतीयोमंत्रः ॥ अस्यार्थः ॥ आग्नेयीगायत्रीवैश्वानरः ॥ हेश्रीभगवन्नग्नेनोऽस्मान्प्रति आयूंषिआयुःप्रापकानिकर्माणिपवसे अंतर्गतणिजर्थोयं पावयसेगमयसि ॥ किंचआसु वोर्जमिषंचनः इषंव्रीह्यादिकमूऊर्जंदधिक्षीराद्युपसेच नंनोऽस्मभ्यमासुवअभ्यनुजानीहि ॥ आरेदूरेव्यवस्थितंसंतंदुच्छुनांदुच्छुदौर्गत्यंव्याधयश्च ॥ दुर्जनप्रभृतयोलक्ष्यंतेतान्बाधस्वेत्यर्थः ॥ पुनंतुमादेव जनाःपुनंतुमनसाधिया ॥ पुनंतुविश्वाभूतानिजातवेदःपुनीहिमेतिचतुर्थोमंत्रः ॥ अस्यार्थः ॥ लिंगोक्तदेवत्यानुष्टुप्॥देवजना देवानुगाजनामामांपुनंतु पुनंतुमनसाधियःमनसाविवेकेनसंपन्नेनमनसासं जाताधियोदेवताविषयज्ञानानिकर्माणिवामांपुनंतु ॥ विश्वानिभूतानिमांपुनंतु ॥ हेश्रीजातवेदःमांपुनीहीति ॥ आग्नेयीगायत्री ॥ पवित्रेणपुनीहिमाशुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूंरनुइतिपंचमो मंत्रः ॥ हेदेवदीद्यतदीप्यमानश्रीभगवन्नग्नेशुक्रेणशुद्धेनपवित्रेणमांपुनीहीति ॥ यत्तेपवित्रमर्चिष्यग्नेविततमंतरा ॥ ब्रह्मतेनपुनातुमाइतिषष्ठोमंत्रः ॥ अस्यार्थः ॥ आग्नेयीब्राह्मीचगायत्रीतृतीयःपादो ब्रह्मदेवत्यः ॥ हेश्रीभगवन्नग्नेयत्तेपवित्रमर्चिषिपरमतेजसिअंतरामध्येविततंतेतवयत्पवित्रंपवनहेतुभूतंविततमतिविस्तृतरूपंपवित्रेतिष्ठतितेनपवित्रेणमांपुनीहि ॥ ब्रह्मतेनपुनातुमांवेदलक्षणंयद्ब्रह्मपरंयद्ब्रह्म

ततोऽघमर्षणंजप्त्वाद्रुपदांचततोजपेत् ॥ प्राणायामंचविधिवदथवांतर्जलेजपेत् ॥ ८ ॥

तेनब्रह्मणामांपुनातु ॥ यद्वा अर्चिषिविततंयत्पवित्रंतेनपवित्रेणाभ्यनुज्ञातेनब्रह्मणापुनात्विति ॥ पवमानःसोअद्यनःपवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमेतिसप्तमोमंत्रः ॥ अस्यार्थः ॥ सोमदेव त्यागायत्रीतृतीयःपादोवायव्यः ॥ पवमानःससोमःअद्यास्मिन्नहनिनोऽस्मान्पवित्रेणपावनेनविचर्षणिर्द्रष्टाकृताकृतंप्रत्यवेक्ष्यामि ॥ कोमांपुनातु ॥ यःस्वभावतःपोतापवनकर्तावायुःसमांपुनात्विति ॥ उभाभ्यांदेवसवितःपवित्रेणसवेनच ॥ मांपुनीहिविश्वतइत्यष्टमोमंत्रः ॥ अस्यार्थः ॥ सवितृदेवतागायत्री ॥ हेदेवसवितःपवित्रेणसवेनचअनेनपवित्रेणसवेनानेन यागेनचेत्युभाभ्यांपवित्रसवाभ्यांमांपुनी हिविश्वतःसर्वतोमांपावयेति ॥ वैश्वदेवीपुनतीदेव्यागाद्यस्यामिमाबह्व्यस्तन्वोवीतपृष्ठाः ॥ तयामदंतःसधमादेषुवयंस्यामपतयोरयीणामितिनवमोमंत्रः॥अस्यार्थः॥ वैश्वदेवीत्रिष्टुप्॥वैश्वदेवीविश्वदेवत्या सुराकुंभी पुनतीपावनंकुर्वाणा देवीदेवताआगात्आगता यस्यांदेव्यामिमाबह्व्यस्तन्वोबहुशरीराणि वीतपृष्ठाःवीतापरभागानिरंतरधाराबह्व्यःसंति तयासुराकुंभ्यादेव्यामदंतोमोदमानाःसधमादेषुसहर्ष प्राप्तिस्थानेषुवयंरयीणांधनानांपतयःस्यामभवेम ॥ ७ ॥ ततोऽघमर्षणमिति ॥ ऋतंचसत्यंचाभीद्धात्तपसोऽध्यजायत ॥ ततोरात्र्यजायतततःसमुद्रोअर्णवः ॥ समुद्रादर्णवादधिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोस्वः इत्यघमर्षणमंत्रः ॥ अस्यार्थः ॥ ऋतंसत्यमितिपरब्रह्मोच्यते ॥ तथाचश्रुतिः ॥ ऋतमेकाक्षरंब्रह्मसत्यंज्ञानमनंतंब्रह्मेति ॥ आसीदित्यध्याहार्यम् ॥ तदयमर्थः ॥ ऋतंचसत्यंचासीत् परब्रह्मासीत्॥एतेनमहाप्रलयावस्थाप्रतिपादिता॥ महाप्रलयसमयेकेवलंब्रह्ममात्रमासीदित्यर्थः ॥ ततोमहाप्रलयावस्थायामेवरात्र्यजायतरात्रिःसमुत्पन्ना केवलमंधकारमयमासीदित्यर्थः ॥ तथाचस्मृतिः ॥ अपएवससर्जादाविति ॥ किंभूतात्तपसः ॥ अभीद्धात्अभिसर्वतोभावेनसमृद्धात् ॥ लब्धप्रलयसमयेहिऋद्धवद्दृष्टंभवति ॥ ततःसमुद्रादर्णवाद्धातास्रष्टाअजायत ॥ किंभूतः ॥ मिषतःप्रकटीभवतोविश्वस्यवशीप्रभुः ॥ महाप्रलयेविलुप्तस्रष्टजगतोनिर्माणेप्रभुरित्यर्थः ॥ सधाताय

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यापूर्वंयथाक्रमंसूर्याचंद्रमसावकल्पयत् ॥ किंभूतौ ॥ अहोरात्राणिविदधत्कुर्वाणौ ततःसूर्यचंद्रयोरुत्पत्त्यनंतरंसंवत्सरोऽजायत ॥ सूर्यचंद्रोत्पत्तौरात्रिदिनविभागकल्पनयासंवत्सरःसृष्टः॥अथानंतरंदिवं स्वर्गंपृथिवींमहीमंतरिक्षमाकाशंस्वर्नक्षत्रलोकोपरिस्थितंस्वर्गलोकंसएवधाताऽकल्पयत् ॥ चराचरात्मकंसकललोकंसएवसृष्टवानिति ॥ द्रुपदामितिप्रतीकग्रहणाभिप्रायेण ॥८॥९॥११०॥११॥१२॥ चतुःस्रक्तिरिति ॥ नाभिर्ऋतस्यसप्रथाः ॥ सनोविश्वायुःसप्रथाः ॥ सनःसर्वायुःसप्रथाः ॥ अपद्वेषोअपह्वरोऽन्यव्रतस्यसश्चिमेतिमंत्रशेषः ॥ अस्यार्थः ॥ चतुःस्रक्तिर्दिशोयश्चवीरस्यस्रक्तयःकोणेषु चतुःस्रक्तिर्यश्चनाभिर्नहनमृतस्यसप्रथाः ॥ अभ्यासेभूयांसमर्थंमन्यंते॥ त्वत्प्रसादाद्वापद्वेषःअपगच्छतुद्वेषोऽस्मत्तः ॥ वीतरागाःस्यामेत्यभिप्रायः ॥ अपह्वरः भरह्वरचलने अपगच्छतुचलनमस्मत्तः ॥ जनित्वाम्रियतेमृत्वाजायतइत्येतच्चलनमभिप्रेतम् ॥ अन्यव्रतस्यसश्चिममन्यद्व्रतंकर्मयस्य मनुष्यकर्मणःसकाशादार्तानुग्रहात्मकंसतथोक्तस्तस्यकर्मवयंसेवामहेसाधुवयंप्राप्ताःसंतइति ॥ १३ ॥ १४ ॥

प्रणवंत्रिर्जपेद्वापिविष्णुंवासंस्मरेत्सुधीः ॥ स्नात्वेत्थंवस्त्रमापीड्यगृह्णीयाद्धौतवाससी ॥ ९ ॥ आचम्यचततःकुर्यात्प्रातःसंध्यांकुशान्विताम् ॥ योनसंध्यामुपासीतब्राह्मणोहिविशेषतः ॥ ११० ॥ सजीवन्नेवशूद्रस्तुमृतःश्वाजायतेध्रुवम् ॥ संध्याहीनोऽशुचिर्नित्यमनर्हःसर्वकर्मसु ॥ ११ ॥ यदन्यत्कुरुते कर्मनतस्यफलभाग्भवेत् ॥ प्रणवंप्राग्दिशिस्मृत्वाततोदत्त्वाकुशासनम् ॥ १२ ॥ चतुःस्रक्तिरिमंमंत्रंपठित्वानान्यहृद्मनाः ॥ १३ ॥ प्राङ्मुखोबद्धचूडोवाप्युपविष्टउदङ्मुखः ॥ प्रदक्षिणंस्वमभ्युक्ष्यप्राणायामंसमाचरेत् ॥ १४ ॥ गायत्रींशिरसासार्धंसप्तव्याहृतिपूर्विकाम् ॥ त्रिर्जपेत्सदशोंकारःप्राणायामोयमुच्यते ॥१५॥ प्राणायामांश्चरन्विप्रोनियतेंद्रियमानसः ॥ अहोरात्रकृतैःपापैर्मुक्तोभवतितत्क्षणात् ॥१६॥ दशद्वादशसंख्यावाप्राणायामाःकृतायदि ॥ नियम्यमानसंतेनतदात्तंमहत्तपः ॥ १७ ॥ सव्याहृतिप्रणवकाःप्राणायामास्तुषोडश ॥ अपिभ्रूणहनंमासात्पुनंत्यहरहःकृताः ॥ १८ ॥ यथापार्थिवधातूनांदह्यंतेधमनान्मलाः ॥ तथेंद्रियैःकृतादोषाज्ज्वाल्यंतेप्राणसंयमात् ॥ १९ ॥ एकंसंभोज्यविधिवद्ब्राह्मणंयत्फलंलभेत् ॥ प्राणायामैर्द्वादशभिस्तत्फलंश्रद्धयाप्यते॥ १२० ॥ वेदादिवाङ्मयंसर्वंप्रणवेयत्प्रतिष्ठितम् ॥ ततःप्रणवमभ्यस्येद्वेदादिंवेदजापकः ॥ २१ ॥ प्रणवेनित्ययुक्तस्यसततसुव्याहृतिष्वपि ॥ त्रिपदायांतुगायत्र्यांनभयंजायतेक्वचित् ॥२२॥ एकाक्षरंपरंब्रह्मप्राणायामःपरंतपः ॥ गायत्र्यास्तुपरंनास्तिपावनंकलशोद्भव ॥ २३ ॥ कर्मणामनसावाचायद्रात्रौकुरुतेत्वघम् ॥ उत्तिष्ठन्पूर्वसंध्यायांप्राणायामैर्विशोधयेत् ॥ २४ ॥

गायत्रीमिति ॥ शिरसासार्धम्‌आपोज्योतीरसोऽमृतंब्रह्मभूर्भुवःस्वरोमित्यनेनसहसहितामित्यर्थः ॥ सप्तव्याहृतयोभूरादयःपूर्वंप्रथमंयस्यास्ताम् ॥ ॐभूःॐभुवःॐस्वःॐमहःॐजनःॐतपःॐसत्यं ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि॥धियोयोनःप्रचोदयात्॥ॐआपोज्योतीरसोऽमृतंब्रह्मभूर्भुवःस्वरोमित्येवंभूतांगायत्रींत्रिर्वारत्रयंजपेत्॥सोयंदशोंकारोदशोंकारसहितोवाऽयंप्राणायामउच्यतइत्यर्थः ॥ ॥ १५ ॥ १६ ॥ १७ ॥ भ्रूणहनंगर्भहंतारंश्रेष्ठब्राह्मणहंतारंवा ॥ १८ ॥ दह्यंतेदाहकर्तृभिरितिशेषः ॥ धमनादग्निसंयोगात् ॥ ज्वाल्यंतेनाश्यंतेप्राणायामकर्तृभिरितिशेषः ॥ प्राणसंयमात्प्राणायामात् ॥ १९ ॥ १२० ॥ वेदादिरूपंयद्वाङ्मयंतत्सर्वंयस्मात्प्रणवेप्रतिष्ठितंततस्तस्माद्वेदजापकःप्रणवमभ्यसेत् ॥ कथंभूतम् ॥ वेदादिंवेदादेःकारणम् ॥ तथाचोक्तम् ॥ ॐकारप्रभवावेदाॐकारप्रभवाःस्वराः ॥ ॐकारप्रभवंसर्वंत्रैलोक्यंसचराचरमिति ॥२१॥२२॥ भयाभावेहेतुमाह ॥ एकाक्षरमिति॥ एकाक्षरंप्रणवम् ॥२३॥ उत्तिष्ठन्शयनात् ॥ अथवापूर्वसंध्यायामुत्तिष्ठन्उत्कर्षेणतिष्ठंस्तां



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कुर्वन्नित्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ गायत्र्यभ्यासमात्रःगायत्रीसारमात्रः ॥ जितेंद्रियःसुयंत्रितः ॥ तथाचमनुः ॥ गायत्रीसारमात्रोपिवरंविप्रःसुयंत्रितः ॥ नायंत्रित स्त्रिवेदोपिसर्वाशीसर्वविक्रयीति ॥ १३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ उषर्देव्याःप्रातःकालोपास्यायागायत्र्याः ॥ ३४ ॥ सूर्यश्चेतीति ॥ मामन्युश्चमन्युपतयश्चमन्युकृतेभ्यःपापेभ्योरक्षंताम् ॥ यद्रात्र्यापापमकार्षं मनसावाचाहस्ताभ्याम् पद्भ्यामुदरेणशिश्ना अहस्तदवलुंपतु यत्किंच दरितंमयि इदमहंमाममृतयोनौ सूर्येज्योतिषिपरमात्मनिजुहोमिस्वाहेतिमंत्रशेषः ॥ अस्यार्थः ॥ मामां रक्षंताम् ॥ के सूर्यश्चमन्युश्चमन्युर्यज्ञः ॥ केभ्यःपापेभ्यः ॥ किंभूतेभ्योमन्युकृतेभ्यःअसांगयज्ञकृतेभ्यः ॥ तथामन्युपतयोयज्ञपतयोमन्युःक्रोधोवाक्रोधपतयइंद्रियाणिक्रोधकृतेभ्यःपापेभ्यःक्रोधो रक्षतामितिकिमुक्तंस्यात्॥ ममैतादृशःक्रोधोमाभवतुयेनाहमकार्यंनकरोमीति ॥ किंचयत्पापंरात्र्याकार्षंकेन मनसावाचाहस्ताभ्यांपद्भ्यामुदरेणशिश्नाशिश्नेन तत्पापमहर्दिवसोऽवलुंपतुखंडयतु यत्किं

यदह्नाकुरुतेपापंमनोवाक्कायकर्मभिः ॥ आसीनःपश्चिमांसंध्यांतत्प्राणायामतोहरेत् ॥ २५ ॥ पूर्वांसंध्यांजपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् ॥ पश्चिमां तुसमासीनःसम्यगृक्षविभावनात् ॥ २६ ॥ पूर्वांसंध्यांजपंस्तिष्ठन्नैशमेनोव्यपोहति ॥ पश्चिमांतुसमासीनोमलंहंतिदिवाकृतम् ॥ २७ ॥ नोपतिष्ठेत्तुयः पूर्वांनोपास्तेयस्तुपश्चिमाम् ॥ सशूद्रवद्बहिष्कार्यःसर्वस्माद्द्विजकर्मणः ॥ २८ ॥ अपांसमीपमासाद्यनित्यकर्मसमाचरेत् ॥ गायत्रीमप्यधीयीतग त्वारण्यंसमाहितः ॥ २९ ॥ गृहाद्बहुगुणायस्मात्संध्याबहिरुपासिता ॥ गायत्र्यभ्यासमात्रोपिवरंविप्रोजितेंद्रियः ॥ १३० ॥ त्रिवेद्यपिचनोमान्यः सर्वभुक्सर्वविक्रयी ॥ सवितादेवतायस्यामुखमग्निस्त्रिपाच्चया ॥ ३१ ॥ विश्वामित्रऋषिश्छंदोगायत्रीसाविशिष्यते ॥ गायत्रीमुषसिध्यायेद्ब्रह्मोहितां ब्रह्मदैवताम् ॥ ३२ ॥ हंसारूढामष्टवर्षांरक्तस्रगनुलेपनाम् ॥ ऋक्स्वरूपामभयदामक्षमालावलंबिनीम् ॥ ३३ ॥ व्यासर्षिणास्तूयमानांछं दसानुष्टुभायुताम् ॥ एतद्ध्यानादुषर्देव्यानैशमेनोव्यपोहति ॥ ३४ ॥ सूर्यश्चेतिचमंत्रेणस्यादाचमनमुत्तमम् ॥ आपोहिष्ठेतितिसृभिर्मार्जनंतुततश्चरेत् ॥ ३५ ॥ भूमौशिरसिचाकाशआकाशेभुविमस्तके ॥ मस्तकेचतथाकाशेभूमौचनवधाक्षिपेत् ॥ ३६ ॥ भूमिशब्देनचरणावाकाशंहृदयंस्मृतम् ॥ शिरस्येवशिरःशब्दोमार्जनज्ञैरुदाहृतः ॥ ३७ ॥ वारुणादपिचाग्नेयाद्वायव्यादपिचैंद्रतः ॥ मंत्रस्नानादपिपरंब्राह्मंस्नानमिदंपरम् ॥ ३८ ॥

चमयिमदाश्रितंदुरितंपापंतदिदमहंसूर्येजुहोमि॥ किंभूते ॥ ज्योतिषिहृत्पद्ममध्यस्थितप्रकाशस्वरूपे॥परमात्मनिपरमात्मस्वरूपे॥अमृतयोनौचेतनात्मकारणे ॥ पानीयरूपेणतत्पापंजुहोमिस्वाहासुहुतं भवत्विति ॥३५॥ आपोहिष्ठेतितिसृभिर्व्याख्यातंब्राह्मंस्नानमाह भूमावित्यादिद्वाभ्याम् ॥ ३६ ॥ भूमावितिश्लोकगतंपादत्रयंस्वयमेवव्याचष्टे ॥ भूमिशब्देनेति ॥ ३७ ॥ वारुणादिति ॥ इदंभूमा वित्यादिनोक्तंब्राह्मंस्नानंवारुणादित्यादिपंचस्नानात्परंभिन्नंपरंश्रेष्ठंचेत्यन्वयः ॥ तत्रवारुणंजलजम् ॥ आग्नेयमग्निहोत्रविभूतिजम् ॥ वायव्यंवायुनानीयमानगोरजोजम् ॥ ऐंद्रमभ्रंविनाऐरावतकरो ज्झितवारिजम् ॥ मांत्रंमूलमंत्रजंवैदिकमंत्रजंवा ॥ तथाचोक्तम् ॥ मांत्रंभौमंतथाग्नेयंवायव्यंदिव्यमेवच ॥ वारुणंमानसंचैवसप्तधैवंप्रकीर्तितमिति ॥ तत्रभौमंमृदालंबनंतिलकादिधारणमितियावत् ॥ दिव्यमैंद्रम् ॥ मानसंसगुणनिर्गुणभेदेनहरिहरयोश्चिंतनम् ॥ तथाचब्राह्मादपिस्नानान्मानसंस्नानमधिकमितिदर्शितंभवति ॥ यद्वा भूमावित्यादिश्लोकद्वयंमार्जनविशेषपरंतदावारुणादित्यस्यायमर्थः ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वारुणादिपंचस्नानादित्युपलक्षणंभौमस्नानादपिब्राह्मंस्नानंयदिदंपरंभिन्नंपरंश्रेष्ठंचेत्यर्थः ॥ अस्मिन्पक्षेब्राह्मंमानसमेव ॥ ३८ ॥ तत्स्तौति ॥ ब्राह्मस्नानेनेति ॥ ३९ ॥ ननुवारुणाग्नेययोरेवश्रे
ष्ठत्वंप्रतिभातिप्रायशःसर्वैः क्रियमाणत्वादित्याशंक्यनिराकरोति नक्तमितिद्वयेन ॥ १४० ॥ रासभागर्दभाः ॥ ४१ ॥ एवंस्थितेफलितमाह ॥ सस्नातइति ॥ ४२ ॥ तर्हितत्कथंस्यादित्याकां
क्षापूर्वकंसहेतुकमाह ॥ तदेवेति ॥ ४३ ॥ समाश्रयेच्चिंतयेत् ॥ मनोमलाःकामाः ॥ ४४ ॥ ४५ ॥ ननुविश्वेशानुग्रहएवकुतःस्यात्तत्राह ॥ विश्वेशानुग्रहइति ॥ तंसदाचारम् ॥ ४६ ॥

ब्राह्मस्नानेनयःस्नातःसबाह्याभ्यंतरेशुचिः ॥ सर्वत्रचार्हतामेतिदेवपूजादिकर्मणि ॥३९ ॥ नक्तंदिनंनिमज्ज्याप्सुकैवर्ताःकिमुपावनाः ॥ शतशोपितथा स्नातानशुद्धाभावदूषिताः ॥ १४० ॥ अंतःकरणशुद्धायेतान्विभूतिःपवित्रयेत् ॥ किंपावनाःप्रकीर्त्यंतेरासभाभस्मधूसराः ॥ ४१ ॥ सस्नातःसर्व तीर्थेषुससर्वमलवर्जितः ॥ तेनक्रतुशतैरिष्टंचेतोयस्येहनिर्मलम् ॥ ४२ ॥ तदेवनिर्मलंचेतोयथास्यात्तन्मुनेशृणु ॥ विश्वेशश्चेत्प्रसन्नःस्यात्तदास्यान्ना न्यथाक्वचित् ॥ ४३ ॥ तस्माच्चेतोविशुद्ध्यर्थंकाशीनाथंसमाश्रयेत् ॥ तदाश्रयेणनियतंसंक्षीयंतेमनोमलाः ॥ ४४ ॥ संक्षीणमानसमलोविश्वेशानु ग्रहात्परात् ॥ इदंशरीरमुत्सृज्यपरंब्रह्माधिगच्छति ॥ ४५ ॥ विश्वेशानुग्रहेहेतुःसदाचारोमतोनृणाम् ॥ श्रुतिस्मृतिभ्यामुदितंतस्मात्तमनुसंश्रयेत् ॥ यथा ॥ ४६ ॥ द्रुपदांतुततोजप्त्वाजलमादायपाणिना ॥ कुर्याद्वतंचमंत्रेणविधिज्ञस्त्वघमर्षणम् ॥ ४७ ॥ निमज्ज्याप्सुचयोविद्वाञ्जपेत्त्रिरघमर्षणम् ॥ यथा श्वमेधावभृथस्तस्यस्यात्तत्तथाध्रुवम् ॥ ४८ ॥ जलेवापिस्थलेवापियःकुर्यादघमर्षणम् ॥ तस्याघौघोविनश्येतयथासूर्योदयेतमः ॥ ४९ ॥ इमंमंत्रं ततश्चोक्त्वाकुर्यादाचमनंद्विजः ॥ आचार्याःकेचिदिच्छंतिशाखाभेदेनचापरे ॥ १५० ॥ अंतश्चरसिभूतेषुगुहायांविश्वतोमुखः ॥ त्वंयज्ञस्त्वंवषट्कार आपोज्योतीरसोऽमृतम् ॥ ५१ ॥ गायत्रींशिरसाहीनांमहाव्याहृतिपूर्विकाम् ॥ प्रणवाद्यांजपंस्तिष्ठन्क्षिपेदंभोंजलित्रयम् ॥ ५२ ॥ तेनवज्रोदकेनाशुमं देहानामराक्षसाः ॥ सूर्यारयःप्रलीयंतेशैलावज्रहताइव ॥५३॥ विवस्वतःसहायार्थंयोद्विजोनांजलित्रयम् ॥ क्षिपेन्मंदेहनाशायसोपिमंदेहतांव्रजेत्॥५४॥ प्रातस्तावज्जपंस्तिष्ठेद्यावत्सूर्यस्यदर्शनम्॥ उपविष्टोजपेत्सायमृक्षाणामाविलोकनात्॥५५॥ काललोपोनकर्तव्योद्विजेनस्वहितेप्सुना॥ अर्घोदयास्तसम येतस्माद्वज्रोदकंक्षिपेत् ॥५६ ॥ विधिनापिकृतासंध्याकालातीताऽफलाभवेत् ॥ अयमेवहिदृष्टांतोवंध्यास्त्रीमैथुनंयथा ॥५७॥ जलंवामकरेकृत्वायासं ध्याचरिताद्विजैः ॥ वृषलीसापरिज्ञेयारक्षोगणमुदावहा ॥५८॥ उद्वयंतमुदुत्यंचचित्रंदेवेतितत्परम् ॥ तच्चक्षुरित्युपस्थानमंत्राब्रह्मस्यासिद्धिदाः ॥५९॥

द्रुपदामितिऋतंचेतिमंत्रद्वयंपूर्वमेवव्याख्यातमितिप्रतीकतयाएकदेशग्रहणाभिप्रायेण ॥ ४७ ॥ ४८ ॥ ४९ ॥ इमामिमंमेवरुणेतिमंत्रम् ॥ आचार्याइति ॥ केचिदपरेआचार्याःशाखाभेदेनांतश्चरसी त्याचमनमंत्रमिच्छंतीतिशेषः ॥ इमंवक्ष्यमाणंमंत्रमुक्त्वाऽऽचमनंकुर्यादित्यत्रहेतुमाह ॥ आचार्याइति ॥ मन्त्रमेवदर्शयति ॥ अंतश्चरसीत्येवंवान्वयः ॥ गुहायांबुद्धौ ॥ विश्वतोमुखःसर्वत्रा ननः ॥ रसआनंदःअमृतंषड्विकाररहितम् ॥ १५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ उद्वयंतमित्यनुस्वारआर्षः ॥ प्रतीकाभिप्रायोवा ॥ मसः



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

परिस्वः पश्यंतउत्तरम् ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तममितिमंत्रशेषः ॥ अस्याऽर्थः ॥ ततुवयंतमसःपरि तमःप्रचुरादस्माल्लोकात्तमसःपाप्मनोवापरिउपरिस्वःस्वर्गेलोकेदेवत्रादेवेषुउत्तरंदेवं देवनादिगुणयुक्तमुत्तमंसर्वज्योतिर्भ्यउत्तममुत्कृष्टतमंसूर्यंसर्वप्रेरकंपश्यंतःशास्त्रदृष्ट्यासाक्षात्कुर्वंतःसूर्यंज्योतिःउत् अगन्मवहतास्मेति (?) ॥उदुत्यमिति॥ जातवेदसंदेवंवहंतिकेतवः॥दृशेविश्वायसूर्यमिति मंत्रशेषः ॥ अस्यायमर्थः ॥ उदित्युपसर्गः ॥ उइतिचनिपातः ॥ त्यच्छब्दस्यरूपंत्यमिति ॥ त्यंजातवेदसंजातंजातंवेत्तिवेदयतीतिजातवेदास्तंजातवेदसंसर्वज्ञंदेवंदेवनादिगुणयुक्तम् ॥ सूर्यम् ॥ चितीज्ञाने ॥ केतवःप्रज्ञानात्मकाअसंख्यातारश्मयःउएवउद्वहंतिविश्वायविश्वस्यसर्वस्य जगतःदृशेदर्शनायसर्वलोकस्यदर्शनादिव्यवहारसिद्धयर्थंवहंतीउद्वहंतीतिसंबंधइति॥चित्रंदेवेति ॥ नामुदगादनीकं चक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअन्तरिक्षंसूर्यआत्माजगतस्तस्थुषश्चेतिमन्त्रशेषः ॥ अस्यायमर्थः ॥ चित्रमितिक्रियाविशेषणम् ॥ चित्रंविचित्रंयथाभवतितथोदगात् ॥ आश्चर्यंहि स्वकीयेनज्योतिषाशार्वरंतमोपहत्यान्येषांचज्योतिषांज्योतिरादायगच्छतीति ॥ यद्वा चित्रंचायनीयंदर्शनायउदगात् ॥ देवानांरश्मीनामनीकंमुखंप्रथममुदगात् ॥ ततोदेवानांरश्मीनामनीकंर श्मिसंघातश्चित्रंविचित्रंचायतनीयमादित्यमंडलमुदगादित्यर्थः ॥ तच्चमित्रस्यवरुणस्याग्नेरित्येतेषांचक्षुर्दृष्टिःसदेवमनुष्यस्यजगतोयच्चक्षुस्तदादित्यमंडलमाप्राद्यावापृथिवीअंतरिक्षं प्रापूरणे द्यावा पृथिवीतन्मध्यमंतरिक्षंचस्वकीयेनप्रकाशेनआसमंतात्प्राः पुरुषव्यत्ययः ॥ अप्रात्आपूरितवान् ॥ सूर्योदयेहिरूपादयोऽभिव्यज्यंते कालस्यापिविशिष्टक्रियाहेतुत्वंयजमानानांचविशिष्टक्रियाकर्तृ

सहस्रकृत्वोगायत्र्याःशतकृत्वोथवापुनः ॥ दशकृत्वोथदेव्यैवकुर्यात्सौरीमुपस्थितिम् ॥ १६० ॥ सहस्रपरमांदेवींशतमध्यांदशावराम् ॥ गायत्रींयोजपे द्विप्रोनसपापैःप्रलिप्यते ॥ ६१ ॥ विभ्राडित्यनुवाकंवासूक्तंवापौरुषंजपेत् ॥ शिवसंकल्पमथवाब्राह्मणंमंडलंतुवा ॥ ६२ ॥ एतानिचोपस्थानानिरवि प्रीतिकराणिच ॥ रक्तचंदनमिश्राद्भिरक्षतैःकुसुमैःकुशैः ॥६३॥ वेदोक्तैरागमोक्तैर्वामंत्रैरर्घंप्रदापयेत् ॥ अर्चितःसवितायेनतेनत्रैलोक्यमर्चितम् ॥६४॥ अर्चितःसवितासूतेसुतान्पशुवसूनिच ॥ व्याधीन्हरेद्ददात्यायुःपूरयेद्वांछितान्यपि ॥ ६५ ॥ अयंहिरुद्रआदित्योहरिरेषदिवाकरः ॥ रविर्हिरण्यगर्भोसौ त्रयीरूपोयमर्यमा ॥ ६६ ॥

त्वंदेवानांचविशिष्टपूजाविषयत्वमित्यादिकंसर्वंसूर्योदयायत्तमित्यर्थः ॥ सएवसूर्यआत्माजगतस्तस्थुषःअस्यजगतःजगंतिगच्छतीतिजगत्तस्यजगतोजंगमस्यतस्थुषःस्थितिशीलस्यस्थावरस्यसूर्यःसर्व प्रेरकोभगवान्आत्मासर्वस्यप्रत्यगात्मभूतः ॥ परमात्मदृष्ट्यासूर्यःस्तूयतेइति ॥ तत्परम्उदुत्यमित्यस्मात्परम् ॥ तच्चक्षुरिति ॥ देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदः शतंशृणुयामशरदःशतमितिमंत्रशेषः ॥ अस्यायमर्थः ॥ तच्चक्षुरादित्यात्मकंचक्षुर्देवहितंदेवेनश्रीभगवताहितंप्रतिष्ठितंदेवेभ्योऽर्थायवाहितंपुरस्तात्प्राच्यांदिशिशुक्रंपाप्मभिरसंस्पृष्टमुच्चरदुदेति ॥ पश्येमसर्वाणिपुरुषार्थसाधनानिपश्येम ॥ शरदःशतमितिवहुकालंजीवेम ॥ शरदःशतंशतसंवत्सरपरिमितंकालम् ॥ शृणुयामश्रीभगवन्माहात्म्यप्रभाववादिनीःश्रुतीः ॥ शरदःशतंकल्पेनशृणु यामेति ॥ ५९ ॥ सहस्रकृत्वःसहस्रवारान् ॥ एवमग्रेपि ॥ वाशब्दोविकल्पार्थः ॥ १६० ॥ सौर्युपस्थितेःफलमाह ॥ सहस्रपरमांदशशतेनोत्तमाम् ॥ शतवारजपेनमध्यांमध्यमां दशवारजपेनअवरांलघ्वीम् ॥ ६१ ॥ विभ्राडिति ॥ विभ्राड्बृहत्पिबत्वित्यादिचतुर्दशानुवाकंवाजपेत् पौरुषंसूक्तंसहस्रशीर्षेत्यादिषोडशर्चंवाजपेत् शिवसंकल्पंयज्जाग्रतइतिषड्ऋचंवाजपेत् मंडलं ब्राह्मणंयदेतन्मंडलमित्यादित्रयोविंशतिकंडिकात्मकंवाजपेत् ॥ एतेषांस्वरूपंसंहितादौ ॥ व्याख्यानंचगुणविष्ण्वादौद्रष्टव्यम् ॥ एवमग्रेपि ॥ ६२ ॥ ६३ ॥ वेदोक्तैर्हंसःशुचिषदित्याद्यैः ॥ आगमोक्तैःएहिसूर्यसहस्रांशोइत्याद्यैः ॥ ६४ ॥ ६५ ॥ अयंहीति ॥ अयमादित्योरुद्रः एषदिवाकरोहरिः असौरविर्हिरण्यगर्भः तस्मादयमर्यमात्रयीरूपोरुद्रहरिहिरण्यगर्भस्वरूपइति ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तथाचस्मृतिः ॥ नमःसवित्रेजगदेकचक्षुषेजगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयायत्रिगुणात्मधारिणेविरिंचिनारायणशंकरात्मनइति ॥ ६६ ॥ यतएवमतोरवेस्त्विति ॥ ६७ ॥ ६८ ॥ ॥ ६९ ॥ अन्वारब्धेनसव्येनदक्षिणहस्तसंलग्नेनवामेनहस्तेन ॥ षड्विनायकान्चंडप्रचंडधर्मविनायकविघ्नराजमहागणपतीन् ॥ १७० ॥ ७१ ॥ निवीतीकंठलग्नयज्ञोपवीती ॥ ७२ ॥ प्राचीनावीतिकोदक्षिणस्कंधयज्ञोपवीतवान् ॥ ७३ ॥ तिलतर्पणस्यानिषेधमाह ॥ रवाविति ॥ ७४ ॥ तत्रापियादृच्छिकप्रतिप्रसवमाह ॥ यदीति ॥ चतुर्दशेति ॥ यमायधर्मराजायमृत्यवचां

रवेस्तुतोषणात्तुष्टाब्रह्मविष्णुमहेश्वराः ॥ इंद्रादयोखिलादेवामरीच्याद्यामहर्षयः ॥ ६७ ॥ मानवामनुमुख्याश्चसोमपाद्याःपितामहाः ॥ रवेरर्चांविधाये त्थंततस्तर्पणमारभेत् ॥ ६८ ॥ दर्भानगर्भानादायनवसप्तचपंचवा ॥ साग्रान्समूलानच्छिन्नान्द्विजोदक्षिणपाणिना ॥ ६९ ॥ अन्वारब्धेनसव्येनतर्प येत्षड्विनायकान् ॥ ब्रह्मादीनखिलान्देवान्मरीच्यादींस्तथामुनीन् ॥ १७० ॥ चंदनागुरुकस्तूरीगंधवत्कुसुमैरपि ॥ तर्पयेच्छुचिभिस्तोयैस्तृप्यं त्वितिसमुच्चरन् ॥ ७१ ॥ सनकादीन्मनुष्यांश्चनिवीतीतर्पयेद्यवैः ॥ अंगुष्ठद्वयमध्येतुकृत्वादर्भानृजून्द्विजः ॥ ७२ ॥ कव्यवाडनलादींश्चपितॄन्दिव्या न्प्रतर्पयेत् ॥ प्राचीनावीतिकोदर्भैर्द्विगुणैस्तिलमिश्रितैः ॥ ७३ ॥ रवौशुक्रेत्रयोदश्यांसतम्यांनिशिसंध्ययोः ॥ श्रेयोर्थीब्राह्मणोजातुनकुर्यात्तिलतर्प णम् ॥ ७४ ॥ यदिकुर्यात्ततःकुर्याच्छुक्लैरेवतिलैःकृती ॥ चतुर्दशयमान्पश्चात्तर्पयेन्नामउच्चरन् ॥ ७५ ॥ ततःस्वगोत्रमुच्चार्यतर्पयेत्स्वपितॄन्मुदा ॥ सव्यजानुनिपातेनपितृतीर्थेनवाग्यतः ॥ ७६ ॥ एकैकमंजलिंदेवाद्वौद्वौतुसनकादिकाः ॥ पितरस्त्रीन्प्रवांछंतिस्त्रियएकैकमंजलिम् ॥ ७७ ॥ अंगुल्य ग्रेभवेद्दैवमार्षमंगुलिमूलगम् ॥ ब्राह्ममंगुष्ठमूलेतुपाणिमध्येप्रजापतेः ॥ ७८ ॥ मध्येंगुष्ठप्रदेशिन्योःपित्र्यंतीर्थंप्रचक्षते ॥ नवर्चमुच्चरन्विद्वान्विदध्या त्पितृतर्पणम् ॥ ७९ ॥ उदीरतामंगिरसआयंतुनइतीष्यते ॥ ऊर्जंवहंतीपितृभ्यःस्वधायिभ्यस्ततःपठेत् ॥ १८० ॥

तकायच ॥ वैवस्वतायकालायसर्वभूतक्षयायच ॥ औदुंबरायदध्नायनीलायपरमेष्ठिने॥वृकोदरायचित्रायचित्रगुप्तायवैनमइत्येवंभूतान् ॥ ७५ ॥ पितृतीर्थेनांगुष्ठप्रदेशिन्योर्मध्येन ॥ ७६ ॥ ७७ ॥ दैवादितीर्थान्याह अंगुल्यग्रइतिसार्धेन ॥ ७८ ॥ पितृतर्पणमंत्रानाह ॥ नवर्चमिति ॥ ७९ ॥ नवर्चमेवोदाहृत्यदर्शयाति उदीरतामितिपादोनद्वयेन ॥ उदीरतामित्येकाकंडिका ॥ अंगिरसइतिद्वे आयंतुनइतितिस्रः ऊर्जंवहंतीतिचतस्रः पितृभ्यःस्वधायिभ्यःइतिपंच येचेहेतिषट् मधुवाताइतिकंडिकात्रयम् इतिनवर्चमुक्त्वापितृतर्पणंविदध्यादितिपूर्वेणैवान्वयः ॥ १८० ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मातृरमंत्रकंसंतर्प्यमातामहतर्पणमाह ॥ नमोवइति ॥ ८१ ॥ आब्रह्मेतिमंत्रत्रयंपठन्भुविजलंसिंचेदितिसपादत्रयाणामन्वयः ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ उपसंहरति ॥ प्रातः कृत्यमिति ॥ ८७ ॥ प्रातःस्नानाशक्तान्प्रत्याह ॥ अथवेति ॥ ८८ ॥ ८९ ॥ १९० ॥ ९१ ॥ ९२ ॥ त्र्यक्षरांप्रणवात्मिकाम् ॥ ९३ ॥ पचनाग्निंवैश्वदेवार्थमग्निम् ॥ ९४ ॥ निष्पावान् शिंबीः वल्लावल्लहाइतिगौडेप्रसिद्धाः ॥ कोद्रवान्कोरदूषकान् ॥ माषान्प्रख्यातान् ॥ कलायान्सूक्ष्मान्वाटुलाइतिप्रसिद्धान् ॥ चणकान्हरिमंथकान् ॥ पक्वान्नंसर्वंलवणयुक्तलवणसंबद्धंसर्वं

येचेहपितरस्तद्वन्मधुवाताइतितृचम् ॥ नमोवःपितरश्चोक्त्वापठन्सिंचेज्जलंभुवि ॥ ८१ ॥ आब्रह्मस्तंबपर्यंतंदेवर्षिपितृमानवाः ॥ तृप्यंतुपितरःसर्वेमातृमातामहादयः ॥ ८२ ॥ अतीतकुलकोटीनांसप्तद्वीपनिवासिनाम् ॥ आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकम् ॥ ८३ ॥ येचास्माकंकुलेजाताअपुत्रागोत्रिणोमृताः ॥ सर्वेतेतृप्तिमायांतुवस्त्रनिष्पीडनोदकैः ॥ ८४ ॥ अग्निकार्यंततःकृत्वावेदाभ्यासंततश्चरेत् ॥ श्रुत्यभ्यासःपंचधास्यात्स्वीकारोर्थविचारणम् ॥ ८५ ॥ अभ्यासश्चजपश्चापिशिष्येभ्यःप्रतिपादनम् ॥ लब्धस्यप्रतिपालार्थमलब्धस्यचलब्धये ॥ ८६ ॥ दातारंसमुपेयाद्वैस्वगुरुत्वंचवर्धयेत् ॥ प्रातःकृत्यमिदंप्रोक्तंद्विजातीनांद्विजोत्तम ॥ ८७ ॥ अथवाप्रातरुत्थायकृत्वावश्यकमेवच ॥ शौचाचमनमादायभक्षयेद्दंतधावनम् ॥ ८८ ॥ विशोध्यसर्वगात्राणिप्रातःसंध्यांसमाचरेत् ॥ वेदार्थानधिगच्छेच्चशास्त्राणिविविधान्यपि ॥ ८९ ॥ अध्यापयेच्छुचीञ्शिष्यान्हितान्मेधासमन्वितान् ॥ उपेयादीश्वरंचैवयोगक्षेमादिसिद्धये ॥ १९० ॥ ततोमध्याह्नसिद्ध्यर्थंपूर्वोक्तंस्नानमाचरेत् ॥ स्नात्वामाध्याह्निकासंध्यामुपासीतविचक्षणः ॥ ९१ ॥ नवयौवनभिन्नांगींशुद्धस्फटिकनिर्मलाम् ॥ त्रिष्टुप्छंदःसमायुक्तांसावित्रींरुद्रदैवताम् ॥ ९२ ॥ कश्यपर्षिसमायुक्तांयजुर्वेदस्वरूपिणीम् ॥ त्र्यक्षरांवृषभारूढांभक्ताभयकरांपराम् ॥ ९३ ॥ देवतांपरिपूज्याथनैत्यिकंविधिमाचरेत् ॥ पचनाग्निंसमुज्वाल्यवैश्वदेवंसमाचरेत् ॥ ९४ ॥ निष्पावान्कोद्रवान्माषान्कलायांश्चणकांस्त्यजेत् ॥ तैलपक्वंचपक्वान्नंसर्वंलवणयुक्त्यजेत् ॥ ९५ ॥ आढकीश्चमसूरांश्चवर्तुलान्वरटांस्तथा ॥ भुक्तशेषंपर्युषितंवैश्वदेवेविवर्जयेत् ॥ ९६ ॥ दर्भपाणिःसमाचम्यप्राणायामंविधायच ॥ पृष्टोदिवीतिमंत्रेणपर्युक्षणमथाचरेत् ॥ ९७ ॥ प्रदक्षिणंचपर्युक्ष्यत्रिःपरिस्तीर्यवैकुशान् ॥ एषोहदेवमंत्रेणकुर्याद्वह्निंसुसंमुखम् ॥ ९८ ॥ वैश्वानरंसमभ्यर्च्यसाज्यपुष्पाक्षतैरथ ॥ भूराद्याश्चाहुतीस्तिस्रःस्वाहांताःप्रणवादिकाः ॥ ९९ ॥ ॐभूर्भुवःस्वःस्वाहेतिविप्रोदद्यात्तथाहुतिम् ॥ तथादेवकृतस्याद्याजुहुयाच्चषडाहुतीः ॥ २०० ॥

पक्वान्नंसिद्धमन्नंत्यजेदित्यर्थः ॥ ९५ ॥ आढकीःतुवरीः ॥ मसूरान्सूक्ष्मकलायसदृशान्रक्तवर्णान् ॥ वर्तुलान्स्थूलकलायान् ॥ वरटान्वर्वटीतिप्रसिद्धान् ॥ ९६ ॥ पृष्टोदिविपृष्टोग्निरित्यादिमंत्रेण पर्युक्षणमनुक्षणंमंत्रपूर्वकंजलेनाग्निवेष्टनंवा ॥ ९७ ॥ सुसंमुखंतृतीयरेखोपर्येकीकृत्यस्थापितम् ॥ प्राङ्मुखोदेवममसंमुखोभवेत्येवंरूपंवा ॥ ९८ ॥ ९९ ॥ देवकृतस्याद्याइति ॥ एनसोवय

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्विष्टकृतीद्वयमग्नयेस्विष्टकृतेस्वाहेत्याहुतिद्वयम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ अनूचानःसांगाधीतीः ॥
जनमसिस्वाहामनुष्यकृतस्यैनसोवयजनमसीत्यादयआदिपदेनगृह्यंते ॥ २०० ॥ स्विष्टकृतीद्वयमग्नयेस्विष्टकृतेस्वाहेत्याहुतिद्वयम् ॥ कितुशुनामिति ॥ ८ ॥ तत्रकाकबलिमंत्रमाह ॥ ऐंद्रेति ॥ ९ ॥ श्वबलिमंत्रमाह ॥ द्वाविति ॥
॥ ६ ॥ ७ ॥ तर्हिंकिमध्वगाद्यष्टौविहायान्येभ्योऽन्नंनदेयम् केनोक्तमित्याह ॥ अन्नार्थिनीति ॥

सर्वेभ्यश्चापिभूतेभ्योनमोदद्यात्तदुत्तरे ॥ तद्दक्षिणेपि यमायतूष्णीमेकांचतथास्विष्टकृतीद्वयम् ॥ विश्वेभ्यश्चापिदेवेभ्योभूमौदद्यात्ततोबलिम् ॥ १ ॥ निर्णेजनोदकान्नंचैशान्यांवैयक्ष्मणेऽर्पयेत् ॥ ततोब्रह्मादिदेवेभ्योनमोदद्यात्तदुत्तरे ॥ ३ ॥ निवीतीसनकादिभ्यः तृप्यश्चप्राचीनावीतिकोददेत् ॥ २ ॥ ग्रासमात्राभवेद्भिक्षाग्रहस्थसुकृतप्रदा ॥ अध्वगःक्षीणवृत्तिश्चविद्यार्थी पितृभ्यस्त्वपसव्यवान् ॥ हंतःषोडशभिर्ग्रासैश्चतुर्भिःपुष्कलंस्मृतम् ॥ ४ ॥ अतिथिःपथिकोज्ञेयोऽनूचानःश्रुतिपारगः ॥ ६ ॥ मान्यावेतौगृहस्थानांब्रह्मलोकमभी गुरुपोषकः ॥ ५ ॥ यतिश्चब्रह्मचारीचषडेतेधर्मभिक्षुकाः ॥ अन्नार्थिनिसमायातेपात्रापात्रंनचिंतयेत् ॥ शुनांचपतितानांचश्वपचांपापरोगिणाम् ॥ ८ ॥ प्सताम् ॥ अपिश्वपाकेशुनिवानैवान्नंनिष्फलंभवेत् ॥ ७ ॥ प्रतिगृह्णंत्विमंपिंडंकाकाभूमौमयार्पितम् ॥ द्वौश्वानौ काकानांचकृमीणांचबहिरन्नंकिरेद्भुवि ॥ ऐंद्रवारुणवायव्याःसौम्यावैनैर्ऋताश्चये ॥ ९ ॥ देवामनुष्याःपशवोरक्षोयक्षोरगाःखगाः ॥ ११ ॥ श्यामशबलौवैवस्वतकुलोद्भवौ ॥ २१० ॥ ताभ्यांपिंडंप्रदास्यामिस्यातामेतावहिंसकौ ॥ कृमिकीटपतंगाद्याःकर्मबद्धाबुभुक्षिताः ॥ तृप्त्यर्थमन्नं दैत्याःसिद्धाःपिशाचाश्चप्रेताभूताश्चदानवाः ॥ तृणानितरवश्चापिमद्दत्तान्नाभिलाषुकाः ॥ १२ ॥ प्रतीक्ष्यातिथिमायांतंविशेद्भोज्यगृहंततः ॥ १४ ॥ अदत्त्वावायसबलिं हिमयादत्तंतेषांमुदेस्तुवै ॥ १३ ॥ इत्थंभूतबलिंदत्त्वाकालंगोदोहमात्रकम् ॥ भोजयेत्पितृयज्ञार्थंदद्यादुद्धृत्यदुर्बलः ॥ नित्यश्राद्धंदेवहीनंनियमा नित्यश्राद्धंसमाचरेत् ॥ नित्यश्राद्धेस्वसामर्थ्यात्त्रीन्द्वावेकमथापिवा ॥ १५ ॥ पितृयज्ञंविधायेत्थंस्वस्थबुद्धिरनातुरः ॥ १७ ॥ अदुष्टासनमध्यास्यभुंजीत दिविवर्जितम् ॥ १६ ॥ दक्षिणारहितंत्वेतद्दातृभोक्तृव्रतोज्झितम् ॥ प्रागास्यउदगास्योवाभुंजीतपितृसेवितम् ॥ १९ ॥ विधायान्नमनग्नंतदुपरि शिशुभिःसह ॥ सुगंधिःसुमनाःस्रग्वीशुचिवासोद्वयान्वितः ॥ १८ ॥ प्रदद्याद्भुवःपतयेभुवनपतयेतथा ॥ भूतानांपतयेस्वाहेत्युक्त्वाभूमौबलित्रयम् ॥ २१ ॥ ष्टादधस्तथा ॥ आपोशनविधानेनकृत्वाश्नीयात्सुधीर्द्विजः ॥ २२० ॥

॥ २१० ॥ भूतबलिमंत्रमाह देवाइतिसार्धद्वयेन ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ दद्यादुद्धृत्यदुर्बलइति ॥ दरिद्रश्चसर्वस्मात्स्वभोज्यात्किंचित्किंचिदुद्धृत्यसर्वेभ्यएकंबलिंदद्या दित्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ विधायेति ॥ आपोशनविधानेनकृत्वातदन्नमधउपरिष्टाच्चानग्नतांविधायसुधीर्द्विजोऽश्नीयादित्यन्वयः ॥ २२० ॥ आपोशनविधानक्रमंदर्शयति ॥ प्रदद्या



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दिति ॥ २१ ॥ सकृदिति ॥ अमृतोपस्तरणमसीतिमंत्रेणसकृदाचम्येत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ २३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

सकृच्चापउपस्पृश्यप्राणाद्याहुतिपंचकम् ॥ दद्याज्जठरकुंडाग्नौदर्भपाणिःप्रसन्नधीः ॥ २२ ॥ दर्भपाणिस्तुयोभुंक्तेतस्यदोषोनविद्यते ॥ केशकीटा
दिसंभूतस्तदश्नीयात्सदर्भकः ॥ २३ ॥ यावद्धुच्यन्नमश्नीयान्नब्रूयात्तद्गुणागुणान् ॥ भुंजतेपितरस्तावद्यावन्नोक्तागुणागुणाः ॥ २४ ॥ अतोमौनेनयोभुं
क्तेसभुंक्तेकेवलामृतम् ॥ अनुपीयततःक्षीरंतक्रंपानीयमेववा ॥ २५ ॥ अमृतापिधानमसीत्येवंप्राश्योदकंसकृत् ॥ पीतशेषंक्षिपेद्भूमौतोयंमंत्रमिमंप
ठन् ॥ २६ ॥ अप्रक्षालितहस्तस्यदक्षिणांगुष्ठमूलतः ॥ रौरवेऽपुण्यनिलयेपद्मार्बुदनिवासिनाम् ॥ २७ ॥ उच्छिष्टोदकमिच्छूनामक्षय्यमुपतिष्ठताम् ॥
॥ २८ ॥ पुनराचम्यमेधावीशुचिर्भूत्वाप्रयततः ॥ हस्तेनोदकमादायमंत्रमेतमुदीरयेत् ॥२९॥ अंगुष्ठमात्रःपुरुषस्त्वंगुष्ठंचसमाश्रितः ॥ ईशःसर्वस्यजगतः
प्रभुःप्रीणातिविश्वभुक् ॥ २३० ॥ इत्यन्नंपरिसंकल्प्यप्रक्षाल्यचरणौकरौ ॥ ततोन्नपरिणामार्थंमंत्रानेतानुदीरयेत् ॥ ३१ ॥ अग्निराप्याययन्धातून्पा
र्थिवान्पवनेरितः ॥ दत्तावकाशोनभसाजरयत्वस्तुमेसुखम् ॥३२॥ प्राणापानसमानानामुदानव्यानयोस्तथा ॥ अन्नंपुष्टिकरंचास्तुममास्त्वव्याहतंसुखम्
॥ ३३ ॥ समुद्रोवडवाग्निश्चब्रध्नोब्रध्नस्यनंदनः ॥ मयाभ्यवहृतंयत्तदशेषंजरयंत्विमे ॥ ३४ ॥ मुखशुद्धिंततःकृत्वापुराणश्रवणादिभिः ॥ अतिवाह्यदि
वाशेषंततःसंध्यांसमारभेत् ॥ ३५ ॥ गृहेगोष्ठेनदीतीरेसंध्यादशगुणाक्रमात् ॥ संभेदेस्याच्छतगुणाह्यनंताशिवसन्निधौ ॥ ३६ ॥ उपासिताबहिः
संध्यादिवामैथुनपातकम् ॥ शमयेदनृतोक्तांचमद्यगंधजमेवच ॥ ३७ ॥ सामवेदस्वरूपांचवसिष्ठर्षिसमायुताम् ॥ कृष्णांगींकृष्णवसनांमनाक्स्खलित
यौवनाम् ॥ ३८ ॥ सरस्वतींतार्क्ष्ययानांविप्रर्षीविष्णुदेवताम् ॥ जगतीच्छंदसायुक्तांध्यायेदेकाक्षरांपराम् ॥ ३९ ॥ अग्निश्चेतिचमंत्रेणविधायाचम
नंसुधीः ॥ पश्चिमास्योजपेत्तावद्यावन्नक्षत्रदर्शनम् ॥ २४० ॥ अतिथिंसायमायांतमपिवाग्भूतृणोदकैः ॥ संभाव्यपरिकल्प्येत्थंनिशःप्राक्प्रहरंसुधीः
॥ ४१ ॥ इत्थंदिवाकर्मकृत्वाश्रुतेःपठनपाठनैः ॥ एककाष्ठमयींशय्यांनातितृप्तोथसंविशेत् ॥ ४२ ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ अग्निश्चेतिमंत्रःसूर्यश्चमामन्युश्चमंत्रेणैवव्याख्यातप्रायः ॥ १४० ॥ ४१ ॥ तत्तस्मात् एककाष्ठमयींमेकजातीयकाष्ठमयीम् ॥ अखंडकाष्ठमयींवा ॥४२॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

उपसंहरति ॥ उद्देशतइति ॥ कथनस्यफलमाह ॥ इत्थमिति ॥ २४३ ॥ वेदपाठार्थयोरोधाद्यदत्रस्खलितंमम ॥ क्षंतव्यंतद्विशेषेणवेदवेदार्थपारगैः ॥ १ ॥ इतिश्रीरामानंदकृतायां काशीखंडटीकायांपंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥ छ ॥ ॥ षट्त्रिंशत्तमकेऽध्यायेपावनेत्यंतशोभने ॥ प्रथमाश्रमिणांतावत्सदाचारोनिरूप्यते ॥ १ ॥ एवंसाधारण्येनधर्मानुक्त्वाप्रथमाश्रमिणां धर्मान्वक्तुमुपक्रमते ॥ पुनर्विशेषमिति ॥ १ ॥ २ ॥ निषेकोगर्भाधानम् ॥ श्मशानमंत्येष्टिः ॥ ३ ॥ स्पंदनाद्गर्भस्थबालस्यचलनात्षष्ठान्मासादर्वाक् पुंसवनंगर्भस्यपुंस्त्वाधानं कर्म ॥ सीमंतो

उद्देशतःसमाख्यातोह्येषनित्यतमोविधिः ॥ इत्थंसमाचरन्विप्रोनावसीदतिकर्हिचित् ॥ २४३ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायां चतुर्थेकाशीखंडेपूर्वार्द्धेसदाचारोनामपंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥ स्कंदउवाच ॥ ॥ पुनर्विशेषंवक्ष्यामिसदाचारस्यकुंभज ॥ यंश्रुत्वापिनरोधी मान्नाज्ञानतिमिरंविशेत् ॥ १ ॥ ब्राह्मणाःक्षत्रियावैश्यास्त्रयोवर्णाद्विजाःस्मृताः ॥ प्रथमंमातृतोजाताद्वितीयंचोपनायनात् ॥ २ ॥ एषांक्रियानिषेका दिश्मशानांताचवैदिकी ॥ आदधीतसुधीर्गर्भमृतौमूलंमवांत्यजेत् ॥ ३ ॥ स्पंदनात्प्राक्पुंसवनंसीमंतोन्नयनंततः ॥ मासिषष्ठेऽष्टमेवापिजातेथजातक मंच ॥ ४ ॥ नामाह्न्येकादशेगेहाच्चतुर्थेमासिनिष्क्रमः ॥ मासेन्नप्राशनंषष्ठेचूडाब्देवायथाकुलम् ॥ ५ ॥ शममेनोव्रजेदेवंबैजंगर्भजमेवच ॥ स्त्रीणामे ताःक्रियास्तूष्णींपाणिग्राहस्तुमंत्रवान् ॥ ६ ॥ सप्तमेथाष्टमेवाब्देसावित्रींब्राह्मणोर्हति ॥ नृपस्त्वेकादशेवैश्योद्वादशेवायथाकुलम् ॥ ७ ॥ ब्रह्मतेजो भिवृद्ध्यर्थंविप्रोब्देपंचमेर्हति ॥ षष्ठेबलार्थीनृपतिर्मौंजींवैश्योष्टमेध्रियेत् ॥ ८ ॥ महाव्याहृतिपूर्वंचवेदमध्यापयेद्गुरुः ॥ उपनीयचतंशिष्यंशौचाचारे चयोजयेत् ॥ ९ ॥ पूर्वोक्तविधिनाशौचंकुर्यादाचमनंतथा ॥ दंतान्जिह्वांविशोध्याथकृत्वामलविशोधनम् ॥ १० ॥ स्नात्वांबुदैवतैर्मंत्रैःप्राणानायम्ययत्नतः ॥ उपस्थानंरवेःकृत्वासंध्ययोरुभयोरपि ॥ ११ ॥ अग्निकार्यंततःकृत्वाब्राह्मणानभिवादयेत् ॥ ब्रुवन्नमुकगोत्रोहमभिवादयइत्यपि ॥ १२ ॥ अभिवादनशी लस्यवृद्धसेवारतस्यच ॥ आयुर्यशोबलंबुद्धिर्वर्धतेऽहरहोधिकम् ॥ १३ ॥ अधीतेगुरुणाहूतःप्राप्तंतस्मैनिवेदयेत् ॥ कर्मणामनसावाचाहितंतस्याचरेत्सदा ॥ १४ ॥ अध्याप्याधर्मतोनार्थात्साध्वात्तज्ञानवित्तदाः ॥ शक्ताःकृतज्ञाःशुचयोऽद्रोहकाश्चानसूयकाः ॥ १५ ॥ धारयेन्मेखलादंडोपवीताजिनमेवच ॥ अनिंद्येषुचरेद्भैक्ष्यंब्राह्मणेष्वात्मवृत्तये ॥ १६ ॥ ब्राह्मणक्षत्रियविशामादिमध्यावसानतः ॥ भैक्ष्यचर्याक्रमेणस्याद्भवच्छब्दोपलक्षिता ॥ १७ ॥

न्नयनंकर्मविशेषःषष्ठेऽष्टमइतिकुलाचारभेदेन ॥ ४ ॥ ५ ॥ एनःपापम् ॥ पाणिग्राहोविवाहः ॥ ६ ॥ ७ ॥ काम्योपनयनमाह ॥ ब्रह्मेति ॥ बलार्थीसामर्थ्यार्थी ॥ धनार्थीतिकचित् ॥ ध्रियेद्धारयेत्कृष्यादिवृत्त्यभिवृद्ध्यर्थमितिशेषः ॥ धियेइतिपाठेकृष्यादिवृत्तिविज्ञानायेत्यर्थः ॥ ८ ॥ शौचाचारेचेतिचकारःसमुच्चये ॥ योजयेन्नियोजयेत्प्रेरयेदितियावत् ॥ निमंत्रयेदितिपाठे पिसएवार्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ अनिंद्येषुअभिशस्तपतितवर्जितेषु ॥ ब्राह्मणेष्वितिसर्वेषांसाधारण्येन ॥ १६ ॥ विशेषमाह ॥ ब्राह्मणेति ॥ ब्राह्मणानां



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भवतिभिक्षांदेहीति क्षत्रियाणांभिक्षांभवतिदेहीति वैश्यानांभिक्षांदेहिभवतीतिक्रमेणेत्यर्थः ॥ १७ ॥ एकान्नमेकस्यान्नंनसमश्नीयात् ॥ आपदिपुनरेकान्नंश्राद्धेचाश्नीयादित्यन्वयः ॥ १८ ॥ ॥ १९ ॥ अग्निहोत्रविधानविदग्निहोत्रानुष्ठानज्ञः ॥ अग्निहोत्रविधानवानितिपाठेपिसएवार्थः ॥ २० ॥ भास्करालोकनवर्जनंतूदयादिषु ॥ तथाचमनुः ॥ नेक्षेतोद्यंतमादित्यमित्यादि ॥ पर्युषितंचोच्छिष्टंचेत्येकवद्भावः ॥ २१ ॥ उपनयनग्रहणसमयस्यमुख्यपक्षमुक्त्वागौणपक्षावधिमाह ॥ औपनायनिकइति ॥ २२ ॥ २३ ॥ एणरुर्वोरवांतरभेदः ॥ बस्तश्छागः ॥ २४ ॥ शाणंशणतंतुविनिर्मितम् ॥ क्षौमंदुकूलम् ॥ आविकंमेषरोमनिर्मितम् ॥ मौंजीमुंजसंबंधिनी ॥ मूरुस्तृणावांतरभेदोयेनधनुर्ज्याक्रियतेतत्संबंधिनीमौर्वी ॥ शणतांतवीशणतंतुनिर्मिता ॥ त्रिवृत्त्रिगुणा ॥

वाग्यतोगुर्वनुज्ञातोभुंजीतान्नमकुत्सयन् ॥ एकान्नंनसमश्नीयाच्छ्राद्धेऽश्नीयात्तथापदि ॥ १८ ॥ अनारोग्यमनायुष्यमस्वर्ग्यंचातिभोजनम् ॥ अपुण्यंलोकविद्विष्टंतस्मात्तत्परिवर्जयेत् ॥ १९ ॥ नाद्विर्भुंजीतचैकस्मिन्दिवाक्वापिद्विजोत्तमः ॥ सायंप्रातर्द्विजोऽश्नीयादग्निहोत्रविधानवित् ॥ २० ॥ मधुमांसंप्राणिहिंसांभास्करालोकनांजने ॥ त्रियंपर्युषितोच्छिष्टंपरिवादंविवर्जयेत् ॥ २१ ॥ औपनायनिकःकालेब्रह्मक्षत्रविशांपरः ॥ आषोडशादाद्वाविंशादाचतुर्विंशदब्दतः ॥ २२ ॥ इतोप्यूर्ध्वंनसंस्कार्याःपतिताधर्मवर्जिताः ॥ व्रात्यस्तोमेनयज्ञेनतत्पातित्यंपरिव्रजेत् ॥ २३ ॥ सावित्रीपतितैःसार्धंसंबंधंनसमाचरेत् ॥ ऐणंचरौरवंबास्तंक्रमाच्चर्मद्विजन्मनाम् ॥ २४ ॥ वसीरन्नानुपूर्व्येणशाणक्षौमाविकानिच ॥ द्विजस्यमेखलामौंजीमौर्वीचभुजजन्मनः ॥ भवेत्त्रिवृत्समाश्लक्ष्णाविशस्तुशणतांतवी ॥ २५ ॥ मुंजाभावेविधातव्याकुशाश्मंतकबल्वजैः ॥ ग्रंथिनैकेनसंयुक्तात्रिभिःपंचभिरेववा ॥ २६ ॥ उपवीतंक्रमेणस्यात्कार्पासंशाणमाविकम् ॥ त्रिवृदूर्ध्ववृतंतच्चभवेदायुर्विवृद्धये ॥ २७ ॥ बिल्वपालाशयोर्दंडोब्राह्मणस्यनृपस्यतु ॥ न्यग्रोधबालदलयोःपीलूदुंबरयोर्विशः ॥ २८ ॥ आमौलिंवाऽऽललाटंवाऽऽनासमूर्ध्वप्रमाणतः ॥ ब्रह्मक्षत्रविशांदंडस्त्वगाढयोनाग्निदूषितः ॥ २९ ॥ प्रदक्षिणंपरीत्याग्निमुपस्थायदिवाकरम् ॥ दंडाजिनोपवीताढ्यश्चरेद्भैक्ष्यंयथोदितम् ॥ ३० ॥ मातृमातृष्वसृस्वसृपितृस्वसृपुरःसराः ॥ प्रथमंभिक्षणीयाःस्युरेतायाचननोवदेत् ॥ ३१ ॥

समासमगुणत्रयनिर्मिता ॥ श्लक्ष्णास्निग्धस्पर्शा ॥ अत्रत्रिवृत्समाश्लक्ष्णेतितिसृणांविशेषणंगम्यते ॥ मनौतुत्रिवृत्समाश्लक्ष्णेतिमौंज्याएवेति ॥ तथाचमनुः ॥ मौंजीत्रिवृत्समाश्लक्ष्णाकार्याविप्रस्यमेखला ॥ क्षत्रियस्यतुमौर्वीज्यावैश्यस्यशणतांतवीति ॥ तत्रत्रैगुण्यंसाधारणमेव ॥ त्रिगुणप्रदक्षिणामेखलेतिसाधारण्येनप्रचेतसात्रैगुण्याभिधानात् ॥ २५ ॥ मुंजाभावइति ॥ मुंजाद्यभावइत्यर्थः ॥ विधातव्याइतिबहुवचनांतोवापाठः ॥ पंचभिर्वेतिवाशब्दप्रयोगान्नविप्रादिभिःक्रमेणसंबंधःकिंतुसर्वत्रयथाकुलाचारसंबंधः ॥ अश्मंतकःमालूयातृणम् ॥ बल्वजःवागयीतिप्रसिद्धः ॥ ॥ २६ ॥ ऊर्ध्ववृतंदक्षिणावर्त्तितम् ॥ २७ ॥ वालदलःखदिरः ॥ पीलुर्गुडफलः ॥ २८ ॥ २९ ॥ यथोदितंपूर्वोक्तप्रकारेणोक्तम् ॥ ३० ॥ ननोवदेन्नास्तीतिनब्रूयात् ॥ याचैनंनावमानये

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दितिपाठेऽएनंब्रह्मचारिणंनावमानयेत्प्रत्याख्यानेन ॥ एनामितिपाठेएनांभिक्षाम् ॥ ३१ ॥ वेदव्रतानिगुरुशुश्रूषादीनि ॥ ऊर्ध्ववेदपाठसमाप्त्यनंतरम् ॥ ३२ ॥ असौपूर्वोक्तः ॥ ३३ ॥
॥ ३४ ॥ ३५ ॥ ३६ ॥ वेदश्चयज्ञश्चादिर्यस्यलिंगस्यचिह्नस्यतत्तथा ॥ वेदयष्ट्यादीतिपाठश्चित्यः ॥ ३७ ॥ उपलक्षणंचिह्नम् ॥ ३८ ॥ ३९ ॥ केशांतंसमावर्तनम् ॥ ४० ॥ एकामुख्या
केवला ॥ ४१ ॥ ४२ ॥ ४३ ॥ बहिर्नदीतीरादौ ॥ ४४ ॥ अत्यब्दमिति ॥ इत्यनेनप्रकारेण ॥ अत्यब्दंकिंचिदधिकंसंवत्सरम् ॥ अत्यब्दमेतदितिक्वचित्पाठः ॥ प्रतिघस्रंप्रतिदिनम् ॥



तिष्ठेत्तावद्गुरुकुले यावद्वेदमधीतेचचरन्वेदव्रतानिच ॥ ब्रह्मचारीभवेत्तावदूर्ध्वंस्नातोगृहीभवेत् ॥ ३२ ॥ प्रोक्तोसावुपकुर्वाणोद्वितीयस्तत्रनैष्ठिकः ॥ तिष्ठेत्तावद्गुरुकुले यावत्स्यादायुषःक्षयः ॥ ३३ ॥ गृहाश्रमंसमाश्रित्ययःपुनर्ब्रह्मचर्यभाक् ॥ नासौयतिर्वनस्थोवास्यात्सर्वाश्रमवर्जितः ॥ ३४ ॥ अनाश्रमीनतिष्ठेतदिनमेकमपिद्विजः ॥ आश्रमंतुविनातिष्ठन्प्रायश्चित्तीयतेहिसः ॥ ३५ ॥ जपंहोमंव्रतंदानंस्वाध्यायंपितृतर्पणम् ॥ कुर्वाणोथाश्रमभ्रष्टोनासौतत्फलमाप्नुयात् ॥ ३६ ॥ मेखलाजिनदंडाश्चलिंगंस्याद्ब्रह्मचारिणः ॥ गृहिणोवेदयज्ञादिनखलोमवनस्थितेः ॥ ३७ ॥ त्रिदंडादियतेरुक्तमुपलक्षणमत्रवै ॥ एतल्लक्षणहीनस्तुप्रायश्चित्तीदिनेदिने ॥ ३८ ॥ जीर्णंकमंडलुंदंडमुपवीताजिनेअपि ॥ अप्स्वेवतानिनिक्षिप्यगृह्णीतान्यच्चमंत्रवत् ॥ ३९ ॥ विदध्यात्षोडशेवर्षे केशांतंकर्मचक्रमात् ॥ द्वाविंशेचचतुर्विंशेगार्हस्थ्यप्रतिपत्तये ॥ ४० ॥ तपोयज्ञव्रतेभ्यश्चसर्वस्माच्छुभकर्मणः ॥ द्विजातीनांश्रुतिर्ह्येकाहेतुर्निःश्रेयसश्रियः ॥ ४१ ॥ वेदारंभेविसर्गेचविदध्यात्प्रणवंसदा ॥ अफलोऽनोंकृतोयस्मात्पठितोपिनसिद्धये ॥ ४२ ॥ वेदस्यवदनंप्रोक्तंगायत्रीत्रिपदापरा ॥ तिसृभिःप्रणवाद्याभिर्महाव्याहृतिभिःसह ॥ ४३ ॥ सहस्रंसाधिकंकिंचित्त्रिकमेतज्जपन्यमी ॥ मासंबहिःप्रतिदिनंमहापापादपिमुच्यते ॥ ४४ ॥ अत्यब्दमितियोभ्यस्येत्प्रतिघस्रमनन्यधीः ॥ सव्योममूर्तिःशुद्धात्मापरंब्रह्माधिगच्छति ॥ ४५ ॥ त्रिवर्णमयमोंकारंभूर्भुवःस्वारीतित्रयम् ॥ पादत्रयंचसावित्र्यास्त्रयोवेदाअदूदुहन् ॥ ४६ ॥ एतदक्षरमेनांचजपेद्व्याहृतिपूर्विकाम् ॥ संध्ययोर्वेदविद्विप्रोवेदपुण्येनयुज्यते ॥ ४७ ॥ विधिक्रतोर्दशगुणंजपस्यफलमश्नुते ॥ विधिक्रतोर्दशगुणोजपक्रतुरुदीरितः ॥ ४८ ॥ उपांशुस्तच्छतगुणःसहस्रोमानसस्ततः ॥ ४९ ॥ अधीत्यवेदान्वेदौवावेदंवाशक्तितोद्विजः ॥ सुवर्णपूर्णधरणीदानस्यफलमश्नुते ॥ ५० ॥ श्रुतिमेवसदाभ्यस्येत्तपस्तत्तुंद्विजोत्तमः ॥ श्रुत्यभ्यासोहिविप्रस्यपरमंतपउच्यते ॥ ५१ ॥ हित्वाश्रुतेरध्ययनंयोन्यत्पठितुमिच्छति ॥ सदोग्ध्रींधेनुमुत्सृज्यग्रामक्रोडींदुधुक्षति ॥ ५२ ॥



व्योममूर्तिः शुद्धशरीरःपरिपूर्णरूपोवा ॥ ४५ ॥ ४६ ॥ ४७ ॥ विधिक्रतोरिति ॥ विधिनानुष्ठितःक्रतुर्विधिक्रतुर्दर्शपौर्णमासादिस्तस्यदशगुणंफलंप्रणवादीनांजपस्ययत्तदश्नुतेप्राप्नोतीत्यर्थः ॥
तत्रहेतुमाह ॥ विधीति ॥ ४८ ॥ ततउपांशुजपक्रतोः ॥ उपांशुरस्पष्टः ॥ स्मृतइतिक्वचित् ॥ ४९ ॥ ५० ॥ तपस्तत्तुंतपःकर्त्तुम् ॥ तपस्तप्यन्निति क्वचित् ॥ ५१ ॥ ग्रामक्रोडींग्रामसूकरीम् ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दुधुक्षतिदोग्धुमिच्छति ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ आहवनीयाद्यग्न्युत्पादकंकर्मअग्न्याधेयम् ॥ पाकयज्ञान्पक्वनवसस्यनिमित्तान्अष्टकादीन्वा ॥ ५६ ॥ ५७ ॥ ५८ ॥ कृत्तिमय
श्चर्ममयः ॥ ५९ ॥ द्विजोविप्रादिः ॥ विप्रइतिपाठेविप्रइतिक्षत्रियवैश्ययोरुपलक्षणम् ॥ पुनर्मामित्यृचमिति ॥ पुनर्मामैत्विंद्रियमित्येतामृचंवारत्रयंजपेत् ॥ ६० ॥ वेश्मसुगृहस्थाश्रमेषु ॥ ६१ ॥
अवकीर्णिव्रतंप्रायश्चित्तम् ॥ ६२ ॥ अविशेषणंविशेषणरहितंकेवलमित्यर्थः ॥ ६३ ॥ ६४ ॥ परिभोक्ताअग्रतोभोक्ता ॥ ६५ ॥ ज्ञातृणाज्ञात्रा ॥ ज्ञानिनेतिक्वचित् ॥ जानतेतिचान्यत्र ॥ पक्षत्रये

उपनीयचवैशिष्यंवेदमध्यापयेद्द्विजः ॥ सकल्पंसरहस्यंचतमाचार्यंविदुर्बुधाः ॥ ५३ ॥ योध्यापयेदेकदेशंश्रुतेरंगान्यथापिवा ॥ वृत्त्यर्थंसउपाध्यायो विद्वद्भिःपरिगीयते ॥ ५४ ॥ यथाविधिनिषेकादियःकर्मकुरुतेद्विजः ॥ संभावयेत्तथान्नेनगुरुःसइहकीर्त्यते ॥ ५५ ॥ अग्न्याधेयंपाकयज्ञानग्निष्टोमादिकान्मखान् ॥ यःकरोतिवृतोयस्यसतस्यर्त्विगिहोच्यते ॥ ५६ ॥ उपाध्यायाद्दशाचार्यआचार्यात्तुशतंपिता ॥ सहस्रंतुपितुर्माताgौरवेणातिरिच्यते ॥ ५७ ॥ विप्राणांज्ञानतोज्यैष्ठ्यंचबाहुजानांतुवीर्यतः ॥ वैश्यानांधान्यधनतःपज्जातानांतुजन्मतः ॥ ५८ ॥ यथादारुमयोहस्तीयथाकृत्तिमयोमृगः ॥ तथाविप्रोऽनधीयानस्त्रयोऽमीनामधारिणः ॥ ५९ ॥ स्वप्नेसिक्त्वाब्रह्मचारीद्विजःशुक्रमकामतः ॥ स्नात्वार्कमर्चयित्वात्रिःपुनर्मामित्यृचंजपेत् ॥ ६० ॥ स्वधर्मनिरतानांचवेदयज्ञक्रियावताम् ॥ ब्रह्मचारीचरेद्भैक्ष्यंवेश्मसुप्रयतोऽन्वहम् ॥ ६१ ॥ अकृत्वाभैक्ष्यचरणमसमिध्यहुताशनम् ॥ अनातुरःसप्तरात्रमवकीर्णिव्रतंचरेत् ॥ ६२ ॥ यथेष्टंचेष्टेनभवेद्गुरोर्नयनगोचरे ॥ ननामपरिगृह्णीयात्परोक्षेप्यविशेषणम् ॥ ६३ ॥ गुरुर्निंदाभवेद्यत्रपरिवादस्तुयत्रच ॥ श्रुतीपिधायवास्थेयंयातव्यंवाततोन्यतः ॥ ६४ ॥ खरोगुरोःपरीवादाच्छ्वाभवेद्गुरुनिंदकः ॥ मत्सरीक्षुद्रकीटःस्यात्परिभोक्ताभवेत्कृमिः ॥ ६५ ॥ नाभिवाद्यागुरोःपत्नीस्पृष्टांघ्रीयुवतीसती ॥ क्वापिविंशतिवर्षेणज्ञातृणागुणदोषयोः ॥ ६६ ॥ स्वभावश्चंचलःस्त्रीणांदोषःपुंसामतःस्मृतः ॥ प्रमदासुप्रमाद्यंतिक्वचिन्नैवविपाश्चितः ॥ ६७ ॥ विद्वांसमप्यविद्वांसंयतस्ताधर्षयंत्यलम् ॥ स्ववशंवापिकुर्वंतिसूत्रबद्धशकुंतवत् ॥ ६८ ॥ नमात्रानदुहित्रावानस्वस्त्रैकांतशीलता ॥ बलवंतींद्रियाण्यत्रमोहयंत्यपिकोविदान् ॥ ६९ ॥ प्रयत्नेनखनन्यद्वद्भूमेर्वार्यधिगच्छति ॥ शुश्रूषयागुरोस्तद्वद्विद्यांशिष्योधिगच्छति॥७०॥ शयानमभ्युदयतेत्रभ्रश्येद्ब्रह्मचारिणम् ॥ प्रमादादथनिम्लोचेज्जपन्नुपवसेद्दिनम् ॥ ७१ ॥ सुतस्यसंभवेक्लेशंसहेतेपितरौचयत् ॥ शक्यावर्षशतेनापिनो कर्तुंतस्यनिष्कृतिः ॥ ७२ ॥ अतस्तयोःप्रियंकुर्याद्गुरोरपिचसर्वदा ॥ त्रिषुतेषुतुतुष्टेषुतपःसर्वंसमाप्यते ॥ ७३ ॥ तेषांत्रयाणांशुश्रूषापरमंतपउच्यते ॥ताननतिक्रम्ययःकुर्यात्तन्नसिद्ध्येत्कदाचन ॥ ७४ ॥

पिशुणदोषयोरितिकर्मणिषष्ठी ॥ ६६ ॥ अतश्चंचलस्वभावात् ॥ प्रमाद्यंतिविश्वासयंतीत्यर्थः ॥ ६७ ॥ विश्वासागमनेहेतुर्विद्वांसमिति ॥ धर्षयंतिक्षोभयंति ॥ अलंसर्वप्रकारेण ॥ तदेवाह ॥ स्ववशमिति ॥ ६८ ॥ एकांतशीलताएकत्रास्थितिर्नकर्तव्येतिशेषः ॥ ६९ ॥ ७० ॥ जपन्गायत्रीमितिशेषः ॥ ७१ ॥ ७२ ॥ ७३ ॥ तान्पित्रादीन् ॥ तानीतिपाठेतेषांशुश्रूषादीनीत्यर्थः ॥ ७४ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सुधीर्धार्मिकः ॥ सदेतिपाठेसदासमाराध्येतिसंबंधः ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ऋच्छतिप्राप्नोति ॥ ८० ॥ ८१ ॥ ८२ ॥ ततआनुकूल्यात्तदेतिवा ॥ एवमग्रेपि ॥ ८३ ॥ साचेति ॥ साचभार्यायाविनीतातथाचसतित्रिवर्गोविनयश्चध्रुवंस्यादित्यर्थः ॥ विनीताचेदितिक्वचित्पाठः ॥ त्रिवर्गस्तत्रैवइतिक्वाचित् ॥ त्रिवर्गंविनयेदितिचान्यत्र ॥ तत्रविनयेद्विशेषेणप्रापयेदित्यर्थः

त्रीनेवामून्समाराध्यत्रींल्लोकान्सजयेत्सुधीः ॥ देववद्दिविदीव्येततेषांतोषंविवर्धयन् ॥ ७५ ॥ भूर्लोकंजननीभक्त्याभुवर्लोकंतथापितुः ॥ गुरोःशुश्रूषणा तद्वत्स्वर्लोकंचजयेत्कृती ॥ ७६ ॥ एतदेवनृणांप्रोक्तंपुरुषार्थचतुष्टयम् ॥ यदेतेषांहिसंतोषउपधर्मोन्यउच्यते ॥ ७७ ॥ अधीत्यवेदान्वेदौवावेदंवापि क्रमाद्द्विजः ॥ अप्रस्खलद्ब्रह्मचर्योगृहाश्रममथाश्रयेत् ॥ ७८ ॥ अविप्लुतब्रह्मचर्योविश्वेशानुग्रहाद्भवेत् ॥ अनुग्रहश्चवैश्वेशःकाशीप्राप्तिकरःपरः ॥ ७९ ॥ काशीप्राप्त्याभवेज्ज्ञानंज्ञानान्निर्वाणमृच्छति ॥ निर्वाणार्थंप्रयत्नोहिसदाचारस्यधीमताम् ॥ ८० ॥ सदाचारोगृहेयद्वन्नतथास्त्याश्रमांतरे ॥ विद्याजातंप ठित्वांतेगृहस्थाश्रममाश्रयेत् ॥ ८१ ॥ गृहाश्रमात्परंनास्तियदिपत्नीवशंवदा ॥ आनुकूल्यंहिदंपत्योस्त्रिवर्गोदयहेतवे ॥ ८२ ॥ आनुकूल्यंकलत्रंचेत्त्रिदि वेनापिकिंततः ॥ प्रातिकूल्यंकलत्रंचेन्नरकेणापिकिंततः ॥ ८३ ॥ गृहाश्रमःसुखार्थायभार्यामूलंचतत्सुखम् ॥ साचभार्याविनीतायात्रिवर्गोविनयोध्रुवम् ॥ ८४ ॥ जलौकयोपमीयंतेप्रमदामंदबुद्धिभिः ॥ मृगीदृशांजलौकानांविचारान्महदंतरम् ॥ ८५ ॥ जलौकाकेवलंरक्तमाददानातपस्विनी ॥ प्रमदासर्वं दादत्तेचित्तंवित्तंबलंसुखम् ॥ ८६ ॥ दक्षाप्रजावतीसाध्वीप्रियवाक्चवशंवदा ॥ गुणैरमीभिःसंयुक्तासाश्रीःस्त्रीरूपधारिणी ॥ ८७ ॥ गुरोरनुज्ञयास्नात्वाव्रतं वेदंसमाप्यच ॥ उद्वहेत्ततोभार्यांसवर्णांसाधुलक्षणाम् ॥ ८८ ॥ जनेतुरसगोत्रायामातुर्याप्यसपिंडका ॥ दारकर्मणियोग्यासाद्विजानांधर्मवृद्धये ॥ ८९ ॥ स्त्रीसंबंधेप्यपस्मारिक्षयिश्वित्रिकुलंत्यजेत् ॥ अभिशस्तिसमायुक्तंतथाकन्याप्रसूंत्यजेत् ॥ ९० ॥ रोगहीनांभ्रातृमतींस्वस्मात्किंचिल्लघीयसीम् ॥ उद्वहेत द्विजोभार्यांसौम्यास्यांमृदुभाषिणीम् ॥ ९१ ॥ नपर्वतर्क्षवृक्षाह्वांननदीसर्पनामिकाम् ॥ नपक्ष्यहिप्रेष्यनाम्नींसौम्याख्यामुद्वहेत्सुधीः ॥ ९२ ॥ नचातिरिक्तांहीनांगींनातिदीर्घांनवाकृशाम् ॥ नालोमिकांनातिलोमांनास्निग्धस्थूलमौलिजाम् ॥ ९३ ॥ मोहात्समुपयच्छेतकुलहीनांनकन्यकाम् ॥ हीनोपयमनाद्या तिसंतानमपिहीनताम् ॥ ९४ ॥ लक्षणानिपरीक्ष्यादौततःकन्यांसमुद्वहेत् ॥ सुलक्षणासदाचारापत्युरायुर्विवर्धयेत् ॥ ९५ ॥ ब्रह्मचारिसमाचारइतितेसमुदी रितः ॥ वटोद्भवप्रसंगेनस्त्रीलक्षणमथब्रुवे ॥ ९६ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेषट्त्रिंशत्तमोऽध्यायः ॥ ३६ ॥

॥ ८४ ॥ ८५ ॥ तपस्विनीसंतप्ताऽऽहाराभावेनजलवासाद्वा ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ पर्वतश्चऋक्षंचनक्षत्रंचऋक्षश्चभल्लूकइतिवा वृक्षश्चतदाह्वांतदाख्यामित्यर्थः ॥ सर्पाह्यो निष्फणसफणत्वेनावांतरभेदस्तत्राहयोनागाः ॥ प्रेष्यनाम्नींदास्यसूचकनाम्नीम् ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ इतिश्रीकाशीखंडटीकायांषट्त्रिंशत्तमोध्यायः ॥ ३६ ॥ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्रिंशत्तमेथसप्तोर्ध्वेऽध्यायेतीवमनोरमे ॥ लक्षणंवर्ण्यतेस्त्रीणांमृगीदृग्भिर्हृतात्मनाम् ॥ १ ॥ ननुनिवृत्तिमार्गंविहायकिमित्यतिबीभत्सितंब्रह्मज्ञानप्रतिकूलंस्त्रीयोन्यादिवर्णनंनिरूप्यतेभगवताव्यासेन ॥ तथाचोक्तंभाष्यकारेण ॥ स्त्रीपिंडसंपर्ककलुषितचेतसोब्रह्मनजानंतीति ॥ सत्यम् ॥ किंतुगुडजिह्विकान्यायेनबहिर्मुखानांविश्वेश्वरकथायांप्रवृत्त्यर्थमितिब्रूमः ॥ तथाचभागवतेमैत्रेयंप्रतिविदुरवचनम् ॥ मुनिर्विवक्षुर्भगवद्गुणानांसखापितेभारतमाहकृष्णः॥यस्मिन्नृणांग्राम्यसुखानुवादैर्मतिर्गृहीतातुहरेःकथायामिति॥अपिरत्रभिन्नक्रमेभारतमपीत्यनेनसंबध्यमानःपुराणानिसमुच्चिनोति ॥ हरेरित्यर्थपरोनि र्देशः ॥ पूर्वाध्यायांतेस्त्रीलक्षणमथब्रुवइत्युक्तमतस्तदेवसहेतुकमनुक्रामति ॥ सदागृहीति ॥ १ ॥ तत्रप्रथमंलक्षणाधिकरणंनिर्दिशति ॥ वपुरिति ॥ वपुर्ह्रस्वाद्यवयवरहितम् ॥ आवर्तःपाणि नाभ्यादौरोम्णांदक्षिणावर्तः ॥ छायाकांतिः ॥ सत्त्वमंतःकरणंपरपुरुषोपस्थितौमनोनिवारणकारणंगुणविशेषोवा ॥ वर्णोगौरादिः ॥ अष्टधाऽष्टप्रकारालक्षणभूमिकालक्षणस्थानम् ॥ २ ॥ वपुषोलक्षणंवक्तुंप्रतिजानीते ॥ आपादेति ॥ यावन्मौलिरुहंयावत्केशम् ॥ ३ ॥ शरीरस्यप्रत्यंगंलक्षणंवक्तुमंगानिकथयति आदावितिषड्भिः ॥ योषिदेवंभूतेतिषष्ठेनान्वयः ॥ कथंभूताषड्डुत्तरा षष्टिःषडधिकषष्ट्यवयवयुक्तेत्यर्थः ॥ कासेत्यतआह ॥ अंगलक्षणसत्त्वनिःशुभाशुभांगलक्षणसत्स्थानंसमीचीनाभूमिरित्यर्थः ॥ यद्वा षष्टिरेवविशेष्याषडधिकषष्ट्यवयवेत्यर्थः ॥ कासेत्यतआहां गलक्षणसत्त्वनिरीति ॥ तान्येवषडधिकानिषष्ट्यंगानिलक्षणस्थानानिदर्शयति पादतलमित्यादिना ॥ पादश्चतलंचेतिपादतलमित्येकवद्भावः ॥ पादतलेइतिपाठेद्विवचनम् ॥ रेखादिपंचकं पादस्यैव ॥ अंगुष्ठश्चांगुलीचनखश्चेतितेतथा ॥ गुल्फद्वयंपादग्रंथिद्वयम् ॥ पार्ष्णीप्रायोगुल्फयोरधःपादयोःपश्चाद्भागौ ॥ जंघेप्रसृतेजानुनोरधोभागौ ॥ जानुनीऊरूपर्वाणौआवुइतिख्याताvि

स्कंदउवाच ॥ ॥ सदागृहीसुखंभुंक्तेस्त्रीलक्षणवतीयदि ॥ अतःसुखसमृद्ध्यर्थमादौलक्षणमीक्षयेत् ॥ १ ॥ वपुरावर्तगंधाश्चच्छायासत्त्वंस्वरोगतिः ॥ वर्णश्चेत्यष्टधाप्रोक्ताबुधैर्लक्षणभूमिका ॥ २ ॥ आपादतलमारभ्ययावन्मौलिरुहंक्रमात् ॥ शुभाशुभानिवक्ष्यामिलक्षणानिसुनेशृणु ॥ ३ ॥ आदौपा दतलंरेखास्ततोंगुष्ठांगुलीनखाः ॥ पृष्ठंगुल्फद्वयंपार्ष्णीजंघेरोमाणिजानुनी ॥ ४ ॥ ऊरूकटीनितंबस्फिग्भगोजघनबस्तिके ॥ नाभिःकुक्षिद्वयंपार्श्वो दरमध्यवलित्रयम् ॥ ५ ॥ रोमालीहृदयंवक्षोवक्षोजद्वयचूचुकम् ॥ जत्रुस्कंधांसकक्षादोर्मणिबंधकरद्वयम् ॥ ६ ॥

त्यर्थः ॥ तद्ग्रंथीघुटिकेगुल्फौपुमान्पार्ष्णिस्तयोरधः ॥ जंघातुप्रसृताजानूरुपर्वाष्ठीवदस्त्रियामित्यमरः ॥ ४ ॥ ऊरूसक्थिनीजानुनोरुपरिभागौ ॥ कटीउन्नतमांसखंडेश्रोण्याविितियावत् ॥ नितंबौचस्त्रीकट्योःपश्चाद्भागौकटिःश्रोणिःककुद्मती ॥ पश्चान्नितंबःस्त्रीकट्याइत्यमरः ॥ स्फिचौकटिप्रोथौ ॥ स्त्रियांस्फिचौकटिप्रोथावित्यमरः ॥ नितंबश्चस्फिक्चेतिसमाहारत्वादेकवद्भावः ॥ भगोभगंयोनिरित्यर्थः ॥ भगंयोनिर्द्वयोरित्यमरः ॥ नितंबस्फिग्भगांइतिक्वचित्पाठः ॥ जघनंस्त्रीकट्याःपुरोभागः ॥ स्त्रीकट्याःक्लीबेतुजघनंपुरइत्यमरः ॥ बस्तिर्नाभेरधोभागः ॥ बस्ति र्नाभेरधोद्वयोरित्यमरः ॥ जघनंचबस्तिश्चतेतथा ॥ नाभिःप्रसिद्धा ॥ कुक्षिद्वयंजठरद्वयम् ॥ पिचंडकुक्षीजठरोदरंतुंदमित्यमरः ॥ पार्श्वंचबाहुमूलस्याधोभागः ॥ पार्श्वमस्त्रीतयोरधइत्यमरः ॥ उदरंच ॥ यद्यपिकुक्ष्युदरयोःपर्यायत्वंतथापिमध्यप्रदेशउदरंतदुभयपार्श्वप्रदेशःकुक्षिरितिज्ञातव्यम् ॥ अतएवकुक्षिद्वयमितिद्वयपदंप्रागुक्तम् ॥ मध्यंचमध्यमम् ॥ मध्यमंचावलग्नंचमध्यो स्त्रीद्वौपरौद्वयोरित्यमरः ॥ वलित्रयंच ॥ त्रयपदंशुभलक्षणाभिप्रायेणनोद्देशमात्रापेक्षया ॥ समाहारत्वादेकवद्भावः ॥ ५ ॥ रोमालीरोमपंक्तिः ॥ हृदयंहृदाधारउदरादूर्ध्वप्रदेशः ॥ वक्षउरः ॥ उरोवत्संचवक्षश्चेत्यमरः ॥ वक्षोजद्वयंस्तनद्वयम् ॥ चूचुकंकुचाग्रम् ॥ चूचुकंतुकुचाग्रंस्यादित्यमरः ॥ वक्षोजद्वयंचूचुकंचेत्येकवद्भावः ॥ जत्रुस्कन्धस्यसन्धिः ॥ संधीतस्यैवजत्रुणीत्यमरः ॥ स्कन्ध श्चभुजशिरः ॥ स्कन्धोभुजशिरोंसोऽस्त्रीत्यमरः ॥ अंसश्चतस्यैवो CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri ॥ बाहुमूलेउभेकक्षावित्यमरः ॥ तेतथा ॥ दोर्हस्तः ॥ भुजबाहु

प्रवेष्ठोदोरित्यमरः ॥ मणिवंधकरद्वयंतत्पर्यन्तहस्तद्वयमित्यर्थः ॥ ६ ॥ पृष्ठिःपृष्ठम् ॥ कृकाटिकाचअवटुःपृष्ठवंशस्योपरिभागोघाटइतिगौडेप्रसिद्धः ॥ अवटुर्घाटाकृकाटिकेत्यमरः ॥ कंठश्चगलः ॥ कंठोगलइत्यमरः ॥ तेतथा ॥ क्लीवत्वमार्षम् ॥ कृकाटिकाकंठइतिपाठेपृथक्पदम् ॥ चिवुकमधरस्याधोभागः ॥ अधस्ताच्चिवुकमित्यमरः ॥ हनुःकपोलयोःपरभागः ॥ तत्पराहनुरित्यमरः ॥ ७ ॥ कपोलौगण्डौ ॥ गण्डौकपोलावित्यमरः ॥ अधरश्चउत्तरोष्ठश्चअधरोत्तरोष्ठौरदनच्छदौ ॥ उत्तरपदंतुस्पष्टार्थम् ॥ यद्वा अधरोत्तरौचयावोष्ठौ ॥ ओष्ठाधरौतुरदनच्छदौदशनवाससीइत्यमरः ॥ द्विजादंताश्चजिह्विकाचजिह्वातास्तथा ॥ घण्टिकाजिह्वायाअधोभागः ॥ तालुकाकुदंजिह्वातउपरिप्रदेशः ॥ तालुतुकाकुदमित्यमरः ॥ हसितंहास्यम् ॥ क्षुतंक्षुत् ॥ स्त्रीक्षुत्क्षुतंक्षवः पुंसीत्यमरः ॥ ८ ॥ पक्ष्मनेत्ररक्षकम् ॥ भ्रूर्दृशउपरिवर्तमानावयवविशेषः ॥ ऊर्ध्वंदृग्भ्यांभ्रुवौस्त्रियामित्यमरः ॥ कर्णौचभालंचललाटंतानितथा ॥ मौलिश्चशिरःसीमन्तश्चसिंदूराधारकेशवेशविस्तारविशेषः ॥ मौलिजाश्चकेशास्तेतथा ॥९॥ तन्त्रेणपादतलयोःशुभाशुभेलक्षणेआह स्त्रीणामितिद्वयेन ॥ मांसलंमांसयुक्तंमांसैःसुललितमित्यर्थः ॥ १० ॥ खण्डितप्रतिबिंबकंवालुकादावजाताचिह्नम्॥

पाणिपृष्ठंपाणितलंरेखांगुष्ठांगुलीनखाः ॥ पृष्ठिःकृकाटिकाकंठेचिवुकंचहनुद्वयम् ॥ ७ ॥ कपोलौवक्त्रमधरोत्तरोष्ठौद्विजजिह्विकाः ॥ घंटिकातालुहसितंनासिकाक्षुतमक्षिणी ॥ ८ ॥ पक्ष्मभ्रूकर्णभालानिमौलिसीमंतमौलिजाः ॥ षष्टिःषडुत्तरायोषिदंगलक्षणसत्खनिः ॥ ९ ॥ स्त्रीणांपादतलंस्निग्धंमांसलंमृदुलंसमम् ॥ अस्वेदमुष्णमरुणंबहुभोगोचितंस्मृतम् ॥ १० ॥ रूक्षंविवर्णंपरुषंखंडितप्रतिबिंबकम् ॥ शूर्पाकारंविशुष्कंचदुःखदौर्भाग्यसूचकम् ॥ ११ ॥ चक्रस्वस्तिकशंखाब्जध्वजमीनातपत्रवत् ॥ यस्याःपादतलेरेखासाभवेत्क्षितिपांगना ॥ १२ ॥ भवेदखंडभोगायोर्द्ध्वामध्यांगुलिसंगता ॥ रेखाखुसर्पकाकाभादुःखदारिद्र्यसूचिका ॥ १३ ॥ उन्नतोमांसलोंगुष्ठोवर्तुलोतुलभोगदः ॥ वक्रोह्रस्वश्चचिपिटःसुखसौभाग्यभंजकः ॥ १४ ॥ विधवाविपुलेनस्याद्दीर्घांगुष्ठेनदुर्भगा ॥ मृदवोंगुलयःशस्तावनावृत्ताःसमुन्नताः ॥१५॥ दीर्घांगुलीभिःकुलटाकृशाभिरतिनिर्धना ॥ ह्रस्वायुष्याचह्रस्वाभिर्भुग्नाभिर्भुग्नवर्तिनी ॥ १६ ॥ चिपिटाभिर्भवेद्दासीविरलाभिर्दरिद्रिणी ॥ परस्परंसमारूढाःपादांगुल्योभवंतिहि ॥ १७ ॥ हत्वाबहूनपिपतीन्परप्रेष्यातदाभवेत् ॥ यस्याःपथिसमायांत्यारजोभूमेःसमुच्छलेत् ॥ १८॥ सापांसुलाप्रजायेतकुलत्रयविनाशिनी ॥ यस्याःकनिष्ठिकाभूमिंनगच्छंत्याःपरिस्पृशेत् ॥ १९ ॥ सानिहत्यपतिंयोषाद्वितीयंकुरुतेपतिम् ॥ अनामिकाचमध्याचयस्याभूमिंनसंस्पृशेत् ॥ २० ॥ पतिद्वयंनिहंत्याद्याद्वितीयाचपतित्रयम् ॥ पतिहीनत्वकारिण्यौहीनेतेद्वेइमेयदि ॥ २१ ॥ प्रदेशिनीभवेद्यस्याअंगुष्ठाव्यतिरेकिणी ॥ कन्यैवकुलटासास्याद्दोषएवविनिश्चयः ॥ २२ ॥

एवंशुभाशुभलक्षणद्वयमुक्तम् ॥११॥ पादतलेरेखायाःशुभाशुभेलक्षणेआह चक्रेतिद्वाभ्याम् ॥ स्वस्तिकंत्रिकोणरेखाविशेषः ॥ क्षितिपांगनाराजपत्नी ॥ तदुक्तंसामुद्रिके ॥ यस्याःपाणितलेपद्मंपादेचैवविशेषतः ॥चामरंशंखचक्रंचसापिराज्ञीभविष्यतीति ॥१२॥ ऊर्ध्वाऊर्ध्वगामिनी ॥ आखुर्मूषकश्चसर्पश्चकाकश्चतेषामाभाआकारोयस्याःसारेखादुःखदारिद्र्यसूचिकेत्यन्वयः ॥ नख्यहीतिपाठेनखीजंतुविशेषः ॥ १३ ॥ पादांगुष्ठस्यशुभेलक्षणेआह उन्नतइतिसार्धेन॥चिपिटःचिपिटकाकारः ॥ चेमढइतिलोकेप्रसिद्धइत्यर्थः ॥१४॥ अंगुलीनांशुभाशुभेलक्षणेआह मृदवइतिसार्द्धैरष्टभिः ॥ १५ ॥ भुग्नाभिःकुटिलाभिः ॥ भुग्नवर्तिनीकुटिलव्यवहारवर्तिनी ॥ १६ ॥ १७ ॥ परप्रेष्यापराधीना॥समुच्छलेदूर्ध्वंगच्छेत् ॥ १८ ॥ पांसुलाव्यभिचारिणी ॥ नपरिस्पृशेदित्यन्वयः ॥ १९ ॥ २० ॥ आद्याऽनामिकाऽस्पृष्टभूमिका ॥ द्वितीयामध्यमाऽस्पृष्टभूमिका ॥ तेअनामिकामध्येहीनेरहितेन्यूनेवा ॥ २१ ॥ अंगुष्ठाव्यतिरेकिणीअंगुष्ठेनसंबद्धा ॥ अंगुष्ठव्यतिरेकिणीतिपाठे



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कुलटापुंश्चली ॥ २२ ॥ पादनखानांशुभलक्षणमाह ॥ स्निग्धाइति ॥
अंगुष्ठेनात्यंतभिन्नाविरला ॥ अंगुष्ठादतिरेकिणीतिपाठेअंगुष्ठादपिदीर्घेत्यर्थः ॥ कन्यैवाऽविवाहितैव ॥ कुलटापुंश्चली ॥ २२ ॥ पादनखानांशुभलक्षणमाह ॥ स्निग्धाइति ॥ अंगुष्ठेनात्यंतभिन्नाविरला ॥
एतद्विपरीताअशुभाइत्यर्थः ॥ एतदुक्तंभवति ॥ एवमन्यत्रापियत्रयत्राशुभलक्षणंनोक्तंतत्रतत्रार्थाज्ज्ञातव्यम् ॥ २३ ॥ पादपृष्ठस्यशुभाशुभलक्षणेआह राज्ञीत्वेतिद्वयेन ॥ २४ ॥
॥ २५ ॥ पादग्रंथ्यपरपर्यायस्यगुल्फस्यशुभाशुभलक्षणेआह गूढावित्येकेन ॥ स्थपुटौनिम्नौ ॥ सुपुष्टावितिपाठेस्थूलावित्यर्थः ॥ दृश्यौप्राकृतौकुत्सितावितियावत् ॥ यद्वा दृशौनेत्रेपश्यतस्तनूकुरुत
इतिदृश्यौनेत्रयोर्व्रीडाजनकावित्यर्थः ॥ २६ ॥ पादपश्चाद्भागस्यपार्ष्णेःशुभाशुभेलक्षणेआह समपार्ष्णिरित्येकेन ॥ २७ ॥ जानुगुल्फमध्यमभागस्यजंघाख्यस्यशुभलक्षणमाह ॥ रोमहीन
इति ॥ यस्याःजंघेरोमहीनेभवतःसाराजपत्नीभवतीतिसंबंधः ॥ क्रमवर्तुलेअधोभागमारभ्योपर्युपरिकिंचित्किंचिदधिकस्थूलेइत्यर्थः ॥ समवर्तुलेइतिपाठेसमेउच्चनीचरहितेचतेवर्तुलेचेतितथा ॥

स्निग्धाःसमुन्नतास्ताम्रावृत्ताःपादनखाःशुभाः ॥ २३ ॥ राज्ञीत्वसूचकंस्त्रीणांपादपृष्ठंसमुन्नतम् ॥ अस्वेदमशिराढ्यंचमसृणंमृदुमांसलम् ॥ २४ ॥
स्निग्धाःसमुन्नतास्ताम्रावृत्ताःपादनखाःशुभाः ॥ २३ ॥ राज्ञीत्वसूचकंस्त्रीणांपादपृष्ठंसमुन्नतम् ॥ अस्वेदमशिराढ्यंचमसृणंमृदुमांसलम् ॥ २४ ॥ दरिद्रामध्यनम्रेणशिरालेनसदाध्वगा ॥ रोमाढ्येनभवेद्दासीनिर्मांसेनचदुर्भगा ॥ २५ ॥ गूढौगुल्फौशिवायोक्तावशिरालौसुवर्तुलौ ॥ स्थपुटौशिथिलौ दृश्यौस्यातांदौर्भाग्यसूचकौ ॥ २६ ॥ समपार्ष्णिःशुभानारीपृथुपार्ष्णिश्चदुर्भगा ॥ कुलटोन्नतपार्ष्णिस्यादीर्घपार्ष्णिश्चदुःखभाक् ॥ २७ ॥ रोमहीने समेस्निग्धेयज्जंघेक्रमवर्तुले ॥ साराजपत्नीभवतिविशिरेसुमनोहरे ॥ २८ ॥ एकरोमाराजपत्नीद्विरोमाचसुखावहा ॥ त्रिरोमारोमकूपेषुभवेद्वैधव्यदुः खभाक् ॥ २९ ॥ वृत्तंपिशितसंलग्नंजानुयुग्मंप्रशस्यते ॥ निर्मांसंस्वैरचारिण्यादरिद्रायाश्चविश्लथम् ॥ ३० ॥ विशिरैःकरभाकारैरूरुभिर्मसृणैर्घनैः ॥ सुवृत्तैरोमरहितैर्भवेयुर्भूपवल्लभाः ॥ ३१ ॥ वैधव्यंरोमशैरुक्तंदौर्भाग्यंचिपिटैरपि ॥ मध्यच्छिद्रैर्महादुःखंदारिद्र्यंकठिनत्वचैः ॥ ३२ ॥ चतुर्भिरंगुलैः शस्ताकटिर्विंशतिसंयुतैः ॥ समुन्नतनितंबाढ्याचतुरस्रामृगीदृशाम् ॥ ३३ ॥ विनताचिपिटादीर्घानिर्मांसासंकटाकटिः ॥ ह्रस्वारोमयुतानार्यादुःखवैधव्यसूचिका ॥ ३४ ॥ नितंबबिंबोनारीणामुन्नतोमांसलःपृथुः ॥ महाभोगायसंप्रोक्तस्तदन्योऽशर्मणेमतः ॥ ३५ ॥ कपित्थफलवद्वृत्तौमृदुलौमांसलौ घनौ ॥ स्फिचौवलिविनिर्मुक्तौरतिसौख्यविवर्धनौ ॥ ३६ ॥

अर्थादेतद्विपरीतमशुभलक्षणमित्युक्तमेव ॥ २८ ॥ कूपोत्थस्यरोम्णःशुभाशुभेलक्षणेआह एकरोमेत्येकेन ॥ रोमकूपेष्वितित्रिष्वपिसंबध्यते ॥ २९ ॥ जानुनःशुभाशुभेलक्षणेआह वृत्तमित्येकेन ॥ वृत्तंवर्तुलम् ॥ पिशितसंलग्नंमांसपिंडितम् ॥ विश्लथमदृढम् ॥ ३० ॥ अवयवाः १२ ॥ ऊरोःशुभाशुभेलक्षणेआह विशिरैरितिद्वयेन ॥ करभाकारैर्मणिबंधादाकनिष्ठाद्धस्तस्य बहिर्भागसदृशैर्हस्तिशुंडाकारैरितिवा ॥ मसृणैश्चिक्कणैः ॥ घनैर्निबिडैः ॥ सुवृत्तैःसुवर्तुलैः ॥ ३१ ॥ चिपिटैर्निम्नैः ॥ मध्यच्छिद्रैर्मध्येशिरालैः मध्येछिद्राणिनिम्नस्थानानियेषांतैरितिवा ॥ ॥ ३२ ॥ कट्याःशुभाशुभेलक्षणेआह चतुर्भिरितिद्वयेन चतुरस्राचतुःकोणाआयतेत्यर्थः ॥ ३३ ॥ विनतानम्रा ॥ संकटासम्यक्कठिनासंकीर्णावा ॥ ३४ ॥ नितंबस्यशुभाशुभेलक्षणेआह नितंबेत्येकेन ॥ तदन्यस्तद्विपरीतः ॥ अशर्मणेदुःखाय ॥ ३५ ॥ कटिप्रोथापरपर्यायायाःस्फिचःशुभलक्षणमाह कपित्थेत्येकेन ॥ कपित्थफलंश्रीफलाकारफलविशेषः ॥ ३६ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भगस्यशुभाशुभेलक्षणेआह शुभइतिपंचभिः॥कमठपृष्ठाभः कूर्मपृष्ठवन्निबिडोदृढइतियावत्॥ गजस्कंधोपमः करिस्कंधवदुन्नतः॥कन्याजःकन्याजनकः॥पुत्रजःपुत्रजनकः ॥३७॥ आःखूनांमूषकानामिव
पिंगलानिरोमाणियस्यसतथा॥गूढोमणिरिवमणिर्वरांगत्वान्मध्यभागविशेषोयस्यसतथा॥सुश्लिष्टःसुनिबिडः॥संहतोदृढः॥पृथुर्विस्तीर्णः॥ तुंगउच्चः॥कमलपर्णाभःपद्मपत्राकारः ॥ कमलवर्णाभइतिक्व
चित् ॥ कमलगर्भाभइतिचान्यत्र ॥ अश्वत्थदलाकृतिःपिप्पलपत्रसदृशः ॥३८॥ कुरंगखुररूपोहरिणशंफतुल्यः॥तथाचश्रूयते॥अन्यत्रभीष्माद्गांगेयादन्यत्रचहनूमतः॥हरिणीखुरमात्रेणचर्मणामोहि
तंजगदिति ॥ चुल्लिकोदरसन्निभःपाकाग्न्याधारमध्यसदृशः ॥ रोमशोरोमबहुलः॥विवृतास्योऽतिविस्तीर्णमुखः ॥ दृश्यास्थूलास्पष्टावानासायस्यसतथा ॥ अत्रनासानामाक्षतायायोनेर्मध्यप्रदेशः ॥
अतिदुर्भगोऽतिकुत्सितः ॥ अतिदुर्भगत्वेहेतुर्वा ॥ ३९ ॥ शंखावर्तःशंखसदृशःशंखवत्त्रिरेखाद्यंकितइतिवा ॥ गर्भंनेच्छातिवंध्याभवतीत्यर्थः ॥ खर्पराकारः भग्नघटखर्पराकारः ॥ तस्मैवहेयमुद
कंघटखर्परेणेत्युक्तेः ॥ कर्पटाकारइतिपाठेवस्त्रविशेषाकारइत्यर्थः ॥ तथाचदृश्यते ॥ कोरेकर्पटकेचैवआयसेताम्रभाजने ॥ भुंजन्भिक्षुर्नलिप्येतलिप्यतेतुपरिग्रहादिति ॥ ४० ॥ वंशवेतसपत्राभःवंशः

शुभःकमठपृष्ठाभोगजस्कंधोपमोभगः ॥ वामोन्नतस्तुकन्याजःपुत्रजोदक्षिणोन्नतः ॥३७॥ आखुरोमागूढमणिःसुश्लिष्टःसंहतःपृथुः ॥ तुंगःकमलपर्णाभः
शुभोश्वत्थदलाकृतिः ॥ ३८ ॥ कुरंगखुररूपोयश्चुल्लिकोदरसन्निभः ॥ रोमशोविवृतास्यश्चदृश्यनासोतिदुर्भगः ॥ ३९ ॥ शंखावर्तोभगोयस्याःसागर्भ
मिहनेच्छति ॥ चिपिटःखर्पराकारःकिंकरीपददोभगः ॥४०॥ वंशवेतसपत्राभोगजरोमोच्चनासिकः ॥ विकटःकुटिलाकारोलंबगल्लस्तथाऽशुभः॥४१॥
भगस्यभालंजघनंविस्तीर्णंतुंगमांसलम् ॥ मृदुलंमृदुलोमाढ्यंदक्षिणावर्तमीडितम् ॥ ४२ ॥ वामावर्तंचनिर्मांसंभुग्नंवैधव्यसूचकम् ॥ संकटस्थपुटंरूक्षं
जघनंदुःखदंसदा ॥ ४३ ॥ बस्तिःप्रशस्ताविपुलामृद्वीस्तोकसमुन्नता ॥ रोमशाचशिरालाचरेखांकानैवशोभना ॥ ४४ ॥ गंभीरादक्षिणावर्तानाभी
स्यात्सुखसंपदे ॥ वामावर्तासमुत्तानाव्यक्तग्रंथिर्नशोभना ॥ ४५ ॥ सूतेसुतान्बहून्नारीपृथुकुक्षिःसुखास्पदम् ॥ क्षितीशंजनयेत्पुत्रंमंडूकाभेनकुक्षिणा
॥ ४६ ॥ उन्नतेनवलीभाजासावर्तेनापिकुक्षिणा ॥ वंध्याप्रव्रजितादासीक्रमाद्योषाभवेदिह ॥ ४७ ॥

प्रसिद्धोवेतसोवानीरस्तयोःपत्रसदृशः ॥ गजस्येवरोमाणियस्यसतथा ॥ उच्चनासिकोदीर्घनासिकः ॥ विकटःकुत्सितः ॥ कुटिलाकारोवक्राकारः॥ लंबगल्लःदीर्घमुखाऽधोभागः ॥ अशुभइतिच्छेदः
॥ ४१ ॥ जघनस्यशुभाशुभेलक्षणेआह भगस्येतिद्वाभ्याम् ॥ भालंललाटंभगस्योपरिभागइत्यर्थः ॥ तुंगमांसलंतुंगंचतन्मांसलंमांसयुक्तंचतत्तथा ॥ मृदुलंकोमलम् ॥ दक्षिणावर्तं
यथास्यात्तथामृदुलोमाढ्यमित्यन्वयः ॥ ईडितंस्तुतंशुभमित्यर्थः ॥ ४२ ॥ वामावर्तंचरेखाणांरोम्णामित्येववा ॥ भुग्नंकुटिलंविश्लिष्टावयवमित्यर्थः ॥ संकटस्थपुटंसंकटंसंकुचितंचतत्स्थ
पुटंनिम्नंचेतितथा ॥ ४३ ॥ बस्तेःशुभाशुभेलक्षणेआह बस्तिरित्येकेन ॥ मृद्वीकोमला ॥ स्तोकसमुन्नताईषदुन्नता ॥ रेखांकारेखांकिता ॥ ४४ ॥ नाभेःशुभाशुभेलक्षणेआह
गंभीरेत्येकेन ॥ गंभीरानिम्ना ॥ दक्षिणावर्तारोमभीरेखाभिर्वेतिज्ञेयम् ॥ समुत्तानाउच्चा ॥ व्यक्ताअभिव्यक्ताग्रंथिर्ग्रथनंमध्यभागोयस्याःसातथा ॥ ४५ ॥ अवयवाः २० ॥ कुक्षेःशुभाशुभे
लक्षणेआह सूतइतिद्वयेन ॥ सुखस्यास्पदंसुखास्पदंसुखभाजनमित्यर्थः ॥ मण्डूकाभेनभेकोदरतुल्येन ॥ ४६ ॥ वलीभाजाश्लथचर्मभाजा ॥ सावर्तेनावर्तसहितेन ॥ क्रमादिति ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

उन्नतेनकुक्षिणावंध्या ॥ वलीभाजाप्रव्रजितापरिव्राजिका ॥ आवर्तसहितेनदासीभवेदिति ॥ ४७ ॥ पार्श्वस्यशुभाशुभेलक्षणेआह समैरितिद्वयेन ॥ योषित्स्त्रीसमैरित्यादिविशेषणविशिष्टैः ॥ पार्श्वैःसौभाग्यसुखयोर्निधानमाश्रयःस्यादितियोजना ॥ पार्श्वयोरवांतरभेदविवक्षयापार्श्वैरितिवहुवचनम् ॥ यद्वा योषिदितिजातावेकवचनम् ॥ पार्श्वैरितिव्यक्ताविति ॥ ४८ ॥ दुःखानांशेवधिर्निधिर्दुःखानामाश्रयइत्यर्थः ॥ ४९ ॥ उदरस्यशुभाशुभेलक्षणेआह उदरेणेतित्रिभिः ॥ अतितुच्छेनातिसूक्ष्मेणेत्यर्थः ॥ ५० ॥ दरिद्रायाःस्त्रियाःकुंभाकारादिरूपमुदरंजायतइत्यन्वयः ॥ ५१ ॥ देवरंभर्तृभ्रातरम् ॥ ५२ ॥ मध्यस्यशुभलक्षणमाह मध्येतिपादेन ॥ वलेःशुभलक्षणमाह भोगाढ्येतिपादेन ॥ अंगावयवसंकीर्तनेत्रयपदंशुभलक्षणाभिप्रायेण ॥ रोमाल्याः

समैःसमांसैर्मृदुभिर्योषिन्मग्नास्थिभिःशुभैः ॥ पार्श्वैःसौभाग्यसुखयोर्निधानंस्यादसंशयम् ॥ ४८ ॥ यस्यादृश्यशिरेपार्श्वेउन्नतेरोमसंयुते ॥ निरपत्याचदुःशीलासाभवेद्दुःखशेवधिः ॥ ४९ ॥ उदरेणातितुच्छेनविशिरेणमृदुत्वचा ॥ योषिद्भवतिभोगाढ्यानित्यंमिष्टान्नसेविनी ॥ ५० ॥ कुंभाकारंदरिद्रायाजठरंचमृदंगवत् ॥ कूष्मांडाभंयवाभंचदुष्पूरंजायतेस्त्रियाः ॥ ५१ ॥ सुविशालोदरीनारीनिरपत्याचदुर्भगा ॥ प्रलंबजठराहंतिश्वशुरंचापिदेवरम् ॥ ५२ ॥ मध्यक्षामाचसुभगाभोगाढ्यासवलित्रया ॥ ऋज्वीतन्वीचरोमालीयस्याःसाशर्मनर्मभूः ॥ ५३ ॥ कपिलाकुटिलास्थूलाविच्छिन्नारोमराजिका ॥ चौरवैधव्यदौर्भाग्यंविदध्यादिहयोषिताम् ॥ ५४ ॥ निर्लोमहृदयंयस्याःसमंनिम्नत्ववर्जितम् ॥ ऐश्वर्यंचाप्यवैधव्यंप्रियप्रेमचसालभेत् ॥ ५५ ॥ विस्तीर्णहृदयायोषापुंश्चलीनिर्दयातथा ॥ उद्भिन्नरोमहृदयापतिंहंतिविनिश्चितम् ॥ ५६ ॥ अष्टादशांगुलततमुरःपीवरमुन्नतम् ॥ सुखायदुःखायभवेद्रोमशंविषमंपृथु ॥ ५७ ॥ घनौवृत्तौदृढौपीनौसमौशस्तौपयोधरौ ॥ स्थूलाग्रौविरलौशुष्कौवामोरूणांनशर्मदौ ॥ ५८ ॥ दक्षिणोन्नतवक्षोजापुत्रिणीत्वग्रणीर्मता ॥ वामोन्नतकुचासूतेकन्यांसौभाग्यसुंदरीम् ॥ ५९ ॥ अरघट्टघटीतुल्यौकुचौदौःशील्यसूचकौ ॥ पीवरास्यौसांतरालौपृथुपांतौनशोभनौ ॥ ६० ॥ मूलेस्थूलौक्रमकृशावग्रेतीक्ष्णौपयोधरौ ॥ सुखदौपूर्वकालेतुपश्चादत्यंतदुःखदौ ॥ ६१ ॥ सुदृढंचूचुकयुगंशस्तंश्यामंसुवर्तुलम् ॥ अंतर्मग्नंचदीर्घंचकृशंक्लेशायजायते ॥ ६२ ॥ पीवराभ्यांचजत्रुभ्यांधनधान्यनिधिर्वधूः ॥ श्लथास्थिभ्यांचनिम्नाभ्यांविषमाभ्यांदरिद्रिणी ॥ ६३ ॥

शुभाशुभेलक्षणेआह ऋज्वीतिसार्धेन ॥ शर्मनर्मभूःसुखक्रीडयोःस्थानम् ॥ ५३ ॥ चौरसदीनांत्रयाणामेकवद्भावः ॥ तत्रचौरंचौर्यम् ॥ ५४ ॥ हृदयस्यशुभाशुभेलक्षणेआह निर्लोमेतिद्वाभ्याम् ॥ ५५ ॥ ५६ ॥ वक्षसःशुभाशुभेलक्षणेआह अष्टादशेत्येकेन ॥ ५७ ॥ वक्षोजस्यशुभाशुभेलक्षणेआह घनावितिचतुर्भिः ॥ शस्तौप्रशस्तौ ॥ ५८ ॥ तुएव ॥ अग्रणीःश्रेष्ठा ॥ स्वग्रणीरितिक्वचित् ॥ पुत्रिणीस्वग्रणीरितिचान्यत्र ॥ ५९ ॥ अरघट्टोघटीयन्त्रंरहट्टइतिगुर्जरदेशेप्रसिद्धम् ॥ तत्रस्थायाघटीतत्तुल्यौ ॥ ६० ॥ ६१ ॥ चूचुकस्यशुभाशुभेलक्षणेआह सुदृढमित्येकेन ॥ सुदृशामितिक्वचित् ॥ ६२ ॥ अवयवाः ३० ॥ जत्रुणःशुभाशुभेलक्षणेआह पीवराभ्यामित्येकेन ॥ श्लथान्यस्थीनिययोस्ताभ्याम् ॥ श्लथाभ्यांचैवेतिक्वचित् ॥ ६३ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्कंधस्यशुभाशुभेलक्षणेआहावद्धावित्येकेन ॥ प्रैष्यंदास्यम् ॥ ६४ ॥ अंसस्यशुभाशुभेलक्षणेआह निगूढेत्येकेन ॥ समुच्चाग्रौउन्नताग्रौ ॥ ६५ ॥ कक्षयोःशुभाशुभेलक्षणेआह कक्षेइत्येकेन ॥ शिरालेशिरायुक्ते ॥ स्वेदमेदुरेस्वेदास्निग्धे ॥ ६६ ॥ दोषःशुभाशुभेलक्षणेआह स्यातामितिद्वयेन ॥ गूढौअस्थिग्रंथीययोस्तौगूढास्थिग्रंथीतौचतौकोमलौचेतितथा ॥ ६७ ॥ ॥ ६८ ॥ मणिवंधावधिकरस्यशुभलक्षणमाहांभोजेत्येकेन ॥ अंगुष्ठोऽगुलयश्चसम्यङ्मुखंयस्यतत्तथा ॥ ६९ ॥ क्रममनादृत्यपाणितलस्यशुभाशुभेलक्षणेआह मृदुमध्योन्नतमितिद्वयेन ॥ ७० ॥

अबद्धावनतौस्कंधावदीर्घावकृशौशुभौ ॥ वक्रौस्थूलौचरोमाढ्यौप्रैष्यवैधव्यसूचकौ ॥ ६४ ॥ निगूढसंधीस्त्रस्ताग्रौशुभावंसौसुसंहतौ ॥ वैधव्यदौसमुच्चाग्रौनिर्मांसावतिदुःखदौ ॥ ६५ ॥ कक्षेसुसूक्ष्मरोमेतुतुंगेस्निग्धेचमांसले ॥ शस्तेनशस्तेगंभीरेशिरालेस्वेदमेदुरे ॥ ६६ ॥ स्यातांदोषौसुनिर्दोषौगूढास्थिग्रंथिकोमलौ ॥ विशिरौचविरोमाणौसरलौहरिणीदृशाम् ॥ ६७ ॥ वैधव्यंस्थूलरोमाणौह्रस्वौदौर्भाग्यसूचकौ ॥ परिक्लेशायनारीणांपरिदृश्यशिरौभुजौ ॥ ६८ ॥ अंभोजमुकुलाकारमंगुष्ठांगुलिसंमुखम् ॥ हस्तद्वयंमृगाक्षीणांवहुभोगायजायते ॥ ६९ ॥ मृदुमध्योन्नतंरक्तंतलंपाण्योररंध्रकम् ॥ प्रशस्तंशस्तरेखाढ्यमल्परेखंशुभश्रियम् ॥ ७० ॥ विधवाबहुरेखेणविरेखेणदरिद्रिणी ॥ भिक्षुकीसुशिराढ्येननारीकरतलेनवै ॥ ७१ ॥ विरोमविशिरंशस्तंपाणिपृष्ठंसमुन्नतम् ॥ वैधव्यहेतुरोमाढ्यंनिर्मांसंस्नायुमत्त्यजेत् ॥ ७२ ॥ रक्ताव्यक्तागभीराचस्निग्धापूर्णाचवर्तुला ॥ कररेखांगनायाःस्याच्छुभाभाग्यानुसारतः ॥ ७३ ॥ मत्स्येनसुभगानारीस्वस्तिकेनवसुप्रदा ॥ पद्मेनभूपतेःपत्नीजनयेद्भूपतिंसुतम् ॥ ७४ ॥ चक्रवर्तिस्त्रियाःपाणौनंद्यावर्तःप्रदक्षिणः ॥ शंखातपत्रकमठानृपमातृत्वसूचकाः ॥ ७५ ॥ तुलामानाकृतीरेखेवणिक्पत्नीत्वहेतुके ॥ गजवाजिवृषाकाराःकरेवामेमृगीदृशाम् ॥ ७६ ॥ रेखाप्रासादवज्राभाब्रूयुस्तीर्थकरंसुतम् ॥ कृषीवलस्यपत्नीस्याच्छकटेनयुगेनवा ॥ ७७ ॥ चामरांकुशकोदंडैराजपत्नीभवेद्ध्रुवम् ॥ अंगुष्ठमूलान्निर्गत्यरेखायातिकनिष्ठिकाम् ॥ ७८ ॥ यदिसापतिहंत्रीस्याद्दूरतस्तांत्यजेत्सुधीः ॥ त्रिशूलासिगदाशक्तिदुंदुभ्याकृतिरेखया ॥ नितंबिनीकीर्तिमतीत्यागेनपृथिवीतले ॥ ७९ ॥

॥ ७१ ॥ पाणिपृष्ठस्यशुभाशुभेलक्षणेआह विरोमेत्येकेन ॥ ७२ ॥ हस्तरेखायाःशुभाशुभेलक्षणेआह रक्तेत्यादिसार्धाष्टभिः ॥ ७३ ॥ स्वस्तिकेनत्रिकोणांकितरेखाविशेषेण ॥ ७४ ॥ नंद्यावर्तःस्वस्तिकः॥ सौधोऽस्त्रीराजसदनमुपकार्योपकारिका ॥ स्वस्तिकःसर्वतोभद्रोनंद्यावर्तादयोपिचेत्यमरः ॥७५॥७६॥ तीर्थकरंसुतंतीर्थपर्यटनकर्तारंशास्त्रकर्तारंवापुत्रमित्यर्थः॥तीर्थकरंशुभमिति क्वचित् ॥ तीर्थकरेशुभमितिचान्यत्र ॥ तत्रकरेरेखाइत्यन्वयः ॥ युगेनबलीवर्दस्कंधनिक्षिप्तेनकाष्ठेन ॥ ७७ ॥ अंकुशस्तोत्रम् ॥ कोदंडोधनुः ॥ ७८ ॥ दुंदुभिर्वाद्यभांडविशेषः ॥ त्यागेनदानेन ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पादेनेतिपाठेपदमेवपादंतेनव्यवसायेन ॥७९॥ ८० ॥ अंगुष्ठस्यशुभलक्षणमाह शुभदइत्यर्धेन ॥ सरलऋजुः ॥ वृत्तोवर्तुलः ॥ वृत्तनखोवर्तुलनखः ॥८१॥ अंगुलीनांशुभाशुभेलक्षणेआहांगुल्यइति द्वयेन ॥ कृशाइत्यस्यानंतरंशुभाइतिशेषः॥ चिपिटाअत्रह्रस्वाः ॥ स्थपुटानिम्नाः ॥८२॥ बहुपर्वसमन्विताःविस्तृतपर्वसमन्विताइत्यर्थः ॥८३॥ नखानांशुभाशुभेलक्षणेआहारुणाइतिसार्धेन ॥ सुदृशां शोभनाक्षीणाम् ॥ ८४ ॥ प्रसंगात्पुरुषाणामपिनखानामशुभलक्षणमाह ॥ परुषाइत्यर्धेन ॥ पुष्पितैःश्वेतपुष्पवर्णैरित्यर्थः ॥ ८५ ॥ पृष्ठेःशुभाशुभेलक्षणेआहांतरितिसार्धेन ॥ अंतर्निमग्नंतिर्यग्वंशाकारम स्थियस्यांसांतर्निमग्नवंशास्थिः ॥८६॥ कृकाटिकायाःशुभाशुभेलक्षणेआह ऋज्वीत्येकेन ॥ ८७ ॥ कंठस्यशुभाशुभेलक्षणेआह मांसलइतिसार्धद्वयेन ॥ ८८ ॥ ८९ ॥ ९० ॥ चिबुकस्यशुभाशु

कंकजंबूकमंडूकवृकवृश्चिकभोगिनः ॥ रासभोष्ट्रबिडालाःस्युःकरस्थादुःखदाःस्त्रियाः ॥ ८० ॥ शुभदःसरलोंगुष्ठोवृत्तोवृत्तनखोमृदुः ॥ ८१ ॥ अंगुल्यश्चसुपर्वाणोदीर्घावृत्ताःक्रमात्कृशाः ॥ चिपिटाःस्थपुटारूक्षाःपृष्ठरोमयुजोऽशुभाः ॥ ८२ ॥ अतिह्रस्वाःकृशावक्राविरलारोगहेतुकाः ॥ दुःखायां गुलयःस्त्रीणांबहुपर्वसमन्विताः ॥ ८३ ॥ अरुणाःसशिखास्तुंगाःकरजाःसुदृशांशुभाः ॥ निम्नाविवर्णाःशुक्त्याभाःपीतादारिद्र्यदायकाः ॥ ८४ ॥ नखेषुबिंदवःश्वेताःप्रायःस्युःस्वैरिणीस्त्रियाः ॥ पुरुषाअपिजायंतेदुःखिनःपुष्पितैर्नखैः ॥ ८५ ॥ अंतर्निमग्नवंशास्थिःपृष्टिःस्यान्मांसलाशुभा ॥ पृष्ठे नरोमयुक्तेनवैधव्यंलभतेध्रुवम् ॥ ८६ ॥ भुग्नेनविनतेनापिसशिरेणापिदुःखिता ॥ ऋज्वीकृकाटिकाश्रेष्ठासमांसाचसमुन्नता ॥ ८७ ॥ शुष्काशिरालारो माढ्याविशालाकुटिलाशुभा ॥ मांसलोवर्तुलःकंठःप्रशस्तश्चतुरंगुलः ॥ ८८ ॥ शस्ताग्रीवात्रिरेखांकात्वव्यक्तास्थिःसुसंहता ॥ निर्मांसाचिपिटादीर्घा स्थपुटानशुभप्रदा ॥ ८९ ॥ स्थूलग्रीवाचविधवावक्रग्रीवाचकिंकरी ॥ वंध्याहिचिपिटग्रीवाह्रस्वग्रीवाचनिःसुता ॥ ९० ॥ चिबुकंद्व्यंगुलंशस्तंवृत्तंपीनं सुकोमलम् ॥ स्थूलंद्विधासंविभक्तमायतंरोमशंत्यजेत् ॥ ९१ ॥ हनुश्चिबुकसंलग्नानिर्लोमासुघनाशुभा ॥ वक्रास्थूलाकृशाह्रस्वारोमशानशुभप्रदा ॥ ९२ ॥ शस्तौकपोलौवामाक्ष्याःपीनौवृत्तौसमुन्नतौ ॥ रोमशौपरुषौनिम्नौनिर्मांसौपरिवर्जयेत् ॥ ९३ ॥ समंसमांसंसुस्निग्धंस्वामोदंवर्तुलंमुखम् ॥ जनेतृवदनच्छायंधन्यानामिहजायते ॥ ९४ ॥ पाटलोवर्तुलःस्निग्धोलेखाभूषितमध्यभूः ॥ सीमंतिनीनामधरोधराजानिप्रियोभवेत् ॥ ९५ ॥ कृशः प्रलंबःस्फुटितोरूक्षोदौर्भाग्यसूचकः ॥ श्यावःस्थूलोऽधरोष्ठःस्याद्वैधव्यकलहप्रदः ॥ ९६ ॥

भेलक्षणेआह चिबुकमित्येकेन ॥ त्यजेत्स्थूलादिचिबुकवतींनोद्वहेदित्यर्थः ॥ एवमग्रेपिद्रष्टव्यम् ॥ ९१ ॥ हनोःशुभाशुभेलक्षणेआह हनुरित्येकेन ॥ ९२ ॥ कपोलयोःशुभाशुभेलक्षणेआह शस्ता वित्येकेन ॥ वामाक्ष्याःशोभननेत्रायाः ॥ ९३ ॥ वक्त्रस्यशुभलक्षणमाह सममित्येकेन ॥ ९४ ॥ अधरोष्ठस्यशुभाशुभेलक्षणेआह पाटलइतिद्वयेन ॥ पाटलःपाटलपुष्पवर्णः ॥ लेखाभूषितमध्यभूः रेखालंकृतमध्यस्थानः ॥ रश्रुतेर्लश्रुतिरितिन्यायेनरेफस्यलकारः ॥ धराजायायस्यसधराजानिर्नृपतिस्तस्यप्रियः ॥ एवंविधोष्ठवतीसानृपतेर्भार्यासवतीत्यर्थः ॥ ९५ ॥ श्यावःकपिशः ॥ ९६ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

द्विजानांशुभाशुभेलक्षणेआह गोक्षीरेतित्रिभिः ॥ स्तोकसमुन्नताइ
अवयवसंख्या ५०॥ उत्तरोष्ठस्यशुभाशुभेलक्षणेआह मसृणइत्येकेन ॥ विपरीतःकुत्सितःपूर्वस्माद्विपरीतोवा ॥ ९७ ॥ क्रममनादृत्यतालुनःशुभाशुभेलक्षणेआह स्निग्धमितिसार्धेन ॥
पटुत्वाः ॥ ९८ ॥ ९९ ॥ १०० ॥ जिह्वायाःशुभाशुभेलक्षणेआह जिह्वेतिसार्धद्वयेन ॥ शोणाशोणवर्णा ॥ १ ॥ २ ॥ हसितस्यशुभलक्षणमाह अलक्षितेत्येकेन ॥ ६ ॥ नासिकायाः
कोकनदाभासंशोणच्छविम् ॥ ३ ॥ ४ ॥ घण्टिकायाःशुभाशुभेलक्षणेआह कंठइत्येकेन ॥ तीक्ष्णासूक्ष्मा ॥ ५ ॥

गोक्षीरसन्निभाःस्निग्धाद्वात्रिंशद्दशनाःशुभाः ॥ मसृणोमत्तकाशिन्याश्चोत्तरोष्ठःशुभोगदः ॥ किंचिन्मध्योन्नतोऽरोमाविपरीतोविरुद्धकृत् ॥ ९७ ॥ शुक्त्याकाराश्चविरलादुःखदौर्भाग्यकारणम् अधस्तादुपरिष्टाच्चसमाःस्तोकसमुन्नताः ॥ ९८ ॥ पीताःश्यावाश्चदशनाःस्थूलादीर्घाद्विपंक्तयः ॥ ॥ ९९ ॥ अधस्तादधिकैर्दन्तैर्मातरंभक्षयेत्स्फुटम् ॥ पतिहीनाचविकटैःकुलटाविरलैर्भवेत् ॥ १०० ॥ जिह्वेष्टमिष्टभोक्त्रीस्याच्छोणामृद्वीतथासिता ॥ दरिद्रिणीमांसलयालंबयाऽभक्ष्यभक्षिणी ॥ २ ॥ विशालया दुःखायमध्यसंकीर्णापुरोभागसविस्तरा ॥ १ ॥ सितयातोयमरणंश्यामयाकलहप्रिया ॥ कृष्णेऽपत्यवियोगार्ता रसनयाप्रमदातिप्रमादभाक् ॥ स्निग्धंकोकनदाभासंप्रशस्तंतालुकोमलम् ॥ ३ ॥ सितेतालुनिवैधव्यंपीतेप्रव्रजिताभवेत् ॥ रूक्षेभूरिकुटुंबिनी ॥ ४ ॥ कंठेस्थूलासुवृत्ताचक्रमतीक्ष्णासुलोहिता ॥ अप्रलंबाशुभाघंटीस्थूलाकृष्णाचदुःखदा ॥ ५ ॥ अलक्षितद्विजंकिंचित्कि चित्फुल्लकपोलकम् ॥ स्मितंप्रशस्तंसुदृशामनिमीलितलोचनम् ॥ ६ ॥ समवृत्तपुटानासालघुच्छिद्राशुभावहा ॥ स्थूलाग्रामध्यनम्राचनप्रशस्तासमुन्नता ॥ ७ ॥ आकुंचितारुणाग्राचवैधव्यक्लेशदायिनी ॥ परप्रेष्याचचिपिटाह्रस्वादीर्घाकलिप्रिया ॥ ८ ॥ दीर्घायुःकृत्क्षुतंदीर्घंयुगपद्द्वित्रिपिंडितम् ॥ ललनालोचनेशस्तेरक्तांतेकृष्णतारके ॥ ९ ॥ गोक्षीरवर्णविशदेसुस्निग्धेकृष्णपक्ष्मणी ॥ उन्नताक्षीनदीर्घायुर्वृत्ताक्षीकुलटाभवेत् ॥ ११० ॥ मेषाक्षीमहिषाक्षीचकेकराक्षीनशोभना ॥ कामगृहीलानितरांगोपिंगाक्षीसुदुर्वृत्ता ॥ ११ ॥ पारावताक्षीदुःशीलारक्ताक्षीभर्तृघातिनी ॥ कोटरानयनादुष्टागजनेत्रानशोभना ॥ १२ ॥ पुंश्चलीवामकाणाक्षीवंध्यादक्षिणकाणिका ॥ मधुपिंगाक्षीरमणीधनधान्यसमृद्धिभाक् ॥ १३ ॥ पक्ष्मभिःसुघनैःस्निग्धैः कृष्णैःसूक्ष्मैःसुभाग्यभाक् ॥ कपिलैर्विरलैःस्थूलैर्निंद्याभवतिभामिनी ॥ १४ ॥ भ्रुवौसुवर्तुलेतन्व्याःस्निग्धेकृष्णेअसंहते ॥ प्रशस्तेमृदुरोमाणौ सुभ्रुवःकार्मुकाकृती ॥ १५ ॥

शुभाशुभेलक्षणेआह समवृत्तपुटेतिद्वयेन ॥ समेदीर्घादिवैषम्यरहितेवृत्तेवर्तुलेपुटेपार्श्वेसमौवृत्तपुटौसंचारमार्गौवायस्याःसातथा ॥ ७ ॥ ८ ॥ क्षुतस्यशुभलक्षणमाह दीर्घायुःकृदित्यर्धेन ॥ द्वित्रिपिंडितंद्विवारंत्रिवारंचेत्यर्थः ॥ अक्ष्णोःशुभाशुभेलक्षणेआह ललनेतिसार्धैश्चतुर्भिः ॥ ९ ॥ कृष्णपक्ष्मणिश्यामनेत्रतारके ॥ ११० ॥ गृहीलागृद्धिनी ॥ ११ ॥ कोटरानयनाकोटरवद्वृक्षच्छिद्रवदासमंतान्नयनेयस्याःसातथानिम्ननेत्रेत्यर्थः ॥ १२ ॥ १३ ॥ पक्ष्मणःशुभाशुभेलक्षणेआह पक्ष्मभिरित्येकेन ॥ १४ ॥ अवयवसंख्या ६० ॥ भ्रुवःशुभाशुभेलक्षणेआह भ्रुवावितिद्वयेन ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कार्मुकाकृतीधनुराकारे ॥ शोभनेभ्रुवौयस्यास्सासुभ्रूस्तस्याःसुभ्रुवः ॥ १९ ॥ १६ ॥ कर्णयोःशुभाशुभेलक्षणेआह लंबावित्येकेन ॥ १७ ॥ भालस्यशुभाशुभेलक्षणेआह भालइतिसार्ध द्वयेन ॥ १८ ॥ १९ ॥ प्रांशुनाउच्चेन ॥ प्रांशुलारोगिणीतिक्वचित्पाठः ॥ १२० ॥ क्रममनादृत्यसीमंतस्यशुभलक्षणमाह ॥ सीमंतइतिपादेन ॥ मौलेःशुभाशुभेलक्षणेआह मौलिरितिपादो नद्वयेन ॥ २१ ॥ २२ ॥ मौलिजानांशुभाशुभेलक्षणेआह केशाइतिद्वयेन ॥ अलिकुलच्छायाःभ्रमरकदंबश्यामाः ॥ २३ ॥ लघवोह्रस्वाः ॥ २४ ॥ अंगानि ६६ ॥ एवंषट्षष्टीनामंगानांशुभा

खररोमाचपृथुलाविकीर्णासरलास्त्रियाः ॥ नभ्रूःप्रशस्तामिलितादीर्घरोमाचापिंगला ॥ १६ ॥ लंबौकर्णौशुभावर्तौसुखदौचशुभप्रदौ ॥ शष्कुलीरहितौनिंद्यौशिरालौकुटिलौकृशौ ॥ १७ ॥ भालःशिराविरहितोनिर्लोमार्धेंदुसन्निभः ॥ अनिम्नस्त्र्यंगुलोनार्याःसौभाग्यारोग्यकारणम् ॥ १८ ॥ व्यक्तस्वस्तिकरेखंचललाटंराज्यसंपदे ॥ प्रलंबंमस्तकंयस्यादेवरंहन्तिसाध्रुवम् ॥ १९ ॥ रोमशेनशिरालेनप्रांशुनारोगिणीमता ॥ १२० ॥ सीमन्तःसरलःशस्तोमौलिःशस्तःसमुन्नतः ॥ गजकुंभनिभावृत्तैःसौभाग्यैश्वर्यसूचकैः ॥ २१ ॥ स्थूलमूर्धाचविधवादीर्घशीर्षाचबंधकी ॥ विशालेनापिशिरसाभवेद्दौर्भाग्यभाजनम् ॥ २२ ॥ केशाअलिकुलच्छायाःसूक्ष्माःस्निग्धाःसुकोमलाः ॥ किंचिदाकुंचिताग्राश्चकुटिलाश्चातिशोभनाः ॥ २३ ॥ परुषाःस्फुटिताग्राश्चविरलाश्चशिरोरुहाः ॥ पिंगलालघवोरूक्षादुःखदारिद्र्यबंधदाः ॥ २४ ॥ भ्रुवोरन्तर्ललाटेवामशकोराज्यसूचकः ॥ वामेकपोलेमशकःशोणोमिष्टान्नदःस्त्रियाः ॥ २५ ॥ तिलकंलांछनंवापिहृदिसौभाग्यकारणम् ॥ यस्यादक्षिणवक्षोजेशोणेतिलकलांछने ॥ २६ ॥ कन्याचतुष्टयंसूतेसूतेसाचसुतत्रयम् ॥ तिलकंलांछनंशोणंयस्यावामेकुचेभवेत् ॥ २७ ॥ एकंपुत्रंप्रसूयादौततःसाविधवाभवेत् ॥ गुह्यस्यदक्षिणेभागेतिलकंयदियोषितः ॥ २८ ॥ तदाक्षितिपतेःपत्नीसूतेवाक्षितिपंसुतम् ॥ नासाग्रेमशकःशोणोमहिष्याएवजायते ॥ २९ ॥ कृष्णःसएवभर्तृघ्न्याःपुंश्चल्याश्चप्रकीर्तितः ॥ नाभेरधस्तात्तिलकंमशकोलांछनंशुभम् ॥ १३० ॥ मशकस्तिलकंचिह्नंगुल्फदेशेदरिद्रकृत् ॥ करेकर्णेकपोलेवाकण्ठेवामेभवेद्यदि ॥ ३१ ॥ एषांत्रयाणामेकंतुप्राग्गर्भेपुत्रदंभवेत् ॥ भालगेनत्रिशूलेननिर्मितेनस्वयंभुवा ॥ ३२ ॥ नितंबिनीसहस्राणांस्वामित्वंयोषिदाप्नुयात् ॥ सुप्तापरस्परंयातुदंतान्किटिकिटायते ॥ ३३ ॥ सुलक्ष्मापिनसाशस्तायाकिंचित्प्रलपेत्तथा ॥ पाणौप्रदक्षिणावर्तोधर्म्योवामोनशोभनः ॥ ३४ ॥

शुभेलक्षणेउक्ताप्रसंगान्मशकतिलकलांछनानामपितेआह भ्रुवोरित्यष्टभिः ॥ तत्रमशकोमशकाकारश्चिह्नविशेषःचिपिटाकारइतिवा ॥ २५ ॥ तिलकस्तिलकाकारःपिप्लुतिरितिवा ॥ तिलकस्तिलकाकारोमशकाश्चिपिटोमतः॥जडुलःकालकःपिप्लुस्तिलकस्तिलकालकइतिवचनात् ॥ लांछनंपद्मवज्रांकुशध्वजत्रिशूलादि ॥ २६ ॥ २७ ॥ २८ ॥ महिष्याःकृताभिषेकायाराज्ञ्याः ॥ २९ ॥ ॥ १३० ॥ ३१ ॥ ३२ ॥ सर्वलक्षणसंपन्नापिदोषविशेषेणत्याज्येत्याह सुप्तेत्येकेन ॥ किटिकिटायतेदंतघर्षणजंशब्दंकरोतीत्यर्थः ॥ ३३ ॥ वपुषःशुभाशुभेलक्षणेअभिधायक्रमप्राप्तस्यावर्त

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्यतेआह पाणावित्यारभ्यसुलक्षणेत्यतःप्राक्तनेनग्रंथेन ॥ प्रदक्षिणावर्तोरोम्णामितिशेषः ॥ धर्म्योधर्मार्हः ॥ वामोवामावर्तः ॥ ३४ ॥ श्रुतौकर्णे ॥ ईडितःस्तुतः ॥३५॥ अंतःपृष्ठंपृष्ठमध्ये ॥
नाभिसमःनाभिवद्वर्तुलाकारः ॥ भगमौलौयोनेरुपरिभागे ॥ भगमूलइतिकेचित् ॥ ३६ ॥ सप्रदक्षिणावर्तः॥शकटभंगःशकटतुल्यः ॥ गुह्यवेधेनतत्पर्यंतेन ॥ ३७ ॥ उदरवेधेनउदरपर्यंतंप्राप्तेन ॥
॥ ३८ ॥ ३९ ॥ मध्येकृकाटिकंकृकाटिकामध्ये ॥ १४० ॥ ४१ ॥ ४२ ॥ गंधादीनांषण्णांशुभाशुभलक्षणानिरतिशास्त्रादौद्रष्टव्यानि ॥ तथाच ॥ पद्मिनीपद्मगंधाचमीनगंधाच
चित्रिणी ॥ शंखिनीक्षारगंधाचमदगंधाचहस्तिनी ॥ हंसपुन्नागवर्णाभायानारीरक्तलोचना ॥ अष्टौजनयतेपुत्रान्प्राप्नोतिपरमंसुखम् ॥ काकस्वराकाकजंघातथैवोर्ध्वस्वरातथा ॥ लंबोष्ठीलंबवदना
तांकन्यांपरिवर्जयेत् ॥ हंसतुल्यगतिर्नारीराजपत्नीचसाभवेत् ॥ यस्यागमनमात्रेणभूमिकंपःप्रजायते ॥ सास्त्रीदैन्यकरीज्ञेयासामुद्रवचनंयथा ॥ आवर्तःप्रजनेयस्यामध्येचैवप्रदक्षिणः ॥ एकंसाज

नाभौश्रुतावुरसिवादक्षिणावर्तईडितः ॥ सुखायदक्षिणावर्तःपृष्ठवंशस्यदक्षिणे ॥ ३५ ॥ अन्तःपृष्ठंनाभिसमोबह्वायुःपुत्रवर्धनः ॥ राजपत्न्याःप्रदृश्ये
तभगमौलौप्रदक्षिणः ॥ ३६ ॥ सचेच्छकटभंगःस्याद्बह्वपत्यसुखप्रदः ॥ कटिगोगुह्यवेधेनपत्यपत्यनिपातनः ॥ ३७ ॥ स्यातामुदरवेधेनपृष्ठावर्तौनशो
भनौ ॥ एकेनहंतिभर्तारंभवेदन्येनपुंश्चली ॥ ३८ ॥ कण्ठगोदक्षिणावर्तोदुःखवैधव्यहेतुकः ॥ सीमन्तेथललाटेवात्याज्योदूरात्प्रयत्नतः ॥ ३९ ॥
सापतिंहंतिवर्षेणयस्यामध्येकृकाटिकम् ॥ प्रदक्षिणोवावामोवारोम्णामावर्त्तकःस्त्रियाः ॥ १४० ॥ एकोवामूर्धनिद्वौवावामेवामगतीयदि ॥ आदशाहं
पतिघ्नीतौत्याज्यौदूरात्सुबुद्धिना ॥ ४१ ॥ कट्यावर्ताचकुलटानाभ्यावर्तापतिव्रता ॥ पृष्ठावर्त्ताचभर्तृघ्नीकुलटावाथजायते ॥ ४२ ॥ स्कंदउवाच ॥
सुलक्षणापिदुःशीलाकुलक्षणशिरोमणिः ॥ अलक्षणापिसासाध्वीसर्वलक्षणभूस्तुसा ॥ ४३ ॥ सुलक्षणासुचारित्रास्वाधीनापतिदेवता ॥ विश्वेशानुग्रहा
देवगृहेयोषिदवाप्यते ॥ ४४ ॥ अलंकृताःस्ववासिन्योयाभिःप्राक्तनजन्मनि ॥ नानाविधैरलंकारैस्ताःसुरूपाभवंतिहि ॥ ४५ ॥ सुतीर्थेषुवपुर्याभिःक्ष
यितंवाविहायितम् ॥ तालावण्यतरंगिण्योभवंतीहसुलक्षणाः ॥ ४६ ॥ अर्चिताजगतांमातायाभिर्मृडवधूरिव ॥ ताभवंतिसुचारित्रायोषाःस्वाधीनभ
र्तृकाः ॥ ४७ ॥ स्वाधीनपतिकानांचसुशीलानांमृगीदृशाम् ॥ स्वर्गापवर्गावत्रैवसुलक्षणफलंहितत् ॥ ४८ ॥ सुलक्षणैःसुचरितैरपिमंदायुषंपतिम् ॥
दीर्घायुषंप्रकुर्वंतिप्रमदाःप्रमदास्पदम् ॥ ४९ ॥

नयेत्पुत्रंराजानंपृथिवीपतिमित्यादीनीति ॥ ४३ ॥ ननुतर्हिंसुलक्षणत्वादिगुणविशिष्टासाध्वीस्त्रीकस्माल्लभ्यतेतत्राह ॥ सुलक्षणेति ॥ ४४ ॥ स्त्रीणांसुरूपत्वलावण्यसुचारित्र्यस्वाधीनभर्तृत्व
प्राप्तौहेतूनाह अलंकृताइतित्रिभिः ॥ ऊढाअनूढावापितृगृहेसयौवनाःस्त्रियः ॥ स्ववासिन्यः ॥ स्वेषुज्ञातिषुवस्तुंशीलंयासामितिव्युत्पत्तेः ॥ सुवासिन्यइतिपाठेपिसएवार्थः ॥ चिरंटयइत्यर्थः ॥
स्ववासिनीचिरंटीस्याद्वितीयवयसिस्त्रियामितिरुद्रः ॥ चिरिंटीतुसुवासिनीतिचामरः ॥ ४५ ॥ सुतीर्थेषुप्रयागादिषु ॥ क्षयितंक्षयंनीतम् ॥ क्षालितमितिपाठेस्नापितमित्यर्थः ॥ विहायितंत्यक्तम् ॥
लावण्यतरंगिण्यःअंगसौष्ठवोर्मिमत्यः ॥ नद्यइवेत्यर्थः ॥ ४६ ॥ मृडवधूरिवेत्यत्रैवकारोऽवधारणार्थः ॥ इहेतिवापाठः ॥ शोभनंचारित्र्यंपातिव्रत्यादिलक्षणंयासांताःसुचारित्राः ॥ स्वाधीनः
शुश्रूषादिभिर्वशीकृतःसंतोषितोनतुस्त्रीजितोभर्तायासांतास्तथा ॥ ४७ ॥ सुलक्षणवतीनांफलंदर्शयति ॥ स्वाधीनेति ॥ ४८ ॥ सुलक्षणैरिति ॥ तर्हिंकितमुपजीव्योपपतिभिःसहरमितुमित्या



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शंक्यपतिंविशिनष्टि ॥ प्रमदास्पदंप्रकृष्टहर्षाश्रयम् ॥ प्रसिद्धंचैतद्वनपर्वणि॥ पतिव्रतयासावित्र्यासत्यवतोदीर्घायुष्यंमहर्षाश्रयत्वंच ॥ ४९ ॥ लक्षणविचारप्रयोजनमाहातइति ॥ यतोऽल्पायुर्षपतिं
सुलक्षणाःस्त्रियश्चिरंजीविनंकुर्वंतिअतइत्यर्थः ॥ सु लक्षणाः परिणेयाइत्यस्यव्यावर्त्यमाह ॥ हित्वेति ॥ अपीतिनिश्चये ॥ ५० ॥ उक्तानुवादपूर्वकमुत्तराध्यायार्थंप्रस्तावयति ॥ लक्षणानीति ॥
॥ ५१ ॥ ॥ इतिश्रीरामानंदविरचितायांकाशीखंडटीकायांसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ छ ॥ ॥ अथाष्टत्रिंशकेधर्म्येऽध्यायेतीवसुशोभने ॥ क्रियतेसमुदाचारात्सद्धर्मपरिवर्णनम् ॥ १ ॥
पूर्वाध्यायांतेविवाहान्वक्ष्यामीत्युक्तमतस्तानेवदर्शयति ॥ विवाहाइति ॥ ब्राह्मदैवार्षाविवाहाउच्यंतेप्राजापत्यासुरौचविवाहावुच्येते ॥ इतिवचनंविपरिणमय्यउच्यतइत्यस्य ाःक्रियायाएवानुषंगः ॥
तत्रब्राह्मोवरमाहूयदानम् ॥ दैवऋत्विजेदानम् ॥ आर्षोगोमिथुनादानेनदानम् ॥ प्राजापत्यःसहोभौचरतांधर्ममित्यभिवाय्यदानम् ॥ आसुरःशुल्कंगृहीत्वादानम् ॥ गांधर्वःसमयान्मिथः ॥
राक्षसोभित्त्वाच्छित्त्वाहरणम् ॥ पैशाचःसुप्तायांमत्तायांवागमनम् ॥ तथाचमानवानिवचनानि ॥ आच्छाद्यचार्हयित्वाचश्रुतशीलवतेस्वयम् ॥ आहूयदानंकन्यायाब्राह्मोधर्मःप्रकीर्तितः ॥ यज्ञे

अतःसुलक्षणायोषापरिणेयाविचक्षणैः ॥ लक्षणानिपरीक्ष्यादौहित्वादुर्लक्षणान्यपि ॥ १५० ॥ लक्षणानिमयोक्तानिसुखायगृहमेधिनाम् ॥ विवाहान
पिवक्ष्यामितन्निबोधघटोद्भव ॥ १५१ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेस्त्रीलक्षणवर्णनंनामसप्तत्रिंशोऽ
ध्यायः ॥ ३७ ॥ स्कंदउवाच ॥ विवाहाब्राह्मदैवार्षाःप्राजापत्यासुरौतथा ॥ गांधर्वोराक्षसश्चापिपैशाचोऽष्टमउच्यते ॥ १ ॥ सब्राह्मोवरमाहूययत्रकन्या
स्वलंकृता ॥ दीयतेतत्सुतःपूयात्पुरुषानेकविंशतिम् ॥ २ ॥ यज्ञस्थायर्त्विजेदैवस्तज्जःपातिचतुर्दश ॥ वरादादायगोद्वंद्वमार्षस्तज्जःपुनातिषट् ॥ ३ ॥
सहोभौचरतांधर्ममित्युक्त्वादीयतेर्थिने ॥ यत्र कन्याप्राजापत्यस्तज्जोवंशान्पुनातिषट् ॥ ४ ॥ चत्वारएतेविप्राणांधर्म्याःपाणिग्रहाःस्मृताः ॥
आसुरःक्रयणाद्द्रव्यैर्गांधर्वोन्योन्यमैत्रतः ॥ ५ ॥ प्रसह्यकन्याहरणाद्राक्षसोनिंदितःसताम् ॥ छलेनकन्याहरणात्पैशाचोगर्हितोऽष्टमः ॥ ६ ॥ प्रायः
क्षत्रविशोरुक्तागांधर्वासुरराक्षसाः ॥ अष्टमस्त्वेषपापिष्ठःपापिष्ठानांचसंभवेत् ॥ ७ ॥

तुवितततेसम्यगृत्विजेकर्मकुर्वते ॥ अलंकृत्यसुतादानंदैवंधर्मंप्रचक्षते ॥ एकंगोमिथुनंद्वेवावरादादायधर्मतः ॥ कन्याप्रदानंविधिवदार्षोधर्मःसउच्यते ॥ सहोभौचरतांधर्ममितिवाचानुभाष्यतु ॥
कन्याप्रदानमभ्यर्च्यप्राजापत्योविधिःस्मृतः॥ज्ञातिभ्योद्रविणंदत्त्वाकन्यायाश्चैवशक्तितः ॥ कन्याप्रदानंस्वाच्छंद्यादासुरोधर्मउच्यते ॥ इच्छयान्योन्यसंयोगःकन्यायाश्चवरस्यच ॥ गांधर्वःसतुविज्ञेयोमै
थुन्यःकामसंभवः ॥ हत्वाच्छित्त्वाचभित्त्वाचक्रोशंतींरुदतींगृहात् ॥ प्रसह्यकन्याहरणंराक्षसोविधिरुच्यते ॥ सुप्तांमत्तांप्रमत्तांवारहोयत्रोपगच्छति ॥ सपापिष्ठोविवाहानांपैशाचःकथितोऽष्टमइति ॥ १ ॥
एतानेवलक्षणतोविवृण्वन्यस्यवर्णस्ययोविवाहोधर्म्यो यस्यविवाहस्ययोगुणदोषौतत्तद्विवाहोत्पन्नापत्येषुचयेगुणाअगुणाश्चतत्सर्वंदर्शयति सब्राह्मइत्यादिनासवर्णइत्यतःप्राक्तनेनग्रंथेन ॥ २ ॥ ३ ॥
यत्रविवाहेकन्यादीयतेसविवाहःप्राजापत्यइत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ प्रायइति ॥ क्षत्रियस्यराक्षसएवधर्म्यः वैश्यशूद्रयोरासुरएवधर्म्यः प्राजापत्यः क्षत्रियादीनांजघन्यः गांधर्वश्चतुर्णांजघन्यः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

राक्षसोवैश्यशूद्रयोर्जघन्यइत्यादिसर्वप्रायोग्रहणेनसूच्यते ॥ तथाचमनुः ॥ चतुरोब्राह्मणस्याद्यान्प्रशस्तान्कवयोविदुः ॥ राक्षसंक्षत्रियस्यैकमासुरंवैश्यशूद्रयोः ॥ ७ ॥ सवर्णयेति ॥ चतुर्णामपिव र्णानांविवाहेषुसवर्णयाभार्ययाकरोग्राह्यः ॥ क्षत्रियापाणिग्रहणस्थानेब्राह्मणविवाहेषुक्षत्रिययाशरोब्राह्मणहस्तपरिगृहीतदंडैकदेशोग्राह्यइत्यर्थः ॥ वैश्ययाब्राह्मणक्षत्रियविवाहेब्राह्मणक्षत्रियविधृततोत्रै दैकदेशोग्राह्यः ॥ शूद्रयापुनर्द्विजातित्रयविवाहेप्रावृतवस्त्रदशाग्राह्या ॥ ८ ॥ असवर्णइति ॥ असवर्णोऽसवर्णसंबन्धीएषविधिः धार्यःक्षत्रिययाशरइत्यादिप्रकारएव ॥ वेदनेविवाहेविद्यतेज्ञाय तेऽनेनेतिवेदनंशास्त्रंतस्मिन्नितिवा ॥ स्मृतोदृष्टश्चेत्यर्थः ॥ असवर्णास्वेषइतिकाचित् ॥ सवर्णयाकरोग्राह्यइत्युक्तंस्पष्टयति ॥ सवर्णाभिस्त्विति ॥ ९ ॥ मंदानिभाग्यधनायूंषियेषांतेतथा ॥ १० ॥ ऋत्विति ॥ स्त्रीणांवरंगर्भानुपघातसंभोगम् ॥ तदुक्तंभागवते॥ शश्वत्कामवरेणांहस्तुरीयंजगृहुःस्त्रियः ॥ तथाचमनुः॥ ऋतुकालाभिगामीस्यात्स्वदारनिरतःसदा ॥ पर्ववर्जंव्रजेच्चैनांतद्व्रतोरतिकाम्ययेति॥

सवर्णयाकरोग्राह्योधार्यःक्षत्रिययाशरः ॥ प्रतोदोवैश्ययाधार्योवासोंतःपज्जयातथा ॥ ८ ॥ असवर्णस्त्वेषविधिःस्मृतोदृष्टश्चवेदने ॥ सवर्णाभिस्तुसर्वाभिःपाणिर्ग्राह्यस्त्वयंविधिः ॥ ९ ॥ धर्म्यैर्विवाहैर्जायंतेधर्म्याएवशतायुषः ॥ अधर्म्यैर्धर्मरहितामंदभाग्यधनायुषः ॥ १० ॥ ऋतुकालाभिगमनंधर्मोयं गृहिणःपरः ॥ स्त्रीणांवरमनुस्मृत्ययथाकाम्यथवाभवेत् ॥ ११ ॥ दिवाभिगमनंपुंसामनायुष्यंपरंमतम् ॥ श्राद्धाहःसर्वपर्वाणियत्नात्त्याज्यानिधीमता ॥ १२ ॥ तत्रगच्छन्स्त्रियंमोहाद्धर्मात्प्रच्यवतेपरात् ॥ १३ ॥ ऋतुकालाभिगामीयःस्वदारनिरतश्चयः ॥ ससदाब्रह्मचारीचविज्ञेयःसद्गृहाश्रमी ॥ १४ ॥ ऋतुःषोडशयामिन्यश्चतस्रस्तासुगर्हिताः ॥ पुत्रास्तास्वपियायुग्माअयुग्माःकन्यकाप्रजाः ॥ १५ ॥ त्यक्त्वाचंद्रमसंदुःस्थंमघांपौष्णंविहायच ॥ शुचिःसन्निविशेत्पत्नींपुन्नामर्क्षेविशेषतः ॥ शुचिंपुत्रंप्रसूयेतपुरुषार्थप्रसाधकम् ॥ १६ ॥ आर्षेविवाहेगोद्वंद्वंयदुक्तंतन्नशस्यते ॥ शुल्कमण्वपिकन्यायाःकन्याविक्रयपापकृत् ॥ १७ ॥ अपत्यविक्रयीकल्पंवसेद्विट्कृमिभोजने ॥ अतोनाण्वपिकन्यायाउपजीवेत्पिताधनम् ॥ १८ ॥ स्त्रीधनान्युपजीवंतियेमोहाद्दिह्बांधवाः ॥ नकेवलंनिरयगास्तेषामपिहिपूर्वजाः ॥ १९ ॥ पत्यातुष्यतियत्रस्त्रीतुष्येद्यत्रस्त्रियापतिः ॥ तत्रतुष्टामहालक्ष्मीर्निवसेद्दानवाऽरिणा ॥ २० ॥ वाणिज्यंनृपतेःसेवावेदानध्यापनंतथा ॥ कुविवाहःक्रियालोपःकुलेपतनहेतवः ॥ २१ ॥

यथायथावत् ॥ यथाभिलषितमित्यर्थः ॥ ११ ॥ तत्रापिनिषेधविशेषमाह ॥ सर्वपर्वाणीति ॥ तदुक्तम् ॥ कुहूपूर्णेंदुसंक्रांतिचतुर्दश्यष्टमीषुच ॥ नरश्चांडालयोनिःस्यात्स्त्रीतैलमांससेवनादिति ॥ ॥ १२ ॥ १३ ॥ ऋतुकालेऽभिगंतुंशीलंयस्यसतथा ॥ तथाचश्रुतिः ॥ ऋतौभार्यामुपेयादिति ॥ १४ ॥ कन्यकाःप्रजाःयाभ्यस्तथा ॥ १५ ॥ दुःस्थंराहुणाग्रस्तम् ॥ पुन्नामर्क्षं श्रवणहस्तपुनर्वसुमूलपुष्यमृगशीर्षाणि ॥ १६ ॥ आर्षइति ॥ आर्षेविवाहेगोद्वंद्वंगोमिथुनंशुल्कंयदुक्तंकैश्चित्तन्नशस्यतेप्रशस्यते ॥ यतःकन्यायाअण्वपिअपिशब्दाद्बह्वपित्राशुल्कंकन्याविक्रयेयत्पापंतत्कृदेवे त्यर्थः ॥ नन्वेवंचेत्स्वमतपरमतयोर्लक्षणैक्याद्विरोधापात्तिः ॥ न ॥ आर्षेविवाहेगोमिथुनंशुल्कमुत्कोचरूपमित्यन्येषांमतम् ॥ स्कन्दस्यतुनेदंमतंकिंत्वार्षविवाहसंपत्त्यैअवश्यकर्तव्ययागादिसिद्ध्येकन्या यैप्रदातुंशास्त्रीयंधर्मार्थमेतद्गृह्यतइति ॥ अतएवार्षलक्षणमापद्येतज्जःपुनातिषडित्युक्तम् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ वाणिज्यमिति ॥ वेदानध्यापनंवेदानामपाठनम् ॥ वेदानध्ययनंतथे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तिकचित् ॥ विवाहप्रकरणंसमाप्तम् ॥ २१ ॥ इदानींवैवाहिकाग्निसंपाद्यंमहायज्ञानुष्ठानमाह ॥ कुर्यादिति ॥ विवाहेभवोवैवाहिकःतस्मिन्नग्नौगृह्यंगृह्योक्तंकर्मसायंप्रातर्होमाष्टकादिअग्निसंपाद्यपञ्च यज्ञांतर्गतंवैश्वदेवाद्यनुष्ठानंप्रतिदिनसंपाद्यंचपाकंगृहस्थःकुर्यादित्यर्थः ॥ २२ ॥ गृहस्थेति ॥ पशुवधस्थानंसूना सूनेवसूना हिंसास्थानत्वगुणयोगात् ॥ कंडन्यादयःपंचगृहस्थस्यवीजादिहिं सास्थानानि ॥ कंडनीउलूखलमुसले ॥ पेषणीदृषदुपलयुगलात्मिका ॥ चुल्लीउंधानम् ॥ उदकुम्भोजलाधारकलशः ॥ मार्जनीवर्धन्यपरपर्यायगृहोपकरणसंमार्जनादिकर्त्री ॥ २३ ॥ तासामिति ॥ तासांकंडन्यादिसूनानांयथाक्रमंनिष्कृत्यर्थंतदुत्पन्नपापनाशनार्थंगृहिणांपंचमहायज्ञामन्वादिभिरनुष्ठेयतयानिर्दिष्टाः ॥ २४ ॥ तानेवपंचयज्ञान्निर्दिशति ॥ पाठनमिति ॥ पाठन

कुर्याद्वैवाहिकेवह्नौगृह्यंकर्मान्वहंगृही ॥ पंचयज्ञक्रियांचापिपक्तिंदैनंदिनीमपि ॥ २२ ॥ गृहस्थाश्रमिणःपंचसूनाकर्मदिनेदिने ॥ कंडनीपेषणीचुल्ली ह्युदकुंभस्तुमार्जनी ॥ २३ ॥ तासांचपंचसूनानांनिराकरणहेतवः ॥ क्रतवःपंचनिर्दिष्टागृहिश्रेयोभिवर्धनाः ॥ २४ ॥ पाठनंब्रह्मयज्ञःस्यात्तर्पणंचपि तृक्रतुः ॥ होमोदैवोबलिर्भौतोऽतिथ्यर्चानृक्रतुःक्रमात् ॥ २५ ॥ पितृप्रीतिंप्रकुर्वाणःकुर्वीतश्राद्धमन्वहम् ॥ अन्नोदकपयोमूलैःफलैर्वापिगृहाश्रमी॥२६॥ गोदानेनचयत्पुण्यंपात्रायविधिपूर्वकम् ॥ सत्कृत्यभिक्षवेभिक्षांदत्त्वातत्फलमाप्नुयात् ॥ २७ ॥ तपोविद्यासमिद्धीतेहुतंविप्रास्यपावके ॥ तारयेद्विघ्नसंघे भ्यःपापाब्धेरपिदुस्तरात् ॥ २८ ॥ अनर्चितोऽतिथिर्गेहाद्भग्नाशोयस्यगच्छति ॥ आजन्मसंचितात्पुण्यात्क्षणात्सहिबहिर्भवेत् ॥ २९ ॥ सांत्वपूर्वा णिवाक्यानिशय्यार्थेभूस्तृणोदके ॥ एतान्यपिप्रदेयानिसदाभ्यागततुष्टये ॥ ३० ॥ गृहस्थःपरपाकादीप्रेत्यतत्पशुतांव्रजेत् ॥ श्रेयःपरान्नपुष्टस्यगृह्णी यादन्नदोयतः ॥ ३१ ॥ आदित्योढोऽतिथिःसायंसत्कर्तव्यःप्रयत्नतः ॥ असत्कृतोन्यतोगच्छन्दुष्कृतंभूरियच्छति ॥ ३२ ॥ भुंजानोऽतिथिशेषान्न मिहायुर्यनभाग्भवेत् ॥ प्रणोद्यातिथिमन्नाशीकिल्बिषीचगृहाश्रमी ॥ ३३ ॥ वैश्वदेवांतसंप्राप्तःसूर्योढोवातिथिःस्मृतः ॥ नपूर्वकालआयातोनचदृष्टचरः क्वचित् ॥ ३४ ॥ बलिपात्रकरेविप्रेयद्यन्योतिथिरागतः ॥ अदत्त्वातंबलिंतस्मैयथाशक्त्यान्नमर्पयेत् ॥ ३५ ॥ कुमाराश्चस्ववासिन्योगर्भिण्योऽतिरुजा न्विताः ॥ अतिथेरादितोप्येतेभोज्यानात्रविचारणा ॥ ३६ ॥ पितृदेवमनुष्येभ्योदत्त्वाश्नात्यमृतंगृही ॥ स्वार्थंपचन्नघंभुंक्तेकेवलंस्वोदरंभरिः ॥ ३७ ॥

मध्यापनम् ॥ होमोदैवोदेवक्रतुः ॥ बलिर्भौतोभूतक्रतुः ॥ अतिथ्यर्चाऽतिथीनांसत्कारोनृक्रतुर्मनुष्ययज्ञः ॥ क्रमात्कंडन्यादीनांपंचसूनानांक्रमेणपंचपापनिवर्तकाइमेपंचयज्ञाइत्यर्थः ॥ चतुर्थेपा देनृयज्ञोऽतिथिसत्क्रियेतिक्वचित्पाठः ॥ २५ ॥ अन्नमदनीयम् ॥ अर्थमितिक्वचित् ॥ अर्घ्येतिचान्यत्र ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ परपाकान्नमत्तुंशीलंयस्य परपाकस्यान्नस्यादोऽदनं वास्यास्तीतिपरपाकादी ॥ तत्पशुतांयस्यपाकमत्तितस्यपशुतामित्यर्थः ॥ ३१ ॥ आदित्योढआदित्येनास्तमितेनसहोढःप्राप्तइत्यर्थः ॥३२॥ प्रणोद्यत्यक्त्वादूरीकृत्येतियावत् ॥ ३३ ॥ अतिथेर्ल क्षणमाह वैश्वदेवेत्येकेन ॥३४॥ बलिपात्रकरेभूतबलिपात्रहस्तइत्यर्थः ॥३५॥ [illegible] ॥ ३६ ॥ [illegible]त् ॥ तथाचोक्तंभगवता ॥ भुंजतेतेत्वघंपापायेपचंत्यात्मकारणादिति॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्वार्थपचामित्यस्यार्थमाह ॥ केवलामिति ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ तेइतिपाठेयेइत्यर्थात् ॥ येइतिपाठेतेइति ॥ अथजन्मान्तरे ॥ ४१ ॥ ४२ ॥ भगेयोनौ ॥४३॥ उपसृष्टंग्रस्तम् ॥४४॥ नवीक्षेतेति ॥ असकृदितिज्ञेयम् ॥ वत्सतंत्रींबंधनेनवत्ससम्बद्धांरज्जुंवत्सबंधनरज्जुमात्रमितिवा ॥४५॥ मृदंगोपीचन्दनादिरूपाम् ॥४६॥ चैत्यवृक्षमातपादिसमयेसेव्यमानंवृक्षं पूज्यंवृक्षंवायस्याध स्तात्पूजाक्रियतेतंवृक्षंवा ॥ सिद्धार्थसर्षपम् ॥४७॥ पीठाद्यंतरेणासनमुत्कटासनंतस्मिन् ॥४८॥ अश्नंतींभोजनंकुर्वतीम् ॥४९॥ पक्वान्नंलड्डुकादिकम् ॥ नोमांसमितिपृथग्वाक्यम् ॥ दीर्घकालंजिजी



माध्याह्निकंवैश्वदेवंगृहस्थःस्वयमाचरेत् ॥ पत्नीसायंबलिंदद्यात्सिद्धान्नैर्मंत्रवर्जितम् ॥ ३८ ॥ एतत्सायंतननंनामवैश्वदेवंगृहाश्रमे ॥ सायंप्रातर्भवेदेवंवैश्व देवंप्रयत्नतः ॥ ३९ ॥ वैश्वदेवेनयेहीनाआतिथ्येनविवर्जिताः ॥ सर्वेतेवृषलाज्ञेयाःप्राप्तवेदाअपिद्विजाः ॥ ४० ॥ अकृत्वावैश्वदेवंतुभुंजतेयेद्विजाधमाः ॥ इहलोकेन्नहीनाःस्युःकाकयोनिंव्रजंत्यथ ॥ ४१ ॥ वेदोदितंस्वकंकर्मनित्यंकुर्यादतंद्रितः ॥ तद्धिकुर्वन्यथाशक्तिप्राप्नुयात्सद्गतिंपराम् ॥ ४२ ॥ षष्ठ्यष्टम्योर्वसेत्पापंतैलेमांसेसदैवहि ॥ पंचदश्यांचतुर्दश्यांतथैवचभगेक्षुरे ॥ ४३ ॥ उदयंतंनचेक्षेतनास्तंयंतंनमध्यगम् ॥ नराहुणोपसृष्टंचनांबुसंस्थं दिवाकरम् ॥ ४४ ॥ नवीक्षेतात्मनोरूपमाशुधावेन्नवर्षति ॥ नोल्लंघयेद्वत्सतंत्रींननग्नोजलमाविशेत् ॥ ४५ ॥ देवतायतनंविप्रंधेनुंमधुमृदंघृतम् ॥ जातिवृद्धंवयोवृद्धंविद्यावृद्धंतपस्विनम् ॥ ४६ ॥ अश्वत्थंचैत्यवृक्षंचगुरुंजलभृतंघटम् ॥ सिद्धान्नंदधिसिद्धार्थंगच्छन्कुर्यात्प्रदक्षिणम् ॥ ४७ ॥ रजस्वलां नसेवेतनाश्नीयात्सहभार्यया ॥ एकवासानभुंजीतनभुंजीतोत्कटासने ॥ ४८ ॥ नाश्नंतींस्त्रींसमीक्षेततेजस्कामोद्विजोत्तमः ॥ असंतर्प्यपितॄन्देवान्नाद्यादन्नं नवंक्वचित् ॥ ४९ ॥ पक्वान्नंचापिनोमांसंदीर्घकालंजिजीविषुः ॥ नमूत्रंगोव्रजेकुर्यान्नवल्मीकेनभस्मनि ॥ ५० ॥ नगर्तेषुससत्वेषुनतिष्ठन्नव्रजन्नपि ॥ गोविप्रसूर्यवाय्वग्निचंद्रर्क्षांबुगुरूनपि ॥ ५१ ॥ अभिपश्यन्नकुर्वीतमलमूत्रविसर्जनम् ॥ तिरस्कृत्यावनिंलोष्टकाष्ठपर्णतृणादिभिः ॥ ५२ ॥ प्रावृत्यवा ससामौलिंमौनीविण्मूत्रमुत्सृजेत् ॥ यथासुखमुखोरात्रौदिनेच्छायांधकारयोः ॥ ५३ ॥ भीतिषुप्राणबाधायांकुर्यान्मलविसर्जनम् ॥ मुखेनोपधमेन्ना ग्निंनग्नांनेक्षेतयोषितम् ॥ ५४ ॥

विषुःपितॄनभ्यर्च्यानभ्यर्च्यवामांसंनोअद्यादित्यर्थः ॥ पश्चिष्टिंचविनेतिपाठेपश्वालंभनंयागंविनादीर्घकालंजिजीविषुर्देवान्पितॄन्सन्तर्प्यासन्तर्प्यवामांसंनाद्यादित्यन्वयः ॥ वल्मीकेवामलूरोद्धृतमृत्पुंजे ॥ ॥ ५० ॥ ससत्वेषुप्राणिव्याप्तेषु ॥ तिष्ठन्नुत्तिष्ठन् ॥ ५१ ॥ मलमूत्रयोर्विसर्जनंत्यागम् ॥ मलोत्सारेतिपाठेपिसएवार्थः ॥ तिरस्कृत्याच्छाद्य ॥ अवनिंपृथ्वीम् ॥ ५२ ॥ मौलिंमस्तकम् ॥ ५३ ॥ मलविसर्जनंमलेत्युपलक्षणंमलमूत्रयोर्विसर्जनमित्यर्थः ॥ मुखेनोपधमेन्मुखवायुनाप्रज्वालयेत् ॥ एतत्तुलौकिकाग्निविषयंनवैदिकाग्निविषयम् ॥ नशूर्पेणधमेदग्निंनवस्त्रेणनपाणिना ॥ मुखेनो

१ नपश्येदात्मनश्छायामितिमनूक्तेरभिप्रायः ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ संविशेत्स्वपेत् ॥ प्रत्यक्सौम्यशिराःपश्चिमोत्तरमस्तकः ॥ प्रत्यग्याम्यशिराइतिपाठश्चित्यः ॥ विण्मूत्रादीनामेकवद्भावः ॥ ष्ठीवनंथूत्कृत्य
पद्यमेदग्निमुखाद्ग्निरजायतेतिवचनात् ॥ ५४ ॥ ५५ ॥ संविशेत्स्वपेत् ॥ प्रत्यक्सौम्यशिराःपश्चिमोत्तरमस्तकः ॥ प्रत्यग्याम्यशिराइतिपाठश्चित्यः ॥ विण्मूत्रादीनामेकवद्भावः ॥ ष्ठीवनंथूत्कृत्य
श्लेष्मविक्षेपः ॥ ५६ ॥ नाचक्षीतनकथयीत ॥ धयंतींभक्षयंतींपिबंतींवा ॥ शयानंज्येष्ठंनप्रबोधयेत् ॥ ५७ ॥ अंजलिनाकरपुटेन ॥ उद्धृतसारंदूरीकृतनवनीतादि ॥ उद्धृतसारंगतस्नेहंपिण्याकादी
तिवा ॥ ५८ ॥ तौर्यत्रिकप्रियःगीतनृत्यवाद्यप्रियः ॥ नधावयेन्नक्षालयेत् ॥ ५९ ॥ ६० ॥ नासीतनोपविशेत् ॥ ६१ ॥ प्रेतधूमंशवदाहधूमम् ॥ सरित्तरंनदीतरणंबाहुभ्यामितिशेषः ॥ नबाहुभ्यां
नदींतरेदितिमनूक्तेः ॥ बालातपंप्रातःकालीनसूर्यातपम् ॥ ६२ ॥ स्नात्वानमार्जयेद्गात्रंकरस्नानवस्त्राभ्यामितिशेषः ॥ करेणनोत्सृजेद्गात्रंस्नानवस्त्रेणवापुनः॥शुनोच्छिष्टंभवेद्गात्रंपुनःस्नानेनशुद्धयती

नसंविशेतसंध्यायांप्रत्यक्सौम्यशिराअपि ॥ विण्मूत्रष्ठी
नांश्रीप्रतापयेदग्नौनवस्त्वशुचिनिक्षिपेत् ॥ प्राणिहिंसांनकुर्वीतनाश्नीयात्संध्ययोर्द्वयोः ॥५५॥ नसंविशेतसंध्यायांप्रत्यक्सौम्यशिराअपि ॥ विण्मूत्रष्ठी
वनंनाप्सुकुर्याद्दीर्घंजिजीविषुः ॥५६॥ नाचक्षीतधयंतींगांनेंद्रचापंप्रदर्शयेत् ॥ नैकःसुप्यात्कचिच्छून्येनशयानंप्रबोधयेत् ॥ ५७॥ पंथानंनैकलोयाया
न्नवार्यंजलिनापिबेत् ॥ नदिवोद्धृतसारंचभक्षयेद्दधिनोनिशि ॥ ५८ ॥ स्त्रीधर्मिण्यानाभिवदेन्नाद्यादातृप्तिरात्रिषु ॥ तौर्यत्रिकप्रियोनस्यात्कांस्येपादौ
नधावयेत् ॥ ५९ ॥ श्राद्धंकृत्वापरश्राद्धेयोऽश्नीयाज्ज्ञानवर्जितः ॥ दातुःश्राद्धफलंनास्तिभोक्ताकिल्बिषभुग्भवेत् ॥ ६० ॥ नधारयेदन्यभुक्तंवासश्चो
पानहावपि ॥ नभिन्नभाजनेश्नीयान्नासीताग्न्यादिदूषिते ॥ ६१ ॥ आरोहणंगवांपृष्ठेप्रेतधूमंसरित्तरम् ॥ बालातपंदिवास्वापंत्यजेद्दीर्घंजिजीविषुः
॥ ६२ ॥ स्नात्वानमार्जयेद्गात्रंविसृजेन्नशिखांपथि ॥ हस्तौशिरोनधुनुयान्नाकर्षेदासनंपदा ॥ ६३ ॥ नोत्पाटयेल्लोमनखंदशनेनकदाचन ॥ करजैः
करजच्छेदंतृणच्छेदंविवर्जयेत् ॥ ६४ ॥ शुभायनयदायत्यांत्यजेत्तत्कर्मयत्नतः ॥ अद्वारेणनगंतव्यंस्ववेश्मपरवेश्मनोः ॥ ६५ ॥ क्रीडेन्नाक्षैःसहासी
तनधर्मघ्नैर्नरोगिभिः ॥ नशयीतक्वचिन्नग्नःपाणौभुंजीतनैवच ॥ ६६ ॥ आर्द्रपादकरास्योश्नन्दीर्घकालंचजीवति ॥ संविशेन्नार्द्रचरणोनोच्छिष्टःक्व
चिद्व्रजेत् ॥ ६७ ॥ शयनस्थोनचाश्नीयान्नपिबेन्नजपेद्द्विजः ॥ सोपानत्कश्चनाचामेन्नतिष्ठन्धारयापिबेत् ॥ ६८ ॥ सर्वंतिलमयंनाद्यात्सायंशर्मा
भिलाषुकः ॥ ननिरीक्षेतविण्मूत्रेनोच्छिष्टःसंस्पृशेच्छिरः ॥ ६९ ॥

तिवचनात् ॥ तर्पणात्पूर्वमित्येकेनाकर्षेदुपवेशनार्थंनानयेदित्यर्थः ॥६३॥ करजैर्नखैःकरजच्छेदंनखच्छेदंच ॥ दंतैश्छेदंविवर्जयेदितिपाठेदंतैश्चेत्यर्थः॥करेणैवविवर्जयेदितिपाठेकरेणापीत्यर्थः ॥६४॥
आयत्यामुत्तरकाले ॥ स्ववेश्मपरवेश्मनोर्द्वारेणमुख्यद्वारंविहायद्वारांतरेणनगंतव्यमित्यर्थः ॥ परवेश्मचेतिक्वचित्पाठः ॥ ६५ ॥ पाणावितियत्यन्यविषयम् ॥ करेकर्पटकेचैवआयसेताम्रभाजने ॥
भुंजन्भिक्षुर्नलिप्येतालिप्यंतेगृहमेधिनइतिवचनात् ॥ ६६ ॥ आर्द्राणिपादकरास्यानियस्यसः ॥ संविशेत्स्वपेत् ॥६७॥ शय्यतेऽस्मिन्नितिशयनंशय्यातत्रस्थः ॥ सोपानत्कःउपानद्भ्यांपादुकाभ्यां
युक्तः ॥ चःसमुच्चये ॥ नतिष्ठन्नित्यनेनसंबध्यते ॥ तिष्ठंश्च उत्तिष्ठन् [illegible] पात्रमुखधारयेतिवा ॥ ६८ ॥ सर्वंतिलमयंयत्किंचित्तिलसंबद्धंकृसरमो

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दकादीत्यर्थः ॥ ६९ ॥ तुषादिकंचनाधितिष्ठेन्नस्पृशेत् ॥ तुषादीनधिष्ठायनतिष्ठेदितिवा ॥ कपालिकाभग्नखर्परादिखंडाः ॥ ७० ॥ वैदिकंमंत्रंनश्रावयेदित्यनेनतंत्राद्युक्तंश्रावयेदित्यभ्यनुजानाति॥ ॥ ७१ ॥ धर्मोपदेशोब्राह्मणकर्तृकःशूद्रकर्तृकोवा ॥ स्वश्रेयइत्यत्रस्वशब्दउपदेष्टृपरः ॥ द्वितीयेश्रोतृपरोपि ॥ ७२ ॥ कराभ्यामित्यस्याग्रेपिसंबंधः ॥ ७३ ॥ सान्वयोवंशसहितः ॥ ७४ ॥ अकालविद्युत्स्तनितेवर्षर्त्वतिरिक्तकाले मेघगर्जितेविद्युत्सहितगर्जितइतिवा ॥ ७५ ॥ वृषलस्याधार्मिकस्यवाउपांतेसमीपे ॥ राज्ञोराहोश्चसूतकेनृपस्यसूतकेराहोश्चसूतकेग्रहणइत्यर्थः ॥ ७६ ॥

नाधितिष्ठेत्तुषांगारभस्मकेशकपालिकाः ॥ पतितैःसहसंवासःपतनायैवजायते ॥ ७० ॥ श्रावयेद्वैदिकंमंत्रंनशूद्रायकदाचन ॥ ब्राह्मण्याद्धीयतेविप्रः शूद्रोधर्माच्चहीयते ॥ ७१ ॥ धर्मोपदेशःशूद्राणांस्वश्रेयःप्रतिघातयेत् ॥ द्विजशुश्रूषणंधर्मःशूद्राणांहिपरोमतः ॥ ७२ ॥ कंडूयनंहिशिरसःपाणिभ्यां नशुभंमतम् ॥ आताडनंकराभ्यांचक्रोशनंकेशलुंचनम् ॥७३॥ अशास्त्रवर्तिनोभूपाल्लुब्धात्कृत्वाप्रतिग्रहम् ॥ ब्राह्मणःसान्वयोयातिनरकानेकविंशतिम् ॥ ७४ ॥ अकालविद्युत्स्तनितेवर्षर्तौपांसुवर्षणे ॥ महावातध्वनौरात्रावनध्यायाःप्रकीर्तिताः ॥ ७५ ॥ उल्कापातेचभूकंपेदिग्दाहेमध्यरात्रिषु ॥ संध्ययोर्वृषलोपांतेराज्ञोराहोश्चसूतके ॥ ७६ ॥ दर्शाष्टकासुभूतायांश्राद्धिकंप्रतिगृह्यच ॥ प्रतिपद्यपिपूर्णायां[1]गजोष्ट्राभ्यांकृतांतरे ॥ ७७ ॥ खरोष्ट्रक्रोष्टृविरुतेसमवायेरुदत्यपि ॥ उपाकर्मणिचोत्सर्गेनाविमार्गेंतरौजले ॥ ७८ ॥ आरण्यकमधीत्यापिबाणसाम्नोरपिध्वनौ ॥ अनध्यायेषुचैतेषुनाधीयीत द्विजःक्वचित् ॥ ७९ ॥ कृतांतरायोनपठेद्भेकाखुश्वाहिबभ्रुभिः ॥ भूताष्टम्योःपंचदश्योर्ब्रह्मचारीसदाभवेत् ॥ ८० ॥ अनायुष्यकरंचैवपरदारोपसर्पणम् ॥ तस्मात्तद्दूरतस्त्याज्यंवैरिणांचोपसेवनम् ॥ ८१ ॥ पूर्वर्द्धिभिःपरित्यक्तमात्मानंनावमानयेत् ॥ सदोद्यमवतांयस्माच्छ्रियोविद्यानदुर्लभाः ॥ ८२ ॥ सत्यंब्रूयात्प्रियंब्रूयान्नब्रूयात्सत्यमप्रियम् ॥ प्रियंचनानृतंब्रूयादेषधर्मोघटोद्भव ॥ ८३ ॥ भद्रमेववदेन्नित्यंभद्रमेवविचिंतयेत् ॥ भद्रैरेवेहसंसर्गोनाभद्रैश्चकदाचन ॥ ८४ ॥ रूपवित्तकुलैर्हीनान्सुधीर्नाधिक्षिपेन्नरान् ॥ पुष्पवंतौनचेक्षेततत्त्वशुचिर्ज्योतिषांगणम् ॥ ८५ ॥

॥ अपिशब्दादाश्राद्धिकंश्राद्धनिमंत्रणंश्राद्धसंबंधिद्रव्यंवा ॥ पूर्णायांपञ्चदंडपरिमितायांप्रतिपद्यपिनतुन्यूनायाम् ॥ ७७ ॥ उत्सर्गेऋगादीनाम् ॥ ७८ ॥ बाणसाम्नोः शरसामवेदयोर्ध्वनौश्रूयमाणे ॥ अपिशब्दादातस्वनेपि ॥ ७९ ॥ बभ्रुर्नकुलः भूताचतुर्दशी ॥ पंचदश्योः पूर्णिमामावास्ययोः ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ इहमनुष्ययोनौ संसर्गः कार्यइतिशेषः ॥ ८४ ॥ पुष्पवंतौचन्द्रसूर्यौ ॥ सूर्या



१ पूर्णायां—पूर्णिमायां—नन्दाभद्राजयारिक्तापूर्णाश्चतिथयःक्रमात् ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सोमावितिकाचित्पाठः ॥ ८५ ॥ उत्कोचद्रव्यंनामभयादिकंप्रदर्श्ययद्गृह्यते ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ विनम्रधमनिःप्रणतनाडिकः ॥ विनम्रकंधरइतिकचित् ॥ विनम्रधर्मनिष्ठःस्या
दितिचान्यत्र ॥ यस्मादयंविनम्रधमन्यादिर्भवेत्तस्मात्ताननुयायादित्यन्वयः ॥ ९० ॥ ९१ ॥ ९२ ॥ सान्वयोवंशसहितः ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ सुप्रजाःशोभनपुत्रः ॥ ९७ ॥

वाचोवेगंमनोवेगंजिह्वावेगंचवर्जयेत् ॥ उत्कोचद्यूतदौत्यार्तद्रव्यंदूरात्परित्यजेत् ॥८६॥ गोब्राह्मणाग्नीनुच्छिष्टपाणिनानैवसंस्पृशेत् ॥ नस्पृशेदनिमित्ते
नखानिस्वानित्वनातुरः ॥ ८७ ॥ गुह्यजान्यपिलोमानितत्स्पर्शादशुचिर्भवेत् ॥ पादधौतोदकंमूत्रमुच्छिष्टान्नोदकानिच ॥ ८८ ॥ निष्ठीवनंचश्लेष्माणं
गृहाद्दूरंविनिक्षिपेत् ॥ अहर्निशंश्रुतेर्जाप्याच्छौचाचारनिषेवणात् ॥ अद्रोहवत्याबुद्ध्याचपूर्वंजन्मस्मरेद्द्विजः ॥ ८९ ॥ वृद्धान्प्रयत्नाद्वंदेतदद्यात्तेषांस्वमा
सनम् ॥ विनम्रधमनिस्तस्मादनुयायात्ततश्चतान् ॥ ९० ॥ श्रुतिभूदेवदेवानांनृपसाधुतपस्विनाम् ॥ पतिव्रतानांनारीणांनिंदांकुर्यान्नकर्हिचित् ॥ ९१ ॥
नमनुष्यस्तुतिंकुर्यान्नात्मानमपमानयेत् ॥ अभ्युद्यतंनप्रणुदेत्परमर्माणिनोच्चरेत् ॥ ९२ ॥ अधर्मंदधतेपूर्वंविद्विष्टान्नपिसंजयेत् ॥ सर्वतोभद्रमाप्यापिततो
नश्येत्ससान्वयः ॥ ९३ ॥ उद्धृत्यपंचमृत्पिंडान्स्नायात्परजलाशये ॥ अनुद्धृत्यचतत्कर्तुरेनसःस्यात्तुरीयभाक् ॥ ९४ ॥ श्रद्धयापात्रमासाद्ययत्किं
चिद्दीयतेवसु ॥ देशेकालेचविधिनातदानंत्यायकल्पते ॥ ९५ ॥ भूप्रदोमंडलाधीशःसर्वत्रसुखिनोन्नदाः ॥ तोयदातासदातृप्तोरूपवान्रूप्यदोभवेत्
॥ ९६ ॥ प्रदीपदोनिर्मलाक्षोगोदाताऽर्यमलोकभाक् ॥ स्वर्णदाताचदीर्घायुस्तिलदःस्यात्तुसुप्रजाः ॥ ९७ ॥ वेश्मदोऽत्युच्चसौधेशोवस्त्रदश्चंद्रलो
कभाक् ॥ हयप्रदोदिव्ययानोलक्ष्मीवान्वृषभप्रदः ॥ ९८ ॥ सुभार्यःशिबिकादातासुपर्यंकप्रदोऽपिच ॥ धान्यैःसमृद्धिमान्नित्यमभयप्रदईशिता ॥९९॥
ब्रह्मदोब्रह्मलोकेज्योब्रह्मदःसर्वदोमतः ॥ उपायेनापियोब्रह्मदापयेत्सोपितत्समः ॥ १०० ॥ श्रद्धयाप्रतिगृह्णातिश्रद्धयायःप्रयच्छति ॥ स्वर्गिणौ
तावुभौस्यातांपततोऽश्रद्धयात्यधः ॥ १ ॥ अनृतेनक्षरेद्यज्ञस्तपोविस्मयतःक्षरेत् ॥ क्षरेत्कीर्तनतोदानमायुर्विप्रापवादतः ॥ २ ॥ गंधपुष्पकुशाच्छय्यां
शाकंमांसंपयोदधि ॥ मणिमत्स्यगृहंधान्यंग्राह्यमेतदुपस्थितम् ॥ ३ ॥ मधूदकंफलंमूलमेधांस्यभयदक्षिणा ॥ अभ्युद्यतानिग्राह्याणित्वेतान्यपिनि
कृष्टतः ॥ ४ ॥ दासनापितगोपालकुलमित्रार्धसीरिणः ॥ भोज्यान्नाःशूद्रवर्गेमीतथात्मविनिवेदकः ॥ ५ ॥ इत्थमानृण्यमासाद्यदेवर्षिपितृजादृणात् ॥
माध्यस्थ्यमाश्रयेद्गेहेसुतेविष्वग्विसृज्यच ॥ ६ ॥

॥ ९८ ॥ शिबिकानरयानम् ॥ पर्यंकःखट्वा ईशिताशास्ताईश्वरइत्यर्थः ॥९९॥१००॥ अत्यधःअतिशयेनाधः ॥ १ ॥ विस्मयतोगर्वात् ॥ २ ॥ ग्राह्यंनिकृष्टतइत्यग्रिमेणान्वयः ॥ ३ ॥ ४ ॥
अर्धसीरिणोऽर्धहालिकाः ॥ आत्मनिवेदकोऽत्यन्तभक्तः ॥ ५ ॥ माध्यस्थ्यमौदासीन्यमाश्रयेत् ॥ किंकृत्वा ॥ विष्वकसर्वतोगृहव्यापारान्सुतेविसृज्यचकाराद्भार्यादींश्च ॥ आश्रयेद्देहीतिकचित्पाठः ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शतात्परंपरःशतन्तस्माच्चेन्म्रियतइतिशेषः ॥ ९ ॥ सुतेभारमितिकाशीवासंचेतिशेषः ॥ ६ ॥ उभयत्रक्रमेणहेतुमाह ॥ सम्यगिति ॥ ७ ॥ अंतिमपक्षस्यसुलभत्वेनाधिक्यमाह ॥ सम्यगिति ॥८॥ काशीतियद्व्द्यक्षरंतदेवपीयूषंकेवलंपिबामि ॥ हीतिनिश्चये ॥ चकारोऽवधारणे ॥ सदाचारनिरूपणफलमाह ॥ साचेति ॥ यस्यांशरीरत्यागमात्रतोध्रुवामुक्तिःसेत्यर्थः ॥११०॥११ ॥ १२॥१३॥ त्रिंशेनवाधिकेपुण्येऽध्यायेत्यंतमनोरमे ॥ वाराणसीदिवोदासा पीयूषाधारोजीवामीतिकचित् ॥१४॥११५॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायामष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ छ ॥ ॥ नैश्रेयस्यामोक्षरूपायाः ॥ १ ॥ काश्यामहिमानमाह ॥ परमिति ॥ विमुक्तमहिमोच्यते ॥ १ ॥ पूर्वाध्यायांतेऽविमुक्तस्यमाहात्म्यंवक्तुंसमुपचक्रमेइत्युक्तमतस्तदेवप्रस्तावयति ॥ शृण्वगस्त्येति ॥

गेहेपिज्ञानमभ्यस्येत्काशींवाथसमाश्रयेत् ॥ सम्यग्ज्ञानेनवामुक्तिःकिंवाविश्वेशवेश्मनि ॥ ७ ॥ सम्यग्ज्ञानंभवेत्पुंसांकुतएकेनजन्मना ॥ वाराणस्यां ध्रुवामुक्तिःशरीरत्यागमात्रतः ॥ ८ ॥ अद्यश्वोवापरश्वोवाकालाद्वाथपरःशतात् ॥ सत्वरोगत्वरोदेहःकाश्यांचेदमृतीभवेत् ॥ ९ ॥ साचवाराणसीलभ्या सदाचारवतासदा ॥ मनसापिसदाचारमतोविद्वान्नलंघयेत् ॥ ११० ॥ आकर्ण्येतिततोगस्त्यःपुनःप्राहषडाननम् ॥ पुनःकाशींसमाचक्ष्वसदाचारे णयाप्यते ॥ ॥ ११ ॥ कानिकानिचलिंगानिस्कंदज्ञानप्रदानिच ॥ वाराणस्यांपरिब्रूहितानिमेपरिपृच्छतः ॥ १२ ॥ विनाकाशींनमेप्रीतिर्विनाकाशीं नमेरतिः ॥ चित्रपुत्रकवच्चास्मिविनाकाशींषडानन ॥ १३ ॥ ननिद्रामिनजागर्मिनाश्नामिनपिबाम्यपः ॥ काशींव्द्यक्षरपीयूषंपिबामिहिचकेवलम् ॥ १४ ॥ इतिश्रुत्वावचःस्कंदोमैत्रावरुणिभाषितम् ॥ अविमुक्तस्यमाहात्म्यंवक्तुंसमुपचक्रमे ॥ ११५ ॥ इतिश्रीस्कंदेमहापुराणएकाशीतिसाहस्र्यां संहितायां काशीखंडेपूर्वार्द्धेसदाचारवर्णननामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥ स्कंदउवाच ॥ शृण्वगस्त्यमहाभागकथांपापप्रणाशिनीम् ॥ नैःश्रेयस्याः श्रियोहेतुमविमुक्तसमाश्रयाम् ॥ १ ॥ परंब्रह्मयदाम्नातंनिष्प्रपंचंनिरात्मकम् ॥ निर्विकल्पंनिराकारमव्यक्तंस्थूलसूक्ष्मवत् ॥ २ ॥ तदेतत्क्षेत्रमापूर्य स्थितंसर्वगमप्यहो ॥ किमन्यत्रनशक्तोसौजंतून्मोचयितुंभवात् ॥ ३ ॥ भवोध्रुवंयदत्रैवमोचयेत्तंनिशामय ॥ महत्यायोगयुक्त्यावामहादानैरकामिकैः ॥ ४ ॥ सुमहद्भिस्तपोभिर्वाशिवोन्यत्रविमोचयेत् ॥ योगयुक्तिंनमहतींनदानानिमहांतिच ॥ ५ ॥ नतपांस्यतिदीर्घाणिकाश्यांमुक्त्यैशिवोर्थयेत् ॥ वियुनक्तिनयत्काश्याउपसर्गेमहत्यपि ॥ ६ ॥

यत्परंब्रह्मवेदांतेष्वाम्नातंतदेतत्क्षेत्रमापूर्यस्थितमित्यग्रेणसंबंधः ॥ निरात्मकंशरीरद्वयरहितम् ॥ निर्विकल्पंभेदरहितम् ॥ निष्प्रपंचमित्यादीनांयथेष्टंहेतुमत्त्वम् ॥ स्थूलसूक्ष्मवत्कार्यकारणरूपम् ॥२॥ अहोआश्चर्येहर्षेवा ॥ काश्यामेवमोचयतिनान्यत्रेत्यभिनयपूर्वकंदर्शयति ॥ किमन्यत्रेति ॥ भवात्संसारात् ॥ भवेदितिक्वचित् ॥ ३ ॥ अकामिकैर्निष्कामैरित्युभयत्रसंबध्यते ॥ ४ ॥ ५ ॥ अतिदीर्घकालमारभ्यकृतानिअतिदीर्घाणि ॥ अतितीव्राणीतिक्वचित् ॥ अर्थयेत् प्रार्थयेत ॥ किमितिनप्रार्थयेत् अन्यथैवतत्रितयस्यजातत्वादित्याह ॥ वियुनक्तीति ॥ उपसर्गेपीडायाम् ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

काश्याःसकाशान्नवियुनक्तिपृथग्भवतीतियदयमेवमहायोगइत्यन्वयः ॥ काशीमितिक्वचित् ॥ ६ ॥ ७ ॥ सुमनोवृत्त्यानिष्कामेनविश्वेश्वरबुद्ध्यावा ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ भूतायां चतुर्दश्याम् ॥१२॥१३॥१४॥१५॥ वर्षमिति ॥ यद्व्रतीत्यत्रयत्फलमितिक्वचित्पाठः ॥ तत्फलमित्युत्तरार्धेपि स्फुटंस्यात्शिवरात्रौतत्काश्यामविकलंफलमितिच ॥१६॥ चुलुकेनगंडूषेण ॥१७॥ विपत्तिमिच्छतोमरणंप्राप्नुवतः ॥ १८ ॥ कर्णेजपमेवाभिनयपूर्वकंफलसहितंदर्शयति ॥ शंभुस्तदिति ॥ १९ ॥ अविमुक्तमहिमवर्णनार्थमेवदिवोदासमहिमानंवक्तुंप्रस्तावयति ॥ स्मारंस्मारमिति ॥

अयमेवमहायोगउपयोगस्त्विहापरः ॥ नियमेनतुविश्वेशेपुष्पंपत्रंफलंजलम् ॥ ७ ॥ यद्दत्तंसुमनोवृत्त्यामहादानंतदत्रवै ॥ मुक्तिमंडपिकायांचक्षणंय त्स्थिरमास्यते ॥ ८ ॥ स्नात्वागंगामृतेशुद्धेतपएतदिहोत्तमम् ॥ सत्कृत्यभिक्षवेभिक्षायत्काश्यांपरिदीयते ॥ तुलापुरुषएतस्याःकलांनार्हतिषोडशीम् ॥ ९ ॥ हृदिसंचिंत्यविश्वेशंक्षणंयद्विनिमील्यते ॥ देवस्यदक्षिणेभागेमहायोगोयमुत्तमः ॥ १० ॥ इदमेवतपोत्युग्रंयदिंद्रियविलोलताम् ॥ निषिध्यस्थी यतेकाश्यांक्षुत्तापाद्यवमन्यच ॥ ११ ॥ मासिमासियदाप्येतव्रताच्चांद्रायणात्फलम् ॥ अन्यत्रतदिहाप्येतभूतायांनक्तभोजनात् ॥ १२ ॥ मासोपवा सादन्यत्रयत्फलंसमुपार्ज्यते ॥ श्रद्धयैकोपवासेनतत्काश्यांस्यादसंशयम् ॥१३॥ चातुर्मास्यव्रतात्प्रोक्तंयदन्यत्रमहाफलम् ॥ एकादश्युपवासेनतत्काश्यां स्यादसंशयम् ॥ १४ ॥ षण्मासान्नपरित्यागाद्यदन्यत्रफलंलभेत् ॥ शिवरात्र्युपवासेनतत्काश्यांजायतेध्रुवम् ॥ १५ ॥ वर्षंकृत्वोपवासानिलभेदन्यत्र यद्व्रती ॥ तत्फलंस्यात्त्रिरात्रेणकाश्यामविकलंमुने ॥ १६ ॥ मासिमासिकुशाग्रांबुपानादन्यत्रयत्फलम् ॥ काश्यामुत्तरवाहिन्यामेकेनचुलुकेनतत् ॥ १७ ॥ अनंतोमहिमाकाश्याःकस्तंवर्णयितुंप्रभुः ॥ विपत्तिमिच्छतोजंतोर्यत्रकर्णेजपःशिवः ॥ १८ ॥ शंभुस्तत्किंचिदाचष्टेम्रियमाणस्यजन्मिनः ॥ कर्णेऽक्षरंयदाकर्ण्यमृतोप्यमृततांव्रजेत् ॥ १९ ॥ स्मारंस्मारंस्मररिपोःपुरींत्वमिवशंकरः ॥ अदुनोन्मंदरंयातोबहुशस्तदवाप्तये ॥२०॥ अगस्त्यउवाच ॥ स्वकार्यनिपुणैःस्वामिन्गीर्वाणैरतिदारुणैः ॥ त्याजितोहंपुरींकाशींहरोत्याक्षीत्कुतःप्रभुः ॥ २१ ॥ पराधीनोहमिवकिंदेवदेवःपिनाकवान् ॥ काशिकां सोऽत्यजत्कस्मान्निर्वाणमणिराशिकाम् ॥ २२ ॥ ॥ स्कंदउवाच ॥ ॥ मित्रावरुणसंभूतकथयामिकथामिमाम् ॥ तत्याजचयथास्थाणुःकाशीं विध्युपरोधतः ॥ २३ ॥ प्रार्थितस्त्वंयथालेखैःपरोपकृतयेमुने ॥ द्रुहिणेनतथारुद्रःस्वरक्षणविचक्षणः ॥ २४ ॥

स्मारंस्मारंस्मृत्वास्मृत्वा ॥ २० ॥ विश्वेश्वरस्यकाशींविहायान्यत्रगमनंसुष्ठुदुर्घटमितिमन्वानःपृच्छति स्वकार्येतिद्वाभ्याम् ॥ २१ ॥ उक्तमेवस्पष्टयति ॥ परेति ॥ पिनाकवानाजगववान् ॥ पिना कधृगितिक्वचित् ॥ एवंविधनिर्वाणाभिप्रायेणकाशिकामित्युक्तम् ॥ २२ ॥ विध्युपरोधतोहिरण्यगर्भप्रार्थनया ॥ २३ ॥ लेखैर्देवैः ॥ स्वरक्षणविचक्षणोभक्तरक्षणचतुरःस्वांशभूतानांजीवानांमोक्ष

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पाद्मेकल्पेविष्णोर्नाभिपद्मे भूरादिलोकत्रयकल्पनासुशैमनोरन्तरे ॥ कथंभूते ॥ स्वायंभुवेस्वायंभुवमनुसम्बन्धिनिस्वायंभुवस्यमनोरन्तरइत्यर्थः ॥ प्रकं
दानेनरक्षणाविचक्षणइतिवा ॥ २४ ॥ २५ ॥
पिनीप्रचालिनीइतस्ततोनेत्रीत्यर्थः ॥२६॥२७॥ कच्छेषुपर्वतप्रान्तेषु ॥ मुनिवृत्त्याफलमूलाद्याहारेण ॥ अरण्यानीमहारण्यम्॥ग्रामाभृगुप्रोक्ताः ॥ विप्राश्चविप्रभृत्याश्चयत्रचैवंवसान्तिते ॥ सतुग्रामइति
प्रोक्तःशूद्राणांवासएवचेति ॥ खर्वटागिरितटग्रामाभृगुप्रोक्तावा ॥ एकतोयत्रतुग्रामोनगरंचैकतःस्थितम् ॥ मिश्रंतुखर्वटंनाम नदीगिरिसमाश्रयमिति ॥२८॥ क्रव्यादामांसात्तारः ॥ अभ्रंलिहोमेघपर्यं

॥ अगस्त्यउवाच ॥ ॥ कथंसभगवान्रुद्रोद्रुहिणेनकृपांबुधिः ॥ प्रार्थितोभूत्किमर्थंचतन्मेब्रूहिषडानन ॥ २५ ॥ ॥ स्कंदउवाच ॥ ॥ पाद्मेकल्पे पुरावृत्तेमनोःस्वायंभुवेंतरे ॥ अनावृष्टिरभूद्विप्रसर्वभूतप्रकंपिनी ॥ २६ ॥ तयातुषड्विहायिन्यापीडिताःप्राणिनोऽखिलाः ॥ केचिदंबुधितीरेषुगिरिद्रोणीषुकेचन ॥ २७॥ महानिम्नेषुकच्छेषुमुनिवृत्त्याजनाःस्थिताः ॥ अरण्यान्यवनिर्जाताग्रामखर्वटवर्जिता ॥ २८ ॥ क्रव्यादाएवसर्वेषुनगरेषुपुरेषुच ॥ आसन्नभ्रंलिहोवृक्षाःसर्वत्रक्षोणिमंडले ॥ २९ ॥ चौराएवमहाचौरैरुल्लुठयंतइतस्ततः ॥ मांसवृत्त्योपजीवंतिप्राणिनःप्राणरक्षिणः ॥ ३० ॥ अराजके समुत्पन्नेलोकेऽत्याहितशंसिनि ॥ प्रयत्नोविफलस्त्वासीत्सृष्टेःसृष्टिकृतस्तदा ॥ ३१ ॥ चिंतामवापमहतींजगद्योनिःप्रजाक्षयात् ॥ प्रजासुक्षीयमाणासुक्षीणायज्ञादिकाःक्रियाः ॥ ३२ ॥ तासुक्षीणासुसंक्षीणाःसर्वेयज्ञभुजोऽभवन् ॥ ततश्चिंतयतास्रष्ट्राद्दृष्टोराजर्षिसत्तमः ॥ ३३ ॥ अविमुक्तेमहाक्षेत्रेतपस्यन्निश्चलेंद्रियः ॥ मनोरन्वयजोवीरःक्षात्रोधर्मइवोदितः ॥ ३४ ॥ रिपुंजयइतिख्यातोराजापरपुरंजयः ॥ अथब्रह्मातमासाद्यबहुगौरवपूर्वकम् ॥ ३५ ॥ उवाचवचनंराजन्रिपुंजयमहामते ॥ इलांपालयभूपालससमुद्राद्रिकाननाम् ॥ ३६ ॥ नागकन्यांनागराजःपत्न्यर्थंतेप्रदास्यति ॥ अनंगमोहिनींनाम्नावासुकिःशीलभूषणाम् ॥ ३७ ॥ दिवोपिदेवादास्यंतिरत्नानिकुसुमानिच ॥ प्रजापालनसंतुष्टामहाराजप्रतिक्षणम् ॥ ३८ ॥ दिवोदासइतिख्यातमतोनामत्वमाप्स्यसि ॥ मत्प्रभावाच्चनृपतेदिव्यंसामर्थ्यमस्तुते ॥ ३९ ॥ परमेष्ठिवचःश्रुत्वाततोसौराजसत्तमः ॥ वेधसंबहुशःस्तुत्वावाक्यंचेदमुवाचह ॥ ४० ॥

तमुन्नाः ॥ तेपिगुष्काइतिशेषः ॥२९॥ उल्लुठयन्तेउदुच्चैर्लुंठयंतेनिःस्वीक्रियंतइत्यर्थः ॥३०॥ अत्याहितमत्यनिष्टंभयंतच्छंसिनि ॥ सृष्टेःप्रयत्नइतिसम्बन्धः ॥ सृष्टिसम्बन्धीत्यर्थः ॥३१॥३२॥
॥ ३३ ॥ मनोःस्वायंभुवस्य ॥ क्षात्रःक्षत्रियजात्यधिष्ठितः ॥ ३४ ॥ रिपुंजयाख्यायांहेतुमाह ॥ परपुरमिति ॥ परमधार्मिकइतिकचित् ॥ ३५ ॥ इलांपृथ्वीम् ॥ इमामितिपाठेपिसएवार्थः ॥
॥ ३६ ॥ अनंगमोहिनींकामस्यापिक्षोभकर्त्रीमितिसान्वयंसंज्ञाभिप्रायेण ॥ ३७ ॥ रिपुंजयस्यसान्वयंभाविसंज्ञान्तरंसंदिशति दिवोपीतिसार्धेन ॥ ३८ ॥ ३९ ॥ वेधसंब्रह्माणम् ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्तुत्वास्तोत्रेणसन्तोष्य ॥ ४० ॥ कथंकिंकिमर्थम् ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ दिविषदइतिसाभिप्रायंविशेषणम् ॥ अतोनपौनरुक्त्यम् ॥ ४६ ॥ एतावन्निर्बन्धेप्रयोजनंदर्शयति ॥ देवेष्विति ॥ ४७ ॥ पटहंढक्काम् ॥ व्रजंतुइतिशब्दमुच्चार्य ॥ व्रजंत्वितइतिपाठेइतिशब्दोऽध्याहर्तव्यः ॥ ४८ ॥ नराःसर्वेप्राणिनः ॥ प्रजाइतिक्वचित् ॥ इतोऽन्यत्र ॥ उभयत्रसार्धोपहेतुमाह ॥ मयीति ॥ सुराइतिनागानामुपलक्षणम् ॥ स्वस्थाःस्वर्गस्थाइतिपातालस्थानाम् ॥ स्वस्थानेस्थिताइतिवा ॥४९॥५०॥ कुशद्वीपात्तृतीयाद्वीपात् ॥ तप्येतकरोतीतयर्थः ॥५१॥ तपस्यतेतपःकुर्वते ॥

॥ राजोवाच ॥ ॥ पितामहमहाप्राज्ञजनाकीर्णेमहीतले ॥ कथंनान्येचराजानोमांकथंकथ्यतेत्वया ॥ ४१ ॥ ॥ ब्रह्मोवाच ॥ ॥ त्वयिराज्यंप्रकुर्वाणेदेवोवृष्टिंविधास्यति ॥ पापनिष्ठेचवैराज्ञिनदेवोवर्षतेपुनः ॥ ४२ ॥ ॥ राजोवाच ॥ ॥ पितामहमहामान्यत्रिलोकीकरणक्षम ॥ महाप्रसादइत्याज्ञांत्वदीयां मूर्ध्न्युपाददे ॥ ४३ ॥ किंचिद्विज्ञप्तुकामोहंतन्मदर्थंकरोपिचेत् ॥ ततःकरोम्यहंराज्यंपृथिव्यामसपत्नवत् ॥ ४४ ॥ ॥ ब्रह्मोवाच ॥ अविलंबेनतद्ब्रूहिकृतंमन्यस्वपार्थिव ॥ यत्तेहृदिमहाबाहोतवादेयंनाकिंचन ॥ ४५ ॥ ॥ राजोवाच ॥ ॥ यद्यहंपृथिवीनाथःसर्वलोकपितामह ॥ तदादिविषदोदेवादिवितिष्ठंतुमाभुवि ॥ ४६ ॥ देवेषुदिवितिष्ठत्सुमयितिष्ठतिभूतले ॥ असपत्नेनराज्येनप्रजासौख्यमवाप्स्यति ॥ ४७ ॥ तथेतिविश्वसृक्प्रोक्तोदिवोदासोनरेश्वरः ॥ पटहंघोषयांचक्रेदिवंदेवाव्रजंत्विति ॥ ४८ ॥ मागच्छंत्विहवैनागानराःस्वस्थाभवंत्वितः ॥ मयिप्रशासतिक्षोणींसुराःस्वस्थाभवंत्विति ॥ ४९ ॥ एतस्मिन्नंतरेब्रह्माविश्वेशंप्रणिपत्यह ॥ यावद्विज्ञप्तुकामोभूत्तावदीशोब्रवीद्विधिम् ॥ ५० ॥ लोकेश्वरसमायाहिमंदरोनामभूधरः ॥ कुशद्वीपादिहागत्यतपस्तप्येतदुष्करम् ॥ ५१ ॥ यावस्तस्मैवरंदातुंबहुकालंतपस्यते ॥ इत्युक्तापार्वतीनाथोनंदिभृंगिपुरोगमः ॥ ५२ ॥ जगामवृषमारुह्यमंदरोयत्रतिष्ठति ॥ उवाचचप्रसन्नात्मादेवदेवोवृषध्वजः ॥५३॥ उत्तिष्ठोत्तिष्ठभद्रंतेवरंब्रूहिधरोत्तम ॥ सोथश्रुत्वामहेशानंदेवदेवंत्रिलोचनम् ॥ ॥ ५४ ॥ प्रणम्यबहुशोभूमावद्रिरेतद्व्यजिज्ञपत् ॥ लीलाविग्रहभृच्छंभोप्रणतैककृपानिधे ॥ ५५ ॥ सर्वज्ञोपिकथंनामनवेत्थममवांछितम् ॥ शरणागतसंत्राणसर्ववृत्तांतकोविद ॥ ५६ ॥ सर्वेषांहृदयानंदशर्वसर्वगसर्वकृत् ॥ यदिदेयोवरोमह्यंस्वभावाद्दपदात्मने ॥ ५७ ॥ याचकायातिशोच्यायप्रणतार्तिप्रभंजक ॥ ततोऽविमुक्तक्षेत्रस्यसाम्यंह्यभिलषाम्यहम् ॥ ५८ ॥ कुशद्वीपउमासार्धंनाथाद्यसपरिच्छदः ॥ मन्मौलौविहितावासःप्रयात्वेषवरोमम ॥ ५९ ॥

॥ ५२ ॥ ५३ ॥ ५४ ॥ लीलाविग्रहंक्रीडाशरीरंबिभर्तिगृह्णातीतितथा ॥ कृदितिक्वचित् ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ अविमुक्तसाम्यमेवदर्शयति ॥ कुशद्वीपइति ॥ उमासार्धंपावत्यासह ॥ कुशद्वीपेमयासार्धमितिपाठेउकारलोपश्चार्षः ॥ श्रीगौर्योरभेदान्माशब्दस्यमायावाचकत्वान्मायात्मकत्वाच्चमयापार्वत्येतियथाश्रुतएववार्थः ॥ प्रयातुयातुभवानितियावत् ॥ ५९ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

व्यजिज्ञपद्विज्ञापयामास ॥ ६० ॥ व्यापारितोनियुक्तः ॥ चतुर्विधांजरायुजांडजस्वेदजोद्भिज्जरूपाम् ॥ ६१ ॥ ६२ ॥ इदंजगन्महच्चयथास्यात्तथाऽराजकमासीदतएवदुरवस्थमतीवदुःस्थितमभू
दित्यन्वयः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ नाडीद्वयंघटिकाद्वयम् ॥ ६७ ॥ निमेषार्धनिमेषिणांममनिमेषार्धनिमेषितुंशीलंयेषांतेतथातेषाम् ॥ ६८ ॥ विधेश्चब्रह्मणोपि ॥
॥ ६९ ॥ ७० ॥ सर्वसिद्धीनामणिमादीनाम् ॥ कर्मणिषष्ठी ॥ समर्पितुंदातुम् ॥ समर्पकमितिक्कचित् ॥ ७१ ॥ नैःश्रेयसींनिर्वाणसंबंधिनीम् ॥ इहकाश्यांसंस्थानांसम्यक्

॥ ब्रह्मोवाच ॥ ॥
सर्वेषांसर्वदःशंभुःक्षणंयावद्विचिंतयेत् ॥ विज्ञातावसरोब्रह्मातावच्छंभुंव्यजिज्ञपत् ॥ प्रणम्याग्रेसरोभूत्वामौलौबद्धकरद्वयः ॥ ६० ॥ अवृष्टयाषष्टिहा
विश्वेशजगतांनाथपत्याव्यापारितोस्म्यहम् ॥ कृतप्रसादेनविभोसृष्टिंकर्तुंचतुर्विधाम् ॥ ६१ ॥ प्रयत्नेनमयासृष्टासासृष्टिस्त्वदनुज्ञया ॥ अवृष्ट्याषष्टिहा
यिन्यातत्रनष्टाऽप्रजाभुवि ॥ ६२ ॥ अराजकंमहच्चासीद्दुरवस्थमभूज्जगत् ॥ ततोरिपुंजयोनामराजर्षिर्मनुवंशजः ॥ ६३ ॥ मयाभिषिक्तोराजर्षिःप्रजाः
पातुंनरेश्वरः ॥ चकारसमयंसोपिमहावीर्योमहातपाः ॥६४॥ तवाज्ञयाचेत्स्थास्यंतिसर्वेदिविषदोदिवि ॥ नागलोकेतथानागास्ततोराज्यंकरोम्यहम् ॥
॥ ६५ ॥ तथेतिचमयाप्रोक्तंप्रमाणीक्रियतांतुतत् ॥ मंदरायवरोदत्तोभवेदेवंकृपानिधे ॥ ६६ ॥ तस्यराज्ञःप्रजास्त्रातुंभूयाच्चैषमनोरथः ॥ ममनाडीद्वयं
राज्यंतस्यापिचशतक्रतोः ॥ ६७ ॥ मर्त्यानांगणनाकेहनिमेषार्धनिमेषिणाम् ॥ देवोपिनिर्मलंमत्वामंदरंचारुकंदरम् ॥६८॥ विधेश्चगौरवंरक्षंस्तथोरी
कृतवान्हरः ॥ जंबूद्वीपेयथाकाशीनिर्वाणपददासदा ॥६९॥ तथाबहुतिथंकालंद्वीपोभूत्सोपिमंदरः ॥ यियासुनाचदेवेनमंदरंचित्रकंदरम् ॥७०॥ निजमू
र्तिमयंलिंगमविज्ञातंविधेरपि ॥ स्थापितंसर्वसिद्धीनांस्थापकेभ्यःसमर्पितुम् ॥ ७१ ॥ विपन्नानांचजंतूनांदातुंनैःश्रेयसींश्रियम् ॥ सर्वेषामिहसंस्थानांक्षे
त्रंचैवाभिरक्षितुम् ॥ ७२ ॥ मंदराद्रिंगतेनापिक्षेत्रंनैतत्पिनाकिना ॥ विमुक्तंलिंगरूपेणअविमुक्तमतःस्मृतम् ॥ ७३ ॥ पुरानंदवनंनामक्षेत्रमेतत्प्रकी
र्तितम् ॥ अविमुक्तंतदारभ्यनामास्यप्राथितंभुवि ॥ ७४ ॥ नामाविमुक्तमभवदुभयोःक्षेत्रलिंगयोः ॥ एतद्द्वयंसमासाद्यनभूयोगर्भभाग्भवेत् ॥ ७५ ॥
अविमुक्तेश्वरंलिंगंदृष्ट्वाक्षेत्रेऽविमुक्तके ॥ विमुक्तएवभवतिसर्वस्मात्कर्मबंधनात् ॥ ७६ ॥ अर्चंतिविश्वेविश्वेशंविश्वेशोर्चतिविश्वकृत् ॥ अविमुक्तेश्वरंलिंगं
भुविमुक्तिप्रदायकम् ॥ ७७ ॥ पुरानस्थापितंलिंगंकस्याचित्केनचित्क्कचित् ॥ किमाकृतिभवेल्लिंगंनैतद्वेत्त्यपिकश्चन ॥ ७८ ॥

स्थितानांसदाचाराणामित्यर्थः ॥ संज्ञानमितिपाठेसम्यक्ज्ञानंयस्मादितिक्षेत्रविशेषणम् ॥ ७२ ॥ काश्यामविमुक्तनामानिर्वचनमाह मंदराद्रिमितिद्वयेन ॥ ७३ ॥ ७४ ॥ लिंगेपितन्नामा
तिदिशति ॥ नामाविमुक्तमिति ॥ ७५ ॥ ७६ ॥ विश्वेसर्वे ॥ भुवीत्युपलक्षणम् ॥ भुक्तीतिक्कचित् ॥ ७७ ॥ ७८ ॥





CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ कुतःकदाचिदपि ॥ पुनरितिक्वचित् ॥ ८५ ॥ स्तुत्वेति ॥ अविमुक्तेकाश्याम् ॥ यथाशक्तियथामतिस्तुत्वार्चयित्वानत्वानरास्तिष्ठातसिस्तूय
तेऽर्च्यतेनम्यतेदेवैरितिशेषइत्यर्थः ॥ ८६ ॥ ८७ ॥ चतुर्दशींकृष्णाम् ॥ ८८ ॥ भूतायांचतुर्दश्याम् ॥ ८९ ॥ ९० ॥ ९१ ॥ यःपापिपापशैलोनामसंभृतोनाम्नानाशायसंभृतोलक्षीकृतःक्षयेन्नाशं
गच्छेत्सक्केत्यर्थः ॥ अनादिपापेतिपाठेएकएवक्कशब्दउभयत्रयोजनीयः ॥ नामसंभृतइत्यत्रनाम्निसंस्मृतइतिक्वचित्पाठः ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ इतिश्रीरामानन्दकृता

आकारमविमुक्तस्यदृष्ट्वाब्रह्माच्युतादयः ॥ लिंगंसंस्थापयामासुर्वसिष्ठाद्यास्तथर्षयः ॥ ७९ ॥ आदिलिंगमिदंप्रोक्तमविमुक्तेश्वरंमहत् ॥ ततोलिंगांतरा
ण्यत्रजातानिक्षितिमंडले ॥ ८० ॥ अविमुक्तेशनामापिश्रुत्वाजन्मार्जितादघात् ॥ क्षणान्मुक्तोभवेन्मर्त्योनात्रकार्याविचारणा ॥ ८१ ॥ अविमुक्तेश्वरं
लिंगंस्मृत्वादूरगतोपिच ॥ जन्मद्वयकृतात्पापात्क्षणादेवविमुच्यते ॥८२॥ अविमुक्तेमहाक्षेत्रेऽविमुक्तमवलोक्यच ॥ त्रिजन्मजनितंपापंहित्वापुण्यमयो
भवेत् ॥ ८३ ॥ यत्कृतंज्ञानविभ्रंशादेनःपंचसुजन्मसु ॥ अविमुक्तेशसंस्पर्शात्तत्क्षयेदेवनान्यथा ॥ ८४ ॥ अर्चयित्वामहालिंगमविमुक्तेश्वरंनरः ॥
कृतकृत्योभवेदत्रनचस्याज्जन्मभाक्कुतः ॥ ८५ ॥ स्तुत्वानत्वार्चयित्वाचयथाशक्तियथामति ॥ अविमुक्तेविमुक्तेशंस्तूयतेनम्यतेऽर्च्यते ॥८६॥ अना
दिमदिदंलिंगंस्वयंविश्वेश्वरार्चितम् ॥ काश्यांप्रयत्नतःसेव्यमविमुक्तंविमुक्तये ॥ ८७ ॥ संतिलिंगान्यनेकानिपुण्येष्वायतनेषुच ॥ आयांतितानिलिंगा
निमाघींप्राप्यचतुर्दशीम् ॥ ८८ ॥ कृष्णायांमाघभूतायामविमुक्तेशजागरात् ॥ सदाविगतनिद्रस्ययोगिनोगतिभाग्भवेत् ॥ ८९ ॥ नानायतनलिंगा
निचतुर्वर्गप्रदान्यपि ॥ माघकृष्णचतुर्दश्यामविमुक्तमुपासते ॥ ९० ॥ किंबिभेतिनरोधीरःकृतादघशिलोच्चयात् ॥ अविमुक्तेशलिंगस्यभक्तिवज्रधरो
यदि ॥ ९१ ॥ क्वाविमुक्तंमहालिंगंचतुर्वर्गफलोदयम् ॥ क्वपापिपापशैलोऽल्पोयःक्षयेन्नामसंभृतः ॥ ९२ ॥ अविमुक्तेमहाक्षेत्रेविश्वेशसमधिष्ठिते ॥ यैर्न
दृष्टंविमूढास्तेऽविमुक्तंलिंगमुत्तमम् ॥ ९३ ॥ द्रष्टारमविमुक्तस्यदृष्ट्वादंडधरोयमः ॥ दूरादेवप्रणमतिप्रबद्धकरसंपुटः ॥ ९४ ॥ धन्यंतन्नेत्रनिर्माणंकृतकृत्यौ
तुतौकरौ ॥ अविमुक्तेश्वरंयेनयाभ्यामीक्षिष्टयःस्पृशेत ॥ ९५ ॥ त्रिसंध्यमविमुक्तेशंयोजपेन्नियतःशुचिः ॥ दूरदेशविपन्नोपिकाशीमृतफलंलभेत् ॥ ९६ ॥
अविमुक्तंमहालिंगंदृष्ट्वाग्रामांतरंव्रजेत् ॥ लब्धाशुकार्यसंसिद्धिंक्षेमेणप्रविशेद्गृहम् ॥९७॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशी
खंडेपूर्वार्द्धेअविमुक्तेशाविर्भावोनामैकोनचत्वारिंशोध्यायः ॥३९॥ ॥ स्कंदउवाच ॥ ॥ अविमुक्तेशमाहात्म्यंवर्णितंतेग्रतोमया ॥ अथोकिमसिशुश्रूषुः
कथयिष्यामितत्पुनः ॥ १ ॥ ॥ अगस्त्यउवाच ॥ ॥ अविमुक्तेशमाहात्म्यंश्रावंश्रावंश्रुतीमम ॥ अतीवसुश्रुतेजातेतथापिनधिनोम्यहम् ॥ २ ॥

यांकाशीखण्डटीकायामेकोनचत्वारिंशोध्यायः ॥ ३९ ॥ ॥ छ ॥ चत्वारिंशेतिविस्तीर्णेईशप्रीतिकराःशुभाः ॥ गृहस्थधर्मावर्ण्यंतेनिषेधविधिगोचराः ॥ १ ॥ उक्तानुवादपूर्वकंश्रवणान्त
रेऽगस्त्यंस्वच्छन्दयति ॥ अविमुक्तेशेति ॥ १ ॥ श्रुतानुवादपूर्वकमात्मनस्तृप्त्यभावमावेदयन्पृच्छाति अविमुक्तेशेतिद्वाभ्याम् ॥ श्रावंश्रावंश्रुत्वाश्रुत्वा ॥ सुश्रुतेशोभनेश्रवणेंद्रिये ॥ नधिनोमि

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अलंप्रत्ययंनयामि ॥ २ ॥ ३ ॥ स्वश्रेयःकैवल्यम् ॥ सुश्रेयइतिपाठेप्ययमेवार्थः ॥ अविमुक्तस्येत्यनेनतंत्रेणलिंगक्षेत्रयोर्ग्रहणम् ॥ ४ ॥ पुण्यभारतःपुण्यगौरवात्पुण्यसमूहाद्वा ॥ श्रुतिवर्त्मसभाजनाद्वेदमार्गसंसेवनात् ॥ वेदधर्मेतिक्वचित् ॥ ५ ॥ श्रुतीति ॥ छिद्रंपापावसरंप्राप्ययौकलिकालौप्राणिनोजिघांसतोनाशयतस्तौवेदमार्गसेवमानस्यपुंसःसंस्पर्शनान्नश्यतइत्यन्वयः ॥ पाठान्तरेवेदमार्गसेवमानस्यकैवल्यंफलमुक्त्वास्मृतिवर्त्मजुषःपुंसःफलमाह ॥ स्मृतीति ॥ प्रथमपाठेश्रुतिमूलत्वात्स्मृतेस्तस्याःपृथगनुल्लेखइतिभावः ॥ ६ ॥ उत्तरार्धंविवृणोति ॥ वर्जितस्योति ॥ चःसमुच्चये ॥ वैइतिपाठेपिसएवार्थः ॥ अकरणेयतइतिपाठेतुसहेतुकंव्यतिरेकमाह ॥ वर्जितस्येति ॥ हतोनाशयतः ॥ रंध्रदर्शनात्छिद्रदर्शनात् ॥ ७ ॥ ८ ॥ पलांडुंरक्तलशुनभेदंप्याजइतिप्रसिद्धम् ॥ विड्वराहंपुरीषभुजंग्राम्यसूकरम् ॥ शेलुंवहुवारकंश्लेष्मातकफलमित्यर्थः ॥ लशुनंशुक्लवर्णप्रसिद्धमेव ॥ गृंजनंहरितमूलकंगाजरइतिलोकेप्रसिद्धम् ॥ गोःपीयूषमनिर्दशायागोःक्षीरंपीयूषमितिमन्वादौदृश्यते ॥ तंडुलीयंविष्ठाप्रभवमल्पमारिषम् ॥ तंडुलीयोऽल्पमारिषइत्यमरः ॥ तथाचमनुः ॥ अभक्ष्याणिद्विजातीनाममेध्यप्रभवाणिचेति ॥ विड्जातानीतियाज्ञवल्क्यवचनाच्च ॥ कवकंछत्राकं

अविमुक्तेश्वरंलिंगंक्षेत्रंचाप्यविमुक्तकम् ॥ एतयोस्तुकथंप्राप्तिर्भवेत्षण्मुखतद्वद ॥ ३ ॥ ॥ स्कंदउवाच ॥ ॥ शृणुकुंभजवक्ष्यामियथाप्राप्तिर्भवेदिह ॥ स्वश्रेयोदातुरेतस्याविमुक्तस्यमहामते ॥ ४ ॥ समीहितार्थसंसिद्धिर्लभ्यतेपुण्यभारतः ॥ तच्चपुण्यंभवेद्विप्रश्रुतिवर्त्मसभाजनात् ॥५॥ श्रुतिवर्त्मजुषः पुंसःसंस्पर्शान्नश्यतोमुने ॥ कलिकालावपिसदाछिद्रंप्राप्यजिघांसतः ॥६॥ वर्जितस्यविधानेनप्रोक्तस्याकरणेनवै ॥ कलिकालावपिहतोब्राह्मणरंध्रदर्शनात् ॥ ७ ॥ निषिद्धाचरणंतस्मात्कथायिष्येतवाग्रतः ॥ तद्दूरतःपरित्यज्यनरोनानिरयीभवेत् ॥ ८ ॥ पलांडुंविड्वराहंचशेलुंलशुनगृंजने ॥ गोपीयूषंतंडुलीयंवर्ज्यंचकवकंसदा ॥ ९ ॥ व्रश्चनान्वृक्षनिर्यासान्पायसापूपशष्कुलीः ॥ अदेवपित्र्यंपललमवत्सागोपयस्त्यजेत् ॥ १० ॥ पयएकशफंहेयं तथाक्रामेलकाविकम् ॥ रात्रौनदधिभोक्तव्यंदिवाननवनीतकम् ॥ ११ ॥ टिट्टिभंकलविंकंचहंसंचक्रंप्लवंबकम् ॥ त्यजेन्मांसाशिनःसर्वान्सारसंकुक्कुटंशुकम् ॥ १२ ॥ जालपादान्खंजरीटान्बुडित्वामत्स्यभक्षकान् ॥ मत्स्याशीसर्वमांसाशीतन्मत्स्यान्सर्वथात्यजेत् ॥ १३ ॥

गौडेप्राकृतैर्यस्यशाकःक्रियते ॥ ९ ॥ व्रश्चनान्व्रश्चनंछेदनंतत्प्रभवानित्यर्थः ॥ तथाचमनुः ॥ लोहितान्वृक्षनिर्यासान्व्रश्चनप्रभवांस्तथेति ॥ पायसापूपशष्कुलीः ॥ अदेवपित्र्याइत्यग्रिमपदस्यविभक्तिविपरिणमय्यानुषंगः ॥ तत्रपायसंपरमान्नम् ॥ अपूपामंडकादयः ॥ शष्कुल्यस्तैलपक्वविशेषाः ॥ देवेभ्यःपितृभ्यश्चसाधुउपकल्पितंयन्नभवतितददेवपित्र्यम् ॥ पललंमांसम् ॥ १० ॥ एकशफमश्वाद्येकखुरसंबंधि ॥ क्रामेलकमुष्ट्रसंबंधि ॥ आविकंमेषसंबंधि ॥ दिवादिवसे ॥ नवनीतंनवोद्धृतम् ॥ ११ ॥ टिट्टिभंपक्षिविशेषम् ॥ कलविंकंचटकम् ॥ हंसंश्वेतगरुतम् ॥ चक्रंचक्रवाकम् ॥ प्लवंजलकुक्कुटम् ॥ बकंकंकम् ॥ मांसाशिनःमांसादान् ॥ सारसंपुष्कराह्वयम् ॥ कुक्कुटंचरणायुधम् ॥ शुकंकीरम् ॥१२॥ जालपादान्हंसविशेषान् ॥ शरारिप्रभृतीनितिमनटीकाकारः ॥

१ पेहुस 'इतिप्रसिद्धम्' प्रसवानंतरप्रथमदुग्धमिति ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

खंजरीटान्खंजनान् ॥ बुडित्वामत्स्यभक्षकान्बुडित्वाजलेनिमज्ज्ययेमत्स्यान्खादंतितान्मद्गुप्रभृतीनित्यर्थः ॥ तथाचमनुः ॥ निमज्जतश्चमत्स्यादानिति ॥ तत्तस्मात् ॥१३॥ हव्यानिकव्यानिचदे वानांपितॄणांचान्नानितेषुनियुक्तौविहितौपाठीनरोहितौ पाठीनःसहस्रदंष्ट्रोबोपालइतिगौडेप्रसिद्धः रोहितोमत्स्यभेदःप्रसिद्धस्तौ ॥ शशोमृगभेदः ॥ शल्लकःश्वावित् ॥ कच्छपःकूर्मः ॥ १४ ॥ श्वावि दिति ॥ संबोधलक्षणार्थश्वाविधःपुनर्ग्रहणम् ॥ ज्ञाताःशिष्टपरंपरयाभक्ष्यत्वेनप्रख्याताहारिणकपिंजलादयःप्रशस्ताः ॥ १५ ॥ अखंडस्नेहवर्जितंनिःशेषस्नेहरहितमित्यर्थः ॥ पाठांतरेखंडस्नेहाभ्यां

हव्यकव्यनियुक्तौतुभक्ष्यौपाठीनरोहितौ॥मांसाशिभिस्त्वमीभक्ष्याःशशशल्लककच्छपाः ॥१४॥ श्वाविद्गोधेप्रशस्तेचज्ञाताश्चमृगपक्षिणः ॥ आयुष्कामैः स्वर्गकामैस्त्याज्यंमांसंप्रयत्नतः ॥ १५ ॥ यज्ञार्थपशुहिंसायासास्वर्ग्यानेतराक्वचित् ॥ त्यजेत्पर्युषितंसर्वमखंडस्नेहवर्जितम् ॥ १६ ॥ प्राणात्ययेक्रतौ श्राद्धेभेषजेविप्रकाम्यया ॥ अलौल्यमित्थंपललंभक्षयन्नैवदोषभाक् ॥ १७ ॥ नतादृशंभवेत्पापंमृगयावृत्तिकांक्षिणः ॥ यादृशंभवतिप्रेत्यलौल्यान्मांसो पसेविनः ॥ १८ ॥ मखार्थंब्रह्मणासृष्टाःपशुद्रुममृगौषधीः ॥ निघ्नन्नहिंसकोविप्रस्तासामपिशुभागतिः ॥ १९ ॥ पितृदेवक्रतुकृतेमधुपर्कार्थमेवच ॥ तत्र हिंसाप्यहिंसास्याद्धिंसान्यत्रसुदुस्तरा ॥ २० ॥ योजंतूनात्मपुष्ट्यर्थंहिनस्तिज्ञानदुर्बलः ॥ दुराचारस्यतस्येहनामुत्रापिसुखंक्वचित् ॥ २१ ॥ भोक्तानुमं तासंस्कर्ताक्रयिविक्रयिहिंसकाः ॥ उपहर्ताघातयिताहिंसकाश्चाष्टधास्मृताः ॥ २२ ॥ प्रत्यब्दमश्वमेधेनशतंवर्षाणियोयजेत् ॥ अमांसभक्षकोयश्चतयो रंत्योविशिष्यते ॥ २३ ॥ यथैवात्मापरस्तद्वद्द्रष्टव्यःसुखमिच्छता ॥ सुखदुःखानितुल्यानियथात्मनितथापरे ॥ २४ ॥ सुखंवायदिवाचान्यद्यत्किंचि त्क्रियतेपरे ॥ तत्कृतंहिपुनःपश्चात्सर्वमात्मनिसंभवेत् ॥ २५ ॥ नक्लेशेनविनाद्रव्यमर्थहीनेकुतःक्रियाः ॥ क्रियाहीनेकुतोधर्मोधर्महीनेकुतःसुखम् ॥ ॥ २६ ॥ सुखंहिसर्वैराकांक्ष्यंतच्चधर्मसमुद्भवम् ॥ तस्माद्धर्मोत्रकर्तव्यश्चातुर्वर्ण्येनयत्नतः ॥ २७ ॥ न्यायागतेनद्रव्येणकर्तव्यंपारलौकिकम् ॥ दानंच विधिनादेयंकालेपात्रेचभावतः ॥ २८ ॥ विधिहीनंतथाऽपात्रेयोददातिप्रतिग्रहम् ॥ नकेवलंहितद्यातिशेषंतस्यचनश्यति ॥ २९ ॥ व्यसनार्थेकुटुं बार्थेयद्दणार्थेचदीयते ॥ तदक्षयंभवेदत्रपरत्रचनसंशयः ॥३०॥ मातापितृविहीनंयोमौंजीपाणिग्रहादिभिः ॥ संस्कारयेन्निजैरर्थैस्तस्यश्रेयस्त्वनंतकम् ॥ ॥ ३१ ॥ अग्निहोत्रैर्नतच्छ्रेयोनाग्निष्टोमादिभिर्मखैः ॥ यच्छ्रेयःप्राप्यतेमर्त्यैर्द्विजेचैकेप्रतिष्ठिते ॥ ३२ ॥ योह्यनाथस्यविप्रस्यपाणिंग्राहयतेकृती ॥ इहसौख्यमवाप्नोतिसोक्षयंस्वर्गमाप्नुयात् ॥ ३३ ॥ पितृगेहेतुयाकन्यारजःपश्यत्यसंस्कृता ॥ भ्रूणहातत्पिताज्ञेयोवृषलीसापिकन्यका ॥ ३४ ॥ यस्तां परिणयेन्मोहात्सभवेद्वृषलीपतिः ॥ तेनसंभाषणंत्याज्यमपाङ्क्तेयेनसर्वदा ॥ ३५ ॥

निर्मितंयदन्नंभवतितदखंडस्नेहनिर्मितम् ॥ १६ ॥ भेषजेऔषधे ॥ अलौल्यमलोभंयथास्यात्तथा ॥ पललंमांसम् ॥ १७॥ १८ ॥ १९ ॥ मधुपर्कार्थंगृह्योक्तकर्मविशेषार्थम् ॥२०॥२१॥ स्मृताविद्ध द्विरितिशेषः॥अष्टधाऽधमाइतिवापाठः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ चतुर्वर्णाएवचातुर्वर्ण्यंतेन ॥२७॥ भावतोभक्तितः ॥२८॥ शेषमन्यदपिपुण्यम् ॥२९॥ अक्षयंबहुकालस्थायितत्फलं भवतीत्यर्थः ॥ ३० ॥ श्रेयःपुण्यम् ॥ ३१ ॥ ३२ ॥ पाणिंग्राहयतेविवाहंकारयति ॥ ३३ ॥ भ्रूणहाश्रेष्ठब्राह्मणहन्ता ॥ गर्भस्थब्राह्मणबालहंतेतिवा ॥ वृषलीशूद्री ॥ ३४ ॥ ३५ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पश्चाद्रजोदर्शनस्यार्वाक्पूर्वमित्यर्थः ॥३६॥३७॥ पूर्वंस्त्रियइति ॥ भुक्ताविवाहानन्तरंक्रमेणत्रिषुदिवसेषु॥तथाचश्रुतिः ॥ सोमःप्रथमोविविदेगंधर्वोविविदउत्तरः ॥ तृतीयोऽग्निष्टेपतिस्तुरीयस्तेमनुष्यजा इत्यादि ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ अनग्निकामग्न्यादिनाऽभुक्तांरजआदिकालइत्यर्थः ॥ कन्यांभुंक्तेरजःकालइतिपूर्वमुक्तेः ॥ ४२ ॥ ४३ ॥ कुणपंकुणपशब्देनखड्गपात्रादि ॥ स्त्रीमुखंभो गकाले ॥ तथाचमनुः ॥ नित्यमास्यंशुचिस्त्रीणामिति ॥ नदुष्यन्तिनदूषयंतिदुष्टबुद्ध्यानपश्यन्तीत्यर्थः ॥ ४४ ॥ ४५ ॥ ४६ ॥ त्यागोनविधीयते ॥ पोषणावेक्षणेकार्येइतिभावः ॥ यथाश्रुतेऽर्थे

विज्ञायदोषमुभयोःकन्यायाश्चवरस्यच ॥ संबंधंरचयेत्पश्चादन्यथादोषभाक्पिता ॥ ३६ ॥ स्त्रियःपवित्राःसततंनैतादुष्यंतिकेनचित् ॥ मासिमासिरजस्तासांदुष्कृतान्यपकर्षति ॥ ३७ ॥ पूर्वंस्त्रियःसुरैर्भुक्ताःसोमगंधर्ववह्निभिः ॥ भुंजतेमानुषाःपश्चान्नैतादुष्यंतिकेनचित् ॥ ३८ ॥ स्त्रीणांशौचंददौसोमःपावकःसर्वमेध्यताम् ॥ कल्याणवाणींगंधर्वास्तेनमेध्याःसदास्त्रियः ॥ ३९ ॥ कन्यांभुंक्तेरजःकालेऽग्निःशशीलोमदर्शने ॥ स्तनोद्भेदेषुगंधर्वास्तत्प्रागेवप्रदीयते ॥४०॥ दृश्यरोमात्वपत्यघ्नीकुलघ्न्युद्गतयौवना ॥ पितृघ्न्याविष्कृतरजास्ततस्ताःपरिवर्जयेत् ॥४१॥ कन्यादानफलप्रेप्सुस्तस्माद्दद्यादनग्निकाम् ॥ अन्यथानफलंदातुःप्रतिग्राहीपतेदधः ॥४२॥ कन्यामभुक्तांसोमाद्यैर्ददद्दानफलंलभेत् ॥ देवभुक्तांददद्दातानस्वर्गमधिगच्छति ॥४३॥ शयनासनयानानिकुणपंस्त्रीमुखंकुशाः॥ यज्ञपात्राणिसर्वाणिनदुष्यंतिबुधाःक्वचित् ॥ ४४ ॥ वत्सःप्रस्रवणेमेध्यःशकुनिःफलपातने ॥ नार्योरतिप्रयोगेषुश्वामृगग्रहणेशुचिः ॥ ४५ ॥ अजाश्वयोर्मुखंमेध्यंगावोमेध्यास्तुपृष्ठतः ॥ पादतोब्राह्मणामेध्याःस्त्रियोमेध्यास्तुसर्वतः ॥ ४६ ॥ बलात्कारोपभुक्तावाचौरहस्तगतापिवा ॥ नत्याज्यादयितानारीनास्यास्त्यागोविधीयते ॥ ४७ ॥ आम्लेनताम्रशुद्धिःस्याच्छुद्धिःकांस्यस्यभस्मना ॥ संशुद्धीरजसानार्यास्तटिन्यावेगतःशुचिः ॥४८॥ मनसापिहियानेहचिंतयेत्पुरुषांतरम् ॥ सोमयासहसौख्यानिभुंक्तेचात्रापिकीर्तिभाक् ॥४९॥ पितापितामहोभ्रातासकुल्योजननीतथा ॥ कन्याप्रदःपूर्वनाशेप्रकृतिस्थःपरःपरः ॥ ५० ॥ अप्रयच्छन्समाप्नोतिभ्रूणहत्यामृतावृतौ ॥ स्वयंत्वभावेदातॄणांकन्याकुर्यात्स्वयंवरम् ॥ ॥ ५१ ॥ हृताधिकारांमलिनांपिंडमात्रोपजीविनीम् ॥ परिभूतामधःशय्यांवासयेद्व्यभिचारिणीम् ॥ ५२ ॥ व्यभिचारादृतौशुद्धिर्गर्भेत्यागोविधीयते ॥ गर्भभर्तृवधादौतुमहत्यापिचकल्मषे ॥ ५३ ॥ शूद्रस्यभार्याशूद्रैवसाचस्वाचविशःस्मृते ॥ तेचस्वाचैवराज्ञस्तुताश्चस्वाचाग्रजन्मनः ॥ ५४ ॥

गृह्यमाणेरावणहस्तगतायाबलात्कारोपभोगशंकितायालक्ष्म्याविष्णुनात्यागायोगात् ॥ ४७ ॥ रजसासंशुद्धिर्मनोव्यभिचारेसतीत्यर्थः॥ यथाश्रुतमितितैर्भुक्तास्तन्नरजसास्त्रीमनोदुष्टेतियाज्ञवल्क्यवचनविरोधात् ॥ शुचिःशुचित्वम् ॥ तटिनीतिवापाठः ॥ ४८ ॥ उमयापार्वत्या ॥ चकारोभिन्नक्रमे ॥ अत्रापिचेत्यर्थः ॥ ४९ ॥ सकुल्यःसमानकुलोत्पन्नः ॥ प्रकृतिस्थःस्वभावस्थः ॥ ५० ॥ ॥ ५१ ॥ परिभूतांतिरस्कृताम् ॥ अधःशय्याशय्यायाबहिः ॥ ५२ ॥ व्यभिचारान्मानसव्यभिचारात् ॥ महतिकल्मषेमहापातके ॥ ५३ ॥ शूद्रस्येति ॥ शूद्रस्यशूद्रैवभार्याभवतिनतूत्कृष्टावैश्यादय

१ नेपालदेशीयंकंबलमितिमनुटीकायाम् ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्तिस्रः ॥ विशोवैश्यस्यशूद्रावैश्याचभार्यामन्वादिभिःस्मृते ॥ क्षत्रियस्यवैश्याशूद्रेक्षत्रियाच॥ब्राह्मणस्यक्षत्रियावैश्याशूद्राब्राह्मणीच ॥ ५४ ॥ आरोप्यशूद्रामिति ॥ सवर्णामपरिणीयदैवाच्छूद्रापरि णेतुर्ब्राह्मणस्यगमननिषेधोयम् ॥ जनयित्वासुतंतस्यामितिऋतुकालनिषेधपरम् ॥ ब्राह्मण्यादेवहीयतइतिदोषभूयस्त्वार्थम् ॥ दैवेति ॥ ५५ ॥ यदिकथंचित्सवर्णोत्क्रमणेनवाशूद्रापरिणीयतेतदाभार्यात्वे नप्रसक्तानितत्कर्तृकाणिदैवादीन्यनेननिषिध्यन्ते ॥ दैवंहोमादि ॥ पित्र्यंश्राद्धादि ॥ आतिथेयमतिथिभोजनादिव्रतानियस्यशूद्रासम्पाद्यानितद्धव्यंकव्यंपितृदेवानाश्नंतिनचतेनातिथ्येनसगृहीस्वर्गंयाति ॥ ५६ ॥ जामयइति ॥ यानिगेहानिजामयोज्ञातिभार्याभगिनीपत्नीदुहितृस्नुषाद्याअपूजिताःसत्योऽभिशपंतिइदमनिष्टमेषामस्त्वितितान्यभिचारहतानीवधनपश्वादिसहितानिनश्यंतियस्मात् ॥ ५७ ॥ तदभ्यर्च्याइति ॥ तत्तस्मात्सत्कारेषुकौतुकादिषुउत्सवेषूपनयनादिष्वाभ्युदयिकेषुसुवासिन्योजामयः सदापूजनीयाइति ॥५८॥ ५९ ॥ यत्रेति ॥ भर्त्रास्त्रीतिहेतौतृतीया ॥ यत्रवेश्मनिभार्यास्वामिना

आरोप्यशूद्रांशयनेविप्रोगच्छेदधोगतिम् ॥ उत्पाद्यपुत्रंशूद्रायांब्राह्मण्यादेवहीयते ॥ ५५ ॥ दैवपित्र्यातिथेयानितत्प्रधानानियस्यतु ॥ देवाद्यास्तन्नचाश्नंतिसचस्वर्गंनगच्छति ॥ ५६ ॥ जामयोयानिगेहानिशपंत्यप्रतिपूजिताः ॥ कृत्याभिर्निहतानीवनश्येयुस्तान्यसंशयम् ॥ ५७ ॥ तदभ्यर्च्याः सुवासिन्योभूषणाच्छादनाशनैः ॥ भूतिकामैर्नरैर्नित्यंसत्कारेषूत्सवेषुच ॥५८॥ यत्रनार्यःप्रमुदिताभूषणाच्छादनाशनैः ॥ रमंतेदेवतास्तत्रस्युस्तत्रसफलाः क्रियाः ॥ ५९ ॥ यत्रतुष्यतिभर्त्रास्त्रीस्त्रियाभर्ताचतुष्यति ॥ तत्रवेश्मनिकल्याणंसंपद्येतपदेपदे ॥६०॥ अहुतंचहुतंचैवप्रहुतंप्राशितंतथा ॥ ब्राह्मंहुतंपंचमंचपंचयज्ञाइमेशुभाः ॥ ६१ ॥ जपोऽहुतोहुतोहोमःप्रहुतोभौतिकोबलिः ॥ प्राशितंपितृसंतृप्तिर्हुतंब्राह्मंद्विजार्चनम् ॥ ६२ ॥ पंचयज्ञानिमान्कुर्वन्ब्राह्मणोनावसीदति ॥ एतेषामननुष्ठानात्पंचसूनाअवाप्नुयात् ॥ ६३ ॥ ब्राह्मणंकुशलंपृच्छेद्बाहुजातमनामयम्॥वैश्यंसुखंसमागम्यशूद्रंसंतोषमेवच ॥ ६४ ॥ जातमात्रःशिशुस्तावद्यावदष्टौसमाःस्मृताः ॥ भक्ष्याभक्ष्येषुनोदुष्येद्यावन्नैवोपनीयते ॥ ६५ ॥ भरणंपोष्यवर्गस्यदृष्टादृष्टफलोदयम् ॥ प्रत्यवायोह्यभरणेभर्तव्यस्तत्प्रयत्नतः ॥ ६६ ॥ मातापितागुरुपत्नीःत्वपत्यानिसमाश्रिताः ॥ अभ्यागतोतिथिश्चाग्निःपोष्यवर्गाअमीनव ॥ ६७ ॥ सजीवतिपुमान्योऽत्रबहुभिश्चोपजीव्यते ॥ जीवन्मृतोथविज्ञेयःपुरुषःस्वोदरंभरिः ॥ ६८ ॥ दीनानाथविशिष्टेभ्योदातव्यंभूतिकाम्यया ॥ अदत्तदानाजायंतेपरभाग्योपजीविनः ॥६९॥ विभागशीलसंयुक्तोदयावांश्चक्षमायुतः ॥ देवतातिथिभक्तस्तुगृहस्थोधार्मिकःस्मृतः ॥७०॥ शर्वरीमध्ययामौयोहुतशेषंचयद्धविः ॥ तत्रस्वपंस्तदश्नंश्चब्राह्मणोनावसीदति ॥ ७१ ॥

प्रीताभवतिकलहादिकंनकरोतिभार्ययाचभर्ताप्रीतोभवतिव्यंतराभिलाषंनकरोतितस्मिन्गृहेक्षणेक्षणेकल्याणंसंपद्यते ॥ गृहग्रहणान्नकेवलंभार्यापतीकिंतुतद्गेहेपुत्रपौत्रादिसंततिरपिश्रेयोभागिनीभवतीत्यर्थः ॥६०॥६१॥ अहुतंचेतिश्लोकंव्याचष्टे ॥ जपोऽहुतइति ॥ अहुतशब्देनब्रह्मयज्ञाख्योजपउच्यते ॥ हुतशब्देनदेवयज्ञाख्योहोमः ॥ प्रहुतशब्देनभूतयज्ञाख्योबलिः ॥ ब्राह्महुतशब्देनमनुष्ययज्ञाख्याब्राह्मणस्यार्चा ॥ प्राशितशब्देनपितृयज्ञाख्यंनित्यश्राद्धम् ॥ ६२ ॥ एतेषांपंचयज्ञानाम् ॥ एतस्याइतिपाठेपंचेष्टेरित्यर्थः ॥ पंचसूनाःपंचानांहिंसाःवधानित्यर्थः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ॥ ६६ ॥ ६७ ॥ स्वोदरंभरिःस्वीयोदरमात्रपूरकः ॥ ६८ ॥ परभाग्योपजीविनःपरान्नाद्युपजीविनइत्यर्थः ॥ ६९ ॥ विभागोविभजनंशीलंसदाचारःसत्स्वभावोवाताभ्यांसंयुक्तः ॥ ७० ॥ ७१ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इहायातआगच्छतेतिस्नेहपूर्वभाषणमित्येकम् ॥ उपासनंपादसंवाहनादि ॥
सुधाव्ययानिसुधातुल्यान्यव्ययानिकुशलानीत्येकम् ॥ यत्सौम्यमितिवाक्यादीनांविशेषणम् ॥ ७२ ॥ इहायातआगच्छतेतिस्नेहपूर्वभाषणमित्येकम् ॥ ७५ ॥
गृहस्थानामुन्नतिहितवेवृद्धिहेतवे ॥ ७३ ॥ तथेति ॥ एतानिवक्ष्यमाणानि ॥ यथाशक्त्येतिसर्वत्रसंबध्यते ॥ ७४ ॥ तृणस्योपयोगःशय्यायाअधस्तादास्तरणेऽग्नितापनेवेतिज्ञातव्यम् ॥ ७५ ॥
पैशुन्यंक्रौर्यम् ॥ द्रोहोहिंसा ॥ क्रोधादीनांद्वंद्वैक्यम् ॥ द्वेषःपरोत्कर्षासहनम् ॥ दंभोधर्मध्वजित्वम् ॥ मायाकपटम् ॥ स्वर्गमार्गार्गलानिस्वर्गमार्गनिषेधकानीत्यर्थः ॥ ७६ ॥ नवेति ॥ स्वाध्यायो
वेदाध्ययनम् ॥ ७७ ॥ ७८ ॥ जन्मर्क्षंजन्मनोनक्षत्रम् ॥ धनंचापमानंचेतिद्वंद्वैक्यम् ॥७९॥ अकुत्सितंसध्रीचीनम् ॥ प्रायोग्यंप्रयोगसंबंधि ॥ ऋणशुद्धिरधमर्णस्थानित्वापाकरणमित्यर्थः ॥८०॥

नवैतानिगृहस्थस्यकार्याण्यभ्यागतेसदा ॥ सुधाव्ययानियत्सौम्यंवाक्यंचक्षुर्मनोमुखम् ॥ ७२ ॥ अभ्युत्थानमिहायातसस्नेहंपूर्वभाषणम् ॥ उपास
नमनुव्रज्यागृहस्थोन्नतिहेतवे ॥ ७३ ॥ तथेषद्व्ययुक्तानिकार्याण्येतानिवैनव ॥ आसनंपादशौचंचयथाशक्त्याशनंक्षितिः ॥ ७४ ॥ शय्यातृणजलाभ्यं
गदीपागार्हस्थ्यसिद्धिदाः ॥ तथानवविकर्माणित्याज्यानिगृहमेधिनाम् ॥७५॥ पैशुन्यंपरदाराश्चद्रोहःक्रोधानृताप्रियम् ॥ द्वेषोदंभश्चमायाचस्वर्गमार्गा
र्गलानिहि ॥ ७६ ॥ नवावश्यककर्माणिकार्याणिप्रतिवासरम् ॥ स्नानंसंध्याजपोहोमःस्वाध्यायोदेवतार्चनम् ॥ ७७ ॥ वैश्वदेवंतथातिथ्यंनवमंपितृतर्प
णम् ॥ नवगोप्यानियान्यत्रमुनेतानिनिशामय ॥ ७८ ॥ जन्मर्क्षमैथुनंमंत्रोगृहच्छिद्रंचवंचनम् ॥ आयुर्धनापमानंस्त्रीनप्रकाश्यानिसर्वथा ॥ ७९ ॥
नवैतानिप्रकाश्यानिरहःपापमकुत्सितम् ॥ प्रायोग्यमृणशुद्धिश्चसान्वयःक्रयविक्रयौ ॥ कन्यादानंगुणोत्कर्षोनान्यत्केनापिकुत्रचित् ॥ ८० ॥ पात्र
मित्रविनीतेषुदीनानाथोपकारिषु ॥ मातापितृगुरुष्वेतन्नवकंदत्तमक्षयम् ॥ ८१ ॥ निष्फलंनवसूत्सृष्टंचाटचारणतस्करे ॥ कुवैद्येकितवेधूर्तेशठेमल्लेचवं
दिनि ॥ ८२ ॥ आपत्स्वपिनदेयानिनववस्तूनिसर्वथा ॥ अन्वयेसतिसर्वस्वंदारांश्चशरणागतान् ॥ ८३ ॥ न्यासाधीकुलवृत्तिंचनिक्षेपंस्त्रीधनंसुतम् ॥
योददातिसमूढात्माप्रायश्चित्तैर्विशुध्यति ॥ ८४ ॥ एतन्नवानांनवकंज्ञात्वाप्रियमवाप्नुयात् ॥ अन्यच्चनवकंवच्मिसर्वेषांस्वर्गमार्गदम् ॥ ८५ ॥

॥ ८१ ॥ निष्फलमिति ॥ चाटोवाचालः चारणःस्तुतिपाठकः
पात्रेति ॥ पात्रादिषुनवसुदत्तंयदेतन्नवकंनवसंख्यापरिमितंद्रव्यंतदक्षयमित्यर्थः ॥ यदिलवकमितिपाठःस्यात्तदाल्पमपीत्यर्थः ॥ ८१ ॥ निष्फलमिति ॥ चाटोवाचालः चारणःस्तुतिपाठकः
तस्करश्चौरःत्रयाणांद्वंद्वैकवद्भावः ॥ चाटचारणाभ्यांसहितस्तस्करइतिवा ॥ कितवेवंचके ॥ धूर्तेधृष्टे ॥ शठेदुष्टे ॥ वंदिनिप्रस्तावसदृशोक्तावमलप्रज्ञे ॥ ८२ ॥ आपत्स्विति ॥ अन्वयेसंततौ ॥
॥ ८३ ॥ आसमंताद्धीयतइत्याधिर्बंधकः ॥ न्यासश्चाधिश्चेतिन्यासाधी ॥ तत्रन्यासोल्पकालस्थायीनिक्षेपश्चिरस्थायीतिभेदः ॥ ८४ ॥ एतदिति ॥ नवानांपूर्वोक्तानांमध्ये ॥ प्रियंसुखम् ॥

१ उपासनं–स्वसमीपएवोपवेशनमितिकथन्न ? । २ न्यासोऽनन्यस्थापितःस्वपूर्वजैःस्थापितोवा–निक्षेपोऽन्यस्थापितःपुनःप्रदेयोनेतिबोध्यम् ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्रियमितिकचित्पाठः ॥ ८५ ॥ सत्यमिति ॥ दमइंद्रियनिग्रहः ॥ कथंचिद्विषयेषुपरापततामिंद्रियाणांप्रत्याहरणमिंद्रियाणामाकोचःप्रत्याहारइत्यर्थः ॥ ८६ ॥ दशभिर्नवकैर्मिलित्वानवतिम् ॥
॥ ८७ ॥ ८८ ॥ ८९ ॥ समर्घमल्पमूल्यम् ॥ महर्घंबहुमूल्यम् ॥ उभयत्रयकारवान्पाठोदृश्यते ॥ ९० ॥ अग्रइति ॥ अग्रेमध्येअन्तेचदृष्ट्वेतिसर्वेषांसंबन्धः ॥ श्राद्धेइतिशेषः ॥ ९१ ॥ स्वयमे
वव्याचष्टे महिषीतिद्वयेन ॥ कामयतेतस्यादूषणमनादृत्यतामुपगच्छतीत्यर्थः ॥ यद्वा कामयतेऽभिलाषमात्रंकरोतीत्यर्थः ॥ ९२ ॥ स्ववृषंस्वपतिम् ॥ परवृषेपरपतौवृषायतेपरपतिंवांछतीत्यर्थः ॥

सत्यंशौचमहिंसाचक्षांतिर्दानंदयादमः ॥ अस्तेयमिंद्रियाकोचःसर्वेषांधर्मसाधनम् ॥ ८६ ॥ अभ्यस्यनवतिंचैतांस्वर्गमार्गप्रदीपिकाम् ॥ सतामभिमतां
पुण्यांगृहस्थोनावसीदति ॥ ८७ ॥ जिह्वाभार्यासुतोभ्रातामित्रदाससमाश्रिताः ॥ यस्यैतेविनयाढ्याश्चतस्यसर्वत्रगौरवम् ॥ ८८ ॥ पानंदुर्जनसंसर्गः
पत्याचविरहोटनम् ॥ स्वप्नोन्यगृहवासश्चनारीणांदूषणानिषट् ॥८९॥ समर्घंधान्यमुद्धृत्यमहर्घंयःप्रयच्छति॥सहिवार्धुषिकोनामतस्यान्नंनैवभक्षयेत् ॥
॥९०॥ अग्रेमाहिषिकंदृष्ट्वामध्येचवृषलीपतिम् ॥ अंतेवार्धुषिकंचैवनिराशाःपितरोगताः ॥ ९१ ॥ महिषीत्युच्यतेनारीयाचस्याद्व्यभिचारिणी ॥ तांदुष्टां
कामयेद्यस्तुसवैमाहिषिकःस्मृतः ॥९२॥ स्ववृषंयापरित्यज्यपरवृषेवृषायते ॥ वृषलीसाहिविज्ञेयानशूद्रीवृषलीभवेत् ॥ ९३ ॥ यावदुष्णंभवत्यन्नंयावन्मौ
नेनभुज्यते ॥ तावदश्नंतिपितरोयावन्नोक्ताहविर्गुणाः ॥ ९४ ॥ विद्याविनयसंपन्नेश्रोत्रियेगृहमागते ॥ क्रीडंत्यौषधयःसर्वायास्यामःपरमांगतिम् ॥ ९५॥
भ्रष्टशौचव्रताचारेविप्रेवेदविवर्जिते ॥ रोदित्यन्नंदीयमानंकिंमयादुष्कृतंकृतम् ॥ ९६ ॥ यस्यकोष्ठगतंचान्नंवेदाभ्यासेनजीर्यति ॥ सतारयतिदातारं
दशपूर्वान्दशापरान् ॥ ९७ ॥ नस्त्रीणांवपनंकार्यंनचगाःसमनुव्रजेत् ॥ नचरात्रौवसेद्गोष्ठेनकुर्याद्वैदिकींश्रुतिम् ॥ ९८ ॥ सर्वान्केशान्समुद्धृत्यच्छे
दयेदंगुलद्वयम् ॥ एवमेवतुनारीणांशिरसोमुंडनंभवेत् ॥ ९९ ॥ राजावाराजपुत्रोवाब्राह्मणोवाबहुश्रुतः ॥ अकारयित्वावपनंप्रायश्चित्तंविनिर्दिशेत् ॥
॥ १०० ॥ केशानांरक्षणार्थायद्विगुणंव्रतमादिशेत् ॥ द्विगुणादक्षिणादेयाब्राह्मणेवेदपारगे ॥ १ ॥ योऽगृहीत्वाविवाहाग्निंगृहस्थइतिमन्यते ॥ अन्नंतस्य
नभोक्तव्यंवृथापाकोहिसस्मृतः ॥ २ ॥ दाराग्निहोत्रदीक्षांचकुरुतेयोऽग्रजेस्थिते ॥ परिवेत्तासविज्ञेयःपरिवित्तिस्तुपूर्वजः ॥ ३ ॥

तथाचमनुः ॥ वृषस्यंतीतुकामुकीति ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ यस्येति ॥ दशपूर्वान्दशापरान्दातुरितिशेषः ॥ ९७ ॥ नस्त्रीणामिति ॥ नचगाःसमनुव्रजेद्गोरक्षणवृत्तिर्नभवेदित्यर्थः ॥
॥ ९८ ॥ तर्हिकिंनारीणांवपनंनास्त्येवतत्राह ॥ सर्वानिति ॥ ९९ ॥ राजावेति ॥ अधिराजेतिपाठेऽधिराजपुत्रोमहाराजपुत्रः ॥ तान्वपनमकारयित्वा ॥ १०० ॥ १ ॥ योऽगृहीत्वेत्यत्राकार
प्रश्लेषः ॥ २ ॥ दाराग्निहोत्रेति ॥ अग्निहोत्रशब्दोयमग्निहोत्राद्याधानपरः ॥ यःसोदर्येज्येष्ठभ्रातरिअनूढेऽनग्निकेचदारपरिग्रहणंश्रौतस्मार्ताग्निग्रहणंचकुरुतेसपरिवेत्ता ॥ पूर्वजोज्येष्ठःपरिवित्ति

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

र्भवति ॥ ३ ॥ प्रसंगात्परिवेदनसम्बन्धिनांपंचानामप्यनिष्टंफलमाह ॥ परिवित्तिरिति ॥ परिवित्तिःपरिवेत्तायया चकन्ययापरिवेदनंक्रियतेसाकन्याप्रदातायाजकश्चतद्विवाहहोमकर्तासपंचमोयेयांते सर्वेनरकंयांति ॥ ४ ॥ परिवेदनेविवाहे ॥ ५ ॥ अर्थकारणेऽर्थादिप्राप्त्यर्थम् ॥ ६ ॥ प्रसंगात्स्त्रीलम्पटंभिक्षुंनिन्दति ॥ यस्त्विति ॥ ७ ॥ ८ ॥ शूद्रान्नमानीयतेननिर्वापंपचन्ति ॥ निरूप्यतइति निर्वापंचरुपुरोडाशादिकम् ॥ ९ ॥ ११० ॥ ११ ॥ विट्समंपुरीषतुल्यम् ॥ १२ ॥ अंगुल्यादन्तकाष्ठंकेवलयांगुल्यैवदन्तशोधनमित्यर्थः ॥ तर्जन्यावा ॥ शणशाकंमृतमांसंकरेणमथितंदधि ॥

परिवित्तिःपरिवेत्तायया चपरिविद्यते ॥ सर्वेतेनरकंयांतिदातृयाजकपंचमाः ॥ ४ ॥ क्लीबेदेशांतरस्थेचमूकेप्रव्रजितेजडे ॥ कुब्जेखर्वेचपतितेनदोषः परिवेदने ॥ ५ ॥ वेदाक्षराणियावंतिनियुंज्यादर्थकारणे ॥ तावतीर्वैभ्रूणहत्यावेदविक्रयकृल्लभेत् ॥ ६ ॥ यस्तुप्रव्रजितोभूत्वासेवतेमैथुनंपुनः ॥ षष्टिर्वर्ष सहस्राणिविष्ठायांजायतेकृमिः ॥ ७ ॥ शूद्रान्नंशूद्रसंपर्कःशूद्रेणचसहासनम् ॥ शूद्राद्विद्यागमःकश्चिज्ज्वलंतमपिपातयेत् ॥ ८ ॥ शूद्रादाहृत्यनिर्वापंये पचंत्यबुधाद्विजाः ॥ तेयांतिनरकंघोरंब्रह्मतेजोविवर्जिताः ॥ ९ ॥ माक्षिकंफाणितंशाकंगोरसंलवणंघृतम् ॥ हस्तदत्तानिभुक्तानिदिनमेकमभोजनम् ॥ ॥ ११० ॥ हस्तदत्ताश्चयेस्नेहालवणंव्यंजनानिच ॥ दातारंनोपतिष्ठंतेभोक्ताभुंक्तेतुकिल्बिषम् ॥ ११ ॥ आयसेनैवपात्रेणयदन्नमुपदीयते ॥ भोक्तात द्विट्समंभुंक्तेदाताचनरकंव्रजेत् ॥ १२ ॥ अंगुल्यादंतकाष्ठंचप्रत्यक्षंलवणंचयत् ॥ मृत्तिकाभक्षणंयच्चसमंगोमांसभक्षणैः ॥ १३ ॥ पानीयंपायसंभैक्षं घृतंलवणमेवच ॥ हस्तदत्तंनगृह्णीयात्तुल्यंगोमांसभक्षणैः ॥ १४ ॥ अग्रतोनिवसेन्मूर्खोदूरतश्चगुणान्वितः ॥ गुणान्वितायदातव्यंनास्तिमूर्खेव्य तिक्रमः ॥१५॥ ब्राह्मणातिक्रमोनास्तिविप्रेवेदविवर्जिते ॥ ज्वलंतमग्निमुत्सृज्यनहिभस्मनिहूयते ॥ १६ ॥ सन्निकृष्टमधीयानंब्राह्मणंयोव्यतिक्रमेत् ॥ भोजनेचैवदानेचदहेदासप्तमंकुलम् ॥ १७ ॥ गोरक्षकान्वाणिजकांस्तथाकारुकुशीलवान् ॥ प्रेष्यान्वार्धुषिकांश्चैवविप्राञ्शूद्रवदाचरेत् ॥१८॥ देवद्रव्य विभागेनब्रह्मस्वहरणेनच ॥ कुलान्याशुविनश्यंतिब्राह्मणातिक्रमेणच ॥ १९ ॥ मादेहीतिचयोब्रूयाद्गवाग्निब्राह्मणेषुच ॥ तिर्यग्योनिशतंगत्वाचांडालेष्व भिजायते ॥ १२० ॥ वाचायच्चप्रतिज्ञातंकर्मणानोपपादितम् ॥ ऋणंतद्धर्मसंयुक्तमिहलोकेपरत्रच ॥ २१ ॥

तर्जनींदंतधावश्चसद्योगोमांसभक्षणमितिवचनात् ॥ प्रत्यक्षलवणंकेवललवणम् ॥ चक्षुर्दृश्यलवणमितिकेचित् ॥ मृत्तिकाभक्षणमपक्वमृद्भक्षणंसामान्यमृद्भक्षणंवा ॥ मृत्तिकायाभक्षणमिति ॥ १३ ॥ ॥ १४ ॥ १५ ॥ अग्रतोनिवसेदित्येतदेवहेतुतउपपादयति ॥ ब्राह्मणेति ॥ १६ ॥ सन्निकृष्टमिति ॥ चएवशब्दौभिन्नक्रमौदहेदित्यस्यानंतरंयथासंख्यंयोजनीयौ ॥ १७ ॥ कारवःकटादि क्रियोपजीविनः ॥ कुशीलवाबुद्ध्युपजीविनोमूल्यकर्मकारास्तान्कारुकुशीलवान् ॥ १८ ॥ देवेति ॥ विभागेनविभज्यग्रहणेन ॥ १९ ॥ मादेहीति ॥ गवाग्नीतिछांदसम् ॥ १२० ॥ २१ ॥

---

१ निर्वापो दानमिति ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विघसाशीत्यर्धंस्वयंव्याचष्टे यज्ञशेषइत्यर्धेन ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ गणान्नंबहुभिरेकत्रपक्वंभक्तम् ॥ गणिकान्नंवेश्यान्नम् ॥ स्त्रीणांप्रथमगर्भेषुसीमंतोन्नयनादिषु ॥२६॥२७॥ २८ ॥ अजीर्णेऽभ्युदितेजाते ॥२९॥ चैत्यवृक्षंग्राम्यजनपूज्यंतरुम् ॥ शिवनिर्माल्यभोजिनमितिबाणादिर्लिंगव्यतिरेकेणबोद्धव्यम् ॥ १३०॥३१॥३२॥ ३३ ॥ यातुधानाइति ॥ मंडलेनविवर्जितंभोजनंय

विघसाशीभवेन्नित्यंनित्यंचामृतभोजनः ॥ यज्ञशेषोऽमृतंभुक्तशेषंतुविघसंविदुः ॥ २२ ॥ सव्यादंसात्परिभ्रष्टेनाभिदेशेव्यवस्थिते ॥ वस्त्रेसएकवासास्तं देवेपित्र्येचवर्जयेत् ॥ २३ ॥ यदेवतर्पयत्यद्भिःपितॄन्स्नात्वाद्विजोत्तमः ॥ तेनैवसर्वमाप्नोतिपितृयज्ञक्रियाफलम् ॥ २४ ॥ हस्तौप्रक्षाल्यगंडूषंयःपिबेद्ब्राह्मणोत्तमः ॥ देवंपित्र्यंतथात्मानंत्रयंसउपघातयेत् ॥ २५ ॥ गणान्नंगणिकान्नंचयदन्नंग्रामयाजके ॥ स्त्रीणांप्रथमगर्भेषुभुक्त्वाचांद्रायणंचरेत् ॥ २६ ॥ पक्षेवायदिवामासेयस्यगेहेत्तिनद्विजः ॥ भुक्तादुरात्मनस्तस्यचरेच्चांद्रायणव्रतम् ॥ २७ ॥ सत्रिणांदीक्षितानांचयतीनांब्रह्मचारिणाम् ॥ एतेषांसूतकंनास्तिऋत्विजांकर्मकुर्वताम् ॥ २८ ॥ अजीर्णेऽभ्युदितेवांतेश्मश्रुकर्मणिमैथुने ॥ दुःस्वप्नेदुर्जनस्पर्शेस्नानमेवविधीयते ॥ २९ ॥ चैत्यवृक्षंचितिंयूपं शिवनिर्माल्यभोजिनम् ॥ वेदविक्रयिणंस्पृष्ट्वासचैलोजलमाविशेत् ॥ १३० ॥ अग्न्यगारेगवांगोष्ठेदेवब्राह्मणसन्निधौ ॥ स्वाध्यायेभोजनेपानेपादुकेवैविसर्जयेत् ॥ ३१ ॥ खलक्षेत्रगतंधान्यंकूपवापीषुयज्जलम् ॥ अग्राह्यादपितद्ग्राह्यंयच्चगोष्ठगतंपयः ॥ ३२ ॥ यद्वेष्टितशिराभुंक्तेयोभुंक्तेदक्षिणामुखः ॥ सोपानत्कश्चयद्भुंक्तेतद्वैरक्षांसिभुंजते ॥ ३३ ॥ यातुधानाःपिशाचाश्चराक्षसाःक्रूरकर्मिणः ॥ हरंतिरसमन्नस्यमंडलेनविवर्जितम् ॥३४॥ ब्रह्माद्याश्चसुराः सर्वेवसिष्ठाद्यामहर्षयः ॥ मंडलंचोपजीवंतिततःकुर्वीतमंडलम् ॥ ३५ ॥ ब्राह्मणेचतुरस्रंस्यात्त्र्यस्रंवैबाहुजन्मनः ॥ वर्तुलंचविशःप्रोक्तंशूद्रस्याभ्युक्षणं स्मृतम् ॥ ३६ ॥ नोत्संगेभोजनंकृत्वानोपाणौनैवकर्पटे ॥ नासनेनचशय्यायांभुंजीतनमलार्दितः ॥ ३७ ॥ धर्मशास्त्ररथारूढावेदखड्गधराद्विजाः ॥ क्रीडार्थमपियद्ब्रूयुःसधर्मःपरमःस्मृतः ॥ ३८ ॥ रात्रौधानादधियुतंधर्मकामोनभक्षयेत् ॥ अश्नतोधर्महानिःस्याद्व्याधिभिश्चोपपीड्यते ॥ ३९ ॥ फाणितंगोरसंतोयंलवणंमधुकांजिकम् ॥ हस्तेनब्राह्मणोदत्त्वाकृच्छ्रंचांद्रायणंचरेत् ॥ १४० ॥ गंधाभरणमाल्यानियःप्रयच्छतिधर्मवित् ॥ ससुगंधिः सदाहृष्टोयत्रयत्रोपजायते ॥ ४१ ॥ नीलीरक्तंतुयद्वस्त्रंदूरतःपरिवर्जयेत् ॥ स्त्रीणांक्रीडार्थसंयोगेशयनीयेनदुष्यति ॥ ४२ ॥

दिस्यादितिशेषः ॥ यद्वा मंडलेनविवर्जितंयदन्नंतस्यान्नस्यरसंहरंतीत्यर्थः ॥ ३४ ॥ ३५॥३६॥३७॥ ३८ ॥ धानादधियुतंलाजदधिभ्यांमिश्रितमन्नादीत्यर्थः ॥ ३९ ॥ फाणितंफेणीतिप्रसिद्धम् ॥ कंजिकैवकांजिका ॥ मधुचकांजिकाचमधुकांजिकमित्येकवद्भावः ॥ यद्वा कांजिकंकंजिकासंबन्धिद्रव्यांतरंयदायोब्राह्मणोवादद्यात्तदासकृच्छ्रंचांद्रायणंकुर्यादित्यर्थः ॥ १४० ॥ ४१ ॥ ४२ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पालनाशील्याइत्यर्थात् ॥ तद्वृत्तेर्नीलीक्रयणविक्रयणवृत्तेरित्यर्थः ॥ ४३ ॥ तपःकृच्छ्रचांद्रायणादि ॥ जपइतिकचित् ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ अमृतमिति ॥ यतःऋग्यजुः सामसंस्कृतंविप्रान्नंतेनहेतुनाचतदमृतमित्यन्वयः ॥ ४९ ॥ व्यवहारेति ॥ तेनार्जनेनक्षत्रियस्यान्नमितिशेषः ॥ पयःपयोवत्पवित्रमित्यर्थः ॥ १५० ॥ प्रहरमात्रमभिव्याप्य आसम्यग्व्यवहारेण

पालनादिक्रियाश्चैवतद्वृत्तेरुपजीवनात् ॥ अपवित्रोभवेद्विप्रस्त्रिभिःकृच्छ्रैर्विशुध्यति ॥ ४३ ॥ स्नानंदानंतपोहोमःस्वाध्यायःपितृतर्पणम् ॥ वृथातस्यमहायज्ञानीलीवासोबिभर्तियः ॥ ४४ ॥ नीलीरक्तंयदावस्त्रंविप्रःस्वांगेषुधारयेत् ॥ तंतुसंततिसंख्याकेनरकेसवसेद्ध्रुवम् ॥ ४५ ॥ अहोरात्रोषितोभूत्वापंचगव्येनशुध्यति ॥ ४६ ॥ नीलीरक्तेनवस्त्रेणयदन्नमुपकल्पयेत् ॥ भोक्ताविष्ठासमंभुंक्तेदाताचनरकंव्रजेत् ॥ ४७ ॥ अमृतंब्राह्मणस्यान्नंक्षत्रियान्नंपयःस्मृतम् ॥ वैश्यस्यचान्नमेवान्नंशूद्रस्यरुधिरंस्मृतम् ॥ ४८ ॥ वैश्वदेवेनहोमेनदेवताभ्यर्चनैर्जपैः ॥ अमृतंतेनविप्रान्नमृग्यजुःसामसंस्कृतम् ॥ ४९ ॥ व्यवहारानुरूपेणन्यायेनतुयदर्जनम् ॥ क्षत्रियस्यपयस्तेनप्रजापालनतोभवेत् ॥ १५० ॥ प्रहरानद्ध्वाहाद्यदन्नमुत्पाद्ययच्छति ॥ सीतायज्ञविधानेनवैश्यान्नंतेनसंस्कृतम् ॥ ५१ ॥ अज्ञानतिमिरांधस्यमद्यपानरतस्यच ॥ रुधिरंतेनशूद्रान्नंवेदमंत्रविवर्जितम् ॥ ५२ ॥ नवृथाशपथंकुर्यात्स्वल्पेप्यर्थेनरोत्तमः ॥ वृथाहिशपथंकुर्वन्प्रेत्यचेहविनश्यति ॥ ५३ ॥ कामिनीषुविवाहेचगवांभुक्तेधनक्षये ॥ ब्राह्मणाभ्युपपत्तौचशपथैर्नास्तिपातकम् ॥५४॥ सत्येनशापयेद्विप्रंक्षात्रियंवाहनायुधैः ॥ गोबीजकांचनैर्वैश्यंशूद्रंसर्वैस्तुपातकैः ॥५५॥ अग्निंवाहारयेदेनमप्सुचैनंनिमज्जयेत् ॥ स्पर्शयेत्पुत्रदाराणांशिरांस्येनंचवापृथक् ॥ ५६ ॥ नयमंयममित्याहुरात्मावैयमउच्यते ॥ आत्मासंयमितोयेनतंयमःकिंकरिष्यति ॥ ५७ ॥ ननिस्त्रिंशस्तथातीक्ष्णःफणीवादुरतिक्रमः ॥ रिपुर्वानित्यसंक्रुद्धोयथात्मादुरधिष्ठितः ॥ ५८ ॥ एकःक्षमावतांदोषोनद्वितीयःकथंचन ॥ यदेनंक्षमयायुक्तमशक्तंमन्यतेजनः ॥ ५९ ॥ नशब्दशास्त्राभिरतस्यमोक्षोनचैवरम्यावसथप्रियस्य ॥ नभोजनाच्छादनतत्परस्यनलोकवित्तग्रहणेरतस्य ॥ १६० ॥ एकांतशीलस्यसदैवतस्यसर्वेंद्रियप्रीतिनिवर्तकस्य ॥ स्वाध्याययोगेगतमानसस्यमोक्षोध्रुवंनित्यमहिंसकस्य ॥ ६१ ॥ क्वैकांतशीलत्वमिहास्तिपुंसःक्वचेंद्रियप्रीतिनिवृत्तिरस्ति ॥ क्वयोगयुक्तिःक्वचदेवतेज्याकाश्यांविनैभिःसहजेनमुक्तिः ॥ ६२ ॥ विश्वेशसंशीलनमेवयोगस्तपश्चविश्वेशपुरीनिवासः ॥ व्रतानिदानंनियमायमाश्चस्नानंधुनद्यांयदुदग्वहायाम् ॥६३॥ ॥ स्कंदउवाच ॥ ॥ न्यायागतधनस्तत्त्वज्ञाननिष्ठोतिथिप्रियः ॥ श्राद्धकृत्सत्यवादीचगृहस्थोपीहमुच्यते ॥६४॥

कर्षणार्थमानड्वाह्वड्वाहाद्बलीवर्दात्सीतालांगलपद्धतिस्तत्संबंधियज्ञविधानेनान्नमुत्पाद्य यतोयच्छतिवैश्यस्तेनहेतुनातदन्नंसंस्कृतंपवित्रमित्यर्थः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ एनंशूद्रम् ॥ ५६ ॥ ५७ ॥ दुरधिष्ठितोऽवशः ॥ ५८ ॥ ५९ ॥ वित्तग्रहणेधनादाने ॥ चित्तग्रहणइतिपाठेचित्तानुरंजनइत्यर्थः ॥ १६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ न्यायेति ॥ इहजगति



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

जन्मनिवामुच्यते ॥ सत्त्वशुद्धिद्वारेणेत्यर्थः ॥ ६४ ॥ ६५ ॥ ६६ ॥१६७॥ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांचत्वारिंशोध्यायः ॥ ४० ॥ ॥ छ ॥ एकेनाधिकचत्वारिंशकेऽध्याये सुशोभने ॥ उच्यंतेविविधायोगाधर्मांश्चयतिवानगाः ॥ १ ॥ क्रमप्राप्तान्वनस्थधर्मानाह ॥ उषित्वैवमिति ॥ वलीत्वचःश्लथतापलितंजरसाशौक्ल्यं ताभ्यांयुतः ॥ १ ॥ अपत्येति ॥ वनवासमानि च्छंतींभार्यांपुत्रेषुसमर्प्यइच्छंत्यातुसहवनंगच्छेदित्यर्थः ॥ २ ॥ प्रगेप्रातः ॥ स्नानद्वयंमाध्याह्निकस्नानस्योपलक्षणम् ॥ उपस्पृशंस्त्रिषवणमितिमनुवचनात् ॥ ३ ॥ ४ ॥ अनादाताऽगृहीता ॥ गार्हपत्यकुण्डस्थानामग्नीनामाहवनीयदक्षिणाग्निकुण्डयोर्विहारोवितानन्तद्भवंवैतानिकम् ॥५॥ मुन्यन्नैर्नीवारादिभिः ॥ ६ ॥ शेलुशिग्रूशेलुश्चशिग्रुश्चशोभांजनःतौ ॥ कवकंछत्राकम् ॥ पललंमांसम् ॥

दीनांधकृपणार्थिभ्योदत्त्वान्नानिविशेषतः ॥ कृत्वागार्ह्याणिकर्माणिगृहस्थःश्रेयआप्नुयात् ॥ ६५ ॥ इत्थमाचरतांपुंसांकाशीनाथःप्रसीदति ॥ काशीनाथप्रसादेनकाशीप्राप्तिस्तुमोक्षकृत् ॥ ६६ ॥ ससर्वतीर्थसुस्नातःससर्वक्रतुदीक्षितः ॥ सदत्तसर्वदानस्तुकाशीयेननिषेविता ॥ १६७ ॥ इतिश्रीस्कांदे महापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेगृहस्थधर्माख्यानंनामचत्वारिंशोध्यायः ॥४०॥ ॥छ॥ ॥ स्कंदउवाच ॥ ॥ उषित्वैवंगृहेविप्रोद्वितीयादाश्रमात्परम् ॥ वलीपलितसंयुक्तस्तृतीयाश्रममाविशेत् ॥ १ ॥ अपत्यापत्यमालोक्यग्राम्याहारान्विसृज्यच ॥ पत्नींपुत्रेषुसंत्यज्य पत्न्यावावनमाविशेत् ॥ २ ॥ वसानश्चर्मचीराणिसाग्निर्मुन्यन्नवर्तनः ॥ जटीसायंप्रगेस्नायीश्मश्रुलोनखलोमभृत् ॥३॥ शाकमूलफलैर्वापिपंचयज्ञान्नहापयेत् ॥ अम्मूलफलभिक्षाभिरर्चयेद्भिक्षुकातिथीन् ॥ ४ ॥ अनादाताचदाताचदांतःस्वाध्यायतत्परः ॥ वैतानिकंचजुहुयादग्निहोत्रंयथाविधि ॥ ५ ॥ मुन्यन्नैःस्वयमानीतैःपुरोडाशांश्चनिर्वपेत् ॥ स्वयंकृतंचलवणंखादेत्स्नेहंफलोद्भवम् ॥ ६ ॥ वर्जयेच्छेलुशिग्रूचकवकंपललंमधु ॥ मुन्यन्नमाश्विनेमासित्यजेद्यत्पूर्वसंचितम् ॥७॥ ग्राम्याणिफलमूलानिफालजान्नंचसंत्यजेत् ॥ दंतोलूखलकोवास्यादश्मकुट्टोथवाभवेत् ॥ ८ ॥ सद्यःप्रक्षालकोवास्यादथवामाससंचयी ॥ त्रिषड्द्वादशमासान्नफलमूलादिसंग्रही ॥९॥ नक्ताश्येकांतराशीवाषष्ठकालाशनोपिवा ॥ चांद्रायणव्रतीवास्यात्पक्षभुग्वाथमासभुक् ॥ ॥१०॥ वैखानसमतस्थस्तुफलमूलाशनोपिवा ॥ तपसाशोषयेद्देहंपितॄन्देवांश्चतर्पयेत् ॥ ११ ॥ अग्निमात्मनिचाधायविचरेदनिकेतनः ॥ भिक्षयेत्प्राणयात्रार्थंतापसान्वनवासिनः ॥ १२ ॥ ग्रामादानीयवाश्नीयादष्टौग्रासान्वसन्वने ॥ इत्थंवनाश्रमीविप्रोब्रह्मलोकेमहीयते ॥ १३ ॥

शेलुकवकादीनांद्विजातिविषयेपूर्वाध्यायेनिषेधेसत्यापिपुनर्निषेधःसमप्रायश्चित्तविधानार्थः ॥ ७ ॥ फालजान्नमुत्सृष्टमपिफालकृष्टप्रदेशेजातंस्वामिनोपेक्षितमपिव्रीह्यादिसन्त्यजेन्नाद्यात् ॥ ८ ॥ सद्यःप्रक्षालकःएकाहमेवजीवनोचितमात्रसंग्राहकइत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ अशक्तंवैराग्यहीनंप्रत्याह॥अग्निमिति ॥ श्रौतमग्निंवैखानसशास्त्रविधानेनभस्मपानादिनास्वात्मनिसमारोप्यानिकेतनो लौकिकाग्निवद्गृहशून्योविचरेत् ॥ भिक्षयेदिति ॥ तापसान्वानप्रस्थान्तदभावेऽन्यान्वावनवासिनोगृहस्थान्द्विजान् ॥ १२ ॥ तदभावेग्रामादानीयग्राम्यस्यान्नस्याष्टौग्रासान्पर्णपुटेनशरावादिखण्डेन वापाणिनैववागृहीत्वावानप्रस्थोभुंजीत ॥ तथाचमनुः ॥ तापसेष्वेवविप्रेषुयात्रिकंभैक्ष्यमाहरेत् ॥ गृहवासिषुचान्येषुद्विजेषुवनवासिषु ॥ ग्रामादाहृत्यवाश्नीयादष्टौग्रासान्वनेवसन् ॥ प्रतिगृह्यपुटेनैवपाणि



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नाशकलेनवोति ॥ आश्रमधर्मानुष्ठानफलमाह ॥ इत्थमिति ॥ ब्रह्मलोकेतपोलोके ॥ १३ ॥ शक्तंविरक्तंमत्याह॥अतिवाह्येति ॥ इत्येवंप्रकारेण ॥ १४ ॥ आश्रमसमुच्चयपक्षमाश्रित्याह ॥ ऋण त्रयमिति ॥ ऋषिपितृदेवानामृणत्रयमसंशोध्य ॥ एतदेवविवृण्वन्नृणत्रयमेवदर्शयति ॥ अनुत्पाद्येति ॥ अपिशब्दाद्वेदाननधीत्य ॥ तथाचमनुः ॥ अनधीत्यद्विजोवेदाननुत्पाद्यतथासुतान् ॥ अनि ष्ट्वाचैवयज्ञैश्चमोक्षमिच्छन्व्रजत्यधइति॥ एतदप्यसमंजसमेवब्रह्मचर्यादेवप्रव्रजेत्॥यदहरेवविरजेत्तदहरेवप्रव्रजेदित्यादिश्रुतिविरोधात्॥तथाचसुरेश्वरवार्तिकम् ॥ ब्रह्मचर्यादेवेत्यादिवाक्यानिशतशःश्रुतौ॥ श्रूयंतेतुऋणवचोविरोधात्स्यादपस्मृतिरित्यादि ॥ अथवैतदुभयंस्मृतिवाक्यमविरक्तपरम् ॥ १५ ॥ १६ ॥ अनग्निःलौकिकाग्निरहितः ॥ शास्त्रीयाग्नित्यागस्यपूर्वमुक्तत्वात् ॥ अनिकेतनोगृहशून्यः ॥ सिद्ध्यर्थंमोक्षार्थमसहायःसहायशून्यः ॥ १७ ॥ यतिःसंन्यासी ॥ यमीतिपाठश्चित्यः ॥ प्रकृत्यन्तरंवा ॥ किंतुकालमेवस्वकर्माधीनंमरणकालमेवप्रतीक्षेत ॥ निर्दिश्यतेइतिनिर्देशोभृतिस्तत्परि

अतिवाह्यायुषोभागंतृतीयमितिकानने ॥ आयुषस्तुतुरीयांशेत्यक्त्वासंगान्परिव्रजेत् ॥ १४ ॥ ऋणत्रयमसंशोध्यत्वनुत्पाद्यसुतानपि ॥ तथायज्ञाननि ष्ट्वाचमोक्षमिच्छन्व्रजत्यधः ॥ १५ ॥ मनागपिनभूतानांयस्मादुत्पद्यतेभयम् ॥ सर्वभूतानितस्येहप्रयच्छंत्यभयंसदा ॥ १६ ॥ एकएवचरेन्नित्यमनग्नि रनिकेतनः ॥ सिद्ध्यर्थमसहायःस्याद्ग्राममन्नार्थमाश्रयेत् ॥१७॥ जीवितंमरणंवाथनाभिकांक्षेत्क्वचिद्यतिः ॥ कालमेवप्रतीक्षेतनिर्देशंभृतकोयथा॥१८॥ सर्वत्रममताशून्यःसर्वत्रसमतायुतः ॥ वृक्षमूलनिकेतश्चमुमुक्षुरिहशस्यते ॥१९॥ ध्यानंशौचंतथाभिक्षानित्यमेकांतशीलता ॥ यतेश्चत्वारिकर्माणिपंचमं नोपपद्यते ॥ २० ॥ वार्षिकांश्चतुरोमासान्विहरेन्नयतिःक्वचित् ॥ बीजांकुराणांजंतूनांहिंसातत्रयतोभवेत् ॥ २१ ॥ गच्छेत्परिहरन्जंतून्पिबेत्कंवस्त्रशो धितम् ॥ वाचंवदेदनुद्वेगांनकुध्येत्केनचित्क्वचित् ॥ २२ ॥ चरेदात्मसहायश्चनिरपेक्षोनिराश्रयः ॥ नित्यमध्यात्मनिरतोनीचकेशनखोवशी ॥ २३ ॥ कुसुंभवासादंडाढ्योभिक्षाशीख्यातिवर्जितः ॥ अलाबुदारुमृद्वेणुपात्रंशस्तंनपंचमम् ॥ २४ ॥ नग्राह्यंतैजसंपात्रंभिक्षुकेणकदाचन ॥ वराटकेसंगृहीते तत्रतत्रादिनेदिने ॥२५॥ गोसहस्रवधंपापंश्रुतिरेषासनातनी ॥ हृदिसस्नेहभावेनचेद्वक्षेत्स्त्रियमेकदा ॥ २६ ॥ कोटिद्वयंब्रह्मकल्पंकुंभीपाकीनसंशयः ॥ एककालंचरेद्भैक्षंनकुर्यात्तत्रविस्तरम् ॥ २७ ॥

शोधनकालमिवभृतकःकर्मकारः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ कंजलम् ॥ २२ ॥ अध्यात्मरतोब्रह्मध्यानपरइत्यर्थः ॥ नीचकेशनखःअसंस्कृतकेशनखरइत्यर्थः ॥ २३ ॥ कुसुम्भवासाःकुसुं भात्तवासाः ॥ गैरिकाद्यक्तवस्त्रादेरुपलक्षणमेतत् ॥ ख्यातिवर्जितःश्रैष्ठ्याख्यापकः ॥ वेणुपात्रंवंशादिदलखंडनिर्मितम् ॥ २४ ॥ वराटकेकपर्दमात्रे ॥ २५ ॥ हृदिअन्तःकरणेस्नेहभावेनकामुकतया एकदापियोयतिःस्त्रियंद्रक्षेत्पश्येत्ससंन्यासीकोटिद्वय ब्रह्मकल्पंकुंभीपाकेनरकविशेषपच्यतइतितथाविधस्तिष्ठतीतिशेषइत्युत्तरेणान्वयः ॥ सस्नेहभावेनकामसहितेनाभिप्रायेणेतिवा ॥ कोटिद्वयंब्राह्मकल्प मितिपाठेब्राह्मकल्पंब्रह्मकल्पभवंकोटिद्वयंयुगानामितिशेषः ॥२६॥ एककालमिति ॥ एककालमेकवारंप्राणधारणार्थंभैक्षंचरेत् ॥ तत्रापिविस्तरंप्रचुरभिक्षाप्रसक्तिंनकुर्यात् ॥ यतोबहुभक्षणेसक्तोयति श्चरमधातुवृद्ध्याव्याधिविषयेष्वपिप्रसज्जतीत्यर्थः ॥ तथाचमनुः ॥ एककालंचरेद्भैक्षंप्रसज्जेत्तुनविस्तरे॥भैक्षप्रसक्तोहियतिर्विषयेष्वपिसज्जतीति ॥ अत्रत्वर्धपद्यमेवदृश्यते ॥ एतत्तुकुटीचकबहूदकादि



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विषयम् ॥ एकवारंद्विवारंवाभुंजीतपरहंसकः ॥ येनकेनप्रकारेणज्ञानाभ्यासोभवेत्सदेतिवचनात् ॥२७॥ विधूमइति ॥ विधूमेविगतपाकधूमे सन्नमुसलेनिवृत्तावहननकुट्टनदंडे भुक्तवज्जनेगृहस्थपर्यंतेजने भुक्तवति वृत्तेशरावसं पातेभोजनोच्छिष्टशरावेत्यक्ते सर्वदायतिर्भिक्षांचरेत् ॥ एतच्चदिनशेषमुहूर्तत्रयरूपसायाह्नोपलक्षणम् ॥ तदाहयाज्ञवल्क्यः ॥ अप्रसक्तश्चरेद्भैक्षंसायाह्नेनाभिसंधितइति ॥ २८ ॥ ॥ २९ ॥ अनेकतंत्रेणानेकशास्त्रोक्तविधानेनेत्यर्थः ॥ ३० ॥ निर्धक्ष्यतिभस्मसात्करिष्यतीत्यर्थः ॥ ३१ ॥ दृष्ट्वेत्यादिद्वितीयांतपदानां दृष्ट्वामुक्तयेयत्नंकुर्वीतेत्यग्रिमेणान्वयः ॥ ३२ ॥ ॥ ३३ ॥ एवंपूर्वोक्तप्रकारेणनृणामनेकधागतिःफलतोदृष्टेत्यर्थः ॥ गतीर्नॄणामनेकधेतिपाठश्चेत्तर्हिंऋजुरेवार्थः ॥ दृष्ट्वेतिपदस्यावृत्तिःसर्वत्रान्वयार्था ॥ ३४ ॥ ३५ ॥ ३६ ॥ प्रकृतमुपसंहरति ॥ आश्र मानिति ॥ ३७ ॥ असंयतइति ॥ आत्माआत्मोपाधिर्देहेंद्रियादिसंघातः ॥ धीमद्भिर्विवेकिभिः ॥ संयतोवशीकृतः ॥ पदंकैवल्यम् ॥ अनामयंसर्वोपद्रवशून्यम् ॥ ३८ ॥ श्रुतीति ॥

विधूमेसन्नमुसलेव्यंगारेभुक्तवज्जने ॥ वृत्तेशरावसंपातेभिक्षांनित्यंचरेद्यतिः ॥ २८ ॥ अल्पाहारोरहःस्थायीत्विंद्रियार्थेष्वलोलुपः ॥ रागद्वेषविनिर्मुक्तो भिक्षुर्मोक्षायकल्पते ॥ २९ ॥ आश्रमेतुयतिर्यस्यमुहूर्तमपिविश्रमेत् ॥ किंतस्यानेकतंत्रेणकृतकृत्यःसजायते ॥ ३० ॥ संचितंयद्गृहस्थेनपापमामरणां तिकम् ॥ निर्धक्ष्यतिहितत्सर्वमेकरात्रोषितोयतिः ॥३१॥ दृष्ट्वाजराभिभवनमसह्यंरोगपीडितम् ॥ देहत्यागंपुनर्गर्भंगर्भक्लेशंचदारुणम् ॥३२॥ नानायो निनिवासंचवियोगंचप्रियैःसह ॥ अप्रियैःसहसंयोगमधर्माद्दुःखसंभवम् ॥ ३३ ॥ पुनर्निरयसंवासंनानानरकयातनाः ॥ कर्मदोषसमुद्भूतानृणांगतिरने कधा ॥ ३४ ॥ देहेष्वनित्यतांदृष्ट्वानित्यतांपरमात्मनः ॥ कुर्वीतमुक्तयेयत्नंयत्रयत्राश्रमेरतः ॥ ३५ ॥ करपात्रीतिविख्याताभिक्षापात्रविवर्जिता ॥ तेषां शतगुणंपुण्यंभवत्येवदिनेदिने ॥ ३६ ॥ आश्रमांश्चतुरस्त्वेवंक्रमादासेव्यपंडितः ॥ निर्द्वंद्वस्त्यक्तसंगश्चब्रह्मभूयायकल्पते ॥ ३७ ॥ असंयतःकुबुद्धी नामात्माबंधायकल्पते ॥ धीमद्भिःसंयतःसोपिपदंदद्यादनामयम् ॥३८॥ श्रुतिस्मृतिपुराणंचविद्योपनिषदस्तथा ॥ श्लोकाःसूत्राणिभाष्याणियच्चान्यद्वा ङ्मयंक्वचित् ॥ ३९ ॥ वेदानुवचनंज्ञात्वाब्रह्मचर्यंतपोदमः ॥ श्रद्धोपवासःस्वातंत्र्यमात्मनोज्ञानहेतवः ॥ ४० ॥ सहिसर्वैर्विजिज्ञास्यआत्मैवाश्रमव र्तिभिः ॥ श्रोतव्यस्त्वथमंतव्योद्रष्टव्यश्चप्रयत्नतः ॥४१॥ आत्मज्ञानेनमुक्तिःस्यात्तच्चयोगादृतेनहि ॥ सचयोगश्चिरंकालमभ्यासादेवसिध्यति ॥ ४२ ॥

श्रुतिस्मृत्यादीनियानिस्वातंत्र्यंयथास्यादात्मनोज्ञानेहेतवोवर्ततेतानिसर्वाणिज्ञात्वाप्रसिद्धआत्मासर्वैराश्रमवर्तिभिर्विजिज्ञास्योविचारणीयइतितृतीयेनान्वयः ॥ यज्ञाइतिपाठेश्रुत्यादयोयेज्ञानहेतवस्तै स्सर्वैर्विजिज्ञास्यइत्यर्थः ॥ तत्रविद्याउपासना ॥ वाङ्मयंवात्स्यायनादिप्रणीतंशास्त्रम् ॥ अपिवात्स्यायनादीनांब्रह्मण्येवसमन्वयइतिवचनात् ॥ ३९ ॥ वेदानुवचनंवेदपाठः ॥ वेदांतवचनमितिपाठे उपनिषत्स्वेवकश्चिद्भागविशेषः ॥ ४० ॥ विचारमेवश्रवणपरंसांगंदर्शयन्नुपलक्षणत्वेनोपनिषदंदर्शयति श्रोतव्यइत्यर्धेन ॥ अस्यायमर्थः ॥ आत्मावाअरेद्रष्टव्योदर्शनार्होदर्शनाविषयमापादयितव्यः ॥ श्रोतव्यःपूर्वमाचार्यतआगमतश्च ॥ पश्चान्मंतव्यस्तर्कतस्ततोनिदिध्यासितव्योनिश्चयेनध्यातव्यइति ॥ ४१ ॥ कलौतत्त्वज्ञानसाधनानांयोगादीनांदुःसंपाद्यत्वान्मुक्त्येकसाधनस्याविमुक्तेदेहत्याग

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्यात्तयेवाराणसीसमाश्रयणीयेतिवक्तुंज्ञानसाधनभूतान्योगान्दर्शयति आत्मज्ञानेनेत्यारुथ्यैकेनजन्मनेत्यतःप्राक्तनेनग्रंथेन ॥ ४२ ॥ व्यतिरेकमाह ॥ नारण्येति ॥ ४३ ॥ ४४ ॥ चिरंकालम
भ्यासादितिविवृणोति अभियोगादितित्रयेण ॥ अभियोगादध्यवसायात् ॥ सदाभ्यासात्सदानुष्ठानात् ॥ ब्रह्मणःआसमंतादभ्यासादितिवा ॥ पुनःपुनरनिर्वेदाद्वैराग्याद्वैतृष्ण्यादित्यर्थः ॥ ४५ ॥
आत्ममिथुनस्यपरमात्मैक्यभावमापन्नस्य ॥४६॥४७॥ जीवपरमात्मनोरैक्यमेवमुख्योयोगशब्दार्थइतिवक्तुंमुख्यादियोगत्रयमाह ॥ संयोगस्त्विवति ॥ तथाचकथयंति ॥ आत्मामनसासंयुज्यतइति ॥
समायोगोमेलनंकुम्भकइत्यर्थः ॥ ४८ ॥ अर्थपंडितैरितिपाठेअर्थविषयेविषयभोगविषयेपंडितैरित्यर्थः ॥ तर्ह्येतैरेवज्ञानंमोक्षश्चस्यात ॥ तथाचश्रुतिः ॥ कामोऽकार्षीत्कामःकरोतिकामःकर्ताकामःकार
यितेत्यादिरित्याशंक्यांतिमपक्षस्यतयोरसाधकत्वमाह विषयेत्यर्धेन ॥ ४९ ॥ पूर्वयोस्तत्साधकत्वमाह दुर्निवारेत्येकेन ॥ दुर्निवारायामनोवृत्तिःसायावन्ननिवर्ततेतावद्योगस्यजीवब्रह्मणोरैक्य
लक्षणस्यनेदीयसीनिकटवर्तिनीअल्पापिकिंवदन्तीवार्ताकुतइत्यन्वयः ॥ ५० ॥ मुख्यंयोगशब्दार्थमाह ॥ वृत्तिहीनामिति ॥ क्षेत्रज्ञेशोधितत्वंपदार्थस्वरूपेपरमात्मनिवृत्तिहीनंमनएकीकृत्यतदात्मनैवप्र

नारण्यसंश्रयाद्योगोननानाग्रंथचिंतनात् ॥ नदानैर्नव्रतैर्वापिनतपोभिर्नवामखैः ॥ ४३ ॥ नचपद्मासनाद्योगोनवाघ्राणाग्रवीक्षणात् ॥ नशौचेननमौने
ननमंत्राराधनैरपि ॥ ४४ ॥ अभियोगात्सदाभ्यासात्तत्रैवचविनिश्चयात् ॥ पुनःपुनरनिर्वेदात्सिध्येद्योगोनचान्यथा ॥ ४५ ॥ आत्मक्रीडस्यसततं
सदात्ममिथुनस्यच ॥ आत्मन्येवसुतृप्तस्ययोगसिद्धिर्नदूरतः ॥ ४६ ॥ अत्रात्मव्यतिरेकेणद्वितीयंयोनपश्यति ॥ आत्मारामःसयोगींद्रोब्रह्मीभूतोभवे
दिह ॥ ४७ ॥ संयोगस्त्वात्ममनसोर्योगइत्युच्यतेबुधैः ॥ प्राणापानसमायोगोयोगइत्यपिकैश्चन ॥ ४८ ॥ विषयेंद्रियसंयोगोयोगइत्यप्यपंडितैः ॥
विषयासक्तचित्तानांज्ञानंमोक्षश्चदूरतः ॥ ४९ ॥ दुर्निवारामनोवृत्तिर्यावत्सानिवर्तते ॥किंवदंत्यपियोगस्यतावन्नेदीयसीकुतः ॥ ५० ॥ वृत्तिहीनंमनः
कृत्वाक्षेत्रज्ञेपरमात्मनि ॥ एकीकृत्यविमुच्येतयोगयुक्तःसउच्यते ॥ ५१ ॥ बहिर्मुखानिसर्वाणिकृत्वाखान्यंतराणिवै ॥ मनस्येवेंद्रियग्राममंमनश्चात्म
नियोजयेत् ॥ ५२ ॥ सर्वभावविनिर्मुक्तंक्षेत्रज्ञंब्रह्मणिन्यसेत् ॥ एतद्ध्यानंचयोगश्चशेषोन्योग्रंथविस्तरः ॥ ५३ ॥ यन्नास्तिसर्वलोकेषुतदस्तीति
विरुध्यते ॥ कथ्यमानंतदन्यस्यहृदयेनावतिष्ठते ॥ ५४ ॥

विलाप्ययोविमुच्येतमुक्तोभवतिसयोगयुक्तोमुख्ययोगयुगुच्यतइत्यर्थः ॥ ५१ ॥ एतदेवविवृणोति बहिर्मुखानीतिद्वाभ्याम् ॥ बहिर्मुखानींद्रियाणिचक्षुरादीनिबाहिरिंद्रियाणीत्यर्थः ॥ अन्तराणि
खानिबुद्ध्यहंकारचित्तान्यन्तरिंद्रियाणिचमनस्येवकृत्वाविषयेभ्यःप्रत्याहृत्यततइन्द्रियग्रामंबहिरन्तरिंद्रियसमुदायंमनश्चआत्मनियोजयेत् ॥ प्रत्यगात्मनिक्षेत्रज्ञेप्रविलापयेदित्यर्थः ॥ ५२ ॥ तंक्षेत्रज्ञं
सर्वभावविनिर्मुक्तंसाक्षित्वद्रष्टृत्वप्रत्यक्त्वादिसर्वविकाररहितंशुद्धंत्वंपदार्थंब्रह्मणिशुद्धेतत्पदार्थेसजातीयविजातीयस्वगतभेदरहितेपरमानन्दस्वरूपेन्यसेदेकीकुर्यादित्यर्थः ॥ उपसंहरति ॥ एतद्ध्यान
मिति ॥ ५३ ॥ ननुयद्येतादृशंध्यानंयोगश्चवर्ततेतर्हिसर्वेषांचेतसिकिमितिनभूयात्तत्राह ॥ यन्नास्तीति ॥ सर्वलोकेषुयत्प्रत्यग्ब्रह्मैक्यंनास्तिनस्फुरतितदस्तीतितत्त्वज्ञेनकथ्यमानंविरुध्यतेमूर्खेषुअतस्तद
न्यस्यप्राकृतस्यहृदयेनावतिष्ठतेनोल्लसतीत्यर्थः ॥ तथाचाहुःप्राकृताः ॥ बाधितमर्थंवेदोपिनबोधयतिकंचन॥असंभाव्यंनवक्तव्यंप्रत्यक्षंदृश्यतेयदि ॥ शिलातरतिपानीयंगीतंगायतिवानरइत्यादि ॥५४॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एतदेवसदृष्टांतंस्पष्टयति ॥ स्वसंवेद्यमिति ॥ तत्प्रत्यग्ब्रह्मस्वसंवेद्यंपुण्यकर्मादिनाशुद्धांतःकरणेयोगाभ्यासेनयोगिभिःस्वयमेवज्ञेयम् ॥ तत्रदृष्टांतः ॥ कुमारीस्त्रीसुखंयथेति ॥ कुमारीयथास्त्रीसुखं भर्तृसंगजंस्त्रीभिःकथ्यमानमपिस्वसंवेद्यत्वान्नजानातितथातत्स्वसंवेद्यंप्रत्यग्ब्रह्मायोगीनैववेत्तिनजानाति ॥ अत्रापिदृष्टांतः ॥ जात्यंधोवर्तिकांदीपदशामिवेति ॥ वर्णिकामितिपाठेचित्रिकामिवेत्यर्थः ॥ ॥ ५५ ॥ ननुयोगाभ्यासवंतोपिसर्वेतन्नजानंतीतिदृश्यतेतत्राह ॥ नित्येति ॥ यदाकदाचिदभ्यासवतानलभ्यतइतिभावः ॥ तत्किमित्याकांक्षायामाह ॥ तत्सूक्ष्मत्वादिति ॥ तत्परंब्रह्मएकंक्षणमपि स्थिरतांनेयान्नगच्छेदित्यन्वयः ॥ तत्रहेतुरनिर्देश्यंवागादिभिर्निर्देष्टुमशक्यम् ॥ वाङ्मनसयोरविषयइत्यर्थः ॥ तत्रापिहेतुःसूक्ष्मत्वादिति ॥ ५६ ॥ बहिरंतरंगभावेनास्थिरत्वेदृष्टांतद्वयमाह ॥ वाताहतमुदकंयथायथाचित्तमितिच ॥ तस्मात्तस्यब्रह्मणोनविश्वसेत्तद्वत्तत्प्रतिविश्वासंनकुर्यादित्यर्थः ॥ ५७ ॥ किंचाचलस्यापिब्रह्मणोऽस्थिरत्वंचित्ताधीनंयतोतश्चित्तस्यस्थैर्यार्थंवायुंस्थिरीकुर्यात्तस्यचस्थिरीकरणार्थंषट्आसनादीन्यंगानियस्यतंयोगंसमभ्यसेत्‌आवृत्त्याकुर्यादिति ॥५८॥ तान्येवांगानिदर्शयति ॥ आसनमिति ॥५९॥ आसनानीति ॥ यावंत्योजीवयोनयोजीवोत्पादनकारणा

स्वसंवेद्यंहितद्ब्रह्मकुमारीस्त्रीसुखंयथा ॥ अयोगीनैवतद्वेत्तिजात्यंधइववर्तिकाम् ॥ ५५ ॥ नित्याभ्यसनशीलस्यस्वसंवेद्यंहितद्भवेत् ॥ तत्सूक्ष्मत्वादनिर्देश्यंपरंब्रह्मसनातनम् ॥ ५६ ॥ क्षणमप्येकमुदकंयथानस्थिरतामियात् ॥ वाताहतंयथाचित्तंतस्मात्तस्यनविश्वसेत् ॥ ५७ ॥ अतोऽनिलंनिरुंधीतचित्तस्यस्थैर्यहेतवे ॥ मरुन्निरोधनार्थायषडंगंयोगमभ्यसेत् ॥ ५८ ॥ आसनंप्राणसंरोधःप्रत्याहारश्चधारणा ॥ ध्यानंसमाधिरेतानियोगांगानिभवंति षट् ॥ ५९ ॥ आसनानीहतावंतियावंत्योजीवयोनयः ॥ सिद्धासनमिदंप्रोक्तंयोगिनोयोगसिद्धिदम् ॥६०॥ एतदभ्यसनान्नित्यंवर्ष्मदाढर्चमवाप्नुयात् ॥ ॥ ६१ ॥ दक्षिणंचरणंन्यस्यवामोरूपरियोगवित् ॥ याम्योरूपरिवामंचपद्मासनमिदंविदुः ॥ ६२ ॥ कराभ्यांधारयेत्पश्चादंगुष्ठौदृढबंधवित् ॥ भवेत्पद्मासनादस्मादभ्यासाद्दृढविग्रहः ॥ ६३ ॥

नितावंत्येवासनानिसिद्धासनस्ययोनिघटितत्वाद्यावंत्योजीवयोनयस्तावंत्येवसिद्धासनानीत्यर्थः ॥ एतदेवविनिर्दिशति॥सिद्धासनमिति ॥ तथाचोक्तंहठयोगप्रदीपिकायाम् ॥ योनिस्थानकमंघ्रिमूलघटितं कृत्वादृढंविन्यसेन्मेढ्रेपादमथैकमेवहृदयेधृत्वासमंविग्रहम् ॥ स्थाणुःसंयमितेंद्रियोऽचलदृशापश्येद्भ्रुवोरंतरमेतन्मोक्षकपाटभेदजनकंसिद्धासनंप्रोच्यते॥मतांतरेतु मेढ्रादुपरिविन्यस्यवामगुल्फंतथोपरि ॥ गुल्फांतरंचनिक्षिप्यसिद्धासनमिदंभवेत्॥पूर्वोक्तमेवमत्स्यासनम्॥एतत्सिद्धासनंप्राहुरन्येवज्रासनंविदुः॥ मुक्तासनंवदंत्यन्येप्राहुर्गुह्यासनंपरइति॥सिद्धासनंचपद्माख्यमितिपाठेपद्मासनमेवसिद्धासनम् ॥ तथासत्यासनानीहतावंतियावंत्योजीवयोनयइत्यासनानामानंत्यमात्रमुक्तमितिज्ञेयम् ॥६०॥ सिद्धासनस्यावांतरफलमाह ॥ एतदिति ॥६१॥ पद्मासनस्वरूपमाह दक्षिणमितिद्वयेन ॥ याम्योरूपरिदक्षिणोरूपरि॥६२॥अस्यफलमाह॥भवेदिति॥दृढविग्रहोव्याधिरहितदेहोभवेदित्यर्थः॥एतदप्युक्तंतस्यामेव॥ वामोरूपरिदक्षिणंचचरणंसंस्थाप्यवामंतथादक्षोरूपरिपश्चिमेनविधिनाधृत्वाकराभ्यांदृढम्॥ अंगुष्ठौहृदयेनिधायचिबुकंनासाग्रमालोकयेदेतद्व्याधिविनाशनंचयमिनांपद्मासनंप्रोच्यते॥मतांतरेतु ॥ उत्तानौचरणौकृत्वाऊरुसंस्थौप्रयत्नतः॥ऊरुमध्येतथोत्तानौपाणीकृत्वाततोदृशौ॥ नासाग्रेविन्यसे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

द्राजदंतमूलंचजिह्वया॥ उत्तम्यचिबुकंवक्षस्युत्थाप्यपवनंशनैः॥ इदंपद्मासनंप्रोक्तंयोगिनांसर्वसिद्धिदम्॥दुर्लभंयेनकेनापिधीमतालभ्यतेभुवीति॥६३॥ योगाभ्यासेआसनेनियमाभावमाह॥ अथवेति ॥ यस्मिन्स्वस्तिकादावितिसंबंधः ॥ आदिशब्देनवीरासनकूर्मासनकुक्कुटासनधनुरासनमत्स्यासनादीनिगृह्यंते॥ एतेषामपिलक्षणानितस्यामेवोक्तानि ॥ जानूर्वोरंतरेसम्यक्कृत्वापादतलेउभे॥ ऋजुकायः समासीनःस्वस्तिकंतत्प्रचक्षते॥सव्येदक्षिणगुल्फंतुसव्येपार्श्वेनियोजयेत् ॥ दक्षिणेतुतथासव्यंगोमुखंगोमुखंयथा ॥ एकपादंतथैकस्मिन्विन्यसेदूरुसंस्थितम् ॥ इतरस्मिंस्तथाचोरुंवीरासनमितीरितम् ॥ गुदंनिरुध्यगुल्फाभ्यांव्युत्क्रमेणसमाहितः॥कूर्मासनंभवेदेतदितियोगविदोविदुः॥पद्मासनंतुसंयोज्यजानूर्वोरंतरेकरौ ॥ निवेश्यभूमौसंस्थाप्यव्योमस्थंकुक्कुटासनम् ॥ कुक्कुटासनबंधस्थोदोर्भ्यांसंबध्यकं धराम्॥भवेत्कूर्मवदुत्तानेमतदुत्तानकूर्मकम्॥पादांगुष्ठौतुपाणिभ्यांगृहीत्वाश्रवणावधि॥धनुराकर्षणंकृत्वाधनुरासनमीरितम्॥वामोरुमूलार्पितदक्षजानुरंतर्बहिर्वेष्टितदक्षदोर्भ्याम्॥ प्रगृह्यातिष्ठन्परिवर्तितांगः श्रीमत्स्यनाथोदितमासनंस्यादित्यादीनि ॥६४॥ निषेधमुखेनयोगस्थानंनिर्दिशति नतोयेतिद्वयेन ॥ दंशोमक्षिकाकारस्ततःस्थूलःकीटविशेषः ॥ चैत्येग्रामस्थपूज्यवृक्षे॥महावृक्षाश्रयदेवकुलइत्यर्थः॥

अथवाह्यासनेयस्मिन्सुखमस्योपजायते ॥ स्वस्तिकादौतदध्यास्ययोगंयुंजीतयोगवित् ॥ ६४ ॥ नतोयवह्निसामीप्येनजीर्णारण्यगोष्ठयोः ॥ नदंशमशकाकीर्णेनचैत्येनचचत्वरे ॥ ६५ ॥ केशभस्मतुषांगारकीकसादिप्रदूषिते ॥ नाभ्यसेत्पूतिगंधादौनस्थानेजनसंकुले ॥ ६६ ॥ सर्वबाधाविरहितेसर्वेंद्रियसुखावहे ॥ मनःप्रसादजननेस्रग्धूपामोदमोदिते ॥ ६७ ॥ नातितृप्तःक्षुधार्तोननाविण्मूत्रप्रबाधितः ॥ नाध्वखिन्नोनचिंतार्तोयोगंयुंजीतयोगवित् ॥ ॥ ६८ ॥ ऊरुस्थोत्तानचरणःसव्येन्यस्योत्तरंकरम् ॥ उत्तानंकिंचिदुन्नम्यवक्त्रंविष्टभ्यचोरसा ॥ ६९ ॥ निमीलिताक्षःसत्त्वस्थोदंतैर्दंतान्नसंस्पृशेत् ॥ तालुस्थाचलजिह्वश्चसंवृतास्यःसुनिश्चलः ॥ ७० ॥ सन्नियम्येंद्रियग्रामंनातिनीचोच्छ्रितासनः ॥ मध्यमंचोत्तमंचाथप्राणायाममुपक्रमेत् ॥ ७१ ॥ चलेऽनिलेचलंसर्वंनिश्चलेतत्रनिश्चलम् ॥ स्थाणुत्वमाप्नुयाद्योगीततोऽनिलनिरुंधनात् ॥ ७२ ॥ यावद्देहेस्थितःप्राणोजीवितंतावदुच्यते ॥ निर्गतेतत्रमरणंततःप्राणंनिरुंधयेत् ॥ ७३ ॥ यावद्बद्धोमरुद्देहेयावच्चेतोनिराश्रयम् ॥ यावद्दृष्टिर्भ्रुवोर्मध्येतावत्कालभयंकुतः ॥७४॥ कालसाध्वसतोब्रह्माप्राणायामंसदाचरेत् ॥ योगिनःसिद्धिमापन्नाःसम्यक्प्राणनियंत्रणात् ॥ ७५ ॥

चत्वरेप्रांगणे ॥ ६५ ॥ कीकसमास्थिआदिपदेनशोणितादीनिगृह्यंते ॥ ६६ ॥ निषेधमुखेनोक्त्वाविधिमुखेनाप्याह सर्वेत्येकेन ॥ ६७ ॥ किंविशिष्टोयोगंकुर्यादितिपृच्छायांयोगिनंनिर्दिशति ॥ नातितृप्तइति ॥६८॥ आसनस्थानाधिकारिणोनिरूप्यएवंभूतःसन्प्राणायामंकुर्यादित्याह ऊरुस्थेतित्रयेण ॥ ऊरुस्थौउत्तानौचरणौयस्यसः ॥ सव्येऊरावितिशेषः ॥ उत्तानमूर्ध्वीकृतांगुलम् उत्तानं किंचिदुन्नमय्येतिवा ॥ विष्टभ्यसंयोज्य ॥ ६९ ॥ निमीलितेमुद्रितेअक्षिणीयेनसः ॥ तालुस्थाककुत्स्थाअचलाजिह्वायस्यसः ॥ ७० ॥ मध्यमंचोत्तमंचेतिचकाराल्लघुंच ॥ तदुक्तंमार्कंडेयपुराणे ॥ लघुर्द्वादशमात्रस्तुद्विगुणः सतुमध्यमः ॥ त्रिगुणाभिस्तुमात्राभिरुत्तरीयउदाहृतइति ॥ अत्राप्यग्रेवक्ष्यति ॥ ७१ ॥ चलइति ॥ अनिलेचलेचंचलेसतिसर्वशरीरंचंचलंभवति ॥ तत्रतस्मिन्निश्चलेनिश्चलंभवति ॥ ततोवायुनिरोधाद्योगीस्थिरतांप्राप्नोतीत्यर्थः ॥ ७२ ॥ यावद्देहइति ॥ प्राणोवायुः ॥ तत्रतस्मिन्प्राणे ॥७३॥ यावदिति ॥ मरुत्पवनः ॥ निराश्रयंबाह्यविषयाकारशून्यम् ॥ ७४ ॥ अत्रशिष्टाचारंप्रमाणयति ॥ कालेति ॥ साध्वसतोभयात् ॥ ब्रह्माचतुराननः ॥ उक्तंच ॥ ब्रह्मादयोपित्रिदशाःपवनाभ्यासयोगतः ॥ तेनसिद्धिंगतास्तेचतस्मात्पवनमभ्यसेदिति॥ योगिनउद्दालकवीत



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

हव्यसुशुंडप्रभृतयःसनकादयोवा ॥ ७५ ॥ मध्यममितियदुक्तंतद्दर्शयति ॥ मंदइति ॥ लघ्वक्षराह्रस्वाक्षराः ॥ ततःपूर्वात् ॥ ७६ ॥ स्वेदामिति ॥ क्रमशोयथासंख्यम् ॥ असौत्रिविधःप्राणा यामः ॥ तदुक्तम् ॥ कनीयसिभवेत्स्वेदःकंपोभवतिमध्यमे ॥ उत्तिष्ठत्युत्तमप्राणबंधेपद्मासनेदृढइति ॥ प्रथमतोयैःप्राणायामैर्येस्वेदादयोजायंतेतैरेवशनैस्तेषांजयःकर्तव्यइत्याह प्रथमेनेतिपाद त्रयेण ॥ ७७ ॥ अथानंतरंसिद्धःप्राणोयोगिनःक्रमात्सन्निरुद्धोनिश्चलोभवतिअथानंतरंयोगिनाक्रमेणसेव्यमानःसिद्धःप्राणोयत्रासौयोगीगंतुमिच्छतितंतत्रनयतेप्रापयत्येवेत्यर्थः ॥ ७८ ॥ अयंच प्राणसंरोधःशनैःशनैरनुष्ठेयोनातिद्रागित्याह ॥ हठादिति ॥ निःसरेन्निर्गच्छेत् ॥ निःसरन्नितिक्वचित् ॥ ७९ ॥ तत्तस्मादसौप्राणःप्रत्याययितव्योलालयितव्यःक्रमेणसंरोध्यइतियावत् ॥ उपलक्षणीकृत्यअरण्यहस्तिवदितिदृष्टांतंविवृणोति ॥ वन्यइति ॥ गजारिःसिंहः ॥ ८० ॥ मृदुतायांसत्यांयद्भवतितदाह ॥ करोतीति ॥ शास्तायंताहस्तिपकइत्यर्थः ॥ तस्यनिर्देशंशास्तृनिर्दे शंतदाज्ञामित्यर्थः ॥ तंनिर्देशंशास्तारंवा ॥ परिलंघयेदाक्रमयेत् ॥ दार्ष्टांतिकमाह ॥ तथेति ॥ ८१ ॥ वायोःप्राणनामनिर्वक्ति ॥ षडिति ॥ हंसोवायुर्बहिःप्रयाणंकुरुतेअतएवसव्यापसव्य मार्गेणइडापिंगलानाडीभ्यांबहिःप्रयाणाद्गमनात्प्राणउच्यतेकथ्यते ॥ शरीराद्बहिःप्रयाणावधिंदर्शयन्हंसंविशिनष्टि ॥ षट्त्रिंशदंगुलःषड्भिरधिकास्त्रिंशदंगुलाःशरीराद्बहिर्गम्यप्रदेशायस्यसः ॥ तत्रे

**मंदोद्वादशमात्रस्तुमात्रालघ्वक्षरामता ॥ मध्यमोद्विगुणःपूर्वादुत्तमस्त्रिगुणस्ततः ॥७६॥ स्वेदंकंपंविषादंचजनयेत्क्रमशस्त्वसौ ॥ प्रथमेनजयेत्स्वेदंद्वितीयेनतुवेपथुम् ॥७७॥ विषादंहितृतीयेनासिद्धःप्राणोथयोगिनः ॥ भवेत्क्रमात्सन्निरुद्धःसिद्धःप्राणोथयोगिना ॥ क्रमेणसेव्यमानोसौनयतेयत्रचेच्छति ॥ ॥ ७८ ॥ हठान्निरुद्धप्राणोयंरोमकूपेषुनिःसरेत् ॥ देहंविदारयत्येषकुष्ठादिजनयत्यपि ॥ ७९ ॥ तत्प्रत्याययितव्योसौक्रमेणारण्यहस्तिवत् ॥ वन्योगजोगजारिर्वाक्रमेणमृदुतामियात् ॥ ८० ॥ करोतिशास्तृनिर्देशंनचतंपरिलंघयेत् ॥ तथाप्राणोहृदिस्थोयंयोगिनाक्रमयोगतः ॥ गृहीतःसेव्यमानस्तु विश्रंभमुपगच्छति ॥ ८१ ॥ षट्त्रिंशदंगुलोहंसःप्रयाणंकुरुतेबहिः ॥ सव्यापसव्यमार्गेणप्रयाणात्प्राणउच्यते ॥ ८२ ॥ शुद्धिमेतियदासर्वंनाडीचक्रमनाकुलम् ॥ तदैवजायतेयोगीक्षमःप्राणनिरोधने ॥ ८३ ॥**

चकपूरककुंभकानांप्रत्येकंद्वादशांगुलपर्यंतंबहिर्व्यापनात्षट्त्रिंशदंगुलत्वंप्राणस्यज्ञातव्यम् ॥ तदुक्तंवासिष्ठे ॥ द्वादशांगुलपर्यंतंबाह्यमाक्रमणंततः ॥ प्राणानामंगसंस्पर्शोयःसपूरकउच्यते ॥ द्वादशांगुल पर्यंतेनासाग्रसमसंमुखे ॥ व्योम्निनित्यमपानस्यतंविदुःकुंभकंबुधाः ॥ यत्तदंतर्मुखत्वंस्यादपानस्योदयंविना ॥ तंबाह्यरेचकंविद्यांश्चिंत्यमानंविमुक्तिदामिति ॥ ८२ ॥ अधिकारार्थभूतशुद्धिंसूचयाति ॥ शुद्धिमेतीति ॥ सायथा ॥ वामनासापुटेयमितिवायुबीजंधूम्रवर्णंध्यात्वायंबीजोत्थवायुनासमस्तंशरीरंयंबीजस्यैवषोडशवारजपेनप्रपूर्यतेनैववायुनासमस्तंशरीरंसंशोध्यदक्षिणनासापुटेनयंबीजस्यैवद्वात्रिंशद्वा रजपेनबहिर्वायुंरेचयेत् ॥ ततोदक्षिणनासापुटेननिलीनमारुतंरमितिवह्निबीजंरक्तवर्णंविचिंत्यदक्षिणनासापुटेनरमित्यस्यैववह्निबीजस्यषोडशवारजपेनवायुंपूरयित्वारंबीजोत्थवह्निनासमस्तंशरीरंदग्ध्वारं बीजस्यैवद्वात्रिंशद्वारजपेनवामनासापुटेनभस्मनासहवहिर्वायुंरेचयेत् ॥ ततोवामनासापुटेवमितिशुक्लवर्णंचंद्रबीजंसंस्मृत्यवमित्यस्यषोडशवारजपेनवंबीजरूपंचंद्रंललाटचंद्रंनयेत् ॥ तस्माल्ललाटचंद्राद्वमित्य स्यचतुःषष्टिवारजपेनकुंभकयोगेनामृतवृष्टिमकारादिक्षकारांतमयीमुत्पाद्यतेनामृतेनसमस्तंशरीरंपुनरुत्पन्नंविचिंत्यतेनैवांभसासंप्लाव्यलमितिपृथ्वीबीजेनपीतवर्णेनसमस्तंशरीरंदृढंचिंतयेदिति ॥ ८३ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

प्राणायामंदर्शयति ॥ दृढेति ॥ चंद्रेणचंद्रदैवतेनेडाख्येनमार्गेणपूरयेत्पूरकाख्यंप्राणायामंकुर्यात् ॥ रेचयेत्रेचकाख्यंप्राणायामंकुर्यात् ॥ सूर्येणसूर्यदैवतेनपिंगलाख्येनमार्गेणप्राणायामोरे चकपूरकाख्याद्विविधोयमनंतरोक्तउच्यतेकथ्यते ॥ वामायामइतिपाठेशोभनप्राणायामइत्यर्थः ॥ ८४ ॥ कुंभकाख्यप्राणायाममाह ॥ स्रवदिति ॥ योगींद्रःप्राणायामेनकुंभकाख्येनतत्क्षणात्सुखंप्रा प्नोति ॥ किंकुर्वन् ॥ स्रवंतीनांपीयूषधाराणामोघंचिंतयन् ॥ कथंभूतम् ॥ चंद्रसमन्वितंचंद्रेणवह्नीजेनवाउकारेणलकारेणवासंयुक्तम् ॥ वामायामेनेतिक्वचित्पाठः ॥८५॥ पूर्वंरेचकपूरककुंभक क्रमेणप्राणायामाउक्ताः ॥ इदानींपूरककुंभकरेचकक्रमेणमार्गवैपरीत्येनैवतानाहरविणेतिश्लोकेन ॥ ८६ ॥ ध्येयंदर्शयन्ध्यानमेतत्रिविधप्राणायामस्यचफलंदर्शयाति ॥ ज्वलदिति ॥ प्रदीप्तवह्नि राशिसदृशमुष्मगुंसूर्याधिष्ठानंश्रीविश्वेश्वरंश्रीनारायणंवा ॥ हृदिंद्रियाण्यसुव्योंमवायुरग्निर्जलंमही ॥ सूर्यश्चंद्रस्तपश्चैवस्थानान्येकादशैवते ॥ ध्येयःसदासवितृमंडलमध्यवर्तीनारायणःसरसिजासनसन्नि विष्टः ॥ केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रइतिवचनात् ॥ हृदिस्थेसूर्यमंडलेशीलयंश्चिंतयन्योगींद्रोनेनानंतरोक्तेनयम्यंतइतियाम्याःप्राणास्तेषामायामेनेत्यर्थः ॥ शर्म भागब्रह्मानंदभाग्भवेदित्यर्थः ॥ ८७ ॥ इत्थमिति ॥ इत्थंभूतशुद्धिपूर्वकंपूर्वोक्तप्रकारेणमासत्रयंव्याप्याभ्यासोयस्मिंस्तस्मादुभयायामसेवनात्दृढासनोयथाशक्तीत्यादिनोक्ताद्विविधप्राणायामसे

दृढासनोयथाशक्तिप्राणंचंद्रेणपूरयेत् ॥ रेचयेदथसूर्येणप्राणायामोयमुच्यते ॥ ८४ ॥ स्रवत्पीयूषधारौघंध्यायंश्चंद्रसमन्वितम् ॥ प्राणायामेनयोगींद्रः सुखमाप्नोतितत्क्षणात् ॥ ८५ ॥ रविणाप्राणमाकृष्यपूरयेदौदरींदरीम् ॥ कुंभयित्वाशनैःपश्चाद्योगीचंद्रेणरेचयेत् ॥ ८६ ॥ ज्वलज्ज्वलनपुंजाभंशी लयन्नुष्मगुंहृदि ॥ अनेनयाम्यायामेनयोगींद्रःशर्मभाग्भवेत् ॥ ८७ ॥ इत्थंमासत्रयाभ्यासादुभयायामसेवनात् ॥ शुद्धनाडीगणोयोगीसिद्धप्राणोभिधी यते ॥ ८८ ॥ यथेष्टंधारणंवायोरनलस्यप्रदीपनम् ॥ नादाभिव्यक्तिरारोग्यंभवेन्नाडीविशोधनात् ॥ ८९ ॥ प्राणोदेहगतोवायुरायामस्तन्निबंधनम् ॥ एकश्वासमयीमात्राप्राणायामोनिरुच्यते ॥ ९० ॥ प्राणायामेऽधमेघर्मःकंपोभवतिमध्यमे ॥ उत्तिष्ठेदुत्तमेदेहोबद्धपद्मासनोमुहुः ॥ ९१ ॥ प्राणाया मैर्दहेद्दोषान्प्रत्याहारेणपातकम् ॥ मनोधैर्यंधारणयाध्यानेनेश्वरदर्शनम् ॥९२॥ समाधिनालभेन्मोक्षंत्यक्त्वाधर्मंशुभाशुभम् ॥ आसनेनवपुर्दार्ढ्यंषडंग मितिकीर्तितम् ॥ ९३ ॥ प्राणायामाद्विषट्केनप्रत्याहारउदाहृतः ॥ प्रत्याहारैर्द्वादशभिर्धारणापरिकीर्तिता ॥ ९४ ॥

वनाच्छुद्धनाडीसमूहोयोगीसिद्धप्राणोवशीकृतवायुरभिधीयतेकथ्यतइत्यर्थः ॥ सिद्धनाडीतिक्वचित् ॥ तत्रापिसएवार्थः ॥ ८८ ॥ नाडीविशोधनस्यफलमाह ॥ यथेष्टमिति ॥ नाडीनांविशोधनाद्वाया र्यथेष्टंधारणंस्वेच्छयाधारणम् अनलस्यजाठरस्यप्रदीपनंनादाभिव्यक्तिराधारचक्रस्थायाःपराख्यायाःवाचःश्रवणम् ॥ तथाचश्रुतिः चत्वारिवाक्परिमितापदानीत्यादिः ॥ आरोग्यंरोगाभावश्चभवे दित्यर्थः ॥ पाठांतरेडलयोरेकत्वमित्युन्नेयम् ॥ ८९ ॥ प्रकारान्तरेणप्राणायामनामनिर्वक्ति ॥ प्राणइति ॥ तन्निबन्धनंप्राणघटितंप्राणनियंत्रणंवा ॥ तदेवाह ॥ एकश्वासमयीमात्रेति ॥ मात्रा ह्रस्वाक्षरोच्चार्यमाणःकालः ॥ ९० ॥ प्राणायामइति ॥ उत्तिष्ठेद्भूमिंपरित्यज्यांतरिक्षंगच्छेदित्यर्थः ॥ तथाचोक्तंहठयोगप्रदीपिकायाम् ॥ कनीयसिभवेत्स्वेदःकंपोभवतिमध्यमे॥ उत्तिष्ठत्युत्तमेप्राण रोधेपद्मासनेदृढइति ॥ ९१ ॥ फलसहितंषडंगंदर्शयाति प्राणायामैरितिद्वयेन ॥ ९२ ॥ धर्मंशुभाशुभम् ॥ धर्मेत्यधर्मस्योपलक्षणम् ॥ धर्माधर्मेपुण्यपापेशुभाशुभेतज्जन्यशुभाशुभादृष्टेचत्य क्त्वेत्यर्थः ॥ कर्मेतिपाठेस्पष्टएवार्थः ॥ षडंगमितिजातावेकवचनम् ॥ ९३ ॥ प्रत्याहारादीनांपारिभाषिकीःसंज्ञादर्शयाति प्राणायामेतिद्वाभ्याम् ॥ द्विषट्केनद्वादशभिः ॥ प्रत्याहारैर्द्वादशभिश्च



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तुश्चत्वारिंशदधिकशतप्राणायामैरित्यर्थः ॥ ९४ ॥ ईश्वरसंगत्यैब्रह्माप्त्यैद्वादशधारणमष्टाविंशत्यधिकसप्तशतोत्तरसहस्रंप्राणायामायस्मिंस्तद्ध्यानंभवेत् ॥ ध्यानद्वादशकेनषट्त्रिंशदधिकसप्तशतो त्तरविंशतिसहस्रेणप्राणायामात्मकेन ॥ ९५ ॥ षडंगयोगप्राप्यंदर्शयति ॥ समाधेरिति ॥ ज्योतिःस्फुरद्रूपंब्रह्म अनन्तंमृत्युरहितंदेशकालवस्तुपरिच्छेदशून्यंवा ॥ स्वप्रकाशकंस्वयमेवभासमानम् ॥ अत्रायंपुरुषःस्वयंज्योतिरितिश्रुतेः ॥ पुरुषार्थतामाह ॥ तस्मिन्निति ॥ क्रियाकांडंतत्प्रतिपाद्यंकर्म ॥ यातायातंयातंस्वर्गादिगमनमायातंमनुष्यादावागमनम् ॥ यद्वा यातंमरणंआयातंजन्मतच्चनि वर्तते ॥ ९६ ॥ पवनइति ॥ पवनेप्राणवायौव्योमब्रह्मरन्ध्रंसंप्राप्तेसतिघंटादीनांप्रकृष्टवाद्यानांमहान्ध्वनिरुत्पद्यतेततोध्वनेरनन्तरमदूरतोनिकटएवसिद्धिर्योगफलमित्यर्थः ॥ ९७ ॥ प्राणायामेनेति ॥ युक्तेनयथावदनुष्ठितेन ॥ अयुक्ताभ्यासयोगेनासम्यगनुष्ठितेनाप्रेडितेनप्रयोगेणव्युत्क्रमाभ्यासेनयोगेनवेतिवा ॥ तदुक्तंहठयोगप्रदीपिकायाम्॥ प्राणायामेनयुक्तेनसर्वपापपरिक्षयः॥ अयुक्ताभ्यासयो गेनसर्वरोगसमुद्भवइति ॥ ९८ ॥ उक्तंविवृणोति ॥ हिक्केति ॥ हिक्काउत्काशिका ॥ व्यतिक्रमादयुक्ताभ्यासात् ॥ ९९ ॥ तर्हिकीदृशंयोगमभ्यस्यन्सिध्यतितमाह ॥ युक्तंयुक्तमिति ॥ युक्तंयु क्तंपरिमितंपरिमितमित्यर्थः ॥ बध्नीयात्स्थिरीकुर्यात्कुंभयेदित्यर्थः ॥ तथाचहठयोगप्रदीपिकायाम् ॥ पादत्रयंयथाश्लोकमेव ॥ एवंसिद्धिमवाप्नुयादिति ॥१००॥ प्रत्याहारादीनांपारिभाषिकीःसंज्ञाः

भवेदीश्वरसंगत्यैध्यानंद्वादशधारणम् ॥ ध्यानद्वादशकेनैवसमाधिरभिधीयते ॥ ९५ ॥ समाधेःपरतोज्योतिरनंतंस्वप्रकाशकम् ॥ तस्मिन्दृष्टेक्रियाकां डंयातायातंनिवर्तते ॥ ९६ ॥ पवनेव्योमसंप्राप्तेध्वनिरुत्पद्यतेमहान् ॥ घंटादीनांप्रवाद्यानांततःसिद्धिरदूरतः ॥ ९७ ॥ प्राणायामेनयुक्तेनसर्वव्या धिक्षयोभवेत् ॥ अयुक्ताभ्यासयोगेनसर्वव्याधिसमुद्भवः ॥ ९८ ॥ हिक्काश्वासश्चकासश्चशिरःकर्णाक्षिवेदनाः ॥ भवंतिविविधादोषाःपवनस्यव्यति क्रमात् ॥ ९९ ॥ युक्तंयुक्तंत्यजेद्वायुंयुक्तंयुक्तंचपूरयेत् ॥ युक्तंयुक्तंचबध्नीयादित्थंसिध्यतियोगवित् ॥ १०० ॥ इंद्रियाणांहिचरतांविषयेषुयदृच्छया ॥ यत्प्रत्याहरणंयुक्त्याप्रत्याहारःसउच्यते ॥ १ ॥ प्रत्याहरतियःस्वानिकूर्मोंगानीवसर्वतः ॥ प्रत्याहृतिविधानेनसस्याद्विगतकल्मषः ॥ २ ॥ नाभि देशेवसेद्भानुस्तालुदेशेचचंद्रमाः ॥ वर्षत्यधोमुखश्चंद्रोग्रसेदूर्ध्वमुखोरविः ॥ ३ ॥ करणंतच्चकर्तव्यंयेनसाप्राप्यतेसुधा ॥ ऊर्ध्वनाभिरधस्तालुरूर्ध्वं भानुरधःशशी ॥ करणंविपरीताख्यमभ्यासादेवजायते ॥ ४ ॥ काकचंचुवदास्येनशीतलंशीतलंपिबेत् ॥ प्राणंप्राणविधानज्ञोयोगीभवतिनिर्जरः ॥५॥

प्रदर्शयिष्यंस्तावदिदानींसान्वयाःसंज्ञादर्शयति ॥ इंद्रियाणामिति ॥ प्रत्याहरणंव्यावर्त्यानयनम् ॥ युक्त्या विषयदोषदर्शनेन ॥ १ ॥ प्रत्याहारस्यफलमाह ॥ प्रत्याहरतीति ॥ प्रत्याहृतिविधानेनविषयेषु दोषावतुसन्धानेन ॥ २ ॥ महामुद्रादीनांदशमुद्राणांमध्येविपरीताख्यांकरणींमुद्रांवक्तुंप्रस्तावयति ॥ नाभीति तदुक्तं हठयोगप्रदीपिकायाम् ॥ महामुद्रामहाबन्धोमहावेधश्चखेचरी ॥ उड्डीयानं मूलबन्धोबन्धोजालंधराभिधः ॥ करणीविपरीताख्यावज्रोलीशक्तिचालनम् ॥ एतद्धिमुद्रादशकंजरामरणवर्जितमिति ॥ वर्षतिसुधामितिशेषः ॥ एवंग्रसेदित्यत्रापि॥तदुक्तंतस्यामेव ॥ यत्किंचित्स्रवते चन्द्रादमृतंदिव्यरूपिच ॥ तत्सर्वंग्रसतेसूर्यस्तेनतस्यविनाशितेति ॥ ३ ॥ तद्योगशास्त्रेप्रसिद्धंकरणंविपरीताख्यम् ॥ तदुक्तंतस्यामेव ॥ तत्रास्तिकरणंदिव्यंसूर्यस्यमुखबन्धनम् ॥ गुरूपदेशतोज्ञेयंन तुशास्त्रस्यकोटिभिरिति ॥ यथावत्स्थितस्यनाभ्योर्वैपरीत्येनावस्थानंविपरीताख्यंकरणमित्यर्थः ॥ एतदपितस्यामुक्तम् ॥ पादद्वयंयथाश्लोकमेव॥ करणीविपरीताख्यागुरुवाक्येनलभ्यतइति ॥ ४ ॥ विपरीताख्यंतत्करणविशेषमेवतत्फलसहितंदर्शयति काकेत्यारभ्यासनेनेत्यतःप्राक्तनेग्रन्थेन ॥ काकचंचुवदास्येनकाकत्रोटितुल्येनमुखेन ॥ शीतलंशीतलमत्यन्तशीतलमित्यर्थः ॥ प्राणविधानज्ञः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

प्राणायामानुष्ठानज्ञानवान् ॥ ५ ॥ धयन्नपिबन् ॥ लिहन्नितिकचित् ॥ ६ ॥ ७ ॥ संपीडचेति ॥ राजदीप्तिमत् ॥ अंतर्बिलंजिह्वायामूलभागस्थंछिद्रम् ॥८॥ अमृतेति ॥ अणिमादिगुणानामुदयो यस्मात्तद्रेतस्तथा ॥ अणिमादिगुणोदयंयथास्यादितिक्रियाविशेषणंवा ॥ ९ ॥ ११० ॥ ११ ॥ धारणायाःपारिभाषिकलक्षणांतरमाह हृदयइत्येकेन ॥ १२ ॥ तामेवधारणांदर्शयति हरितालेतिपंचभिः ॥ सलकारांपृथ्वीबीजेनलकारेणसाहिताम् ॥ सवेधसम्ब्रह्मदैवताम् ॥ १३ ॥ कण्ठइति ॥ अम्बुतत्त्वंजलपदार्थम् ॥ वकारोबीजंयस्यतत्तथाअंबुजयेज्जलतत्त्वाविलक्षणमात्मानंभावयेदेवमग्रेपि ॥ यद्वा जलादिष्वप्रतिहतगतित्वंक्लेदाद्यभावंचाप्नुयादित्यर्थः ॥१४॥ तालुस्थमिति ॥ इंद्रगोपाभंवर्षर्तौदृश्यमानरक्तवर्णकीटविशेषाभम् ॥ रेफेणसंयुतंवह्निबीजेनसाहितम् ॥१५॥१६॥

रसनांतालुविवरेनिधायोर्ध्वमुखोऽमृतम् ॥ धयन्निर्जरतांगच्छेदाषण्मासान्नसंशयः ॥ ६ ॥ ऊर्ध्वजिह्वःस्थिरोभूत्वासोमपानंकरोतियः ॥ मासार्धेननसंदेहोमृत्युंजयतियोगवित् ॥ ७ ॥ संपीड्यरसनाग्रेणराजदंतर्बिलंमहत् ॥ ध्यात्वासुधामयींदेवींषण्मासेनकविर्भवेत् ॥ ८ ॥ अमृतापूर्णदेहस्ययोगिनोद्वित्रिवत्सरात् ॥ ऊर्ध्वंप्रवर्ततेरेतोह्यणिमादिगुणोदयम् ॥ ९ ॥ नित्यंसोमकलापूर्णशरीरंयस्ययोगिनः ॥ तक्षकेणापिदष्टस्यविषंतस्यनसर्पति॥११०॥ आसनेनसमायुक्तःप्राणायामेनसंयुतः ॥ प्रत्याहारेणसंपन्नोधारणामथचाभ्यसेत् ॥ ११ ॥ हृदयेपंचभूतानांधारणांयःपृथक्पृथक् ॥ मनसोनिश्चलत्वेनधारणासाभिधीयते ॥ १२ ॥ हरितालनिभांभूमिंसलकारांसवेधसम् ॥ चतुष्कोणांहृदिध्यायेदेषास्यात्क्षितिधारणा ॥ १३ ॥ कंठेऽबुतत्त्वमर्धेंदुनिभंविष्णुसमन्वितम् ॥ वकारबीजंकुंदाभंध्यायन्नंबुजयेदिति ॥ १४ ॥ तालुस्थमिंद्रगोपाभंत्रिकोणंरेफसंयुतम् ॥ रुद्रेणाधिष्ठितंतेजोध्यात्वावह्निंजयेदिति ॥ १५ ॥ वायुतत्त्वंभ्रुवोर्मध्येवृत्तमंजनसन्निभम् ॥ यंबीजमीशदैवत्यंध्यायन्वायुंजयेदिति ॥ १६ ॥ आकाशंचमरीचिवारिसदृशंयद्ब्रह्मरंध्रस्थितंयन्नाथेनसदाशिवेनसहितंशांतंहकाराक्षरम् ॥ प्राणंतत्रविनीयपंचघटिकंचिंतान्वितंधारयेदेषामोक्षकपाटपाटनपटुःप्रोक्तानभोधारणा ॥ १७ ॥ स्तंभनीप्लावनीचैवदहनीभ्रामणीतथा ॥ शमनीचभवंत्येताभूतानांपंचधारणाः ॥ १८ ॥ ध्यैचिंतायांस्मृतोधातुश्चिंतातत्त्वेसुनिश्चलां ॥ एतद्ध्यानमिहप्रोक्तंसगुणंनिर्गुणंद्विधा ॥ १९ ॥

आकाशंचेति ॥ एषानभोधारणाप्रोक्तेत्यन्वयः ॥ कासेत्याकांक्षायामाह ॥ आकाशंयद्वर्ततेतत्रप्राणंविनीयविशेषेणनीत्वाधारयेदिति ॥ यत्कीदृशम् ॥ मरीचिवारिसदृशंसूर्यसदृशंसदाशिवेनेश्वरेण सहितंशान्तंनिरुपद्रवंबीजत्वेनहकारमक्षरंयत्रतत्तथा ॥ तत्राकाशतत्त्वेपंचघटिकंकालंयथास्यादभिव्याप्येतिवा ॥ यद्वा पंचघटिकंपंचात्मकंचित्तान्वितंमनःसहितम् ॥ चिंतान्वितमितिपाठेआत्मानुसंन्धानसहितमित्यर्थः ॥ कीदृशीधारणा ॥ मोक्षकपाटपाटनपटुःमोक्षद्वारेपिहितंयत्कपाटंतस्यपाटनमुद्घाटनंतत्रपटुर्दक्षा ॥ १७ ॥ उक्तानांधारणानांनामविशेषानाह स्तम्भनीत्येकेन ॥ १८ ॥ ध्यानस्वरूपमाह ॥ ध्याइति ॥ ध्यैधातुश्चितायांस्मृतः कथितः ॥ तथाचपठन्तिध्यैचिंतायामिति ॥ चिंतातत्त्वेपदार्थेसुनिश्चलाएकाग्रतारूपा ॥ एतद्ध्यानमपिरूपारूपभेदेनसमंत्रामन्त्रभेदेनवाद्विविध





CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मित्याहएतद्ध्यानमितिसार्धेन ॥ १९ ॥ वर्णभेदेनरूपभेदेन ॥ केवलंरूपादिरहितम् ॥ १२० ॥ ध्यानमुद्रामाहांतश्चेतइति ॥ सुखासनंशरीरस्यसमत्वंचावस्थाप्यचेतोऽतर्नीयतेचक्षुश्चबहिःक्रियते इतियदेषाऽतिसिद्धिदाध्यानमुद्रेत्यर्थः ॥ २१ ॥ ध्यानफलमाहनाश्वमेधेनेत्येकेन ॥ तथाचोक्तम् ॥ सर्वपापप्रसक्तोपिध्यायन्निमिषमच्युतम् ॥ यतिस्तपस्वीभवतिपंक्तिपावनपावनइति ॥ २२ ॥ ध्यानसमाध्योर्विभागमाह ॥ शब्दादीनांचेति ॥ तन्मात्रासूक्ष्मावस्था ॥ अतःपरंतन्मात्रोपलब्धेःपरम् ॥ २३ ॥ धारणाध्यानसमाधीनांकालकृतविभागमप्याह ॥ धारणेति ॥ पंचनाड्यः पंचदशलघूनिअवच्छेदककालोयस्याःसाधारणापंचनाडिका ॥ नधृतश्चेत्यनेनकप् ॥ षष्टिर्नाड्योऽवच्छेदककालोयस्मिंस्तद्ध्यानंतथा ॥ इहयोगमार्गेशास्त्रेवा ॥ २४ ॥ एवंप्रसंगागतंकालकृतंधारणादीनांविभागमभिधायस्यात्समाधिरतःपरमित्यत्रोक्तंसमाधिंदर्शयति जलसैंधवयोरितित्रिभिः॥ सिंधौभवःसैंधवोलवणखंडः ॥ जलसैंधवयोर्यथायोगतोमेलनात्साम्यमैक्यंभवतितथात्ममनसोरैक्यंसाम्यं बहिर्विषयंपरित्यज्यात्मन्येवलग्नंसन्मनस्तिष्ठतीतियत्तत्समाधिरिहभण्यते ॥ अथवाऽत्मापरोमनोमनउपाधिर्जीवस्तयोरैक्यमिति ॥२५॥ यदेति ॥ मानसंमनः ॥ समरसत्वमेकरसंपरमानंदत्वमर्थाद्यो

सगुणंवर्णभेदेननिर्गुणंकेवलंमतम् ॥ समंत्रंसगुणंविद्धिनिर्गुणंमंत्रवर्जितम् ॥ १२० ॥ अंतश्चेतोबहिश्चक्षुरवस्थाप्यसुखासनम् ॥ समत्वंचशरीरस्यध्यानमुद्रातिसिद्धिदा ॥ २१ ॥ नाश्वमेधेनतत्पुण्यंनचैवराजसूयतः ॥ यत्पुण्यमेकध्यानेनलभेद्योगीस्थिरासनः ॥ २२ ॥ शब्दादीनांचतन्मात्रायावत्कर्णादिषुस्थिता ॥ तावदेवस्मृतंध्यानंस्यात्समाधिरतःपरम् ॥ २३ ॥ धारणापंचनाडीकाध्यानंस्यात्षष्टिनाडिकम् ॥ दिनद्वादशकेनस्यात्समाधिरिहभण्यते ॥ २४ ॥ जलसैंधवयोःसाम्यंयथाभवतियोगतः ॥ तथात्ममनसोरैक्यंसमाधिरिहभण्यते ॥ २५ ॥ यदासंक्षीयतेप्राणोमानसंचप्रलीयते ॥ तदासमरसत्वंयत्ससमाधिरिहोच्यते ॥ २६ ॥ यत्समत्वंद्वयोरत्रजीवात्मपरमात्मनोः ॥ सनष्टसर्वसंकल्पःसमाधिरभिधीयते ॥ २७ ॥ नात्मानंनपरंवेत्तिनशीतंनोष्ममेवच ॥ समाधियुक्तोयोगींद्रोनसुखंनसुखेतरत् ॥ २८ ॥ काल्यतेनैवकालेनलिप्यतेनैवकर्मणा ॥ भिद्यतेनचशस्त्रैर्योगीयुक्तःसमाधिना ॥ २९ ॥ युक्ताहारविहारश्चयुक्तचेष्टोहिकर्मसु ॥ युक्तनिद्रावबोधश्चयोगीतत्त्वंप्रपश्यति ॥ १३० ॥ तत्त्वंविज्ञानमानंदंब्रह्मब्रह्मविदोविदुः ॥ हेतुदृष्टांतरहितंवाङ्मनोभ्याममगोचरम् ॥ ३१ ॥

गिनः॥ रसोवैसः॥ रसंह्येवायंलब्ध्वानंदीभवतीतिश्रुतेः ॥ २६ ॥ तत्रप्रथमश्लोकेनससाधनयोस्तत्त्वंपदार्थयोरैक्यमुक्तंद्वितीयेनानिषेधमुखेनतृतीयेनाविधिमुखेनेतिद्रष्टव्यम् ॥ २७ ॥ समाधिफलमाह नात्मानमितिद्वाभ्याम्॥आत्मानंस्वदेहम् ॥ सुखंविषयजम् ॥ सुखेतरदुःखम् ॥२८॥ काल्यतेनीयतेचाल्यतइत्यर्थः॥ कंपतइतिपाठेकालेनहेतुनानकंपतेभीतोनभवतीत्यर्थः ॥२९॥ योगिनोभोजनविहारादिनियमंदर्शयन्योगफलं दर्शयति युक्ताहारेत्येकेन ॥ युक्तशब्दोत्रपरिमितवाची ॥ तदुक्तंभगवता॥युक्ताहारविहारस्ययुक्तचेष्टस्यकर्मसु ॥ युक्तस्वप्नावबोधस्ययोगोभवतिदुःखहेति ॥ १३० ॥ तत्त्वशब्दार्थमाह ॥ तत्त्वमिति ॥ विज्ञानंविशिष्टज्ञानंस्वप्रकाशंचैतन्यमित्यर्थः ॥ प्रपंचितमितिशेषः ॥ प्रपंचितमेतद्बालबोधिनीटीकायामस्माभिः ॥ आनंदंसुखंब्रह्मबृहद्देशकालवस्तुपरिच्छेदशून्यं हेतुःकारणं दृष्टांतोनिदर्शनं तद्रहितम् ॥ वाङ्मनोभ्यामगोचरंतयोरविषयम् एतादृशंवस्तुतत्त्वंतत्त्वशब्दवाच्यंब्रह्मब्रह्मविदोविदुरित्यर्थः ॥ विज्ञानमानंदंब्रह्म ॥ यतोवाचोनिवर्तंतेअप्राप्यमनसासहेत्यादि

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्रुतेः ॥ उभयोरपिदृष्टोंतस्त्वनयोस्तत्त्वदर्शिभिरितिस्मृतेश्च ॥ ३१ ॥ तत्रेति ॥ निरातंकेनिर्भये ॥ ३२ ॥ यथेति ॥ तत्रब्रह्मणि ॥ ३३ ॥ अनसंजातपानीयैःनसंजातंपानीयंयेषुवेभूत्यादिषुतै
र्द्रव्यैःशरीरमर्दनंविदध्यात् ॥ नकारश्रवणमार्षम् ॥ यद्वा नसंजातानिअसंजातानिनासंजातानिअनसंजातानिप्राणायामश्रमोत्पन्नानीत्यर्थः ॥ यानिपानीयानितैरंगमर्दनंविदध्यादिति॥श्रमसंजातपानी
यैरितिक्वचित् ॥ कदुष्णमीषदुष्णम् ॥ यद्वा कदुष्णंकुत्सितोष्णमत्युष्णमत्यल्पमुष्णंचेत्यर्थः ॥ क्षीरभोजीपायसभोजीदुग्धभोजीतिवा॥३४॥ योगिमात्रस्यलक्षणमाह ॥ ब्रह्मचारीति ॥ अष्टविधमै
थुनपरित्यागी ॥ तदुक्तम् ॥ दर्शनंस्पर्शनंकेलिःप्रेक्षणंगुह्यभाषणम् ॥ संकल्पोध्यवसायश्चक्रियानिर्वृत्तिरेवच॥एतन्मैथुनमष्टांगंप्रवदंतिमनीषिणः॥विपरीतंब्रह्मचर्यमेतदेवात्रकीर्तितमिति॥ विमत्सरीपर
गुणासहिष्णुत्वहीनः ॥ ३५ ॥ सिद्धिभाजोयोगिनःस्वरूपमाह ॥ महामुद्रामिति ॥ एतासांपंचानांलक्षणंस्वयमेवानंतरंवक्ष्यति ॥ महामुद्रांखेचरीमुद्राम् ॥ ३६ ॥ तत्रमहामुद्रायालक्षणमाह ॥

तत्रयोगीनिरालंबेनिरातंकेनिरामये ॥ षडंगयोगविधिनापरेब्रह्मणिलीयते ॥३२॥ यथाघृतेघृतंक्षितंघृतमेवहितद्भवेत् ॥ क्षीरेक्षीरंतथायोगीतत्रतन्मयतां व्रजेत् ॥ ३३ ॥ अनसंजातपानीयैर्विदध्यादंगमर्दनम् ॥ त्यजेत्कदुष्णंलवणंक्षीरभोजीसदाभवेत् ॥ ३४ ॥ ब्रह्मचारीजितक्रोधोजितलोभोविमत्सरः ॥ अब्दमित्थंसदाभ्यासात्सयोगीतिनिगद्यते ॥ ३५ ॥ महामुद्रांनभोमुद्रामुड्डीयानंजलंधरम् ॥ मूलबंधंतुयोवेत्तिसयोगीयोगसिद्धिभाक् ॥ ३६ ॥ शोधनंनाडीजालस्यघटनंचंद्रसूर्ययोः ॥ रसानांशोषणंसम्यङ्महामुद्राभिधीयते ॥ ३७ ॥ योनिंवामांघ्रिणाऽऽपीड्यकृत्वावक्षस्थलेहनुम् ॥ हस्ताभ्यां प्रसृतंपादंधारयेद्दक्षिणंचिरम् ॥ ३८ ॥ प्राणेनकुक्षिमापूर्यचिरंसंरेचयेच्छनैः ॥ एषाप्रोक्तामहामुद्रामहाघौघविनाशिनी ॥ ३९ ॥ चंद्रांगेतुसमभ्यस्य सूर्यांगेपुनरभ्यसेत् ॥ यावत्तुल्याभवेत्संख्याततोमुद्रांविसर्जयेत् ॥ १४० ॥ नहिपथ्यमपथ्यंवारसाःसर्वेपिनीरसाः ॥ अपिघोरंविषंपीतंपीयूषमिवजीर्यति ॥ ४१ ॥ क्षयकुष्ठगुदावर्तगुल्माजीर्णपुरोगमाः ॥ तस्यदोषाःक्षयंयांतिमहामुद्रांचयोभ्यसेत् ॥ ४२ ॥

शोधनमिति ॥ नाडीजालस्यपूरककुंभकरेचकैःशोधनम् ॥ घटनंयोजनम् ॥ प्राणापानाभ्यांसह ॥ रसानांविकारहेतूनाम् ॥ ३७ ॥ लक्षणांतरमाह योनिमितिद्वाभ्याम् ॥ वामांघ्रिणावाम
पादेनयोनिंशिश्नमापीड्यधृत्वावक्षस्थलेहृदयेहनुंचिबुकंकृत्वाहस्ताभ्यांप्रसृतंप्रसारितंदक्षिणंपादंचिरंधारयेत् ॥ ३८ ॥ प्राणेनवायुनाकुक्षिमुदरमापूर्यपश्चाच्छनैःसंरेचयेदितियदेषाश्रीमहामुद्राप्रोक्ता ॥
कथंभूता ॥ सर्वपापप्रणाशिनी ॥ ३९ ॥ मुद्रायास्त्यागावधिमाह ॥ चंद्रांगमिति ॥ एवंप्रथमतश्चंद्रांगेइडायांसमभ्यस्यपश्चात्सूर्यांगेपिंगलायांपुनरभ्यसेत् ॥ यावत्संख्यामात्रातुल्या ॥ यस्य
प्राणस्ययावतीमात्रासंख्याविहिताभवेत्तावतीवास्यात् ॥ पूरककुंभकरेचकाणांतुल्यामात्रासंख्यायावत्स्यात्तावत्पर्यंतामित्यर्थः ॥ ततोमुद्रांविसर्जयेत्त्यजेत् ॥ १४० ॥ महामुद्राभ्यासस्यफलमाह नही
तिद्वाभ्याम् ॥ एतांमुद्रामभ्यसतःपथ्यमपथ्यंवानास्ति॥यत्किंचिद्भुज्यतेतत्सर्वंपथ्यमित्यर्थः ॥ विकारहेतवोयेरसास्तेसर्वेपिनीरसाइत्यर्थः॥४१॥ क्षयेति॥गुदावर्तोऽर्शः ॥ तदुक्तंहठयोगप्रदीपिकायाम् ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पादमूलेनवामेनयोनिंसंपीड्यदक्षिणम् ॥ पादंप्रसारितंकृत्वाकराभ्यांपूरयेन्मुखम् ॥ कंठेरंध्रंसमारोप्यधारयेद्वायुमूर्ध्वतः ॥ यथादण्डहतःसर्पोदण्डाकारःप्रजायते ॥ ऋज्वीभूतातथाशक्तिःकुण्डलीसहसाभवेत् ॥ तथासौमरणावस्थांहरतेद्विपुटाश्रयाम् ॥ नहिपथ्यमपथ्यंवारसाःसर्वेपिनीरसाः ॥ अपिभुक्तंविषंघोरंपीयूषमिवजीर्यते ॥ चन्द्रांगेतुसमभ्यस्यसूर्यांगेतुसमभ्यसेत् ॥ क्षयःकुष्ठोगुदावर्तोगुल्माजीर्णपुरोगमाः ॥ तस्यदोषाःक्षयंयान्तिमहामुद्रांतुयोभ्यसेत् ॥ कथितेयंमहामुद्राजरामृत्युविनाशिनी ॥ गोपनीयाप्रयत्नेननदेयायस्यकस्यचिदिति ॥ ४२ ॥ नभोमुद्रायाःस्वरूपमाह ॥ कपालेति ॥ कपालकुहरेकपालस्याभ्यन्तरेछिद्रेविपरीतगाविपर्यस्ताविपरीतंगतासतीप्रविष्टाजिह्वादृष्टिश्चभ्रुवोरन्तर्गतायदातदाखेचरीमुद्राभवति ॥ तथाचोक्तंहठयोगप्रदीपिकायाम् ॥ कपालकुहरेत्यादियथाश्लोकमेव ॥ ४३ ॥ एतन्मुद्राज्ञानस्यफलमाह ॥ नपीड्यतइति ॥ एतदपिस्फुटंतस्यामेव ॥ पीड्यतेनेत्यादियथाश्लोकमेव ॥ ४४ ॥ नभोमुद्रायाएवखेचरीनामनिर्वक्ति ॥ चित्तंचरतीति ॥ एतदपितस्यामेवोक्तम् ॥ चित्तमित्यादियथाश्लोकमेव ॥ तेनस्मृतेतिविशेषः ॥ ४५ ॥ परंपरयाखेचरीमुद्रायामरणाभावहेतुतामाह ॥ यावद्बिंदुरिति ॥ बिंदुश्चरमोधातुः ॥ ४६ ॥ उड्डीयानंबंधंवक्तुमादौतन्नामनिर्वक्ति ॥ उड्डीनमिति ॥ महाखगोमहाप्राणः ॥ महत्त्वंदेहेंद्रियाधारकत्वम् ॥ ४७ ॥ तत्रउड्डीयानबंधमेवाह ॥ जठरइति ॥ पश्चिमंतानंहस्ताग्राभ्यां मध्येधृत्वाप्रसारितस्यपादद्वयस्यमध्यंयथाभवतितथाजठरेनाभेरूर्ध्वंचधारयेदितिय

कपालकुहरेजिह्वाप्रविष्टाविपरीतगा ॥ भ्रुवोरंतर्गतादृष्टिर्मुद्राभवतिखेचरी ॥ ४३ ॥ नपीड्यतेशरौघेणनचलिप्यतेकर्मणा ॥ बाध्यतेनसकालेनयोमुद्रांवेत्तिखेचरीम् ॥ ४४ ॥ चित्तंचरतिखेयस्माजिह्वाचरतिखेगता ॥ तेनैषाखेचरीनाममुद्रासिद्धैर्निषेविता ॥ ४५ ॥ यावद्बिंदुःस्थितोदेहेतावन्मृत्युभयंकुतः ॥ यावद्बद्धानभोमुद्रातावद्बिंदुर्नगच्छति ॥ ४६ ॥ उड्डीनंकुरुतेयस्मादहोरात्रंमहाखगः ॥ उड्डियानंततःप्रोक्तंतत्रबंधोविधीयते ॥ ४७ ॥ जठरेपश्चिमंतानंनाभेरूर्ध्वंचधारयेत् ॥ उड्डीयानोह्ययंबंधोमृत्योरपिभयंत्यजेत् ॥ ४८ ॥ बध्नातिहिशिराजालमधोगामिनभोजलम् ॥ एषजालंधरोबंधःकंठेदुःखौघनाशनः ॥ ४९ ॥ जालंधरेकृतेबंधेकंठसंकोचलक्षणे ॥ नपीयूषंपतत्यग्नौनचवायुःप्रधावति ॥१५०॥ पार्ष्णिभागेनसंपीड्ययोनिमाकुंचयेद्गुदम् ॥ अपानमूर्ध्वमाकृष्यमूलबंधोविधीयते ॥ ५१ ॥ अपानप्राणयोरैक्यंक्षयोमूत्रपुरीषयोः ॥ युवाभवतिवृद्धोपिसततंमूलबंधनात् ॥ ५२ ॥

देषउड्डीयानबंधः ॥ अस्माद्बंधान्मृत्योरपिभयंत्यजेत् ॥ तदेतदुक्तंहठयोगप्रदीपिकायाम् ॥ बद्धोयेनसुषुम्नायांप्राणस्तूड्डीयतेयतः ॥ तस्मादुड्डीयनाख्योयंयोगिभिःसमुदाहृतः ॥ उड्डीनंकुरुतेयस्माद्विश्रांतंमहाखगः ॥ उड्डीयानंतदेवस्यात्तत्रबंधोभिधीयते ॥ उदरेपश्चिमंतानंनाभेरूर्ध्वंतुकारयेत् ॥ उड्डीयानोह्ययंबंधोमृत्युमातंगकेसरीति ॥ ४८ ॥ निर्वचनपूर्वकंजालंधरबंधमाह ॥ बध्नातीति ॥ बध्नातिधारयति ॥ शिराजालंनाडीसमूहम् ॥ नभोजलंशरीरांतर्गतच्छिद्रजलम् ॥ ४९ ॥ अस्यबंधस्यफलांतरमाह ॥ जालंधरइति ॥ कंठसंकोचलक्षणेकंठमाकुंच्यहृदयेस्थापनलक्षणेऽर्थाद्द्वयोःपीयूषममृतंललाटस्थचंद्रमंडलेस्थितम् ॥ अग्नौजाठरेप्रधावतिप्रकुप्यति ॥ तदेतदुक्तंहठयोगप्रदीपिकायाम् ॥ कंठमाकुंच्यहृदयेस्थापयेद्दृढमिच्छया ॥ बंधोजालंधराख्योयममृताख्योपकारकः ॥ बध्नातिहिशिराजालमधोगामिनभोजलं ॥ ततोजालंधरोबंधःकंठेदुःखौघनाशनः ॥ जालंधरेकृतेबंधेकंठसंकोचलक्षणे ॥ नपीयूषंपतत्यग्नौनचवायुःप्रकुप्यतीति ॥१५०॥ मूलबंधस्वरूपमाह ॥ पार्ष्णिभागेनेति ॥ पार्ष्णिभागेनपादमूलभागेन ॥ आकुंचयेत्संकोचयेत् ॥ ५१ ॥ अस्यबंधस्यफलमाहापानेति ॥ सततंसर्वदामूलबंधनाद्धेतोरपानप्राणयोरैक्यादापोभवंतीत्यर्थः ॥ अपानप्राणयोरैक्यइतिक्वचित् ॥ तदेतदुक्तंहठयोगप्रदीपिकायाम् ॥ पार्ष्णिभागेनसंपीड्ययोनिमाकुंचयेद्गुदम् ॥ अपानमूर्ध्वमाकृष्यमूलबंधोयमुच्यते ॥ अधोगतमपानंवैऊर्ध्वगंकुरुतेहठात् ॥ आकुंचनेनतंप्राहुर्मूलबंधंतुयोगिनः ॥ गुदंपार्ष्ण्यातुसं



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पीडचवायुमाकुंचयेद्बलात् ॥ वारंवारंतथाचोर्ध्वंसमायातिसमीरणः॥प्राणापानौनादबिंदूमूलबंधेनचैकताम् ॥ गत्वायोगस्यसंसिद्धिंगच्छतोनात्रसंशयः॥अपानप्राणयोरैक्यंक्षयोमूत्रपुरीषयोः॥ युवाभव
तिवृद्धोपिसततंमूलबंधनादिति ॥ ५२ ॥ नन्वात्मनःकूटस्थत्वाद्विकाराभावाद्योगेनकिंक्रियतेतत्राह ॥ प्राणापानेति ॥ प्राणापानवशस्तदायत्तस्तदुपाधिरित्यर्थः ॥ वामदक्षिणमार्गेणइडापिंगलानाडी
द्वयेन ॥ अतएवचंचलःसन्स्थितिंनलभेन्नभजेत् ॥ अयमेववापाठः ॥ ५३ ॥ सदृष्टांतमाह ॥ गुणबद्धइति ॥ गुणेनरज्ज्वागुणकार्ययावारज्ज्वाबद्धइत्यर्थः ॥ गुणैःसत्त्वरजस्तमोभिस्तत्कार्यैर्वाकार्य
कारणसंघातैः ॥ ५४ ॥ अतोयोगविज्जीवस्यनिश्चलतयाऽवस्थानार्थंप्राणापानयोरैक्यंकरोतीत्याह ॥ अपानइति ॥ ५५ ॥ हकारेणेति ॥ हकारेणाकाशबीजेनबहिर्गच्छतीति ॥ यद्वाहूकारेणपुरुष
बीजेनसकारेणप्रकृतिबीजेनपुनर्विशेत् ॥ पुंप्रकृत्यात्मकोहं सावितिशारदातिलकवचनात् ॥ अतोहेतोर्हंसहंसेतिमंत्रंजीवःसर्वदाजपति ॥ तथाचश्रुतिः ॥ हंसहंसेतिसदायःसर्वदेहेषुव्याप्तोवर्ततेयथाह्यग्निः
काष्ठेषुतिलेषुतैलमिवविदित्वानमृत्युमेतीति ॥ लैंगेचब्रह्मणोवचनम् ॥ःएवंव्याहृत्यविश्वात्मास्वरूपमकरोत्तदा ॥ वाराहमहमप्याशुहंसत्वंप्राप्तवान्सुराः॥ तदाप्रभृतिमामाहुर्हंसोहंसोविराडिति ॥ हंसहंसे

प्राणापानवशोजीवऊर्ध्वाधःपरिधावति ॥ वामदक्षिणमार्गेणचंचलोनस्थितिंलभेत् ॥ ५३ ॥ गुणबद्धोयथापक्षीगतोप्याकृष्यतेपुनः ॥ गुणैर्बद्धस्तथाजी
वःप्राणायामेनकृष्यते ॥ ५४ ॥ अपानःकर्षतिप्राणंप्राणोपानंचकर्षति ॥ ऊर्ध्वाधःसंस्थितावेतौसंयोजयतियोगवित् ॥ ५५ ॥ हकारेणबहिर्यातिसका
रेणविशेत्पुनः ॥ हंसहंसेत्यतोमंत्रंजीवोजपतिसर्वदा ॥ ५६ ॥ षट्शतानिदिवारात्रौसहस्राण्येकविंशतिः ॥ एतत्संख्यान्वितंमंत्रंजीवोजपतिसर्वदा ॥
॥ ५७ ॥ अजपानामगायत्रीयोगिनांमोक्षदायिनी ॥ अस्याःसंकल्पमात्रेणनरःपापैःप्रमुच्यते ॥ ५८ ॥ अंतरायाभवंतीहयोगिनोयोगहानिदाः ॥
श्रूयतेदूरगावार्तादूरस्थंदृश्यतेपुरः ॥ ५९ ॥ योजनानांशतंयातुंशक्तिःस्यान्निमिषार्धतः॥ अचिंतितानिशास्त्राणिकंठपाठीभवंतिहि ॥१६०॥ धारणाश
क्तिरत्युग्रामहाभारोलघुर्भवेत् ॥ क्षणंकृशःक्षणंस्थूलःक्षणमल्पःक्षणंमहान् ॥ ६१ ॥ परकायंप्रविशतितिरश्चांवेत्तिभाषितम् ॥ दिव्यगंधंतनौधत्तेदिव्यां
वाणींप्रवक्तिच ॥ ६२ ॥ प्रार्थ्यतेदिव्यकन्याभिर्दिव्यंधारयतेवपुः ॥ इत्यादयोऽंतरायाःस्युर्योगसंसिद्धिसूचकाः ॥ ६३ ॥

तियोब्रूयान्मांहंसःसभविष्यतीति ॥ भागवतेच ॥ हंसस्वरूप्यवददच्युतमात्मयोगमिति ॥ अस्यमंत्रस्यचऋष्यादयःश्रुतावेवोक्ताः ॥ तथाहि॥अस्यहंसऋषिरव्यक्तंछंदःपरमहंसोदेवताभवतीति॥५६॥
रात्रिदिनमध्येकियद्वारंजपतीतिपृच्छायामाह ॥ षट्शतानीति ॥ सर्वदादिवारात्रौचषट्शतान्येकविंशतिसहस्राणिचयासंख्याभवतिएतत्संख्यान्वितंषट्शताधिकैकविंशतिसहस्रसंख्यान्वितंमन्त्रंहं
सहंसेतिस्वरूपंजीवोजपतीत्यर्थः ॥ तथाचश्रुतिः ॥ षट्संख्याहोरात्रयोरेकविंशतिसहस्राणिषट्शताधिकानिभवन्तीति ॥ अस्यायमर्थः ॥ मन्त्रजपसंख्यामाह ॥ षट्संख्याषष्टिघटिकात्मकोहि
दिवसःषोढाभिन्नःषट्संख्यातस्मिन्संवत्सराहोरात्राणांप्रतिघटिकंगणनयासंख्याषट्संख्याघटिकादशकेत्रिसहस्रंषट्शताधिकंभवतीत्यर्थः ॥ किंबहुनाअहोरात्रयोःअहनिरात्रौचएकविंशतिसहस्राणिष
ट्शतान्यधिकानिस्पष्टम् ॥ अतोनश्रुतिविरोधः ॥ ५७ ॥ अस्यमन्त्रस्यनामकथयति ॥ अजपेति ॥ ५८ ॥ योगंयुंजतोयोगिनोविघ्नरूपाःसिद्धयआयांतिताउपेक्ष्यब्रह्मण्येवमनोधेयमित्याहांतराया
इत्यारभ्ययत्प्राप्येत्यतःप्राक्तनेनग्रन्थेन ॥ अन्तरायानेवसंक्षेपतोदर्शयति श्रूयतइतिचतुर्भिः ॥ पुरोग्रतः ॥ ५९ ॥१६०॥ ६१ ॥ तिरश्चांपश्वादीनाम् ॥६२॥ दिव्यकन्याभिरप्सरोभिः ॥६३॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

क्षिप्यतेक्षोभ्यते ॥ अस्ययोगिनः ॥ इहभोगभूमौ ॥ तद्ब्रह्म ॥ तदेवमुमुक्षुभिःपद्यतेज्ञायतइतिपदम् ॥ ६४ ॥ तदेवपदंदर्शयन्योगफलमुपसंहराति ॥ यत्प्राप्येति ॥ ६५ ॥ ६६ ॥ ॥ ६७ ॥ ६८ ॥ दयावार्धिःकृपासमुद्रः ॥ ६९ ॥ १७० ॥ काश्यामिति ॥ सदासर्वदा ॥ इहसंसारे ॥ सइतिपृथक्पदंवा ॥ अंतिमकालीनइत्यर्थः ॥ समोव्यावर्त्यमाह ॥ मुच्यतेनेहेति ॥ ॥७१॥ ननुयोगेनान्तेतनुंत्यजेत् ॥ योगश्चित्तवृत्तिनिरोधः ॥ शुचौदेशेप्रतिष्ठाप्यस्थिरमासनमात्मनइत्यादिवचनाद्योगादेवकैवल्यंमन्यंतेतत्कथंकाश्यांदेहत्यागमात्रेणमुक्तिरित्याशंकायांतुष्यतुदुर्जन

यद्येभिरंतरायैर्नक्षिप्यतेऽस्येहमानसम् ॥ तदग्रेतत्समाप्नोतिपदंब्रह्मादिदुर्लभम् ॥ ६४ ॥ यत्प्राप्यननिवर्तेतयत्प्राप्यनचशोचति ॥ तल्लभ्यतेषडंगेनयोगेनकलशोद्भव ॥ ६५ ॥ एकेनजन्मनायोगःकथमित्थंप्रसिध्यति ॥ ऋतेचयोगसंसिद्धेःकथंमुक्तिरिहाप्यते ॥ ६६ ॥ उभेएवहिनिर्वाणवर्त्मनीकिलकुंभज ॥ किंवाकाश्यांतनुत्यागःकिंवायोगोयमीदृशः ॥६७॥ चंचलेंद्रियवृत्तित्वात्कलिकल्मषजृंभणात् ॥ अल्पायुषांतथानृणांक्वेहयोगमहोदयः ॥६८॥ अतएवहिजंतूनांमहोदयपदप्रदः ॥ सदैवसदयावार्धिःकाश्यांविश्वेश्वरःस्थितः ॥ ६९ ॥ काश्यांसुखेनकैवल्यंयथालभ्येतजंतुभिः ॥ योगयुक्त्याद्युपायैश्चनतथान्यत्रकुत्रचित् ॥ १७० ॥ काश्यांस्वदेहसंयोगःसम्यग्योगउदाहृतः ॥ मुच्यतेनेहयोगेनक्षिप्रमन्येनकेनचित् ॥ ७१ ॥ विश्वेश्वरोविशालाक्षीद्युनदीकालभैरवः ॥ श्रीमान्ढुंढिर्दंडपाणिःषडंगोयोगएषवै ॥ ७२ ॥ एतत्षडंगयोयोगंनित्यंकाश्यांनिषेवते ॥ संप्राप्ययोगनिद्रांसदीर्घाममृतमश्नुते ॥ ७३ ॥ ओंकारःकृत्तिवासाश्चकेदारश्चत्रिविष्टपः ॥ वीरेश्वरोथविश्वेशःषडंगोयमिहापरः ॥ ७४ ॥ पादोदकासिसंभेदज्ञानोदमणिकर्णिकाः ॥ षडंगोयंमहायोगोब्रह्मधर्मह्रदावपि ॥ ७५ ॥ षडंगसेवनादस्माद्वाराणस्यांनरोत्तम ॥ नजातुजायतेजंतुर्जननीजठरेपुनः ॥ ७६ ॥ गंगास्नानंमहामुद्रामहापातकनाशनी ॥ एतन्मुद्राकृताभ्यासोप्यमृतत्वमवाप्नुयात् ॥७७॥ काशीवीथिषुसंचारोमुद्राभवतिखेचरी॥खेचरोजायतेनूनंखेचर्यामुद्रयानया ॥७८॥

इतिन्यायेनसुखसाध्यमन्यमेवषडंगयोगंदर्शयति ॥ विश्वेश्वरइति ॥ ७२ ॥ योगःसमाधिस्तद्रूपांनिद्रांबहिर्वृत्त्यभावसाम्यात्ताम् ॥ ७३ ॥ द्वितीयंषडंगंदर्शयति ॥ ओंकारइति ॥ त्रिविष्टपस्त्रिलोचनः ॥ ७४ ॥ तृतीयषडंगमाह ॥ पादोदकेति ॥ पादोदकंवरणा ॥ संभेदःसंगमः ॥ ज्ञानोदंज्ञानवापी ॥[1] ब्रह्मधर्मह्रदौब्रह्मह्रदोब्रह्मनालंब्रह्मेश्वरसमीपेब्रह्मकुंण्डं धर्मह्रदःपांचनदेधूतपापाशापेनधर्मस्यैवह्रदत्वात् ॥ ब्रह्मावर्तेतिपाठेआवर्तोपिह्रदविशेषोज्ञातव्यः ॥ ७५ ॥ ७६ ॥ तथासुखसाध्याःअन्याएवमुद्रादर्शयति ॥ गंगास्नानमिति ॥७७॥ काशीवीथिषुकाश्यामार्गेषु ॥ खेब्रह्म

---

१ ब्रह्मकुण्डंदशाश्वमेधतीर्थस्थम्, ब्रह्मनालस्योपरिवर्तमानत्वात्। तत्रचतीर्थत्वाभावादितिचिन्त्यम्।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

णिचरतीतिखेचरोब्रह्मनिष्ठः ॥ कम्ब्रह्मखंब्रह्मेतिश्रुतेः ॥ ७८ ॥ ७९ ॥ १८० ॥ ८१॥ द्विविधंयोगमुपसंहरति ॥ इतियोगइति ॥ समुद्रोमुद्रासहितः ॥८२॥८३॥ उत्तमंयोगंजीवब्रह्मणोरैक्यलक्षणम् ॥ ८४ ॥ कालंमरणकालम् ॥ ८५ ॥ ८६ ॥ आतिथ्येऽनेहसिअतिथिसमर्चनवेलायाम् ॥ कालंमरणसमयम् ॥ आयान्तमागच्छन्तम् ॥ ८७ ॥ त्रिकण्टकंकण्टकवत्कण्टकंसंसारानर्थदायीत्यर्थः ॥ ८८ ॥ १८९ ॥ इतिश्रीरामानन्दकृतायांकाशीखण्डटीकायामेकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ छ ॥ ॥ द्विचत्वारिंशकेऽध्यायेकाशीमाहात्म्यमिश्रिताः ॥ कालस्यवं

उड्डीयसर्वतोदेशाद्यानंवाराणसींप्रति ॥ उड्डीयानोमहाबंधएषमुक्त्यैप्रकल्पते ॥ ७९ ॥ जलस्यधारणंमूर्ध्निविश्वेशस्नानजन्मनः ॥ एषजालंधरोबंधः समस्तसुरदुर्लभः ॥ १८० ॥ वृतोविघ्नशतेनापियन्नकाशींत्यजेत्सुधीः ॥ मूलबंधःस्मृतोह्येषदुःखमूलनिकृंतनः ॥ ८१ ॥ इतियोगःसमाख्यातोमयाते द्विविधोमुने ॥ सषडंगःसमुद्रश्चमुक्तयेशंभुभाषितः ॥ ८२ ॥ यावन्नेंद्रियवैक्लव्यंयावद्व्याधिर्नबाधते ॥ यावत्कालविलंबोस्तितावद्योगरतोभवेत् ॥ ८३ ॥ उभयोर्योगयोर्मध्येकाशीयोगोयमुत्तमः ॥ काशीयोगंसमभ्यस्यप्राप्नुयाद्योगमुत्तमम् ॥ ८४ ॥ आधिव्याधिसहायिन्याजरयामृत्युलिंगया ॥ कालं निकटतोज्ञात्वाकाशीनाथंसमाश्रयेत् ॥ ८५ ॥ काशीनाथंसमाश्रित्यकुतःकालभयंनृणाम् ॥ क्रुद्धोपिजीवहृत्कालस्तच्चकाश्यांसुमंगलम् ॥ ८६ ॥ आतिथ्येनेहसियथाप्रतीक्षेतातिथिंकृती ॥ काश्यांकालंतथायांतंभाग्यवान्संप्रतीक्षते ॥ ८७ ॥ कलिःकालःकृतंकर्मत्रिकंटकमितीरितम् ॥ एतत्त्रयं नप्रभवेदानंदवनवासिनाम् ॥८८॥ अन्यत्रातर्कितःकालःकलयिष्यत्यसंशयम् ॥ कालादभयमिच्छेच्चेत्ततःकाशींसमाश्रयेत् ॥ १८९ ॥ इतिश्रीस्कांदे महापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेयोगाख्याननामैकचत्वारिंशोऽध्यायः ॥४१॥ ॥ अगस्तिरुवाच ॥ ॥ कथंनिकटतः कालोज्ञायतेहरनंदन ॥ तानिचिह्नानिकतिचिद्ब्रूहिमेपरिपृच्छतः ॥ १ ॥ ॥ कुमारउवाच ॥ ॥ वदामिकालचिह्नानिजायंतेयानिदेहिनाम् ॥ मृत्यौनिकटमापन्नेमुनेतानिनिशामय ॥ २ ॥ याम्यनासापुटेयस्यवायुर्वातिदिवानिशम् ॥ अखंडमेवतस्यायुःक्षयत्यब्दत्रयेणहि ॥ ३ ॥ द्व्यहोरात्रं त्र्यहोरात्रंरविर्वहतिसंततम् ॥ अब्दमेकंचतस्येहजीवनावधिरुच्यते ॥ ४ ॥ वहेन्नासापुटयुगेदशाहानिनिरंतरम् ॥ वातश्चेत्सहसंक्रांतिस्तयाजीवेद्दिनत्रयम् ॥ ५ ॥ नासावर्त्मद्वयंहित्वामातरिश्वामुखाद्वहेत् ॥ शंसेद्दिनद्वयादर्वाक्प्रयाणंतस्यचाध्वनि ॥ ६ ॥ अकस्मादेवयत्कालेमृत्युःसन्निहितो भवेत् ॥ चिंतनीयःप्रयत्नेनसकालोमृत्युभीरुणा ॥ ७ ॥ सूर्येसप्तमराशिस्थेजन्मर्क्षस्थेनिशाकरे ॥ पौष्णःसकालोद्रष्टव्योयदायाम्येरविर्वहेत् ॥ ८ ॥

चनोपायाउच्यन्तेतिसुखप्रदाः ॥ १ ॥ कालंनिकटतोज्ञात्वाकाशीनाथंसमाश्रयेदित्युक्तंतत्रपृच्छाति ॥ कथमिति ॥ कतिचित्कियंति ॥ १ ॥ २ ॥ याम्यनासापुटेदक्षिणनासाछिद्रे ॥ अखण्डंनिश्छिद्रम् ॥ ३ ॥ रविर्दक्षिणनाडी ॥ तस्यांवायुर्वहतीत्यर्थः ॥ ४ ॥ कथंभूतोवातः ॥ सहसंक्रांतिःसम्यक्क्रांतिःसंक्रातिरुत्क्रांतिरित्यर्थः ॥ तयासहवर्तमानः ॥ तयासंक्रांत्या ॥ तदेतिवापाठः ॥५॥ नासेति ॥ मुखान्मुखद्वारा ॥ अध्वनियममार्गे ॥ ६ ॥ एतदेवस्पष्टयति ॥ अकस्मादिति ॥ ७ ॥ सूर्यइतिश्लोकद्वयंवाक्यम् ॥ पौष्णःसूर्यदेवताकः ॥ याम्येदक्षिणनासापुटे ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

रविर्वायुः ॥ ८ ॥ तस्मिन्नेवपौष्णकालएव ॥ अरूपंरूपांतरमुक्तम् ॥ ९ ॥ यस्येति ॥ बीजंशुक्रम् ॥ मलंपुरीषम् ॥ मूत्रमेतात्रितयंवा ॥ इहसंसारे ॥ सहेतिपाठेअत्यव्यवहितसमयइत्यर्थः ॥१०॥
इंद्रेति॥प्रसृमरमितस्ततोगमनशीलम् ॥ ११ ॥ व्यभ्रेइति ॥ फूत्कृत्यफूत्कारशब्दंकृत्वेतिपूर्वेणान्वयः ॥ पूत्कृत्येतिपाठेपिसएवार्थः ॥ १२ ॥ १३ ॥ अरुंधतीमितिश्लोकंस्वयमेवव्याचष्टे ॥
अरुंधतीभवेदिति ॥ १४ ॥ वेत्तीति ॥ अकस्माच्चक्षुर्दोषज्वरादिकंविनेत्यर्थः ॥ १५ ॥ षण्मासेति ॥ षण्मासान्मृत्युर्यस्यतस्यमर्त्यस्यकंठश्चओष्ठश्चरसनाजिह्वाचरदादन्ताश्चतालुपंचमाए

अकस्माद्वीक्षतेयस्तुपुरुषंकृष्णपिंगलम् ॥ तस्मिन्नेवक्षणेऽरूपंसजीवेद्वत्सरद्वयम् ॥ ९ ॥ यस्यबीजंमलंमूत्रंक्षुतंमूत्रंमलंतुवा ॥ इहैकदापतेद्यस्यअब्दं
तस्यायुरिष्यते ॥ १० ॥ इंद्रनीलनिभंव्योम्निनागवृंदंयईक्षते ॥ इतस्ततःप्रसृमरंषण्मासंनसजीवति ॥११॥ व्यभ्रेह्निवारिपूर्णास्यःपृष्ठीकृत्यदिवाकरम् ॥
फूत्कृत्याशिंद्रचापंनपश्येत्षण्मासजीवितः ॥ १२ ॥ अरुंधतींध्रुवंचैवविष्णोस्त्रीणिपदानिच ॥ आसन्नमृत्युर्नोपश्येच्चतुर्थंमातृमंडलम् ॥१३॥ अरुंधती
भवेज्जिह्वाध्रुवोनासाग्रमुच्यते ॥ विष्णोःपदानिभ्रूमध्येनेत्रयोर्मातृमंडलम् ॥ १४ ॥ वेत्तिनीलादिवर्णस्यकटम्लादिरसस्यहि ॥ अकस्मादन्यथाभावं
षण्मासेनसमृत्युभाक् ॥१५॥ षण्मासमृत्योर्मर्त्यस्यकंठोष्ठरसनारदाः ॥ शुष्यंतिसततंतद्वद्विच्छायास्तालुपंचमाः ॥१६॥ रेतःकरजनेत्रांतानीलिमानं
भजंतिचेत् ॥ तर्हिकीनाशनगरींषष्ठेमासिव्रजेन्नरः ॥ १७ ॥ संप्रवृत्तेनिधुवनेमध्येंतेक्षौतिचेन्नरः ॥ निश्चितंपंचमेमासिधर्मराजातिथिर्भवेत् ॥ १८ ॥
द्रुतमारुह्यशरठस्त्रिवर्णोयस्यमस्तके ॥ प्रयातियातितस्यायुःषण्मासेनपरिक्षयम् ॥ १९ ॥ सुस्नातस्यापियस्याशुहृदयंपरिशुष्यति ॥ चरणौचकरौ
वापित्रिमासंतस्यजीवितम् ॥ २० ॥ प्रतिबिंबंभवेद्यस्यपदखंडपदाकृति ॥ पांसौवाकर्दमेवापिपंचमासान्सजीवति ॥ २१ ॥ छायाप्रकंपतेयस्यदेहबंधे
पिनिश्चले ॥ कृतांतदूतावभ्रंतिचतुर्थेमासितंनरम् ॥ २२ ॥ निजस्यप्रतिबिंबस्यनीराज्यमुकुरादिषु ॥ उत्तमांगंनयःपश्येत्समासेनविनश्यति ॥ २३ ॥
मतिर्भ्रश्येत्स्खलेद्वाणीधनुरैंद्रंनिरीक्षते ॥ रात्रौचंद्रद्वयंचापिदिवाद्वौचदिवाकरौ ॥ २४ ॥ दिवाचतारकाचक्रंरात्रौव्योमवितारकम् ॥ युगपच्चचतुर्दि
क्षुशाक्रंकोदंडमंडलम् ॥ २५ ॥

तेशुष्यंतितद्वत्तथाविच्छायाश्चभवन्तीत्यर्थः ॥ १६ ॥ रेतइति ॥ कीनाशोऽत्रयमः ॥ १७ ॥ संप्रवृत्तइति ॥ निधुवनेमैथुने ॥ क्षौतिक्षुतंकरोति ॥ १८ ॥ द्रुतमिति ॥ सरठः
कृकलासः ॥ त्रयोनीलरक्तपीतवर्णायस्यसत्रिवर्णः ॥ १९ ॥ २० ॥ प्रतिबिम्बमिति ॥ खण्डपदाकृतिअर्द्धादिचरणाकारम् ॥ २१ ॥ २२ ॥ निजस्येति ॥ नीराज्यमुकुरादिषु
दृष्टिप्रतिबन्धकरहितजलघृतदर्पणादिषु ॥ २३ ॥ मतिरितिश्लोकत्रयंवाक्यम् ॥ २४ ॥ तारकमित्यनेनएकस्यद्वयोर्वादर्शनेनास्तिदोषइतिध्वनितम् ॥ शाक्रमिन्द्रसम्बन्धिकोदंडमंडलं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

धनुःसमूहः ॥ २५ ॥ गंधर्वनगरालयमाकाशेऽकस्माद्दृश्यमानंनगराकारमाश्रयम् ॥ पंचत्वहेतवोमृत्युहेतवः ॥ हेतवेइतिक्वचित् ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ प्रोह्यतइतिश्लोकद्वयं वाक्यम् ॥ प्रोह्यतेपृष्ठादौस्थापयित्वानीयते ॥ गोमायुःशृगालः ॥ ३० ॥ करभैरुष्ट्रैः ॥ कीशैर्वानरैः ॥ श्येनैःशीचानइतिप्रसिद्धैःपक्षिविशेषैः ॥ अश्वतरैर्गर्दभैः ॥ ३१ ॥ गंधेति ॥ शोणै रक्तवर्णैः ॥ अनितिजीवतीत्यर्थः ॥ अहोइत्यगस्त्यसंबोधनम् ॥ ३२ ॥ पांस्विति ॥ वल्मीकंवामलूरम् ॥ ३३ ॥ ३४ ॥ स्वमौलाविति ॥ स्वप्नगःस्वप्नभूमिष्ठः ॥ स्वप्नतइतिपाठेस्वप्नइत्यर्थः ॥ ॥ ३५ ॥ ३६ ॥ कालीति ॥ बध्नीयादालिंगेत् ॥ शमनोषितांयमेनाधिष्ठिताम् ॥ ३७ ॥ नरइति ॥ स्वपन्स्वप्नंपश्यन्सन् ॥ ३८ ॥ कृपणइति ॥ वदान्यउदारोदातेतियावत् ॥ प्रकृतेर्विकृतिः

भूरुहेभूधराग्रेचगंधर्वनगरालयम् ॥ दिवापिशाचनृत्यंचएतेपंचत्वहेतवः ॥२६॥ सर्वेष्वेतेषुचिह्नेषुयद्येकमपिवीक्षते ॥ तदामासावधिंमृत्युःप्रतीक्षेतनचाधिकम् ॥ २७ ॥ करावरुद्धश्रवणःशृणोतिनयदाध्वनिम् ॥ स्थूलःकृशःकृशःस्थूलस्तदामासान्निवर्तते ॥ २८ ॥ यःपश्येदात्मनश्छायांदक्षिणाशासमाश्रिताम् ॥ दिनानिपंचजीवित्वापंचत्वमुपयातिसः ॥ २९ ॥ प्रोह्यतेभक्ष्यतेवापिपिशाचासुरवायसैः ॥ भूतैःप्रेतैःश्वभिर्गृध्रैर्गोमायुखरसूकरैः ॥ ३० ॥ रासभैःकरभैःकीशैःश्येनैरश्वतरैर्बकैः ॥ स्वप्नेसजीवितंत्यक्त्वावर्षांतेयममीक्षते ॥ ३१ ॥ गंधपुष्पांशुकैःशोणैःस्वांतनुंभूषितांनरः ॥ यःपश्येत्स्वप्नसमयेसोऽष्टौमासाननित्यहो ॥ ३२ ॥ पांसुराशिंचवल्मीकंयूपदंडमथापिवा ॥ योधिरोहतिवैस्वप्नेसषष्ठेमासिनश्यति ॥ ३३ ॥ रासभारूढमात्मानंतैलाभ्यक्तंचमुंडितम् ॥ नीयमानंयमाशांयःस्वप्नेपश्येत्स्वपूर्वजान् ॥ ३४ ॥ स्वमौलौस्वतनौवापियःपश्येत्स्वप्नगोनरः ॥ तृणानिशुष्ककाष्ठानिषष्ठेमासिनतिष्ठति ॥ ३५ ॥ लोहदंडधरंकृष्णंपुरुषंकृष्णवाससम् ॥ स्वयंयोग्रेस्थितंपश्येत्सत्रीन्मासान्नलंघयेत् ॥ ३६ ॥ कालीकुमारीयंस्वप्नेबध्नीयाद्बाहुपाशकैः ॥ समासेनसमीक्षेतनगरींशमनोषिताम् ॥ ३७ ॥ नरोयोवानरारूढोयायात्प्राचींदिशंस्वपन् ॥ दिनैःसपंचभिरेवपश्येत्संयमिनींपुरीम् ॥३८॥ कृपणोपिवदान्यःस्याद्वदान्यःकृपणोयदि ॥ प्रकृतेर्विकृतिश्चेत्स्यात्तदापंचत्वमृच्छति ॥३९॥ एतानिकालचिह्नानिसंत्यन्यानिबहून्यपि ॥ ज्ञात्वाभ्यसेन्नरोयोगमथवाकाशिकांश्रयेत् ॥ ४० ॥ नकालवंचनोपायंमुनेन्यमवयाम्यहम् ॥ विनामृत्युंजयंकाशीनाथंगर्भावरोधकम् ॥ ४१ ॥ तावद्गर्जंतिपापानितावद्गर्जेद्यमोनृपः ॥ यावद्विश्वेशशरणंनरोनानिरतोव्रजेत् ॥ ४२ ॥ प्रातविश्वेश्वरावासःपीतोत्तरवहापयाः ॥ स्पृष्टविश्वेशसल्लिंगःकश्चयातिनवंधताम् ॥ ४३ ॥ करिष्येत्कुपितःकालःकिंकाशीवासिनांनृणाम् ॥ कालेशिवःस्वयंकर्णेयत्रमंत्रोपदेशकः ॥ ४४ ॥

स्वभावस्यत्यागइत्यर्थः ॥ ३९ ॥ कालचिह्नान्युपसंहरन्कालवंचनोपायेद्वगतीआह ॥ एतानीति ॥ ४० ॥ तत्राप्यंतिमगतेःश्रेष्ठत्वमाह ॥ नकालेति ॥ ४१ ॥ श्रेष्ठत्वमेवदर्शयाति ॥ तावदिति ॥ विश्वेशमेवशरणंरक्षितारंविश्वेशस्यशरणमावासमविमुक्तमितियावदितिवा ॥ निरतोनितरांरतः ॥ नियतइतिवापाठः ॥ ४२ ॥ प्रातेति ॥ पीतमुत्तरवहायागंगायाःपयोयेनसपीतोत्तरवहापयाः ॥ वंधतांदेवादीनामितिशेषः ॥ कस्येतिपाठेकस्यदेवादेर्वंधतांनायातिअपितुसर्वस्येत्यर्थः ॥ ४३ ॥ ननुस्वाधिकारोल्लंघनेनकालोऽरिष्टंकरिष्यतिनेत्याह ॥ करिष्येदिति ॥ यद्वा ननुकाल



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एवमजनीयोमारकत्वात्तत्राह ॥ करिष्येदिति ॥ करिष्येत्करिष्यति ॥ कालेमरणाव्यवहितसमये ॥ ४४ ॥ सानुभवंप्रकृतंसारमुपसंहरति यथेतिद्वाभ्याम् ॥ ४५ ॥ सर्वंपुत्रकलत्रादि ॥ फल्गुरूप मनिर्वचनीयरूपंतुच्छरूपंवा ॥ ४६ ॥ अहोभाग्यंलोकानामित्यनुक्रोशति ॥ अन्यानीति ॥ लक्ष्माणिचिह्नानि ॥ लक्षाणीतिवापाठः ॥ एवमग्रेपि ॥ ४७ ॥ जराकृतान्दोषानाह पराभूतइति त्रिभिः ॥ हृतंतारुण्यमेवमाणिक्यंयस्यसः ॥ ४८ ॥ रहःसंबंधस्तुदूरेप्रेमापिमुंचतीत्यर्थः ॥ ४९ ॥ एतदेवसोत्प्रेक्षंप्रपंचयति ॥ आश्लिष्टमिति ॥ ५० ॥ जरानिंदामुपसंहरति ॥ नजरेति ॥ ५१ ॥ ननुतर्ह्यन्यत्रास्थित्वैवकालजयःकर्तव्यस्तत्राह ॥ नजीयतइति ॥ चिरेणदेहत्यागपर्यंतेन ॥ अचिरेणेतिपदच्छेदेकाशीवासान्मरणपर्यंतादित्यर्थः ॥ ५२ ॥ ननुतर्हिसर्वोपिलोकःकिमितिवार्धकेकाश्यां

यथाप्रयातिशिशुताकौमारंचयथागतम् ॥ सत्वरंगत्वरंतद्वद्यौवनंचापिवार्धकम् ॥ ४५ ॥ यावन्नहिजराक्रांतिर्यावन्नेंद्रियवैक्लवम् ॥ तावत्सर्वंफल्गुरूपं हित्वाकाशींश्रयेत्सुधीः ॥ ४६ ॥ अन्यानिकाललक्ष्माणितिष्ठंतुकलशोद्भव ॥ जरैवप्रथमंलक्ष्मचित्रंतत्रापिभीर्नहि ॥ ४७ ॥ पराभूतोहिजरयासर्वैश्चप रिभूयते ॥ हृततारुण्यमाणिक्योधनहीनःपुमानिव ॥ ४८ ॥ सुतावाक्यंनकुर्वंतिपत्नीप्रेमापिमुंचति ॥ बांधवानैवमन्यंतेजरसाश्लेषितंनरम् ॥ ४९ ॥ आश्लिष्टंजरयादृष्ट्वापरयोषिद्विशंकिता ॥ भवेत्पराङ्मुखीनित्यंप्रणयिन्यपिकामिनी ॥ ५० ॥ नजरासदृशोव्याधिर्नदुःखंजरयासमम् ॥ कारयित्र्यपमा नस्यजरैवमरणंनृणाम् ॥ ५१ ॥ नजीयतेतथाकालस्तपसायोगयुक्तिभिः ॥ यथाचिरेणकालेनकाशीवासाद्विजीयते ॥ ५२ ॥ विनायज्ञैर्विनादानैर्वि नाव्रतजपादिभिः ॥ विनातिपुण्यसंभारैःकःकाशींप्राप्तुमीहते ॥ ५३ ॥ काशीप्राप्तिरयंयोगःकाशीप्राप्तिरिदंतपः ॥ काशीप्राप्तिरिदंदानंकाशीप्राप्तिःशि वैकता ॥ ५४ ॥ कःकलिःकोथवाकालःकाजराकिंचदुष्कृतम् ॥ कारुजःकेंतरायावाश्रितावाराणसीयदि ॥ ५५ ॥ कलिस्तानेवबाधेतकालस्तांश्च जिघांसति ॥ ५६॥ एनांसितांश्चबाधंतेयेनकाशींसमाश्रिताः ॥ काशीसमाश्रितायैश्चयैश्चविश्वेश्वरोर्चितः ॥ तारकंज्ञानमासाद्यतेमुक्ताःकर्मपाशतः ॥ ॥ ५७ ॥ धनिनोनतथासौख्यंप्राप्नुवंतिनराःक्वचित् ॥ यथानिधनतःकाश्यांलभंतेसुखमव्ययम् ॥ ५८ ॥ वरंकाशीसमावासीनासीनोद्युसदांपदम् ॥ दुःखांतंलभतेपूर्वंःसुखांतंलभतेपरः ॥ ५९ ॥

नायातितत्राह ॥ विनायज्ञैरिति ॥ ५३ ॥ अतोमहताप्रयत्नेनकाश्यांमरणमेवसंपादनीयमित्याह ॥ काशीप्राप्तिरिति ॥ योगादीनांयत्फलंतद्दातृत्वात्काशीप्राप्तेःकाश्यांमरणमेवयोगादिरित्यर्थः ॥ ॥ ५४ ॥ ननुकाश्यामाश्रितायामपिकलिप्रभृतयोविघ्नान्करिष्यंतिनेत्याह ॥ कःकलिरिति ॥ यदिवाराणसीश्रितामरणावध्याश्रितातदाकालादयःकेवराकाइत्यर्थः ॥ ५५ ॥ एतदेवाह ॥ कलिस्तानिति ॥ ५६ ॥ नकेवलंकाश्याश्रितानांकलिकालादीनांबाधाद्यभावमात्रंकिंतुमोक्षोपितेषांसुलभएवेत्याह ॥ काशीति ॥ ५७ ॥ इतोपिहेतोःकाशीसमाश्रयणीयेत्याह धनिनइतिद्वा भ्याम् ॥ ५८ ॥ वरमिति ॥ काश्यांसम्यग्यथाशास्त्रमावासःस्थितिर्यस्यास्तिसनरश्रेष्ठः ॥ वरमित्ययंश्रेष्ठवाची ॥ द्युसदांदेवानांपदंस्वर्गमासीनआश्रितोयःसनरोनवरमित्यर्थः ॥ तत्रहेतुमाह ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पूर्वः काशीसमावासीयः सदुःखांतं मोक्षं लभते॥परोद्युसदांपदमासीनोयःससुखस्यांतंनाशंलभते ॥ ५९ ॥ विश्वनाथस्यापिकाशीपरमानंदजनिकाकिमुतान्येषामित्याह ॥ स्थितोपीति ॥ ६० ॥ ॥
इतिश्रीरामानंद०का०द्विचत्वारिंशोध्यायः ॥ ४२ ॥ ॥ त्रिचत्वारिंशकेऽध्यायेनानाश्चर्यसुधालये ॥ दिवोदासस्यभूजानेःप्रतापस्तावदुच्यते ॥१॥ स्थितोपिभगवानीशोमंदरंचारुकंदरम् ॥ काशीं
विनारतिंनापदिवोदासनृपोपितामित्यनंतरश्लोकेमंदरेत्यभावाद्दिवोदासंनृपतिंच्यावयित्वाभगवान्काश्यामगादित्यर्थादुक्तंतत्रपृच्छति ॥ दिवोदासमिति ॥ सार्धश्लोकंवाक्यम् ॥ भगोहेपूज्य ॥ १ ॥
तत्रप्रथमतोभगवतोमंदरगमनेकारणमाहमंदरमितिश्लोकेन ॥ तस्यशाकद्वीपस्थस्य ॥ २ ॥ नकेवलंभगवानेवगतवानपितुसर्वेदेवाइत्याह ॥ गतइति ॥ गिरिसुंदरंपर्वतेषुमध्येमनोहरम् ॥ चारुकंदर
मितिक्वचित् ॥ ३ ॥ एतदेवप्रपंचयति क्षेत्राणीतित्रिभिः ॥ इहकाश्यांकाशीतोऽन्यत्रक्षितेरपिक्षेत्राणि ॥ सर्वत्रात्रक्षितिशब्दोजंबूद्वीपविषयः ॥४॥ ५ ॥ सूरःसूर्यः ॥ अरमत्यर्थम् ॥ निर्जरादेवाः ॥

स्थितोपिभगवानीशोमंदरंचारुकंदरम् ॥ काशींविनारतिंनाऽऽपदिवोदासनृपोषिताम् ॥ ६० ॥ इति श्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायां चतुर्थेकाशीखंडेपूर्वार्द्धे कालवंचनोपायोनामद्विचत्वारिंशोध्यायः ॥ ४२ ॥ ॥ अगस्तिरुवाच ॥ ॥ दिवोदासंनरपतिंकथंदेवस्त्रिलोचनः ॥ काशींसंत्याजयामासकथमागाच्चमंदरात् ॥ एतदाख्यानमाख्याहिश्रोतॄणांप्रमुदेभगोः ॥ १ ॥ ॥ स्कंदउवाच ॥ ॥ मंदरंगतवान्देवोब्रह्मणोवाक्यगौरवात् ॥ तपसातस्यसंतुष्टोमंदरस्यैवभूभृतः ॥ २ ॥ गतेविश्वेश्वरेदेवेमंदरंगिरिसुंदरम् ॥ गिरिशेनसमंजग्मुरपिसर्वेदिवौकसः ॥ ३ ॥ क्षेत्राणिवैष्णवानीहत्यक्त्वा विष्णुरपिक्षितेः ॥ प्रयातोमंदरंयत्रदेवदेवउमाधवः ॥ ४ ॥ स्थानानिगाणपत्यानिगणेशोपिततोव्रजत् ॥ हित्वाहमपिविप्रेंद्रगतवान्मंदरंप्रति ॥ ५ ॥ सूरःसौराणिसंत्यज्यगतश्चायतनादरम् ॥ स्वंस्वंस्थानंक्षितौत्यक्त्वाययुरन्येपिनिर्जराः ॥ ६ ॥ गतेषुदेवसंघेषुपृथिव्याःपृथिवीपतिः ॥ चकारराज्यंनिर्द्वंद्वं दिवोदासःप्रतापवान् ॥ ७ ॥ विधायराजधानींसवाराणस्यांसुनिश्चलाम् ॥ एधांचक्रेमहाबुद्धिःप्रजाधर्मेणपालयन् ॥ ८ ॥ सूर्यवत्सप्रतपितादुर्हृदांहृदिनेत्रयोः ॥ सोमवत्सुहृदामासीन्मानसेषुस्वकेष्वऽपि ॥ ९ ॥ अखंडमाखंडलवत्कोदंडंकलयत्रणे ॥ पलायमानैरालोकिशत्रुसैन्यबलाहकैः ॥ १० ॥ सधर्मराजवज्जातोधर्माधर्मविवेचकः ॥ अदंड्यान्मण्डयत्राजादंड्यांश्चपरिदंडयन् ॥ ११ ॥ धनंजयइवाधाक्षीत्परारण्यान्यनेकशः ॥ पाशीवपाशयांचक्रेवैरिचक्रंविदूरगः ॥ १२ ॥

आयतनात्स्वस्थानात् ॥ परमितिपाठेपरंमंदरंविश्वेश्वरंवा ॥६॥ ततश्चगतेष्विति ॥७॥ सुनिश्चलांसुस्थिराम् ॥ सुनिश्चलमितिपाठेक्रियाविशेषणम् ॥ धर्मेणपालयन्प्रजाःएधांचक्रेवर्धयामास ॥ ८ ॥
सूर्यादीनांदशलोकपालानांसाधर्म्यमाह सूर्यवदितिषड्भिः ॥ प्रतपिताप्रकृष्टतापकर्ता॥ततापसूर्यइवसइतिक्वचित्पाठः ॥९॥ अखंडमिति ॥ सराजाशत्रुसैन्यान्येवबलाहकामेघाःवृष्टिवच्छरप्रक्षेपकास्तै
रालोकिदृष्टः ॥ कथंभूतैः ॥ पलायमानैःपलायनंकुर्वद्भिः ॥ किंकुर्वन्दृष्टः ॥ अखंडंसमग्रमवैकल्यंवायथास्यात् लीलयेत्येतत् ॥ तथाकोदंडंधनुःकलयंष्टंकारयन्विस्फूर्जयन्नित्यर्थः ॥ कीदृशंधनुः ॥
आखंडलवत्इंद्रधनुरिवेत्यर्थः ॥१०॥ सइति ॥ सराजाधर्मराजवज्जातइत्यन्वयः ॥११॥ धनंजयोऽग्निः॥अधाक्षीद्दाह ॥ परेशत्रवएवारण्यानिपरारण्यानि ॥ पाशीवरुणः॥पाशयांचक्रेवबंध॥विदूरगे



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ऽतिदूरस्थोपि ॥ १२ ॥ पुण्यजनाधार्मिकाजनास्तेषामधीशःश्रेष्ठः ॥ पक्षांतरेपुण्यजनाराक्षसास्तेषामधीशोनिर्ऋतिः ॥ रिपवोराक्षसास्तेषांवर्धनश्छेदकः ॥ वृधुच्छेदनइतिधातुः ॥ पक्षांतरेऽरिप्वेति वाछेदः॥ तेषांवर्धनोवृद्धिकारकः ॥ श्लेषालंकारोयम्॥जगत्प्राणोवायुस्तत्समानः ॥ तत्रहेतुर्जगत्प्राणनतत्परइति ॥ वायुरपितथा ॥१३॥ राजराजःकुबेरः॥प्रैक्षिष्टदृष्टः ॥१४॥१५॥ अन्येभ्योदेवेभ्य आधिक्यमाह ॥ असाध्योऽजेयः॥साध्यानांदेवानाम् ॥ वसुभ्योदेवेभ्यः ॥ वसुनाधनेन ॥ विग्रहधरःसंग्रामकर्ता॥अनिष्टकरणेनिवारकइत्यर्थः॥ शरीरधरइतिवा ॥ दस्रतोऽश्वनीकुमाराभ्याम् ॥ अजस्र रूपभाकअधिकरूपभागित्यर्थः ॥ दस्रयोश्चस्वरूपभागितिपाठेस्पष्टएवार्थः ॥ १६ ॥१७॥ निजगीतिभिःस्वकीयैर्गीतैः ॥ स्वर्गसोदरंस्वर्गसमानम् ॥ १८ ॥ नागबलीयसोगजेभ्यःसर्पेभ्योवाबलि ष्ठस्य ॥ दनुजादनोःपुत्रादानवाइत्यर्थः ॥ १९ ॥ गुह्यचरारहस्यकार्येषुचराः ॥ गुह्यतराइतिपाठेपिसएवार्थः ॥ गुह्यकादेवयोनिविशेषाः॥समिति॥ हेराजन्वयमसुराःस्ववैभवैस्त्वांसंसेविष्यामइतियंप्रो

सोभूत्पुण्यजनाधीशोरिपुराक्षसवर्धनः ॥ जगत्प्राणसमानश्चजगत्प्राणनतत्परः ॥१३॥ राजराजःसएवाभूत्सर्वेषांधनदःसताम् ॥ सएवरुद्रमूर्तिश्चप्रैक्षिष्ट रिपुभीरणे ॥ १४ ॥ विश्वेषांसहिदेवानांतपसारूपधृग्यतः ॥ विश्वेदेवास्ततस्तंतुस्तुवंतिचभजंतिच ॥ १५ ॥ असाध्यःसहिसाध्यानांवसुभ्योवसुना धिकः ॥ ग्रहाणांविग्रहधरोदस्रतोऽजस्ररूपभाक् ॥ १६ ॥ मरुद्गणानगणयंस्तुपितांस्तोषयन्गुणैः ॥ सर्वविद्याधरोयस्तुसर्वविद्याधरेष्वपि ॥ १७॥ अगर्वानेवगंधर्वान्यश्चक्रेनिजगीतिभिः ॥ ररक्षुर्यक्षरक्षांसितद्दुर्गंस्वर्गसोदरम् ॥ १८ ॥ नागानागांसिचक्रुश्चतस्यनागबलीयसः ॥ दनुजामनुजाकारं कृत्वातंचसिषेविरे ॥ १९ ॥ जातागुह्यचरायस्यगुह्यकाःपरितोनृषु ॥ संसेविष्यामहेराजन्नसुरास्त्वांस्ववैभवैः ॥ २० ॥ वयंयतस्त्वद्विषयेसुरावासोऽ पिदुर्लभः ॥ अशिक्षयत्क्षितिपतेरिहयस्यतुरंगमान् ॥ आशुगश्चाशुगामित्वंपावमानेपथिस्थितः ॥ २१ ॥ अगजान्यस्यतुगजान्नगवर्ष्मसुवर्ष्मणः ॥ अजस्रदानिनोदृष्ट्वाभवन्नन्येपिदानिनः ॥ २२ ॥ सदोजिरेचवोद्धारोयोद्धारश्चरणाजिरे ॥ नयस्यशास्त्रैर्विजितानशस्त्रैःकेनचित्क्वचित् ॥ २३ ॥ ननेत्रविषयेजाताविषयेयस्यभूभृतः ॥ सदानष्टपदाद्वेष्यास्तदाऽनष्टपदाःप्रजाः ॥ २४ ॥ कलावानेकएवास्तित्रिदिवेपिदिवौकसाम् ॥ तस्यक्षोणिभृतः क्षोण्यांजनाःसर्वेकलालयाः ॥ २५ ॥

चुरितिशेषः ॥ २० ॥ स्वर्गविहायात्रस्थित्वाकिमितिमांसेविष्यथतत्राह ॥ यतइति ॥ यतस्त्वद्राष्ट्रेसुराणामप्यावासःस्थितिर्दुर्लभाकुतस्तत्रास्माकमितिभावः ॥ आशुगोवायुःपावमानेपथिअश्वग तिशिक्षारूपेशास्त्रेपावमानेवायुमार्गेस्थितोपीतिवा ॥ २१ ॥ अगजान्पर्वतजान् ॥ नविद्यन्तेप्रतिपक्षभूतागजायेषांतानितिवा ॥ नगवर्ष्मसुवर्ष्मणः पर्वतदेहेभ्योपिशोभनदेहान्स्थूलदेहानित्यर्थः ॥ अजस्रदानिनोनिरन्तरमदस्राविणः ॥ २२ ॥ वोद्धारोविचारकाः ॥ यस्यसदोजिरेसभांगणेरणांगणेचवोद्धारोयोद्धारश्चशास्त्रैःशस्त्रैश्चयथासंख्यंनकेनचित्कुत्रापिनविजिताइत्यर्थः ॥ २३ ॥ ननेत्रेति ॥ यस्यभूभृतोविषयेराज्येसदासर्वदानष्टपदानष्टाश्रयानष्टत्राणावाकेनाचिद्द्वेष्याश्चप्रजाश्चक्षुर्गोचरेनजाताःकिन्तुतदातस्मिन्राजनिअनष्टपदाअद्वेष्याएवप्रजाजाताः ॥ २४ ॥ कलावांश्चन्द्रः ॥

---

१ वर्ष्मदेहप्रमाणयोरित्यमरः । पर्वतोपमस्थूलदेहानित्यर्थः ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कलालयाश्चतुःषष्टिकलाश्रयाः ॥ २५ ॥ सांगोपांगाः अंगानिमुख्यावयवाउपांगानिचतदवयवास्तत्सहिताः ॥ पक्षांतरेसांगोपांगाःसमग्राः ॥२६॥ उपवर्ततेऽस्मिन्नित्युपवर्तनंराज्यंतस्मिन् ॥ २७ ॥ आकर्णिश्रुतः ॥ दृष्टस्यकावार्तेतिभावः ॥ २८ ॥ अनवग्रहाःवृष्टिप्रतिघातशून्याः ॥ २९ ॥ ३० ॥ सदंशुकाःसंतोंऽशवःकांतयोयेषांतेतथा ॥ प्रतिदिनंसर्वदा ॥ प्रतिगृहमितिवापाठः ॥ ३१ ॥ यथास्वर्भूःसदप्सराःसत्योप्सरसोयस्यांसातथातत्पुरीअपिकिंसदप्सराःअपितुताभ्योप्यधिकसदप्सरोभिर्मंडितेत्यर्थः ॥ पद्माकरालक्ष्म्यालयाः ॥ पक्षांतरेपद्माकरास्तडागाः ॥ ३२ ॥ नविद्यंतेई तयोऽतिवृष्टयनावृष्टिशलभमूषकशुकस्वचक्रप्रतिकूलराजलक्षणायेषुतेग्रामास्तथा ॥ धनदाधनदातारः ॥ नाकेस्वर्गे ॥ अलकापतिःकुबेरः ॥ सर्वत्रायंशब्दश्लेषालंकारः ॥ ३३ ॥ प्रस्तुतमाह ॥

एकएवहिकामोस्तिस्वर्गेसोप्यंगवर्जितः ॥ सांगोपांगाश्चसर्वेषांसर्वेकामाहितद्भुवि ॥२६॥ तस्योपवर्तनेप्येकोनश्रुतोगोत्रभित्क्वचित् ॥ स्वर्गेस्वर्गसदामीशोगोत्रभित्परिकीर्तितः ॥ २७ ॥ क्षयीचतस्यविषयेकोप्याकर्णिनकेनाचित् ॥ त्रिविष्टपेक्षपानाथःपक्षेपक्षेक्षयीष्यते ॥ २८ ॥ नाकेनवग्रहाःसंतिदेशास्तस्याऽनवग्रहाः ॥ २९ ॥ हिरण्यगर्भःस्वर्लोकेप्येकएवप्रकाशते ॥ हिरण्यगर्भाःसर्वेषांतत्पौराणामिहालयाः ॥ ३० ॥ सप्ताश्वएकःस्वर्लोकेनितरांभासतेंऽशुमान् ॥ सदंशुकाःप्रतिदिनंबह्वश्वास्तत्पुरौकसः ॥ ३१ ॥ सदप्सरायथास्वर्भूस्तत्पुर्यपिसदप्सराः ॥ एकैवपद्मावैकुंठेतस्यपद्माकराःशतम् ॥ ॥ ३२ ॥ अनीतयश्चतद्ग्रामानाराजपुरुषाःक्वचित् ॥ गृहेगृहेत्रधनदानाकएकोऽलकापतिः ॥ ३३ ॥ दिवोदासस्यतस्यैवंकाश्यांराज्यंप्रशासतः ॥ गतंवर्षदिनप्रायंशरदामयुताष्टकम् ॥ ३४ ॥ गीर्वाणाविप्रतीकारमथतस्यचिकीर्षवः ॥ गुरुणामंत्रयांचक्रुर्धर्मवर्त्मानुयायिनः ॥३५॥ भवादृशामिवमुनेप्रायशोधर्मचारिणाम् ॥ विबुधाविदधत्येवमहतीरापदांततीः ॥३६॥ यद्यप्यसौधराधीशोऽन्याधिनोद्बुर्धराध्वरैः ॥ तानध्वरभुजोऽत्यंततथापिसुहृदोनते ॥ ३७ ॥ स्वभावएवद्युसदांपरोत्कर्षासहिष्णुता ॥ बलिबाणदधीच्याद्यैरपराद्धंकिमत्रतैः ॥३८॥ अंतरायाभवंत्येवधर्मस्यापिपदेपदे ॥ तथापिननिजोधर्मोधर्मधीभिर्विमुच्यते ॥ ३९ ॥ अधर्मिणःसमेधंतेधनधान्यसमृद्धिभिः ॥ अधर्मादेवचपरंसमूलंयांत्यधोगतिम् ॥ ४० ॥ प्रजाःपालयतस्तस्यपुत्रानिवनिजौरसान् ॥ रिपुंजयस्यनाल्पोपिबभूवाधर्मसंग्रहः ॥४१॥ षाड्गुण्यवेदिनस्तस्यत्रिशक्त्यूर्जितचेतसः ॥ चतुरोपायवित्तस्यनरंध्रंविविदुःसुराः ॥ ४२ ॥

दिवोदासस्येति ॥ तस्यपूर्वोक्तगुणवतःशरदामयुताष्टकमशीतिसहस्रंवर्षंदिनप्रायंदिनमात्रप्रायंगतमेव ॥ एकदिनप्रायमितिक्वचित् ॥ ३४ ॥ विप्रतीकारमपकारम् ॥ गुरुणाबृहस्पतिनासह ॥ ॥ ३५ ॥ प्रत्यक्षसिद्धदृष्टांतमाह ॥ भवादृशामिवेति ॥ ततीःपरंपराः ॥३६॥ व्याधिनोत्आराधितवान्पूजितवानित्यर्थः ॥ सुहृदोनतस्येतिशेषः ॥ ३७ ॥ पूजकेऽसुहृद्भावेहेतुमाह ॥ स्वभावइति ॥ हेतुमेवतर्केणसाधयति ॥ बलीति ॥ अत्रतेषुदेवेषु ॥ ३८ ॥ तर्हिविघ्नशंकयाधर्मस्त्याज्यएवनेत्याह ॥ अंतरायाइति ॥ श्रेयांसिबहुविघ्नानीतिन्यायादित्यर्थः ॥ ३९ ॥ विपक्षेबाधकमाह ॥ अधर्मिणइति ॥ परंकेवलंपश्चादितिवा ॥ ४० ॥ ४१ ॥ षाड्गुण्यवेदिनइति ॥ संधिविग्रहयानासनद्वैधीभावसंश्रयाःषड्गुणास्तेषांभावःषाड्गुण्यंतद्वेदिनः ॥ बुद्धिबलतेजोरूपास्तिस्रःशक्तयस्ताभिरू



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

जितंमहत्तरंचेतोयस्यतस्य ॥ चतुर्णांधर्मार्थकाममोक्षाणामुपायेषुवित्तंज्ञानंयस्यतस्य ॥ वेदनंवित्तम् ॥भावेनिष्ठा॥उकारस्थानेओकारश्रवणमार्षम् ॥ चतुराणांनिपुणानामुपायानांवित्तंयस्येतिवा॥४२॥
विप्रतीकर्तुमपकर्तुम् ॥ तदीशितुःकाशीपतेर्दिवोदासस्येत्येतत् ॥ सचासौईशिताचतत्तदेतिवा ॥ ४३ ॥ पुनरपितद्राष्ट्रगुणाननुवर्णयति एकपत्नीत्यारभ्यइत्थमित्यतःप्राक्तनेनग्रंथेन ॥ एकस्यां
पत्न्यांपाणिगृहीतायांव्रतंसंकल्पोयेषांतेतथा ॥ परस्त्रीषुविमुखाइत्यर्थः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ वनवृत्तिकृतादराःवनवृत्तावरण्यवर्तनेकृतआदरोयैस्ते ॥ ४९ ॥ ५० ॥
अनुलोमजन्मानःमूर्धावसिक्तांबष्ठकरणाः ॥ प्रतिलोमभवाःसूतमागधवैदेहाः ॥ ५१ ॥ ५२ ॥ चाटाश्चंचलाः ॥ वाचाटावहुभाषिणः ॥ भंडाभंडकाः ॥ शौंडिकामद्यविक्रेतारः ॥ ५३ ॥

बुद्धिमंतोपिविबुधाविप्रतीकर्तुमुद्यताः ॥ मनागपिनसंशेकुरपकर्तुंतदीशितुः ॥ ४३ ॥ एकपत्नीव्रताःसर्वेपुमांसस्तस्यमंडले ॥ नारीषुकाचिन्नैवासीदप तिव्रतधर्मिणी ॥ ४४ ॥ अनधीतोनविप्रोभूदशूरोनैवबाहुजः ॥ वैश्योनभिज्ञोनैवासीदर्थोपार्जनकर्मसु ॥४५॥ अनन्यवृत्तयःशूद्राद्विजशुश्रूषणंप्रति ॥ तस्यराष्ट्रेसमभवन्दिवोदासस्यभूपतेः ॥ ४६ ॥ अविप्लुतब्रह्मचर्यास्तद्राष्ट्रेब्रह्मचारिणः ॥ नित्यंगुरुकुलाधीनावेदग्रहणतत्पराः ॥ ४७ ॥ आतिथ्यधर्म प्रवणाधर्मशास्त्रविचक्षणाः ॥ नित्यंसाधुसमाचारागृहस्थास्तस्यसर्वतः ॥ ४८ ॥ तृतीयाश्रमिणोयस्मिन्वनवृत्तिकृतादराः ॥ निःस्पृहाग्रामवार्तासुवे दवर्त्मानुसारिणः ॥ ४९ ॥ सर्वसंगविनिर्मुक्तानिर्मुक्तानिष्परिग्रहाः ॥ वाङ्मनःकर्मदंडाढ्यायतयोयत्रनिःस्पृहाः ॥ ५० ॥ अन्येनुलोमजन्मानःप्रतिलो मभवाअपि ॥ स्वपारंपर्यतोदृष्टंमनाग्वर्त्मनतत्यजुः ॥ ५१ ॥ अनपत्यानतद्राष्ट्रेधनहीनोपिकोपिन ॥ अवृद्धसेवीनोकश्चिदकांडमृतिभाक्चन ॥ ५२ ॥ नचाटानैववाचाटावंचकानोनहिंसकाः ॥ नपाषंडानवैभंडानरंडानचशौंडिकाः ॥५३॥ श्रुतिघोषोहिसर्वत्रशास्त्रवादःपदेपदे ॥ सर्वत्रसुभगालापामुदामं गलगीतयः ॥ ५४ ॥ वीणावेणुप्रवादाश्चमृदंगामधुरस्वनाः ॥ सोमपानंविनान्यत्रपानगोष्ठीनकर्णगा ॥५५॥ मांसाशिनःपुरोडाशेनैवान्यत्रकदाचन ॥ नदुरोदरिणोयत्रनाधमर्णानतस्कराः ॥ ५६ ॥ पुत्रस्यपित्रोःपदयोःपूजनंदेवपूजनम् ॥ उपवासोव्रतंतीर्थंदेवताराधनंपरम् ॥ ५७ ॥ नारीणांभर्तृपद योरर्चनंतद्वचःश्रुतिः ॥ समर्चयंतिसततंमनुजानिजमग्रजम् ॥ ५८ ॥ सपर्ययंतिसुदिताभृत्याःस्वामिपदांबुजम् ॥ हीनवर्णैरग्रवर्णोवर्ण्यतेगुणगौरवैः ॥ ॥ ५९ ॥ वरिवस्यंतिभूयोपित्रिकालंकाशिदेवताः ॥ सर्वत्रसर्वेविद्वांसःसमर्च्यंतेमनोरथैः ॥ ६० ॥

श्रुतिघोषोवेदघोषः ॥ पदेपदेक्षणेक्षणे ॥ ५४ ॥ सोमेति॥ सोमपानंविनाऽन्यत्रपानगोष्ठीमद्यादिपानवार्तानकर्णगाश्रोत्रेंद्रियंनप्राप्तेत्यर्थः॥ कर्मगाइतिपाठेकर्मणिक्रियमाणेनजायतइत्यर्थः ॥ ५५ ॥
यज्ञस्यप्रथमसमयेपुरोडाशेऽग्निपक्वेमांसखंडेहूयमानेमांसाशिनः ॥ अन्यत्रपुरोडाशंविहायनैवेत्यर्थः ॥ दुरोदरिणोद्यूतकराः ॥ अधमर्णःऋणग्रहीता ॥ ५६ ॥ ५७ ॥ अग्रजंज्येष्ठभ्रातरम् ॥ ५८ ॥
सपर्ययंतिपूजयंति ॥ ५९ ॥ वरिवस्यंतीत्येतस्यापिसएवार्थः ॥ काशिदेवताःकाशींतद्देवताश्चेत्यर्थः ॥ भूमिदेवताइतिपाठेब्राह्मणानित्यर्थः ॥ समर्च्यंतेपूज्यंतेसाधारणेजनैः ॥ अस्याःक्रियाया

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अग्रेपिसंबंधः ॥ ६० ॥ शिवयोगिनःशिवैकशरणाः ॥ पाशुपताइतिकेचित् ॥ ६१ ॥ वाडवानांब्राह्मणानाम् ॥६२॥६३॥ मृगयुसौनिकान्मृगयवोलुब्धकाःसौनिकाःपशुघातकाश्चतान् ॥६४॥ इत्थमिति ॥ इत्थंतस्यसमनंतरवर्णितंगुणवतोदिवोदासस्यमहीजानेर्महीजायाभार्यायस्यसतथातस्यसर्वत्रशुचिरूपेणप्रवर्तमानस्य ॥ अनिमिषानिमेषरहितादेवाउन्मिषंतोपिउच्चैर्मिषंतोप्युन्मेषपूर्वकं विचारयंतोपीत्यर्थः ॥ ईषदप्यवकाशंछिद्रंनलेभिरेइति ॥ ६५ ॥ अथेति ॥ अपचिकीर्षुकानपकारंकर्तुमिच्छुकान् ॥ मंत्रवेदिषुमध्येवरिष्ठे ॥ ६६ ॥ संधिश्चविग्रहश्चयानंचआस्तिरासनंचसं श्रयंचेतिपंचानामेकवद्भावः ॥ ६७ ॥ चतुर्षुसामदानभेददंडेषुमध्ये ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ समाकर्ण्येतिसार्धंशक्रवाक्यंबृहस्पतीरितंवाक्यंसमाकर्ण्यतेदेवास्तस्माद्देववाक्यात्तस्यवाक्य

विद्भिश्चतपोनिष्ठास्तपोनिष्ठैर्जितेंद्रियाः ॥ जितेंद्रियैर्ज्ञाननिष्ठाज्ञानिभिःशिवयोगिनः ॥ ६१ ॥ मंत्रपूतंमहार्हंचविधियुक्तंसुसंस्कृतम् ॥ वाडवानां मुखाग्नौचहूयतेऽहर्निशंहविः ॥ ६२ ॥ वापीकूपतडागानामारामाणांपदेपदे ॥ शुचिभिर्द्रव्यसंभारैःकर्तारोयत्रभूरिशः ॥ ६३ ॥ यद्राष्ट्रेहृष्टपुष्टाश्चदृश्यं तेसर्वजातयः ॥ अनिंद्यसेवासंपन्नाविनामृगयुसौनिकान् ॥ ६४ ॥ इत्थंतस्यमहीजानेःसर्वत्रशुचिवर्तिनः ॥ अनिमिषंतोप्यनिमिषामनाक्छिद्रंनल भिरे ॥ ६५ ॥ अथोवाचामरगुरुर्देवानपचिकीर्षुकान् ॥ तस्मिन्राजनिधर्मिष्ठेवरिष्ठेमंत्रवेदिषु ॥६६॥ ॥ गुरुरुवाच ॥ ॥ संधिविग्रहयानास्तिसं श्रयंद्वैधभावनम् ॥ यथासराजासंवेत्तिनतथात्रापिकश्चन ॥ ६७ ॥ उपायोप्येकएवास्तिचतुर्ष्विहदिवौकसः ॥ भेदोनामसचेत्सिध्येत्तपोबलिनित राहि ॥६८॥ तेनयद्यपिभूभर्त्राभूमेर्देवाविवासिताः ॥ तथापिभूरिशस्तत्रसंत्यस्मत्पक्षपातिनः ॥ ६९ ॥ कालोनिमिषमात्रोपियान्विनानसुखंव्रजेत् ॥ अस्माकमपितस्यापिसंतितेतत्रमानिताः ॥ ७० ॥ अंतर्बहिश्चरानित्यंसर्वविश्रंभभूमयः ॥ समागतेषुतेष्वत्रसर्वंनःसेत्स्यतिप्रियम् ॥ ७१ ॥ समा कर्ण्यचतेसर्वेत्रिदशागीष्पतीरितम् ॥ निर्णीतवंतस्तस्यार्थंतस्मादंतर्बहिश्चरान् ॥ अभिनंद्याथतंसर्वेप्रोचुरित्थंभवेदिति ॥ ७२ ॥ ततःशक्रःसमाहूयवी तिहोत्रंपुरःस्थितम् ॥ ऊचेमधुरयावाचाबहुमानपुरःसरम् ॥ ७३ ॥ हव्यवाहनयामूर्तिस्तवतत्रप्रतिष्ठिता ॥ तामुपासंहरक्षिप्रंविषयात्तस्यभूपतेः ॥ ॥ ७४ ॥ समागतायांतन्मूर्तौसर्वानष्टाग्नयःप्रजाः ॥ हव्यकव्यक्रियाशून्याविरजिष्यंतिराजनि ॥ ७५ ॥ प्रजासुचविरक्तासुराज्यकामदुघासुवै ॥ कृच्छ्रेणोपार्जितोऽपार्थोराजशब्दोभविष्यति ॥ ७६ ॥ प्रजानांरंजनाद्राजायेयंरूढिरुपार्जिता ॥ तस्यांरूढ्यांप्रनष्टायांराज्यमेवविनंक्ष्यति ॥ ७७ ॥ प्रजाविरहितोराजाकोशदुर्गबलादिभिः ॥ समृद्धोप्यचिरान्नश्येत्कूलसंस्थइवद्रुमः ॥ ७८ ॥ त्रिवर्गसाधनाहेतुःप्राक्प्रजैवमहीपतेः ॥ क्षीणवृत्त्यां प्रजायांवैत्रिवर्गःक्षीयतेस्वयम् ॥ ७९ ॥

स्यार्थनिर्णीतवंतः ॥ अर्थमेवाह ॥ अंतर्बहिश्चरानिति ॥ अथानंतरमभिनंद्यइत्थंभवेदितिप्रोचुः ॥ यदाद्यंतरितिपाठेतदेत्यर्थात् ॥ ७२ ॥ वीतिहोत्रमग्निम् ॥ ७३ ॥ हव्येति ॥ तत्रपृथिव्याम् ॥ तांमत्तइतिपाठेमत्तोमन्निमित्तान्मद्गौरवादित्यर्थः ॥ ७४ ॥ ततःकिंतदाह ॥ समागतायामिति ॥ ७५ ॥ ततोपिकिंतत्राह ॥ प्रजास्विति ॥ अपार्थोऽपगतोऽर्थोस्येत्यपार्थोर्थशून्यइत्यर्थः ॥ ॥ ७६ ॥ अस्तुतथातावताकिंस्यात्तत्राह ॥ प्रजानामिति ॥ ७७ ॥ मास्तुप्रजानामनुरागस्तावताकिम् ॥ यद्वा राज्यनाशेपिकिंतत्राह ॥ प्रजेति ॥ ७८ ॥ किंच त्रिवर्गेति ॥ साधनाइति



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्रीत्वमार्षम् ॥ त्रिवर्गसाधनेआहेतुःसम्यग्घेतुरितिवा ॥ त्रिवर्गंसाधयतीतित्रिवर्गसाधनाऽतएवहेतुरितिवा ॥ साधनइतिपाठेस्पष्टएवार्थः ॥ ७९ ॥ प्रघट्टकार्थमुपसंहरति क्षीणइत्यर्धेन ॥ ८० ॥
अह्नायशीघ्रम् ॥ तथेतिस्वीकृत्येतिवा ॥ अव्ययोयंशब्दः मूर्तिंतैजसीम् ॥ ८१ ॥ त्रेतामाहवनीयगार्हपत्यदक्षिणाग्निरूपामित्यर्थः ॥ निजशक्तिःपाकार्हाणामन्नादीनांदाहिकाशक्तिस्तत्समन्वितम् ॥
॥ ८२ ॥ ८३ ॥ महानसेऽधिकृतिरधिकारोवर्ततेयेषांतेतथापाकशालाधिकारिणइत्यर्थः ॥ क्षुधार्तमपितस्मिन्समयेविज्ञापनानर्हमपीत्यर्थः ॥ अतएवाप्यकांडइतिवक्ष्यति ॥ व्यजिज्ञपन्विज्ञापया
मासुः ॥ ८४ ॥ अत्येतिश्लोकद्वयंवाक्यम् ॥ अत्यतिक्रांतमहस्करस्यसूर्यस्यतेजोयेनतत्संबोधनंहेअत्यहस्करतेजस्क ॥ अकांडेऽनवसरेपि ॥८५॥ विश्राणयेत्प्रयच्छेत् ॥ ८६॥८७ ॥ कुसृत्याथक

क्षीणेत्रिवर्गेसंक्षीणागतिर्लोकद्वयात्मिका ॥ ८० ॥ इतींद्रवचनाद्वह्निरह्नायक्षोणिमंडलात् ॥ आचकर्षनिजांमूर्तिंयोगमायाबलान्वितः ॥ ८१ ॥ निन्ये नकेवलंत्रेतांजाठराग्निमपिप्रभुः ॥ वज्रिणोवचसावह्निर्निजशक्तिसमन्वितम् ॥ ८२ ॥ वह्नौस्वर्लोकमापन्नेजातेमध्यंदिनेनृपः ॥ कृतमाध्याह्निकस्तूर्णं प्राविशद्भोज्यमंडपम् ॥ ८३ ॥ महानसाधिकृतयोवेपमानास्ततोमुहुः ॥ क्षुधार्तमपिभूपालमिदंमंदंव्यजिज्ञपन् ॥ ८४ ॥ सूपकाराऊचुः ॥ अत्यहस्करतेजस्कप्रतापविजितानल ॥ किंचिद्विज्ञप्तुकामाःस्मोप्यकांडेरणपंडित ॥ ८५ ॥ यदिविश्राणयेद्राजन्भवानभयदक्षिणाम् ॥ तदाविज्ञापयिष्यामः प्रबद्धकरसंपुटाः ॥ ८६ ॥ भ्रूसंज्ञयाकृतादेशाःप्रशस्तास्येनभूभुजा ॥ मृदुविज्ञापयांचक्रुःपाकशालाधिकारिणः ॥ ८७ ॥ नजानीमोवयंनाथत्वत्प्रताप भयार्दितः ॥ कुसृत्याथकयाविद्वान्नष्टोवैश्वानरःपुरात् ॥ ८८ ॥ कृशानौक्रुशतांप्राप्तेकथंपाकक्रियाभवेत् ॥ तथापिसूर्यपाकेनसिद्धापक्तिर्हिकाचन ॥ ८९ ॥ प्रभोरादेशमासाद्यतामिहैवानयामहे ॥ मन्यामहेचभूजानेपक्तिरद्यतनीशुभा ॥ ९० ॥ श्रुत्वांधसिकवाक्यंसमहासत्त्वोमहामतिः ॥ नृपतिश्चिंतयामासदेवानांवैकृतंत्विदम् ॥ ९१ ॥ क्षणंसंशीलयंस्तत्रददर्शतपसोबलात् ॥ नकेवलंजहौगेहंहुतभुक्चौदरीर्दरीः ॥ ९२ ॥ अप्यहासीदितोलोकाज्जगामचसुरालयम् ॥ भवत्विहहिकाहानिरस्माकंज्वलनेगते ॥ ९३ ॥ तेषामेवविचाराद्यहानिरेषासुपर्वणाम् ॥ तद्बलेनचकिंराज्यंमयेदमुररीकृतम् ॥ ९४ ॥ पितामहेनमहतोगौरवात्प्रतिपादितम् ॥ इतिचिंतयतस्तस्यमध्यलोकशतक्रतोः ॥ ९५ ॥ पौराःसमागताद्वारिसहजानपदैर्नरैः ॥ द्वास्थेनचाज्ञयाराज्ञस्ततस्तेंतःप्रवेशिताः ॥ ९६ ॥

याकयापिकुसृत्येत्यर्थः ॥ अविद्वान्मूर्खःतवमाहिमानमजानन्नितिवा ॥ ८८ ॥ कृशानौवह्नौकृशतांक्षीणतांनाशमितिवा ॥ ८९ ॥ मन्यामहइत्यर्धंवाक्यम् ॥ दिनांतरेवह्निपाकेनयापक्तिस्तस्याःसका
शात्सूर्यपाकेनजाताऽद्यतनीपक्तिःशुभोत्कृष्टेतिवयंमन्यामहइत्यर्थः ॥ ९० ॥ अंधसान्नेनव्यवहरंतीत्यांधसिकाःपाककर्तारस्तेषांवाक्यम् ॥ विरुद्धाकृतिर्विकृतिस्तस्याजातंवैकृतमिदंगेहादग्नेर्गमनम् ॥
वैइतिपृथक्पदम् ॥ कृतंकर्म ॥९१॥ क्षणमितिसार्धश्लोकंवाक्यम् ॥ संशीलयन्ध्यायन् ॥ गेहंपाकादिगृहम् ॥ औदरीरुदरसंबंधिनीर्दरीर्गुहाश्चेतिचकारस्यान्वयः ॥९२॥९३॥ विचाराद्यज्ञाद्यकरणे
नतेषामेवक्षतेः ॥ सुपर्वणांदेवानाम् ॥ तद्बलेनदेवानांबलेन ॥ उररीकृतंस्वीकृतम् ॥९४॥ महतासर्वोत्तमेन ॥ महतइतिपाठेगौरवविशेषणम् ॥ मध्यलोकशतक्रतोःधरातलेंद्रस्य ॥ ९५ ॥ पौराःपुर



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

संबंधिनः ॥ जानपदैर्देशस्थैः॥९६॥ उपसर्मीपेदीयतइत्युपदमुपढौकनम्॥ उपदामितिपाठेपिसएवार्थः॥आदरस्यसोदरयासमानगर्भया दरसोदरयाशंखध्वनितुल्पयेतिवा॥९७॥समुदाहर्षसहितया ॥
विसर्जितेतिश्लोकद्वयंवाक्यम् ॥ ९८ ॥ तेपौरजानपदाभेजिरेधिष्ठिताआसनानीत्यर्थः ॥ विसर्जितासनाइतिपूर्वमुक्तत्वात् ॥ कुत्रअजिरेप्रांगणे ॥ अजिरंविशिनष्टि रत्नार्चिरितिसपादेनश्लोकेन ॥
सुरानोकहसौरभैःसुरद्रुमामोदैःकृत्वाविजितामोदसंदोहेतिरस्कृता न्यगंधसमूहे ॥ यद्वा ते अन्तःप्रवेशिताइत्युक्तंतदेवान्तःपुरंविशिनष्टि ॥ रत्नार्चिरिति ॥ शेषंसमानम् ॥ अभेअजिरेइतिवापद
च्छेदः ॥ नविद्यतेभादीप्तिर्यस्मात्तस्मिन्नत्युज्ज्वलेइत्यर्थः ॥ भेजिरेभेजिरेइतिपाठोयद्यप्यपपाठस्तथापिव्याख्यायते ॥ भेजिरेशिरसाभिवन्दनात् ॥ अभेजिरेइतिच्छेदः ॥ अशब्दोनिषेधे ॥ नभेजिरे
साक्षादनधिष्ठितत्वात् ॥ ९९ ॥ विशामिति ॥ विशांपातिःराजातदभिप्रायंतेषांपौरादीनामभिप्रायंज्ञात्वोवाच ॥ अभिप्रायज्ञानेहेतुगर्भविशेषणमाह ॥ तन्मुखच्छाययेरितंतेषांमुखकांत्यासूचि

दत्त्वोपदंयथार्हंतेप्रणेमुःक्षोणिवज्रिणम् ॥ केचित्संभाषिताराज्ञादरसोदरयागिरा ॥ ९७ ॥ केचिच्चसमुदादृष्ट्याकेचिच्चकरसंज्ञया ॥ विसर्जितासनाराज्ञा
बहुमानपुरःसरम् ॥ ९८ ॥ तेजिरेभेजिरेसर्वेरत्नार्चिःपरिसेविते ॥ विजितामोदसंदोहेसुरानोकहसौरभैः ॥ राज्ञःशतशलाकस्यच्छत्रस्यच्छाययाशुभे
॥ ९९ ॥ विशांपतिरथोवाचतन्मुखच्छाययेरितम् ॥ विज्ञायतदभिप्रायमलंभीत्यापुरौकसः ॥ १०० ॥ विकारकारिभिर्लेखैर्यदिनीतोऽनलोभुवः ॥
एतावतैवार्किंसिद्ध्येन्मयितेषांपराभवः ॥ १ ॥ चिकीर्षुरहमेवासंपौराःकार्यमिदंपुरा ॥ परंह्युपेक्षितप्रायंदिष्ट्यातैःस्मारितंचिरात् ॥ २ ॥ गतोऽनलो
ऽभवद्वह्निंजगत्प्राणोपियात्वितः ॥ वरुणःपुष्पवंताभ्यामविलंबंप्रयात्वितः ॥ ३ ॥ अहमेवहिपर्जन्योभविष्यामितपोबलात् ॥ मुदेजनपदानांचसर्व
सस्यसमृद्धिदः ॥ ४ ॥ तपोयोगबलेनाहमात्मानंपरिकल्प्यच ॥ त्रिधावह्निस्वरूपेणपक्तीष्ट्व्युष्टिकृत्तमः ॥ ५ ॥ अंतर्बहिश्चयोद्वेधानभस्वत्पदवींदधत् ॥
सर्वेषामेववेत्स्यामित्वंतःकरणचेष्टितम् ॥ ६ ॥ विधायचांभसींमूर्तिंसर्वजीवैकजीवनीम् ॥ प्रजाःसंजीवयिष्यामिकिंजडैर्विषयेमम ॥ ७ ॥ यदाखे
तमसापौराग्रस्येतेशशिभास्करौ ॥ तदानार्किंविनाताभ्यांजीवामःक्षितिमंडले ॥ ८ ॥ श्रियंचांद्रमसींप्राप्यह्लादयिष्याम्यहंप्रजाः ॥ निशाचरेणकि
मिहक्षयिणाचकलंकिना ॥ ९ ॥

तम् ॥ किमुवाचतदाह ॥ अलम्भीत्योति ॥ १०० ॥ विकारकारिभिरपकारकारिभिर्लेखैर्देवैः ॥ तेषांपराभवस्तैःकृतोभिभवइत्यर्थः ॥ १ ॥ स्मारितन्तुतदितिवापाठः ॥ २ ॥ जगत्प्राणोवायुः ॥
पुष्पवन्ताभ्यांचन्द्रसूर्याभ्यांसह ॥ ३ ॥ पर्जन्यइन्द्रः ॥ ४ ॥ पक्तीष्ट्व्युष्टिकृत्तमःपाकयज्ञदाहकृत्तमः ॥ तत्रपाकोमहानसादौ यज्ञोऽग्निहोत्रादिरूपः दाहःशीतापनयनादौ ॥ ५ ॥ अन्त
रिति ॥ अन्तर्बहिश्चयोद्वेधावर्ततेतस्यनभस्वतोवायोःपदवींदधत्सन्नित्यर्थः ॥ अन्तर्बहिश्चरइतिपाठेअन्तर्बहिश्चरोद्वेधाभूत्वानभस्वतोवायोःपदवींदधत्सन्नित्यर्थः ॥ ६ ॥ आम्भसींजलाधिष्ठात्रींवारु
णीमित्यर्थः ॥ जडैर्जाड्यगुणयुक्तैर्जलैरित्यर्थः ॥ जडैर्जलैरितिवाडलयोरेकत्वात् ॥ ७ ॥ यदेति ॥ खेआकाशे ॥ अग्रइतिपाठेअग्रेसंमुखेप्रत्यक्षमित्यर्थः ॥ तमसाराहुणानैहारादिरूपेणां
धकारेणवा ॥ पौराइतिप्राधान्यात्केषांचित्सम्बोधनम् ॥ ८ ॥ निशाचरेणचन्द्रेण ॥ शब्दच्छलेनराक्षससादृश्यंध्वनितम् ॥ किंचक्षयिणादक्षशापात्क्षयरोगवता ॥ कलंकिनागुर्वंगनागमनकलंकव



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ताच॥ ९ ॥ एवंसामान्यतःकोपावेशेनसर्वेषामेवस्वावि षयाद्गमनमनुज्ञायपश्चाद्विमृश्यकस्याचिदन्यथयाति ॥ अस्मदिति ॥ ११० ॥ ननुतथाभूतोपिसयद्यानिष्टकारीतर्हिकथंस्थापनीयस्तत्राह ॥
सएकइति ॥ सर्वेषामात्मत्वाद्विशेषात्कुलदैवतत्वाच्चसोऽपकर्तुंनजानात्येव ॥ किंचतस्येदमपकारकरणाज्ञानमुत्तमंव्रतंपरमःसंकल्पः ॥ ११ ॥ इतीति ॥ पौरवर्गइत्युपलक्षणम् ॥ आधिमुक्तचि
त्तोमानस्याव्यथयारहितांतःकरणः ॥ १२ ॥ क्षितिपतिरिति ॥ तदग्न्यादिकर्म ॥ तथापूर्ववत् ॥ अतिवह्नचर्कंवह्नचर्कौअतिक्रम्यवर्ततइत्यतिवह्नचर्कम् ॥ द्युसदांदेवानाम् ॥ शल्यंकीलकंहृदीतिशेषः॥
॥ ११३ ॥ ॥ इतिश्रीरामानन्दकृतायांकाशीखण्डटीकायांत्रिचत्वारिंशोध्यायः ॥ ४३ ॥ ॥ छ ॥ ॥ चतुर्भिरधिकेचत्वारिंशकेध्यायउत्तमे ॥ विश्वेशविरहांतरस्थंकाशीवर्णनमुच्यते ॥
॥ १ ॥ कथमागाच्चमंदरादितिप्रश्नस्योत्तरंवक्ष्यन्नागमनकारणंकाशीवियोगजातमानन्दाभावमीश्वरस्यदर्शयाति ॥ अथेति ॥ श्लोकद्वयंवाक्यम् ॥ अथबहुकालस्थित्यनन्तरंशंकरःशर्मसुखंनलभते
स्मनालभत॥ किंकुर्वन् ॥ निवसन्निवासंकुर्वन्॥ क मन्दरस्यपर्वतस्यकन्दरोदरेउल्लसंतिउच्चरंतिस्फुरन्तीतियावत्॥असमद्युतीनिनविद्यतेसमानाद्युतिःकांतिर्येषांतानिरत्नानियस्मिंस्तन्मंदरकंदरोदरोल्ल

अस्मत्कुलेमूलभूतोभास्करोमान्यएवनः ॥ सतिष्ठतुसुखेनात्रयातायातंकरोतुच ॥ ११० ॥ सएकोजगतामात्माविशेषात्कुलदेवता ॥ सोपकर्तुंनवेत्त्ये
वतस्येदंव्रतमुत्तमम् ॥ ११ ॥ इतिनरपतिवाक्सुधारसौघंश्रुतिपुटकैःपरिपीयपौरवर्गः ॥ विकसितवदनांबुजोजगामनिजनिजमालयमाधिमुक्तचित्तः
॥ १२ ॥ क्षितिपतिरपितत्तथाविधायतपसोसाध्यमिहास्तिकिंत्रिलोक्याम् ॥ अतिवह्नचर्कमसौदधत्तेजोद्युसदांशल्यमिवोच्चकैर्बभूव ॥ १३ ॥
इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेदिवोदासप्रतापवर्णनंनामत्रिचत्वारिंशोध्यायः ॥४३॥ ॥ स्कंदउवाच ॥
अथमंदरकंदरोदरोल्लसदसमद्युतिरत्नमंदिरे ॥ परितःसमधिष्ठितामरेनिजशिखरैर्वसनीकृतांबरे ॥ १ ॥ निवसञ्जगदीश्वरोहरःकृशरजनीशकलामनो
हरः ॥ लभतेस्मनशर्मशंकरःप्रसरत्काशिवियोगजज्वरः ॥ २ ॥ विरहानलशांतयेतदासमलेपित्रिपुरारिणापियः ॥ मलयोद्भवपंकएषसप्रतिपेदेह्यधुना
पिपांसुताम् ॥ ३ ॥ परितापहराणिपद्मिनीनांमृदुलान्यपिकंकणीकृतानि ॥ गदितानियदीश्वरेणसर्पास्तदभूत्सत्यमहोमहेश्वरेच्छा ॥ ४ ॥ यदुदुग्धनि
धिंनिमथ्यदेवैर्मृदुसारःसमकर्षिपूर्णचंद्रः ॥ सबभूवकृशोवियोगतप्तेश्वरमूर्धोष्मपरिक्षरच्छरीरः ॥ ५ ॥

सदसमद्युतिरत्नंतच्चतन्मंदिरंचेतितस्मिन् ॥ परितःसर्वतःसम्यगधिष्ठिताअमरायास्मिन् ॥ वसनीकृतंवस्त्रीकृतमंबरंयास्मिन् अत्युच्चेइत्यर्थः ॥ १ ॥ जगदीश्वरस्यप्रलयकालेसर्वहरस्यवाबालचन्द्रकलया
मनोहरस्यापि ॥ शर्मालभनेहेतुमाह ॥ प्रसरदिति ॥ प्रसरच्चु द्रच्छन्काशीवियोगजोज्वरोयस्यसः ॥ २ ॥ भगवद्गात्रसंलग्नंपांसुमुत्प्रेक्षमाणःकाशीविरहज्वरस्यतीव्रतामाह ॥ विरहेति॥ तदात्रिपुरह
रेणविरहाग्निशान्त्यर्थंसचन्दनरसःस्वगात्रेसम्यक्अलेपिलिप्तःसएवाधुनापिपांसुतांधूलितांभस्मतांवाप्रतिपेदेप्रापेत्यर्थः॥ ३ ॥भगवद्गात्रस्थिताःसर्पाउत्प्रेक्ष्यंते॥परितापेति ॥ कंकणीकृतानियानिपद्मिनीनां
मृणालानिइतिशेषः॥कथंभूतानि॥ परितापहराणिमृदुलानिकोमलान्यपितानियद्यस्मात्सर्पाइतिईश्वरेणगदितानितत्तस्मात्कारणात्सत्यंयथास्यात्तथातान्येवसर्पाःअभूवन्नित्यर्थः॥ ईश्वरेणसर्पाइतिगदिता
नियत्तद्वदनमेवसत्यमभूदितिवा ॥ अहोखेदेआश्चर्येवा ॥ तत्रहेतुमाह ॥ महेश्वरेच्छेति ॥ तदुक्तंविषमप्यमृतंक्वचिद्भवेदमृतंवाविषमीश्वरेच्छयेति ॥ ४ ॥ यदुदुग्धनिधिमिति ॥ यत्यःउविस्मये

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

देवैर्दुग्धनिधिंनिमथ्यमृदुसारःशीतलःपूर्णचन्द्रःसमकर्षिआकृष्टउद्धृतइतियावत् ॥ सकृशःकलामात्रावशिष्टोबभूव ॥ तत्रहेतुगर्भविशेषणमाह ॥ काशीवियोगतप्तस्यईश्वरस्यमस्तकेतापेनक्षीणशरीरः ॥ ५ ॥ यद्दीधरदिति ॥ यद्यतएषहरःकाशीवियोगाज्जाततापःसंस्तदानींपरितापहरांद्युनदींमौलिजटाएवनिकुञ्जस्तस्यकोणेविस्तीर्णेदधारततएवहेतोरधुनापितांनोज्जहीतेनत्यजति ॥ यत्त्वयामितिवा ॥ ६ ॥ महतइति ॥ तस्यमहतोविरहस्यशंकरोवश्यपिवशंगतःसन्सभास्थैरपिसुरैर्नविविदेनज्ञातः ॥ तत्रहेतुगर्भविशेषणमाह ॥ संवीतसुतापवेष्टितःअप्रकटात्यन्ततापव्याप्तः ॥ काशीविरहजन्यत्वमेवतापस्यशोभनत्वम् ॥ ७ ॥ अतिचित्रमिति ॥ इदमतिचित्रम् ॥ किंतत् ॥ जगत्रयेश्वरोपिशुचिःपवित्रोपि ॥ यद्वा प्रलयकालेसर्वसन्तापकोपिसंकर्षणमुखानलोत्थकालाग्निरुद्ररूपत्वात्परिताप्येतेतियत् ॥ परितप्यतेतिक्वचित् ॥ केन ॥ कूपीटयोनिनावह्निना ॥ कथंभूतेन ॥ आत्मनास्वस्यैवमूर्त्या ॥ अष्टमूर्तित्वान्महेश्वरस्य ॥ पुनःकथंभूतेन ॥ काशीवियोगादुत्थितेन ॥ ८ ॥ निजभालतलमिति॥ यस्यकलानिधेश्चन्द्रस्यकलयारेखयायईश्वरोनिजभालतलमलंकरोतिसकलानिधिःतदीश्वरमपिसचासावीश्वरश्चेतितदीश्वरस्तमप्यतापयत्संतप्तंचकारअतएकएवविधुर्विपरीतः ॥ त्वित्याश्चर्ये ॥ कलानिधिरितिपाठेतस्येत्यर्थात् ॥ ९ ॥ गरलमिति ॥ एतदद्भुतम् ॥ किंतत् ॥ अस्यगलनालिकातलेकण्ठेगरलंकालकूटंविलसेत्स्फुरेत्तेनायंनतापितस्तापंनप्रापितः ॥ अमृतांशुतुषारदीधितिप्रचयैश्चन्द्रशीतलरश्मिसमूहैस्त्वेषतापितइति ॥ १० ॥ अन्यच्चाद्भुतंशृण्वित्याह ॥ विलसदिति ॥ तद्विरहापनुत्तयेकाश्याविरहनाशायहृदयाहितयावक्षःस्थलार्पितयाविलसद्धरिचन्दनोदकच्छटयाप्येषोऽदूयततापमनुभूतवान् ॥ प्रसरद्भोगिफटाभवैःप्रस्फुरत्सर्पफणाजातैर्विषैरितिशेषः ॥ नदूयतइति ॥ ११ ॥ सकलभ्रममिति ॥ एषविश्वेश्वरःसकलभ्रमंजगद्भ्रमंनाशयेत् ॥ कथंभूतम् ॥ स्रगहित्वाद्यपदेशजंस्रक्सर्पत्वातिदृष्टांतसिद्धम् ॥ तथाचप्रयोगः ॥ जगद्भ्रमरूपंदृश्यत्वात्स्रक्सर्पादिवदिति ॥ आदिपदेनशुक्तिरजतस्थाणुपुरुषाद्योगृह्यन्ते ॥ एतादृशस्यास्यस्फुटमाल्येस्पष्टमालायामपिमहाहेःसंभवरूपोभ्रमइतियदिदमद्भुतमिति ॥ १२ ॥ स्मृतिमात्रपथमिति ॥ स्मृतिमात्रपथंस्मरणैकविषयंगतोपियस्त्रिविधमाध्यात्मिकाधिदैविकाधिभौतिकतापमपाकरोतिनाशयतिसहिसएवकाशीवियोगात्तप्तःसन्किंचिद्वक्ष्यमाणलक्षणमजल्पत्व्यलपत् ॥ अजोजन्मादिषड्भावविकारशून्यइत्यर्थः ॥ १३ ॥ विलापमेवाहापीतिषड्भिः ॥

यद्दीधरद्देषजाततापःपृथुलेमौलिजटानिकुंजकोणे ॥ परितापहरांहरस्तदानींद्युनदींतामधुनापिनोज्जिहीते ॥ ६ ॥ महतोविरहस्यशंकरःप्रसभंतस्यवशीवशंगतः ॥ विविदेनसुरैःसदोगतैरपिसंवीतसुतापवेष्टितः ॥ ७ ॥ अतिचित्रमिदंयदात्मनाशुचिरप्येपकूपीटयोनिना ॥ स्वपुरीविरहोद्भवेनवैपरिताप्येतजगत्रयेश्वरः ॥ ८ ॥ निजभालतलंकलानिधेःकलयानित्यमलंकरोतियः ॥ सतदीश्वरमप्यतापयद्विधुरेकोविपरीतएवतु ॥ ९ ॥ गरलंगलनालिकातलेविलसेदस्यनतेनतापितः ॥ अमृतांशुतुषारदीधितिप्रचयैरेवतुतापितोऽद्भुतम् ॥ १० ॥ विलसद्धरिचंदनोदकच्छटयातद्विरहापनुत्तये ॥ हृदयाहितयाप्यदूयतप्रसरद्भोगिफटाभवैर्नतु ॥ ११ ॥ सकलंभ्रममेषनाशयेत्स्रगहित्वाद्यपदेशजंहरः ॥ इदमद्भुतमस्ययद्भ्रमःस्फुटमाल्येपिमहाहिसंभवः ॥ १२ ॥ स्मृतिमात्रपथंगतोपियस्त्रिविधंतापमपाकरोत्यलम् ॥ सहिकाशिवियोगतापितःस्वगतंकिंचिदजल्पदित्यजः ॥ १३ ॥ अपिकाशिसमागतोऽनिलोयदिगात्राणिपरिष्वजेन्मम ॥ दवथुःपरिशांतिमेतितन्नहिमानीपरिगाहनैरपि ॥ १४ ॥

१ विधुरेदुःखेकएवअविपरीतःअविरुद्धःअर्थात्दुःखेतुसर्वएवविरुद्धोभवतीतिवा ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

काशीस्पर्शनन्तावद्दूरेतिष्ठतुकाशीतःसमागतोऽनिलोपियदिममगात्राणिपरिष्वजेदालिंगेत्तदामेदवथुर्विरहकंपःशांतिमेति॥अन्यथाहिमानीहिमसंहतिस्तस्याःपरिगाहनैःसंस्पर्शैरपिशान्तिंनैतीत्यर्थः॥१४॥ अगमिष्यदिति॥ अहोइतिखेदे॥ममदक्षांगजयासत्यादक्षरोषात्त्यक्तदेहयायस्तापएधितोवर्धितःसतापोयादिझटितिहिमाद्रिजापार्वतीहिनिश्चितंनाभविष्यन्नजाताचस्यात्तदाकथमगमिष्यत्कथंगतःस्यान्नक थंचिदित्यर्थः॥ कथंभूतादक्षांगजापार्वतीवा॥ ममजीवातुलताजीवनौषधिरूपालता॥१९॥किंतुनतथेति॥दक्षोद्भवयामममनस्तथानादुनोदुपतप्तमभूत्॥ कथंभूतया॥उज्झितदेहयात्यक्तशरीरया॥ अवि मुक्तस्यवियोगेनजन्मयस्यतेनमहोष्मणामहाविरहाग्निनायथापरिदूयेतपरितप्येत॥ हुतभुग्घुतदेहयाययेतिपाठेतयेत्यर्थात्॥ हुतभुजिहुतो देहोययासातथातया॥ १६॥१७॥ अमृतांशुश्चंद्रस्तत्कलातो मृदुद्रवैःशीतलामृतैः॥ १८॥ तर्ह्यधुनापिकाशीवियोगजतापशांत्यर्थमन्यदेवोपायांतरंचिंत्यतांतत्राहागमदिति॥ हिमवत्सुतैवौषधंतेनसतीवियोगजःकंपोमेऽगमत्प्राक्अधुनायदिकाशींनपश्यामितर्हिका शीविरहानलस्यशांतिंनैवेयांनप्राप्नोमीत्यर्थः॥ १९॥ मनसेति॥ तदाजगदंबिकयाजगतांमात्रापार्वत्याधियांसमष्टिव्यष्टिबुद्धीनांजनन्यासाक्षिण्यापरदेवतयाकथमपिकेनापिपदार्थेनएषोहंवियुक्तो

अगमिष्यद्दहोकथंसतापोननुदक्षांगजयायएधितः॥ ममजीवातुलताझटित्यलंह्यभविष्यन्नहिमाद्रिजायदि॥ १९॥ नतथोज्झितदेहयातयाममदक्षो द्भवयामनोऽदुनोत्॥ अविमुक्तवियोगजन्मनापरिदूयेतयथामहोष्मणा॥ १६॥ अयिकाशिमुदाकदापुनस्तवलप्स्येसुखमंगसंगजम्॥ अतिशीत लितानियेनमेऽद्भुतगात्राणिभवंतितत्क्षणात्॥ १७॥ अयिकाशिविनाशिताघसंघेतवविश्लेषजआशुशुक्षणिः॥ अमृतांशुकलामृदुद्रवैरतिचित्रंहविषे ववर्धते॥ १८॥ अगमन्ममदक्षजावियोगजोदवथुःप्राग्घिमवत्सुतौषधेन॥ अधुनाखलुनैवशांतिमीयांयदिकाशींनविलोकयेहमाशु॥ १९॥ मनसेति गृणंस्तदाशिवःसुतरांसंवृततापवैकृतः॥ जगदंबिकयाधियांजनन्याकथमप्येषवियुक्तइत्यमानि॥ २०॥ प्रिययावपुषोर्धयानयाप्यपरिज्ञातवियो गकारणः॥ वचनैरुपचर्यतेस्मसप्रणतप्राणिनिदाघदारणः॥ २१॥ ॥ श्रीपार्वत्युवाच॥ ॥ तवसर्वगसर्वमस्तिहस्तेविलसद्योगवियोगएवकस्ते॥ तवभूतिरहोविभूतिदात्रीसकलापत्कलिकापिभूतधात्री॥ २२॥ त्वदनीक्षणतःक्षणाद्विभोप्रलयंयांतिजगंतिशोच्यवत्॥ च्यवतेभवतःक्कपालवादितरो पीशनयस्त्वयोंकृतः॥ २३॥

विरहितइत्यमानिअलक्षितज्ञातइत्यर्थः॥कीदृशः॥ मनसेतिगृणन्पूर्वोक्तंविलपन्॥ शिवःसुखस्वरूपः॥ सुतरामतिशयेनसंवृतोऽस्पष्टोयस्तापस्तेनवैकृतःविकृतिंनीतइत्यर्थः॥ विमुक्तइतिपाठेपिसएवार्थः ॥२०॥एवंसामान्यविरहकारणज्ञानानंतरंयत्कृतंतदाह॥ प्रिययेति॥अनयाप्रिययावपुषोर्धरूपयापिनपरिज्ञातंविशेषतोवियोगस्यकारणंयस्यसतथा॥ प्रणतस्यप्राणिमात्रस्यनिदाघदारणःसंतापनाशनः॥ एतादृशःसशिवस्तथैवप्रिययाउपचर्यतेस्मसेवितइत्यर्थः॥२१॥ तदेवपरिचरणमाह तवेतिचतुर्भिः॥ हेसर्वगहेविलसद्योगविलसन्योगोयस्यतत्संबोधनंतथा॥तवहस्तेसर्वमस्त्येवत्वदधीनमेवसर्वमित्यर्थः॥ अतस्तेतवकोवियोगोविरहः॥ विलसद्योगेनकृत्वावियोगस्तेकइतिवान्वयः॥अहोआश्चर्ये॥तवभूतिर्विभूतिर्ब्रह्मादीनांविभूतिदात्री॥भूतधात्रीप्राणिमात्रस्यधारिकासर्वापत्कलिकासर्वासामापदांनाशिकापी त्यर्थः॥ २२॥ त्वदिति॥ हेविभोत्वदनीक्षणतस्तवकरुणादृष्टेरभावात्क्षणादेवजगंतिप्रलयंयांति॥ हेईशक्कपालवात्क्कपालेशेनयस्त्वयानोंकृतःसेवकत्वेननस्वीकृतःसभवतइतरोपित्वत्प्रतियोगीब्रह्मा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दिरपिच्यवतेभ्रश्यतेसंसरतीत्यर्थः॥२३॥तापहेत्वभावादपितवतापोनसंभवतीत्याह॥ भवतइति॥हेत्रिनेत्रइंद्रादयस्तवपरितापहेतवोनभवंति यतस्तेऽमीतवनयनानिप्रणयिनीप्रियाचगंगामौलौमस्तकेऽस्ति॥
कथंभूता॥लसज्जलालसत्कमनीयंब्रह्मजलंयस्याःसातथा॥ तथाचोक्तम्॥ योसावित्यादि॥ शोभनजलावा ॥२४॥ भुजगाइति ॥ तेप्रसिद्धाअमीभुजगाःशेषादयस्तेभुजगाहस्तगाःअंगदादिरूपेणास्थि
तत्वात् ॥ अतस्तेषांविषंनसंक्रमतेत्वयिनप्रभवति ॥ नीलकंठेतिसंबोधनस्यायंभावः ॥ कालकूटभक्षणेपितवशोभैवजातानकाचिद्बानिरतोवराकाणामेषांविषैस्तवकिमिति ॥ हेवामदेवतववामंवपुर्वाम
शरीरमहमस्मि ॥ कथंभूता ॥ वामाशोभना ॥ रामेतिपाठेसुंदरीत्यर्थः ॥ चित्तयुक्ताचित्तानुसारिणी ॥२५॥ इतिसंसृतिसंबीजजनन्यासंसृतेःसम्यग्बीजंमूलकारणमज्ञानंमहत्तत्त्वंवातज्जननीअभक्ता
नांतदुत्पादयित्रीतया ॥ इत्थंपूर्वोक्तप्रकारंयथास्यात्तथाहितेभिहितेसतिगिरिशोऽथानंतरंगिरंवक्तुमाददेउपक्रमंकृतवान् ॥ कथंभूतेहिते ॥ गिरांनिगुंफेगिरांवचसांनितरामतिशयेनगुंफोगुंफनं
ग्रथनंयत्रतस्मिन् ॥ वक्तुमपीत्यत्रगद्गदामितिक्वचित्पाठः ॥ २६ ॥ तामेवगिरंदर्शयाति ॥ अयीति ॥ अयिहेकाशित्वयाकाश्याहरोऽहंहृतोवियोगद्वारासंतापितइतिशिवयापार्वत्याऽज्ञायिज्ञातः ॥
कीदृशोहरोऽष्टमूर्तिःपंचभूतचंद्रसूर्यात्मानोमूर्तयोयस्यसः ॥ भवत्यस्मादितिभवः ॥ भाव्यंतेजायंतेपदार्थाएभिरितिभावाःप्रमाणानिभावाश्चतेऽष्टौचप्रत्यक्षानुमानोपमानशब्दार्थापत्त्यैतिह्यानुपलब्धिसं

भवतःपरितापहेतवोनभवंतींदुदिवाकराग्नयः ॥ नयनानियतस्त्रिनेत्रतेऽमीप्रणयिन्यस्तिलसज्जलाचमौलौ ॥ २४ ॥ भुजगाभुजगाःसदैवतेऽमीनविषं
संक्रमतेचनीलकंठ ॥ अहमस्मिचवामदेववामातववामंवपुरत्रचित्तयुक्ता ॥२५॥ इतिसंसृतिसंबीजजनन्याभिहितेहिते ॥ गिरांनिगुंफेगिरिशोवक्तुमप्या
ददेगिरम् ॥ २६ ॥ ॥ ईश्वरउवाच ॥ ॥ अयिकाशीत्यष्टमूर्तिर्भवोभावाष्टकोभवत् ॥ सत्वरंशिवयाज्ञायिध्रुवंकाश्याहृतोहरः ॥२७॥ अथबालसखी
भूततत्तत्काननवीरुधम् ॥ शिवाप्रस्तावयांचक्रेविमुक्तांमुक्तिदांपुरीम् ॥२८॥ ॥ पार्वत्युवाच ॥ ॥ गगनतलमिलितसलिलेप्रलयेपिभवत्रिशूलपरि
विधृताम् ॥ कृतपुंडरीकशोभांस्मरहरकाशींपुरींयावः ॥२९॥ धराधरेंद्रस्यधरातिसुंदरानमांतथास्यापिधिनोतिधूर्जटे॥धरागतापीहनयाध्रुवंधरापुरीधुरी
णातवकाशिकायथा॥३०॥नयत्रकाश्यांकलिकालजंभयंनयत्रकाश्यांमरणात्पुनर्भवः॥नयत्रकाश्यांकलुषोद्भवंभयंकथंविभोसानयनातिथिर्भवेत् ॥३१॥

भवाइतिभावाष्टौतत्स्वरूपोभावाष्टकः ॥ तथाचोक्तंब्रह्मविद्भिः ॥ वृत्त्यारूढःप्रमाणमिति ॥ भवत्सद्रूपएतादृशोपीत्यर्थः ॥ २७ ॥ काश्याहृतोहरइतिभगवन्मुखादेवाकर्ण्यपार्वतीभवस्याग्रे
काशींप्रस्तावितवतीत्याह ॥ अथेति ॥ अथानंतरंबालकालेसखीभूतास्तत्तत्काननसंबंधिन्योवीरुधोलतायस्यांताम् ॥ २८ ॥ प्रस्तावनमेवाह गगनतलमित्यारभ्यप्रमथाधिपेत्यतः
प्राक्तनेनग्रंथेन ॥ हेस्मरहरआवांकाशींपुरींयावोगच्छावइत्यन्वयः ॥ कथंभूताम् ॥ कृतपुंडरीकशोभामुत्पादितपद्मशोभाम् ॥ गगनतलेमिलितंसलिलंयस्मिंस्तस्मिन्दैनंदिनप्रलयेत्रिशूल
स्योपरिविशेषेणधृताम् ॥ उकारलोपश्छांदसः ॥ त्रिशूलेनपरिसर्वतोविधृतामितिवा ॥ अपिशब्दात्प्राकृतप्रलयादावपि ॥ २९ ॥ धरेति ॥ पूर्वोपिशब्दोभिन्नक्रमे ॥ अस्यधराधरेंद्रस्यापिधराम
त्पितुरपिधरानधरातथामांनधिनोत्युपतापयतितवपुरीकाशिकाधुरीणाश्रेष्ठायथाधिनोति ॥ कीदृशी ॥ धरागतापियाध्रुवंनिश्चितंधरानभवति त्रिशूलाग्रेस्थितत्वात् ॥ यद्वा धरागताधरारूपतांप्राप्तापिया
धरानभवतिकिंतुध्रुवंब्रह्मैवेत्यर्थः ॥ ३० ॥ नयत्रेति ॥ हेविभोकथंसाकाशीनयनातिथिर्नेत्रविषयःस्यात् ॥ कीदृशी ॥ यस्यांकलिकालजंभयंनास्तिकलेरत्राप्रवेशात् ॥ प्रवेशेवातस्याकिंचित्कर



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्वात् ॥ यत्त्विदानींकलिधर्मादृश्यन्तेतेषांरुद्ररूपाणांकाश्येकनिवासानांप्रारब्धत्वात् ॥ नयत्र काश्यांमरणात्पुनर्भवः॥जन्ममरणाव्यवहितसमयेतत्त्वज्ञानेनकैवल्यप्राप्तेः॥नयत्रकाश्यांकलुषोद्भवंभयं पाप
स्यात्रफलानुत्पादकत्वात् ॥ तथाचश्रूयते ॥ ऊषरःपुण्यपापानांधन्यावाराणसीपुरीति ॥ लैंगेच ॥ नाविमुक्तेनरःकश्चिन्नरकंयातिकिल्बिषी ॥ ईश्वरानुग्रहादेवसर्वेयान्तिपरांगतिमिति ॥ नचकालभैर
वयातनाशास्त्रविरोधस्तस्याःपश्चाद्भावित्वात् ॥ तथाचब्रह्मवैवर्तेकाशीविश्वेश्वरयोर्वाक्यानि ॥ प्रतिज्ञाममदेवेशस्थावराजंगमाजनाः ॥ तारणीयाःसर्वतोमेसागच्छतिकलौशुभा ॥ तत्रापिमनुजादेवधर्मा
धर्माधिकारिणः॥नचान्येत्रिविधाजीवाःपूर्वकर्मोपजीविनः ॥ परदाररताःकेचित्केचिद्द्रव्यपरायणाः॥परापवादपैशुन्यपरद्रोहरताःखलाः॥केचिद्गोवधकर्तारःकेचिन्मद्यपरायणाः॥ केचित्पाखण्डकुशलावं
चकाःसूचकाःपरे॥तीर्थद्रोहकरालिंगविष्णुब्राह्मणविद्विषाम् ॥ द्रोहिणोनिवसन्त्येवद्वापरान्तेकलौतथा॥अन्यान्यपिचपापानिबहूनिसुमहान्त्यपि॥कुर्वंत्येवंनराःसर्वेमय्येवचविशेषतः॥अद्ययावत्तारितास्तेप्र
तिज्ञारक्षणायमे ॥ अतःपरंत्वच्छरणंगतास्मिशिवशंकर ॥ विश्वेश्वरवाक्यम् ॥ पुण्यंकृत्वाकाशियेकाशिकांत्वांप्राप्ताःप्राप्तास्तेतुतद्धस्तुनित्यम् ॥ पापंकृत्वाक्षेत्रमध्येमृतायेतेषांमुक्तिर्यातनान्तेभवेद्धि ॥
धर्मःकाश्यांशुद्धिहेतुःप्रदिष्टःपापंपुनर्दुःखमालादिमूलम् ॥ तस्मात्प्रतिज्ञातवसिद्धरूपामुक्तिर्भवत्येवमलावसानेइत्यादि ॥ यद्वोभयत्रमोक्षप्रतिबन्धनिमित्तंभयमितिवार्थः ॥ ३१ ॥ किमत्रेति ॥ पदेपदे

**किमत्रनोसंतिपुरःसहस्रशःपदेपदेसर्वसमृद्धिभूमयः ॥ परंनकाशीसदृशीदृशोःपदंक्वचिद्गतामेभवताशपेशिव ॥ ३२ ॥ त्रिविष्टपेसंतिनकिंपुरःशतं समस्तकौतूहलजन्मभूमयः ॥ तृणीभवंतीहचताःपुरःपुरःपदंपुरारेभवतोभवद्विषः ॥३३॥ नकेवलंकाशिवियोगजोज्वरःप्रबाधतेत्वांतुतथायथात्रमाम् ॥ उपायएषोत्रनिदाघशांतयेपुरीतुसावाममजन्मभूरथ ॥ ३४ ॥ मयानमेनेममजन्मभूमिकावियोगजन्मापरिदाघईशितः ॥ अवाप्यकाशींपरितःप्रशांतिदांसमस्तसंतापविघातहेतुकाम् ॥ ३५ ॥ नमोक्षलक्ष्म्योत्रसमक्षमीक्षितास्तनूभृताकेनचिदेवकुत्रचित् ॥ अवैम्यहंशर्मदसर्वशर्मदासरूपिणीमुक्तिरसौहिकाशिका ॥ ३६ ॥**

स्थानेस्थानेऽत्रपृथिव्यांसहस्रशोऽसंख्याताःपुरःकिन्नसन्त्यपितुसन्त्येव ॥ कथंभूताः ॥ सर्वसमृद्धिभूमयःसर्वैश्वर्यस्थानानि ॥ परंकेवलंकिंतुवाकाशीसदृशीपुरीमेदृशोर्नेत्रयोःपदंविषयंनगतानयाता ॥
हेशिवास्मिन्नर्थेभवताशपे ॥ एतच्चेदहंमिथ्यावदेत्तदाभवतःशपथंकरोमीत्यर्थः ॥ ३२ ॥ ननुतर्हिस्वर्गेएतादृक्पूःस्थास्यतितत्राह ॥ त्रिविष्टपइति ॥ त्रिविष्टपेस्वर्गेशतंपुरःअनेकाःपुर्यःकिंनसन्त्यपि
तुसन्त्येव ॥ कथंभूताः ॥ समस्तेति ॥ समस्ताश्चर्योत्पत्तिस्थानानि ॥ किंतुहेपुरारेभवद्विषःसंसारद्वेष्टुर्भवतइहपुरःकाश्याःपदमेकमपिप्रदेशमासाद्येतिशेषः ॥ ताः पुरस्तृणीभवन्तिचकारान्नश्यंतिच ॥
पुरःपुरःपुरइतिपाठेभवतः पुरःपुर्याःपुरःपुरस्तात् ॥ शेषंपूर्ववत् ॥ ३३ ॥ नकेवलमिति ॥ नकेवलंकाशीवियोगजोज्वरस्त्वामेवप्रबाधतेकिंत्वत्रमन्दरेयथात्वांप्रबाधतेतथामामपीतियोजना ॥ किंतु
निदाघशान्तयेकाशीवियोगजज्वरनाशायात्रजगत्येषउपायःकोसौ॥पुरीतुसावाअथअथवाममजन्मभूरिति ॥ ३४ ॥ किंच॥मयेति ॥ हेईशितःहेनियन्तःमयानिजजन्मभूमिकायाःवियोगाज्जन्मयस्यसप
रिदाघस्तापोनमेनेनज्ञातोनानुभूतइतियावत् ॥ तत्रहेतुमाहावाप्येति ॥ परितःसर्वतःप्रशांतिदामिहलोकेजीवन्मुक्तिदांपरलोकेविदेहमुक्तिदामित्यर्थः ॥ अतएवसमस्तानामाध्यात्मिकाधिदैविकाधिभौ
तिकानांसन्तापानांविघातेनाशेहेतुकांकारणभूताम् ॥ ३५ ॥ नमोक्षेति ॥ हेशर्मदानंददकेनचिदपितनुभृताकुत्राचिदपिमोक्षलक्ष्म्योऽत्रजगतिसमक्षंप्रत्यक्षंयथास्यात्तथानेक्षितानदृष्टानानुभूताइत्यर्थः ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

किन्तुसर्वेषांशर्मदासरूपिणीमूर्तिमतीकाशिकाहिनिश्चितमसौप्रत्यक्षामुक्तिरित्यहमवैमिजानामीतियोजना ॥ ३६ ॥ नमुक्तिरिति॥यथाकाश्यांविग्रहंशरीरंपरिहायमुक्तिरस्तिनतथाइहजगतिसमाध्यादिनामु
क्तिरितियोजना ॥ कथम्भूतेन ॥ समाध्यादिनाअस्थिरेंद्रियत्वेनचञ्चलेंद्रियवृत्त्याउज्झितस्त्यक्तस्तत्समाधिर्ब्रह्मसमाधानंयस्मिंस्तेनसमाधिनासमाध्यभावेनेत्यर्थः ॥ क्रतुक्रियाभिर्यज्ञाद्यनुष्ठानैः ॥
वेदविद्ययाउपासनादिरूपया ॥ ३७ ॥ ननाकेति ॥ काश्यांतनुमात्रधारिणिदेहभृन्मात्रेयादृक्सुखंतादृक्सुखंनाकलोकेस्वर्लोकेनास्ति ॥ अतोतिसुन्दरेपिपातालतले ॥ स्वर्लोकादपिरम्याणिपातालानी
तिनारदःप्राह ॥ स्वर्गसदांमध्येपातालेभ्योगतोदिवीत्यादिदर्शनात् ॥ कुतस्तादृक्सुखम् ॥ यदास्वर्गेपातालेचतादृक्सुखंनास्तितदामर्त्यैमनुष्यलोकेसुखसंश्रयावार्तापिक्वा ॥ वाशब्दः
कटाक्षे ॥ नकापीत्यर्थः ॥ ३८ ॥ क्षेत्रइति ॥ हेत्रिशूलिन्भवतोऽविमुक्तेक्षेत्रेतत्रान्यत्रवास्थितोयोमनोपियुंक्तेमनोवृत्तिमात्रमपिप्रयच्छतिससदैवषडंगयोगंयुंक्तेयुनक्ति ॥ मनःसंयोजनेहेतुः
प्राणिवरोऽतीवपुण्यकृदित्यर्थः ॥ अविमुक्तनामनिर्वक्ति॥विमुक्तिलक्ष्म्येति ॥ ३९ ॥ किंच ॥ षडंगेति ॥ हेशिवनृभिर्नरैस्तादृशीशरीरेणसिद्धिःषडङ्गयोगसिद्धिर्निश्चितमत्रलोकेनलभ्यते ॥ काशीं
समवाप्यत्वयिक्षणंदृशौनेत्रेस्थिरीकृत्यसुखेनयादृशीलभ्यतइति ॥ ४० ॥ वरमिति ॥ हिनिश्चितम् ॥ अपीतिवा ॥ तिर्यक्त्वंपशुत्वमपिवरंश्रेष्ठम् ॥ कीदृशम् ॥ नविद्यतेबुद्धेर्वैभवमात्मानात्म

नमुक्तिरस्तीहतथासमाधिनास्थिरेंद्रियत्वोज्झिततत्समाधिना ॥ क्रतुक्रियाभिर्ननवेदविद्ययायथाहिकाश्यांपरिहायविग्रहम् ॥३७॥ ननाकलोकेसुखम
स्तितादृशंकुतस्तुपातालतलेऽतिसुंदरे ॥ वार्तापिमर्त्येसुखसंश्रयाक्वाकाश्यांहियादृक्तनुमात्रधारिणि ॥ ३८ ॥ क्षेत्रेत्रिशूलिन्भवतोऽविमुक्तेविमुक्ति
लक्ष्म्यानकदापिमुक्ते ॥ मनोपियःप्राणिवरःप्रयुंक्तेषडंगयोगंससदैवयुंक्ते ॥ ३९ ॥ षडंगयोगान्नहितादृशीनृभिःशरीरसिद्धिःसहसात्रलभ्यते ॥ सुखे
नकाशींसमवाप्ययादृशीदृशौस्थिरीकृत्यशिवत्वयिक्षणम् ॥ ४० ॥ वरंहितिर्यक्त्वमबुद्धिवैभवंनमानवत्वंबहुबुद्धिभाजनम् ॥ अकाशिसंदर्शननिष्फलो
दयंसमंततःपुष्करबुद्बुदोपमम् ॥ ४१ ॥ दृशौकृतार्थेकृतकाशिदर्शनेतनुःकृतार्थाशिवकाशिवासिनी ॥ मनःकृतार्थंधृतकाशिसंश्रयंमुखंकृतार्थंकृतका
शिसंमुखम् ॥ ४२ ॥ वरंहितत्काशिरजोतिपावनंरजस्तमोध्वंसिशशिप्रभोज्ज्वलम् ॥ कृतप्रणामैर्मणिकर्णिकामुवेललाटगंयद्बहुमन्यतेसुरैः ॥ ४३ ॥

विवेकविस्तारोयस्मिंस्तत् ॥ बह्वीनांबुद्धीनांभाजनंयोग्यमपिमानवत्वंमनुष्यत्वंनवरम् ॥ तत्रहेतुगर्भंविशेषणमाह ॥ अकाशिसंदर्शननिष्फलोदयंकाशीदर्शनाभावेनफलोदयशून्यम् ॥ ननुकाशीसन्द
र्शनंविनापियत्रकुत्रापिसुखेनस्थातव्यंततःसमयांतरेदर्शनादिकंविधेयंतत्राह ॥ पुष्करबुद्बुदोपमंपुष्करशब्देनात्रपद्मपत्रंलक्ष्यते ॥ बुद्बुदशब्देनजललवः ॥ तथाचोक्तमाचार्यैः ॥ नलिनीदलगत
जललवतरलंतद्वज्जीवनमतिशयचपलमिति ॥ पुष्करञ्जलमितिवा ॥ ४१ ॥ अदर्शनऽकृतार्थतामुक्त्वादर्शनेकृतार्थतामाह ॥ दृशाविति ॥ कृतंकाश्यादर्शनंयाभ्यांतेदृशौनेत्रेकृतार्थेकृ
तार्थःपुरुषार्थोयाभ्यान्तेतथा ॥ शिवाचासौकाशीचशिवकाशीतस्यांवस्तुंशीलंयस्याःसातनुःशरीरंकृतार्था ॥ शिवेतिसंबोधनंवा ॥ यत्रकुत्रापिगमनंपरित्यज्यधृतःकाश्येवसंश्रयआश्रयोयेनत
न्मनःकृतार्थम् ॥ कृताकाशीसंमुखायेनतन्मुखंकृतार्थमिति ॥ ४२ ॥ वरमिति ॥ तत्काश्यारजोधूलिर्वरंश्रेष्ठम् ॥ श्रेष्ठत्वेहेतवः ॥ हियस्मादतिपावनंरजस्तमसीध्वंसितुंशीलंयस्यतत्तथा ॥ शशि
प्रभोज्ज्वलंचन्द्रतेजोवच्छुक्लम् अतएवमणिकर्णिकामुवेकृतप्रणामैःसुरैःस्वकीयललाटगंयद्बहुमन्यतेतत्सर्वोत्कृष्टंमन्यते ॥ यद्वा कृतायेप्रणामास्तैःकृत्वाकाशीस्थानांललाटगम् ॥ यद्वाषष्ठ्यर्थेतृतीया ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मणिकर्णिकाभुवेकृतप्रणामानांललाटगंसुरैर्यद्धृदुमन्यतइति ॥ ४३ ॥ नदेवेति ॥ देवलोकादिर्मणिकर्णिकायास्तुलांसाम्यंनव्रजेन्नगच्छेत् ॥ कुतः ॥ यत्रयस्यांमणिकर्णिकायांमहाप्रयाणकृच्छ्रु
तिर्मरणकृतांश्रवणेंद्रियंब्रह्मैवरसायनंरसरूपआश्रयस्तदास्पदंतदाश्रयम् ॥ यद्वा अयतेज्ञायतेब्रह्मरसोनेनेत्ययनंप्रणवःषडक्षररामनमन्त्रराजोवा ॥ ब्रह्मरसायनस्यप्रणवस्यराममन्त्रराजस्यवाऽऽस्पदमा
श्रयोभवतीत्यर्थः ॥ ४४ ॥ महेति ॥ मणिकर्णिकास्थलीमहामहोभूःपरिपूर्णतेजःस्थानम् ॥ कुतः ॥ यत्रयस्यांमणिकर्णिकास्थल्यांसातमस्ततिरंधकारपरम्पराआवरकत्वसाम्यादज्ञानपरंपरेत्यर्थः॥
संक्षयंसमेति ॥ समुपसर्गाभ्यामत्यन्तंनाशंप्राप्नोतीतिसूचितम् ॥ साका ॥ यापरःशतैःशतात्परैरसंख्यातैर्जन्मभिरेधितावर्द्धिताघनीभूतेत्यर्थः ॥ साधनान्तरैरविनाशतामाह ॥ दिवाकरैरिति ॥
अनिग्रहाऽविनाशा ॥ यस्यांजीवितानामेवाज्ञानसन्ततिर्नश्यतिकिंपुनर्मृतानांश्रीरुद्रोपदेशेनेतिभावः ॥ ४५ ॥ किम्विति ॥ किंप्रश्नेउवितर्के ॥ उत्प्रेक्षायांवाकिमुशब्दः ॥ निर्वाणंकैवल्यमेवपदंस्था
नंयस्यतस्यपरमेश्वरस्य अथवानिर्वाणस्यकैवल्यचक्रवर्तिनःपदस्यपादस्यभद्रपीठंसिंहासनंकिमुमणिकर्णिकास्थलीतिसर्वत्रान्वेति ॥ अथोअथवा॥नुनिश्चितम्॥ मोक्षलक्ष्म्यामृदुलतंलपंकोमलाशय्या ॥

नदेवलोकोनचसत्यलोकोननागलोकोमणिकर्णिकायाः ॥ तुलांव्रजेद्यत्रमहाप्रयाणकृच्छ्रुतिर्भवेद्ब्रह्मरसायनास्पदम् ॥४४॥ महामहोभूर्मणिकर्णिकास्थ
लीतमस्ततिर्यत्रसमेतिसंक्षयम् ॥ परःशतैर्जन्मभिरेधितापियादिवाकराग्नींदुकरैरनिग्रहा ॥ ४५ ॥ किमुनिर्वाणपदस्यभद्रपीठंमृदुलंतल्पमथोनुमो
क्षलक्ष्म्याः ॥ अथवामणिकर्णिकास्थलीपरमानंदसुकंदजन्मभूमिः ॥ ४६ ॥ समतीतविमुक्तजंतुसंख्याक्रियतेयत्रजनैःसुखोपविष्टैः ॥ विलसद्द्युति
सूक्ष्मशर्कराभिःस्ववपुःपातमहोत्सवाभिलाषैः ॥ ४७ ॥ ॥ स्कंदउवाच ॥ ॥ अपर्णापरिवर्ण्येतिपुरींवाराणसींमुने ॥ पुनर्विज्ञापयामासकाशीप्राप्त्यैपि
नाकिनम् ॥ ४८ ॥ ॥श्रीपार्वत्युवाच ॥ ॥ प्रमथाधिपसर्वेशनित्यस्वाधीनवर्तन ॥ यथानंदवनंयायांतथाकुरुवरप्रद ॥ ४९ ॥ स्कन्द उवाच ॥ ॥
जितपीयूषमाधुर्यांकाशीस्तवनसुंदरीम् ॥ अथाकर्ण्याहमुदितोगिरिशोगिरिजांगिरम् ॥ ५० ॥ श्रीदेवदेवउवाच ॥ ॥ अयिप्रियतमेगौरित्वद्वा
गमृतसीकरैः ॥ आप्यायितोस्मिनितरांकाशीप्राप्त्यैयतेधुना ॥ ५१ ॥

अथवापरमानन्दएवसुकन्दःशोभनंमूलंकारणम् ॥ परमानन्दस्यवासुकन्दःशोभनंमूलंकारणंतारकोपदेशस्तस्यजन्मनोभूःस्थानमिति ॥ ४६ ॥ समतीतेति ॥ यत्रयस्यांमणिकर्णिकास्थल्यांसु
खोपविष्टैर्जनैःसमतीतायेविमुक्ताजंतवस्तेषांसंख्यागणनाक्रियते ॥ कथम्भूतैः ॥ स्ववपुःपातएवमहोत्सवस्तत्रैवाभिलाषोयेषान्तैः ॥ तथाचात्रैवोक्तम् ॥ यत्रसर्वेप्रतीक्षन्तेमृत्युंप्रियमिवातिथिमिति ॥
कैः ॥ विलसन्तीद्युतिर्यासांताविलसद्द्युतयश्चताःसूक्ष्मशर्कराश्चक्षुद्रपाषाणास्ताभिः ॥ ४७ ॥ अपर्णेति ॥ अपर्णेत्यनेनशुद्धसत्त्वायास्तस्याःकाशीगुणवर्णनेऽधिकारोस्तीतिध्वन्यते॥ पार्वतीतिक्वचित्
॥ ४८ ॥ प्रमथाधिपेत्यादिसम्बोधनचतुष्टयेनतवकिमप्यशक्यंनास्तीतिसूचयति ॥ ४९ ॥ जितेति ॥ गिरिशएवंभूतांपूर्वोक्तांगिरमाकर्ण्यमुदितःसन्नथानन्तरंगिरिजांप्राहेत्यन्वयः ॥ कथम्भू
ताम् ॥ जितंपीयूषस्यामृतस्यमाधुर्यंययासातथाताम् ॥ तत्रहेतुगर्भविशेषणमाह ॥ काशीस्तवनेसुन्दरींशोभनाम् ॥ ५० ॥ अयीतिसम्बोधने ॥ त्वद्वागमृतसीकरैस्तववचनपीयूषकणैः ॥ यते

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यत्नंकरोमि ॥ ५१ ॥ त्वमिति ॥ उपाश्नामिभुञ्जेसेवइत्यर्थः ॥ ५२ ॥ तर्हिकाश्याअन्यैराधिपत्येनानाश्रितत्वात्सिद्धंनःसमीहितंनेत्याह ॥ पितामहस्योति ॥ ५३ ॥ तर्हिंबलान्निःसारणीय स्तत्राह ॥ कथमिति ॥ ५४ ॥ तर्हिविघ्नमुत्पाद्योत्क्रष्टव्योनेत्याह ॥ अधर्मेति ॥ तस्मात्हेईशे येनकेनापिप्रकारेणयस्तंकाश्यावियोजयेत्तंकंप्रेषयामीतियोजना ॥ ५५ ॥ नतुविघ्नमुत्पाद्यानिःसरणेको दोषस्तत्राह ॥ धर्मेति ॥ ५६ ॥ तर्हिच्छिद्रंविनैवबाहिर्नेतव्योनेत्याह ॥ विनेति ॥ तत्रहेतुर्मयैवेति ॥ धर्मरूपांधुरंभारंधरन्तीतिधर्मधुरन्धराः ॥ ५७ ॥ किंच ॥ नजरेति ॥ धर्मवर्त्मधर्म मार्गंबिभर्तीतिधर्मवर्त्मभृत् ॥ अत्रकर्मभूमौ ॥ तथाचमनुः ॥ आलस्यादन्नदोषाच्चमृत्युर्विप्रान्जिघांसतीति ॥ ५८ ॥ इतिपूर्वोक्तम् ॥ योगिनीनांचक्रंसमूहम् ॥ अतिमहाप्रौढमतिशयेनदक्ष

त्वंजानासिमहादेविममयत्तन्महद्व्रतम् ॥ अभुक्तपूर्वमन्येनवस्तूपाश्नामिनेतरत् ॥५२॥ पितामहस्यवचनाद्दिवोदासेमहीपतौ ॥ धर्मेणशासतिपुरींकउपायो विधीयताम् ॥५३॥ कथंसराजाधर्मिष्ठःप्रजापालनतत्परः ॥ वियोज्यतेपुरःकाश्यादिवोदासोमहीपतिः ॥५४॥ अधर्मवर्तिनोयस्माद्विघ्नःस्यान्नेतरस्यतु ॥ तस्मात्कंप्रेषयामीशेयस्तंकाश्यावियोजयेत् ॥ ५५ ॥ धर्मवर्त्मानुसरतांयोविघ्नंसमुपाचरेत् ॥ तस्यैवजायतेविघ्नःप्रत्युतप्रेमवर्धिनि ॥५६ ॥ विनाच्छिद्रे णतंभूपंनोत्सादयितुमुत्सहे ॥ मयैवहियतोरक्ष्याःप्रियेधर्मधुरंधराः ॥ ५७ ॥ नजरातमतिक्रामेन्नतंमृत्युर्जिघांसति ॥ व्याधयस्तंनबाधंतेधर्मवर्त्म भृद्व्रयः ॥ ५८ ॥ इतिसंचिंतयन्देवोयोगिनीचक्रमग्रतः ॥ ददर्शातिमहाप्रौढंगाढकार्यस्यसाधनम् ॥५९॥ अथदेव्यासमालोच्यव्योमकेशोमहामुने ॥ योगिनीवृंदमाहूयजगौवाक्यमिदंहरः ॥ ६० ॥ सत्वरंयातयोगिन्योममवाराणसींपुरीम् ॥ यत्रराजादिवोदासोराज्यंधर्मेणशास्त्यलम् ॥ ६१ ॥ स्वधर्म विच्युतःकाशींयथातूर्णंत्यजेन्नृपः ॥ तथोपचरतप्राज्ञायोगमायाबलान्विताः ॥६२॥ यथापुनर्नवीकृत्यपुरींवाराणसीमहम् ॥ इतःप्रयामियोगिन्यस्तथा क्षिप्रंविधीयताम् ॥ ६३ ॥ इतिप्रसादमासाद्यशासनंशिरसावहन् ॥ कृतप्रणामोनिर्यातोयोगिनीनांगणस्ततः ॥ ६४ ॥ ययुराकाशमाविश्यमनसोप्य तिरंहसा ॥ परस्परंभाषमाणायोगिन्यस्तामुदान्विताः ॥६५॥ अद्यधन्यतराःस्मोवैदेवदेवेनयत्स्वयम् ॥ कृतप्रसादाःप्रहिताःश्रीमदानंदकाननम् ॥६६॥

मतएवगाढकार्यस्यदृढक्रियायाःसाधनकारणम् ॥ ५९ ॥ अथदेव्यासमालोच्येत्यस्यायंभावः ॥ यद्यप्यन्यद्वारास्वधर्मच्यावनमप्यन्याय्यंतथापिसर्वःस्वार्थसमीहतेस्वकार्यमुद्धरेत्प्राज्ञइत्या दिन्यायात्काशीप्राप्त्यन्यथानुपपत्त्याचस्वधर्मादन्यद्वाराव्युत्थाप्यकाशींत्याजयित्वासहगणेनावाभ्यान्तत्रगन्तव्यमितिदेव्यासहपर्यालोचनंकृत्वेति ॥ जगौ उवाच ॥ इदंवक्ष्यमाणम् ॥ ६० ॥ ॥ ६१ ॥ उपचरतसमाचरत ॥ तस्माद्विभीमइतिचेत्तत्राह ॥ योगेति ॥ ६२ ॥ ६३ ॥ ततोमन्दरात् आज्ञानन्तरंवा ॥ ६४ ॥ अतिरंहसातिशयितवेगेन ॥ ६५ ॥ परस्परंभाषणमेवाहअद्ये



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तिद्वाभ्याम् ॥ ६६ ॥६७॥ इतीति ॥ इतीत्थंपरस्परंसंकथयन् ॥ तुसंभ्रमे ॥ अथानन्तरंसयोगिनीनांनिकुरंबःसमूहस्तांपुरींनयनातिथ्यंनेत्रगोचरमलंभ यत्प्रापयदित्यन्वयः ॥ मुदितंमनोयस्यसः ॥ मन्दराद्रिरेवकुञ्जःतस्मिन्वायःकुञ्जस्तस्मात् ॥ ६८ ॥ ॥ इतिश्रीरामानन्दकृतायांकाशीखण्डटीकायांचतुश्चत्वारिंशोध्यायः ॥ ४४ ॥ ॥ छ ॥ ॥ चत्वारिंशेऽथपञ्चोर्ध्वेऽध्यायेतीवसुशोभने ॥ योगिनीनांसमूहस्यागमनंवर्ण्यतेस्फुटम् ॥ १ ॥ पूर्वाध्यायांतेयोगिनीनांनिकुरंबस्तांपुरींनयनातिथ्यमलंभयदित्युक्तंतदनन्तरंकिंवृत्तमित्यपेक्षायामाह ॥ अथेति ॥ अथपुर्यानेत्रविषयप्राप्त्यनन्तरंतद्योगिनीनांवृन्दंदूरादेवदृष्टिंप्रसार्यस्वचक्षुषोर्दैर्घ्यनिर्माणंफलान्वितंप्रशशंसेत्यन्वयः ॥ १ ॥ दिव्यप्रासादमालानांपताकाश्चप्रशशंसेत्यनुषज्जते ॥ कथम्भूताश्चलाश्चपलाःपल्लवाअग्राणियासांतास्तथा ॥ ताउत्प्रेक्षन्ते ॥ सादरमिति ॥ सादरंयथास्यात्तथादूरमार्गस्थान्पांथान्पथिकानाह्वयतीराकारयतीरिवेति ॥२॥ चञ्चदिति ॥ सुनीलंतमालश्यामलमपिव्योमाकाशंसुनिर्मलंशुक्लभास्वरन्तेजो

अद्यसद्योमहालाभवभूतांनोतिदुर्लभौ ॥ त्रिनेत्रराजसंमानस्तथाकाशीविलोकनम् ॥ ६७ ॥ इतिमुदितमनाःसयोगिनीनांनिकुरंबस्त्वथमंदराद्रिकुंजात् ॥ नभसिलघुकृतप्रयाणवेगोनयनातिथ्यमलंभयत्पुरींताम् ॥ ६८ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धे काशीवर्णनंनामचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ स्कंद उवाच ॥ ॥ अथतद्योगिनीवृंदंदूराद्दृष्टिंप्रसार्यच ॥ स्वनेत्रदैर्घ्यनिर्माणंप्रशशंसफलान्वितम् ॥ १ ॥ दिव्यप्रासादमालानांपताकाश्चलपल्लवाः ॥ सादरंदूरमार्गस्थान्पांथानाह्वयतीरिव ॥२॥ चंचत्प्रासादमाणिक्यैर्विजृंभितमरीचिभिः ॥ सुनीलमपिचव्योमवीक्ष्यमाणंसुनिर्मलम् ॥ ३ ॥ देवत्वंमाययाच्छाद्यवेषंकार्पटिकोचितम् ॥ विधायकाशींमाविश्योगिनीचक्रमक्रमम् ॥ ४ ॥ काचिच्चयोगिनीभूताकाचिज्जातातपस्विनी ॥ काचिद्बभूवसैरंध्रीकाचिन्मासोपवासिनी ॥५॥ मालाकारवधूःकाचित्काचिन्नापितसुंदरी ॥ सूतिकर्मविचारज्ञाऽपराभैषज्यकोविदा ॥ ६ ॥ वैश्याचकाचिदभवत्क्रयविक्रयचंचुरा ॥ व्यालग्राहिण्यभूत्काचिद्दासीधात्रीचकाचन ॥ ७ ॥ एकाचनृत्यकुशलात्वन्यागानविशारदा ॥ अपरावेणुवादज्ञापरावीणाधराभवत् ॥ ८ ॥ मृदंगवादनज्ञान्याकाचित्तालकलावती ॥ काचित्कार्मणतत्त्वज्ञाकाचिन्मौक्तिकगुंफिका ॥ ९ ॥ गंधभागविधिज्ञान्याकाचिदक्षकलालया ॥ आलापोल्लासकुशलाकाचिच्चत्वरचारिणी ॥ १० ॥

भास्वरंवावीक्ष्यमाणंदृश्यमानंप्रशशंसेतिपूर्वक्रिययैवसंबन्धः ॥ कैः ॥ चञ्चंतःस्फुरन्तोयेप्रासादास्तत्रस्थैर्माणिक्यैःकृत्वाविजृम्भितादेदीप्यमानायेमरीचयस्तैरित्यर्थः ॥३॥ देवत्वमिति ॥ रक्तवस्त्रादिधारिणस्तपस्विविशेषाःकार्पटिकास्तेषांवेषंविधायाऽक्रमंयथास्यात्तथायोगिनीचक्रंकाशीमविशदित्यन्वयः ॥ ४ ॥ एवंप्रथमतःप्रविश्यपश्चान्नानारूपंकृतवदित्याह काचित्यादिना ॥ योगिनीअष्टांगयोगयुक्ताकापालिकीवा ॥ तपस्विनीचान्द्रायणादिव्रतपरा ॥ सैरन्ध्रीपरवेश्मस्था ॥ ५ ॥ भैषज्यकोविदावैद्यकर्मणिनिपुणा ॥ ६ ॥ क्रयविक्रयविषयेचंचुरादक्षा ॥ व्यालःसर्पस्तद्ग्राहिणी ॥ धात्रीउपमाता ॥ ७ ॥ वीणाधरेतिपाठेवीणैवधनंधनसाधनंयस्याःसातथावीणावादनपरेत्यर्थः ॥ ८ ॥ तालएवकलाविद्यातद्वती ॥ कार्मणतत्त्वज्ञावशीकरणकर्मतत्त्वज्ञेत्यर्थः ॥ मौक्तिकगुंफिकामुक्तामालाग्रथिका ॥ ९ ॥ गंधभागविधिज्ञागंधविभागप्रकारज्ञा ॥ अक्षकलालयाद्यूतविद्याश्रयभूता ॥ आलापस्योल्लासेविलासेचातुर्यइतियावत् ॥ कुशला ॥ चत्वर

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चारिणीभिक्षुकीरूपेणप्रांगणचारिणी ॥ १० ॥ वंशस्यऊर्ध्वीकृत्यधृतस्योपर्यधिरोहणेदक्षा ॥ इतराउभयपार्श्वेऊर्ध्वीकृत्यबद्धायारज्ज्वामार्गेणतदुपरिगमनेइतरादक्षेतरपदयोःपरस्परमुभयत्रान्वयः ॥ किन्नानइतिकिवातोरूपमि पथिचीवरवेष्टनापथिपतितंयच्चीवरंवस्त्रखंडंतत्परिधानेत्यर्थः ॥ ११ ॥ परान्येत्युभयत्रसंबध्यते ॥ लक्षणानिसामुद्रिकोक्तानि ॥ चिकेतिजानातिकथयतिवेत्यर्थः ॥ किन्नानइतिकिवातोरूपमि दम् ॥ १२ ॥ नैपुण्याद्दाक्ष्यात् ॥ १३ ॥ पुरुषस्यस्त्रियास्त्रियावापुरुषेणरहःसंबंधेजायमानेययावीर्यंनक्षरतिसागुटिका ॥ गुटिकातत्सिद्धिदाकाचित् ॥ चक्षुषोरंजनस्पर्शमात्रेणाभीष्टदेशप्राप्त्या दर्शनादिसिद्धिरंजनसिद्धिस्तद्दाकाचित् ॥ धातुवादेसुवर्णादिसिद्धिकथनेऽन्याविदग्धानिपुणा ॥ पादुकायाःपादस्पर्शमात्रेणाभीष्टदेशप्राप्तिःपादुकासिद्धिस्तद्दापरा ॥ १४ ॥ अग्निस्तंभादिषुत्रिषुपरे त्यनुषज्जते ॥ खेचरीत्वमाकाशगामित्वम् ॥ अदृश्यत्वंचक्षुष्मतःसंमुखेपिदर्शनानर्हत्वम् ॥ १५ ॥ आकर्षणीसिद्धिर्नामइच्छयास्त्रियाःपुरुषस्यबलादानयनम् ॥ उच्चाटनंसुस्थस्यापिदौःस्थ्यापाद

वंशाधिरोहणेदक्षारज्जुमार्गेणचेतरा ॥ काचिद्वातुलचेष्टाऽभूत्पथिचीवरवेष्टना ॥ ११ ॥ अपत्यदाऽनपत्यानांपरातत्रपुरेऽवसत् ॥ काचित्करांघ्रिरेखाणां लक्षणानिचिकेतिच ॥ १२ ॥ चित्रलेखननैपुण्यात्काचिज्जनमनोहरा ॥ वशीकरणमंत्रज्ञाकाचित्तत्रचचारह ॥ १३ ॥ गुटिकासिद्धिदाकाचित्का चिदंजनसिद्धिदा ॥ धातुवादविदग्धान्यापादुकासिद्धिदापरा ॥ १४ ॥ अग्निस्तंभंजलस्तंभंवाक्स्तंभंचाप्यशिक्षयत् ॥ खेचरीत्वंददौकाचिददृश्यत्वं परादद‍ौ ॥ १५ ॥ काचिदाकर्षणींसिद्धिंददावुच्चाटनंपरा ॥ काचिन्निजांगसौंदर्ययुवचित्तविमोहिनी ॥ १६ ॥ चिंतितार्थप्रदाकाचित्काचिज्ज्योतिः कलावती ॥ इत्यादिवेषभाषाभिरनुकृत्यसमंततः ॥ १७ ॥ प्रत्यंगणंप्रतिगृहंप्राविशद्योगिनीगणः ॥ इत्थमब्दंचरंत्यस्तायोगिन्योऽहर्निशंपुरि ॥ १८ ॥ नच्छिद्रंलेभिरेक्वापिनृपविघ्नचिकीर्षवः ॥ ततःसमेत्यताःसर्वायोगिन्योवंध्यवांछिताः ॥ तस्थुःसंमंत्र्यतत्रैवनगतामंदरंपुनः ॥ १९ ॥ प्रभुकार्यम निष्पाद्यसदःसंभावनैधिताः ॥ कःपुरःशक्नुयात्स्थातुंस्वामिनोक्षतविग्रहः ॥ २० ॥ अन्यच्चचिंतितंताभिर्योगिनीभिरिदंमुने ॥ प्रभुंविनापिजीवामोनतुकाशीं विनापुनः ॥ २१ ॥ प्रभूरुष्टोपिसद्भृत्येजीविकामात्रहारकः ॥ काशीहरेत्कराद्भ्रष्टापुरुषार्थचतुष्टयम् ॥ २२ ॥ नाद्यापिकाशींसंत्यज्यतदारभ्यमहामुने ॥ योगिन्योन्यत्रतिष्ठंतिचरंत्योपिजगत्त्रयम् ॥ २३ ॥

नम् ॥ निजांगस्यसौंदर्येणलावण्येनयूनांचित्तस्यविमोहिनीक्षोभकर्त्री ॥१६॥ चिंतितार्थप्रदाऽभीष्टार्थप्रदा॥ज्योतिःकलाज्योतिर्विद्यातद्वती॥उपसंहरति ॥ इत्यादीति॥अनुकृत्यात्मानंरचयित्वेत्यर्थः ॥ ॥ १७ ॥ गणःसमूहः ॥ जनइतिक्वचित् ॥ १८ ॥ वंध्यंव्यर्थंवांछितंयासांतास्तथा ॥ १९ ॥ प्रभ्विति ॥ प्रभोःकार्यमनिष्पाद्याकृत्वासदःसंभावनैधितःसदसिसभायांसंभावनयाकार्यकरणेदक्षतया एधितोवर्धितोऽक्षतविग्रहःसन्जीवन्सन्नित्यर्थः ॥ स्वामिनोऽग्रेकःस्थातुंशक्नुयान्नकोपीत्यर्थः ॥ २० ॥ किंचान्यच्चेति ॥ इदंशब्दार्थमेवाह प्रभुंविनापीति सार्धेन ॥ २१ ॥ सद्भृत्यत्वंनामयथा शक्तिकार्यकारित्वम् ॥ २२ ॥ नाद्यापीतिस्कंदोक्तिः ॥ हेमहामुनेतदारभ्यतंकालमारभ्यजगत्त्रयंचरंत्योपियोगिन्योऽद्यापिकाशींविहायान्यत्रनैवतिष्ठंति ॥ यत्रकुत्रापिगत्वाकाश्यामेवागत्यतिष्ठंती



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्यर्थः ॥ २३ ॥ पुनरपितासामेवचिंतितमाह प्राप्यापीतिपंचभिः ॥ तितिक्षातित्यक्तुमिच्छति ॥ किंपुनर्यस्त्यजतित्यक्तवान्वा यइति ॥ २४ ॥ मोक्षरूपस्यनिक्षेपस्यकलशीमाश्रयमित्यर्थः ॥२५॥
विमुखोपीश्वरोयदास्माकंसंमुखोभवितातदावयंकृतकृत्याःस्मेत्यन्वयः ॥ कथंभूतईश्वरः ॥ पुण्यंपुण्यहेतुःपुण्यस्वरूपोवा ॥२६ ॥ २७॥ कुतोनरमतेतत्राह ॥ शंभोरिति ॥२८॥२९॥ इत्थमितिश्लोक
द्वयेनप्रश्नचतुष्टयम् ॥३० ॥३१॥ सर्वेषांप्रश्नानांप्रत्युत्तरंप्रत्यभिज्ञापयतिभगवान्व्यासः ॥ श्रुत्वेति ॥३२॥ फलसहितंप्रथमप्रश्नप्रत्युत्तरंप्रतिजानातिस्कंदः॥नामधेयानीति ॥ क्षयंतिनश्यंति॥३३॥
नामान्याह गजाननेत्यष्टभिः ॥ तत्रप्रचण्डाचण्डविक्रमेतिसविशेषणमेकंनाम ॥ तापनीशोषणीदृष्टिरितिनामद्वयम् ॥ तापनीदृष्टिःशोषणीदृष्टिरितिवा ॥ तापनीशोषण्यौदृष्टीयस्याःसातापनी

प्राप्यापिश्रीमतींकाशींयास्तितिक्षतिदुर्मतिः ॥ सएवप्रत्युतत्यक्तोधर्मकामार्थमुक्तिभिः ॥२४॥ कःकाशींप्राप्यदुर्बुद्धिरपरत्रयियासति ॥ मोक्षनिक्षेपकलशीं तुच्छश्रीकृतमानसः ॥ २५ ॥ विमुखोपीश्वरोस्माकंकाशीसेवनपुण्यतः ॥ संमुखोभवितापुण्यंकृतकृत्याःस्मतद्वयम् ॥ २६ ॥ दिनैःकतिपयैरेवसर्वज्ञोपिसमेष्यति ॥ विनाकाशींनरमतेयतोऽन्यत्रत्रिलोचनः ॥ २७ ॥ शंभोःशक्तिरियंकाशीकाचित्सर्वैरगोचरा ॥ शंभुरेवहिजानीयादेतस्याःपरमंसुखम् ॥ ॥ २८ ॥ इतिनिश्चित्यमनसिशंभोरानंदकानने ॥ अतिष्ठद्योगिनीवृंदंकयाचिन्माययावृतम् ॥ २९ ॥ व्यासउवाच ॥ ॥ इत्थंसमाकर्ण्यमुनिःपुनःपप्रच्छषण्मुखम् ॥ कानिकानिचनामानितासांतानिवदेश्वर ॥ ३० ॥ भजनाद्योगिनीनांचकाश्यांकिंजायतेफलम् ॥ कस्मिन्पर्वणिताःपूज्याःकथंपूज्याश्चतद्वद ॥ ३१ ॥ श्रुत्वेतिप्रश्नमौमेयोयोगिनीसंश्रयंततः ॥ प्रत्युवाचमुनेवाच्मिशृणोत्ववहितोभवान् ॥ ३२ ॥ ॥ स्कंदउवाच ॥ ॥ नामधेयानिवक्ष्यामियोगिनीनांघटोद्भव ॥ आकर्ण्ययानिपापानिक्षयंतिभविनांक्षणात्॥३३॥ गजाननासिंहमुखीगृध्रास्याकाकतुंडिका॥ उष्ट्रग्रीवाहयग्रीवावाराहीशरभानना ॥३४॥ उलूकिकाशिवारावामयूरीविकटानना ॥ अष्टवक्राकोटराक्षीकुब्जाविकटलोचना ॥३५॥ शुष्कोदरीललज्जिह्वाश्वदंष्ट्रावानरानना ॥ ऋक्षाक्षीकेकराक्षीचबृहत्तुंडासुराप्रिया ॥ ३६ ॥ कपालहस्तारक्ताक्षीशुकीश्येनीकपोतिका ॥ पाशहस्तादंडहस्ताप्रचंडाचंडविक्रमा ॥ ३७ ॥ शिशुघ्नीपापहंत्रीचकालीरुधिरपायिनी ॥ वसाधयागर्भभक्षाशवहस्तांत्रमालिनी ॥३८॥ स्थूलकेशीबृहत्कुक्षिःसर्पास्याप्रेतवाहना ॥ दंदशूककराक्रौंचीमृगशीर्षावृषानना ॥ ३९ ॥ व्यात्तास्याधूमनिःश्वासाव्योमैकचरणोर्ध्वदृक् ॥ तापनीशोषणीदृष्टिःकोटरीस्थूलनासिका ॥ ४० ॥ विद्युत्प्रभाबलाकास्यामार्जारीकटपूतना ॥ अट्टाट्टहासाकामाक्षीमृगाक्षीमृगलोचना ॥४१॥ नामानीमानियोमर्त्यश्चतुःषष्टिंदिनेदिने ॥ जपेत्त्रिसंध्यंतस्येहदुष्टबाधाप्रशाम्यति ॥ ४२ ॥ नडाकिन्योनशाकिन्योनकूष्मांडानराक्षसाः ॥ तस्यपीडांप्रकुर्वंतिनामानीमानियःपठेत् ॥ ४३ ॥

शोषणीदृष्टिरितिचैकंनाम ॥ तदाप्रचण्डाचण्डविक्रमेतिनामद्वयम् ॥ पूर्वस्मिन्पक्षेप्रतिश्लोकमष्टावष्टौनामानि ॥ अपरस्मिन्पक्षेचतुर्थश्लोकेनवनामानि ॥ सप्तमश्लोकेसप्तेतिविशेषः ॥ ३४ ॥ अष्टौ
अवयवावक्रायस्याःसातथा ॥ अष्टवक्रेतिक्वचित् ॥ कोटरेइवाक्षिणीयस्याःसातथा ॥ ३५ ॥ ३६ ॥ ३७ ॥ वसाधयावसान्धयतिपिबतीतिवसाधयामेदःपायिनीत्यर्थः ॥ ३८ ॥ दंदशूकक
रासर्पहस्तासर्पाकारहस्तेतिवा ॥ ३९ ॥ कोटरीकोटरवद्गंभीरास्थूलोदरेत्यर्थः ॥ पुरुषोत्तमदेशेप्रसिद्धादेव्यामूर्तिविशेषरूपावा ॥ ४० ॥ ४१ ॥ ४२ ॥ डाकिन्यःशाकिन्यश्चदुष्टग्रहविशेषाः



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कूष्मांडागणविशेषाः॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ भूतायांचतुर्दश्याम् ॥ ४९ ॥ ५० ॥ लघुकोलिप्रमाणतःसूक्ष्मबदरीफलप्रमाणेन ॥५१॥५२॥ ५३ ॥ ५४ ॥ ॥ इति श्रीरामानन्दकृतायांकाशीखण्डटीकायांपंचचत्वारिंशोध्यायः ॥ ४५ ॥ ॥ छ ॥ ॥ षट्चत्वारिंशकेध्यायेसर्वपापैकनाशने ॥ लोलार्कमहिमाताबद्वर्ण्यतेऽतिमनोहरः ॥ १ ॥ काशीस्थानुद्वा

मंत्रांतराण्यपि विवादेजयदान्यपि ॥ ४४ ॥ लभेदभीप्सितांसिद्धिंयोगिनीपीठसेवकः ॥ शिशूनांशांतिकारीणिगर्भशांतिकराणिच ॥ रणेराजकुलेवा ... क्षिप्रंप्रसन्नायोगिन्यःप्रयच्छेयुर्मनोरथान् ॥ ४६ ॥ शरत्कालेमहापूजां ...

शिशूनांशांतिकारीणिगर्भशांतिकराणिच ॥ रणेराजकुलेवापिविवादेजयदान्यपि ॥ ४४ ॥ लभेदभीप्सितांसिद्धिंयोगिनीपीठसेवकः ॥ मंत्रांतराण्य पिजपंस्तत्पीठेसिद्धिभाग्भवेत् ॥ ४५ ॥ बलिपूजोपहारैश्चधूपदीपसमर्पणैः ॥ क्षिप्रंप्रसन्नायोगिन्यःप्रयच्छेयुर्मनोरथान् ॥ ४६ ॥ शरत्कालेमहापूजां तत्रकृत्वाविधानतः ॥ हवींषिहुत्वामंत्रज्ञोमहतींसिद्धिमाप्नुयात् ॥ ४७ ॥ आरभ्याश्वयुजःशुक्लांतिथिंप्रतिपदंशुभाम् ॥ पूजयेन्नवमींयावन्नरश्चिंताति तमाप्नुयात् ॥ ४८ ॥ कृष्णपक्षस्यभूतायामुपवासीनरोत्तमः ॥ तत्रजागरणंकृत्वामहतींसिद्धिमाप्नुयात् ॥ ४९ ॥ प्रणवादिचतुर्थ्यंतैर्नामभिर्भ क्तिमान्नरः ॥ प्रत्येकंहवनंकृत्वाशतमष्टोत्तरंनिशि ॥ ५० ॥ ससर्पिषागुग्गुलुनालघुकोलिप्रमाणतः ॥ यांयांसिद्धिमभीप्सेततांतांप्राप्नोतिमानवः ॥५१॥ चैत्रकृष्णप्रतिपदितत्रयात्राप्रयत्नतः ॥ क्षेत्रविघ्नप्रशांत्यर्थंकर्तव्यापुण्यकृज्जनैः ॥ ५२ ॥ यात्रांचसांवत्सरिकींयोनकुर्यादवज्ञया ॥ तस्यविघ्नंप्रयच्छं तियोगिन्यःकाशिवासिनः ॥ ५३ ॥ अग्रेकृत्वास्थिताःसर्वास्ताःकाश्यांमणिकर्णिकाम् ॥ तन्नमस्कारमात्रेणनरोविघ्नैर्नबाध्यते ॥ ५४ ॥ इतिश्रीस्कां देमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेचतुःषष्टियोगिन्यागमनंनामपंचचत्वारिंशोध्यायः ॥ ४५ ॥ ॥ स्कंदउवाच ॥ ॥ गतेथयोगिनीवृंदेदेवदेवोवटोद्भव ॥ काशीप्रवृत्तिंजिज्ञासुःप्राहिणोदंशुमालिनम् ॥१॥ देवदेवउवाच ॥ ॥ सप्ताश्वत्वरितोयाहिपुरींवाराणसींशुभाम् ॥ यत्रास्तिसदिवोदासोधर्ममूर्तिर्महीपतिः ॥ २ ॥ तस्यधर्मविरोधेनयथातत्क्षेत्रमुद्वसेत् ॥ तथाकुरुष्वभो क्षिप्रंमावमंस्थाश्चतंनृपम् ॥ ३ ॥ धर्ममार्ग प्रवृत्तस्यक्रियतेयावमानना ॥ साभवेदात्मनोनूनंमहदेनश्चजायते ॥ ४ ॥ तवबुद्धिविकासेनच्यवतेचेत्सधर्मतः ॥ तदासानगरीभानोत्वयोद्वास्याऽ सहैःकरैः ॥ ५ ॥ कामक्रोधौलोभमोहौमत्सराहंकृतीअपि ॥ तेतत्रनभवेतांयत्तत्कालोपिनतंजयेत् ॥ ६ ॥ यावद्धर्मेस्थिराबुद्धिर्यावद्धर्मेस्थिरंमनः ॥ तावद्विघ्नोदयःक्वास्तिविपद्यपिरवेनृषु ॥ ७ ॥



दशादित्यान्वक्तुंप्रस्तावयति ॥ गतेऽथेति ॥ अंशुमालिनंसूर्यम् ॥ १ ॥ २ ॥ उद्वसेदुच्छिन्नंभवेत् ॥३॥ एनःपापम् ॥४॥ असहैर्दुःसहैःकरैरश्मिभिः ॥ पक्षान्तरेमूर्तिभेदेनकरैर्हस्तैः ॥ ५ ॥ काम क्रोधाविति ॥ यद्यस्मात्तत्रराजनितेप्रसिद्धेमत्सराहंकृतीतौकामक्रोधौतौलोभमोहौचनभवेतांनसंभवतइत्यर्थः ॥ तत्तस्मात्कालोपिनतंजयेदित्यन्वयः ॥ ६ ॥ विपद्यपिआपत्कालेपि ॥ ७ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ब्रध्नहेसूर्ययस्मात्त्वंसर्वेषांचेष्टितंवेत्स्यतएवजगच्चक्षुर्जगत्प्रकाशकोधर्माधर्मबोधकइतिवाकार्यसिद्धयेव्रज ॥ ८ ॥ देवस्याज्ञांरविरादायनभोध्वानमाकाशमार्गंगच्छतीतिनभोध्वगामन्यांमूर्तिं प्रकल्प्याहोरात्रंदिननक्तमभिव्याप्यकाशीमभिमुखोऽभवत् काशींप्राप्तुंप्रवृत्तइत्यर्थः ॥९॥ त्वरयाकाश्यभिमुखत्वेहेतुमाह॥ मनसेति ॥ लोलःक्षुब्धआकुलइतियावत् ॥ आनंदितइतिवा॥ नैकपादतां बहुपादतामित्यर्थः ॥ १० ॥ हंसत्वमिति ॥ तस्यसदासर्वदानभोध्वनीनस्यनभोमार्गगामिनःसूर्यस्यहंसत्वंहंतिगच्छतीतिहंसस्तस्यभावोहंसत्वंसफलतामगात् फलवज्जातमित्यर्थः ॥ तत्रहेतुगर्भंविशेषणमाह॥काशींप्रतियियासतोगंतुमिच्छतः ॥११॥ अथेत्यानंतर्येमंगलेवा ॥ धर्मध्वस्तिंधर्मलोपम् ॥१२॥ विभावसुःसूर्यः॥ अवसरंछिद्रम् ॥ स्वधर्मिणिस्वधर्मनिष्ठे ॥ सुधर्मणीतिक्वचित् ॥१३॥ नानारूपमेवदर्शयति कदाचिदित्यादिना ॥ १४ ॥ दीनतांदरिद्रताम् ॥ १५ ॥ वेदबाह्यांपाषंडात्मिकाम् ॥ दृष्टःप्रत्ययोज्ञानंयस्यतद्दृष्टप्रत्ययंप्रत्यक्षज्ञानविषयमैहिकमेववस्तुजातम् ॥ चार्वा

सर्वेषामिहजंतूनांत्वंवेत्सिब्रध्नचेष्टितम् ॥ अतएवजगच्चक्षुर्व्रजत्वंकार्यसिद्धये ॥ ८ ॥ रविरादायदेवाज्ञांमूर्तिमन्यांप्रकल्प्यच ॥ नभोध्वगामहोरात्रंकाशीमभिमुखोऽभवत् ॥ ९ ॥ मनसातीवलोलोऽभूत्काशीदर्शनलालसः ॥ सहस्रचरणोप्यैच्छत्तदारवेनैकपादताम् ॥ १० ॥ हंसत्वंतस्यसूर्यस्यतदासफलतामगात् ॥ सदानभोध्वनीनस्यकाशींप्रतियियासतः ॥ ११ ॥ अथकाशींसमासाद्यरविरंतर्बहिश्चरन् ॥ मनागपिनतद्भूपेधर्मध्वस्तिमवैक्षत ॥१२॥ विभावसुर्वसन्काश्यांनानारूपेणवत्सरम् ॥ क्वचिन्नावसरंप्रापतत्रराज्ञिसुधर्मिणि ॥ १३ ॥ कदाचिदतिथिर्भूतोदुर्लभंप्रार्थयन्रविः ॥ नतस्यराज्ञोविषये दुर्लभंकिंचिदैक्षत ॥ १४ ॥ कदाचिद्याचकोजातोबहुदोपिकदाप्यभूत् ॥ कदाचिद्दीनतांप्राप्तःकदाचिद्धणकोप्यभूत् ॥ १५ ॥ वेदबाह्यांक्रियांचापिकदाचित्प्रत्यपादयत्॥कदाचित्स्थापयामासदृष्टप्रत्ययमैहिकम् ॥१६॥ कदाचिज्जटिलोजातःकदाचिच्चदिगंबरः ॥ सकदाचिज्जांगुलिकोविषविद्याविशारदः॥ ॥ १७ ॥ सर्वपाषंडधर्मज्ञःकदाचिद्ब्रह्मवाद्यभूत् ॥ ऐंद्रजालिकआसीच्चकदाचिद्भ्रामयञ्जनान् ॥ १८ ॥ नानाव्रतोपदेशैश्चकदाचित्सपतिव्रताः ॥ क्षोभयामासबहुशःसदृष्टांतकथानकैः ॥ १९ ॥ कापालिकव्रतधरःकदाचिच्चाभवद्द्विजः ॥ कदाचिदपिविज्ञानीधातुवादीकदाचन ॥ २० ॥ क्वचिद्विप्रःक्वचिद्राजपुत्रोवैश्योंत्यजःक्वचित् ॥ ब्रह्मचारीक्वचिदभूद्गृहीवनचरःक्वचित् ॥ २१ ॥ यतिःकदाचिदितिसरूपैरभ्रामयज्जनान् ॥ सर्वविद्यासुकुशलःसर्वज्ञश्चाभवत्क्वचित् ॥ २२ ॥

काणांमतंस्थापयामासेत्यर्थः ॥ तथाचश्रूयते ॥ प्रत्यक्षमेकंचार्वाकाइति ॥ १६ ॥ जटिलःपाशुपतोजटामात्रधारीवा ॥ जांगुलिकोवैद्यविशेषः ॥ एतस्यैवार्थमाह ॥ विषविद्याविशारदइति ॥ ॥ १७ ॥ सर्वःश्रीरुद्रस्तेननिर्मितःपाषंडधर्मोवेदविरुद्धशैवागमोक्तधर्मस्तंजानातीतिसर्वपाषंडधर्मज्ञः ॥ तथाचपाद्मे ॥ स्वागमैःकल्पितैस्त्वंचजनान्मद्विमुखान्कुर्वितिभगवद्वचनम् ॥ ब्रह्मवादी वेदवादी ॥ इंद्रजालंकुहकंतेनव्यवहरतीत्यैंद्रजालिकः॥१८॥ सदृष्टांतकथानकैर्दृष्टांतसहिताभिःकथाभिः ॥१९॥ कापालिकःशैवविशेषो लोकेयोगीतिप्रसिद्धस्तद्व्रतधरः ॥ द्विजःपक्षी ॥ द्विजोब्राह्मणःसनकापालिकव्रतधरइतिवा ॥ विज्ञानीब्रह्मज्ञानी ॥ धातुवादीस्वर्णादिसिद्धिवादी ॥ २०॥ अथवाकदाचिदभवद्द्विजइत्येतत्प्रपंचयति क्वचिद्विप्रइतिसार्धपादेन ॥२१॥ अभ्रामयद्भ्रामयामास ॥२२॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ २३ ॥ चिंतयार्तःपीडितः ॥ २४ ॥ चिंतामेवाह मंदरमितिचतुर्भिः ॥ तत्तदा ॥ २५ ॥ उररीकृत्यस्वीकृत्य ॥ तस्यविश्वेश्वरस्यपुरःकथंतिष्ठेस्थास्यामि ॥ २६ ॥ ओंकृत्यस्वीकृत्य ॥ अवहेलमवज्ञाम् ॥ चएवार्थे ॥ यामिचेतिसंबध्यते ॥ २७ ॥ पतंगतांशलभताम् ॥ २८ ॥ यस्मादेवंतत्तस्मादत्रैवस्थास्यामीति ॥ एवकारार्थमेवाह ॥ नत्यक्ष्यामीति ॥ २९ ॥ तर्हिकार्यानिवेदने पापंस्यात्तेत्याह ॥ पुरइति ॥ कार्यरूपमर्थंकार्यार्थमगोचरयित्वा इहकाश्यांतिष्ठतोमेयत्पापंभाविभविष्यतितस्यपापस्यकाशीनिष्कृतिःप्रायश्चित्तम् ॥ काशीवासइतिक्वचित्पाठः ॥ ३० ॥ नकेवलमेतस्यै वपापस्यकाशीनिष्कृतिःकिंत्वन्येषामपीत्याह ॥ अन्यान्यपीति ॥ सतामितिनप्रविशतांविशेषणंकिंतुकाशीप्रविष्टानांतथात्वात्तथोक्तम् ॥ ३१ ॥ किंच बुद्धीति ॥ आशासिशासितोहंकिंधर्मोहिरक्ष्यता

इतिनानाविधैरूपैश्वरन्काश्यांग्रहेश्वरः ॥ नकदापिजनेक्वापिच्छिद्रंप्रापकदाचन ॥ २३ ॥ ततोनिर्निंदचात्मानंचिंतार्तःकश्यपात्मजः ॥ धिक्परप्रेष्यतां यस्यांयशोलभ्येतनक्वचित् ॥ २४ ॥ ॥ मार्तंडउवाच ॥ ॥ मंदरंयदियाम्यद्यसद्यस्तत्क्रुद्धचतीश्वरः ॥ अनिष्पादितकार्यार्थेमयिसामान्यभृत्यवत् ॥ ॥ २५ ॥ कोपमप्युररीकृत्ययदियायांकथंचन ॥ कथंतिष्ठेपुरस्तस्यतर्हिवैमूढभृत्यवत् ॥ २६ ॥ अथोंकृत्यावहेलंवायामिचेच्चकथंचन ॥ क्रोधान्निरी क्षेत्र्यक्षोमांविषंपेयंतदामया ॥ २७ ॥ हरकोपानलेनूनंयदियातःपतंगताम् ॥ पितामहोपिमांत्रातुंतदाशक्ष्यतिनस्फुटम् ॥ २८ ॥ स्थास्याम्यत्रैवतान्नित्यं नत्यक्ष्यामिकदाचन ॥ क्षेत्रसंन्यासविधिनावाराणस्यांकृताश्रमः ॥ २९ ॥ पुरःपुरारेःकार्यार्थमनिवेद्येहतिष्ठतः ॥ यत्पापंभाविमेतस्यकाशीपापस्यनि ष्कृतिः ॥ ३० ॥ अन्यान्यपिचपापानिमहांत्यल्पानियानिच ॥ क्षयंतितानिसर्वाणिकाशींप्रविशतांसताम् ॥ ३१ ॥ बुद्धिपूर्वंमयाचैतन्नपापंसमुपार्जितम् ॥ पुरारिणैवहिपुराऽऽशासिधर्मोहिरक्ष्यताम् ॥ ३२ ॥ धर्मोहिरक्षितोयेनदेहेसत्वरगत्वरे ॥ त्रैलोक्यंरक्षितंतेनकिंकामार्थैःसुरक्षितैः ॥ ३३ ॥ रक्षणीयोय दिभवेत्कामःकामारिणाकथम् ॥ क्षणादनंगतांनीतोबहूनांसुखकार्यपि ॥ ३४ ॥ अर्थश्चेत्सर्वथारक्ष्यइतिकैश्चिदुदाहृतम् ॥ तत्कथंनहरिश्चंद्रोऽरक्षत्कुशिकनं दने ॥ ३५ ॥ धर्मस्तुरक्षितःसर्वैरपिदेहव्ययेनच ॥ शिबिप्रभृतिभूपालैर्दधीचिप्रमुखैर्द्विजैः ॥ ३६ ॥ अयमेवहिवैधर्मःकाशीसेवनसंभवः ॥ रुषितादपि रुद्रान्मांरक्षिष्यतिनसंशयः ॥ ३७ ॥ अवाप्यकाशींदुष्प्रापांकोजहातिसचेतनः ॥ रत्नंकरस्थमुत्सृज्यकःकाचंसंजिघृक्षति ॥ ३८ ॥

मिति ॥ रक्षेतेतिपाठेधर्मरक्षतात्रिपुरारिणाधर्मोऽशासिरक्षितव्यइत्युक्तमित्यर्थः ॥ ३२ ॥ धर्मरक्षणेनापिकिंतत्राह ॥ धर्मोहीति ॥ सुरक्षितैःशोभनप्रकारेणरक्षितैरपिकामार्थैःकिं नकिमपी त्यर्थः ॥ ३३ ॥ कामार्थयोरक्षणाभावंतर्केणोपपादयति रक्षणीयइतिद्वयेन ॥ ३४ ॥ अरक्षदर्थमितिशेषः ॥ कुशिकनंदनेविश्वामित्रे ॥ ३५ ॥ एवंकामार्थयोररक्षणंतर्केणोपपाद्यधर्मस्यरक्षणंसाधयति ॥ धर्मस्त्विति ॥ शिबिर्हिशरणागतकपोतत्राणायस्वमांसंददाविति भारतेप्रसिद्धम् ॥ दधीचिस्तुयाचकेभ्योदेवेभ्यःस्वास्थीन्यददादितिचभागवते ॥ प्रभृतिप्रमुखशब्दाभ्यांकर्णजीमूतवाहनादयोगृ ह्यन्ते ॥ तथाचश्रूयते ॥ त्वचंकर्णःशिबिर्मांसंजीवंजीमूतवाहनः ॥ ददौदधीचिरस्थीनिकिंनदेयंमहात्मनामिति ॥ ३६ ॥ नन्वेवमपिरुद्रस्यरोषादनिष्टंभविष्यतितत्राह ॥ अयमिति ॥ ३७ ॥ ननुतथाप्येता



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वतानिर्वंधनालमित्याशंक्यकाशीमाहात्म्यंवर्णयन्काशीं प्राप्यप्राणिमात्रस्यगमनाभावंद्रढयति अवाप्येतिचतुर्भिः ॥ संजिघृक्षातिग्रहीतुमिच्छाति ॥ ३८ ॥ यियासतिगन्तुमिच्छाति ॥ किंपु नर्योगतइतिभावः ॥ निधानंनिधिम् ॥ ३९ ॥ ४० ॥ ४१ ॥ अनिष्टंस्वीकृत्यापिगमनाभावमाह कुपितइतिद्वाभ्याम् ॥ स्वात्मावबोधजंस्वस्यआत्मनाआत्मत्वेनेतियावत् ॥ योऽवबोधोज्ञानंतस्मा ज्जातम् ॥ स्वस्यात्मनोयोऽवबोधोनित्यशुद्धमुक्तस्वरूपत्वेनज्ञानंतस्माज्जातमितिवा ॥ ४२ ॥ खद्योताभानिरात्रौप्रकाशमानःक्षुद्रकीटविशेषःखद्योतो जुनीतिगौडेप्रसिद्धस्तत्सदृशानि ॥४३॥ ४४ ॥

वाराणसींसमुत्सृज्ययस्त्वन्यत्रयियासति ॥ हत्वानिधानंपादेनसोऽर्थमिच्छतिभिक्षया ॥ ३९ ॥ पुत्रमित्रकलत्राणिक्षेत्राणिचधनानिच ॥ प्रतिजन्मे हलभ्यंतेकाश्येकानैवलभ्यते ॥ ४० ॥ येनलब्धापुरीकाशीत्रैलोक्योद्धरणक्षमा ॥ त्रैलोक्यैश्वर्यदुष्प्रापंतेनलब्धंमहासुखम् ॥ ४१ ॥ कुपितोपिहिमे रुद्रस्तेजोहानिंविधास्यति ॥ काश्यांचलप्स्येतत्तेजोयद्वैस्वात्मावबोधजम् ॥ ४२ ॥ इतराणीहतेजांसिभासंतेतावदेवहि ॥ खद्योताभानियावन्नोजृंभते काशिजंमहः ॥ ४३ ॥ इतिकाशीप्रभावज्ञोजगच्चक्षुस्तमोनुदः ॥ कृत्वाद्वादशधात्मानंकाशीपुर्यांव्यवस्थितः ॥ ४४ ॥ लोलार्कउत्तरार्कश्चसांबादि त्यस्तथैवच ॥ चतुर्थोद्रुपदादित्योमयूखादित्यएवच ॥ ४५ ॥ खखोल्कश्चारुणादित्योवृद्धकेशवसंज्ञकौ ॥ दशमोविमलादित्योगंगादित्यस्तथैवच ॥ ॥ ४६ ॥ द्वादशश्चयमादित्यःकाशिपुर्यांघटोद्भव ॥ तमोऽधिकेभ्योदुष्टेभ्यःक्षेत्रंरक्षंत्यमीसदा ॥ ४७ ॥ तस्यार्कस्यमनोलोलंयदासीत्काशिदर्शने ॥ अतोलोलार्कइत्याख्याकाश्यांजाताविवस्वतः ॥ ४८ ॥ लोलार्कस्त्वसिसंभेदेदक्षिणस्यांदिशिस्थितः ॥ योगक्षेमंसदाकुर्यात्काशीवासिजनस्यच ॥ ॥ ४९ ॥ मार्गशीर्षस्यसप्तम्यांषष्ठ्यांवारविवासरे ॥ विधायवार्षिकींयात्रांनरःपापैःप्रमुच्यते ॥ ५० ॥ कृतानियानिपापानिनरैःसंवत्सरावधि ॥ नश्यं तिक्षणतस्तानिषष्ठ्यर्केलोलदर्शनात् ॥ ५१ ॥ नरःस्नात्वासिसंभेदेसंतर्प्यपितृदेवताः ॥ श्राद्धंविधायविधिनापित्रानृण्यमवाप्नुयात् ॥५२॥ लोलार्कसं गमेस्नात्वादानंहोमंसुरार्चनम् ॥ यत्किंचित्क्रियतेकर्मतदानंत्यायकल्पते ॥ ५३ ॥ सूर्योपरागेलोलार्केस्नानदानादिकाःक्रियाः ॥ कुरुक्षेत्राद्दशगुणाभवं तीहनसंशयः ॥ ५४ ॥ लोलार्केरथसप्तम्यांस्नात्वागंगासिसंगमे ॥ सप्तजन्मकृतैःपापैर्मुक्तोभवतितत्क्षणात् ॥ ५५ ॥

॥ ४५ ॥ ४६ ॥ तमोधिकेभ्यआत्यन्तिकतामसेभ्यः ॥ ४७ ॥ लोलार्कनामनिर्वक्ति ॥ तस्यार्कस्येति ॥ लोलमानन्दितम् ॥ ४८ ॥ ४९ ॥ ५० ॥ षष्ठ्यर्केषष्ठ्यायुक्तेऽर्कदिने ॥ ॥५१॥५२॥ लोलार्कसङ्गमेलोलार्कसमीपेसङ्गमोलोलार्केणवासङ्गमःलोलार्कसंगमस्तस्मिन् ॥ लोलार्कसम्भवइतिपाठे लोलार्कस्यसम्भवोयस्मिन्संगमेतस्मिन्नित्यर्थः ॥ ५३ ॥ ५४ ॥ रथसप्तम्यां

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

माघशुक्लसप्तम्याम् ॥ ५५ ॥ ५६ ॥ पामाविचर्चिकयोरवान्तरभेदः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ आप्येतआप्यते ॥ ६१ ॥ नन्वादित्योवैयूपोयजमानःप्रस्तरइत्यादिवदर्थ वादोभविष्यतिनेत्याह ॥ नार्थवादोयमिति ॥ यथाऽयमर्थवादोनभवतितथापूर्वमेवव्याख्यातमिति ॥ ६२ ॥ ६३ ॥ अर्थवादवक्तॄणांदोषंस्वयमेवाह ॥ उदाहरतीति ॥ ६४ ॥ ६५ ॥ ॥ ६६ ॥ किंच तस्यांदिशिदुष्टानांप्रवेशोप्यत्रनास्तीत्याह ॥ लोलार्केति ॥ लोलार्कस्यकरैरश्मिभिर्निष्टप्तादग्धाअसिर्नदीतस्याधारयाप्रवाहेणविखंण्डितागतिवैकल्यम्प्रापिताःमहामलाअपिका



प्रत्यर्कवारंलोलार्कंयःपश्यतिशुचिव्रतः ॥ नतस्यदुःखंलोकेस्मिन्कदाचित्संभविष्यति॥५६॥ नतस्यदुःखंनोपामानदद्रुर्नविचर्चिका ॥ लोलार्कमर्केयः पश्येत्तत्पादोदकसेवकः ॥ ५७ ॥ वाराणस्यामुषित्वापियोलोलार्कंनसेवते ॥ सेवंतेतंनरंनूनंक्लेशाःक्षुद्व्याधिसंभवाः ॥ ५८ ॥ सर्वेषांकाशितीर्थानांलो लार्कःप्रथमंशिरः ॥ ततोंऽगान्यन्यतीर्थानितज्जलप्लावितानिहि ॥ ५९ ॥ तीर्थांतराणिसर्वाणिभूमीवलयगान्यपि ॥ असिसंभेदतीर्थस्यकलांनार्हं तिषोडशीम् ॥ ६० ॥ सर्वेषामेवतीर्थानांस्नानाद्यल्लभ्यतेफलम् ॥ तत्फलंसम्यगाप्येतनरैर्गंगासिसंगमे ॥ ६१ ॥ नार्थवादोयमुदितःस्तुतिवादोनवै मुने ॥ सत्यंयथार्थवादोयंश्रद्धेयःसद्भिरादरात् ॥ ६२ ॥ यत्रविश्वेश्वरःसाक्षाद्यत्रस्वर्गतरंगिणी ॥ मिथ्यातत्रानुमन्यंतेतार्किकाश्चानुसूयकाः ॥ ६३ ॥ उदाहरंतियेमूढाःकुतर्कबलदर्पिताः ॥ काश्यांसर्वेर्थवादोयंतेविट्कीटायुगेयुगे ॥ ६४ ॥ कस्यचित्काशितीर्थस्यमहिम्नोमहतस्तुलाम् ॥ नाधिरोहेन्मुने नूनमपित्रैलोक्यमंडपः ॥ ६५ ॥ नास्तिकावेदबाह्याश्चशिश्नोदरपरायणाः ॥ अंत्यजाताश्चयेतेषांपुरःकाशीनवर्ण्यताम् ॥ ६६ ॥ लोलार्ककरनि ष्टप्ताअसिधारविखंडिताः ॥ काश्यांदक्षिणदिग्भागेनविशेयुर्महामलाः ॥६७॥ महिमानमिमंश्रुत्वालोलार्कस्यनरोत्तमः ॥ नदुःखीजायतेक्वापिसंसारेदुः खसागरे ॥ ६८ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेलोलार्कवर्णनंनामषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥

स्कंदउवाच ॥ ॥ अथोत्तरस्यामाशायांकुं डमर्काख्यमुत्तमम् ॥ तत्रनाम्नोत्तरार्केणरश्मिमालीव्यवस्थितः ॥ १ ॥

शीस्थद्वेषिणोवानविशेयुर्नप्रविशन्तीतिपक्षांतरेलोलार्काणांतत्सदृशानांतेजस्विनांशूराणांकरैर्हस्तैर्निष्टप्तानितरान्ताडितास्तेषामेवासिधारयाखड्गधारयाविखण्डिताविशेषेणखण्डिताःखड्गच्छेदंप्रापिताय थानविशन्तीतिशब्दश्लेषालङ्कारोयम् ॥ ६७ ॥ ६८ ॥ ॥ इतिश्रीरामानन्दविरचितायांकाशीखण्डटीकायांषट्चत्वारिंशोध्यायः ॥ ४६ ॥ चत्वारिंशेथसप्तोर्ध्वेऽध्यायेपरमपावने ॥ उत्तरार्कस्यमाहात्म्यंवर्ण्यतेऽतिमनोहरम् ॥ १ ॥ लोलार्कउत्तरार्कश्चेत्यादिनाद्वादशादित्याउपक्षिप्तास्तत्रलोलार्कस्यसम्भवंमाहात्म्यंचोक्त्वोत्तरार्कस्यापितेआह ॥ अथेति ॥ रश्मिमालीसूर्यः ॥ १ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तस्यकृत्यमाह ॥ तापयन्निति ॥ २ ॥ ३ ॥ शुभव्रतानाम्ना ॥ ४ ॥ सुलक्षणांनाम्ना ॥ ५ ॥ मूलर्क्षस्यमूलनक्षत्रस्यप्रथमेपादेतथाबृहस्पतौकेंद्रेलग्नचतुर्थदशमसप्तमान्यतमास्मिन्राशौस्थितेसति ॥ ६ ॥ ७ ॥ समैधिष्टअवर्धत ॥ ८ ॥ ९ ॥ कस्मैदत्तासतीयंसुखंलभेत् ॥ दत्त्वासुखंलभइतिकाचित् ॥ १० ॥ ११ ॥ तन्मूलर्क्षविपाकेनकन्यायामूलनक्षत्रफलेन ॥ तत्तदे

तापयन्दुःखसंघातंसाधूनाप्याययन्रविः ॥ उत्तरार्कोमहातेजाःकाशींरक्षतिसर्वदा ॥ २ ॥ तत्रेतिहासोयोवृत्तस्तंनिशामयसुव्रत ॥ विप्रःप्रियव्रतोनामकश्चिदात्रेयवंशजः ॥ ३ ॥ आसीत्काश्यांशुभाचारःसदातिथिजनप्रियः ॥ भार्याशुभव्रतातस्यबभूवातिमनोहरा ॥ ४ ॥ भर्तृशुश्रूषणरतागृहकर्मसुपेशला ॥ तस्यांसजनयामासकन्यामेकांसुलक्षणाम् ॥ ५ ॥ मूलर्क्षप्रथमेपादेतथाकेंद्रेबृहस्पतौ ॥ ववृधेसागृहेपित्रोःशुक्लेपक्षेयथाशशी ॥ ६ ॥ सुरूपाविनयाचारापित्रोश्चप्रियकारिणी ॥ अतीवनिपुणाजातागृहोपस्करमार्जने ॥ ७ ॥ यथायथासमैधिष्टसाकन्यापितृमंदिरे ॥ तथातथापितुस्तस्याश्चिंतासंववृधेतराम् ॥ ८ ॥ कस्मैदेयावराकन्यासुरम्येयंसुलक्षणा ॥ अस्याअनुगुणोलभ्यःक्रमयावरउत्तमः ॥ ९ ॥ कुलेनवयसाचापिशीलेनापिश्रुतेनच ॥ रूपेणार्थेनसंयुक्तःकस्मैदत्तासुखंलभेत् ॥ १० ॥ इतिचिंतयतस्तस्यज्वरोभूदतिदारुणः ॥ यश्चिंताख्योज्वरःपुंसामौषधैर्नापिशाम्यति ॥ ११ ॥ तन्मूलर्क्षविपाकेनचिंताख्येनज्वरेणच ॥ सविप्रःपंचतांप्राप्तस्त्यक्त्वासर्वंगृहादिकम् ॥ १२ ॥ पितर्युपरतेतस्याःकन्यायाःसाजनन्यपि ॥ शुभव्रतापरित्यज्यतांकन्यांपतिमन्वगात् ॥ १३ ॥ धर्मोयंसहचारिण्याजीवताजीवतापिवा ॥ पत्यासहैवस्थातव्यंपतिव्रतयुजासदा ॥ १४ ॥ नापत्यंपातिनोमातानपितानैवबांधवाः ॥ पत्युश्चरणशुश्रूषापायाद्वैकेवलंस्त्रियम् ॥ १५ ॥ सुलक्षणापिदुःखार्तापित्रोःपंचत्वमाप्तयोः ॥ और्ध्वदैहिकमापाद्यदशाहंविनिवर्त्यच ॥ ॥ १६ ॥ चिंतामवापमहतीमनाथादैन्यमागता ॥ कथमेकाकिनीपित्रामात्राहीनाभवांबुधेः ॥ १७ ॥ दुस्तरंपारमाप्स्यामिस्त्रीत्वंसर्वाभिभावियत् ॥ नकस्मैचिद्वरायाहंपितृभ्यांप्रतिपादिता ॥ १८ ॥ तददत्ताकथंस्वैरमहमन्यंवरंवृणे ॥ वृतोपिनकुलीनश्चेद्गुणवान्नचशीलवान् ॥ १९ ॥ स्वाधीनोपिनतत्तेनवृतेनापिहिकिंभवेत् ॥ इतिसंचिंतयंतीसारूपौदार्यगुणान्विता ॥ २० ॥ युवभिर्बहुभिर्नित्यंप्रार्थितापिमुहुर्मुहुः ॥ नकस्यापिददौबालाप्रवेशंनिजमानसे ॥ २१ ॥ पित्रोरुपरतिंदृष्ट्वावात्सल्यंचतथाविधम् ॥ निनिंदबहुधात्मानंसंसारंचनिनिंदह ॥ २२ ॥ याभ्यामुत्पादिताचाहंयाभ्यांचपरिपालिता ॥ पितरौकुत्रतौयातौदेहिनोधिगनित्यताम् ॥ २३ ॥

तिवा ॥ पंचतांमरणम् ॥ १२ ॥ पतिमन्वगादत्ताग्निंपतिदेहमनुस्वयमग्नौविवेशेत्यर्थः ॥ १३ ॥ अनुगमनेहेतुमाह ॥ धर्मोयमिति ॥ १४ ॥ पत्यासहैवस्थातव्यमित्यत्रापिहेतुमाह ॥ नापत्यमिति ॥ १५ ॥ और्ध्वदैहिकम् ॥ द्वादशाहपिंडादि ॥ १६ ॥ १७ ॥ स्वैरमिभवितुंशीलंयस्यतत्सर्वाभिभावि ॥ १८ ॥ गुणवान्नचेदित्यनुषज्जते ॥ १९ ॥ तत्तदा ॥ २० ॥ २१ ॥ २२ ॥ देहिनोधिगनित्यतां

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यथाममपुरोऽग्रतःपित्रोरंगत्वंत्वमत्ययोऽत्राविवक्षितः ॥ अंगमित्यर्थः ॥ तथाममापिदेहोवि
देहिनोजीवस्यानित्यतांप्रतिधिगस्त्वित्यर्थः ॥ २३ ॥ अहोइति ॥ अहोखेदे ॥ खेदातिशयार्थावीप्सा ॥
॥ २८ ॥ २९ ॥ करुणाआत्मनियस्यास्तयादयास्वरूपयेतिवा ॥
नाशीत्यर्थः ॥ अयंदेहोप्यहोगंतेतिपाठेस्पष्टएवार्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ पंचषासुपंचसुषट्सुवासमासुसंवत्सरेषु ॥ २८ ॥ २९ ॥
॥ ३० ॥ ३१ ॥ ३२ ॥ मुखपीयूषवर्षिणीमास्यामृतस्राविणीम् ॥ उदमीलयत्व्यकासयत् ॥ ३३ ॥ ३४ ॥
यादेवीसर्वभूतेषुदयारूपेणसंस्थितेत्युक्तेः ॥ करुणायुक्तात्मनेतिव्यधिकरणंवा ॥ ३० ॥ ३१ ॥ ३२ ॥

अहोदेहोप्यहोगंत्वंयथापित्रोःपुरोमम ॥ इतिनिश्चित्यसाबालाविजितेंद्रियमानसा ॥ २४ ॥ ब्रह्मचर्यंदृढंकृत्वातपउग्रंचचारह ॥ उत्तरार्कस्यदेवस्यसमी पेस्थिरमानसा ॥२५॥ तस्यांतपस्यमानायामेकाच्छागीलघीयसी ॥ तत्रप्रत्यहमागत्यातिष्ठेत्तत्पुरतोऽचला ॥२६॥ तृणपर्णादिकंकिंचित्सायमभ्यवहृत्यसा ॥ तत्कुंडपीतपानीयास्वस्वामिसदनंव्रजेत् ॥ २७ ॥ ततइत्थंव्यतीतासुपंचषासुसमासुच ॥ लीलयाविचरन्देवस्तत्रदेव्यासहागतः ॥ २८ ॥ सन्निधावुत्तरार्कस्यतपस्यंतींसुलक्षणाम् ॥ स्थाणुवन्निश्चलांस्थाणुरद्राक्षीत्तपसाकृशाम् ॥२९॥ ततोगिरिजयाशंभुर्विज्ञप्तःकरुणात्मना ॥ वरेणानुगृहाणेमांबंधुहीनांसुमध्यमाम् ॥ ३० ॥ शर्वाणीगिरमाकर्ण्यततःशर्वःकृपानिधिः ॥ समाधिमीलिताक्षींतामुवाचवरदोहरः ॥ ३१ ॥ सुलक्षणेप्रसन्नोस्मिवरं वरयसुव्रते ॥ चिरंखिन्नासितपसाकस्तेऽस्तीहमनोरथः ॥३२॥ सापिशंभोर्गिरंश्रुत्वामुखपीयूषवर्षिणीम् ॥ महासंतापशमनींलोचनेउदमीलयत् ॥३३॥ त्र्यक्षंप्रत्यक्षमावीक्ष्यवरदानोन्मुखंपुरः ॥ देवींचवामभागस्थांप्रणनामकृतांजलिः ॥ ३४ ॥ किंवृणेयावदित्थंसाचिंतयेच्चारुमध्यमा ॥ तावत्तयानिरैक्षिष्टवराकीबर्करीपुरः ॥ ३५ ॥ आत्मार्थंजीवलोकेस्मिन्कोनजीवातिमानवः ॥ परंपरोपकारार्थंयोजीवतिसजीवति ॥ ३६ ॥ अनयामत्तपोवृत्तिसाक्षिण्याबह्वनेहसम् ॥ असेव्यहंतदेतस्यैवरयामिजगत्पतिम् ॥ ३७ ॥ परामृश्यमनस्येतत्प्राहत्र्यक्षंसुलक्षणा ॥ कृपानिधेमहादेवयादिदेयोवरोमम ॥ ॥ ३८ ॥ अजशावीवराक्येषातर्हिप्रागनुगृह्यताम् ॥ वक्तुंपशुत्वान्नोवेत्तिकिंचिन्मद्भक्तिपेशला ॥ ३९ ॥ इतिवाचंनिशम्येशःपरोपकृतिशालिनीम् ॥ सुलक्षणायानितरांतुतोषप्रणतार्तिहा ॥ ४० ॥ देवदेवस्ततःप्राहदेविपश्यगिरींद्रजे ॥ साधूनामीदृशीबुद्धिःपरोपकरणोर्जिता ॥ ४१ ॥ तेधन्याःसर्वलोकेषुसर्वधर्माश्रयाश्चते ॥ यतंतेसर्वभावेनपरोपकरणाययै ॥४२॥ संचयाःसर्ववस्तूनांचिरंतिष्ठंतिनोक्वचित् ॥ सुचिरंतिष्ठतेचैकंपरोपकरणंप्रिये ॥४३॥ धन्यासुलक्षणाचैषायोग्याऽनुग्रहकर्मणि ॥ ब्रूहिदेविवरोदेयःकोऽस्यैच्छाग्यैचकःप्रिये ॥ ४४ ॥ ॥ श्रीदेव्युवाच ॥ ॥ सर्वसृष्टिकृतांकर्तःसर्वज्ञप्रणतार्तिहन् ॥ सुलक्षणाशुभाचारासखीमेस्तुशुभोद्यमा ॥ ४५ ॥ यथाजयाचविजयायथाचैवजयंतिका ॥ शुभानंदासुनंदाचकौमुदीचयथोर्मिला ॥ ४६ ॥

निरीक्षिष्टदृष्टा ॥ वराकीतुच्छा ॥ बर्करीच्छागी ॥ ३५ ॥ ३६ ॥ बह्वनेहसंबहुकालम् ॥ असेविसेविता ॥ अहंसुलक्षणा ॥ तत्तस्मात् ॥ एतस्यैएतदर्थम् ॥ ३७ ॥ ३८ ॥ अजशावीच्छागसुता ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ अनुग्रहकर्मणिअनुकूलकार्येयोग्या ॥ अस्यैसुलक्षणायै ॥ ४४ ॥ शुभायोद्यमोयस्याःसाशुभोद्यमा ॥ ४५ ॥ जयतिसर्वोत्कर्षेणतिष्ठतीतिजया ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विशेषेणजयतिविजया ॥ अन्यासामपियथायथंनामनिर्वचनंज्ञेयम् ॥ ४६ ॥ ४७ ॥ ४८ ॥४९॥५० ॥ ५१ ॥ समयामांमत्समीपे ॥ चंचच्चामरधारिणीस्फुरद्वालव्यजनहस्ता ॥५२॥ एषापिवर्करी
तिसंबंधः ॥ इहकाश्याम् ॥ अत्रैवकाश्यामेवेतिशब्देनेश्वरीच्छयाभगवतईश्वरस्यवरदानाच्चकाश्यांमृतायाअपिवर्कर्यादेहसंबंधइतिद्योत्यते ॥ नह्यघटितघटनापटीयस्यास्तस्याःकर्तुमकर्तुमन्यथाकर्तुं
समर्थस्यतस्यचनकिमप्यशक्यमितिभावः ॥ केनचिन्निमित्तेनक्षेत्राद्बहिर्निःसृत्यमृतासत्यत्रोत्पन्नेतिवाज्ञेयम् ॥ ५३ ॥ अक्षुब्धाचित्तयास्थिरांतःकरणया ॥ ५४ ॥ ५५ ॥ बर्करीकुंडमिति ॥ तुशब्देन

यथाचंपकमालाचयथामलयवासिनी ॥ कर्पूरलतिकायद्वद्गंधधारायथाशुभा ॥ ४७ ॥ अशोकाचविशोकाचयथामलयगंधिनी ॥ यथाचंदननिः
श्वासायथामृगमदोत्तमा ॥ ४८ ॥ यथाचकोकिलालापायथामधुरभाषिणी ॥ गद्यपद्यनिधिर्यद्वदनुक्तज्ञायथाचसा ॥ ४९ ॥ दृगंचलेंगितज्ञाचय
थाकृतमनोरथा ॥ गानचित्तहरायद्वत्तथास्त्वेषासुलक्षणा ॥ ५० ॥ अतिप्रियाभवित्रीमेयद्बालब्रह्मचारिणी ॥ अनेनैवशरीरेणदिव्यावयवभूषणा ॥
॥ ५१ ॥ दिव्यांबरादिव्यगंधादिव्यज्ञानसमन्विता ॥ समयामांसदैवास्तांचंचच्चामरधारिणी ॥ ५२ ॥ एषापिकाशिराजस्यकुमार्यस्त्विहबर्करी ॥
अत्रैवभोगान्संप्राप्यमुक्तिंप्राप्स्यत्यनुत्तमाम् ॥ ५३ ॥ अनयात्वर्ककुंडेस्मिन्पुष्येमासिरवेर्दिने ॥ स्नातंत्वनुदितेसूर्येशीतादक्षुब्धचित्तया ॥ ५४ ॥
राजपुत्रीततःपुण्यादस्त्वेषाशुभलोचना ॥ वरदानप्रभावेणतवविश्वेश्वरप्रभो ॥ ५५ ॥ बर्करीकुंडमित्याख्यात्वर्ककुंडस्यजायताम् ॥ एतस्याःप्रतिमापू
ज्याभविष्यत्यत्रमानवैः ॥ ५६ ॥ उत्तरार्कस्यदेवस्यपुष्येमासिरवेर्दिने ॥ कार्यासांवत्सरीयात्रानतैःकाशीफलेप्सुभिः ॥५७॥ मृडान्याभिहितंसर्वंकृत्वै
तद्विश्वगोविभुः ॥ विश्वनाथोविवेशाथप्रासादंस्वमतर्कितः ॥ ५८ ॥ ॥ स्कंदउवाच ॥ ॥ लोलार्कस्यचमाहात्म्यमुत्तरार्कस्यचाद्विज ॥ कथितंते
महाभागसांबादित्यंनिशामय ॥ ५९ ॥ श्रुत्वैतत्पुण्यमाख्यानंशुभंलोलोत्तरार्कयोः ॥ व्याधिभिर्नाभिभूयेतनदारिद्र्येणबाध्यते ॥ ६० ॥ इतिश्रीस्कां
देमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेउत्तरार्कवर्णनंनामसप्तचत्वारिंशोध्यायः ॥ ४७ ॥ स्कंदउवाच ॥ ॥ शृणुष्वमैत्राव
रुणेद्वारवत्यांयदूद्वहः ॥ दानवानांवधार्थायभुवोभारापनुत्तये ॥ १ ॥

कुंडांतरादस्यकुंडस्याधिक्यंद्योत्यते ॥ एतस्याःवर्कर्याः ॥ ५६ ॥ नतैर्नम्रैर्भक्तैरितियावत् ॥ नरैरितिवापाठः ॥ ५७ ॥ ५८ ॥ ५९ ॥ श्रुत्वेति ॥ एतदध्यायद्वयेनोक्तम् ॥ लोलार्कस्यात्रकथनं
श्रवणफलख्यापनाय ॥ ६० ॥ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांसप्तचत्वारिंशोध्यायः ॥ ४७ ॥ ॥ छ ॥ अष्टाधिकेथचत्वारिंशकेध्यायेमनोरमे ॥ सांबादित्यस्यमाहिमावर्ण्य
तेतिस्फुटःशुभः ॥ १ ॥ सांबादित्योत्पत्तिंवक्तुंश्रोतॄनभिमुखीकुर्वन्नुपोद्घातंरचयति ॥ शृणुष्वेति ॥ आत्मनेपदमार्षम् ॥ श्लोकचतुष्टयंवाक्यम् ॥ द्वारवत्यांस्वयंकृष्णःसदानंदरूपोदेवक्यांवसुदेवतः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सकाशाद्वासुदेवनामाजगद्धामजगतामाश्रयआविरासीत्तस्यसाशीतिलक्षमशीत्यासहलक्षंसाशीतिलक्षंकुमाराआसन्नित्यन्वयः ॥ एकषष्टिसहस्रंचान्यद्वोद्धव्यम् ॥ किमर्थमाविरासीत्तदाह ॥ दानवाना
मिति ॥ १ ॥ २ ॥ कुमारान्विशिनष्टि स्वर्गेपीतिसार्धेन ॥ ३ ॥ ४ ॥ यस्यांद्वारकायामाविरासीत्तांद्वारकांद्रष्टुंनारदआजगामेतिचतुर्थेनान्वयः ॥ तानितिपाठेतान्बालकान्द्रष्टुमित्यर्थः ॥
नारदंविशिनष्टि मानसःपुत्रोब्रह्मणइत्यादिना ॥ तपसांनिधिराश्रयः ॥ कृतंवल्कलेनकौपीनंयेनसः ॥ कृतंकृष्णाजिनमेवांबरंयेनसः ॥ ५ ॥ गृहीतोब्रह्मदंडोब्रह्मचारियोग्योदंडोयेनसः ॥ त्रिवृत्त्रि
गुणितामौंजीमुंजनिर्मितामेखलायस्यसः ॥ उरस्थलेउरस्थलेनवालसंतीयातुलसीमालातयासमलंकृतः ॥ उरस्थलस्थेतिक्वचित्पाठः ॥ लसज्जलस्थेतिपाठेलसंतीयाजलस्थाऽऽर्द्रातुलसीमालातयेत्यर्थः
॥ ६ ॥ गोपीचंदननिर्यासेनरसेनगोपीचंदननिर्यासएववालसदंगविलेपनंयस्यसः ॥ मूर्तश्चासावुत्कृष्टोज्वलनश्चेतिमूर्तोज्ज्वलनस्तद्वत् ॥ मूर्तोज्वलनवदितिपाठेतद्धितार्थोपसर्जनस्यापिज्वलनस्यमूर्तइति

आविरासीत्स्वयंकृष्णःकृष्णवर्त्मप्रतापवान् ॥ वासुदेवोजगद्धामदेवक्यांवसुदेवतः ॥२॥ साशीतिलक्षंतस्यासन्कुमाराअर्कवर्चसः ॥स्वर्गेपिताद्दशाबालाः सुशीलानहिकुंभज ॥ ३ ॥ अतीवरूपसंपन्नाअतीवसुमहाबलाः ॥ अतीवशस्त्रशास्त्रज्ञाअतीवशुभलक्षणाः ॥ ४ ॥ तांद्रष्टुंमानसःपुत्रोब्रह्मणस्तपसां निधिः ॥ कृतवल्कलकौपीनोधृतकृष्णाजिनांबरः ॥५॥ गृहीतब्रह्मदंडश्चत्रिवृन्मौंजीसुमेखलः ॥ उरस्थलस्थतुलसीमालयासमलंकृतः ॥ ६ ॥ गोपी चंदननिर्यासलसदंगविलेपनः ॥ तपसाकृशसर्वांगोमूर्तोज्वलनवज्ज्वलन् ॥७॥ आजगामांबरचरोनारदोद्वारकांपुरीम् ॥ विश्वकर्मविनिर्माणांजितस्वर्ग पुरीश्रियम् ॥८॥ तंदृष्ट्वानारदंसर्वेविनम्रतरकंधराः ॥ प्रबद्धमूर्धांजलयःप्रणेमुर्वृष्णिनंदनाः ॥ ९ ॥ सांबःस्वरूपसौंदर्यगर्वसर्वस्वमोहितः ॥ नननामसु नितंव्रहसंस्तद्रूपसंपदम् ॥ १० ॥ सांबस्यतमभिप्रायंविज्ञायसमहामुनिः ॥ विवेशसुमहारम्यंनारदःकृष्णमंदिरम् ॥ ११ ॥ कृष्णोथदृष्ट्वाऽऽगच्छंतं प्रत्युद्गम्यचनारदम् ॥ मधुपर्केणसंपूज्यस्वासनेचोपवेशयत् ॥ १२ ॥ कृत्वाकथाविचित्रार्थास्ततएकांतवर्तिनः ॥ कृष्णस्यकर्णेऽकथयन्नारदःसांबचे ष्टितम् ॥ १३ ॥ अवश्यंकिंचिदत्राऽस्तियशोदानंदवर्धन ॥ प्रायशस्तन्नघटतेऽसंभाव्यंनाथवास्त्रियाम् ॥ १४ ॥ यूनांत्रिभुवनस्थानांसांबोऽतीवसु रूपवान् ॥ स्वभावचंचलाक्षीणांचेतोवृत्तिःसुचंचला ॥ १५ ॥ अपेक्षंतेनमुग्धाक्ष्यःकुलंशीलंश्रुतंधनम् ॥ रूपमेवसमीक्षंतेविषमेषुविमोहिताः ॥१६॥ अथवाविदितंनोतेबल्लवीनांविचेष्टितम् ॥ विनाष्टौनायिकाःकृष्णकामयंतेऽबलाह्यमुम् ॥ १७ ॥ वामभ्रुवांस्वभावाच्चनारदस्यचवाक्यतः ॥ विज्ञाता ऽखिलवृत्तांतस्तथ्यंकृष्णोप्यमन्यत ॥ १८ ॥

विशेषणंछांदसम् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ उपवेशयदुपावेशयत् ॥ अडभावआर्षः ॥ १२ ॥ १३ ॥ अवश्यमिति ॥ हेयशोदानंदवर्धनअत्रांतःपुरेकिंचिदस्तिकिंतुप्रायशस्तन्नघटते ॥
अथवास्त्रियामसंभाव्यंनापितुसर्वंसंभाव्यमित्यर्थः ॥ १४ ॥ किंचिच्छब्दोक्तमेवदर्शयति यूनामितिद्वयेन ॥ इवैवार्थे ॥ शोभनरूपवानेवेत्यर्थः ॥ सरूपवानितिपाठेससांबः ॥ १५ ॥ विषमेषुः
कामस्तेनमोहिताः ॥ १६ ॥ एवंसामान्येनोक्तंविशेषतोभिनयेनदर्शयति ॥ बल्लव्योत्रनार्यः ॥ अतएवगोपालस्तवराजेवल्लवीनंदनमित्यत्रवल्लभामित्यपिकेचनपठंति ॥ अथवागोपवेषधारित्वाद्बल्लवः
श्रीकृष्णस्तत्पत्न्योबल्लव्यस्तासांतवभार्याणामित्यर्थः ॥ अष्टौरुक्मिणीसत्यानाग्नजितीसुनंदामित्रविंदासुदक्षिणाजांबवतीसुशीलानायिकाःपट्टमहिषीः ॥ अमुंसांबम् ॥ १७ ॥ वामभ्रुवामितिस्कंद



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वाक्यम् ॥ १८ ॥ तावदितिश्लोकत्रयंवाक्यम् ॥ विजनस्थोयावदर्थीप्रार्थकोनभवेत्तावदेवधैर्यंचेतोविवेकिताच ॥ विविक्तेऽर्थिनिसतितद्द्वयंनकिंत्वन्यथाअधैर्यमविवेकित्वंचे त्यर्थः ॥ १९ ॥ विवेचयंश्चिंतयन् ॥ क्रोधएवनदीतस्यारयंवेगंविवेकएवसेतुबंधस्तेनाऽऽस्तभ्यनिवार्य ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ चिंतामेवाह कथमितिसार्धैश्चतुर्भिः ॥ स्त्रीणांसमूहःस्त्रैणंसएवसखायस्यतम् ॥ २४ ॥ २५ ॥ व्रीडितउपहासितः ॥ २६ ॥ अत्याहितंमहाभीतिःतच्चतदागोद्वयंचापराधद्वयंतद्दर्शनात् ॥ २७ ॥ दावदग्धवद्वनाग्निदग्धइव ॥ २८ ॥ इतीति ॥ इतिक्षणंध्यात्वाससांबःपितुरंतःपुरमविशत् ॥ ततोमध्येस्त्रैणसभंस्त्रैणसभामध्येकृष्णंयावद्विज्ञप्तिंचकारतावन्नारदस्तंसांबमन्वगच्छदितिद्वयोरन्वयः ॥ स्त्रैणसखमितिक्वचित् ॥ २९ ॥

तावद्धैर्यंचलाक्षीणांतावच्चेतोविवेकिता ॥ यावन्नार्थीविविक्तस्थोविविक्तेर्थिनिनान्यथा ॥ १९॥ इत्थंविवेचयंश्चित्तेकृष्णःक्रोधनदीरयम् ॥ विवेकसेतुना ऽऽस्तभ्यनारदंप्राहिणोत्सुधीः ॥२०॥ सांबस्यवैकृतंकिंचित्क्वचित्कृष्णोनवैक्षत ॥ गतेदेवमुनौतस्मिन्वीक्षमाणोप्यहर्निशम् ॥२१॥ कियत्यपिगतेकाले पुनरप्याययौमुनिः ॥ मध्येलीलावतीनांचज्ञात्वाकृष्णमवस्थितम् ॥ २२ ॥ बहिःक्रीडंतमाहूयसांबमित्याहनारदः ॥ याहिकृष्णांतिकंतूर्णंकथयागमनं मम ॥२३॥ सांबोपियामिनोयामिक्षणमित्थमचिंतयत् ॥ कथंरहःस्थंपितरंयामिस्त्रैणसखंप्रति ॥ २४ ॥ नयामिचकथंवाक्यादस्याहंब्रह्मचारिणः ॥ ज्वलदंगारसंकाशस्फुरत्सर्वांगतेजसः ॥ २५ ॥ प्रणमत्सुकुमारेषुव्रीडितोयंमयैकदा ॥ इदानीमपिनोयायामस्यवाक्यान्महामुनेः ॥ २६ ॥ अत्याहितं तदस्तीहतदागोद्वयदर्शनात् ॥ पितुःकोपोपिसुश्लाघ्योमयिनोब्राह्मणस्यतु ॥ २७॥ ब्रह्मकोपाग्निनिर्दग्धाःप्ररोहंतिनजातुचित् ॥ अपराग्निविनिर्दग्धारो हंतेदावदग्धवत् ॥ २८॥ इतिध्यात्वाक्षणंसांबोऽविशदंतःपुरंपितुः ॥ मध्येस्त्रैणसभंकृष्णंयावज्जांबवतीसुतः ॥ २९ ॥ दूरात्प्रणम्यविज्ञप्तिंसचकारसशं कितः ॥ तावत्तमन्वगच्छच्चनारदःकार्यसिद्धये ॥ ३० ॥ ससंभ्रमोथकृष्णोपिदृष्ट्वासांबंचनारदम् ॥ समुत्तस्थौपरिदधत्पीतकौशेयमंबरम् ॥ ३१ ॥ उत्थितेदेवकीसूनौताःसर्वाअपिगोपिकाः ॥ विलज्जिताःसमुत्तस्थुर्गृह्णंत्यःस्वंस्वमंबरम् ॥ ३२ ॥ महार्हशयनीयेतंहस्तेधृत्वामहामुनिम् ॥ समुपावे शयत्कृष्णःसांबश्चक्रीडितुंययौ ॥ ३३ ॥ तासांस्खलितमालोक्यतिष्ठंतीनांपुरोमुनिः ॥ कृष्णलीलाद्रवीभूतवरांगानांजगौहरिम् ॥ ३४ ॥ पश्य पश्यमहाबुद्धेदृष्ट्वाजांबवतीसुतम् ॥ इमाःस्खलितमापन्नास्तद्रूपक्षुब्धचेतसः ॥ ३५ ॥ कृष्णोपिसांबमाहूयसहसैवाशपत्सुतम् ॥ सर्वाजांबवतीतुल्याः पश्यंतमपिदुर्विधेः ॥ ३६ ॥ यस्मात्त्वद्रूपमालोक्यगोपाल्यःस्खलिताइमाः ॥ तस्मात्कुष्ठीभवक्षिप्रमकांडागमनेनच ॥ ३७ ॥

सशंकितःशंकयायुक्तः ॥ कार्यसिद्धयेसांबस्यशापदानाय ॥३०॥३१॥ गोपिकाइति ॥ गाइंद्रियाणिपांतीतिगोपादेवास्तदीयाभोग्याःस्त्रियोगोपिकाः ॥ अष्टावक्रस्यवरदानेनरुक्मिण्याद्यष्टमहिषी व्यतिरिक्तषोडशसहस्रैकशताप्सरसांभार्यात्वात् ॥ प्रसिद्धंचैतद्विष्णुपुराणादिषु ॥ द्वारकायांगोपस्त्रीणांकृष्णसंगत्यभावाच्चगोपिकाशब्दस्ययथोक्तएवार्थः ॥ ३२ ॥ ३३ ॥ तासामिति ॥ तासां स्खलितंवीर्यच्युतिमालोक्यनारदःकृष्णंजगावित्यन्वयः ॥ तासांस्खलनेहेतुगर्भंविशेषणमाह ॥ कृष्णलीलेति ॥ कृष्णेनसहलीलयाक्रीडयाद्रवीभूतानिआर्द्राणिजातानिवरांगानियोनयोयासां तासाम् ॥ ३४ ॥ किमुक्तवांस्तदाह ॥ पश्यपश्येति ॥ ३५ ॥ दुर्विधेर्दुरदृष्टाद्धेतोः ॥ ३६ ॥ गोपाल्यइत्यस्यपूर्ववदेवार्थः ॥ यद्वा गोपालरूपस्यभगवतःपत्न्यइतितुबल्लवीनामित्यत्रैवव्याख्यात

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मिति ॥ अकांडागमनेनानवसरागमनेन ॥ चःसमुच्चये ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ प्राकृतेभ्यःप्रकृतिकार्येभ्यः ॥ ४२ ॥ ४३ ॥ तत्त्वेरितंसत्यत्वेनकथितम् ॥ त्वरितमिति कश्चित् ॥ शापाभिमित्तान्निर्वृतिःसुखम् ॥ शापनिष्कृतिरितिक्वचित ॥ ४४ ॥ ततइति ॥ ततःकृष्णमनुज्ञाप्यनारदोव्योममार्गेणययौ ॥ कीदृशः ॥ कृतंकृत्यंयेनतथाविधःसन्नित्यर्थः ॥



वेपमानोमहाव्याधिभयात्सांबोपिदारुणात् ॥ कृष्णंप्रसादयामासबहुशःपापशांतये ॥ ३८ ॥ कृष्णोप्यनेनसंजानन्सांबंस्वसुतमौरसम् ॥ अब्रवीत्कुष्ठमोक्षायव्रजवैश्वेश्वरींपुरीम् ॥ ३९ ॥ तत्रत्र्यंबकमाराध्यप्रकृतिंस्वामवाप्स्यसि ॥ महैनसांक्षयोन्यत्रनास्तिवाराणसींविना ॥ ४० ॥ यत्रविश्वेश्वरःसाक्षाद्यत्रस्वर्गापगाचसा ॥ येषांमहैनसांदृष्टामुनिभिर्नैवनिष्कृतिः ॥ तेषांविशुद्धिरस्त्येवप्राप्यवाराणसींपुरीम् ॥ ४१ ॥ नकेवलंहिपापेभ्योवाराणस्यांविमुच्यते ॥ प्राकृतेभ्योपिपापेभ्योमुच्यतेशंकराज्ञया ॥ ४२ ॥ पुरापुरारिणासृष्टमविमुक्तंविमुक्तये ॥ सर्वेषामेवजंतूनांकृपयांतेतनुत्यजाम् ॥ ४३ ॥ तत्रानंदवनेशंभोस्तवशापनिराकृतिः ॥ सांबतत्त्वेरितंयाहिनान्यथाशापनिर्वृतिः ॥ ४४ ॥ ततःकृष्णंसमापृच्छयकर्मनिर्मुक्तचेष्टितः ॥ नारदःकृतकृत्यःसन्ययावाकाशवर्त्मना ॥ ४५ ॥ सांबोवाराणसींप्राप्यसमाराध्यांशुमालिनम् ॥ कुंडंतत्पृष्ठतःकृत्वानिजांप्रकृतिमाप्तवान् ॥ ४६ ॥ सांबादित्यस्तदारभ्यसर्वव्याधिहरोरविः ॥ ददातिसर्वभक्तेभ्योऽनामयाःसर्वसंपदः ॥ ४७ ॥ सांबकुंडेनरःस्नात्वारविवारेऽरुणोदये ॥ सांबादित्यंचसंपूज्यव्याधिभिर्नाभिभूयते ॥ ४८ ॥ नस्त्रीवैधव्यमाप्नोतिसांबादित्यस्यसेवनात् ॥ वंध्यापुत्रंप्रसूयेतशुद्धरूपसमन्वितम् ॥ ४९ ॥ शुक्लायांद्विजसतम्यांमाघेमासिरवेर्दिने ॥ महापर्वसमाख्यातंरविपर्वसमंशुभम् ॥ ५० ॥ महारोगात्प्रमुच्येतत्रस्नात्वारुणोदये ॥ सांबादित्यंप्रपूज्यापिधर्ममक्षयमाप्नुयात् ॥ ५१ ॥ सन्निहत्यांकुरुक्षेत्रेयत्पुण्यंराहुदर्शने ॥ तत्पुण्यंरविसप्तम्यांमाघेकाश्यांनसंशयः ॥ ५२ ॥ मधौमासिरवेर्वारेयात्रासांवत्सरीभवेत् ॥ अशोकैस्तत्रसंपूज्यकुंडेस्नात्वाविधानतः ॥ ५३ ॥ सांबादित्यंनरोजातुनशोकैरभिभूयते ॥ संवत्सरकृतात्पापाद्बहिर्भवतितत्क्षणात् ॥ ५४ ॥ विश्वेशात्पश्चिमाशायांसांबेनात्रमहात्मना ॥ सम्यगाराधितामूर्तिरादित्यस्यशुभप्रदा ॥ ५५ ॥

नतुपरानिष्टकरणेननारदस्यप्रत्यवायोभवेत्तत्राह ॥ कर्मनिर्मुक्तचेष्टितइति ॥ कर्मणाशुभाशुभादृष्टेननिर्मुक्तानिचेष्टितानियस्य सः ॥ तस्यजीवन्मुक्तत्वादितिभावः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ सेवनात्पूजनात् ॥ अयमेववापाठः ॥ ४९ ॥ सूर्यपर्वसमंसूर्यग्रहणसमम् ॥ ५० ॥ ५१ ॥ ५२ ॥ मधौचैत्रे ॥ माघेमासीतिवापाठः ॥ अशोकैरशोकपुष्पैः ॥ ५३ ॥ ५४ ॥ ५५ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अष्टौप्रदक्षिणाश्चकृत्वा ॥ प्रदक्षिणमितिपाठेपिसएवार्थः ॥ ५६ ॥ हेमहामतेबृहद्बुद्धे ॥ महामुनेइतिक्वचित् ॥ ५७ ॥ ५८ ॥ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायामष्टचत्वारिंशोध्यायः ॥ ४८ ॥ ॥ छ ॥ ॥ एकोनोनेथपंचाशेऽध्यायेपरमपावने ॥ द्रौपदादित्यमायूखादित्ययोर्वर्ण्यतेकथा ॥ १ ॥ अनंतराध्यायावसानेइदानींद्रौपदादित्यंकथयिष्यामीत्युक्तंतत्रद्रौपद्याभविष्यत्वात्तदानींतयाराधनस्यासंभवादाक्षिपति ॥ पाराशर्येति ॥ १ ॥ पुराणेषुकालत्रयसंबंधिनोऽर्थस्यकथनान्नायंदोषइतिपरिहरति ॥ पुराणेति ॥ पुराणसंहितापुराणरूपधर्मशास्त्र

इयंभविष्यातन्मूर्तिरगस्तेत्वत्पुरोऽकथि ॥ तामभ्यर्च्यनमस्कृत्यकृत्वाष्टौचप्रदक्षिणाः ॥ नरोभवतिनिष्पापःकाशीवासफलंलभेत् ॥ ५६ ॥ सांबादित्यस्यमाहात्म्यंकथितंतेमहामते ॥ यच्छ्रुत्वापिनरोजातुयमलोकंनपश्यति ॥ ५७ ॥ इदानींद्रौपदादित्यंकथयिष्यामितेनघ ॥ तथाद्रौपदआदित्यःसंसेव्योभक्तसिद्धिदः ॥ ५८ ॥ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडेपूर्वार्द्धेसांबादित्यमाहात्म्यकथनंनामाष्टचत्वारिंशोध्यायः ॥४८॥ सूत उवाच ॥ ॥ पाराशर्यमुनेव्यासकुमारःकुंभजन्मने ॥ यदावदत्कथामेतांतदाक्वद्रुपदात्मजा ॥ १ ॥ ॥ व्यासउवाच ॥ ॥ पुराणसंहितांसूतब्रूतेत्रैकालिकींकथाम् ॥ संदेहोनात्रकर्तव्योयतस्तद्गोचरोखिलम् ॥२॥ ॥ स्कंदउवाच ॥ ॥ आकर्णयमुनेपूर्वंपंचवक्रोहरःस्वयम् ॥ पृथिव्यांपंचधाभूत्वाप्रादुरासीज्जगद्धितः ॥३॥ उमापिचजगद्धात्रीद्रुपदस्यमहीभुजः ॥ यजतोवह्निकुंडाच्चप्रादुश्चक्रेतिसुंदरी ॥ ४ ॥ पंचापिपांडुतनयाःसाक्षाद्रुद्रवपुर्धराः ॥ अवतेरुरिहस्वर्गाद्दुष्टसंहारकारकाः ॥ ५ ॥ नारायणोपिकृष्णत्वंप्राप्यतत्साहचर्यकृत् ॥ उद्धृत्तवृत्तशमनःसद्वृत्तस्थितिकारकः ॥ ॥ ६ ॥ प्रतपंतःपृथिव्यांतेपार्थाश्चेरुःपृथक्पृथक् ॥ उदयानुदयौतस्मिन्संपदांविपदामपि ॥ ७ ॥ कदाचित्तेमहावीराभ्रातृव्यप्रतिपादिताम् ॥ विपत्तिमाप्यमहतींबभूवुःकाननौकसः ॥ ८ ॥ पांचाल्यपिचतत्पत्नीपतिव्यसनतापिता ॥ धर्मज्ञाप्राप्यतन्वंगीब्रध्नमाराधयद्भृशम् ॥ ९ ॥

मित्यर्थः ॥ त्रैकालिकींभूतभविष्यद्वर्तमानकालसंबंधिनीम् ॥ तद्गोचरस्तस्याःपुराणसंहितायाविषयः ॥ तद्गोचरेइतिक्वचित् ॥ २ ॥ ३ ॥ प्रादुश्चक्रेप्रादुर्भावंचकार प्रादुरभूदित्यर्थः ॥ ४ ॥ दुष्टानांसंहारकारकाः ॥ संहारकारिणइतिक्वचित् ॥ ५ ॥ तस्मिन्समयइतिशेषः ॥ ६ ॥ उदयानुदयौचेरुःप्रापुरित्यन्वयः ॥ ७ ॥ भ्रातृव्यप्रतिपादितांशत्रुभिःसंपादिताम् ॥ ८ ॥ तापितातापि



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

युता ॥ काशिंताइतिकाचित् ॥ प्राप्यकाशीमितिशेषः ॥ ९ ॥ चालनार्थपात्रविशेषोदर्वीतत्सहितांस्थालींपाकपात्रविशेषम् ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ अन्यदेशादागतानामपिकाश्यांस्थितत्वात्काशीस्थितानामित्युक्तम् ॥ १८॥ १९ ॥ २० ॥ २१ ॥ नव्याधिजमिति ॥ हेद्रौपदिहेधर्मप्रियेहेअनघेकाश्यांतवेक्षणतोदर्शनात्कापिव्याधिजंभयंक्षुत्तृषावेव दोषस्तत्संभवंचभयंनेत्यन्वयः ॥ २२ ॥ इतीति ॥ इतिपूर्वोक्तान् ॥ एवमितिपाठेएवंभूतान्वरान् ॥ धर्मयुधिष्ठिरम् ॥ २३ ॥ एनःपापम् ॥ २४ ॥ उक्तानुवादपूर्वकंमयूखादित्यस्यमाहात्म्यं



आराधितोथसवितातयाद्रुपदकन्यया ॥ सदर्वीसपिधानांचस्थालिकामक्षयांददौ ॥ १० ॥ उवाचचप्रसन्नात्माभास्करोद्रुपदात्मजाम् ॥ आराधयंतींभावेनसर्वत्रशुचिमानसाम् ॥ ११ ॥ स्थाल्येतयामहाभागेयावंतोऽन्नार्थिनोजनाः ॥ तावंतस्तृप्तिमाप्स्यंतियावच्चत्वंनभोक्ष्यसे ॥ १२ ॥ भुक्तायांत्वयिरिक्तैषापूर्णभक्ताभविष्यति ॥ रसवद्व्यंजननिधिरिच्छाभक्ष्यप्रदायिनी ॥ १३ ॥ इत्थंवरस्तयालब्धःकाश्यामादित्यतोमुने ॥ अपरश्चवरोदत्तस्तस्यैदेवेनभास्वता ॥ १४ ॥ ॥ रविरुवाच ॥ ॥ विश्वेशाद्दक्षिणेभागेयोमांत्वत्पुरतःस्थितम् ॥ आराधयिष्यतिनरःक्षुद्बाधातस्यनश्यति ॥ १५ ॥ अन्यश्चमेवरोदत्तोविश्वेशेनपतिव्रते ॥ तपसापरितुष्टेनतंनिशामयवच्मिते ॥ १६ ॥ प्राग्रवेत्वांसमाराध्ययोमांद्रक्ष्यतिमानवः ॥ तस्यत्वंदुःखतिमिरमपानुदनिजैःकरैः ॥ १७ ॥ अतोधर्मप्रियेनित्यंप्राप्यविश्वेश्वराद्वरम् ॥ काशीस्थितानांजंतूनांनाशयाम्यघसंचयम् ॥ १८ ॥ येमामत्रभजिष्यंतिमानवाःश्रद्धयान्विताः ॥ त्वद्वरोद्यतपाणिंचतेषांदास्यामिचिंतितम् ॥ १९ ॥ भवतींमत्समीपस्थांयुधिष्ठिरपतिव्रताम् ॥ विश्वेशाद्दक्षिणेभागेदंडपाणेःसमीपतः ॥ २० ॥ येर्चयिष्यंतिभावेनपुरुषावास्त्रियोपिवा ॥ तेषांकदाचिन्नोभाविभयंप्रियवियोगजम् ॥ २१ ॥ नव्याधिजंभयंक्वापिनक्षुत्तृड्दोषसंभवम् ॥ द्रौपदीक्षणतःकाश्यांतवधर्मप्रियेनघे ॥ २२ ॥ इतिदत्त्वावरान्देवआदित्यःसर्वदःसताम् ॥ शंभुमाराधयामासधर्मंद्रौपद्युपाययौ ॥ २३ ॥ आदित्यस्यकथामेतांद्रौपद्याराधितस्यवै ॥ यःश्रोष्यतिनरोभक्त्यातस्यैनःक्षयमेष्यति ॥ २४ ॥ स्कंदउवाच ॥ ॥ द्रौपदादित्यमाहात्म्यंसंक्षेपात्कथितंमया ॥ मयूखादित्यमाहात्म्यंशृणुविदानींघटोद्भव ॥ २५ ॥ पुरापंचनदेतीर्थेत्रिषुलोकेषुविश्रुते ॥ सहस्ररश्मिर्भगवांस्तपस्तेपेसुदारुणम् ॥ २६ ॥ प्रतिष्ठाप्यमहालिंगंगभस्तीश्वरसंज्ञितम् ॥ गौरींचमंगलानाम्नींभक्तमंगलदांसदा ॥ २७ ॥ दिव्यंवर्षसहस्रंतुशतेनगुणितंमुने ॥ आराधयञ्शिवंसोमंसोमार्धकृतशेखरम् ॥ २८ ॥ स्वरूपतस्तुतपनस्त्रिलोकीतापनक्षमः ॥ ततोतितीव्रतपसाजज्वालनितरांमुने ॥ २९ ॥ मयूखैस्तत्रसवितुस्त्रैलोक्यदहनक्षमैः ॥ ततंसमस्तंतत्कालेद्यावाभूम्योर्यदंतरम् ॥ ३० ॥ वैमानिकैर्विष्णुपदेतत्यजेचगतागतम् ॥ तीव्रेपतंगमहसिपतंगत्वभयादिव ॥ ३१ ॥



श्रावयति ॥ द्रौपदेति ॥ २५ ॥ २६ ॥ मंगलानाम्नींमंगलाह्वयाम् ॥ मंगलवतीमितिपाठेभक्तेभ्योदेयंमंगलमस्याअस्तीतिमंगलवती ॥ एतदेवाह ॥ भक्तमंगलदामिति ॥ २७ ॥ शतेन गुणितंग्रथितंसंवद्धमित्यर्थः ॥ दिव्यलक्षवर्षमितिसमुदायार्थः ॥ सोमंसुमयासहितम् ॥ सोमार्धेनार्धचंद्रेणकृतःशेखरःशिरोभूषणंयेन ॥ २८ ॥ २९ ॥ ३० ॥ वैमानिकैरिति ॥ वैमानिकैर्देवै

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विष्णुपदेध्रुवलोकेगतागतंगमनागमनंतत्यजेत्यक्तम् ॥ किमिति ॥ तीव्रेतीक्ष्णेपतंगमहसिसूर्यतेजसिपतंगत्वभयादिवपतंगनिमित्तत्त्वभयादिवेत्यर्थः ॥ तथाचायमर्थः ॥ यथापतंगानामग्नौपातान्नाशए वमस्माकंचनाशोभविष्यतीतिभयादिवेति ॥ ३१ ॥ मयूखाइति ॥ मयूखारश्मयः ॥ कीदृशस्यादित्यस्य ॥ नीपपुष्पस्यकदंबकुसुमस्येवस्थितिर्यस्यतस्य ॥ समासांतर्निविष्टस्यापीवशब्दस्यबाहिर्नि र्देशश्छांदसः ॥ यथाकदंबकुसुमस्ययाकर्णिकासानदृश्यतेकिंतुकलिकाएवतद्वदितिभावः ॥ ३२ ॥ तस्येति ॥ तपोर्चिषांतपोज्वालानांसाध्वसाद्भयाच्चकंपेसंचचाल ॥ ३३ ॥ कंपनहेतुप्रतिपादकं लोकानामेवहिवाक्यमाह ॥ सूर्यइति ॥ तथाचश्रुतिः ॥ योसावादित्येपुरुषःसोसावहमिति ॥ चेद्यदि ॥ ३४ ॥ अन्यएवकश्चित्त्राताश्रयणीयोनेत्याह जगच्चक्षुरितित्रयेण ॥ जगदात्मत्वेहेतुमाह ॥ जगद्यइति ॥ यद्यस्मात् ॥ ३५ ॥ तमएवांधकूपस्तत्रपतितम् ॥ उद्यन्उद्गच्छन् ॥ एषसूर्यः ॥ प्रसार्यविस्तार्य ॥ परितःसर्वतः ॥ पाणीन्रश्मीन् ॥ प्राणिजातंजीवसमूहंसमुद्धरेत् ॥

मयूखाएवदृश्यंतेतिर्यगूर्ध्वमधोपिच॥ आदित्यस्यनचादित्योनीपपुष्पस्थितेरिव ॥३२॥ तस्यवैमहसांराशेस्तपोराशेस्तपोर्चिषाम् ॥ चकंपेसाध्वसात्ती व्रात्रैलोक्यंसचराचरम् ॥ ३३ ॥ सूर्यआत्मास्यजगतोवेदेषुपरिपठ्यते ॥ सएवचेज्ज्वालयिताकोनस्त्राताभवेदिह ॥ ३४ ॥ जगच्चक्षुरसौसूर्योजगदात्मै षभास्करः ॥ जगद्योयन्मृतप्रायंप्रातःप्रातःप्रबोधयेत् ॥ ३५ ॥ तमोंधकूपपतितमुद्यन्नेषदिनेदिने ॥ प्रसार्यपरितःपाणीन्प्राणिजातंसमुद्धरेत् ॥ ३६ ॥ उदितेऽत्रोदिमोनित्यमस्तंयात्यस्तमाप्नुमः ॥ उदयेऽनुदयेतस्मादस्माकंकारणंरविः ॥ ३७ ॥ इतिव्याकुलितांविश्वंपश्यन्विश्वेश्वरःस्वयम् ॥ विश्वत्रातावरं दातुंसंजग्मेतिग्मरश्मये ॥ ३८ ॥ मयूखमालिनंशंभुरालोक्यातिसुनिश्चलम् ॥ समाधिविस्मृतात्मानंविसिस्मायतपःप्रति ॥ ३९ ॥ उवाचचप्रस न्नात्माश्रीकंठःप्रणतार्तिहृत् ॥ अलंतप्त्वावरंब्रूहिद्युमणेमहसांनिधे ॥ ४० ॥ निरुद्धेंद्रियवृत्तित्वाद्ब्रध्नोध्यानसमाधिना ॥ नजग्राहवचःशंभोर्द्विस्त्रिरुक्तो प्यकर्णवत् ॥ ४१ ॥ काष्ठीभूतंतुतंज्ञात्वाशिवःपस्पर्शपाणिना ॥ महातपःसमुद्भूतसंतापामृतवर्षिणा ॥ ४२ ॥ ततउन्मीलयांचक्रेलोचनेविश्वलोचनः ॥ तस्योदयमिवप्राप्यप्रगेपंकजिनीवनी ॥४३॥ परिव्यपेतसंतापस्तपनःस्पर्शनाद्विभोः ॥ अवग्रहितसस्यश्रीरुल्लासयथांबुदात् ॥ ४४ ॥

॥ ३६ ॥ अत्रास्मिन्सूर्येअत्रजगतीतिवा ॥ उदितेर्थात्सूर्यइति ॥ वयंनित्यमुदिमउदयंप्राप्नुमः ॥ अस्तंयातिसत्यस्तंप्राप्नुमः ॥ उपसंहरति ॥ उदयइति ॥ ३७ ॥ इत्येवंप्रकारेण ॥ अतिव्याकु लितमितिक्कचित् ॥ संजग्मेसंजगाम ॥ ३८ ॥ विसिस्मायविस्मयंचक्रे ॥ ३९ ॥ ४० ॥ अकर्णवद्बधिरवत् ॥ अकर्णयदितिपाठेनकेवलंसकृदुक्तःसन्वचोनजग्राहद्विस्त्रिरुक्तोपिनाकर्णय दित्यर्थः ॥ ४१ ॥ पाणिना कथंभूतेन ॥ महातपसःसकाशात्समुद्भूतायःसंतापस्तत्रामृतवर्षिणा तन्निवर्तकामृतवर्षिणेत्यर्थः ॥ ४२ ॥ विकासनमात्रेदृष्टांतस्तस्योति ॥ तस्यसूर्यस्यप्रगेप्रातःकाले उदयंप्राप्यपंकजिनीवनीजलस्थपद्मिनीयथेति ॥ वनशब्दस्यजलवाचकत्वात् ॥ पंकजिनीवनीपद्मिनीनांवनमितिवा ॥ ४३ ॥ परीति ॥ अवग्रहोवृष्टिप्रतिबंधोयस्यास्तीत्यवग्रहितंसस्यंतस्य श्रीर्यथांबुदान्मेघादुल्ललासेतितथाविभोःस्पर्शात्तपनउल्लासउज्जृंभितवानित्यर्थः ॥ ४४ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मित्रः सूर्यः ॥ प्रत्यक्षंमूर्तिमंतम् ॥ उच्चैस्तुष्टाव ॥ चःसमुच्चये ॥ ४५ ॥ स्तुतिमेवाह देवदेवेत्यष्टभिः ॥ इतःपरमन्यच्छ्रेयोनास्तीतिबहुधासंबोधयाति ॥ देवानांदेवहेजगतांपतेहेविभोहे भर्गहेभीमहेभवहेचंद्रभूषणहेभूतनाथहेभवभीतिहारकहेनतवांछितप्रदत्वांनतोस्मीति ॥ ४६ ॥ हेचंद्रचूडहेमृडहेधूर्जटेहेहरहेत्र्यक्षहेदक्षशततंतुशातनदक्षयज्ञविध्वंसनहेशांतहेशाश्वतनित्यहेशिवापतेहे शिवहेनतवांछितप्रदत्वांनतोस्मीति ॥ ४७ ॥ हेनीललोहितहेसमीहितार्थदहेद्व्येकलोचनत्रिनेत्रहेविरूपलोचनहेव्योमकेशहेपशुपाशनाशनजीवानांसंसारनाशनहेनतवांछितप्रदत्वांनतोस्मीति ॥ ४८ ॥ हेवामदेवहेशितिकंठहेशूलभृत्हेचन्द्रशेखरहेफणींद्रभूषणहेकामकृत्कामच्छेदकहेपशुपतेहेमहेश्वरहेनतवांछितप्रदत्वांनतोस्मीति ॥ ४९ ॥ हेत्र्यम्बकहेत्रिपुरसूदनहेईश्वरहेत्राणकृत हेत्रिनयनहेत्रयीमयहेकालकूटदलनहेअन्तकान्तकहेनतवांछितप्रदत्वांनतोस्मीति ॥ ५० ॥ हेशर्वरीरहितमायाविनिर्मुक्तहेशर्वहेसर्वगहेस्वर्गमार्गसूर्यात्मन्हेसुखदस्वर्गमार्गसुखदेतिवा ॥ हेअप

मित्रोनेत्रातिथीकृत्यत्र्यक्षंप्रत्यक्षमग्रतः ॥ दंडवत्प्रणनामोच्चैस्तुष्टावचपिनाकिनम् ॥ ४५ ॥ ॥ रविरुवाच ॥ ॥ देवदेवजगतांपतेविभोभर्गभीमभवचंद्रभूषण ॥ भूतनाथभवभीतिहारकत्वांनतोस्मिनतवांछितप्रद ॥ ४६ ॥ चंद्रचूडमृडधूर्जटेहरत्र्यक्षदक्षशततंतुशातन ॥ शांतशाश्वतशिवापतेशिवत्वांनतोस्मिनतवांछितप्रद ॥ ४७ ॥ नीललोहितसमीहितार्थदद्व्येकलोचनविरूपलोचन ॥ व्योमकेशपशुपाशनाशनत्वांनतोस्मिनतवांछितप्रद ॥ ४८ ॥ वामदेवशितिकंठशूलभृच्चंद्रशेखरफणींद्रभूषण ॥ कामकृत्पशुपतेमहेश्वरत्वांनतोस्मिनतवांछितप्रद ॥ ४९ ॥ त्र्यंबकत्रिपुरसूदनेश्वरत्राणकृत्त्रिनयनत्रयीमय ॥ कालकूटदलनांतकांतकत्वांनतोस्मिनतवांछितप्रद ॥ ५० ॥ शर्वरीरहितशर्वसर्वगस्वर्गमार्गसुखदापवर्गद ॥ अंधकासुररिपोकपर्दभृत्त्वांनतोस्मिनतवांछितप्रद ॥ ५१ ॥ शंकरोग्रगिरिजापतेपतेविश्वनाथविधिविष्णुसंस्तुत ॥ वेदवेद्यविदिताऽखिलेंगितत्वांनतोस्मिनतवांछितप्रद ॥ ५२ ॥ विश्वरूपपररूपवर्जितब्रह्मजिह्मरहितामृतप्रद ॥ वाङ्मनोविषयदूरदूरगत्वांनतोस्मिनतवांछितप्रद ॥ ५३ ॥ इत्थंपरीत्यमार्तंडोमृडंदेवंमृडानिकाम् ॥ अथतुष्टावप्रीतात्मा शिववामार्धहारिणीम् ॥ ५४ ॥ रविरुवाच ॥ ॥ देवित्वदीयचरणांबुजरेणुगौरींभालस्थलींवहतियःप्रणतिप्रवीणः ॥ जन्मांतरेपिरजनीकरचारुलेखातांगौरयत्यतितरांकिलतस्यपुंसः ॥ ५५ ॥

वर्गदहेअन्धकासुररिपोहेकपर्दभृत्हेनतवांछितप्रदत्वांनतोस्मीति ॥ ५१ ॥ हेशंकरहेउग्रहेगिरिजापतेहेपतेस्वामिन्हेविश्वनाथहेविधिविष्णुसंस्तुतहेवेदवेद्यहेविदिताऽखिलेंगितहेनतवांछितप्रदत्वांनतोस्मीति ॥ ५२ ॥ हेविश्वरूपहेपरहेरूपवर्जितहेब्रह्मस्वरूपहेजिह्मरहितानिर्मायहेअमृतप्रदहेवाङ्मनोऽविषयहेदूरवाङ्मनोविषयदूरेतिवा हेदूरगहेनतवांछितप्रदत्वांनतोस्मीति ॥ नतवांछितप्रदेत्येतस्यावृत्तिर्भक्तानांप्राधान्यख्यापनाय ॥ ५३ ॥ इत्थमिति ॥ परीत्यप्रदक्षिणपूर्वकंस्तुत्वेत्यर्थः ॥ परीडचेतिवापाठः ॥ अथानन्तरंमृडानिकांतुष्टावास्तौत् ॥ स्तुतौहेतुः ॥ शिववामार्धहारिणीमिति ॥ ५४ ॥ स्तुतिमेवाह देवीत्यष्टभिः ॥ हेदेविस्वप्रकाशेद्योतमानेइतिवा ॥ यस्त्वदीयचरणाम्बुजरेणुभिर्गौरींगौरवर्णांभालस्थलींललाटस्थलींवहतिधारयीततस्यपुनस्तांभालस्थलींजन्मांतरेरजनीकरचारुलेखानितरांगौरयातिशोभयतीत्यन्वयः ॥ वहनेप्रकारंदर्शयंस्तांविशिनष्टि ॥ प्रणतौदण्डवत्प्रणिपातेप्रवीणोदक्षइति ॥ अपिशब्दादिहजन्मनिच ॥ बाणांधकादीनांतथादर्शनात् ॥ ५५ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भक्त्युद्रेकाद्बहुधासम्बोधयति ॥ हेश्रीमंगलेश्रीयुक्तमूर्तिमन्मंगले ॥ हेसकलमंगलजन्मभूमे ॥ श्रियोलक्ष्म्याःमंगलंयस्यास्तत्सम्बोधनंहेश्रीमंगले हेसकलकलमषतूलवह्ने श्रयंत्येनांयोगिनइति श्रीर्ब्रह्मविद्यातस्यामंगलंयस्यास्तत्सम्बोधनंहेश्रीमंगले ॥ श्रीमंगलेइत्यस्यावृत्तिर्मंगलनाम्नःप्राधान्यख्यापनाय ॥ हेसकलदानवदर्पहंत्रि श्रयन्त्येतामविवेकिनइतिश्रीरविद्यातस्याःमंगलंसौभाग्यं यस्यास्तत्सम्बोधनंहेश्रीमंगले अखिलमिदंविश्वंपरिपाहिपरिपालय ॥ परिपासीतिक्वचित् ॥ ५६ ॥ ब्रह्मविष्णुमहेश्वररूपेणस्तौति ॥ हेविश्वेश्वरिसर्वनियन्त्रिविश्वजनस्यत्वंकर्त्र्यसि तथात्वंपालयित्र्यसि शक्तिशक्तिमतोरभेदात् ॥ अपिःसमुच्चये ॥ त्वन्नामकीर्तनेमवत्वन्नामसंकीर्तनेनवासमुल्लसन्तीयाअच्छपुण्यास्रोतस्विनी ॥ स्रोतस्वतीतिक्वचित्पाठः ॥ सापातकान्येवकूलस्थवृक्षास्तान्हरतीति ॥ ५७ ॥ हेमातर्हेभवानिहेभवतीव्रदुःखसम्भारहारिणिसंसारदुःखौघनाशिनिइहजगतिभवत्येवशरण्यंशरण्यमस्तिनान्या येषुतवशुभःकरुणाकटाक्षःस्फुरेदुल्लसेत् भुवनेषुमध्येतएवधन्यास्तएवमान्याइति ॥ ५८ ॥ येजनास्त्वांसततंस्मरंतितान्स्मरहरःस्मरेदित्यन्वयः ॥ कथंभूताम् ॥ सहजप्रकाशांस्वप्रकाशामित्यर्थः ॥ काशीपुर्यांस्थितिमतींकृतनिवासामित्यर्थः ॥ नतानांमोक्षल

श्रीमंगलेसकलमंगलजन्मभूमेश्रीमंगलेसकलकलमषतूलवह्ने ॥ श्रीमंगलेसकलदानवदर्पहंत्रिश्रीमंगलेऽखिलमिदंपरिपाहिविश्वम् ॥५६॥ विश्वेश्वरित्वमसिविश्वजनस्यकर्त्रीत्वंपालयित्र्यसितथाप्रलयेपिहंत्री ॥ त्वन्नामकीर्तनसमुल्लसदच्छपुण्यास्रोतस्विनीहरतिपातककूलवृक्षान् ॥५७॥ मातर्भवानिभवतीभवतीव्रदुःखसंभारहारिणिशरण्यमिहास्तिनान्या ॥ धन्यास्तएवभुवनेषुतएवमान्यायेषुस्फुरेत्तवशुभःकरुणाकटाक्षः ॥ ५८ ॥ येत्वांस्मरंतिसततंसहजप्रकाशांकाशीपुरीस्थितिमतींनतमोक्षलक्ष्मीम् ॥ तान्संस्मरेत्स्मरहरोधृतशुद्धबुद्धीन्निर्वाणरक्षणविचक्षणपात्रभूतान् ॥५९॥ मातस्तवांघ्रियुगलंविमलंहृदिस्थंयस्यास्तितस्यभुवनंसकलंकरस्थम् ॥ योनामतेजपतिमंगलगौरिनित्यंसिद्ध्यष्टकंनपरिमुंचतितस्यगेहम् ॥ ६० ॥ त्वंदेविवेदजननीप्रणवस्वरूपागायत्र्यसित्वमसिवैद्विजकामधेनुः ॥ त्वंव्याहृतित्रयमिहाऽखिलकर्मसिद्ध्यैस्वाहास्वधासिसुमनःपितृतृप्तिहेतुः ॥ ६१ ॥ गौरित्वमेवशशिमौलिनिवेधसित्वंसावित्र्यसित्वमसिचक्रिणिचारुलक्ष्मीः ॥ काश्यांत्वमस्यमलरूपिणिमोक्षलक्ष्मीस्त्वंमेशरण्यमिहमंगलगौरिमातः ॥ ६२ ॥

क्ष्मीर्यस्यास्तां मोक्षलक्ष्मीस्वरूपामितिवा ॥ तान्कीदृशान् ॥ धृतासम्पादिताशुद्धाबुद्धिर्यैस्तान् निर्वाणरक्षणेकैवल्यधारणायामित्यर्थः ॥ विचक्षणपात्रभूतान्निपुणाधिकारिणइत्यर्थः ॥ ५९ ॥ हेमातस्तवांघ्रियुगलंयस्यहृदिस्थमस्तिसकलंभुवनंतस्यकरस्थमेवस्वाधीनमेवसतुसर्वज्ञइतिवा ॥ हेमंगलागौरि ह्रस्वत्वंछांदसम् ॥ मंगलयुक्तागौरीमंगलगौरीतिवा ॥ यस्तेनामानित्यंजपतितस्यगेहं सिद्ध्यष्टकंपद्माद्यष्टनिधिरूपमणिमाद्यष्टसिद्धिरूपंवानविमुंचतीति ॥ ६० ॥ हेदेवित्वंवेदजननीप्रणवस्वरूपाओंकारस्वरूपाच ॥ प्रणवस्वरूपावेदजननीगायत्रीवासि ॥ कथंभूता ॥ द्विजकामधेनुर्द्विजातीनांकामदोग्ध्री ॥ त्वंव्याहृतित्रयंभूर्भुवःस्वरितिरूपम् ॥ इहजगतिअखिलकर्मसिद्ध्यै सुमनःपितृतृप्तिहेतुस्त्वंस्वाहास्वधासिसुमनसांदेवानांतृप्तिहेतुःस्वाहासिपितॄणांतृप्तिहेतुःस्वधासीत्यर्थः ॥ ६१ ॥ हेमातर्हेमंगलगौरित्वंमेइहशरण्यंशरणम् ॥ शशिमौलिनिमहादेवेयात्वमेवगौरी ॥ वेधसिब्रह्मणिसावित्र्यसि ॥ चक्रिणिविष्णौचारुलक्ष्मीरसि ॥ हेअमलरूपिणिशुद्धस्वरूपे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

काश्यांत्वंमोक्षलक्ष्मीरसीति ॥ ६२ ॥ स्तुत्वेति ॥ स्मरहरार्धशरीरस्यशोभायस्यास्तांशोभारूपांवा ॥ श्रीमंगलाष्टकंचतन्महास्तवनंचमहास्तोत्रंतेनपरितःप्रणम्यप्रदक्षिणीकृत्यनत्वा ॥ ६३ ॥ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ एतच्चतुःषष्ट्यात्मकंमंगलाष्टकंचस्तोत्रवरंस्तवश्रेष्ठम् ॥ स्तोत्रद्वयमितिक्वचित् ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ एषचराचररूपःप्रपंचआव

स्तुत्वेतितांस्मरहरार्धशरीरशोभांश्रीमंगलाष्टकमहास्तवनेनभानुः ॥ देवींचदेवमसकृत्परितःप्रणम्यतूष्णींबभूवसविताशिवयोःपुरस्तात् ॥ ६३ ॥ ॥ देवदेवउवाच ॥ ॥ उत्तिष्ठोत्तिष्ठभद्रंतेप्रसन्नोस्मिमहामते ॥ मित्रमन्नेत्रगोनित्यंप्रपश्येतच्चराचरम् ॥ ६४ ॥ ममसूर्तिर्भवान्सूर्यसर्वज्ञोभवसर्वगः ॥ सर्वेषांमहसांराशिःसर्वेषांसर्वकर्मवित् ॥ ६५ ॥ सर्वेषांसर्वदुःखानिभक्तानांत्वंनिराकुरु ॥ त्वयानाम्नांचतुःषष्ट्यायदष्टकमुदीरितम् ॥ ६६ ॥ अनेनमांपरिष्टुत्यनरोमद्भक्तिमाप्स्यति ॥ अष्टकंमंगलागौर्यामंगलाष्टकसंज्ञकम् ॥ ६७ ॥ अनेनमंगलागौरींस्तुत्वामंगलमाप्स्यति ॥ चतुःषष्ट्यष्टकंस्तोत्रंमंगलाष्टकमेवच ॥ ६८ ॥ एतत्स्तोत्रवरंपुण्यंसर्वपातकनाशनम् ॥ दूरदेशांतरस्थोपिजपन्नित्यंनरोत्तमः ॥६९॥ त्रिसंध्यंपरिशुद्धात्माकाशींप्राप्स्यतिदुर्लभाम् ॥ अनेनस्तोत्रयुग्मेनजप्तेनप्रत्यहंनृभिः ॥७०॥ ध्रुवंदैनंदिनंपापंक्षालितंनात्रसंशयः ॥ नतस्यदेहिनोदेहेजातुचित्किल्बिषस्थितिः ॥७१॥ त्रिकालंयोजपेन्नित्यमेतत्स्तोत्रद्वयंशुभम् ॥ किंजप्तैर्बहुभिःस्तोत्रैश्चंचलश्रीप्रदैर्नृणाम् ॥ ७२ ॥ एतत्स्तोत्रद्वयंदद्यात्काश्यांनैःश्रेयसींश्रियम् ॥ तस्मात्सर्वप्रयत्नेनमानवैर्मोक्षकांक्षिभिः ॥ ७३ ॥ एतत्स्तोत्रद्वयंजप्यंत्यक्त्वास्तोत्राण्यनेकशः ॥ प्रपंचआवयोरेवसर्वएषचराचरः ॥ ७४ ॥ तदावयोःस्तवादस्मान्निष्प्रपंचोजनोभवेत् ॥ समृद्धिमाप्यमहतींपुत्रपौत्रवतीमिह ॥ ७५ ॥ अंतेनिर्वाणमाप्नोतिजपन्स्तोत्रमिदंनरः ॥ अन्यच्चशृणुसप्ताश्वग्रहराजदिवाकर॥ ॥ ७६ ॥ त्वयाप्रतिष्ठितंलिंगंगभस्तीश्वरसंज्ञितम् ॥ सेवितंभक्तिभावेनसर्वसिद्धिसमर्पकम् ॥ ७७ ॥ त्वयागभस्तिमालाभिश्चांपेयांबुजकांतिभिः ॥ यदर्चितंवैश्वरंलिंगंसर्वभावेनभास्कर ॥ ७८ ॥ गभस्तीश्वरइत्याख्यांततोलिंगमवाप्स्यति ॥ अर्चयित्वागभस्तीशंस्नात्वापंचनदेनरः ॥ ७९ ॥ नजातुजायतेमातुर्जठरेधूतकल्मषः ॥ इमांचमंगलागौरींनारीवापुरुषोपिवा ॥ ८० ॥ चैत्रशुक्लतृतीयायामुपोषणपरायणः ॥ महोपचारैःसंपूज्यदुकूलाभरणादिभिः ॥ ८१ ॥ रात्रौजागरणंकृत्वागीतनृत्यकथादिभिः ॥ प्रातःकुमारीःसंपूज्यद्वादशाच्छादनादिभिः ॥ ८२ ॥ संभोज्यपरमान्नाद्यैर्दत्वान्येभ्योपिदक्षिणाम् ॥ होमंकृत्वाविधानेनजातवेदसइत्यृचा ॥ ८३ ॥

योरावाभ्यांविरचितः ॥ ७४ ॥ तत्तस्मात् ॥ आवयोरस्मात्तवस्तवादित्यन्वयः ॥ ७५ ॥ नरोमनुष्यमात्रः ॥ ७६ ॥ गभस्तीश्वरनामनिर्वक्ति ॥ त्वयेति ॥ ७७ ॥ चांपेयश्चंपकःअंबुजंपद्मंतद्वत्कांतिभिः ॥ तुशब्देनश्रेष्ठत्वंद्योत्यते ॥ ७८ ॥ ७९ ॥ धूतकल्मषोविगतपापः ॥ ८० ॥ ८१ ॥ ८२ ॥ जातवेदसइत्यृचाकंडिकया ॥ जातवेदसेसुनवामसोममरातीयतोनिदहाति



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निरितिमंत्रशेषः ॥ ८३ ॥ प्रगेप्रातःकाले ॥ ८४ ॥ ८५ ॥ ८६ ॥ जातुचित्कदाचिदित्यर्थः ॥ नापुरुषः ॥ ८७ ॥ ८८ ॥ ॥ ८९ ॥ ९० ॥ तस्यांतिथौशुक्लतृतीयायाम् ॥ ९१ ॥ मयूखादित्यनामनिर्वक्ति अपरमितिसार्धेन ॥ ९२ ॥ ९३ ॥ ९४ ॥ भूतोभूतवान् ॥ जातइतिवापाठः ॥ ९५ ॥ अध्यायश्रवणफलमाह ॥ श्रुत्वाख्यानमिति ॥ ९६ ॥ ॥ इतिश्रीरामानन्दकृतायांकाशीखण्डटीकायामेकोनपंचाशत्तमोध्यायः ॥ ४९ ॥ अध्यायेत्वथपंचाशेनानाश्चर्यमनोहरे ॥ खखोल्कादित्यता

अष्टोत्तरशताभिश्चतिलाज्याहुतिभिःप्रगे ॥ एकंगोमिथुनंदत्त्वाब्राह्मणायकुटुंबिने ॥ ८४ ॥ श्रद्धयासमलंकृत्यभूषणैर्द्विजदंपती ॥ भोजयित्वामहार्हान्नैः प्रीयेतांमंगलेश्वरौ ॥ ८५ ॥ इतिमंत्रंसमुच्चार्यप्रातःकृत्वाथपारणम् ॥ नदुर्भगत्वमाप्नोतिनदारिद्र्यंकदाचन ॥ ८६ ॥ नवैसंतानविच्छित्तिंभोगोच्छित्तिंनजातुचित् ॥ स्त्रीवैधव्यंनचाप्नोतिननायोषिद्वियोगभाक् ॥ ८७ ॥ पापानिविलयंयांतिपुण्यराशिश्चलभ्यते ॥ अपिवंध्याप्रसूयेतकृत्वैतन्मंगलाव्रतम् ॥ ८८ ॥ एतद्व्रतस्यकरणात्कुरूपत्वंनजातुचित् ॥ कुमारीविंदतेत्यंतंगुणरूपयुतंपतिम् ॥८९॥ कुमारोपिव्रतंकृत्वाविंदतिस्त्रियमुत्तमाम् ॥ संतिव्रतानिबहुशोधनकामप्रदानिच ॥९०॥ नाप्नुयुर्जातुचित्तानिमंगलाव्रततुल्यताम् ॥ कर्तव्याचाब्दिकीयात्रामधौतस्यांतिथौनरैः ॥ ९१ ॥ सर्वविघ्नप्रशांत्यर्थंसदाकाशीनिवासिभिः ॥ अपरंद्युमणेवच्मितवचात्रतपस्यतः ॥ ९२ ॥ मयूखाएवखेदृष्टानचदृष्टंकलेवरम् ॥ मयूखादित्यइत्याख्याततस्तेदितिनंदन ॥ ९३ ॥ त्वदर्चनान्नृणांकश्चिन्नव्याधिःप्रभविष्यति ॥ भविष्यतिनदारिद्र्यंरविवारेत्वदीक्षणात् ॥ ९४ ॥ इत्थंमयूखादित्यस्यशिवोदत्त्वाबहून्वरान् ॥ तत्रैवांतर्हितोभूतोरविस्तत्रैवतस्थिवान् ॥ ९५ ॥ श्रुत्वाख्यानमिदंपुण्यंमयूखादित्यसंश्रयम् ॥ द्रौपदादित्यसहितंनरोननिरयंव्रजेत् ॥९६॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखण्डेपूर्वार्द्धेद्रौपदादित्यमयूखादित्ययोर्वर्णनंनामैकोनपंचाशत्तमोध्यायः ॥ ४९ ॥ ॥ ॥ स्कंदउवाच ॥ ॥ वाराणस्यांतथादित्यायेचान्येतान्वदाम्यतः ॥ कलशोद्भवतेप्रीत्यासर्वेसर्वाघनाशनाः ॥ १ ॥ खखोल्कोनामभगवानादित्यःपरिकीर्तितः ॥ त्रिविष्टपोत्तरेभागेसर्वव्याधिविघातकृत् ॥ २ ॥ यथाखखोल्कइत्याख्यातस्यादित्यस्यतच्छृणु ॥ पुराकद्रूश्चविनतादक्षस्यतनयेशुभे ॥ ॥३॥ कश्यपस्यचतेपत्न्यौमारीचेःप्राक्प्रजापतेः ॥ क्रीडंत्यावेकदान्योन्यंमुनेतेऊचतुस्त्विति ॥ ४ ॥ ॥ कद्रूरुवाच ॥ ॥ विनतेत्वंविजानासियदितद्ब्रूहिमेग्रतः ॥ अखंडितागतिस्तेस्तियतोगगनमंडले ॥ ५ ॥ योसावुच्चैःश्रवावाजीश्रूयतेसवितूरथे ॥ किंरूपःसोस्तिशबलोधवलोवावदाशुमे ॥ ६ ॥

र्येशकथामस्तूयतेऽद्भुता ॥ १ ॥ अवशिष्टानादित्यान्वक्तुंप्रतिजानीते ॥ वाराणस्यामिति ॥ कथनफलमाह ॥ सर्वइति ॥ सर्वेषामघानांसर्वेषांपापदुःखानांतस्यघनाशनाः ॥ १ ॥ खखोल्कइति ॥ मध्ये मूर्धन्यषकारवानपिक्वचिद्दृश्यते ॥ त्रिविष्टपंत्रिलोचनस्थानंतस्योत्तरेउत्तरप्रदेशे ॥ २ ॥ ३ ॥ ४ ॥ विजानासिविशेषेणजानासि ॥ नुजानासीतिक्वचित् ॥ ५ ॥ सवितूरथेप्रतिमासंपृथगधिका

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

रित्वेनसूर्यभावापन्नस्येंद्रस्यरथेइत्यर्थः ॥ शबलःकर्बुरः ॥ ६ ॥ पणंजयानन्तरंज्ञेयम् ॥ नयातुमागच्छतु ॥ नयातीतिकाचित् ॥ ७ ॥ ८ ॥ ९ ॥ क्रुधःक्रोधस्य ॥ खेलस्यक्रीडायाःपणेपणानि मित्ते ॥ १० ॥ पवनाशिनिहेसर्पिणि ॥ सर्पाकारत्वात्कद्र्वाः ॥ ११ ॥ १२ ॥ पतत्रिणीपक्षिणी पक्ष्याकारत्वाद्विनतायाः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ कल्माषयतकल्मषवर्णामिवकुरुत ॥ ॥ १७ ॥ वालधिलांगूलम् ॥ कृष्णकुन्तलतांकृष्णकेशताम् ॥ तथातदंगलोमान्यध्यास्यविधत्त कर्बुरतामितिशेषः ॥ कैर्विषसीत्कृतैर्विषसहितैस्सीत्कृतैर्विषोद्गारध्वनिभिरित्यर्थः ॥ विषसीत्कृतैर्विष

पणंचकुरुकल्याणितुभ्यंयोरोचतेनघे ॥ एवमेवनयात्येषकालःक्रीडनकंविना ॥७॥ ॥ विनतोवाच ॥ ॥ किंपणेनभगिन्यत्रकथयाम्येवमेवहि ॥ त्वज्जयेकाचमेप्रीतिर्मज्जयेकिंनुतेसुखम् ॥ ८ ॥ ज्ञात्वापणोनकर्तव्योमिथःस्नेहमभीप्सता ॥ ध्रुवमेकस्यविजयेक्रोधोन्यस्येहजायते ॥९॥ कद्रूरुवाच ॥ क्रीडेयंनात्रभगिनिकारणंकिमपिक्रुधः ॥ खेलस्यव्यवहारोयंपणेयत्किंचिदुच्यते ॥ १० ॥ ॥ विनतोवाच ॥ ॥ तथाकुरुयथाप्रीतिस्तवा स्तिपवनाशिनि ॥ अथतां विनतामाहकद्रूःकुटिलमानसा ॥ ११ ॥ तस्यास्तुसाभवेद्दासीपराजीयेतयायया ॥ अस्मिन्पणेइमाःसर्वाःसख्यःसा क्षिण्यएवनौ ॥ १२ ॥ इत्यन्योन्यंपणीकृत्यसर्पिण्यपिपतत्रिणी ॥ उवाचकर्बुरंकद्रूरश्वंश्वेतंगरुत्मती ॥ १३ ॥ कदागंतव्यमितिचचक्रातेतेगमाव धिम् ॥ जग्मतुश्चविरम्याथक्रीडनात्स्वंस्वमालयम् ॥ १४ ॥ विनतायांगतायांतुकद्रूराहूयचांगजान् ॥ उवाचयातवैपुत्राद्रुतंवचनतोमम ॥ १५ ॥ तुरंगमुच्चैःश्रवसं प्रोद्भूतंक्षीरनीरधेः ॥ सुरासुरैर्मथ्यमानान्मंदराघातसाध्वसात् ॥ १६ ॥ कार्यंकारणरूपस्यसादृश्यमधिगच्छति ॥ अतस्तंक्षीरवर्णा भंकल्माषयतपुत्रकाः ॥ १७ ॥ तस्यवालधिमध्यास्यकृष्णकुंतलतांगताः ॥ तथातदंगलोमानिविधत्तविषसीत्कृतैः ॥ १८ ॥ इतिश्रुत्वावचोमातुः काद्रवेयाःपरस्परम् ॥ संमंत्र्यमातरंप्रोचुःकद्रूंकद्रूपमागताः ॥ १९ ॥ ॥ नागाऊचुः ॥ ॥ मातर्वयंत्वदाह्वानाद्विहायक्रीडनंबलात् ॥ प्राप्ताःप्रह्व धीमृधान्नंदास्यत्यग्रप्रसूरिति ॥ २० ॥ मृष्टंतिष्ठतुतद्दूरंविषादप्यधिकंकटु ॥ तत्त्वयावादियन्मंत्रैरौषधैर्नोपशाम्यति ॥ २१ ॥ वयंनयामोयद्भाव्यं तदस्माकंभवत्विह ॥ इतिप्रोक्तेविषास्यैस्तैस्तदाकुटिलगामिभिः ॥ २२ ॥ ॥ स्कंदउवाच ॥ ॥ अन्येपियेकुटिलगाःपररंध्रनिषेविणः ॥ अकर्णाः क्रूरहृदयाःपितरौव्रीडयंतिते ॥ २३ ॥ पित्रोर्गिरंनिराकृत्ययेतिष्ठेयुःसुदुर्मदाः ॥ अत्याहितमिहप्राप्यगच्छेयुस्तेऽचिराल्लयम् ॥ २४ ॥

फूत्कृतैरितिवा ॥ यद्वा विषसीत्कृतैरितिविशेषणेतृतीया ॥ विषोद्गारविशिष्टान्यंगलोमानिविधत्तेत्यर्थः ॥ १८ ॥ कद्रूपंकुत्सितंरूपम् ॥१९॥२०॥ अवादिउक्तम् ॥२१॥२२॥अकर्णाःकर्णरहिताः ॥ पित्रोर्वाक्यंश्रृण्वंतोप्यश्रृण्वंतइत्यर्थः ॥ व्रीडयंतिउपहसंतितिरस्कुर्वंतिअवज्ञयंतीतियावत् ॥ चाटयंतीतिपाठेसएवार्थः ॥ २३ ॥ अत्याहितंमहाभीतिम् ॥ अचिराल्लयंशीघ्रंमरणम् ॥ २४ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

उरगीकद्रूः ॥ आगःसमागतान्अपराधंप्राप्तान् ॥ २५ ॥ २६ ॥२७ ॥ पुच्छमौच्चैःश्रवसमुच्चैःश्रवसःपुच्छमित्यर्थः॥पुच्छगोच्चैरितिपाठेविसर्गलोपेपिसंधिरार्षः ॥ सुनीलचिकुराभासमतिकृष्णकेश
सदृशम् ॥ २८ ॥ तत्क्ष्वेडानलधूमौघैस्तेषांसर्पाणांविषाग्निधूम्रसमूहैः ॥ फूत्कारभरनिःसृतैःफूत्कारसमूहनिर्गतैः ॥ ननुसूर्यनैकटचात्किमितितद्रश्मिभिस्तेनदग्धास्तत्राह ॥ मात्रिति ॥ २९ ॥
॥ ३० ॥ विस्रब्धंविनम्रंयथास्यादधोभूयेत्यर्थः ॥ विस्रब्धंकृतविश्वासंयथास्यादितिवा ॥ ३१ ॥ उष्णगोःसूर्यस्य ॥ उष्णगोभिस्तीक्ष्णरश्मिभिः ॥ विस्रब्धानिरपेक्षा ॥ ३२ ॥ सापेक्षत्वमे

तेषांवचनमाकर्ण्यनयामइतिसोरगी ॥ शशापतान्कुधाविष्टानागांश्चागःसमागतान् ॥ २५ ॥ तार्क्ष्यस्यभक्ष्याभवतयूयंमद्वाक्यलंघनात् ॥ जातमात्रां
श्चसर्पिण्योभक्षयंतुस्वबालकान् ॥ २६ ॥ इतिशापानलाद्भीतैःकैश्चित्पातालमाश्रितम् ॥ जिजीविषुभिरन्यैश्चद्वित्रैश्चक्रेप्रसूवचः ॥ २७ ॥ तेपुच्छमौ
च्चैःश्रवसमधिगम्यमहाधियः ॥ सुनीलचिकुराभासंचक्रुरंगंचकर्बुरम् ॥ २८ ॥ तत्क्ष्वेडानलधूमौघैःफूत्कारभरनिःसृतैः ॥ मातृवाक्कृतिजाद्धर्मान्नदग्धा
भानुभानुभिः ॥ २९ ॥ विनतापृष्ठमारुह्यकद्रूःस्नेहवशात्ततः ॥ वियन्मार्गमलंकृत्यददर्शोष्णांशुमंडलम् ॥ ३० ॥ तिग्मरश्मिप्रभावेणव्याकुली
भूतमानसा ॥ कद्रूस्ततःखगींप्राहविस्रब्धंविनतेव्रज ॥ ३१ ॥ उष्णगोरुष्णगोभिर्मेतांप्यतेनितरांतनुः ॥ विस्रब्धाहंस्वभावेनत्वंसापेक्षाहिसर्वतः ॥
॥ ३२ ॥ स्वरूपेणपतंगीत्वंपतंगोसौसहस्रगुः ॥ अतएवनतेबाधागगनेतापसंभवा ॥ ३३ ॥ वियत्सरसिहंसोयंभवतींहंसगामिनी ॥ चंडरश्मिप्रतापा
ग्निस्त्वामतोनेहबाधते ॥ ३४ ॥ खगीमुड्डीयमानांखेपुनरूचेबिलेशया ॥ त्राहित्राहिभगिन्यत्रयावोन्यत्रावियत्पथः ॥ ३५ ॥ विनतेविनतांमांत्वंकिंनाव
सिपतत्रिणी ॥ तवदासीभविष्यामित्वदुच्छिष्टनिषेविणी ॥ ३६ ॥ यावज्जीवमहंभूयांत्वत्पादोदकपायिनी ॥ खखोल्कानिपतेदेषाभृशंगद्गदभाषिणी ॥
॥ ३७ ॥ मूर्च्छांगतवतीपक्षपुटौधृत्वाबिडोरगी ॥ सख्युल्कानिपतेदेषावक्तव्येत्विंतिसंभ्रमात् ॥ ३८ ॥ खखोल्केतियदुक्तागीःकद्वासंभ्रांतचेतसा ॥
तदाखखोल्कनामार्कःस्तुतोविनतयाबहु ॥ ३९ ॥ मनागतिग्मतांप्राप्तेखेप्रयातिविवस्वति ॥ ताभ्यांतुरंगमोदर्शिकिंचित्किर्मीरवान्रथे ॥ ४० ॥

वदर्शयति स्वरूपेणेतिद्वयेन ॥ पतंगीपक्षिणी ॥ पतंगशब्देनसूर्योप्युच्यते ॥ शब्दश्लेषेणसापेक्षत्वंतत्रोन्नेयम् ॥ ३३ ॥ वियदेवसरस्तस्मिन् ॥ ३४ ॥ ऊचेउक्तवती ॥ बिलेशयासर्पिणी ॥
॥ ३५ ॥ अवसिरक्षसि ॥ ३६ ॥ खखोल्कनामत्वेअर्कस्यहेतुमाह खखोल्केतिद्वयेन ॥ ३७ ॥ बिडोरगीबिलसर्पिणी ॥ डलयोरैक्यात्बिलाश्रयत्वात्सूर्यस्यातपंसोढुमक्षमेतिबिडपदस्यता
त्पर्यम् ॥ पूर्वार्धंविवृण्वन्हेतुमेवस्पष्टयति ॥ सखीति ॥ तुशब्दोत्रभिन्नक्रमे ॥ इतितुवक्तव्येसंभ्रमादित्यन्वयः ॥ ३८ ॥ यद्यदा ॥ गीर्वाणी ॥ ३९ ॥ किर्मीरवान्कर्बुरवर्णवान् ॥ किर्मीरित

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इतिपाठेकिर्मीरःकर्बुरवर्णोयस्यसंजातः ॥ इतच्प्रत्ययः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ विनताधाराविनम्रतायाआधारभूता ॥ विनताचारेतिकचित् ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥
दूनासिउपतप्तासि ॥ कृतसाध्वसेकृतभये ॥ ४८ ॥ ४९ ॥ येषांमातायन्माता ॥ चकारात्तत्पुत्रानपि ॥ ५० ॥ ५१ ॥ सक्रूरचेतसइतिपाठेक्रूरचित्तयुक्तायाइत्यर्थः ॥ ५२ ॥

उक्ताविनतयैवैषातापोपहतलोचना ॥ क्रूरासरीसृपीसत्यवादिन्याविश्वमान्यया ॥ ४१ ॥ कद्रुत्वयाजितंभद्रेयतउच्चैःश्रवाहयः ॥ चंद्ररश्मिप्रभोप्येपकल्माषइवभासते ॥ ४२ ॥ विधिर्बलीयान्भुजगिचित्रंजयपराजये ॥ क्रूरोपिविजयीक्कापित्वक्रूरोपिपराजयी ॥ ४३ ॥ विनताविनताधारावदंतीतियथागतम् ॥ कद्रूनिवेशनंप्राप्तातस्यादास्यमचीकरत् ॥४४॥ कदाचिद्विनतादर्शिसुपर्णेनाश्रुलोचना ॥ विच्छायामलिनादीनादीर्घनिःश्वासवत्यपि ॥ ॥ ४५ ॥ सुपर्णउवाच ॥ ॥ प्रातःप्रातरहोमातःक्कयासित्वंदिनेदिने ॥ सायमायासिचकुतोविच्छायादीनमानसा ॥ ४६ ॥ कुतोनिःश्वसिसिप्रोच्चैरश्रुपूर्णविलोचना ॥ यथाक्कीबसुतायोषिद्यथापतितिरस्कृता ॥४७॥ ब्रूहिमातर्झटित्यद्यकुतोदूनासिपवित्रिणि ॥ मयिजीवतितेबालेकालेपिकृतसाध्वसे॥ ॥ ४८ ॥ अश्रुनिर्माणकरणेकारणंकिंतपस्विनि ॥ सुचरित्रासुनारीषुनामंगलमिहेष्यते ॥ ४९ ॥ धिक्तांश्चपुत्रान्यन्मातातेषुजीवत्सुदुःखभाक् ॥ वरंवंध्यैवसायस्याःसुतावंध्यमनोरथाः ॥ ५० ॥ इत्यूर्जस्वलमाकर्ण्यवचःसूनोर्गरुत्मतः ॥ विनताप्राहतंपुत्रंमातृभक्तिसमन्वितम् ॥ ५१ ॥ अहंदास्यस्मिरेबालकद्र्वाश्चक्रूरचेतसः ॥ पृष्ठेवहामितांनित्यंतत्पुत्रानपिपुत्रक ॥५२॥ कदाचिन्मंदरंयामिकदाचिन्मलयाचलम् ॥ कदाचिदंतरीपेषुचरेयंतदुदन्वताम् ॥ ॥ ५३ ॥ यत्रयत्रनयेयुस्तेकाद्रवेयाःसुदुर्मदाः ॥ व्रजेयंतत्रतत्राहंतदधीनायतःसुत ॥ ५४॥ गरुडउवाच ॥ ॥ दासीत्वकारणंमातःकिंतेजातंसुलक्षणे ॥ दक्षप्रजापतेःपुत्रिकश्यपस्यप्रियेऽनघे ॥ ५५ ॥ विनतोवाचगरुडंपुरावृत्तमशेषतः ॥ दासीत्वकारणंयद्वदादित्याश्वविलोकनम् ॥ ५६ ॥ श्रुत्वेतिगरुडःप्राहमातरंसत्वरंव्रज॥पृच्छाद्यमातस्तान्दुष्टान्काद्रवेयानिदंवचः ॥५७॥ यद्दुर्लभंहिभवतांयत्रात्यंतरुचिश्चवः॥मद्दासीत्वविमोक्षायतद्याचध्वंददाम्यहम् ॥ ॥ ५८ ॥ तथाकरोच्चविनतातेपिश्रुत्वातदीरितम् ॥ सर्पाःसंमंत्र्यतांप्रोचुर्विनतांहृष्टमानसाः ॥ ५९ ॥ मातृशापविमोक्षाययदिदास्यतिनःसुधाम् ॥ तदासमीहितंतेस्तुनदास्यत्यथदास्यसि ॥ ६० ॥

अन्तरीपेषुमध्यवर्तिजलगर्भितद्वीपेषु ॥ केषां तदुदन्वतान्तेषांप्रसिद्धानांलवणादीनांसमुद्राणाम् ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ संमन्त्र्यमात्रासार्धमितिशेषः ॥ ५९ ॥
मातृशापविमोक्षायतार्क्ष्यस्यभक्ष्याभवतेतिमात्राकद्र्वादत्तस्यशापस्यनाशाय ॥ अमृतेपीतेऽमरत्वेनगरुडभक्ष्यत्वाभावादित्यभिप्रायः ॥ यद्वा गरुडोमातुर्विनतायाःशापविमोक्षार्थमितिवा ॥ दास्य



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तीत्युभयत्रगरुडएवभवतीतिवा ॥ दास्यसीतिवापाठः ॥ नदास्यतिसुधामित्यनुषज्जते ॥ अथचेद्दास्यसिदासीभवसि ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ निषादाश्चाण्डालाः ॥ वेलातटनिवासाःसमुद्रजलतीरवासिनःसमुद्रतीरोच्चप्रदेशनिवासाइतिवा ॥ वेलाकूलनिवासाइतिपाठेपिसएवार्थः ॥ ६४ ॥ शासनीयाःमारणीयाः ॥ ६५ ॥ ६६ ॥ ६७ ॥ मत्स्यादीनांमत्स्यभक्षकाणाम् ॥ मत्स्याशिनामितिक्वचित् ॥ आत्थकथय ॥ लकारव्यत्ययश्छान्दसः ॥ ६८ ॥ ६९ ॥ नीवीपरिधानवस्त्रम् ॥ ७० ॥ ७१ ॥ लक्ष्मचिह्नम् ॥ ७२ ॥ प्रसूर्हेमातः ॥ ७३॥ खदिरांगारव

इत्योंकृत्यसमापृच्छ्यकद्रूंद्रुतगतिःखगी ॥ गरुत्मंतंसमाचष्टहृष्टासंहृष्टमानसम् ॥ ६१ ॥ नागांतकस्ततःप्राहमातरंचिंतयातुराम् ॥ आनीतंविद्धिपीयूषंमातर्मेदेहिभोजनम् ॥ ६२ ॥ विनताप्राहतंपुत्रंसंप्रहृष्टतनूरुहा ॥ भोःसुपर्णार्णवंतूर्णंयाहिमंगलमस्तुते ॥ ६३ ॥ संतितत्रापिबहुशोनिषादामत्स्यघातिनः ॥ वेलातटनिवासाश्चतान्भक्षयदुरात्मनः ॥ ६४ ॥ परप्राणैर्निजप्राणान्येपुष्णंतीहदुर्धियः ॥ शासनीयाःप्रयत्नेनश्रेयस्तच्छासनंपरम् ॥ ६५ ॥ बहुहिंसाकृतांहिंसाभवेत्स्वर्गस्यसाधनम् ॥ विहिंसितेषुदुष्टेषुरक्ष्यंतेभूरिशोयतः ॥६६॥ निषादेष्वपिचेद्विप्रःकश्चिद्भवतिपुत्रक ॥ सरक्षणीयोयत्नेनभक्षणीयोनकर्हिचित् ॥ ६७ ॥ ॥गरुडउवाच ॥ ॥ मत्स्यादिनांवसन्मध्येकथंज्ञेयोद्विजोमया ॥ अभक्ष्योयस्त्वयाप्रोक्तस्तच्चिह्नंकिंचनात्थमे ॥ ६८ ॥ ॥ विनतोवाच ॥ ॥ यज्ञसूत्रंगलेयस्यसोत्तरीयंसुनिर्मलम् ॥ नित्यधौतानिवासांसिभालंतिलककलांछितम् ॥६९॥ सपवित्रौकरौयस्ययन्नीवीकुशगर्भिणी॥ यन्मौलिःसशिखाग्रंथिःसज्ञेयोब्राह्मणस्त्वया ॥ ७० ॥ उच्चरेदृग्यजुःसाम्नामृचमेकामपीहयः ॥ गायत्रीमात्रमंत्रोपिसविज्ञेयोद्विजस्त्वया ॥ ७१ ॥ गरुडउवाच ॥ मध्येसदानिषादानांयोवसेज्जननिद्विजः ॥ तस्यैतेष्वेकमप्येवनमन्येलक्ष्मबोधकम् ॥ ७२ ॥ लक्ष्मांतरंसमाचक्ष्वद्विजबोधकरंप्रसूः ॥ येनविज्ञायतंविप्रंत्यजेयमपिकंठगम् ॥ ७३ ॥ तच्छ्रुत्वाविनताप्राहयस्तेकंठगतोऽगज ॥ खदिरांगारवद्दह्यात्तमपाकुरुदूरतः ॥ ७४ ॥ द्विजमात्रेपियाहिंसासाहिंसाकुशलायन ॥ देशंवंशंश्रियंस्वंचनिर्मूलयतिकालतः ॥ ७५ ॥ निशम्यकाश्यपिरितिप्रसूपादौप्रणम्यच ॥ गृहीताशीर्ययौशीघ्रंखमार्गेणखगेश्वरः ॥७६॥ दूरादालोकयांचक्रेनिषादान्मत्स्यजीविनः ॥ पक्षौविधूयपक्षींद्रोरजसापूर्यरोदसी ॥ ७७ ॥ अंधीकृत्यदिशोभागानब्धिरोधस्युपाविशत् ॥ व्यादायवदनंघोरंमहाकंदरसन्निभम् ॥ ७८ ॥ कांदिशीकानिषादास्तुविविशुस्तत्रचस्वयम् ॥ मन्वानेष्वथपंथानंतेषुकंठंविशत्स्वपि ॥ ७९ ॥ जज्वालेंगलसंस्पर्शोद्विजस्तत्कंठकंदलीम् ॥ प्राक्प्रविष्टानथोताक्ष्योंनिषादानोदरींदरीम् ॥ ८० ॥

त्खदिरकाष्ठस्यज्वलदंगारवदित्यर्थः ॥ ७४ ॥ द्विजमात्रेपिब्राह्मणमात्रेयाहिंसाहिंसामात्रंप्राणनाशोवासकुशलायहितायनकिंतुदेशायेति ॥ स्वंधनम् ॥ कालतःकालक्रमेण ॥ ७५ ॥ ७६ ॥ विधूयप्रकंप्य ॥ रोदसीद्यावाभूमी ॥ ७७ ॥ अब्धिरोधसिसमुद्रतीरे ॥ कन्दरसन्निभन्दरीतुल्यम् ॥ ७८ ॥ कांदिशीकाभयद्रुताः ॥ ७९ ॥ इंगलसंस्पर्शोवह्नितुल्यसंपर्कः ॥ कण्ठएवकन्दलीकन्द

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

री ॥ रलयोरेकत्वात् ॥ कण्ठकंदलमितिपाठेपिसएवार्थः ॥ षंढत्वमार्षम् ॥ यद्वाकन्दलीगुल्मविशेषः ॥ कलध्वनौकंदलीतुमृगगुल्मप्रभेदयोरितिमेदिनीकारः ॥ ८० ॥ उदगिरदुद्गीर्णवान्मुखान्निष्काशितवानित्यर्थः ॥ ८१ ॥ निगदकथय ॥ ८२ ॥ ८३ ॥ प्रेष्यप्रस्थापयित्वा ॥ ८४ ॥ बिभ्युर्भयंप्रापुः ॥ ८५ ॥ वर्मभृतःकवचधारिणः ॥ ८६ ॥ तिर्यग्गतीतिश्लोकत्रयंवाक्यम् ॥ रविर्नायंयतस्तिर्यग्गतिः ॥ नायमग्निर्यतःसोग्निर्धूमवान् ॥ क्षणप्रभाविद्युदसौनं तस्याअस्थिरत्वात् ॥ अस्यचस्थिरप्रभावत्वादित्यर्थः ॥ ८७ ॥ आकृतिराकारः ॥ ८८ ॥ दुधावअकंपयत् ॥ ८९ ॥ पार्णतार्णवत्पर्णैस्तृणैश्चनिर्मिताःपुरुषप्रतिकृतयोयथावायुनानीयंतेतद्वत् ॥ स्वार्थेवातद्धितः ॥ तृणपर्णवदित्यर्थः ॥ ९० ॥ प्रणष्टेष्वदर्शनंगतेषु ॥ ९१ ॥ आधूयउत्सार्यदूरीकृत्येतियावत् ॥

प्रवेश्यकंठतालुस्थंतंविज्ञायद्विजंस्फुटम् ॥ भयादुदगिरत्तूर्णंमातृवाक्येनयंत्रितः ॥ ८१ ॥ तमुद्गीर्णंनरंदृष्ट्वापक्षिराट्समभाषत ॥ कस्त्वंजात्यासिनिगदममकंठविदाहकृत् ॥ ८२ ॥ सतदाहेतिविप्रोहंपृष्टःसन्गरुडाग्रतः ॥ वसाम्येषुनिषादेषुजातिमात्रोपजीवकः ॥ ८३ ॥ तंप्रेष्यगरुडोदूरंभक्षयित्वाथभूरिशः ॥ नभोविक्षोभयांचक्रेप्रलयानिलसन्निभः ॥ ८४ ॥ तंदृष्ट्वातिग्मतेजस्कंज्वालाततदिगंतरम् ॥ ज्वलद्दावानलंशैलमिवबिभ्युर्दिवौकसः ॥ ॥ ८५ ॥ तेसन्नह्यंतयुद्धायसज्जीकृतबलायुधाः ॥ अध्यास्यवाहनान्याशुसर्वेवर्मभृतःसुराः ॥ ८६ ॥ तिर्यग्गतीरविर्नायंनायमग्निःसधूमवान् ॥ क्षणप्रभाप्यसौनैवकोनःसम्मुखएत्यसौ ॥ ८७ ॥ नदैत्येषुप्रभेदृक्स्यान्नाकृतिर्दानवेष्वियम् ॥ महासाध्वसदःकोयमस्माकंहृत्प्रकंपनः ॥ ८८ ॥ यावत्संभावयंतीतिनीतिज्ञाअपिनिर्जराः ॥ तावद्दुधावस्वौपक्षौपक्षिराजोमहाबलः ॥ ८९ ॥ निपेतुःपक्षवातेनसायुधाश्चसवाहनाः ॥ नज्ञायंतेक्कसंप्राप्तावात्यापार्णतार्णवत् ॥ ९० ॥ अथतेषुप्रणष्टेषुबुद्ध्याविज्ञायपक्षिराट् ॥ कोशागारंसुधायाःसतत्रापश्यच्चरक्षिणः ॥ ९१ ॥ शस्त्रास्त्रोद्यतपाणींस्तान्सुरानाधूयसर्वशः ॥ ददर्शकर्तरीयंत्रममृतोपरिसंस्थितम् ॥ ९२ ॥ मनःपवनवेगेनभ्रममाणंमहारयम् ॥ अपिस्पृशंतंमशकंयत्खंडयतिकोटिशः ॥ ९३ ॥ उपोपविश्यपक्षींद्रस्तस्ययंत्रस्यनिर्भयः ॥ क्षणंविचारयामासकिमत्रकरवाण्यहो ॥ ९४ ॥

कर्तरीयंत्रंकर्तनशीलंयंत्रम् ॥ कर्तनंकर्तस्तंरातुंशीलंयस्येतिव्युत्पत्तेः॥ यकारागमाभावोदैर्घ्यंचार्षम् ॥ यद्वा कर्तःकर्तनंछेदनंकर्तस्यछेदनस्यरादानंविद्यतेयस्मिन् ॥ व्रीह्यादिभ्यश्चेत्यनकारांतादिनिः ॥ स्त्रीत्वमार्षम् ॥ यद्वा कर्तनंरायतेकारणत्वेनगच्छतीतिकर्तरी ॥ रीङ्गतावितिधातुः ॥ कर्तरीकेशादिच्छेत्रीशस्त्रविशेषस्तदाकारंयंत्रमिति ॥ तद्वच्छेदकंयंत्रमितिकेचित् ॥ ९२ ॥ यत्कर्तरीयंत्रम् ॥ खंडयतिखंडंकरोतिच्छिनत्तीतियावत् ॥ ९३ ॥ उपोपविश्यतस्यकर्तरियंत्रस्यसमीपेउपविश्य ॥ क्वचिदुपसर्गस्यापिद्विर्वचनम् ॥ तथाचश्रूयते ॥ प्रप्रपूज्यमहादेवंसंसंयम्यमनःसदा ॥ उपोपहाय





CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

संसर्गंनिर्निर्गतःसतापसइति ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १ ॥ देहंचेतिश्लोकद्वयंवाक्यम् ॥ पूर्वार्धमेवविवृणोति परमाण्वित्यर्धेन ॥ २ ॥ देहस्यलाघवाल्लघुत्वा त्कर्तरीयंत्रमधःप्रविश्य ॥ किंकुर्वन् ॥ तद्यंत्रतस्तस्माद्यंत्रात् ॥ बिभ्यद्भयंप्राप्नुवन् ॥ देहंवंचयन्तिरश्चीनोभूत्वातस्माद्रक्षयन् ॥ कथंभूताद्यंत्रात् ॥ वायुखंडनाद्वायोरपिगतिवैकल्यकर्तुरित्यर्थः ॥ ॥ ३ ॥ मूलमुत्पाटचयस्मिंस्तदमृतभाजनंस्थापितंतदुत्पाटचामृतभाजनंगृहीत्वास्वर्गसद्मसुदेवेषुक्रोशत्सुसत्सुअमृतंहरतीत्यार्तस्वरंकुर्वाणेषुसत्सुपावनेमार्गेआवहप्रवहादिवायुमार्गेनिर्ययाविति ॥

स्प्रष्टुंनलभ्यतेचैतद्वात्यानप्रभवेदिह ॥ कउपायोत्रकर्तव्योवृथाजातोममोद्यमः ॥ ९५ ॥ नबलंप्रभवेदत्रनकिंचिदपिपौरुषम् ॥ अहोप्रयत्नोदेवानामे तत्पीयूषरक्षणे ॥ ९६ ॥ यदिमेशंकरेभक्तिर्निर्द्वंद्वातीवनिश्चला ॥ तदासदेवदेवोमांवियुनक्तुमहाऽधिया ॥ ९७ ॥ यद्यहंमातृभक्तोस्मिस्वामिनःशंकरादपि ॥ तदामेबुद्धिरत्रास्तुपीयूषहरणक्षमा ॥ ९८ ॥ आत्मार्थंनोद्यमश्चायंह्यत्स्थोवेत्तीतिविश्वगः ॥ मातुर्दास्यविमोक्षाययतेहममृतंप्रति ॥ ९९ ॥ जरितौ पितरौयस्यबालापत्यश्चयःपुमान् ॥ साध्वीभार्याचतत्पुष्टचैदोषोऽकृत्येपितस्यन ॥ १०० ॥ इतिचिंतयतस्तस्यबुद्धिरासीन्महात्मनः ॥ १ ॥ देहं चकारसोत्यंतमणीयांसमणोरपि ॥ परमाणुसहस्रांशंकृत्वारूपंमहाद्भुतम् ॥ २ ॥ प्रविश्यकर्तरीयंत्रमधोदेहस्यलाघवात् ॥ बिभ्यत्तद्यंत्रतोदेहंवं चयन्वायुखंडनात् ॥ मूलमुत्पाट्यतरसागृहीत्वाऽमृतभाजनम् ॥ ३ ॥ निर्ययौपावनेमार्गेक्रोशत्सुस्वर्गसद्मसु ॥ ४ ॥ तथावैकुंठनाथंतेगत्वाप्रोचुः सुधाभुजः ॥ निर्जित्यनीयतेचक्रिन्सुधानोजीवितंपरम् ॥ ५ ॥ इत्याकर्ण्यहरिस्तेभ्योऽभयंदत्त्वात्वरायुतः ॥ कृत्वायुद्धंचसुमहद्विंशार्कघटिकाद्वयम् ॥ ॥ ६ ॥ शुंभदेव्योर्यथासूतगरुडस्तत्रचाधिकः ॥ तदाप्रसन्नोभगवान्महायुद्धेनसर्वदः ॥ ७ ॥ गत्वागरुडमाहेदंप्रसन्नोस्मिखगेश्वर ॥ वरंवृणीहिभद्रंते जितवृंदारवृंदक ॥ ८ ॥ हसित्वागरुडःप्राहविश्वरूपंजनार्दनम् ॥ अहमेवप्रसन्नोस्मित्वंप्रार्थयवरद्वयम् ॥ ९ ॥ ततःकैटभजित्प्राहवैनतेयंमुदान्वितः ॥ वृतंवृतंमहोदारदेहिदेहिवरद्वयम् ॥ ११० ॥ इतिविष्णूदितंश्रुत्वाप्रहसन्नाहपक्षिराट् ॥ किंविलंबेनतद्ब्रूहिदत्तंदत्तंवरद्वयम् ॥ ११ ॥ अलब्धलाभे संजातेद्यूतादिविजयोदये ॥ दातव्यंसुधियापात्रेसदालाभजयोक्तवा ॥ १२ ॥ ॥ श्रीविष्णुरुवाच ॥ ॥ बलवानसिपक्षींद्रतन्मेवाहनतांव्रज ॥ एकोवरोयंवरदद्वितीयंशृणुकाश्यप ॥ १३ ॥

॥ ४ ॥ ५ ॥ विंशार्कघटिकाद्वयंविंशोविंशतिःअर्कोद्वादशविंशार्कौचताघटिकाश्चतासांद्वयंचतुःषष्टिदंडाः ॥ दंडचतुष्टयाधिकाहोरात्रमित्यर्थः ॥ ६ ॥ तत्रविष्णुगरुडयोर्मध्ये ॥ ७ ॥ ८ ॥ ९ ॥ वृतंवृतमितिहर्षेद्विरुक्तिः ॥ ११० ॥ दत्तंदत्तमित्यौत्सुक्ये ॥ ११ ॥ औत्सुक्येनरिपवेवरद्वयदानेस्वयमेवहेतुमाह ॥ अलब्धलाभइति ॥ १२ ॥ द्वयंप्रार्थयति बलवानितिसार्धद्वाभ्याम् ॥ १३ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

द्विजिह्वेभ्यइतिभाविस्वरूपंजानताभगवतोक्तम् ॥ द्रागझटिति ॥ १४ ॥ दिवःस्वर्गात् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ १२० ॥ इवशब्दोभिन्नक्रमेदेवेभ्योऽर्थात्तेषांजीवित मितिवेति ॥ २१ ॥ २२ ॥ २३ ॥ उक्तन्यायमन्यत्राप्यतिदिशति ॥ अन्येइति ॥ बुभुक्षंतिभोक्तुमिच्छंति ॥ अन्यायलब्धान्नमितिवापाठः ॥ परिणतिंपरिपाकम् ॥ २४ ॥ २५ ॥ एवमु

दर्शयित्वामृतंप्राज्ञमातृदास्यविमोक्षकम् ॥ द्विजिह्वेभ्यःकुरुतथाद्रागश्वंतिनतेयथा ॥ १४ ॥ देयासुधासुधाभुग्भ्योद्वितीयोस्तुवरोमम ॥ तथेतिसप्र तिज्ञायनिर्ययौपक्षिराड्दिवः ॥ १५ ॥ समातरंविनिर्मोच्यदास्यात्काश्यपनंदनः ॥ नागानांपुरतोधृत्वामहामृतकमंडलुम् ॥ १६ ॥ अमृतंपातुकामां स्तानित्याचष्टमहामतिः ॥ नागाःशुचित्वमासाद्यभोक्तव्यैषासुधाशुभा ॥ १७ ॥ नोचेदशुचिभिःस्पृष्टास्नानादिपरिवर्जितैः ॥ यास्यत्यदृश्यतामे षासुधाऽनिमिषरक्षिता ॥ १८ ॥ सामान्यमपियद्द्रव्यंस्पृश्यतेऽशुचिभिःक्वचित् ॥ हरंतितद्रसंदेवास्तच्चतिष्ठतिनीरसम् ॥ १९ ॥ इत्युक्त्वासहितो मात्रावैनतेयोविनिर्ययौ ॥ कुशासनेचतैरुक्तोधृत्वापीयूषभाजनम् ॥ १२० ॥ यावत्स्नातुंगताःसर्पास्तावत्पीयूषभाजनम् ॥ आदायविष्णुनादत्तंदेवे भ्यइवजीवितम् ॥ २१ ॥ आगत्यभुजगाःस्नात्वानदृष्ट्वामृतभाजनम् ॥ अहोप्रतारितानीतममृतंचेतिचुक्रुशुः ॥ २२ ॥ ततःपर्यलिहन्दर्भान्पीयूषस्पर्श कांक्षिणः ॥ आस्तांतावत्सुधादूरंजिह्वास्तेषांद्विधाभवन् ॥ २३ ॥ अन्येप्यन्यायलब्धार्थंयेबुभुक्षंतिकेवलम् ॥ तन्नोपरिणतिंगच्छेद्द्रोकुंवातैर्नलभ्यते ॥ ॥ २४ ॥ न्यायाध्वस्थेनतार्क्ष्येणसुधाप्राप्तातिदुर्लभा ॥ लब्धाप्यन्यायतोनागैर्दृष्टमात्राक्षणाद्गता ॥ २५ ॥ अथदास्याद्विनिर्मुक्ताविनतोवाचखेचरम् ॥ पुत्रकाशींप्रयास्यामिदास्यपापापनुत्तये ॥ २६ ॥ तावत्पापानिजृंभंतेनानाजन्मार्जितान्यपि ॥ यावत्काशीनहृत्संस्थापुनर्भवविघातिनी ॥ २७ ॥ काशीस्मरणमात्रेणकिंचिन्नेयदघंव्रजेत् ॥ गर्भवासोपिनश्येतविश्वेशानुग्रहात्परात् ॥ २८ ॥ यत्रविश्वेश्वरःसाक्षात्तारापतिविभूषणः ॥ तारयेत्तारकद्रो ण्यादुस्तराद्भवसागरात् ॥ २९ ॥ विश्वेशानुगृहीतानांविच्छिन्नाखिलकर्मणाम् ॥ भवेत्काशींप्रतिमतिर्नेतरेषांकदाचन ॥ १३० ॥ काशींप्रतिमनोयेषां निःशेषक्षालितैनसाम् ॥ तएवमानवालोकेसत्यंनृपशवोपरे ॥ ३१ ॥ तैरेवकालोविजितस्तएवविहगतैनसः ॥ अपुनर्गर्भवासास्तेप्राप्तावाराणसीहयैः ॥ ॥ ३२ ॥ श्रेयसांभाजनंचैतन्नृजन्मनमुधानयेत् ॥ देवानामपिदुष्प्राप्यंकाशीसंदर्शनादृते ॥ ३३ ॥ कःकलिःकोथवाकालःकिंवाकर्माण्यनेकधा ॥ परानं दप्रदंक्षेत्रमविमुक्तंयदीक्षितम् ॥ ३४ ॥ तेगर्भवासेतिष्ठंतिपुनस्तेगर्भवासिनः ॥ येनगर्भवनच्छेत्रींसेवंतेवरणामसिम् ॥ ३५ ॥

पोद्घातमारचय्यप्रस्तुतंवक्तुमाह अथेत्यतआरभ्यउभावपीत्यतःप्राक्तनेनग्रंथेन ॥ २६ ॥ २७ ॥ २८ ॥ तारापतिविभूषणश्चंद्रलांछनः ॥ तारकद्रोण्यातारकःप्रणवःषडक्षररामंत्रराजोवासएव द्रोणीनौकाविशेषस्तयेत्यर्थः ॥ द्रोणीकाष्ठांबुवाहिनीत्यमरः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ गर्भएववनंतच्छेत्रीम् ॥ गर्भवासच्छेत्रीमितिपाठेछंदोभंगआर्षः ॥ ३५ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ १४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ भेदहृग्भेदज्ञानम् ॥ चकारएवार्थे ॥ मास्त्वेवेत्यर्थः ॥ नौआवयोः ॥ ४४ ॥ पततिगच्छतीतिपत्त्रंयानम् ॥ सत्पत्त्रतांसद्वाहनता

निशम्येतिवचःप्राहताक्ष्योंनत्वाथमातरम् ॥ अहमप्यागमिष्यामिकाशींद्रष्टुंशिवार्चिताम् ॥ ३६॥ मातुराज्ञामथप्राप्यजनन्यासहपक्षिराट् ॥ क्षणाद्वाराणसींप्रापमोक्षनिक्षेपभूमिकाम् ॥ ३७ ॥ उभावपिचतेपातेतपउग्रंमहामती ॥ संस्थाप्यशांभवंलिंगंपतत्त्रींद्रोऽचलेंद्रियः ॥ ३८ ॥ नाम्नाखखोल्कमादित्यंसंस्थाप्यविनताशुभम् ॥ अचिरेणैवकालेनमहतस्तपसस्तयोः ॥३९॥ काश्यांप्रसन्नौसंजातौदेवौशंकरभास्करौ ॥ गरुडस्थापिताल्लिंगादाविरासीदुमापतिः ॥ १४० ॥ गरुडायवरान्प्रादात्सुबहूनतिदुर्लभान् ॥ खगेंद्रममभक्तोसितवज्ञानंभविष्यति ॥ ४१ ॥ वेत्स्यसित्वंरहस्यंमेयन्नज्ञातंसुरैरपि ॥ त्वयैतत्स्थापितंलिंगंगरुडेश्वरसंज्ञितम् ॥ ४२ ॥ परमज्ञानदंपुंसांदृष्टंस्पृष्टंसमर्चितम् ॥ अन्यच्चशृणुपक्षींद्रहितंतेवच्मिसांप्रतम् ॥ ४३ ॥ असावहंसवैविष्णुर्मास्तुतेभेदहृक्चनौ ॥ एवंतस्यैवपक्षींद्रदैत्येंद्रबलहारिणः ॥ ४४ ॥ प्राप्यसत्पत्रतांपत्रिंस्त्वमप्यर्च्योभविष्यसि ॥ इतिदत्त्वावरंशंभुःस्वभक्तायगरुत्मते ॥ ४५ ॥ तत्रैवांतर्हितोजातोगरुडोपिहरिंययौ ॥ हरेरथत्वंसंप्राप्यसोपिपूज्योऽभवद्भुवि ॥ ४६ ॥ तपस्यंतीमथालोक्यकदाचिद्विनतांप्रभुः ॥ शिवस्यैवपरामूर्तिःखखोल्कोनामभास्करः ॥ ४७ ॥ दत्त्वावरंचपापघ्नंशिवज्ञानसमन्वितम् ॥ काशीवासिजनानेकभवपापक्षयंकरः ॥ ४८ ॥ विनतादित्यइत्याख्यःखखोल्कस्तत्रसंस्थितः ॥ इत्थंखखोल्कआदित्यःकाशीविघ्नतमोहरः ॥ ४९ ॥ तस्यदर्शनमात्रेणसर्वपापैःप्रमुच्यते ॥ काश्यांपैशंगिलेतीर्थेखखोल्कस्यविलोकनात् ॥ नरश्चिंतितमाप्नोतिनीरोगोजायतेक्षणात् ॥ १५० ॥ नरःश्रुत्वैतदाख्यानंखखोल्कादित्यसंभवम् ॥ गरुडेशेनसहितंसर्वपापैःप्रमुच्यते ॥ १५१ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखण्डेपूर्वार्द्धेखखोल्कादित्यगरुडेशयोर्वर्णनंनामपंचाशत्तमोऽध्यायः ॥ ५० ॥ इतिकाशीखंडपूर्वार्धसमाप्तम् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

मित्यर्थः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ पैशंगिलेपिलिपिलातीर्थे ॥ १५० ॥ १५१ ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यभगवत्पूज्यपादशिष्यश्रीरामेंद्रवनशिष्येण रामानंदेनकृतायांकाशीखंडपूर्वार्धटीकायांपंचाशत्तमोध्यायःसमाप्तः ॥ ५० ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

---

इदं पुस्तकं खेमराजश्रीकृष्णदासश्रेष्ठिना मुंबय्यां स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणालये
मुद्रयित्वा प्रकाशितम् । शके १८३० संवत १९६५.

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्रीगणेशायनमः ॥ ॥ रामंनमामिपरमात्मसुखप्रकाशंविश्वस्ययज्जननपालनभंगमेकम् ॥ स्वेच्छावतारमतसीकुसुमावभासंश्रीजानकीसमुपलालितपादपद्मम् ॥ १ ॥ यत्कृपातरणिंप्राप्य निस्तीर्णोहंभवार्णवम् ॥ सदयंतंगुरुंवंदेश्रीरामेंद्रवनाभिधम् ॥ २ ॥ गुणरत्नोदधिःसर्वदोषकारणघस्मरः ॥ जयतात्सच्चिदानन्दःसदाशिवकृतीश्वरः ॥ ३ ॥ अरुणवृद्धकेशवादित्याविमलगंगायमादित्याश्च ॥ वर्ण्यन्तेत्रषडनुक्रमादेकपञ्चाशत्तमेध्याये ॥ ४ ॥ अतीतेध्यायेकद्र्वाःकाद्रवेयानांचश्रुतंविनतायादास्यमघटमानंमन्वानःपृच्छति पार्वतीत्यादिना ॥ १ ॥ २ ॥ पुत्रशापाद्दासीत्वंप्राप्स्यतीतिवक्तुंतदुक्तमनूद्यतदाख्यानम्प्रतिजानीते ॥ हंजिकात्वमिति ॥ हंजिकात्वंदासीत्वम् ॥ यदाहामरः ॥ हंडेहंजेहलाह्वानेनीचांचेटींसखींप्रतीति ॥ हंतदास्यमितिक्वचित् ॥ दासिक्यंत्वितिचान्यत्र ॥ ३ ॥ उलूकःपेचकः ॥ ४ ॥ कौशिकोपिसएवतैःपक्षिभिः सकौशिकइत्यन्वयः ॥ स्वराज्यादितिवापाठः ॥ अवरोपितोनिराकृतः ॥ ५ ॥ निराकरणेहेतुमाह क्रूराक्षोयमित्यक्षरद्वय

श्रीगणेशायनमः ॥ ॥ अगस्तिरुवाच ॥ ॥ पार्वतीहृदयानंदसर्वज्ञांगभवप्रभो ॥ किंचित्प्रष्टुमनाःस्वामिंस्तद्भवान्वक्तुमर्हति ॥ १ ॥ दक्षप्रजापतेः पुत्रीकश्यपस्यपरिग्रहः ॥ गरुत्मतःप्रसूःसाध्वीकुतोदास्यमवापसा ॥ २ ॥ ॥ स्कंदउवाच ॥ ॥ हंजिकात्वंयथाप्राताविनतासातपस्विनी ॥ तदप्यहंसमाख्यामिनिशामयमहामते ॥ ३ ॥ कद्रूरजीजनत्पुत्रान्शतंकश्यपतःपुरा ॥ उलूकमरुणंतार्क्ष्यमसूतविनतात्रयम् ॥ ४ ॥ कौशिको राज्यमाप्यापिश्रेष्ठत्वात्पक्षिणांमुने ॥ निर्गुणत्वाच्चतैःसर्वैःसराज्यादवरोपितः ॥ ५ ॥ क्रूराक्षोयंदिवांधोयंसदावक्रनखस्त्वसौ ॥ अतीवोद्वेगजनकंसर्वेषामस्यभाषणम् ॥ ६ ॥ इत्थंतस्यगुणग्रामान्विकथ्यबहुशःखगाः ॥ नाद्यापिवृण्वतेराज्येकमपिस्वैरचारिणः ॥ ७ ॥ कौशिकेथतथावृत्तेपुत्रवीक्षणलालसा ॥ अंडंप्रस्फोटयामासमध्यमंविनतातदा ॥ ८ ॥ पूर्णेवर्षसहस्रेतुप्रस्फोटचघटसंभव ॥ तदभेदितयौत्सुक्यादंडमष्टमकेशते ॥ ९ ॥ तावत्सर्वाणिगात्राणितस्यातिमहसःशिशोः ॥ ऊर्वोरुपरिसिद्धानितदंडांतर्निवासिनः ॥ १० ॥ अंडान्निर्गतमात्रेणक्रोधारुणमुखश्रिया ॥ अर्धनिष्पन्नदेहेनशिशुनाशापिताप्रसूः ॥ ११ ॥ जनयित्रित्वयादृष्ट्वाकाद्रवेयान्स्वलीलया ॥ खेलतोमातुरुत्संगेयदंडंव्याधितांद्विधा ॥ १२ ॥ तदनिष्पन्नसर्वांगःशपामित्वां विहंगमे ॥ तेषामेवैधिदासीत्वंसपत्न्यंगभुवामिह ॥ १३ ॥ वेपमानाथतच्छापादिदंप्रोवाचपक्षिणी ॥ अनूरोब्रूहिमेशापावसानंमातुरंगज ॥ १४ ॥ ॥ अनूरुरुवाच ॥ अंडंतृतीयंमाभिंधिह्यनिष्पन्नंममेवहि ॥ अस्मिन्नंडेभविष्योयःसतेदास्यंहरिष्यति ॥ १५ ॥ इत्युक्त्वासोरुणोगच्छदुड्डीयानंदकाननम् ॥ यत्रविश्वेश्वरोदद्यादपिपंगोःशुभांगतिम् ॥ १६ ॥

न्यूनेनसार्धेन ॥ ६ ॥ विकथ्यकथयित्वा ॥ विकर्ण्येतिपाठेआलोच्येत्यर्थः ॥ व्यकत्थन्निितिपाठेव्यकत्थयन्निंदितवंतइत्यर्थः ॥ अतएवाद्यापिस्वैरचारिणस्तेखगाअन्यंवानिर्गुणंकमपिराजत्वेनवृण्वत इतिपूर्वेणैवान्वयः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ यद्यस्मात् ॥ व्याधिअव्याधि ॥ अडभावश्चार्षः ॥ अभेदीत्यर्थः ॥ बाधितंद्विधेतिक्वचित्पाठः ॥ स्फोटितंत्वितिचान्यत्र ॥ १२ ॥ तत्तस्मात् ॥ एधिभव ॥ एहीतिपाठेआसमन्ताद्गच्छेत्यर्थः ॥ सपत्न्यंगभुवांकद्रूदरजातानाम् ॥ सपत्नीचतदंगभुवश्चतेषामितिवा ॥ सपत्न्यंगभुवासहेतिपाठेसपत्न्याःकद्र्वायदंगंशरीरंतद्भुवापुत्रेणसहेतिव्याख्येयम् ॥ १३ ॥ १४ ॥ १५ ॥ प्रासंगिकसकद्रवाप्रस्ततानेवषड्डादित्यानाह ॥ इत्युक्त्वेति ॥ पंगोःश्रोणस्य ॥ यदाहामरः ॥ श्रोणःपंगावितिं ॥ १६ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ १७ ॥ अनूरुररुणइतिनामद्वयंनिर्वक्ति ॥ अनूरुत्वादिति ॥ यःअनूरुत्वाज्जान्वोरुपरिभागरहितत्वादनूरुः ॥ यतोयस्मात्क्रोधेनअरुणईषल्लोहितवर्णइतिकृत्वारुणश्चकथ्यते ॥ तेनवाराणस्यांतपस्तप्त्वासूर्यआराधितइत्यर्थः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ अरुणायससूर्यायसूर्यसहिताय ॥ अरुणोदयसूर्यायेतिक्वचित्पाठः ॥ २५ ॥

एतत्तेपृच्छतःख्यातंविनतादास्यकारणम् ॥ मुनेप्रसंगतोवच्मिअरुणादित्यसंभवम् ॥ १७ ॥ अनूरुत्वादनूरुर्योरुणःक्रोधारुणोयतः ॥ वाराणस्यांतपस्तप्त्वातेनाराधिदिवाकरः ॥ १८ ॥ सोपिप्रसन्नोदत्त्वाथवरांस्तस्माअनूरवे ॥ आदित्यस्तस्यनाम्नाभूदरुणादित्यइत्यपि ॥ १९ ॥ ॥ अर्कउवाच ॥ तिष्ठानूरोममरथेसदैवविनतात्मज ॥ जगतांचहितार्थायध्वांतंविध्वंसयन्पुरः ॥ २० ॥ अत्रत्वत्स्थापितांमूर्तिंयेभजिष्यंतिमानवाः ॥ वाराणस्यांमहादेवोत्तरेतेषांकुतोभयम् ॥ २१ ॥ येर्चयिष्यंतिसततमरुणादित्यसंज्ञकम् ॥ मामत्रतेषांनोदुःखंनदारिद्र्यंनपातकम् ॥ २२ ॥ व्याधिभिर्नाभिभूयंतेनोपसर्गैश्चकैश्चन ॥ शोकाग्निनानदह्यंतेह्यरुणादित्यसेवनात् ॥ २३ ॥ अथस्यंदनमारोप्यनीतवानरुणंरविः ॥ अद्यापिसरथेसौरेप्रातरेवसमुद्यति ॥ २४ ॥ यःकुर्यात्प्रातरुत्थायनमस्कारंदिनेदिने ॥ अरुणायससूर्यायतस्यदुःखभयंकुतः ॥ २५ ॥ अरुणादित्यमाहात्म्यंयःश्रोष्यतिनरोत्तमः ॥ नतस्यदुष्कृतंकिंचिद्भविष्यतिकदाचन ॥ २६ ॥ स्कंदउवाच ॥ वृद्धादित्यस्यमाहात्म्यंशृणुतेकथयाम्यहम् ॥ यस्यश्रवणमात्रेणनरोनोदुष्कृतंभजेत् ॥ २७ ॥ पुरात्रवृद्धहारीतोवाराणस्यांमहातपाः ॥ महातपःसमृद्ध्यर्थंसमाराधितवान्रविम् ॥ २८ ॥ मूर्तिंसंस्थाप्यशुभदांभास्वतःशुभलक्षणाम् ॥ दक्षिणेनविशालाक्ष्याःदृढभक्तिसमन्वितः ॥ २९ ॥ तुष्टस्तस्मैवरंप्रादाद्ब्रध्नोवृद्धतपस्विने ॥ अलंविलंब्ययाचस्वकस्तेदेयोवरोमया ॥ ३० ॥ सोथप्रसन्नाद्द्युमणेर्वृणीतवरंमुनिः ॥ यदिप्रसन्नोभगवान्युवत्वंदेहिमेपुनः ॥ ३१ ॥ तपःकरणसामर्थ्यंस्थविरस्यनमेयतः ॥ पुनस्तारुण्यमाप्तोहंचरिष्याम्युत्तमंतपः ॥ ३२ ॥ तपएवपरोधर्मस्तपएवपरंवसु ॥ तपएवपरःकामोनिर्वाणंतपएवहि ॥ ३३ ॥ ऋतेनतपसःक्वापिलभ्याऐश्वर्यसंपदः ॥ पदंध्रुवादिभिःप्रापिकेवलंतपसोबलात् ॥ ३४ ॥ ततस्तपश्चरिष्यामिलोकद्वयमहत्त्वदम् ॥ प्राप्यत्वद्वरदानेनयौवनंसर्वसंमतम् ॥ ३५ ॥ धिग्जरांप्राणिनामत्रययासर्वोविरज्यति ॥ जरातुरेंद्रियग्रामेस्त्रियोपिनयतःस्वसात् ॥ ३६ ॥

॥ २६ ॥ २७ ॥ वृद्धश्चासौनाम्नागोत्रतोवाहारीतश्चवृद्धहारीतः ॥ २८ ॥ भास्वतःसूर्यस्य ॥ दक्षिणेनविशालाक्ष्याः ॥ विशालाक्ष्यादक्षिणेइत्यर्थः ॥ २९ ॥ ब्रध्नःसूर्यः ॥ ३० ॥ द्युमणेःसूर्यात् ॥ युवत्वंतारुण्यम् ॥ ३१ ॥ ३२ ॥ वसुधनम् ॥ निर्वाणंमोक्षः ॥ ३३ ॥ ऋतेविना ॥ ३४ ॥ ३५ ॥ जरयाआतुरइंद्रियग्रामोयस्यतस्मिन् ॥ जरातुरेंद्रियग्रामा



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

उपाविशदुपसमीपेविवेश ॥ किमर्थ
नितिकचित् ॥ स्वसात्आत्मसात्स्वाधीनाइत्यर्थः ॥ ३६ ॥ ३७ ॥ धियंज्ञानम् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ स्वाभ्याशेस्वसमीपे ॥ आसयामासउपवेशयामास ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥
माविशदित्याकांक्षायामाह ॥ निःशब्दइति ॥ स्वस्थोनिरुद्विग्नः ॥ ४६ ॥ अवसरमवकाशम् ॥ ४७ ॥

कांक्षंतिदीर्घतपसेचिरमायुर्जितेंद्रियाः ॥ धनंदानायपुत्रायकलत्रं वरंमरणमेवास्तुमाजरास्त्वतिशोच्यकृत् ॥ क्षणंदुःखंचमरणंजरादुःखंक्षणेक्षणे ॥३७॥ ददौचचारुताहेतुंतारुण्यंपुण्यसाधनम् ॥३९॥ एवंसवृद्धहारीतोवाराणस्यांमहामुनिः ॥ मुक्तयेधियम् ॥ ३८ ॥ वृद्धस्यवार्धकंब्रध्नस्तत्क्षणादपहृत्यवै ॥ संप्राप्ययौवनंप्राप्तपउग्रंचचारह ॥४०॥ वृद्धेनाराधितोयंस्माद्धारीतेनतपस्विना ॥ आदित्योवार्धकहरोवृद्धादित्यस्ततःस्मृतः ॥ ४१ ॥ वृद्धादित्यं समाराध्यवाराणस्यांवटोद्भव ॥ जरादुर्गतिरोगघ्नंबहवःसिद्धिमागताः ॥ ४२ ॥ वृद्धादित्यंनमस्कृत्यवाराणस्यांरवौनरः ॥ लभेदभीप्सितांसिद्धिंनक चिद्दुर्गतिंलभेत् ॥ ४३ ॥ ॥ स्कंदउवाच ॥ ॥ अतःपरंशृणुमुनेकेशवादित्यमुत्तमम् ॥ यथातुकेशवंप्राप्यसविताज्ञानमाप्तवान् ॥ ४४ ॥ व्योम्निसं चरमाणेनसप्ताश्वेनादिकेशवः ॥ एकदादर्शिभावेनपूजयँल्लिंगमैश्वरम् ॥ ४५ ॥ कौतुकादिवउत्तीर्यहरेरवि रुपाविशत् ॥ निःशब्दोनिश्चलःस्वस्थो महाश्चर्यसमन्वितः ॥ ४६ ॥ प्रतीक्षमाणोवसरंकिंचित्प्रष्टुमनाहरिम् ॥ हरिंविसर्जितार्चंचप्रणनामकृतांजलिः ॥ ४७ ॥ स्वागतंतेहरिःप्राहबहुमान पुरःसरम् ॥ स्वाभ्याशआसयामासभास्वंतंनतकंधरम् ॥ ४८ ॥ अथावसरमालोक्यलोकचक्षुरधोक्षजम् ॥ नत्वाविज्ञापयामासकृतानुज्ञोऽसुरारिणा ॥ ४९ ॥ ॥ रविरुवाच ॥ ॥ अंतरात्मासिजगतांविश्वंभरजगत्पते ॥ तवापि पूज्यःकोप्यस्तिजगत्पूज्यात्रमाधव ॥ ५० ॥ त्वत्तश्चाविर्भवेदेतत्त्व यिसर्वंप्रलीयते ॥ त्वमेवपातासर्वस्यजगतोजगतांनिधे ॥ ५१ ॥ इत्याश्चर्यंसमालोक्यप्राप्तोस्म्यत्रतवांतिकम् ॥ किमिदंपूज्यतेनाथभवताभव तापहृत् ॥ ५२ ॥ इतिश्रुत्वाहृषीकेशःसहस्रांशोरुदीरितम् ॥ उच्चैर्माशंससप्ताश्वंवारयन्करसंज्ञया ॥ ५३ ॥ ॥ श्रीविष्णुरुवाच ॥ ॥ देवदेवो महादेवोनीलकंठउमापतिः ॥ एकएवहिपूज्योत्रसर्वकारणकारणम् ॥ ५४ ॥ अत्रत्रिलोचनादन्यंसमर्चयतियोल्पधीः ॥ सलोचनोपिविज्ञेयोलोचना भ्यांविवर्जितः ॥५५॥ एकोमृत्युंजयःपूज्यो जन्ममृत्युजराहरः ॥ मृत्युंजयंकिलाभ्यर्च्यश्वेतोमृत्युंजयोभवत् ॥ ५६ ॥ कालकालंसमाराध्यभृंगीकालं जिगायवै ॥ शैलादिमपितत्याजमृत्युर्मृत्युंजयार्चकम् ॥५७॥ विजिग्येत्रिपुरंयस्तुहेलयैकेषुमोक्षणात् ॥ तंसमभ्यर्च्यभूतेशंकोनपूज्यतमोभवेत् ॥५८॥

भवतापहृत्संसारदुःखनाशकः ॥ ५२ ॥ करसंज्ञयाहस्तचालनेनउच्चैर्यथास्यात्तथामाशंसेतिसप्ताश्वंवारयन् ॥ श्रीविष्णुरुवाचेत्यन्वयः ॥ ५३ ॥ महादेवइति ॥ महत्त्वंत्रिविधपरिच्छेदशून्यत्वम् ॥
देवत्वंस्वप्रकाशत्वम् ॥ सर्वेषांप्रकृत्यादीनांकारणानामपिकारणंसर्वकारणकारणम् ॥ सर्वेषांसर्वकारणमितिकचित ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ विजिग्येजितवान् ॥ जिगायेतिक

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्मरस्येतिक्कचित्पाठः सचिंत्यः ॥ स्मरविद्विषः चित ॥ ५८ ॥ त्रिजगदिति ॥ त्रिजगज्जयशीलस्यहेतोःकारणस्यत्र्यक्षस्याराधनंपरंपरमपुरुषार्थप्राप्तिसाधनमित्यर्थः ॥ अतःसारस्यविश्वेशस्य ॥ कामशत्रोःकोनाराधयतिआराधनंनकरोतिअपितुसर्वएवकरोतीत्यर्थः ॥ कर्मणिवाषष्ठ्यौ॥ हेतुरितिप्रथमांतपाठेत्रिजगज्जयिनोममअन्यस्यवायस्यकस्यचित्रिलोचनस्यश्रेष्ठमाराधनमेवजयहेतुरित्यर्थः ॥

त्रिजगज्जयिनोहेतोरुत्र्यक्षस्याराधनंपरम् ॥ कोनाराधयतिब्रध्नसारस्यस्मरविद्विषः ॥ ५९ ॥ यस्याक्षिपक्ष्मसंकोचाज्जगत्संकोचमेत्यदः ॥ विकस्वरं विकासाच्चकस्यपूज्यतमोनसः ॥ ६० ॥ शंभोर्लिंगंसमभ्यर्च्यपुरुषार्थचतुष्टयम् ॥ प्राप्नोत्यत्रपुमान्सद्योनात्रकार्याविचारणा ॥ ६१ ॥ समर्च्यशांभवं लिंगमपिजन्मशतार्जितम् ॥ पापपुंजंजहात्येवपुमानत्रक्षणाद्ध्रुवम् ॥ ६२ ॥ किंकिंनसंभवेदत्रशिवलिंगसमर्चनात् ॥ पुत्राःकलत्रक्षेत्राणिस्वर्गोमोक्षो प्यसंशयम् ॥ ६३ ॥ त्रैलोक्यैश्वर्यसंपत्तिर्मयाप्राप्तासहस्रगो ॥ शिवलिंगार्चनादेकात्सत्यंसत्यंपुनःपुनः ॥ ६४ ॥ अयमेवपरोयोगस्त्विदमेवपरंतपः ॥ इदमेवपरंज्ञानंस्थाणुलिंगंयदर्च्यते ॥ ६५ ॥ यैर्लिंगंसकृदप्यत्रपूजितंपार्वतीपतेः ॥ कुतोदुःखभयंतेषांसंसारेदुःखभाजने ॥ ६६ ॥ सर्वंपरित्यज्यरवेयो लिंगंशरणंगतः ॥ नतंपापानिबाधंतेमहांत्यपिदिवाकर ॥ ६७ ॥ लिंगार्चनेभवेद्बुद्धिस्तेषामेवात्रभास्कर ॥ येषांपुनर्भवच्छेदंचिकीर्षतिमहेश्वरः ॥६८॥ नलिंगाराधनात्पुण्यंत्रिषुलोकेषुचापरम् ॥ सर्वतीर्थाभिषेकःस्याल्लिंगस्नानांबुसेवनात् ॥ ६९ ॥ तस्माल्लिंगंत्वमप्यर्कसमर्चयमहेशितुः ॥ संप्राप्तुं परमांलक्ष्मींमहातेजोभिजृंभणीम् ॥ ७० ॥ इतिश्रुत्वाहरेर्वाक्यंतदारभ्यसहस्रगुः ॥ विधायस्फाटिकंलिंगंसुनेद्यापिसमर्चयेत् ॥ ७१ ॥ गुरुत्वे नतदाकल्पंविवस्वानादिकेशवम् ॥ तत्रोपतिष्ठतेद्यापिउत्तरेणादिकेशवात् ॥ ७२ ॥ अतःसकेशवादित्यःकाश्यांभक्ततमोनुदः ॥ समर्चितःसदादेयान्म नसोवांछितंफलम् ॥ ७३ ॥ केशवादित्यमाराध्यवाराणस्यांनरोत्तमः ॥ परमंज्ञानमाप्नोतियेननिर्वाणभाग्भवेत् ॥ ७४ ॥ तत्रपादोदकेतीर्थेकृतसर्वो दकक्रियः ॥ विलोक्यकेशवादित्यंमुच्यतेजन्मपातकैः ॥ ७५ ॥ अगस्तेरथसप्तम्यांरविवारोयदाप्यते ॥ तदापादोदकेतीर्थेआदिकेशवसन्निधौ ॥७६॥ स्नात्वोषसिनरोमौनीकेशवादित्यपूजनात् ॥ सप्तजन्मार्जितात्पापान्मुक्तोभवतितत्क्षणात् ॥ ७७ ॥ यद्यज्जन्मकृतंपापंमयासप्तसुजन्मसु ॥ तन्मेरोगंचशोकंचमाकरीहंतुसप्तमी ॥ ७८ ॥

तथाचवक्ष्यति ॥ त्रैलोक्यैश्वर्यसंपत्तिर्मयाप्राप्तासहस्रगो॥शिवलिंगार्चनादेकादिति ॥ शेषंपूर्ववत् ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ एकात्मुख्यात्केवलाद्वा ॥ ६४ ॥ ६५ ॥ ६६॥६७॥ ॥ ६८॥ ६९ ॥ महेशितुर्महेश्वरस्य ॥ ७० ॥ ७१ ॥ उत्तरेणउत्तरस्याम् ॥ ७२ ॥ ७३ ॥ ७४॥ पादोदकेगंगावरुणायोःसंभेदे ॥७५॥ रथसप्तमीअचलासप्तमी ॥७६॥ ७७ ॥ तत्रस्नानस्यपूर्वां



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

गंमंत्रत्रयमाह ॥ यद्यदित्यादि ॥ जन्मसुकृतंजन्मकृतंजन्मारभ्ययत्पापंकृतमित्यर्थः ॥ माकरीमकरसंबंधिनीमाघीत्यर्थः॥७८॥ मनोवाक्कायजादीनिपापानिभाविष्यज्जन्माविषयाण्यपीतिज्ञातव्यानि ॥७९॥ सप्तसप्तयोऽश्वाःयस्याःसासप्तसप्तिकासौरीशक्तिरित्यर्थः तस्याःसंबोधनंहेसप्तसप्तिके ॥८०॥८१॥८२॥८३॥ उच्चदेशेपर्वतदेशेतन्नाम्नीतिवा॥बाहुजःक्षत्रियः॥बाहूराजन्यःकृतइतिश्रुतेः ॥८४॥

एतज्जन्मकृतंपापंयच्चजन्मांतरार्जितम् ॥ मनोवाक्कायजंयच्चज्ञाताज्ञातेचयेपुनः ॥ ७९ ॥ इतिसप्तविधंपापंस्नानान्मेसप्तसप्तिके ॥ सप्तव्याधिसमायुक्तं हरमाकरिसप्तमि ॥ ८० ॥ एतन्मंत्रत्रयंजप्त्वास्नात्वापादोदकेनरः ॥ केशवादित्यमालोक्यक्षणान्निष्कलुषोभवेत् ॥ ८१ ॥ केशवादित्यमाहात्म्यं शृण्वञ्छ्रद्धासमन्वितः ॥ नरोनलिप्यतेपापैःशिवभक्तिंचविंदति ॥ ८२ ॥ ॥ स्कंदउवाच ॥ ॥ अतःपरंशृणुमुनेविमलादित्यमुत्तमम् ॥ हरिकेशवने रम्येवाराणस्यांव्यवस्थितम् ॥ ८३ ॥ उच्चदेशेभवत्पूर्वंविमलोनामबाहुजः ॥ सप्राक्तनात्कर्मयोगाद्विमलेपथ्यपिस्थितः ॥ ८४ ॥ कुष्ठरोगमवाप्योच्चैस्त्यक्त्वादारान्गृहंवसु ॥ वाराणसींसमासाद्यत्रध्नमाराधयत्सुधीः ॥ ८५ ॥ करवीरैर्जपाभिश्चगंधकैःकिंशुकैःशुभैः ॥ रक्तोत्पलैरशोकैश्चससमानर्च भास्करम् ॥ ८६ ॥ विचित्ररचनैर्माल्यैःपाटलाचंपकोद्भवैः ॥ कुंकुमागुरुकर्पूरमिश्रितैःशोणचंदनैः ॥ ८७ ॥ देवमोहनधूपैश्चबह्वामोदततांबरैः ॥ कर्पूरवर्तिदीपैश्चनैवेद्यैर्घृतपायसैः ॥ ८८ ॥ अर्घदानैश्चविधिवत्सौरैःस्तोत्रजपैरपि ॥ एवंसमाराधयतस्तस्यार्कोवरदोभवत् ॥ ८९ ॥ उवाचचवरंब्रूहिविमलामलचेष्टित ॥ कुष्ठश्चतेप्रयात्वेषप्रार्थयान्यंवरंपुनः ॥ ९० ॥ आकर्ण्यविमलश्चेत्थमालापंरश्मिमालिनः ॥ प्रणतोदंडवद्भूमौसंप्रहृष्टतनूरुहः ॥ ९१ ॥ शनैर्विज्ञापयांचक्रएकचक्ररथंरविम् ॥ जगच्चक्षुरमेयात्मन्महाध्वांतविधूनन ॥ ९२ ॥ यदिप्रसन्नोभगवन्यदिदेयोवरोमम ॥ तदात्वद्भक्तिनिष्ठायेकुष्ठंमास्तुतदन्वये ॥ ९३ ॥ अन्येपिरोगामासंतुमास्तुतेषांदरिद्रता ॥ मास्तुकश्चनसंतापस्त्वद्भक्तानांसहस्रगो ॥ ९४ ॥

॥८५॥ गंधकैर्गंधयुक्तैरितिसर्वेषांविशेषणम् ॥ बंधूकैरितिवापाठः ॥ ८६ ॥ शोणचंदनैरक्तचंदनैः ॥ ८७ ॥ बह्वामोदततांबरैःबहुलगंधानेकवस्त्रैः ॥ बहुनाआमोदेनततंव्याप्तमंबरमाकाशंयैस्तैर्देवमोहनधूपैरितिवा ॥ बहुभिर्देवतापरैरितिक्वचित्पाठः ॥ तदादेवतैकोद्देशेनसंपादितैरित्यर्थः ॥ घृतपायसैर्घृतालोडितपरमान्नैः ॥ घृतसाधितैरितिक्वचित्पाठः ॥ ८८ ॥८९॥९०॥९१॥९२॥९३॥९४॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ७ ॥ प्रत्यष्ठात्स्थापितवान् ॥ ८ ॥ ९ ॥ ११० ॥ ११ ॥
॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ मंगलवासरेभरण्यांभरणीनक्षत्रयुक्तायांचतुर्दश्याम् ॥ भरण्यांभूतायामितिव्यधिकरणेवासप्तम्यौ ॥ काश्यांयमतीर्थेस्नात्वानो
अभिलष्यंत्याकांक्षंति ॥ किंतदाह ॥ भौमइति ॥

॥ श्रीसूर्यउवाच ॥ ॥ तथास्त्वितिमहाप्राज्ञश्रृण्वन्यंवरमुत्तमम् ॥ त्वयेयंपूजितामूर्तिरेवंकाश्यांमहामते ॥ ९५ ॥ अस्याःसान्निध्यमत्राहंनत्यक्ष्या
मिकदाचन ॥ प्रथितातवनाम्नाचप्रतिमैषाभविष्यति ॥९६॥ विमलादित्यइत्याख्याभक्तानांवरदासदा ॥ सर्वव्याधिनिहंत्रीचसर्वपापक्षयंकरी ॥९७॥
इतिदत्त्वावरान्सूर्यस्तत्रैवांतरधीयत ॥ विमलोनिर्मलतनुःसोपिस्वभवनंययौ ॥ ९८ ॥ इत्थंसविमलादित्योवाराणस्यांशुभप्रदः ॥ तस्यदर्शनमात्रेणकु
ष्ठरोगःप्रणश्यति ॥९९॥ यश्चैतांविमलादित्यकथांवैश्रृणुयान्नरः ॥ प्राप्नोतिनिर्मलांशुद्धिंत्यज्यतेचमनोमलैः ॥१००॥ ॥ स्कंदउवाच ॥ ॥ गंगादित्यो
स्तितत्रान्योविश्वेशाद्दक्षिणेनवै ॥ तस्यदर्शनमात्रेणनरःशुद्धिमियादिह ॥ १ ॥ यदागंगासमायाताभगीरथपुरस्कृता ॥ तदागंगांपरिष्टोतुंरविस्तत्रैवसं
स्थितः ॥ २ ॥ अद्याप्यहर्निशंगंगां संमुखीकृत्यभास्करः ॥ परिष्टौतिप्रसन्नात्मागंगाभक्तवरप्रदः ॥ ३ ॥ गंगादित्यंसमाराध्यवाराणस्यांनरोत्तमः ॥
दुर्गतिं जातु न क्वापिलभतेनचरोगभाक् ॥ ४ ॥ स्कंदउवाच ॥ अन्यच्छृणुमहाभागयमादित्यस्यसंभवम् ॥ यच्छ्रुत्वापिनरोजातुयमलोकंनपश्यति
॥ ५ ॥ यमेशात्पश्चिमेभागेवीरेशात्पूर्वतोमुने ॥ यमादित्यंनरोदृष्ट्वायमलोकंनपश्यति ॥ ६ ॥ यमतीर्थेनरःस्नात्वाभूतायांभौमवासरे ॥ यमेश्वरंवि
लोक्याशुसर्वैःपापैः प्रमुच्यते ॥ ७ ॥ यमतीर्थेयमःपूर्वंतस्वासुविमलंतपः ॥ यमेशंचयमादित्यंप्रत्यष्ठाद्भक्तसिद्धिदम् ॥ ८ ॥ यमेनस्थापितोयस्मा
दादित्यस्तत्रकुंभज ॥ अतःसहियमादित्योयामींहरतियातनाम् ॥ ९ ॥ यमेशंचयमादित्यंयमेनस्थापितंनमन् ॥ यमतीर्थेकृतस्नानोयमलोकंन
पश्यति ॥ ११० ॥ यमतीर्थेचतुर्दश्यांभरण्यांभौमवासरे ॥ तर्पणंपिंडदानंचकृत्वापित्रनृणीभवेत् ॥ ११ ॥ अभिलष्यंतिसततंपितरोनरकौकसः ॥
भौमेभरण्यांभूतायांयदियोगोयमुत्तमम् ॥ १२ ॥



ननुतर्पणमात्रेणकथंनरकान्मुक्तिःस्यात्तत्राह ॥ यदियोगोयमिति ॥ यदीतिनिश्चये ॥ योगस्त्वयाणांमे
स्माकंमुक्तयेयःकश्चिदपिसतिलंतर्पणमपिकिंकुर्यात्करिष्यतीत्यग्रिमेणान्वयः ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

लनम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ ११८ ॥ ॥ इतिश्रीरामानन्दकृतायांकाशीखण्डटीकायामेकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ द्विपञ्चाशत्तमेयानंविधेर्मंदरगो त्रतः ॥ काश्यांदशाश्वमेधस्यमाहात्म्यंचोपवर्ण्यते ॥१॥१॥ तिग्मास्तीक्ष्णागावोरश्मयोयस्यसतिग्मगुः ॥ २ ॥ योगिन्यस्तिग्मगुश्चानन्दवनंप्राप्यकाशीवृत्तान्तंनिवेदयितुंनायांत्येतन्नचित्रमित्याह ॥ किमत्रेति ॥ ३ ॥ अपिशब्दार्थविवृण्वन्पूर्वोक्तमेवस्फुटयति ॥ अधाक्षिषमिति ॥ अधाक्षिषंदग्धवानस्मि ॥ त्रिजगज्जित्वरंत्रिजगज्जयशीलम् ॥ दृशानेत्रेण ॥ काश्यभिलाषाख्यःकामइतिशेषः ॥

काश्यांकश्चिद्यमेतीर्थेकृत्वास्नानंमहामतिः ॥ अपियस्तर्पणंकुर्यात्सतिलंनोविमुक्तये ॥ १३ ॥ किंगयागमनैःपुंसांकिंश्राद्धैर्भूरिदक्षिणैः ॥ यदिकाश्यां यमेतीर्थेयोगेस्मिञ्श्राद्धमाप्यते ॥ १४ ॥ श्राद्धंकृत्वायमेतीर्थेपूजयित्वायमेश्वरम् ॥ यमादित्यंनमस्कृत्यपितॄणामनृणोभवेत् ॥१५॥ ॥ स्कंदउवाच ॥ ॥ इतितेद्वादशादित्याःकथिताःपापनाशनाः ॥ यत्संभवंसमाकर्ण्यनरोननिरयीभवेत् ॥ १६ ॥ अन्येपिसंतिघटजरविभक्तैरनेकशः ॥ काश्यांसंस्था पिताःसूर्यागुह्यकार्कादयःकिल ॥ १७ ॥ श्रुत्वाध्यायानिमान्पुण्यान्द्वादशादित्यसूचकान् ॥ श्रावयित्वापिनोमर्त्योदुर्गतिंयातिकुत्रचित् ॥ ११८ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायामुत्तरार्द्धेचतुर्थेकाशीखण्डेअरुणवृद्धकेशवविमलगंगायमादित्यवर्णनंनामैकपंचाशत्तमोऽध्यायः ॥ ॥ ५१ ॥ ॥ छ ॥ स्कंदउवाच ॥ ॥ गभस्तिमालिनिगतेकाशीं त्रैलोक्यमोहिनीम् ॥ पुनश्चिंतामवापोच्चैर्मंदरस्थोमुनेहरः ॥ १ ॥ नाद्याप्यायां तियोगिन्योनाद्याप्यायातितिग्मगुः ॥ प्रवृत्तिरपिमेकाश्याश्चित्रमत्यंतदुर्लभा ॥२॥ किमत्रचित्रंयत्काशीमदीयमपिमानसम् ॥ निश्चलंचंचलयतिगण नाकेतरेसुरे ॥३॥ अधाक्षिषमहंकामंत्रिजगज्जित्वरंदृशा ॥ अहोकाश्यभिलाषोत्रमामेवदुनुयात्तराम् ॥४॥ काशीप्रवृत्तिमन्वेष्टुंकंवाप्रहिणुयामितः ॥ ज्ञातुंकएवनिपुणोयतःसचतुराननः ॥ ५ ॥ इत्याहूयविधातारंबहुमानपुरःसरम् ॥ तत्रोपवेश्यश्रीकंठःप्रोवाचचतुराननम् ॥ ६ ॥ योगिन्यःप्रेषिताःपूर्वं प्रेषितोथसहस्रगुः ॥ नाद्यापितेनिवर्ततेकाश्याःकलशसंभव ॥ ७ ॥

दुनुयात्तरामतिशयेनतापयति॥दहतेतरामितिक्वचित्॥४॥ काशीति॥काश्यावृत्तान्तमन्वेष्टुंकअन्नं वावितर्के प्रहिणुयांप्रस्थापयामि ॥ यद्वा वानिश्चये कंब्रह्माणमेवप्रहिणुयामिति॥तत्रहेतुः॥ज्ञातुमिति ॥ ज्ञातुंकाशीप्रवृत्तिमित्यनुषज्जते ॥ ब्रह्मैवदक्षः॥तत्रहेतुर्यतःसचतुराननइति ॥ ५ ॥ तत्रपार्श्वे ॥ उपोपवेश्येतिवापाठः ॥ ६ ॥ कलशसम्भवेतिअगस्त्यंप्रतिगुह्यस्यसंबोधनम् ॥ कमलसंभवेतिपाठेब्रह्म

१ चतुरइतिपाठस्तुमनोहरः ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ईहितेचेष्टितेकार्येइतियावत् ॥ १२ ॥ तद्वेत्सीति ॥ तद्वा
णःसंबोधनम् ॥ ७ ॥ ८ ॥ अरतौदृष्टान्तः ॥ अनच्छेति ॥ अल्पपल्वलेअल्पेसरसि ॥ ९ ॥ नाबाधिष्टनबाधितवान् ॥ १० ॥ ११ ॥ अद्यैवेति ॥ स्वमायायास्वशक्त्यापार्वत्यासहेत्यर्थः ॥ १४ ॥
क्यगौरवंमन्दरदरगदानंचतच्छब्दार्थः ॥ मन्दोमूर्खः ॥ १३ ॥ तर्हीश्वरस्यतवगमनप्रतिबन्धकाभावात्स्वयमेवकिमितिनगम्यतेतत्राह॥ ॥ त्वयापार्थमितिपाठःसुगमः ॥ कर्तव्यंत्वयी
विधेइति ॥ हेविधेहेविधातर्यतःसर्वकार्याणित्वमेवविदधासिकरोष्यतोऽखिलमितिचेतिचवंत्वयाकर्तव्यमितियद्वक्तव्यंतत्त्वय्यपार्थमपगतार्थंव्यर्थमित्यर्थः ॥ शुभोदर्कःशुभोत्तरफलः
तिपाठेअपार्थमव्यर्थमितिकाक्वाव्याख्येयमिति ॥ १५ ॥ रिष्टंशुभाभावःअरिष्टंतदभावःशुभंयथास्यात्तथागच्छ ॥ रिष्टंक्षेमेशुभाभावेपुंसिखड्गेचफेनिलइतिमेदिनीकारः ॥

॥ ८ ॥ मंदरेत्ररतिर्मेनभृशंसुंदरकंदरे ॥ अनच्छतुच्छपानीयेनक्र
सासमुत्सुकयेत्काशीलोकेशममानसम् ॥ प्राकृतस्यजनस्येवचंचलाक्षीवकाचन ॥ ८ ॥ मंदरेत्ररतिर्मेनभृशंसुंदरकंदरे ॥ अनच्छतुच्छपानीयेनक्र
स्येवाल्पपल्वले ॥ ९ ॥ नाबाधिष्टतथामांसतापोहालाहलोद्भवः ॥ काशीविरहजन्मात्रयथामामतिबाधते ॥ १० ॥ शीतरश्मिःशिरःस्थोपिवर्षन्पीयू
षसीकरैः ॥ काशीविश्लेषजंतापंनाहोगमयितुंप्रभुः ॥ ११ ॥ विधेविधेहिमेकार्यमार्यधुर्यमहामते ॥ याहिकाशीमितस्तूर्णंयतस्वचममेहिते ॥ १२ ॥
अद्यैवकिंनगच्छेयंकाशींब्रह्मन्स्वमायया ॥ दिवोदासस्व
ब्रह्मंस्त्वमेवतद्वेत्सिकाशीत्यजनकारणम् ॥ मंदोपिनत्यजेत्काशींकिमुयोवेत्तिकिंचन ॥१३॥ अद्यैवकिंनगच्छेयंकाशींब्रह्मन्स्वमायया ॥ दिवोदासस्व
धर्मस्थंनतूल्लंघितुमुत्सहे ॥ १४॥ विधेसर्वविधेयानित्वमेवविदधासियत् ॥ इतिचेतिचवक्तव्यंत्वय्यपार्थमतोखिलम् ॥१५॥ अरिष्टंगच्छपंथास्तेशुभो
दर्कोभवत्वलम् ॥ आदायाज्ञांविधिर्मूर्ध्निययौवाराणसींमुदा ॥१६॥ सितहंसरथस्तूर्णंप्राप्यवाराणसींपुरीम् ॥ कृतकृत्यमिवात्मानममन्यततदात्मभूः ॥
॥ १७ ॥ हंसयानफलंमेद्यजातंकाशीसमागमे ॥ काशीप्राप्तौयतःप्रोक्ताअंतरायाःपदेपदे ॥ १८ ॥ दृशिधातुरभूदद्यमदृशौप्राप्यसान्वयः ॥ स्पष्टंदृष्टिपथं
प्राप्तायदेषाऽऽनंदवाटिका ॥ १९ ॥ स्वयंसिंचातियामद्भिःस्वाभिःस्वर्गतरंगिणी ॥ यत्रानंदमयावृक्षायत्रानंदमयाजनाः ॥ २० ॥ निर्विशंतिसदाकाश्यां
फलान्यानंदवंत्यपि ॥ सदैवानंदभूःकाशीसदैवानंददःशिवः ॥ २१ ॥ आनंदरूपाजायंतेतेनकाश्यांहिजंतवः ॥ चरणौचरितुंवित्तस्तावेवकृतिनामिह ॥
॥ २२ ॥ चरणौविचरेतांयौविश्वभर्तृपुरीभुवि ॥ तावेवश्रवणौश्रोतुंसंविदातेबहुश्रुतौ ॥ २३ ॥ इहश्रुतिमतांपुंसांयाभ्यांकाशीश्रुतासकृत् ॥ तदेवमनु
तेसर्वंमनस्त्विहमनस्विनाम् ॥ २४ ॥ येनानुमन्यतेचैषाकाशीसर्वप्रमाणभूः ॥ बुद्धिर्बुध्यतिसासर्वमिहबुद्धिमतांसताम् ॥ ययैतद्धूर्जटेर्धामध्रुवंस्व
विषयीकृतम् ॥ २५ ॥ वरंतृणानिधान्यानितानिवात्याहतान्यपि ॥ काश्यांयान्यापतंतीहनजनाःकाश्यदर्शनाः ॥ २६ ॥

॥ १६ ॥ सिताःशुभ्राःहंसायस्मिन्सरथोयस्यसः ॥ १७ ॥ १८ ॥ दृशिरिति ॥ दृशिरप्रेक्षणेइतिदृशिधातुः ॥ दृश्यतेऽनयेतिदृक्चक्षुः ॥ मद्दृशौमच्चक्षुषी ॥ सान्वयःसार्थकः ॥ यद्यस्मात् ॥१९॥
आनन्दवाटिकांविशिनष्टि ॥ स्वयमिति ॥ स्वाभिःस्वकीयाभिः ॥ ताभिरितिपाठेप्रसिद्धाभिरित्यर्थः ॥ २० ॥ वृक्षाणामानंदमयत्वंकैमुत्यन्यायेनदर्शयति ॥ निर्विशन्तीति ॥ अन्यत्रस्थितान्य
पिफलानिकाश्यांनिर्विशंतिसंतिआनन्दवंतिभवन्तीति ॥ काशीस्थितानांवृक्षाणामानन्दमयत्वंकिंवक्तव्यमितिभावः ॥ यत्रानन्दमयाजनाइत्यत्रकारणमाह ॥ सदैवेति ॥ २१ ॥ वित्तोजानीतः ॥
॥ २२ ॥ संविदातेविजानीतः ॥ २३ ॥ मनुतेध्यायति ॥ २४ ॥ बुध्यतिनिश्चिनोति ॥ २५ ॥ वात्याहतानिवातचक्रेणांदोलितानि ॥ काशींनपश्यन्तिकाश्याःनदर्शनंयेषामिति



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वाकाङ्ग्यदर्शनाः ॥ २६ ॥ २७ ॥ २८ ॥ बृहत्तरैः फलैरित्यन्वयः ॥ २९ ॥ व्यधायिअकारि ॥ विश्वेशस्यनिर्मितिर्निर्माणंयस्याःसाविश्वेशनिर्मितिः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ शतेभ्यःपरेपरःशताअसंख्याताराजानोमयादृष्टाः ॥ परंकेवलंतेष्वेषुराजसुमध्येतवसद्गुणाद्दिव्याःपवित्रायेतेप्रायशोममदर्शनंगताइतिपंचमेनान्वयः ॥ यायजूकाइज्याशीलाः ॥ ३५ ॥ विनिष्कृतारि षड्वर्गानिर्जितशत्रुभूतषडिंद्रियवर्गाः ॥ श्रुतस्यपारदृश्वानःअध्ययनस्यपारगामिनः ॥ राजनीतिविचक्षणाःसंधिविग्रहयानासनद्वैधाश्रयेषुनिपुणाः ॥ ३६ ॥ ३७ ॥ रयोवेगः ॥ ३८ ॥

अद्यमेसफलंचायुःपरार्धद्वयसंमितम् ॥ यस्मिन्सतिमयाप्रापिदुष्प्रापाकाशिकापुरी ॥ २७ ॥ अहोमेधर्मसंपत्तिरहोमेभाग्यगौरवम् ॥ यदद्राक्षिषमद्याहं काशींसुचिरचिंतिताम् ॥ २८ ॥ अद्यमेस्वतपोवृक्षोमनोरथफलैरलम् ॥ शिवभक्त्यंबुनासिक्तःफलितोतिबृहत्तरैः ॥ २९ ॥ मयाव्यधायिबहुधासृष्टिःसृष्टिंवितन्वता ॥ परमन्यादृशीकाशीस्वयंविश्वेशनिर्मितिः ॥ ३० ॥ इतिहृष्टमनावेधादृष्ट्वावाराणसींपुरीम् ॥ वृद्धब्राह्मणरूपेणराजानंचददर्शह ॥ ३१ ॥ जलार्द्राक्षतपाणिश्चस्वस्त्युक्त्वापृथिवीभुजे ॥ कृतप्रणामोराज्ञाथभेजेतद्दत्तमासनम् ॥३२॥ कृतमानोनृपतिनासोभ्युत्थानासनादिभिः ॥ विप्रोव्यजिज्ञपद्भूपंपृष्टागमनकारणम् ॥ ३३ ॥ ॥ ब्राह्मणउवाच ॥ ॥ भूपालबहुकालीनोस्म्यहमत्रचिरंतनः ॥ त्वंतुमांनैवजानासिजानेत्वांहिरिपुंजयम् ॥ ॥ ३४ ॥ परःशतामयादृष्टाराजानोभूरिदक्षिणाः ॥ विजितानेकसंग्रामायायजूकाजितेंद्रियाः ॥ ३५ ॥ विनिष्कृतारिषड्वर्गाःसुशीलाःसत्त्वशालिनः ॥ श्रुतस्यपारदृश्वानोराजनीतिविचक्षणाः ॥ ३६ ॥ दयादाक्षिण्यनिपुणाःसत्यव्रतपरायणाः ॥ क्षमयाक्षमयातुल्यागांभीर्यजितसागराः ॥ ३७ ॥ जितरोषरयाःशूराःसौम्यसौंदर्यभूमयः ॥ इत्यादिगुणसंपन्नाःसुसंचितयशोधनाः ॥३८॥ परंद्दिव्याःपवित्रायेराजर्षेतवसद्गुणाः ॥ तेष्वेषुराजसुममप्रायशोनदृशंगताः ॥ ३९ ॥ प्रजानिजकुटुंबस्त्वंत्वंतुभूदेवदैवतः ॥ महातपःसहायस्त्वंयथानान्येतथानृपाः ॥ ४० ॥ धन्योमान्योसिचसतांपूजनीयोसिसद्गुणैः ॥ देवाअपिदिवोदासत्वत्रासान्नविमार्गगाः ॥ ४१ ॥ किंनःस्तुत्यातवनृपद्विजानामस्पृहावताम् ॥ किंकुर्मस्त्वद्गुणग्रामाःस्तावकान्नःप्रकुर्वते ॥४२॥ गोष्ठीतिष्ठत्वियंतावत्प्रस्तुतंस्तौमिसांप्रतम् ॥ यष्टुकामोस्म्यहंराजंस्त्वांसहायमतोवृणे ॥४३॥ त्वयाराजन्वतीचैषाऽवनिःसर्वर्धिभाजनम् ॥ अहंचास्तिधनोराजन्न्यायोपात्तमहाधनः ॥४४॥ इयंचराजधानीतेकर्मभूमावनुत्तमा ॥ यस्यांकृतानांकार्याणांसंवर्तेपिनसंक्षयः ॥४५॥ संचितंयद्धनंपुंभिर्नयसन्मार्गगामिभिः ॥ तत्काश्यांविनियुज्येतक्लेशायेतरथाभवेत् ॥४६॥ महिमानंपरंकाश्याःकोपिवेदनभूपते ॥ ऋतेत्रिनयनाच्छंभोःसर्वज्ञानप्रदायिनः ॥४७॥

दर्शनेत्रंज्ञानंवा ॥ ३९ ॥ सद्गुणत्वमेवाह ॥ प्रजेति ॥ ४० ॥ ४१ ॥ अस्पृहावतांस्पृहारहितानाम् ॥ निरीहस्यतृणंनृपाइतिन्यायादित्यर्थः ॥ स्तावकान्स्तुतिंकुर्वाणान् ॥ ४२ ॥ गोष्ठीवार्ता ॥ स्तौमिकथयामि ॥ ४३ ॥ अहंचास्तिधनइति ॥ अस्तिशब्दःसुबंतप्रतिरूपकः ॥ [illegible] क्वचित् ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

CC-0. Sri Krishna Museum Kurukshetra. Digitized by eGangotri

॥४८॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ जोषंतूष्णीम् ॥ ५४ ॥ यियक्षमाणस्ययज्ञंकरिष्यतः ॥ ५५ ॥ सप्तांगेस्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलरूपे ॥ ५६ ॥ ५७ ॥ ५८ ॥ पूर्वःप्रजा संतापजः ॥ ५९ ॥ ६० ॥ ६१ ॥ एकोभिलाषः ॥ तदर्शयति ॥ मार्गणइति ॥ मार्गणोयाचकः ॥ स्वतनोःस्वशरीरस्य ॥ ६२ ॥ ६३ ॥ यज्ञान्विपुलदक्षिणान्यजकुरु ॥

मन्येधन्यतरोसित्वंबहुजन्मशतार्जितैः ॥ सुकृतैःपासियत्काशींविश्वभर्तुःपरांतनुम् ॥ ४८ ॥ काशीत्रिजगतीसारस्त्रिवेदीसारएववै ॥ त्रिवर्गोत्तरसारश्च निर्णीतेतिमहर्षिभिः ॥ ४९ ॥ विश्वेशानुग्रहेणैवत्वयैषापाल्यतेपुरी ॥ एकस्याप्यवनात्काश्यांत्रैलोक्यमवितंभवेत् ॥५०॥ अन्यच्चतेहितंवच्मियदितेरोचतेऽनघ ॥ प्रीणनीयःसदैवैकोविश्वेशःसर्वकर्मभिः ॥ ५१ ॥ अन्यदेवधियाराजन्विश्वेशंपश्यमाक्वचित् ॥ ब्रह्मविष्णिंवद्रचंद्रार्काक्रीडयेतंस्यधूर्जटेः ॥ ५२ ॥ विप्रैरुदर्कमिच्छद्भिःशिक्षणीयायतोनृपाः ॥ अतस्तवहितंख्यातंकिंवामेचिंतयानया ॥ ५३ ॥ इतिजोषंस्थितंविप्रंप्रत्युवाचनृपोत्तमः ॥ सर्वंमयाह्यदिधृतंयत्त्वयोक्तंद्विजोत्तम ॥ ५४ ॥ ॥ राजोवाच ॥ ॥ अहंयियक्षमाणस्यतवसाहाय्यकर्मणि ॥ दासोऽस्मियज्ञसंभारान्नयमेकोशतोऽखिलान् ॥ ५५ ॥ यदस्तिमेखिलंतत्रसप्तांगेपिभवान्प्रभुः ॥ यजस्वैकमनाब्रह्मन्सिद्धंमन्यस्ववांछितम् ॥ ५६ ॥ राज्यंकरोमियद्ब्रह्मन्स्वार्थंतन्नमनागपि ॥ पुत्रैःकलत्रैर्देहेनपरोपकृतयेयते ॥ ५७ ॥ राज्ञांक्रतुक्रियाभ्योपितीर्थेभ्योपिसमंततः ॥ प्रजापालनमेवैकोधर्मःप्रोक्तोमनीषिभिः ॥ ५८ ॥ प्रजासंतापजोवह्निर्वज्राग्नेरपिदारुणः ॥ द्वित्रान्दहतिवज्राग्निःपूर्वोराज्यंकुलंतनुम् ॥ ५९ ॥ यदावभृथसिस्नासुर्भवेयंद्विजसत्तम ॥ तदाविप्रपदांभोभिरभिषेकंकरोम्यहम् ॥ ६० ॥ हवनंब्राह्मणमुखेयत्करोमिद्विजोत्तम ॥ मन्येक्रतुक्रियाभ्योपितद्विशिष्टंमहामते ॥६१॥ अभिलाषेषुसर्वेषुजागर्त्येकोहृदीहमे ॥ अद्यापिमार्गणःकोपिद्रष्टव्यःस्वतनोरपि ॥ ६२ ॥ अहोअहोभिर्बहुभिःफलितोमेमनोरथः ॥ यत्त्वंमेद्यगृहेप्राप्तःकिंचित्प्रार्थयितुंद्विज ॥ ६३ ॥ एकाग्रमानसोविप्रयज्ञान्विपुलदक्षिणान् ॥ बहून्यजकृतंविद्धिसाहाय्यंसर्ववस्तुषु ॥ ६४ ॥ इतिराज्ञोमहाबुद्धेर्धर्मशीलस्यभाषितम् ॥ श्रुत्वातुष्टमनाःस्रष्टाक्रतुसंभारमाहरत् ॥ ६५ ॥ साहाय्यंप्राप्यराजर्षेर्दिवोदासस्यपद्मभूः ॥ इयाजदशभिःकाश्यामश्वमेधैर्महामखैः ॥६६॥ अद्यापिहोमधूमौघैर्यद्व्याप्तंगगनांतरम् ॥ तदाप्रभृतिनव्योमनीलिमानंजहात्यदः ॥ ६७ ॥

अयमेववापाठः ॥ ६४ ॥ ६५ ॥ ६६ ॥ अद्येति ॥ यद्यदाप्रभृतिवियंद्गगनं होमधूमौघैर्व्याप्तं तदाप्रभृति अद्यापिनीलिमानंतमालश्यामलत्वमदोनभोनजहातीतियन्वयः ॥ ६७ ॥

CC-0. Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तत्रयज्ञवाटे ॥ तस्येतिपाठेतस्यब्रह्मणःसंबंधितत्तीर्थमितिपूर्वेणैवान्वयः ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ प्रभावमाह ॥ परातनुरिति ॥ अस्याःपुरःपुर्याइत्यन्वयः ॥
॥ ७४ ॥ कःप्राप्येति ॥ मूर्खोपिकाशींप्राप्यपुनस्त्यक्तुंकईहतेकश्चेष्टतेनकोपीत्येतत् ॥ स्थानेयुक्तमित्यन्वयः ॥ ७५ ॥ तत्रहेतुमाह ॥ विश्वंसंतापेति ॥ ७६ ॥ ७७ ॥ ईशस्यायमैशस्तस्मात् ॥

तीर्थंदशाश्वमेधाख्यंप्रथितंजगतीतले ॥ तदाप्रभृतितत्रासीद्वाराणस्यांशुभप्रदम् ॥ ६८ ॥ पुरारुद्रसरोनामतत्तीर्थंकलशोद्भव ॥ दशाश्वमेधिकंपश्चाज्जातं विधिपरिग्रहात् ॥ ६९ ॥ स्वर्धुन्यथततःप्राप्ताभगीरथसमागमात् ॥ अतीवपुण्यवज्जातमतस्तत्तीर्थमुत्तमम् ॥७०॥ विधिर्दशाश्वमेधेशंलिंगंसंस्थाप्य तत्रवै ॥ स्थितवान्नगतोद्यापिक्वापिकाशींविहायतु ॥ ७१ ॥ राज्ञोधर्मरतेस्तस्यच्छिद्रंनावापकिंचन ॥ अतःपुरारेःपुरतोव्रजित्वाकिंवदेद्विधिः ॥ ७२ ॥ क्षेत्रप्रभावंविज्ञायध्यायन्विश्वेश्वरंशिवम् ॥ ब्रह्मेश्वरंचसंस्थाप्यविधिस्तत्रैवसंस्थितः ॥ ७३ ॥ परातनुरियंकाशीविश्वेशस्येतिनिश्चितम् ॥ अस्याः संसेवनाच्छंभुर्नकुप्यतिपुरोमयि ॥ ७४ ॥ कःप्राप्यकाशींदुर्मेधाःपुनस्त्यक्तुमिहेहते ॥ अनेकजन्मजनितकर्मनिर्मूलनक्षमाम् ॥ ७५ ॥ विश्वसंतापसं हर्तुःस्थानेविश्वपतेस्तनुः ॥ संताप्यतेतरांकाश्याविश्लेषजमहाग्निना ॥ ७६ ॥ प्राप्यकाशींत्यजेद्यस्तुसमस्ताघौघनाशिनीम् ॥ नृपशुःसपरिज्ञेयोमहासौ ख्यपराङ्मुखः ॥ ७७ ॥ निर्वाणलक्ष्मीयःकांक्षेत्त्यक्त्वासंसारदुर्गतिम् ॥ तेनकाशीनसंत्याज्यायद्यात्तैशादनुग्रहात् ॥ ७८ ॥ यःकाशींसंपरित्यज्यगच्छे दन्यत्रदुर्मतिः ॥ तस्यहस्ततलाद्गच्छेच्चतुर्वर्गफलोदयः ॥ ७९ ॥ निवर्हणीमघौघस्यसुपुण्यपरिबृंहिणीम् ॥ कःप्राप्यकाशींदुर्मेधास्त्यजेन्मोक्षसु खप्रदाम् ॥ ८० ॥ सत्यलोकेक्वतत्सौख्यंक्वसौख्यंवैष्णवेपदे ॥ यत्सौख्यंलभ्यतेकाश्यांनिमेषार्धनिषेवणात् ॥ ८१ ॥ वाराणसीगुणगणान्निर्णीयद्रु हिणस्त्विवति ॥ व्यावृत्यमंदरगिरिंनपुनःप्रत्यगान्मुने ॥८२॥ ॥ स्कंदउवाच ॥ ॥ मित्रावरुणयोःपुत्रमहिमानंब्रवीमिते ॥ काश्यांदशाश्वमेधस्यसर्व तीर्थशिरोमणेः ॥ ८३ ॥ दशाश्वमेधिकंप्राप्यसर्वतीर्थोत्तमोत्तमम् ॥ यत्किंचित्क्रियतेकर्मतदक्षयमिहेरितम् ॥ ८४ ॥ स्नानंदानंजपोहोमःस्वाध्यायोदे वतार्चनम् ॥ संध्योपास्तिस्तर्पणंचश्राद्धंपितृसमर्चनम् ॥८५॥ दशाश्वमेधिकेतीर्थेसकृत्स्नात्वानरोत्तमः ॥ दृष्ट्वादशाश्वमेधेशंसर्वपापैःप्रमुच्यते ॥८६॥ ज्येष्ठेमासिसितेपक्षेप्राप्यप्रतिपदंतिथिम् ॥ दशाश्वमेधिकेस्नात्वामुच्यतेजन्मपातकैः ॥ ८७ ॥ ज्येष्ठशुक्लद्वितीयायांस्नात्वारुद्रसरोवरे ॥ जन्मद्वय कृतंपापंतत्क्षणादेवनश्यति ॥ ८८ ॥

त्यक्त्वासंत्यज्य ॥ भुंजन्नितिक्वचित् ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ निर्णीयनिश्चित्य ॥ निर्गायन्नितिक्वचित् ॥ ८२ ॥ ८३ ॥ ८४ ॥ पितृसमर्चनमितिश्राद्धविशेषणम् ॥८५॥८६॥८७॥८८॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एवमिति ॥ क्रमस्नायीतीतिथिवृद्ध्यास्नायीतिप्रतिजन्माघं दशम्यांदशजन्माघमितिक्रमेणेत्यर्थः ॥ ८९ ॥ यामींयमसंबंधिनीम् ॥ ९० ॥ ९१ ॥ ९२ ॥ पक्षंपक्षमात्रम् ॥ स्नात्वेतिशेषः ॥ स्नात्वेतिक्वचित्पाठः ॥ ९३ ॥ ९४ ॥ ९५ ॥ ब्रह्मेश्वरंब्रह्मणास्वनाम्नास्थापितंलिंगम् ॥ ९६ ॥ ९७ ॥ ब्रह्मशालांवेदमण्डपम् ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥
॥ इतिश्रीरामानन्दकृतायांकाशीखण्डटीकायांद्विपञ्चाशत्तमोध्यायः ॥ ५२ ॥ ॥ छ ॥ ॥ त्रिपञ्चाशत्तमेऽध्यायेकाश्यांप्रेषणमुच्यते ॥ शंकुकर्णमुखानांचकाश्याश्रमहिमातथा ॥

एवंसर्वासुतिथिषुक्रमस्नायीनरोत्तमः ॥ आशुक्लपक्षदशमिप्रतिजन्माघमुत्सृजेत् ॥ ८९ ॥ तिथिंदशहरांप्राप्यदशजन्माघहारिणीम् ॥ दशाश्वमेधिकेस्नातोयामींपश्येन्नयातनाम् ॥९०॥ लिंगंदशाश्वमेधेशंदृष्ट्वादशहरातिथौ ॥ दशजन्मार्जितैःपापैस्त्यज्यतेनात्रसंशयः ॥ ९१ ॥ स्नातोदशहरायांयः पूजयेल्लिंगमुत्तमम् ॥ भक्त्यादशाश्वमेधेशंनतंगर्भदशास्पृशेत् ॥९२॥ज्येष्ठेमासिसितेपक्षेपक्षंरुद्रसरेनरः ॥ कुर्वन्वैवार्षिकींयात्रांनविघ्नैरभिभूयते ॥९३॥ दशाश्वमेधावभृथैर्यत्फलंसम्यगाप्यते ॥ दशाश्वमेधेतन्नूनंस्नात्वादशहरातिथौ ॥ ९४ ॥ स्वर्धुन्याःपश्चिमेतीरेनत्वादशहरेश्वरम् ॥ नदुर्दशामवाप्नोति पुमान्पुण्यतमःक्वचित् ॥ ९५ ॥ यत्काश्यांदक्षिणद्वारमंतर्गेहस्यकीर्त्यते ॥ तत्रब्रह्मेश्वरंदृष्ट्वाब्रह्मलोकेमहीयते ॥ ९६ ॥ इतिब्राह्मणवेषेणवाराणस्यांमहाधिया ॥ द्रुहिणेनस्थितंतावद्यावद्विश्वेश्वरागमः ॥ ९७ ॥ दिवोदासोपिराजेंद्रोवृद्धब्राह्मणरूपिणे ॥ ब्रह्मणेकृतयज्ञायब्रह्मशालामकल्पयत् ॥ ९८ ॥ ब्रह्मेश्वरसमीपेतुब्रह्मशालामनोहरा ॥ ब्रह्मातत्रावसद्व्योमब्रह्मघोषैर्निनादयन् ॥ ९९ ॥ इतितेकथितोब्रह्मन्महिमातिमहत्तरः ॥ दशाश्वमेधतीर्थस्यसर्वाघौघविनाशनः ॥ १०० ॥ श्रुत्वाध्यायमिमंपुण्यंश्रावयित्वातथैवच ॥ ब्रह्मलोकमवाप्नोतिश्रद्धयामानवोत्तमः ॥ १०१ ॥ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायामुत्तरार्द्धेचतुर्थेकाशीखंडेदशाश्वमेधवर्णनंनामद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥छ॥ ॥ अगस्तिरुवाच ॥ ॥ अपूर्वेयंकथाख्याताब्रह्मणोब्रह्मवित्तम ॥ किंचकारपुनःशंभुस्तत्रब्रह्मण्यपिस्थिते ॥ १ ॥ ॥ स्कंदउवाच ॥ शृण्वगस्त्यमहाभागकाश्यांब्रह्मण्यपिस्थिते ॥ गिरिशश्चिंतयामासभृशमुद्विग्नमानसः ॥ २ ॥ पुरीसायादृशीकाशीवशीकरणभूमिका ॥ नतादृशीदृशीहासीत्क्वचिन्मेप्रायशोध्रुवम् ॥ ३ ॥ योयोयातिपुरींतांतुससतत्रैवतिष्ठति ॥ अभूवन्ननुयोगिन्योऽयोगिन्यःकाशिसंगताः ॥ ४ ॥ अकिंचित्करतांप्राप्तःससहस्रकरोप्यरम् ॥ विधिर्विधानदक्षोपिनमेससविधोभवत् ॥ ५ ॥

॥ १ ॥ १ ॥ २ ॥ दृशिदृग्विषये ॥ ३ ॥ अयोगिन्योयोगरहिताःत्यक्तयोगादराइत्यर्थः ॥ यद्वा अयोगिन्यउपायरहिताः ॥ अकाराप्रश्लेषेकाश्याख्येनमुख्ययोगेनयुक्ताइत्यर्थः ॥ योगिन्यइतिक्वचित्पाठः ॥ ४ ॥ अकिंचित्करतांकिंचिदपिकर्तुमक्षमताम् ॥ अपिनिष्करतामितिपाठेसरविःसहस्रकरोप्यनन्तरश्मिरपिनिष्करतांतेजोरहिततामपिकिंप्राप्तइत्यर्थः ॥ अरमत्यर्थम् ॥ सविधःसवि



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

धानोमत्कार्यविधानक्षमोनाभवदित्यर्थः ॥ ५ ॥ ६ ॥ वित्तजानीत ॥ ७ ॥ एवंप्रथमतःसामान्येनोक्त्वापश्चान्नामग्रहणपूर्वकमाहेत्याह नामग्राहमित्यादिना ॥ ८ ॥ ९ ॥ द्रमिचण्डेत्येकंनाम ॥ द्रमिचण्डेतिक्वचित्पाठः ॥ १० ॥ ११ ॥ स्वकार्यंकर्तुंतान्प्रोत्साहयति ॥ भवंतइति ॥ १२ ॥ १३ ॥ तत्तस्मात् ॥ भवत्सुमध्येद्वौअमूशंकुकर्णमहाकालौयातंगच्छतमित्यन्वयः ॥ यद्वा भवत्सु ममांतरंगेषुविद्यमानेषुममसमीपेतिष्ठत्सुकाशीप्रवृत्तिराज्ञश्चप्रवृत्तिनजानामीत्ययुक्तमितिशेषः ॥ तत्तस्मात् हेशंकुकर्णमहाकालौयुवांद्वावेवयातम् ॥ तद्वैइतिक्वचित्पाठः ॥१४॥ आयातमागच्छतम् ॥

चिंतयन्नितिदेवेशोगणानाहूयभूरिशः ॥ प्रेषयामासभोयातक्षिप्रंवाराणसींपुरीम् ॥६॥ किंकुर्वंतितुयोगिन्यःकिंकरोतिसभानुमान् ॥ गत्वावित्तत्वरायुक्ता विधिश्चविदधातिकिम् ॥ ७ ॥ नामग्राहंततःप्रैषीद्बहुमानपुरःसरम् ॥ शंकुकर्णमहाकालघंटाकर्णमहोदर ॥८॥ सोमनंदिन्नंदिषेणकालपिंगलकुक्कुट ॥ कुंडोदरमयूराक्षबाणगोकर्णतारक ॥ ९ ॥ तिलपर्णस्थूलकर्णद्रमिचंडप्रभामय ॥ सुकेशविंदतेच्छागकपर्दिन्पिंगलाक्षक ॥ १० ॥ वीरभद्रकिराताख्यच तुर्मुखनिकुंभक ॥ पंचाक्षभारभूताख्यत्र्यक्षक्षेमकलांगलिन् ॥११॥ विराधसुमुखाषाढभवंतोममसूनवः ॥ यथेमौस्कंदहेरंबौनैगमेयोयथात्वयम् ॥१२॥ यथाशाखविशाखौचयथेमौनंदिभृंगिणौ ॥ भवत्सुविद्यमानेषुमहाविक्रमशालिषु ॥ १३ ॥ काशीप्रवृत्तिंनोजानेदिवोदासनृपस्यच ॥ योगिन्यर्कवि धीनांचतद्वौयातंभवत्स्वमू ॥ १४ ॥ शंकुकर्णमहाकालौकालस्यापिप्रकंपनौ ॥ ज्ञातुंवाराणसीवार्तामायातंचत्वरान्वितौ ॥ १५ ॥ कृतप्रतिज्ञौतोतूर्णं प्राप्यवाराणसींपुरीम् ॥ शंकुकर्णमहाकालौविस्मृत्यशांभवींगिरम् ॥ १६ ॥ यथैंद्रजालिकींदृष्ट्वामायामिहविचक्षणः ॥ क्षणेनमोहमायातिकाशींवी क्ष्यतथैवतौ ॥ १७ ॥ अहोमोहस्यमाहात्म्यमहोभाग्यविपर्ययः ॥ निर्वाणराशिंयत्काशींप्राप्ययांत्यन्यतोऽबुधाः ॥ १८ ॥ तत्यजेयैरियंकाशी महाशीर्वादभूमिका ॥ तेषांकरतलान्मुक्तिःप्राप्तापिपरितोगता ॥ १९ ॥ यत्रसर्वावभृथतःस्नानमात्रंविशिष्यते ॥ अप्युष्णीकृतपानीयैस्तां काशींकःपरित्यजेत् ॥ २० ॥

॥१५॥ विस्मृत्येति॥भगवद्वाक्यंविस्मृत्यतत्रैवतस्थतुरितिशेषः ॥ विस्मृतावितिपाठेविस्मृतवंतावित्यर्थः ॥१६॥ विस्मरणेदृष्टांतमाह॥ यथेति ॥ दृष्टांतगतमर्थंदार्ष्टांतिकेयोजयति॥काशीमिति॥ मोहं प्राप्तावितिशेषः॥यद्वा काशींवीक्ष्यशांभवींगिरंविस्मृत्यतथैवतौमोहमायातावित्यन्वयः॥ १७॥अहोमोहस्येत्यादीनांतावित्थंपरिनिश्चित्यतत्रैवसंस्थितिंप्राप्तावितिनवमश्लोकगतेनान्वयः ॥१८॥१९॥२०॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दशसौवर्णिकंदशसुवर्णदानजन्यम् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ विश्वेशाद्वायुदिग्भागइति ॥ विश्वानितदीशांश्चात्तीतिविश्वेशात यमः ॥ वायोर्दिग्यस्मात् सवायुदिक्वरुणस्तयोर्भागेमध्येनैर्ऋत्यांदिशीत्यर्थः ॥ अथवा विश्वेशाद्विश्वनाथाद्यावायोर्दिक्तस्याभागेसमानसूत्रप्रदेशइत्यर्थः ॥ अथवा विश्वेशात्सकाशाद्वैप्रसिद्धेउदिग्भागे ॥ उशब्दस्याव्ययत्वम् ॥ नैर्ऋतादिग्भागइत्यर्थः ॥ यथाश्रुतव्याख्यानेपूर्वापरविरोधापत्तेः ॥ २८ ॥ २९ ॥ ज्ञात्वेति ॥ अस्मत्कार्यमनिष्पाद्यक्षेत्रमाहात्म्यंज्ञात्वातत्रैवतौतस्थतुरितिज्ञात्वेत्यर्थः ॥ तज्ज्ञानेकारणमाह ॥

यत्रैकपुष्पदानेनाशिवलिंगस्यमूर्धनि ॥ दशसौवर्णिकंपुण्यंकस्तांकाशींपरित्यजेत् ॥ २१ ॥ यत्रदंडप्रणामेनअप्येकेनशिवाग्रतः ॥ तुच्छमैंद्रपदंप्राहुस्तांकाशींकोविमुंचति ॥ २२ ॥ यत्रैकद्विजमात्रंतुभोजयित्वायथेच्छया ॥ वाजपेयाधिकंपुण्यंतांकाशींकोविमुंचति ॥ २३ ॥ एकांगांयत्रदत्त्वावैविधिवद्ब्राह्मणायवै ॥ लभेदयुतगोपुण्यंकस्तांकाशींत्यजेत्सुधीः ॥ २४ ॥ एकंलिंगंप्रतिष्ठाप्ययत्रसंस्थापितंभवेत् ॥ अपित्रैलोक्यमखिलंतांकाशींकःसमुज्झति ॥ २५ ॥ परिनिश्चित्यतावित्थंलिंगेसंस्थाप्यपुण्यदे ॥ तत्रैवसंस्थितिंप्राप्तौकाशींनाद्यापिमुंचतः ॥ २६ ॥ शंकुकर्णेश्वरंलिंगंशंकुकर्णगणार्चितम् ॥ दृष्ट्वानजायतेजंतुर्जातुमातुर्महोदरे ॥ २७ ॥ विश्वेशाद्वायुदिग्भागेशंकुकर्णेश्वरंनरः ॥ संपूज्यनविशेदत्रघोरेसंसारसागरे ॥ २८ ॥ महाकालेश्वरंलिंगंमहाकालगणार्चितम् ॥ अर्चयित्वाचनत्वाचस्तुत्वाकालभयंकुतः ॥ २९ ॥ ॥ स्कंदउवाच ॥ ॥ शंकुकर्णेमहाकालेचिरंतनविलंबिते ॥ ज्ञात्वासर्वज्ञनाथोथप्राहैषीदपरौगणौ ॥ ३० ॥ घंटाकर्णत्वमागच्छमहोदरमहामते ॥ काशींयातंयुवांतूर्णंज्ञातुंतत्रत्यचेष्टितम् ॥ ३१ ॥ इत्यगस्तेगणौतौतुगत्वाकाशींमहापुरीम् ॥ व्यावृत्याद्यापिनोयातौकापितत्रैवसंस्थितौ ॥ ३२ ॥ घंटाकर्णेश्वरंलिंगंघंटाकर्णगणोत्तमः ॥ काश्यांसंस्थाप्यविधिवत्स्वयंतत्रैवनिर्वृतः ॥ ३३ ॥ कुंडंतत्रैवसंस्थाप्यलिंगस्नपनकर्मणे ॥ नाद्यापिसंत्यजेत्काशींध्यायँल्लिंगंतथैवहि ॥ ३४ ॥ महोदरोपितत्प्राच्यांशिवध्यानपरायणः ॥ महोदरेश्वरंलिंगंध्यायेदद्यापिकुंभज ॥ ३५ ॥ महोदरेश्वरंदृष्ट्वावाराणस्यांद्विजोत्तम ॥ कदाचिदपिवैमातुःप्रविशेन्नौदरींदरीम् ॥ ॥ ३६ ॥ घंटाकर्णह्रदेस्नात्वादृष्ट्वाव्यासेश्वरंविभुम् ॥ यत्रकुत्रविपन्नोपिवाराणस्यांमृतोभवेत् ॥ ३७ ॥ घंटाकर्णेमहातीर्थेश्राद्धंकृत्वाविधानतः ॥ अपिदुर्गतिमापन्नानुद्धरेत्सप्तपूर्वजान् ॥ ३८ ॥ निमज्ज्याद्यापितत्कुंडेक्षणंयोवहितोभवेत् ॥ विश्वेश्वरमहापूजाघंटारावाञ्शृणोतिसः ॥ ३९ ॥ वदंतिपितरःकाश्यांघंटाकर्णेमलेजले ॥ दातातिलोदकस्यापिवंशेनःकोपिजायते ॥ ४० ॥ यद्दृश्यामुनयःकाश्यांघंटाकर्णेमहाह्रदे ॥ कृतोदकक्रियाःप्राप्ताःपरांसिद्धिंघटोद्भव ॥ ४१ ॥

सर्वज्ञनाथइति ॥ प्राहैषीत्प्रेषयामास ॥ ३० ॥ ३१ ॥ ३२ ॥ निर्वृतःसुखितः सुस्थितइत्यर्थः ॥ ३३ ॥ ३४ ॥ ३५ ॥ औदरीमुदरभवाम् ॥ दरींगुहाम् ॥ ३६ ॥ व्यासेश्वरमित्यत्रविश्वेश्वरमितिक्वचित्पाठः ॥ ३७ ॥ ३८ ॥ अवहितोध्यानस्थः ॥ ३९ ॥ वदंतीति ॥ नोऽस्माकंवंशेतिलोदकस्यापिदाताकःकश्चिदपिकिंजायतेजनिष्यतीतिपितरोवदंतीत्यर्थः ॥ ४० ॥ ननुतथासतिकिंस्यात्



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

किमर्थंवातेवदंतीत्याकांक्षायामाह ॥ यद्वंश्याइति ॥ यस्यघंटाकर्णह्रदेतिलोदकदातुर्वंश्यायद्वंश्याः ॥ घंटाकर्णेमहाह्रदेकृताउदकक्रियायेभ्योवंशेभ्यस्तेतथामुनयःसंतःपरांसिद्धिंप्राप्ताःतथावयमपि प्राप्स्यामइत्यभिप्रायेणवदंतीति ॥ ४१ ॥ ४२ ॥ ४३ ॥ तुपुनःइयंकाशीमहामोहनभूरितिपुनर्नजानंतीत्यर्थः ॥ ४४ ॥ ४५ ॥ यावान्परिच्छदःपरिकरस्तावंतंप्रेषयिष्यामीत्यर्थः ॥ सर्वां श्चेन्मोहयिष्यामिकिंप्रेषणेनतत्राह ॥ नोद्यमादिति ॥ ४६ ॥ एतद्विवृणोति ॥ नोद्यमादिति ॥ पुरुषकारस्यफलमाह ॥ प्रतिकूलइति ॥ प्रतिपक्षभूतोपिविधिर्दैवंतेषांविचक्षणानांसततोद्यमात्खिद्ये तनिर्बंधंदृष्ट्वासोऽनुकूलोभवेदित्यर्थः॥४७॥ प्रतिबंधेपिउद्यमाभावेदृष्टांतमाह॥ शीतेति ॥ शीतोष्णाभानवोरश्मयोययोस्तौचंद्रसूर्यौस्वर्भानुनाराहुणाग्रस्तावप्यद्यारभ्यापिगतिंनत्यजतोनमुञ्चतः ॥

॥ स्कंदउवाच ॥ ॥ घंटाकर्णेगणेयातेप्रयातेचमहोदरे ॥ विसिस्मायस्मरद्वेष्टामौलिमांदोलयन्मुहुः ॥४२॥ उवाचचमनस्येवहरःस्मित्वापुनःपुनः ॥ महामोहनविद्यासिकाशित्वांपर्यवैम्यहम् ॥ ४३ ॥ पुराविदःप्रशंसंतित्वांमहामोहहारिणीम् ॥ काशींत्वितिनजानंतिमहामोहनभूरियम् ॥ ४४ ॥ प्रेष यिष्याम्यहंसर्वान्भवतीमोहयिष्यति ॥ इतिसम्यग्विजानामिकाशित्वांमोहनौषधिम् ॥ ४५ ॥ तथापिप्रेषयिष्यामियावान्मेस्तिपरिच्छदः ॥ नोद्यमाद्वि रमंतीहज्ञानिनःसाध्यकर्मणि ॥ ४६ ॥ नोद्यमाद्विरतिःकार्याक्वापिकार्येविचक्षणैः ॥ प्रतिकूलोपिखिद्येतविधिस्तत्सततोद्यमात् ॥ ४७ ॥ शीतोष्णभानू स्वर्भानुग्रस्तावपिनभोंगणे ॥ गतिंनत्यजतोद्यापिप्रक्रांतव्यकृतोद्यमौ ॥ ४८ ॥ एकत्रहंतिकार्याणिप्रातिकूल्याद्विधिर्मुहुः ॥ एकत्रकरणीयानिसेत्स्यं त्यत्रभृशोद्यमात् ॥ ४९ ॥ दैवंपूर्वकृतंकर्मकथ्यतेनेतरत्पुनः ॥ तन्निराकरणेयत्नःस्वयंकार्योविपश्चिता ॥ ५० ॥ भाजनोपास्थितंदैवाद्भोज्यंनास्यंस्वयं विशेत् ॥ हस्तवक्त्रोद्यमात्तच्चप्रविशेदोदरींदरीम् ॥ ५१ ॥ इत्युद्यमंसमर्थ्येशोनिश्चितंदैवजित्वरम् ॥ पुनश्चप्रेषयांचक्रेगणान्पंचमहारयान् ॥ ५२ ॥ सोमनंदीनंदिषेणःकालपिंगलकुकुटाः ॥ तेद्यापिननिवर्तंतेकाश्यांजीवाम्मृतायथा ॥५३॥ तेपिस्वनाम्नालिंगानिशंभुसंतुष्टिकाम्यया॥ प्रतिष्ठाप्यस्थिताः काश्यांविश्वनिर्वाणजन्मनि ॥ ५४ ॥ सोमनंदीश्वरंदृष्ट्वालिंगंनंदवनेपरम् ॥ सोमलोकेपरानंदंप्राप्नुयाद्भक्तिमान्नरः ॥ ५५ ॥ तदुत्तरेविलोक्याथनंदिषे णेश्वरंनरः ॥ आनंदसेनांसंप्राप्यजयेन्मृत्युमपिक्षणात् ॥ ५६ ॥ कालेश्वरंमहालिंगंगंगायाःपश्चिमोत्तरे ॥ प्रणम्यकालपाशेननोबध्येतकदाचन ॥ ॥ ५७ ॥ पिंगलेश्वरमभ्यर्च्यकालेशात्किंचिदुत्तरे ॥ लभतेपिंगलज्ञानंयेनतन्मयतांव्रजेत् ॥ ५८ ॥

किमिति ॥ प्रक्रांतव्येगमनेकृतउद्यमोयाभ्यांतौ ॥ ४८ ॥ तर्हिकुत्रापिकार्यप्रतिबंधोनस्यादित्याशंक्यविभागमाह ॥ एकत्रेति ॥ मुहुःप्रातिकूल्यादित्यन्वयः ॥ अत्रजगति ॥ अंतइतिपाठे अंतेततोबहूद्यमानन्तरमित्यर्थः ॥ ४९ ॥ ननु ललाटेलिखितंयत्तुषष्ठीजागरवासरे ॥ नोहरिःशंकरोब्रह्मान्यथातत्कर्तुमर्हतीत्यादिदर्शनात्कथंदैवमन्यथयितव्यमित्याशंक्याह ॥ दैवमिति ॥ कर्मणाक र्मनिर्हारसंभवात् ॥ निषेधवचनस्यत्वनुद्यमवत्पुरुषविषयत्वादितिभावः ॥ ५० ॥ उद्यमंविनादैवमार्किंचित्करमित्याह ॥ भाजनेति ॥ ५१ ॥ प्रयत्नसमर्थनमुपसंहरंस्तस्यफलमाह ॥ इत्युद्यम मिति ॥ समर्थ्यसंसाध्य ॥ उद्यमंविशिनष्टि ॥ निश्चितंयुक्त्यादृढीकृतम् ॥ दैवजित्वरमदृष्टजयनशीलम् ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६॥५७॥ पिंगलज्ञानंपिंगलेश्वरस्वरूपज्ञानम् ॥५८॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कुक्कुटांडस्येवाकृतिराकारोयस्यसकुक्कुटाण्डाकृतिस्तस्य ॥ ५९ ॥ ६० ॥ ६१ ॥ मायावीर्यमहत्सुमायावीर्याभ्यांमहत्तरेषु ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ स्नापयित्वेति ॥ यत्त्वग्राह्यंशिवनिर्माल्यंपत्रंपुष्पंफलंजलमित्यादिनिषेधवचनंतत्त्वज्ञानपूर्वकंकाश्यतिरिक्तस्थानविषयंवैष्णुपादोदकासंसर्गविषयंवा ॥ शालग्राम

कुक्कुटेश्वरालिंगस्ययेत्रभक्तिंवितन्वते ॥ कुक्कुटांडाकृतेस्तस्यनतेगर्भमवाप्नुयुः ॥ ५९ ॥ ॥ स्कंदउवाच ॥ ॥ सोमनंदिप्रभृतिषुमुनेपंचगणेष्वपि ॥ आनंदकाननंप्राप्यास्थितेषुस्थाणुरब्रवीत् ॥ ६० ॥ कार्यमस्माकमेवैतद्यदिसम्यग्विमृश्यते ॥ अनेनोपाधिनाप्येतेतत्रतिष्ठंतुमामकाः ॥ ६१ ॥ प्रमथेषुप्रविष्टेषुमायावीर्यमहत्स्वपि ॥ अहमेवप्रविष्टोस्मिवाराणस्यांनसंशयः ॥ ६२ ॥ क्रमेणप्रेषयिष्यामियोस्तिमेस्वपरिच्छदः ॥ तत्रसर्वेषुयातेषुततोयास्याम्यहंपुनः ॥ ६३ ॥ संप्रधार्येतिहृदयेदेवदेवेनशूलिना ॥ प्रैषिष्टप्रमथानांतुततोगणचतुष्टयम् ॥ ६४ ॥ कुंडोदरोमयूराख्योबाणोगोकर्णएवच ॥ मायाबलंसमाश्रित्यकाशींप्रविविशुर्गणाः ॥ ६५ ॥ कृत्वोपायशतंतैस्तुदिवोदासस्यसंभ्रमे ॥ यदैकोपिसमर्थोनतदातत्रैवसंस्थितम् ॥६६॥ अपराधशतेष्वीशःकेनतुष्यतिकर्मणा ॥ संप्रधार्येतितेचक्रुर्लिंगाराधनमुत्तमम् ॥ ६७ ॥ एकस्मिञ्शांभवेलिंगेविधिनात्रसमर्चिते ॥ क्षमेत्त्र्यक्षोपराधानांशतंमोक्षंचयच्छति ॥६८॥ नतुष्यतितथाशंभुर्यज्ञदानतपोव्रतैः ॥ यथातुष्येत्सकृल्लिंगेविधिनाभ्यर्चितेसति ॥ ६९ ॥ लिंगार्चनविधानज्ञोलिंगार्चनरतःसदा ॥ त्र्यक्षएवसविज्ञेयःसाक्षाद्व्यक्षोपिमानवः ॥ ७० ॥ नगोशतप्रदानेननस्वर्णशतदानतः ॥ तत्फलंलभ्यतेपुंभिर्यत्सकृल्लिंगपूजनात् ॥ ७१ ॥ अश्वमेधादिभिर्यागैर्नतत्फलमवाप्यते ॥ यत्फलंलभ्यतेमर्त्यैर्नित्यंलिंगप्रपूजनात् ॥ ७२ ॥ स्नापयित्वाविधानेनयोलिंगस्नपनोदकम् ॥ त्रिःपिबेत्त्रिविधंपापंतस्येहाशुप्रणश्यति ॥ ७३ ॥ लिंगस्नपनवार्भिर्यःकुर्यान्मूर्ध्न्यभिषेचनम् ॥ गंगास्नानफलंतस्यजांयतेत्रविपाप्मनः ॥ ७४ ॥ लिंगंसमर्चितंदृष्ट्वायःकुर्यात्प्रणतिंसकृत् ॥ संदेहोजायतेतस्यपुनर्देहनिबंधने ॥ ७५ ॥ लिंगंयःस्थापयेद्भक्त्यासतजन्मकृतादघात् ॥ मुच्यतेनात्रसंदेहोविशुद्धःस्वर्गभाग्भवेत् ॥ ॥ ७६ ॥ विचार्येतिगणैःकाश्यांस्वामिद्रोहोपशांतये ॥ प्रतिष्ठितानिलिंगानिमहापातकभिंद्यपि ॥ ७७ ॥ कुंडोदरेश्वरंलिंगंदृष्ट्वालोलार्कसन्निधौ ॥ सर्वपापविनिर्मुक्तःशिवलोकेमहीयते ॥७८॥ कुंडोदरेश्वराल्लिंगात्प्रतीच्यामासिरोधसि ॥ मयूरेश्वरमभ्यर्च्यनगर्भंप्रतिपद्यते ॥७९॥ मयूरेशप्रतीच्यांचलिंगंबाणेश्वरंमहत् ॥ तस्यदर्शनमात्रेणसर्वैःपापैःप्रमुच्यते ॥ ८० ॥ गोकर्णेशंमहालिंगमंतर्गेहस्यपश्चिमे ॥ द्वारेसमर्च्यवैकाश्यांनविघ्नैरभिभूयते ॥ ८१ ॥

शिलातोयात्सर्वयातिपवित्रतामित्युक्तेः ॥ शिवाऽभक्तविषयंवा ॥ शिवविष्ण्वोर्भेददर्शिमूढविषयंवेतिदिक् ॥ वस्तुतस्तुबाणलिंगादिव्यतिरिक्तविषयमेवतदितिपूर्वोक्तंनप्रस्मर्तव्यम् ॥ ७३ ॥ ॥ ७४ ॥ देहएवनितरांवन्धनंदेहवन्धनंतास्मिन् ॥ ७५ ॥ ७६ ॥ महापातकानिभिंदन्तीतिमहापातकभिंदि ॥ ७७ ॥ ७८ ॥ असिरोधसिअस्यानद्यास्तीरे ॥ ७९ ॥ ८० ॥ ८१ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पंचत्वसमयेमरणावसरे ॥ तर्हिकिंकाश्यामेवनेत्याह ॥ क्वचिदपीति ॥ यत्रकुत्राप्यंतंमृत्युमृच्छतःप्राप्नुवतोज्ञानभ्रंशोनजायतइत्यर्थः ॥ ८२ ॥ गणेश्वरइत्यत्रमहेश्वरइतिक्वचित्पाठः ॥
॥ ८३ ॥ मोहकत्वमात्रेणमाययैकत्वाभिधानंनतुतत्कार्यकरत्वेन ॥ ८४ ॥ तदेवाह ॥ अपास्येति ॥ ८५ ॥ ननुस्वामिनंविहायतिष्ठंतःकुतस्तेनबिभ्युस्तत्राह ॥ मरणादिति ॥ ८६ ॥ कुत्रक्व ॥
केनेतिवापाठः ॥ ८७ ॥ निर्वाणंकैवल्यमेवरमणीसुंदरीनिर्वाणरमणी ॥ प्रकर्षेणांतेदेहत्यागावसरेभवतीतिप्रांत्यस्तारकोपदेशस्तदेवभूषणंयस्यसतथातम् ॥ यद्वा प्रांतेभवंप्रांत्यंमरणंतदेवभूषणंमंगलं

गोकर्णेश्वरभक्तस्यपंचत्वसमयेसति ॥ ज्ञानभ्रंशोनजायेतक्वाचिदप्यंतमृच्छतः ॥८२॥ ॥ स्कंदउवाच ॥ ॥ चिरयत्सुगणेष्वेषुचतुर्ष्वपिगणेश्वरः ॥
महिमानंमहत्त्वंतुतत्काश्याःपर्यवर्णयत् ॥ ८३ ॥ वैष्णव्यामाययाविश्वंभ्राम्येतात्रययाखिलम् ॥ ध्रुवंमूर्तिमतीसैषाकाशीविश्वैकमोहिनी ॥ ८४ ॥
अपास्यसोदरान्दारान्पुत्रंक्षेत्रंगृहंवसु ॥ अप्यंगीकृत्यनिधनंसर्वेकाशीमुपासते ॥ ८५॥ मरणादपिनोकाश्यांभयंयत्रमनागपि ॥ गणास्तत्रतुतिष्ठंतःकुतो
मत्तोपिबिभ्यति ॥ ८६ ॥ मरणंमंगलंयत्रविभूतिर्यत्रभूषणम् ॥ कौपीनंयत्रकौशेयंकाशीकुत्रोपमीयते ॥ ८७ ॥ निर्वाणरमणीयत्ररंकंवाऽरंकमेववा ॥
ब्राह्मणंवाश्वपाकंवावृणीतेप्रांत्यभूषणम् ॥ ८८ ॥ मृतानांयत्रजंतूनांनिर्वाणपदमृच्छताम् ॥ कोव्यंशेनापिनसमाअपिशक्रादयःसुराः ॥ ८९ ॥
यत्रकाश्यांमृतोजंतुर्ब्रह्मनारायणादिभिः ॥ प्रबद्धमूर्धांजलिभिर्नमस्येतातियत्नतः ॥ ९० ॥ यत्रकाश्यांशवत्वेपिजंतुर्नाशुचितांव्रजेत् ॥ अतस्तत्कर्णसं
स्पर्शंकरोम्यहमपिस्वयम् ॥ ९१ ॥ यस्तुकाशीतिकाशीतिद्विस्त्रिर्जपतिपुण्यवान् ॥ अपिसर्वपवित्रेभ्यःसपवित्रतरोमहान् ॥ ९२ ॥ येनकाशीहृदि
ध्यातायेनकाशीहसेविता ॥ तेनाहंहृदिसंध्यातस्तेनाहंसेवितःसदा ॥ ९३ ॥ काश्यांयःसेवतेजंतुर्निर्विकल्पेनचेतसा ॥ तमहंहृदयेनित्यंधारयामि
प्रयत्नतः ॥ ९४ ॥ स्वयंवस्तुमशक्तोपिवासयेत्तीर्थवासिनम् ॥ अप्येकमपिमूल्येनसवस्तुःफलभाग्ध्रुवम् ॥ ९५ ॥ काश्यांवसंतियेधीराआपंचत्वविनि
श्चयाः ॥ जीवन्मुक्तास्तुतेज्ञेयावंद्याःपूज्यास्तएवहि ॥ ९६ ॥ इत्थंविमृश्यबहुशःस्थाणुर्वाराणसीगुणान् ॥ गणानन्यान्समाहूयप्राहिणोत्प्रीतिपूर्वकम् ॥
॥९७॥ तारकत्वंसमागच्छगच्छातिस्वच्छमानस ॥ दिवोदासोवृषावासोयामधीष्टेवरांपुरीम् ॥९८॥ तिलपर्णस्थूलकर्णद्रुमिचंडप्रभामय ॥ सुकेशविंदते
छागकपर्दिन्पिंगलाक्षक ॥९९॥ वीरभद्रकिराताख्यचतुर्मुखनिकुंभक ॥ पंचाक्षभारभूताख्यत्र्यक्षक्षेमकलांगलिन् ॥ १०० ॥ विराधसुमुखाषाढेयांतुसर्वे
पृथक्पृथक् ॥ एतेगणामहाभागाःस्वामिभक्तादृढव्रताः ॥१॥ कृत्वामायाबहुविधाबहुरूपाविचक्षणाः ॥ अनिमेषेक्षणास्तस्थुःक्षोणीशच्छिद्रकांक्षिणः ॥२॥

यस्यतम् ॥ मरणंमंगलंयत्रेत्युक्तेः ॥ यत्रकाश्यांशवत्वेपिजंतुर्नाशुचितांव्रजेदित्युक्तत्वात् ॥ शावंनालोकयेदित्यादिमनुवचनंतुकाश्यतिरिक्तविषयंद्रष्टव्यम् ॥ ८८॥ ८९ ॥९०॥ःशवत्वेपिअपिशब्दाज्जी
वत्वेपि ॥ अतएवतस्यजंतोर्मरणाव्यवहितसमयेतारकोपदेशार्थंकर्णसंस्पर्शंकरोमि ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ मूल्येनजीविकया ॥ वस्तुर्वासकर्तुर्यावत्फलंतावत्फलंभजतइत्यर्थः ॥ ९५ ॥
॥ ९६ ॥ ९७ ॥ वृषावासोधर्माश्रयः ॥ अधीष्टेअधिकंयथास्यात्तथाईष्टेशास्तीत्यर्थः ॥ ९८ ॥ ९९ ॥ १०० ॥ १ ॥ निमेषरहितानीक्षणानियेषांतेऽनिमेषेक्षणाः ॥ अत्यंतंसावधाना

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इतीति ॥ काशींप्राप्य सर्वभूतरक्षैवोचिताऽयंतुकाशींप्राप्यापिद्विजानवधीदित्यपिशब्दार्थः ॥ तत्रहेतुद्वयमाह ॥ मतिंकृत्वाकुलोचितांदुर्वृत्तइतिच ॥ ५८ ॥ ५९ ॥ यादोरूपीकुंभीरादिरूपी ॥ ६० ॥ ॥ ६१ ॥ प्रवेशंनिर्गमंचस्वात्मनः ॥ उटजानांचेतिचकारेणमठादयोगृह्यंते ॥ ६२ ॥ कीकसमस्थि ॥ ६३ ॥ एकोमुख्यः ॥ ६४ ॥ ६५ ॥ कृतोऽस्त्रमन्त्रेणअस्त्रायफट्इतिमन्त्रेणअस्त्ररूपेणमंत्रेणवान्यासोयेनतंकृतास्त्रमन्त्रविन्यासम् ॥ ६६ ॥ ६७ ॥ आदित्सतिआदातुमिच्छतिभक्तमितिशेषः ॥ ६८ ॥ ६९ ॥ ७० ॥ पंचास्यंव्याघ्रंमुखवत्करचरणाअप्यस्यनरतुरगादि

इतिदुंदुभिनिर्ह्रादोमतिंकृत्वाकुलोचिताम् ॥ प्राप्यापिकाशींदुर्वृत्तोमायावीन्यवधीद्द्विजान् ॥ ५८ ॥ समित्कुशान्समादातुंयत्रयांतिद्विजोत्तमाः ॥ अरण्येतत्रतान्सर्वान्सभक्षयतिदुर्मतिः ॥ ५९॥ यथाकोपिनवेत्त्येवतथाच्छन्नोऽभवत्पुनः ॥ वनेवनेचरोभूत्वायादोरूपीजलाशये ॥ ६० ॥ अदृश्यरूपी मायावीदेवानामप्यगोचरः ॥ दिवाध्यानपरस्तिष्ठेन्मुनिवन्मुनिमध्यगः ॥ ६१ ॥ प्रवेशमुटजानांचनिर्गमंचविलोकयन् ॥ यामिन्यांव्याघ्ररूपेणब्राह्मणान्भक्षयेद्बहून् ॥ ६२ ॥ निःशब्दमेवनयतिनत्यजेदपिकीकसम् ॥ इत्थंनिपातिताविप्रास्तेनदुष्टेनभूरिशः ॥ ६३ ॥ एकदाशिवरात्रौतुभक्तस्त्वेकोनिजोटजे ॥ सपर्यांदेवदेवस्यकृत्वाध्यानस्थितोभवत् ॥ ६४ ॥ सचदुंदुभिनिर्ह्रादोदैत्येंद्रोबलदर्पितः ॥ व्याघ्ररूपंसमास्थायतमादातुंमतिंदधे ॥६५॥ तंभक्तंध्यानमापन्नंदृढचित्तंशिवेक्षणे ॥ कृतास्त्रमंत्रविन्यासंतंक्रांतुमशकन्नसः ॥ ६६ ॥ अथसर्वगतःशंभुर्ज्ञात्वातस्याशयंहरः ॥ दैत्यस्यदुष्टरूपस्यवधायविदधेधियम् ॥ ६७ ॥ यावदादित्सतिव्याघ्रस्तावदाविरभूद्धरः ॥ जगद्रक्षामणिस्त्र्यक्षोभक्तरक्षणदक्षधीः ॥ ६८ ॥ रुद्रमायांतमालोक्यतद्भक्तार्चितलिंगतः ॥ दैत्यस्तेनैवरूपेणववृधेभूधरोपमः ॥ ६९ ॥ सावज्ञमथसर्वज्ञंयावत्पश्यतिदानवः ॥ तावदायांतमादायकक्षायंत्रेन्यपीडयत् ॥ ७० ॥ पंचास्यस्त्वथपंचास्यंमुष्ट्यामूर्धन्यताडयत् ॥ सचतेनैवरूपेणकक्षानिष्पेषणेनच ॥७१ ॥ अत्यार्तमरटद्व्याघ्रोरोदसीपरिपूरयन् ॥ तेननादेनसहसासंप्रवेपितमानसाः ॥७२॥तपोधनाःसमाजग्मुर्निशिशब्दानुसारतः ॥ तत्रेश्वरंसमालोक्यकक्षीकृतमृगेश्वरम् ॥७३॥ तुष्टुवुःप्रणताःसर्वेशर्वंजयजयाक्षरैः ॥ परित्राताजगत्रातःप्रत्यूहाद्दारुणादितः ॥ ७४ ॥ अनुग्रहंकुरुष्वेशातिष्ठात्रैवजगद्गुरो ॥ अनेनैवहिरूपेणव्याघ्रेशइतिनामतः ॥ ७५ ॥ कुरुरक्षांमहादेवज्येष्ठस्थानस्यसर्वदा ॥ अन्येभ्योप्युपसर्गेभ्योरक्षनस्तीर्थवासिनः ॥ ७६ ॥ इतिश्रुत्वावचस्तेषांदेवश्चंद्रविभूषणः ॥ तथेत्युक्त्वापुनःप्राहशृणुध्वंद्विजपुंगवाः ॥ ७७ ॥ योमामनेनरूपेणद्रक्ष्यतिश्रद्धयात्रवै ॥ तस्योपसर्गसंघातंघातयिष्याम्यसंशयम् ॥ ७८ ॥

विदारणसमर्थाइतितैःसहपंचास्यइतिव्युत्पत्तेः ॥ सचतेनैवरूपेणव्याघ्ररूपेणअत्यार्तंयथास्यात्तथाअरटच्छब्दंकृतवान् इत्यन्वयः ॥ सतेनमुष्टिघातेनेतिकश्चित् ॥७१॥७२॥७३ ॥ प्रत्यूहान्मृत्योः ॥ ॥ ७४ ॥ नोऽस्मान् ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥७९॥ ८० ॥ ८१ ॥ ८२ ॥ किंकरायमदूताः ॥ यामादेवविशेषागणावा ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ॥ इतिश्रीरामानन्दकृतायांकाशीखण्डटीकायांपंचषष्टितमोऽध्यायः ॥ ६५ ॥
षड्भिःषष्टितमेध्यायेसर्वाश्चर्यमनोहरे ॥ शैलेश्वरादिलिंगानांनिर्णीतिर्वर्ण्यतेस्फुटा ॥ १ ॥ ज्येष्ठेश्वरस्यपरितोयानिलिंगानीत्युक्तंतत्रातीतेअध्यायेकानिचिदुक्ताअवशिष्टानिवक्तुंप्रक्रमते ॥ ज्येष्ठे

एतल्लिंगंसमभ्यर्च्ययोयातिपथिमानवः ॥ चौरव्याघ्रादिसंभूतंभयंतस्यकुतोभवेत् ॥ ७९ ॥ मच्चरित्रमिदंश्रुत्वास्मृत्वालिंगमिदंहृदि ॥ संग्रामेप्रविशन्म
र्त्योजयमाप्नोतिनान्यथा ॥८०॥ इत्युक्त्वादेवदेवशस्तस्मिँल्लिंगेलयंययौ ॥ सविस्मयास्ततोविप्राःप्रातर्यातायथागतम् ॥ ८१ ॥ ॥ स्कन्द उवाच ॥ ॥
तदाप्रभृतिकुंभोत्थलिंगंव्याघ्रेश्वराभिधम् ॥ ज्येष्ठेशादुत्तरेभागेदृष्टंस्पृष्टंभयापहम् ॥ ८२ ॥ व्याघ्रेश्वरस्ययेभक्तास्तेभ्योबिभ्यतिकिंकराः ॥ यामाअपि
महाक्रूराजयजीवेतिवादिनः ॥ ८३ ॥ पराशरेश्वरादीनांलिंगानामिहसंभवम् ॥ श्रुत्वानरोनलिप्येतमहापातककर्दमैः ॥ ८४ ॥ कंदुकेशसमुत्पत्तिंव्याघ्रे
शाविर्भवंतथा ॥ समाकर्ण्यनरोजातुनोपसर्गैःप्रदूयते ॥ ८५ ॥ उटजेश्वरलिंगंतुव्याघ्रेशात्पश्चिमेस्थितम् ॥ भक्तरक्षार्थमुद्भूतंतस्यात्समभ्यर्च्यनिर्भयः
॥ ८६ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखण्डउत्तरार्धेपराशरेश्वरादिलिंगसंभवोनामपंचषष्टितमोऽध्यायः ॥ ६५ ॥
॥ स्कन्दउवाच ॥ ॥ ज्येष्ठेश्वरस्यपरितोलिंगान्यन्यानियानितु ॥ तानितेकथयिष्यामिशृणुत्वातापितापन ॥ १ ॥ ज्येष्ठेशाद्दक्षिणेभागेलिंगमप्सरसां
शुभम् ॥ तत्रैवाप्सरसःकूपःसौभाग्योदकसंज्ञकः ॥ २ ॥ तत्कूपजलसुस्नातोविलोक्याप्सरसेश्वरम् ॥ नदौर्भाग्यमवाप्नोतिनारीवापुरुषोथवा ॥ ३ ॥
तत्रैवकुक्कुटेशाख्यंलिंगंवापीसमीपगम् ॥ तस्यपूजनतःपुंसांकुटुंबंपरिवर्धते ॥ ४ ॥ पितामहेश्वरंलिंगंज्येष्ठवापीतटेशुभम् ॥ तत्रश्राद्धंनरःकृत्वापितॄणां
मुदमर्पयेत् ॥ ५ ॥ पितामहेशान्नैर्ऋत्यांपूजनीयंप्रयत्नतः ॥ गदाधरेश्वरंलिंगंपितॄणांपरितृप्तिदम् ॥ ६ ॥ दिशिपुण्यजनाख्यायांलिंगाज्ज्येष्ठेश्वरान्मुने ॥
वासुकीश्वरसंज्ञंचलिंगमर्च्यंसमंततः ॥ ७ ॥ तत्रवासुकिकुंडेचस्नानदानादिकाःक्रियाः ॥ सर्पभीतिहराःपुंसांवासुकीशप्रभावतः ॥ ८ ॥ यःस्नातो
नागपंचम्यांकुंडेवासुकिसंज्ञिते ॥ नतस्यविषसंसर्गोभवेत्सर्पसमुद्भवः ॥ ९ ॥ कर्तव्यानागपञ्चम्यांयात्रावर्षासुतत्रवै ॥ नागाःप्रसन्नाजायंतेकुलेतस्या
पिसर्वदा ॥ १० ॥ तत्कुण्डात्पश्चिमेभागेलिंगंवैतक्षकेश्वरम् ॥ पूजनीयंप्रयत्नेनभक्तानांसर्वसिद्धिदम् ॥ ११॥ मुनेतस्योत्तरेभागेकुण्डंतक्षकसंज्ञितम् ॥
कृतोदकक्रियस्तत्रनसर्पैरभिभूयते ॥१२॥ तत्कुण्डादुत्तरेभागेक्षेत्रक्षेमकरःसदा॥भक्तानांसाध्वसध्वंसीकपालीनामभैरवः॥१३॥भैरवस्यमहाक्षेत्रंतद्वैसाध
कसिद्धिदम्॥तत्रसंसाधिताविद्याःषण्मासात्सिद्धिमाप्नुयुः॥१४॥तत्रचण्डीमहामुण्डाभक्तविघ्नोपशांतिदा॥बलिपूजोपहाराद्यैःपूज्यास्वाभीष्टसिद्धये॥१५॥

श्वरस्येति ॥ १ ॥ २ ॥ अप्सरसेश्वरमित्यदन्तत्वमार्षम् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४॥ महन्मुण्डंयस्याःसा ॥ महातुण्डेतिक्वचित् ॥१५॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ पुरूरवेश्वरमितिसलोपआर्षः ॥ २७ ॥ २८ ॥ २९ ॥ पूज्येष्टसिद्धयेपूज्यापूजितासती इष्टसिद्धयेभवतीत्यर्थः ॥ ३० ॥ हुंडनेत्यत्रकुंडनेतिकचित् ॥ विधत्तःकुरुतइत्यर्थः ॥ ३१ ॥ ३२ ॥ शैलेशोत्पत्तिंकथयिष्यन्नगस्तिसावधानयति ॥ इल्वलेति ॥ ३३ ॥ अद्रींद्रंहिमवंतम् ॥

तस्यायात्रांतुयःकुर्यान्महाष्टम्यांनरोत्तमः ॥ यशस्वीपुत्रपौत्राढ्योलक्ष्मीवाँश्चापिजायते ॥ १६ ॥ महामुण्डाप्रतीच्यांतुचतुःसागरवापिका ॥ तस्यां स्नातोभवेत्स्नातःसागरेषुचतुर्ष्वपि ॥ १७ ॥ महाप्रसिद्धंतत्स्थानंचतुःसागरसंज्ञितम् ॥ चत्वारितत्रलिंगानिसागरैःस्थापितानिच ॥ १८ ॥ तस्यावाप्याश्चतुर्दिक्षुपूजितानिदहंत्यघम् ॥ तदुत्तरेमहालिंगंवृषभेश्वरसंज्ञितम् ॥ १९ ॥ हरस्यवृषभेणैवस्थापितंतत्स्वभक्तितः ॥ तस्यदर्शनतःपुंसांषण्मासान्मुक्तिरुद्भवेत् ॥ २० ॥ वृषेश्वरादुदीच्यांतुगंधर्वेश्वरसंज्ञितम् ॥ गंधर्वकुण्डंतत्प्राच्यांतत्रस्नात्वानरोत्तमः ॥ २१ ॥ गंधर्वेश्वरमभ्यर्च्यदत्त्वादानानिशक्तितः ॥ सन्तर्प्यपितृदेवांश्चगंधर्वैःसहमोदते ॥ २२ ॥ कर्कोटनामानागोस्तिगन्धर्वेश्वरपूर्वतः ॥ तत्रकर्कोटवापीचलिंगंकर्कोटकेश्वरम् ॥ २३ ॥ तस्यांवाप्यांनरःस्नात्वाकर्कोटेशंसमर्च्यच ॥ कर्कोटनागमाराध्यनागलोकेमहीयते ॥ २४ ॥ कर्कोटनागंयैर्दृष्टस्तद्वाप्यांविहितोदकैः ॥ क्रमतेनविषंतेषां देहेस्थावरजंगमम् ॥ २५ ॥ कर्कोटेशात्प्रतीच्यांतुधुंधुमारीश्वराभिधम् ॥ तल्लिंगाभ्यर्चनात्पुंसांनभवेद्वैरिजंभयम् ॥ २६ ॥ पुरूरवेश्वरंलिंगंतदुदीच्यां व्यवस्थितम् ॥ द्रष्टव्यंतत्प्रयत्नेनचतुर्वर्गफलप्रदम् ॥ २७ ॥ दिग्गजेनार्चितंलिंगंसुप्रतीकेनतत्पुरः ॥ सुप्रतीकेश्वरंनाम्नायशोबलविवर्धनम् ॥ २८ ॥ सरश्चसुप्रतीकाख्यंतत्पुरोभासतेमहत् ॥ तत्रस्नात्वाचतल्लिंगंदृष्ट्वादिक्पतितांलभेत् ॥ २९ ॥ तत्रास्त्येकामहागौरीनाम्नाविजयभैरवी ॥ रक्षार्थमुत्तरद्वारिस्थितापूज्येष्टसिद्धये ॥ ३० ॥ वरणायास्तटेरम्येगणौहुंडनमुंडनौ ॥ क्षेत्ररक्षांविधत्तस्तौविघ्नस्तंभनकारकौ ॥ ३१ ॥ तौद्रष्टव्यौप्रयत्नेनक्षेत्रनिर्विघ्नहेतवे ॥ हुंडनेशंमुंडनेशंतत्रदृष्ट्वासुखीभवेत् ॥ ३२ ॥ स्कंदउवाच ॥ ॥ इल्वलारेकथामेकांशृणुष्वावहितोभव ॥ वरणायास्तटेरम्येयद्वृत्तंपूर्वमुत्तमम् ॥ ३३ ॥ एकदाद्रींद्रमालोक्यमेनासंहृष्टमानसम् ॥ उमांसंस्मृत्यनिःश्वस्यप्रोवाचेतिपतिव्रता ॥ ३४ ॥ ॥ मेनोवाच ॥ ॥ आर्यपुत्रनजानामिप्रवृत्तिमपिकांचन ॥ विवाहसमयादूर्ध्वंतस्यागौर्यागिरीश्वर ॥ ३५ ॥ सवृषेंद्रगतिर्देवोभस्मोरगविभूषणः ॥ महापितृवनावासोदिग्वासाःक्वास्तिसंप्रति ॥ ३६ ॥ अष्टौयामातरोदृष्टाब्राह्मीप्रभृतयःप्रिय ॥ स्वस्वरूपास्तामन्येऽहंबालिकाःकष्टहेतवः ॥ ३७ ॥

मेनापितॄणांमानसीकन्याहिमवतोभार्या ॥ तथाचहरिवंशे ॥ सनातनलोकस्थान्पितृगणानुपक्रम्य एतेषांमानसीकन्यामेनानाममहागिरेः ॥ पत्नीहिमवतःश्रेष्ठायस्यांमैनाकउच्यतेइति ॥ ३४ ॥ ॥ ३५ ॥ ३६ ॥ गौरीविरहसंतापेनाह ॥ अष्टौयाइति ॥ हेप्रियस्वामिन्अष्टौयाब्राह्मीप्रभृतयोब्राह्मीप्रमुखामातरोदृष्टाः ॥ ताश्चवक्ष्यति ॥ ब्रह्माणीवैष्णवीरौद्रीवाराहीनारसिंहिका ॥ कौमारीचापिमाहें



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ह्रीचामुंडाचैवचंडिकेति ॥ स्वस्वरूपाःस्वःसुखंस्वरूपंयासांताः ॥ सुखस्वरूपिण्यइत्यर्थः ॥ इत्यहंमन्ये ॥ अन्याबालिकाःकन्यकास्ताःपित्रादीनांदुःखहेतवोदुःखदाइत्यर्थः ॥ तथाचप्राकृतं वाक्यम् ॥ जातेतिकन्याप्रथमेऽतिशोकःकस्मैददामीतिमहान्वितर्कः ॥ दत्तायदातद्गमनेतिकष्टंकन्यापितॄणांखलुदुःखहेतुरिति ॥ यद्वा अष्टौयामातरोमयादृष्टास्ताबालिकायागौर्याःकष्टहेतवइत्यहं मन्ये ॥ तत्रहेतुः ॥ सुस्वरूपाःअतीवरूपवत्यः ॥ तद्रूपधर्षितःशंकरउमांनाद्रियेतेतिशंकार्थः ॥ दुराधर्षाइतिक्वचित्पाठः ॥३७॥ प्रकृतायाउमायादुःखहेतुत्वंप्रकटयंतीअर्थाज्जगदीश्वरंस्तौत्यर्धेन ॥ तस्यशूलिनःकोप्यन्योनास्तीत्यन्वयः ॥ अनेनसजातीयभेदाभावोध्वनितः॥ एकस्येतिविजातीयभेदाभावः॥ अद्वितीयस्येतिस्वगतभेदाभावश्च ॥ तथाचश्रुतिः॥ एकमेवाद्वितीयंब्रह्मेति ॥ पक्षांतरेऽन्यो नास्तीत्यत्रहेतुमाह॥ एकस्येति ॥अस्मिन्ग्रामेएकएवपुरुषइतिवदेकशब्दस्यमुख्यार्थत्वमित्याशंकायामाह ॥ अद्वितीयस्येति ॥ तदुदंतप्रवृत्त्यैतस्यशूलिनोजामातुर्ज्ञानाय॥जामातुर्वृत्तांतज्ञानेकन्यकाया अपिवृत्तांतोज्ञातएवेत्याशयः ॥३८॥ सास्रमस्रसहितंयथाभवतितथासाक्रंदमित्येतत् ॥ उमावात्सल्यसन्नगीःउमायावात्सल्येनस्नेहेनसन्नाअवरुद्धागद्गदागिरोयस्यसतथा ॥ ३९ ॥ प्रेमस्नेहोबाधतेमा मितिशेषः॥ कथंभूतंमाम् ॥ तदहष्टचग्निदूषितंतस्याउमायाअदृष्टिरदर्शनंसैवाग्निस्तेनदूषितंसंतापितम्॥४०॥पद्मसद्मालक्ष्मीः ॥ सद्यःपद्मेतिक्वचित्पाठः ॥ सद्यःपद्मापिनिर्ययाविति पाठेअपिशब्दाद्गृह

तस्यैकस्यनकोप्यन्योस्त्यद्वितीयस्यशूलिनः ॥ तदुदंतप्रवृत्त्यैचक्रियतामुद्यमोविभो ॥ ३८ ॥ तस्याःप्रियायावाक्येनतदपत्यप्रियोगिरिः ॥ उवाचव चनंसास्रमुमावात्सल्यसन्नगीः ॥३९॥ ॥ गिरिराजउवाच ॥ ॥ अहमेवगमिष्यामितस्यामेनेगवेषणे ॥ नितरांबाधतेप्रेमतदहष्टचग्निदूषितम् ॥४०॥ यदाप्रभृतिसागौरीनिर्गताममसद्मतः ॥ मन्येमेनेतदारभ्यपद्मसद्माविनिर्ययौ ॥ ४१॥ तदालापामृतधयौनमेशब्दग्रहौप्रिये ॥ प्राणेश्वरितदारभ्यस्यातां शब्दांतरग्रहौ ॥ ४२ ॥ जैवातृकीयतोह्नःस्यादूरीभूताद्दशोर्मम ॥ अहोजैवातृकीज्योत्स्नाततोह्नोतिदुनोतिमाम् ॥ ४३ ॥ इत्युक्त्वादायरत्नानिवासांसि विविधानिच ॥ धराधरेंद्रोनिर्यातःशुभलग्नबलोदये ॥ ४४ ॥ अगस्त्यउवाच ॥ ॥ कानिकानिचरत्नानिकियंत्यपिचषण्मुख ॥ यान्यादायप्रतस्थेस तानिमेब्रूहिपृच्छतः ॥ ४५ ॥ ॥ स्कंदउवाच ॥ तुलामुक्ताफलानांतुकोटिद्वयपरीमिताः ॥ तथावारितराणांचहीरकाणांतुलाशतम् ॥ ४६ ॥

सौख्यमपिगतमित्यर्थः॥४१॥तदिति ॥ हेप्रियेहेप्राणेश्वरितदारभ्यतस्याउमायागमनमारभ्यममशब्दग्रहौश्रोत्रेंद्रियेशब्दांतरग्रहौनेत्यन्वयः ॥ कथंभूतौ ॥ तदालापामृतधयौउमावाक्यसुधांपिबंतौ ॥ अयंभावः ॥ यथापीतामृतस्यान्यपानेनेच्छोदेतितथापीततद्वाक्यामृतस्यममशब्दांतरेनेच्छोल्लसतीत्यर्थः ॥ ४२ ॥ जैवेति ॥ अहोइतिखेदे ॥ यतोऽह्नोयस्माद्दिवसादारभ्यजैवातृकश्चंद्रस्तस्येयंजै वातृकीचंद्रज्योत्स्नातत्तुल्यागौरीममदृशोर्नेत्रयोर्दूरीभूतास्यादभवत्ततोह्नस्तस्माद्दिनादारभ्यजैवातृकीज्योत्स्नाचांद्रमसीकौमुदीमामातिदुनोत्युपतापयतीत्यर्थः ॥ सुखदापिचंद्रिकाउमाविश्लेषान्ममदुः खदाभातीत्यर्थः ॥ ४३ ॥ शुभलग्नबलोदयेशुभलग्नबलस्योदयेसतीत्यर्थः ॥४४॥ इत्युक्त्वादायरत्नानीत्युक्तंतत्रपृच्छाति ॥ कानिकानिचेति ॥ कानिकानीतिसंख्येयजातिविषयेप्रश्नः ॥ कियंतीतिसं ख्यानविषये ॥४५॥ तदुभयंदर्शयति ॥ तुलेति ॥ तुलापलशतम्॥ यदाहामरः ॥ तुलास्त्रियांपलशतमिति ॥ मुक्ताफलानांमौक्तिकफलानाम् ॥ यदाहामरः॥अथमौक्तिकम्। मुक्तेति ॥ हीरकाणां वज्राणांहिराइतिलोकेप्रसिद्धानाम् ॥ कथंभूतानाम् ॥ वारितराणांवार्षुइतःप्राप्तेरःप्रकाशोयैस्तेवारितरास्तेषां जलोद्भवत्वेनअतिशुभ्राणांश्वेतानामित्यर्थः ॥ यद्वावारिषुतरंतिप्लवंतीतिवारितराः ॥४६॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नवलक्षाधिकंतुलाशतमित्यन्वयः॥षडस्राणांषट्कोणानाम्॥सुतेजसामितिषडस्राणांविशेषणम्॥ विदूराणांविशेषणंचविमलवर्चसामिति ॥४७॥ पद्मरागाणांशोणरत्नानाम् ॥यदाहामरः ॥ शोणरत्नंलोहितकंपद्मरागइति॥पुष्परागतुलालक्षंरत्नविशेषाणांपलशतसहस्रम्॥४८॥गोमेदरत्नानांपीतवर्णरत्नानामित्यर्थः॥४९॥गरुडोद्गाररत्नानांगारुत्मतानांहरिन्मणीनामितियावत्॥यदाहामरः ॥ गारुत्मतंमरकतमश्मगर्भोहरिन्मणिरिति ॥ शुद्धविद्रुमरत्नानांनिर्मलप्रवालरत्नानामित्यर्थः ॥५०॥ अष्टांगाभरणानांशिरोललाटघ्राणश्रोत्रग्रीवाहस्तकटिचरणदेयानाम् ॥५१॥५२॥५३॥ काशींविशिनष्टि॥ अनेकेतित्रिभिः ॥ खचिताखिलभूमिकांव्याप्ताऽखिलस्थानकाम् ॥ नानेति ॥ अनेकप्रासादमाणिक्यज्योतिर्भिस्ततंव्याप्तंततंविभुअम्बरमाकाशंययाताम् ॥५४॥ सौधानामग्रेउपरिविविधायेस्वर्णकल

नवलक्षाधिकंविप्रषडस्राणांसुतेजसाम् ॥ लक्षद्वयंविदूराणांतुलाविमलवर्चसाम् ॥ ४७ ॥ कोटयःपद्मरागाणांपंचावैहितुलामुने ॥ पुष्परागतुलालक्षंगुणितंनवसंख्यया ॥ ४८ ॥ तथागोमेदरत्नानांतुलालक्षमितामुने ॥ इंद्रनीलमणीनांचतुलाःकोट्यर्धसंमिताः ॥ ४९ ॥ गरुडोद्गाररत्नानांतुलाःप्रयुतसंमिताः ॥ शुद्धविद्रुमरत्नानांतुलाश्चनवकोटयः ॥ ५० ॥ अष्टांगाभरणानांचसंख्याकर्तुंनशक्यते ॥ वाससांचविचित्राणांकोमलानांतथामुने ॥ ५१ ॥ चामराणिचभूयांसिद्रव्याण्यामोदवंतिच ॥ सुवर्णदासदास्यादीन्यसंख्यातानिवैमुने ॥ ५२ ॥ सर्वाण्यपिसमादायप्रतस्थेभूधरेश्वरः ॥ आगत्यवरणातीरंदूरात्काशीमलोकयत् ॥ ५३ ॥ अनेकरत्ननिचयैःखचिताऽखिलभूमिकाम् ॥ नानाप्रासादमाणिक्यज्योतिस्तततताम्बराम् ॥ ५४ ॥ सौधाग्रविविधस्वर्णकलशोज्ज्वलदिङ्मुखाम् ॥ जयंतीवैजयंतीनांनिकरैस्त्रिदिवस्थलीम् ॥ ५५ ॥ महासिद्धचष्टकस्यापिक्रीडाभवनमद्भुतम् ॥ जितकल्पद्रुमवनांवनैःसर्वफलावनैः ॥ ५६ ॥ इतिकाशीसमृद्धिंसविलोक्याभूद्विलज्जितः ॥ उवाचचमनस्येवभूधरेंद्रइदंवचः ॥ ५७ ॥ प्रासादेषुप्रतोलीषुप्राकारेषुगृहेषुच ॥ गोपुरेषुविचित्रेषुकपाटेषुतटेष्वपि ॥ ५८ ॥ मणिमाणिक्यरत्नानामुच्छलच्चारुरोचिषाम् ॥ ज्योतिर्जालैर्जटिलितंयथेदमत्रलोक्यते ॥ ५९ ॥ द्यावाभूम्योरंतरालंतथेतिसमवैम्यहम् ॥ ईदृक्संपत्तिसंभारःकुबेरस्यापिनोगृहे ॥ ६० ॥ अपिवैकुंठभुवनेनेतरस्येहकाकथा ॥ इतियावद्गिरींद्रोसौसंभावयतिचेतसि ॥ ६१ ॥ तावत्कार्पटिकःकश्चित्तल्लोचनपथंगतः ॥ आहूयबहुमानंतमपृच्छच्चाचलेश्वरः ॥ ६२ ॥ ॥ हिमवानुवाच ॥ ॥ हंहोकार्पटिकश्रेष्ठअध्यास्वैतदिहासनम् ॥ स्वपुरोदंतमाख्याहिकिमपूर्वमिहाध्वग ॥ ६३ ॥

शास्तैरुज्ज्वलमतिप्रकाशमानंदिशांमुखंयस्यांताम् ॥ जयन्तीवैजयंतीनांतत्तन्नामपताकाविशेषाणांनिकरैःकृत्वात्रिदिवस्थलीमिवेतिलुप्तोपमा॥५५॥महासिद्ध्यष्टकमणिमादिपञ्चादिवा ॥ सर्वफलानामवनंपालनंयेषुतैर्वनैःसर्वफलसमृद्धैरित्यर्थः ॥ ५६ ॥ ५७ ॥ तटेषूच्चप्रदेशेषु गंगातीरेष्वितिवा ॥ ५८ ॥ उच्छलत्प्रस्फुरच्चारुसुंदरंचरोचिर्दीप्तिर्येषांतेषाम् ॥ जटिलितंसंवलितम् ॥ ५९ ॥ ६० ॥ अपिवैकुण्ठभवनेतत्रापिनइतरस्यभवनेकाकथा ॥ तादृक्समृद्धिर्नास्तीतिकिंवक्तव्यमित्यर्थः ॥ ६१ ॥ कार्पटिकःकाषायवस्त्रधारीसच्छूद्रविशेषः ॥ ६२ ॥ हंहोइत्यव्ययंसंबोधने ॥ अध्यास्वअ



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

धितिष्ठस्वपुरोदन्तंस्वसंबंधिपुरमविमुक्तंतस्योदंतंवृत्तान्तमाख्याहिकथय ॥ इहस्वपुरेअपूर्वंचकिंतदप्याख्याहीत्यर्थः ॥ किमपूर्वमितिस्वपुरेत्यस्यविशेषणंवा ॥ ६३ ॥ ६४ ॥ समुपचक्रमेउपक्रांतवान् ॥ ६५ ॥ अहानीति ॥ मंदराज्जगन्नाथेविश्वनाथेसमायातेसतिपंचषाणिपंचवाषड्वाऽहानिदिनान्येवव्यतिक्रांतानिव्यतीतानीतिद्वयोरन्वयः॥६६॥ ननुब्रह्मणोवरदानाद्दिवोदासेधर्मेणराज्यंशासतिसति कथंकाश्यांविश्वेशागमनंतत्राह ॥ दिवोदासेगतेदिवीति ॥ ६७ ॥ यत्पृष्टंकोत्रसंप्रत्यधिष्ठातेतितत्रोत्तरमाह ॥ योवाइति ॥ वैशब्दःप्रसिद्धिद्योतनार्थः ॥ अत्रकाश्याम् ॥ ननुपरिच्छिन्नस्यकथंजगद धिष्ठातृत्वंतत्राह ॥ सर्वगइति ॥ व्यापकइत्यर्थः ॥ सर्वदृगितिपृथग्वाक्यम् ॥ अतःसर्वगइत्यनेननपौनरुक्त्यम् ॥ सर्वइतिपाठेसर्वस्वरूपइत्यर्थः ॥ ब्रह्मैवेदंसर्वमित्यादिश्रुतेः ॥ ६८ ॥ दृषत्स्वरूपः

कोत्रसंप्रत्यधिष्ठाताकिमधिष्ठातृचेष्टितम् ॥ यदिजानासितत्सर्वमिहाचक्ष्वममाग्रतः ॥ ६४ ॥ सोपिकार्पटिकस्तस्यगिरिराजस्यभाषितम् ॥ समाकर्ण्य समाचष्टुंमुनेसमुपचक्रमे ॥ ६५ ॥ ॥ कार्पटिकउवाच ॥ ॥ आचक्षेशृणुराजेंद्रयत्पृष्टोस्मित्वयाखिलम् ॥ अहानिपंचषाण्येवव्यतिक्रांतानिमानद ॥६६॥ समायातेजगन्नाथेपर्वतेंद्रसुतापतौ ॥ सुंदरान्मंदराद्द्रेर्दिवोदासेगतेदिवि ॥६७॥ योवैजगदधिष्ठातासोधिष्ठातात्रसर्वगः ॥ सर्वदृक्सर्वदःशर्वःकथंनज्ञायते विभो ॥६८॥ मन्येदृषत्स्वरूपोसिदृषदोपिकठोरधीः ॥ यतोविश्वेश्वरंकाश्यांनवेत्सिगिरिजापतिम् ॥६९॥ स्वभावकठिनात्मापिसवरंहिमवान्गिरिः ॥ प्राणाधिकसुतादानाद्योधिनोद्विश्वनायकम् ॥ ७० ॥ बिभ्रत्सहजकाठिन्यंजातोगौरीगुरुर्गुरुः ॥ शंभुंप्रपूज्यसुतयास्रजाविश्वगुरोरपि ॥ ७१ ॥ चेष्टितं तस्यकोवेदवेदवेद्यस्यचेशितुः ॥ मनागितिचजानेहंतच्चेष्टितमिदंजगत् ॥७२॥ अधिष्ठातामयाख्यातस्तथाधिष्ठातृचेष्टितम् ॥ अपूर्वंयत्त्वयापृष्टंतदाख्या मिचतच्छृणु ॥ ७३ ॥ शुभेज्येष्ठेश्वरस्थानेसांप्रतंसउमापतिः ॥ काशींप्राप्यमुदातिष्ठेद्गिरिराजांगजासखः ॥ ७४ ॥ ॥ स्कंदउवाच ॥ ॥ यदायदासगि रिजामृदुनामाक्षरामृतम् ॥ आविष्करोतिपथिकोऽद्रींद्रोल्हष्येत्तदातदा ॥ ७५ ॥ उमानामामृतंपीतंयेनेहजगतीतले ॥ नजातुजननस्तिन्यंसपिबेत्कुंभ संभव ॥ ७६ ॥ उमेतिद्व्यक्षरंमंत्रंयोऽहर्निशमनुस्मरेत् ॥ नस्मरेच्चित्रगुप्तस्तंकृतपापमपिद्विज ॥ ७७ ॥ पुनःशुश्रावहिमवान्हृष्टःकार्पटिकोदितम् ॥ ॥ कार्पटिकउवाच ॥ ॥ राजन्विश्वेश्वरार्थेयःप्रासादोविश्वकर्मणा ॥ ७८ ॥ निर्मीयतेसुनिर्माणोजन्मिनिर्वाणदायिनः ॥ तदपूर्वंनकर्णा भ्यामप्याकर्णितवानहम् ॥ ७९ ॥

पाषाणतुल्यःदृषदुपमापितवन्यूनेत्याह ॥ दृषदोपीति ॥ तत्रहेतुमाह ॥ यतइति ॥ ६९ ॥ एतद्विवृणोति स्वभावकठिनात्मेतिद्वाभ्याम् ॥ अधिनोत् अप्रीयततोषयामासेत्यर्थः ॥ ७० ॥ विश्वेश प्रीणनफलमाह ॥ बिभ्रदिति ॥ स्रजाशिरोधार्यया ॥ विश्वगुरोर्ब्रह्मणः ॥७१॥ यत्पृष्टंकिमधिष्ठातृचेष्टितमितितत्रोत्तरमाह ॥ चेष्टितमिति ॥ चएवार्थे ॥ वेदवेद्यस्यवेदांतैकवेद्यस्येत्यर्थः ॥ ७२ ॥ यत्पृष्टंकिमपूर्वमिहाध्वगेतितस्योत्तरंपूर्वोक्तानुवादपूर्वकमाह ॥ अधिष्ठातेति ॥ ७३ ॥ तिष्ठेत्तिष्ठति ॥ गिरिराजांगजापार्वतीसखीजायासखासहायोवायस्यतथा ॥७४ ॥ ७५ ॥ हर्षेहेतुमाह ॥ उपमाना मृतमितिद्वाभ्याम् ॥ ७६ ॥ ७७ ॥ राजन्निति ॥ विश्वेश्वरस्यार्थेयःप्रासादोविश्वकर्मणानिर्मीयतेतदन्यदपूर्वमितिद्वितीयेनान्वयः ॥ ७८ ॥ किंभूतःप्रासादः ॥ सुशोभनंनिर्माणंयस्य ॥ कथंभूत

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्यविश्वेश्वरस्य ॥ जन्मिनिर्वाणदायिनःप्राणिमात्रस्यमोक्षदायिनः ॥ समासनिविष्टस्यापिविशेषणंछांदसम् ॥ अपूर्वत्वेहेतुमाह ॥ नकर्णाभ्यामिति ॥ ७९ ॥ प्रासादंविशिनष्टि यत्रेत्यादिकथं
तंत्वमित्यतःशक्तनेनग्रंथेन ॥ यत्रप्रासादइत्यन्वयः ॥ मित्रंसूर्यमतिक्रांतानितेजांसियासांशलाकानांताभिरतिमित्रतेजोभिः ॥ ८० ॥ अष्टाष्टावितिपृथक्पदे ॥ वलोपश्छांदसः ॥ ८१ ॥ विष्टपेषु
भुवनेषु ॥ विमानेप्रासादे ॥ ८२ ॥ स्तंभिताआक्रांताः ॥ तत्प्रभाभरास्तेषांचित्ररत्नमयस्तंभानांप्रभाविभ्रतीतितथा ॥ तत्प्रभांतराइतिक्वचित् ॥ ८३ ॥ शालीनाःशोभनाःशालभंजिकाःपुत्त

यत्रातिमित्रतेजोभिःशलाकाभिःसमंततः ॥ मणिमाणिक्यरत्नानांप्रासादेभित्तयःकृताः ॥८० ॥ यत्रसंतिशतंस्तंभाभास्वंतोद्वादशोत्तराः ॥ एकैकंभुवनं
धर्तुमष्टाष्टावितिकल्पिताः ॥ ८१ ॥ चतुर्दशसुयाशोभाविष्टपेषुसमंततः ॥ तस्मिन्विमानेसास्तीहशतकोटिगुणोत्तरा ॥ ८२ ॥ चंद्रकांतमणीनांचस्तं
भाधारशिलाश्चयाः ॥ चित्ररत्नमयैःस्तंभैःस्तंभितास्तत्प्रभाभराः ॥ ८३ ॥ पद्मरागेंद्रनीलानांशालीनाःशालभंजिकाः ॥ नीराजयंत्यहोरात्रंयत्ररत्नप्रदी
पकैः ॥ ८४ ॥ स्फुरत्स्फटिकनिर्माणश्लक्ष्णपद्मशिलातले ॥ अनेकरत्नरूपाणिविचित्राणिसमंततः ॥८५॥ आरक्तपीतमंजिष्ठनीलकिर्मीरवर्णकैः ॥
विन्यस्तानीवभासंतेचित्रेचित्रकृतायतः ॥ ८६ ॥ दृक्पिच्छिलाविलोक्यंतेमाणिक्यस्तंभराजयः ॥ यतोऽविमुक्तेस्वक्षेत्रेमोक्षलक्ष्म्यंकुराइव ॥ ८७ ॥
रत्नाकरेभ्यःसर्वेभ्योगणारत्नोच्चयान्बहून् ॥ राशींश्चक्रुःसमानीययत्राद्रिशिखरोपमान् ॥ ८८ ॥ यत्रपातालतलतोनागानांकोशवेश्मतः ॥ गणैर्मणिगणाः
सर्वेसमाहृत्यगिरीकृताः ॥ ८९ ॥ शिवभक्तःस्वयंयत्रपौलस्त्यःस्वद्रिकूटतः ॥ कोटिहाटककूटानिआनयामासराक्षसैः ॥ ९० ॥ प्रासादनिर्मितिंश्रुत्वा
भक्ताद्वीपांतरस्थिताः ॥ माणिक्यानिसमाजह्रुर्यथासंख्यान्यहोनृप ॥९१॥ चिंतामणिःस्वयंयत्रकर्मणेविश्वकर्मणे ॥ विश्राणयेदहोरात्रंविचित्रांश्चिं
तितान्मणीन् ॥ ९२ ॥ नानावर्णपताकाश्चयत्रकल्पमहीरुहः ॥ अनल्पाःकल्पयंत्येवनित्यंभक्तिसमन्विताः ॥ ९३ ॥ अध्वयोयत्रसततंदधिक्षीरेक्षुसर्पि
षाम् ॥ पंचामृतानांकलशैःस्नपयंतिदिनेदिने ॥ ९४ ॥ यत्रकामदुघानित्यंस्नपयेन्मधुधारया ॥ स्वदुग्धयास्वयंभक्त्याविश्वेशंलिंगरूपिणम् ॥ ९५ ॥
गंधसाररसैर्यंचसेवतेमलयाचलः ॥ कर्पूररंभाकर्पूरपूरैर्भक्त्यानिषेवते ॥ ९६ ॥

लिकाः ॥ नीराजयंतिनीराजनांकुर्वंति ॥ ८४ ॥ ८५ ॥ किर्मीरःकल्माषः ॥ चित्रकृताचित्रकारेण ॥ ८६ ॥ दृक्पिच्छिलानेत्रदृष्टिप्रतिबंधकाः ॥ यतोयत्रप्रासादे ॥ यत्राविमुक्तेइतिपाठेपूर्वं
यतोयत्रप्रासादइतिव्याख्येयम् ॥ ८७ ॥ रत्नोच्चयान्रत्नसमूहान् ॥ ८८ ॥ ८९ ॥ पौलस्त्यःकुबेरःस्वद्रिकूटतः ॥ शोभनाद्रिशृंगेभ्यःचित्रकूटतइतिक्वचित् ॥ कोटिहाटककूटानिअसंख्यातस्वर्ण
राशीनानयामास ॥ कारयामासेतिक्वचित् ॥९०॥ यथासंख्यानिसमानानि ॥ यद्वा यथायथावदसंख्यातानीत्यर्थः ॥९१॥९२॥९३॥९४॥ कामदुघाकामधेनुः ॥९५॥ गंधसाररसैश्चंदनरसैः ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कर्पूररंभाकर्पूरोत्पादिकाकदली ॥ पूरैःसमूहैः ॥९६॥९७॥ त्रपयालज्जया ॥ ९८ ॥ पारितोषिकंपरितोषेणदेयम् ॥९९॥१००॥१॥ प्राभृतकउपस्कारः ॥ २ ॥ वृद्धोक्षमात्रसंपत्तिर्जर्जरवृषमात्र संभारः ॥३॥ अन्वयोवंशः ॥ उह्यतेप्राप्यतेज्ञायतइत्यर्थः ॥४॥५॥६॥७॥८॥९॥ अपश्यंज्ञातवान् ॥११०॥ यतःईश्वरात् ॥ वित्तोजानीतः नियतंयथास्यात्॥११॥परापरःकार्यकारणस्वरूपः ॥

इत्याद्यपूर्वंयत्रास्तिप्रत्यहंशंकरालये ॥ कथंतंत्वमुमाकांतंनवेत्सिकठिनाशय ॥ ९७ ॥ इतितस्यसमृद्धिंतांदृष्ट्वाजामातुरद्रिराट् ॥ त्रपयापरिभूतोभून्नितरां कुंभसंभव ॥ ९८ ॥ तस्मैकार्पटिकायाथसदत्त्वापारितोषिकम् ॥ पुनश्चिंतापरोजातोऽद्रिराट्कार्पटिकेगते ॥ ९९ ॥ उवाचेतिमनस्येवविस्मयोत्फुल्ललोचनः ॥ अहोभद्रमिदंजातंयत्त्वयाश्राविशर्मभाक् ॥ १०० ॥ यावत्संपत्तिसंभारःश्रूयतेदृश्यतेत्रवै ॥ जामातुरत्रसदनेलीलात्रिजगतीपतेः ॥ १ ॥ ततः प्राभृतकस्तुच्छोनितरांप्रतिभातिमे ॥ कन्यार्थंयोमयानीतोजामातुःपरितोषकृत् ॥ २ ॥ अहंमन्येतथैवासौयथादर्शिमयापुरा ॥ वृद्धोक्षमात्रसंपत्तिःसर्वकर्मपराङ्मुखः ॥ ३ ॥ नैनंकोपिविजानीयान्नान्वयोस्यकदाचन ॥ नामापियस्यनैकंचकिंदेशीयश्चनोह्यते ॥ ४ ॥ किंवृत्तश्चकिमाचारोनाममात्रेणचेश्वरः ॥ ऐश्वर्यसूचकंवस्तुयस्यकिंचिन्नलक्ष्यते ॥ ५ ॥ सोसौनिर्वाणसंपत्तिंरंकायापिददात्यहो ॥ सुमुखःसर्वकर्माणिफलवंतिकरोतिसः ॥ ६ ॥ वेदवेद्योहिसर्वज्ञोयत्संतानोऽखिलंजगत् ॥ यंनकोपिहिवेदादौवेदवेद्यःसएषवै ॥ ७ ॥ योनभिज्ञःसदाज्ञातःससर्वज्ञोयमेवहि ॥ यस्यैकमपिनोनामपुंसाज्ञेयंनकेनचित् ॥८॥ सर्वेषांसर्वनामानियस्यनामानिनिश्चितम् ॥ सोसौहिसर्वदेशीयःसर्वेभ्यःसर्वसिद्धिदः ॥९॥ यस्यदेशोनविदितोयस्तुवृत्तिपराङ्मुखः॥ आचारहीनमिवयंपुराऽपश्यंकठोरधीः ॥ ११० ॥ श्रुतिस्मृतीयतःसर्वमाचारंवित्तएवहि ॥ नाममात्रेणनियतंयमज्ञासिषमीश्वरम् ॥ ११ ॥ साक्षादीश्वरएवैषसोन्येष्वैश्वर्यसूचकः ॥ अपिसर्वगुणाधारोगुणातीतःपरापरः ॥ १२ ॥ अर्वाचीनइहाप्येषपराचीनःपरात्परः ॥ भूधराणामहंनाथोविश्वनाथउमापतिः ॥१३॥ अहंप्रमितसंपत्तिरप्रमेयधनोह्यसौ ॥ तुच्छप्राभृतकस्तस्मान्नेदानीमस्यदर्शनम् ॥ १४ ॥ करिष्येथकरिष्यामिव्यावृत्त्यागत्यकर्हिचित् ॥ संप्रधार्येतिमनसिसायंसचगिरीश्वरः ॥ १५ ॥ आहूयसर्वाननुगान्पार्वतीयान्महाबलान् ॥ आदिष्टवानिदंवाक्यंसर्वेयूयंबलाधिकाः ॥ १६ ॥ कुर्वंत्वेकंममादेशंयावन्नोद्यतिभानुमान् ॥ तावच्छिवालयंचैकंविदधत्वत्रसत्वरम् ॥ १७॥ यस्मिन्कृतेकृतार्थःस्यामिहलोकेपरत्रच ॥ समागत्येहकाश्यांयःकुर्यादेकंशिवालयम् ॥ १८ ॥ तेनत्रैलोक्यमखिलंसालयंकृतमेवहि ॥ तेनदत्तानिदानानिमहांतिविधिपूर्वकम् ॥ १९ ॥ सुपर्वणिसुपात्रायसुताथश्रद्धयाधिकम् ॥ येनस्ववित्तमानेनधर्मोपार्जितवित्ततः ॥ १२० ॥ कृतंशंभोर्महासद्मनतंपद्मात्यजेत्क्वचित् ॥ तपांसितेनतप्तानिशीर्णपर्णाशनान्यपि ॥ २१ ॥

महेश्वरइतिक्वचित्पाठः ॥ १२ ॥ परादव्याकृतात् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ सुपर्वणिरविग्रहे ॥ १२० ॥ २१ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ २२ ॥ २३ ॥ व्युष्टाप्रभाता॥२४॥ प्रशस्तिंप्रासादकर्तृसूचिकांपत्रीम् ॥२५॥२६॥ राशिंरत्नानामितिशेषः ॥ २७ ॥ २८॥२९॥१३० ॥३१॥ नाक्षिनदृष्टः प्रगेप्रातःकाले ॥३२॥३३॥३४॥
आलुलोकेददर्श ॥३५॥३६॥ शातनंनाशकम् ॥३७॥ जिज्ञासतिजिज्ञासतेविचारयतीत्यर्थः ॥३८॥ करामलकवत्सर्वदर्शित्वादिवशब्दः ॥ वाचयित्वैवेतिवापाठः ॥ मनोजहृत्कामनाशकृत्॥दिष्ट्या



वाराणसींसमासाद्ययेनाकारिशिवालयः ॥ अशेषाःसुविशेषाढ्याइष्टास्तेनमहामखाः ॥ २२ ॥ आनंदकाननेयेनदेवदेवालयःकृतः ॥ इतितस्यसमादेशं
समाकर्ण्यानुगास्ततः ॥ २३ ॥ चक्रुर्देवालयंश्रेष्ठंयावद्व्युष्टानयामिनी ॥ तावच्छैलेश्वरंलिंगंशैलेशेनप्रतिष्ठितम् ॥ चंद्रकांतमणेश्चंचत्कांतिश्वेतितमं
डपम् ॥ २४ ॥ अलेखयत्प्रशस्तिंचप्रशस्ताक्षरमालिनीम् ॥ व्याचक्षाणांनिजांसर्वगोत्रेभ्योप्याधिकोन्नतिम् ॥ २५ ॥ ततोऽरुणोदयेजातेस्नात्वापंचनदे
ह्रदे ॥ शैलराजःकालराजंनमस्कृत्यसमर्च्यच ॥ २६ ॥ तत्रराशिंसमुत्सृज्यपरितस्त्वरितोययौ ॥ पार्वतीयैरनुगतःसर्वैरपिनिजालयम् ॥ २७ ॥ ततः
प्रातःसमालोक्यगणौढुंडनमुंडनौ ॥ हृष्टौदेवालयंरम्यंवरणायास्तटेशुभे ॥ २८ ॥ अदृष्टपूर्वंदेवायनिवेदयितुमागतौ ॥ तौतुदृष्ट्वामहादेवमुमादर्शितदर्प
णम् ॥ २९ ॥ प्रणम्यदंडवद्भूमौकृतांजलिपुटौगणौ ॥ कृताभ्यनुज्ञौभ्रूक्षेपाद्विज्ञप्तिमथचक्रतुः ॥ १३० ॥ देवदेवनजानीवःकेनचिद्दृढभक्तिना ॥ अती
वरम्यःप्रासादोनिर्मितोवरणातटे ॥ ३१ ॥ आसायंनैक्षिचावाभ्यांदृष्टोद्यैवप्रगेविभो ॥ गणोदितमितीशानोनिशम्याहगिरींद्रजाम् ॥ ३२ ॥ विज्ञातसर्व
वृत्तांतःसर्वज्ञोप्यनभिज्ञवत् ॥ अचलेंद्रांगजेयावस्तत्प्रासादविलोकने ॥३३॥ इत्युक्त्वेशःसगिरिजोनिरगात्सगणोमुने ॥ महास्यंदनमारुह्यप्रासादंद्रष्टुमु
त्सुकः ॥ ३४ ॥ अथालुलोकेगिरिशःप्रासादंवरणातटे ॥ अतीवरम्यरचनंयामिनीमात्रनिर्मितम् ॥ ३५ ॥ स्यंदनादवरुह्याथगर्भागारमवीविशत् ॥
ददर्शचमहालिंगंचंद्रकांतशिलामयम् ॥ ३६ ॥ देदीप्यमानंमहसामोक्षलक्ष्म्यंकुराकृति ॥ दृष्टिप्रसादजननंपुनर्जननशातनम् ॥ ३७ ॥ केनेदंस्थापितं
लिंगंयावज्जिज्ञासतीश्वरः ॥ तावद्ददर्शपुरतःप्रशस्तिकर्तृसूचिकाम् ॥३८॥ वाचयित्वेवचमनाङ्मनस्येवमनोजहृत् ॥ उवाचदेवींदिष्ट्येतिप्रेक्षस्वात्म
पितुःकृतिम् ॥ ३९ ॥ उमाश्रुत्वेतिसंहृष्टाकदंबकुसुमश्रियम् ॥ आनंदांकुरलक्ष्मीवदंगेषुपरिबिभ्रती ॥ १४० ॥ ततोव्यजिज्ञपद्देवंदेवीपादौप्रणम्यच ॥
अस्मिँल्लिंगवरेनाथत्वयास्थेयमहर्निशम् ॥ ४१ ॥ अस्यलिंगस्ययेभक्ताःशैलेशस्यमहेशितुः ॥ तेभ्यस्त्वंमहतीमृद्धिंदास्यसीहपरत्रच ॥ ४२ ॥ तथे
तिदेवउक्त्वातांपार्वतींपुनरब्रवीत् ॥ वरणायांकृतस्नानैःशैलेशोयैःसमार्चितः ॥ ४३ ॥ पितॄन्संतर्प्यचमुदादत्त्वादानानिशक्तितः ॥ नतेषांपुनरावृत्तिरत्रसं
सारवर्त्मनि ॥ ४४ ॥ शैलेश्वरेमहालिंगेनित्यंस्थास्याम्यहंशुभे ॥ प्रदास्यामिपरांमुक्तिमेतल्लिंगार्चकेजने ॥ ४५ ॥

भद्रम् ॥ पोषकादिव्यावृत्त्यर्थमात्मपदम् ॥ ३९ ॥ उमेति ॥ कदम्बकुसुमश्रियंबिभ्रतीउमाततस्तदनंतरंदेवंव्यजिज्ञपद्विज्ञापितवतीतिद्वितीयेनान्वयः ॥१४०॥४१॥ ४२ ॥४३ ॥ ४४ ॥ ४५ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सुरोधासिशोभनेतीरे ॥ ४६ ॥ ४७ ॥ ४८ ॥ पापकंचुकंपापमेवकंचुकंनिर्मोकम् ॥ १४९ ॥ इतिश्रीरामानन्दकृतायांकाशीखंडटीकायांषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ ७ ॥ ॥
सप्तषष्टितमेध्यायेरत्नेशस्यमहेशितुः ॥ प्रशंसावर्ण्यतेतावत्सर्वपापप्रणाशिनी ॥१॥ इदानींकथयिष्यामिरत्नेश्वरसमुद्भवमित्युक्तंतत्रप्रश्नंकरोति ॥ रत्नेश्वरेति ॥१॥ पुनः प्रश्नद्वयमाह ॥ कोस्येति ॥
एतमेतत् ॥ यत्सर्वंपृष्टमित्यर्थः ॥ एतंमहिमानमितिवा ॥२॥ त्रयाणांपृष्टत्वेप्यनादिसिद्धत्वेनप्रतिष्ठितत्वाभावात्तंविहायद्वयोरनुवादमाह ॥ रत्नेश्वरस्येति ॥ ३ ॥ ब्रुवेस्पष्टंकथयामि ॥ ब्रवीमितेइति

शैलेश्वरंयेद्रक्ष्यंतिवरणायाःसुरोधासि ॥ तेषांकाश्यांनिवसतांदुःखंनाभिभविष्यति ॥ ४६ ॥ उमयापिवरोदत्तस्तत्रलिंगेघटोद्भव ॥ शैलेश्वरस्ययेभक्ता स्तेमेपुत्रानसंशयः ॥ ४७ ॥ स्कंदउवाच ॥ ॥ इतिशैलेश्वरंलिंगंकथितंतेमहामुने ॥ इदानींकथयिष्यामिरत्नेश्वरसमुद्भवम् ॥ ४८ ॥ श्रुत्वाशैले शमाहात्म्यंश्रद्धयापरयानरः ॥ पापकंचुकमुत्सृज्यशिवलोकमवाप्नुयात् ॥ १४९ ॥ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थे काशीखंडउत्तरार्धे शैलेशादिलिंगनिर्णयोनामषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ अगस्त्यउवाच ॥ ॥ रत्नेश्वरसमुत्पत्तिंकथयस्वषडानन ॥ रत्नभूतंमहालिंगंयत्काश्यांपरिवर्ण्यते ॥ १ ॥ कोस्यलिंगस्यमहिमाकेनैतच्चप्रतिष्ठितम् ॥ एतंविस्तरतोब्रूहिगौरीहृदयनंदन ॥ २ ॥ ॥ स्कंदउवाच ॥ रत्नेश्वरस्यमाहात्म्यंकथयिष्यामितेमुने ॥ यथाचतस्यलिंगस्यप्रादुर्भावोऽभवद्भुवि ॥ ३ ॥ श्रुतंनामापिलिंगस्ययस्यजन्मत्रयार्जितम् ॥ वृजिनंनाशये त्तस्यप्रादुर्भावंब्रुवेमुने ॥ ४ ॥ शैलराजेनरत्नानियानिपुंजीकृतान्यहो ॥ उत्तरेकालराजस्यतानितस्यगिरेर्वृषात् ॥ ५ ॥ सर्वरत्नमयंलिंगंजातं तत्सुकृतात्मनः ॥ शक्रचापसमच्छायंसर्वरत्नद्युतिप्रभम् ॥ ६ ॥ तल्लिंगदर्शनादेवज्ञानरत्नमवाप्यते ॥ शैलेश्वरंसमालोक्यशिवौतत्रसमागतौ ॥ ७ ॥ यत्ररत्नमयंलिंगमाविर्भूतंस्वयंमुने ॥ तस्यस्फुरत्प्रभाजालैस्ततमंबरमंडलम् ॥ ८ ॥ तत्रदृष्ट्वाशुभंलिंगंसर्वरत्नसमुद्भवम् ॥ भवान्यदृष्टपूर्वंहिप रिपप्रच्छशंकरम् ॥ ९ ॥ देवदेवजगन्नाथसर्वभक्ताभयप्रद ॥ कुतस्त्यमेतल्लिंगंहिसप्तपातालमूलवत् ॥ १० ॥ ज्वालाजटिलिताकाशंप्रभाभासित दिङ्मुखम् ॥ किमाख्यंकिंस्वरूपंचकिंप्रभावंभवांतक ॥ ११ ॥ यस्यसंवीक्षणादेवमनोमेतीवहृष्टवत् ॥ इहैवरमतेनाथकथयैतत्प्रसादतः ॥ १२ ॥ ॥ देवदेवउवाच ॥ ॥ शृण्वपर्णेसमाख्यामियत्त्वयापृच्छिपार्वति ॥ स्वरूपमेतल्लिंगस्यसर्वतेजोनिधेःपरम् ॥ १३ ॥ तवपित्राहिमवतागिरिराजेनभा मिनि ॥ त्वामुद्दिश्यमहारत्नसंभारोत्राप्यनायिहि ॥ १४ ॥

कचित् ॥ ४ ॥ कालराजस्यकालभैरवस्य ॥ वृषाद्धर्मात् ॥ ५ ॥ तत्प्रसिद्धम् ॥ हीतिक्वचित् ॥ सुकृतंपुण्यमात्मनियस्यससुकृतात्मातस्य ॥ शक्रचापसमच्छायमिंद्रधनुःसदृशकांति ॥ ६॥७ ॥
ततंव्याप्तम् ॥ ८ ॥ सर्वरत्नानांसमुद्भवोयस्मात्सर्वरत्नैःसमुद्भवोवायस्यतत्सर्वरत्नसमुद्भवंतत् ॥ अदृष्टपूर्वानदृष्टंपूर्वमर्थाल्लिंगंययासातथा ॥ ९ ॥ सप्तपातालमूलवत्सप्तपातालपर्यंतंमूलंयस्या
स्तितत्तथा ॥ १० ॥ ज्वालाजटिलिताकाशंज्वालाभिर्जटिलितंजटाव्याप्तमिवकृतमाकाशंयेनतत्तथा ॥ ११ ॥ १२ ॥ १३ ॥ महारत्नसंभारःतद्रूपःपारिबर्हः महारत्नानांसमूहइतिवा ॥ १४ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ १५ ॥ १६ ॥ उमेहेभवानि ॥ सर्वेदितिकचित् ॥ १७ ॥ १८ ॥ विधापयकारय ॥ १९ ॥ ननुप्रासादकरणेकिंफलमितिपृच्छायामाह ॥ लिंगप्रासादेति ॥ २० ॥ व्यापारितानियुक्ताः॥२१॥ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ कामवर्जितानिष्कामाः ॥ ३१ ॥ ३२ ॥ किंतद्वृत्तंतदाह ॥ इतिहासमिति ॥ ३३ ॥ नाट्यार्थकोविदानृत्यकरणे

अत्रतानिचरत्नानिराशीकृत्यहिमाद्रिणा ॥ सुकृतोपार्जितान्येवययौस्वसदनंपुनः ॥ १५ ॥ तवार्थंवाममार्थंवाश्रद्धयायत्समर्प्यते ॥ काश्यांतस्यपरीपाकोभवेदीदृग्विधोऽनघे ॥ १६ ॥ लिंगंरत्नेश्वराख्यंवैमत्स्वरूपंहिकेवलम् ॥ अस्यप्रभावोहिमहान्वाराणस्यामुमेध्रुवम् ॥ १७ ॥ सर्वेषामिहलिंगानांरत्नभूतमिदंपरम् ॥ अतोरत्नेश्वरंनामपरंनिर्वाणरत्नदम् ॥ १८ ॥ अनेनैवसुवर्णेनपित्राराशीकृतेनच ॥ प्रासादमस्यलिंगस्यविधापयमहेश्वरि ॥१९॥ लिंगप्रासादकरणात्खंडस्फुटितसंस्कृतेः ॥ लिंगस्थापनजंपुण्यंहेलयैवेहलभ्यते ॥ २०॥ तथेतिभगवत्योक्तागणाःप्रासादनिर्मितौ ॥ सोमनंदिप्रभृतयोऽसंख्याव्यापारितामुने ॥ २१ ॥ गणैश्चकांचनमयोनानाकौतुकचित्रितः ॥ निर्ममेयाममात्रेणप्रासादोमेरुशृंगवत् ॥२२॥ देवीप्रहृष्टवदनादृष्ट्वाप्रासादनिर्मितिम् ॥ गणेभ्योऽव्यतरद्भूरिसंमानंपारितोषिकम् ॥ २३ ॥ पुनश्चदेवीपप्रच्छप्रणिपातपुरःसरम् ॥ महिमानंमहादेवंलिंगस्यास्यमहामुने ॥२४॥ ॥ देवदेवउवाच ॥ ॥ लिंगंत्वनादिसंसिद्धमेतद्देविशुभप्रदम् ॥ आविर्भूतमिदानींचत्वत्पितुःपुण्यगौरवात् ॥ २५ ॥ गुह्यानांपरमंगुह्यंक्षेत्रेऽस्मिञ्छ्रितिप्रदम् ॥ कलौकलुषबुद्धीनांगोपनीयंप्रयत्नतः ॥ २६ ॥ यथारत्नंगृहेगुप्तंनकैश्चिज्ज्ञायतेपरैः ॥ अविमुक्तेतथालिंगंरत्नभूतंगृहेमम ॥ २७ ॥ यानिब्रह्मांडमध्येत्रसंतिलिंगानिपार्वति ॥ तैरर्चितानिसर्वाणिरत्नेशोयैःसमर्चितः॥२८॥प्रमादेनापियैर्गौरिलिंगंरत्नेशमर्चितम् ॥ तेभवंत्येवनियतंसप्तद्वीपेश्वरानृपाः ॥ २९ ॥ त्रैलोक्येयानिवस्तूनिरत्नभूतानितानितु ॥ रत्नेश्वरंसमभ्यर्च्यसकृत्प्राप्नोतिमानवः ॥ ३० ॥ पूजयिष्यंतियेलिंगंरत्नेशंकामवर्जिताः ॥ तेसर्वेमद्गणाभूत्वाप्रांतेद्रक्ष्यंतिमामिह ॥ ३१ ॥ रुद्राणांकोटिजप्येनयत्फलंपरिकीर्तितम् ॥ तत्फलंलभ्यतेदेविरत्नेशस्यसमर्चनात् ॥ ३२ ॥ लिंगेचानादिसंसिद्धेयद्वृत्तंतद्ब्रवीमिते ॥ इतिहासंमहाश्चर्यंसर्वपापनिकृंतनम् ॥ ३३ ॥ पुरेहनर्तकीकाचिदासीन्नाट्यार्थकोविदा ॥ सैकदाफाल्गुनेमासिशिवरात्र्यांकलावती ॥३४॥ ननर्तजागरंप्राप्यजगौगीतंचपेशलम् ॥ स्वयंचवादयामासनानावाद्यानिवाद्यवित् ॥३५॥ तेनतौर्यत्रिकेणापिप्रीणयित्वाथसानटी॥ रत्नेश्वरंमहालिंगंदेशमिष्टंजगामह ॥ ३६ ॥ कालधर्मवशंयातातत्रसावरनर्तकी ॥ सुतागंधर्वराजस्यवसुभूतेर्बभूवह ॥ ३७ ॥ संगीतस्यसवाद्यस्यतस्यलास्यस्यपुण्यतः ॥ तत्रेशाग्रेकृतस्येहजागरेशिवरात्रिजे ॥ ३८ ॥

पंडिताः ॥ ३४ ॥ पेशलंमनोहरम् ॥ ३५ ॥ तौर्यत्रिकेणनृत्यवाद्यगीतेन ॥ यदाहामरः ॥ तौर्यत्रिकंनृत्यगीतवाद्यमिति ॥ ३६ ॥ ३७ ॥ लास्यस्यनृत्यस्य ॥ यदाहामरः ॥ लास्यंनृत्यंचनर्त



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नमिति ॥ ३८ ॥ कलानांचतुःषष्टीनांकलापःसमूहस्तत्रकुशलाः ॥ ३९ ॥ ४० ॥ मुनेइत्यगस्त्यसंबोधनंकार्तिकेयकृतम् ॥ ४१ ॥ वाग्देवीसरस्वती ॥ तिसृभिस्ताभिःसहितयारत्नावल्येत्यर्थः ॥
॥ ४२ ॥ नियमंव्रतम् ॥ ४३ ॥ वचोवक्ष्यामिवचनंवदिष्यामि ॥ अपिशब्देनभोजनादिकंसंगृह्यते ॥ ४४ ॥ ४५ ॥ समानर्चपूजयामास ॥ चःसमुच्चये ॥ गीतमालयागीतसमूहेन ॥ ४६ ॥
अभवंजातः ॥ ४७ ॥ तवनामसनामाख्योरत्नचूडइत्यर्थः ॥ ४८ ॥ आनंदसंदोहमंथरासुखसमूहेनव्याप्तास्तब्धेतिवा ॥ ४९ ॥ निजोदंतंस्ववृत्तांतंरत्नेशेनोक्तंयस्त्वयेत्यादिरूपम् ॥ निजोद्देश

रम्यारत्नावलीनामरूपलावण्यशालिनी ॥ कलाकलापकुशलामधुरालापवादिनी ॥ ३९ ॥ पितुरानंदकृन्नित्यंवसुभूतेर्घटोद्भव ॥ सर्वगांधर्वकुशलागुण
रत्नमहाखनिः ॥ ४० ॥ मुनेसखीत्रयंतस्याश्चारुचातुर्यभाजनम् ॥ शशिलेखानंगलेखाचित्रलेखेतिनामतः ॥ ४१ ॥ तिसृभिस्ताभिरेकत्रवाग्देवीप
रिशीलिता ॥ ताभ्यःसर्वाःकलाःप्रादात्परिप्रीतासरस्वती ॥ ४२ ॥ प्राप्यरत्नावलीगौरिसाजन्मांतरवासनाम् ॥ रत्नेश्वरस्यलिंगस्यजग्राहनियमंशुभम्
॥ ४३ ॥ रत्नभूतस्यलिंगस्यकाश्यांरत्नेश्वरस्यवै ॥ नित्यंसंदर्शनंप्राप्यवक्ष्याम्यपिवचोमुखे ॥ ४४ ॥ इत्थंनियमवत्यासीत्सागंधर्वसुतोत्तमा ॥ ताभिः
सखीभिःसहितानित्यंलिंगंचपश्यति ॥ ४५ ॥ एकदाराध्यरत्नेशंममैतल्लिंगमुत्तमम् ॥ समानर्चचसाबालारम्ययागीतमालया ॥ ४६ ॥ सख्यःप्रदक्षिणी
कर्तुंलिंगंतिस्रोऽप्युमेगताः ॥ तस्यागीतेनतुष्टोहंलिंगस्थोवरदोभवम् ॥ ४७ ॥ यस्त्वयारंस्यतेरात्रावद्यगंधर्वकन्यके ॥ तवनामसमानाख्यःसतेभर्ताभ
विष्यति ॥ ४८ ॥ इतिलिंगांबुधेर्जातांपरिपीयवचःसुधाम् ॥ बभूवानंदसंदोहमंथरातीवह्रीमती ॥ ४९ ॥ गताथव्योममार्गेणसखीभिःस्वपितुर्गृहम् ॥
कथयंतीनिजोदंतंमालीनांपुरोमुदा ॥ ५० ॥ ताभिर्दिष्ट्येतिदिष्ट्येतिसखीभिःपरिनंदिता ॥ अद्यतेवांछितंभाविरत्नेशस्यसमर्चनात् ॥ ५१ ॥
यद्यायातिसतेरात्रावद्यकौमारहारकः ॥ चोरोबाहुलतापाशैःपाशितव्योतियत्नतः ॥ ५२ ॥ गोचरीक्रियतेस्माभिर्यथाससुकृतैकभूः ॥ प्रातरेवतवप्रेयान्रत्ने
शादिष्टइष्टकृत् ॥ ५३ ॥ यातास्वस्मासुहृष्टासुभवतीपुण्यगौरवात् ॥ अहोरत्नेश्वरंलिंगंप्रत्यक्षीकृतवत्यसि ॥ ५४ ॥ अहोभाग्योदयोनृणांमहोपुण्यसमु
च्छ्रयः ॥ एकस्यैवभवेत्सिद्धिर्यदेकत्रापितिष्ठताम् ॥ ५५ ॥

मितिपाठेपिसएवार्थः ॥ आलीनांसखीनाम् ॥ यदाहामरः ॥ आलिःसखीवयस्याचेति ॥ ५० ॥ परिनंदिताहर्षिता ॥ भाविभवितृ ॥ ५१ ॥ बाहुलतापाशैःबाहूएवलतारूपाःपाशास्तैः
पाशितव्योबद्धव्यः ॥ ५२ ॥ सुकृतैकभूःपुण्यैकस्थानम् ॥ प्रातरिति ॥ भवत्याःपुण्यस्यगौरवाद्गुरोर्भावोगौरवंतस्मादस्मासुहृष्टासुयातासुसतीषुअस्माकमग्रेभाविहर्षनिमित्तंरत्नेशेनादिष्टस्तवप्रेयान्
प्रियतमोभर्ताप्रातःकालेएवइष्टकृद्भविष्यतीत्यर्थः ॥ ५३ ॥ तस्याभाग्यमभिनंदंति अहोइतिसार्धेन अहोइत्याश्चर्येहर्षेवा ॥ ५४ ॥ उच्छ्रयउद्रेकः ॥ ५५ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तत्रदैवमेवकेवलंकारणमितिदैवप्राधान्यवादिवाक्यमनुवादपूर्वकमुदाहरंति ॥ सत्यंवदंतीति ॥ ५६ ॥ तदेववाक्यंस्वास्मिन्योजयंति ॥ भवत्याअपीति ॥ दैवमदृष्टम् ॥ फलतिफलनिष्पत्तिंकरोति ॥
॥ ५७ ॥ ननुतर्हिभवतीनांमांप्रतीर्ष्याजातात्याहुः ॥ लोकानामिति ॥ आलिहेसखि ॥ ५८ ॥ अतितुच्छवदत्यल्पवत् ॥ ५९ ॥ ६० ॥ ६१ ॥ निर्वर्त्यसमाप्य ॥ ६२ ॥ ६३ ॥ संवेशमंदिरं
निद्रागृहम् ॥ शयनमंदिरमितिक्वचित् ॥ ६४ ॥ ६५ ॥ तंद्रीतंद्राआलस्यमितियावत् ॥ ६६ ॥ ६७ ॥ दोर्हस्तः ॥ कंकणेनबाहुवलयेनक्वणितंशब्दितम् ॥ उत्कटमुद्भटंमहदितियावत् ॥ तेनसिंजि
तेनक्वणितेन ॥ ६८ ॥ सुखेति ॥ सुखसंतानःसुखविस्तारएवपीयूषह्रदस्तस्मिन्परिनिमज्ज्यमंत्त्काक्षणेनक्षणमात्रेणतद्वियोगाग्निकीलासुतद्विरहाग्निज्वालासुपतितास्मि ॥ यदाहामरः ॥ वह्नेर्द्वयो

सत्यंवदंतिनासत्यंदैवप्राधान्यवादिनः ॥ दैवमेवफलेदंकंनोद्यमोनापरंबलम् ॥ ५६ ॥ भवत्याअपिचास्माकमेकएवहिचोद्यमः ॥ परंदैवंफलत्येकंयथा
तवननःपुरः ॥ ५७ ॥ लोकानांव्यवहारोयमालिप्रोक्तःप्रसंगतः ॥ परंमनोरथावातिस्तवयासैवनःस्फुटम् ॥५८॥ इतिसंव्याहरंतीनामनंतोध्वाऽतितुच्छ
वत् ॥ क्षणात्तासांव्यतिक्रांतःप्राताश्चस्वंस्वमालयम् ॥ ५९ ॥ अथप्रातःसमुत्थायपुनरेकत्रसंगताः ॥ साचमौनवतीताभिःपरिभुक्तेवलक्षिता ॥
॥ ६० ॥ तूर्णंप्राप्याथकाशींसास्नात्वामंदाकिनीजले ॥ सखीभिःसहितापश्यल्लिंगंरत्नेश्वरंमम ॥ ६१ ॥ निर्वर्त्यनियमंसाथलज्जामुकुलितेक्षणा ॥
निर्बंधेनवयस्याभिःपरिपृष्टाजगादह ॥ ६२ ॥ ॥ रत्नावल्युवाच ॥ ॥ अथरत्नेशयात्रायाःप्रयातासुस्वमंदिरम् ॥ भवतीषुस्मरंत्येवतद्रत्नेशवचोऽ
मृतम् ॥ ६३ ॥ सविशेषांगसंस्काराऽविशंसंवेशमंदिरम् ॥ निद्रादरिद्रनयनातद्विलोकनलालसा ॥६४॥ बलात्स्वप्नदशांप्राप्ताभाविनोर्थस्यगौरवात् ॥
आत्मविस्मरणेहेतूततोमेद्वौबभूवतुः ॥ ६५ ॥ तंद्रीतदंगसंस्पर्शौममबोधापहारकौ ॥ तंद्र्याचापरवशाचासंततस्तत्स्पर्शनेनच ॥ ६६ ॥ नजानेत्वथ
किंवृत्तंकाहंक्वाहंसचाथकः ॥ तंनिर्जिगमिषुंसख्योयावद्धर्तुंप्रसारितः ॥६७॥ दोःकंकणेनरिपुणाक्वणितंतावदुत्कटम् ॥ महतासिंजितेनाहंतेनाल्पंपरिबो
धिता ॥ ६८ ॥ सुखसंतानपीयूषह्रदेपरिनिमज्ज्यवै ॥ क्षणेनतद्वियोगाग्निकीलासुपतिताबलात् ॥६९॥ किंकुलीयःसनोवेद्मिकिंदेशीयःकिमाख्यकः ॥
दुनोतिनितरांसख्यस्तद्विश्लेषानलोमहान् ॥ ७० ॥ अनल्पोत्कलितंचेतःपुनस्तत्संगमाशया ॥ प्राणानांमेयियासूनामेकमेवमहौषधम् ॥ ७१ ॥
वयस्यानिशिभुक्तस्यतस्यैवपुनरीक्षणम् ॥ भवतीनामधीनंचतत्पुनर्दर्शनंमम ॥७२॥ काऽलीकमालयोवक्तिस्निग्धमुग्धेसखीजने ॥ तद्दर्शनेनस्थास्यं
तिप्राणायास्यंतिचान्यथा ॥ ७३ ॥

र्ज्वालकीलाविति ॥ वतेतिखेदे ॥ अबलेतिक्वचित्पाठः ॥ ६९ ॥ किंकुलीयःकस्मिन्कुलेभवः ॥ नोनिषेधे ॥ किमाख्यकःकाआख्यायस्यसतथा ॥ दुनोतिउपतापयति ॥ ७० ॥ अनल्पोत्क
लितंमहदुत्कंठितम् ॥ अनल्पोत्कलिपतमितिपाठेपिसएवार्थः ॥ अनल्पोत्कंपितमितिचान्यत्र ॥ यियासूनांगंतुमिच्छूनाम् ॥ ७१ ॥ वयस्याहेसख्यः ॥ तर्हितस्यपुनर्दर्शनंकथंस्यात्तत्राह ॥
भवतीनामिति ॥ ७२ ॥ अलीकंकपटम् ॥ आलयोहेसख्यः ॥ स्निग्धश्चासौमुग्धःसुंदरश्चेतितथातस्मिन्सखीजनेकावक्तिनकापीत्यर्थः ॥ किंतन्निष्कपटंवाक्यंतदाह ॥ तद्दर्शनेनेति ॥ ७३ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कुतइत्याकांक्षायामाह ॥ दशमीति ॥ दशम्यवस्थामरणावस्थेत्यर्थः ॥ सन्नह्येत्प्रवर्तेत ॥ दूनायाउपतापितायाः ॥ ताःसख्यः ॥ ७४ ॥ ७५ ॥ नोस्माभिः ॥ ७६ ॥ इतीति ॥ इत्येवंप्रकारांत
द्गिरंतासांवाचंश्रुत्वाहेवयस्यामेममतद्वाप्तौतस्यस्वप्नदृष्टस्यप्राणनाथस्यावाप्तिनिमित्तंयूयंकुंठिताइत्यर्धोक्तेनसाबालामुमूर्छमोहंप्राप्तवती ॥ हेतिपादपूरणेप्रसिद्धार्थेवा ॥ ७७ ॥ इत्यर्द्धोक्तिनेतयस्यार्थ
स्पष्टयाति ॥ कुंठितशक्तयइति ॥ यूयंकुंठितशक्तयइतियत्तयावक्तव्यंतुपुनःतद्यूयंकुंठीतिभाषितमित्यर्थः ॥ ७८ ॥ व्यधुश्चक्रुः ॥ ७९ ॥ उपचारतःप्रयोगतः ॥ ८० ॥ उक्षणात्सेचनात् ॥ ८१ ॥
प्रसंगात्स्नपनोदकमाहात्म्यमाह श्रद्धेत्यादिचतुर्भिः ॥ उपसर्गेपीडायांव्याधावितियावत् ॥ स्नपनोदकमेवपादद्वारेणनिःसृतत्वाच्चरणोदकमित्युच्यते ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥

दशम्यवस्थासन्नह्येद्बाधितुंमाधुनाभृशम् ॥ इतितस्यागिरःश्रुत्वादूनायानितरांचताः ॥ ७४ ॥ प्रवेपमानहृदयाःप्रोचुर्वीक्ष्यपरस्परम् ॥ ७५ ॥
॥ सख्यऊचुः ॥ ॥ यस्यग्रामोननोनामनान्वयोनापिबुध्यते ॥ सकथंप्राप्यतेभद्रेकउपायोविधीयताम् ॥ ७६ ॥ इतिरत्नावलीश्रुत्वाससंदेहांचत
द्गिरम् ॥ वयस्यास्तदवाप्तौमेयूयंकुंठिमुमूर्छह ॥ ७७ ॥ इत्यर्धोक्तेनसाबालायूयंकुंठितशक्तयः ॥ यद्वक्तव्यंत्वितितयायूयंकुंठीतिभाषितम् ॥ ७८ ॥
ततस्तास्त्वरिताःसख्यःपरितापोपहारकान् ॥ बहुशःशीतलोपायान्व्यधुर्मोहप्रशांतये ॥ ७९ ॥ व्यपैतिनयदामूर्छातत्तच्छीतोपचारतः ॥ तस्यास्तदै
कयानीतंरत्नेशस्नपनोदकम् ॥ ८० ॥ तदुक्षणात्क्षणादेवतन्मूर्छाविररामह ॥ सुतोत्थितेवसावादीन्मुहुःशिवशिवेतिच ॥ ८१ ॥ ॥ स्कंदउवाच ॥
श्रद्धावतांस्वभक्तानामुपसर्गेमहत्यपि ॥ नोपायांतरमस्त्येवविनेशचरणोदकम् ॥ ८२ ॥ येव्याधयोपिदुःसाध्याबहिरंतःशरीरगाः ॥ श्रद्धयेशोदकस्पर्शा
त्तेनश्यंत्येवनान्यथा ॥ ८३ ॥ सेवितंयेनसततंभगवच्चरणोदकम् ॥ तंबाह्याभ्यंतरशुचिंनोपसर्पतिदुर्गतिः ॥ ८४ ॥ आधिभौतिकतापंचतापंचाध्या
धिदैविकम् ॥ आध्यात्मिकंतथातापंहरेच्छ्रीचरणोदकम् ॥ ८५ ॥ व्यपेतसंज्वराचाथगंधर्वतनयामुने ॥ उचितज्ञेतिहोवाचताःसखीःस्निग्धधीरधीः
॥ ८६ ॥ ॥ रत्नावल्युवाच ॥ ॥ शशिलेखेनंगलेखेचित्रलेखेमदीहिते ॥ यूयंकुंठितसामर्थ्याःकुतोवस्ताःकलाःक्वा ॥८७॥ मत्प्रियप्राप्तयेसम्यग्गुपायो
ऽस्तिमयेक्षितः ॥ रत्नेश्वरानुग्रहतोऽनुतिष्ठतहितंहिताः ॥ ८८ ॥ शशिलेखेभिलषितप्राप्त्यैलेखांस्त्वमालिख ॥ संलिखानंगलेखेत्वंयूनःसर्वावनी
चरान् ॥ ८९ ॥ चित्रगेचित्रलेखेत्वंपातालतलशायिनः ॥ किंचिदाविर्भवच्चारुतारुण्यालंकृतीँल्लिख ॥ ९० ॥

उचितंजानातीतिउचितज्ञा॥इतिवक्ष्यमाणंवचनम्॥ हेतिप्रसिद्धौपादपूरणेवा॥स्निग्धधीरधीःस्निग्धाकोमलाधीराअर्थोपायविवेचनेसमर्थाधीर्बुद्धिर्यासांताः॥अत्रेयङ्भावआर्षः॥कर्तृविशेषणेतुसुसंगतमेव
॥ ८६ ॥ कुतःकस्मात् ॥ वोयुष्माकंताः ॥ कलावाकेत्यन्वयः ॥ ८७ ॥ भवथयूयंयथातथाकिंतुरत्नेशानुग्रहान्ममकांतलब्धयेमयासम्यग्गुपायोदृष्टस्तंसध्रीचीनमुपायमनुतिष्ठतकुरुत ॥ हियस्मा
यूयंममहिताःहितकारिण्यइति ॥ ८८ ॥ लेखान्देवान् ॥ यदाहामरः ॥ आदितेयादिविषदोलेखाआदितिनंदनाइति ॥ यूनस्तरुणान् ॥८९॥ पातालतलशायिनोनागादीन् ॥ कथंभूतान् ॥ आविर्भ

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ९१ ॥ निर्यत्कौमारलक्ष्मीकान्निर्निःशेषेणयं वदुच्चरद्रम्यंतारुण्यमेवअलंकृतिरलंकरणंयेषांतेतथातान् ॥ ९० ॥ प्रवर्ण्यप्रशस्य ॥ यौवनशेवधीन्यौवनमेवशेवधिर्येषांतान्तारुण्यैकधनानित्यर्थः ॥ तींगच्छंतीकौमारलक्ष्मीःकौमारसंपद्येषांतान् ॥ शेषाद्विभाषेतिकप्प्रत्ययः ॥ पुंवत्त्वश्रीसमावृतान्पुंवत्त्वश्रीःपुंस्त्वशोभातयासमावृतानलंकृतान् ॥ ९२ ॥ निकायान्समूहान् ॥ व्यलोकतापश्यत् ॥ ॥ ९३ ॥ प्रेमनिर्भरास्नेहपरिपूर्णा ॥ ९४ ॥ कर्णाभ्यर्णविलोचनाकर्णयोरभ्यर्णंनिकटंव्याप्यविशिष्टेलोचनेयस्याःसातथा ॥ बलिसद्मयुवसुसुतलस्थतरुणेषु ॥ ९५ ॥ मान्मथैःकामसंबंधिभिः ॥

अथाकर्ण्येतिताःसख्यस्तच्चातुर्यंप्रवर्ण्यच ॥ लिलिखुःक्रमशःसख्योयूनोयौवनशेवधीन् ॥ ९१ ॥ निर्यत्कौमारलक्ष्मीकान्पुंवत्त्वश्रीसमावृतान् ॥ प्रातःसंध्येवगंधर्वीनृपाद्यांस्तानवैक्षत ॥ ९२ ॥ सर्वान्सुरनिकायान्साव्यलोकतशुभेक्षणा ॥ नचांचल्यंजहावक्ष्णोस्तेषुस्वर्लोकवासिषु ॥ ९३ ॥ ततोमध्यमलोकस्थान्मुनिराजकुमारकान् ॥ विलोक्यापिनसाप्रीतिंकाप्यापप्रेमनिर्भरा ॥ ९४ ॥ अथरत्नावलीबालाकर्णाभ्यर्णविलोचना ॥ दृशौ व्यापारयामासबलिसद्मयुवस्वपि ॥ ९५ ॥ दितिजान्दनुजान्वीक्ष्यसागंधर्वीकुमारकान् ॥ रतिंबबंधनक्वापितापितामान्मथैःशरैः ॥ ९६ ॥ सुधाकरकरस्पृष्टाप्यतिदूनांगयष्टिका ॥ पश्यंतीनागयूनःसाकिंचिदुच्छ्वसिताऽभवत् ॥ ९७ ॥ भोगिनस्तान्विलोक्यापिचित्रंचित्रगतानथ ॥ मनाक्संभुक्तभोगेवक्षणमासीत्कुमारिका ॥ ९८ ॥ यूनःप्रत्येकमद्राक्षीदशेषाञ्छेषवंशजान् ॥ तक्षकान्वयगांस्तद्वदथवासुकिगोत्रजान् ॥ ९९ ॥ पुलीकानंतकर्कोटभद्रसंतानगानपि ॥ दृष्ट्वानागकुमारांस्ताञ्छंखचूडमथैक्षत ॥ १०० ॥ शंखचूडेक्षणादेवपरांलज्जांबभारसा ॥ उद्भिन्नपुलकाप्यासीदंगप्रत्यंगसंधिषु ॥ १ ॥ तत्रापाभरतोऽज्ञायितत्कौमारहरोवरः ॥ तयावैदग्ध्यवरयाक्षणतश्चित्रलेखया ॥ २ ॥ अथचित्रपटीचित्रलेखाचित्रपटांचलम् ॥ परिक्षिप्यावृणोत्तूर्णंपरिहासैकपेशला ॥ ३ ॥ रत्नावलीचित्रलेखांह्रियामौनावलंबिनी ॥ दृशाकुटिलयाद्राक्षीत्प्रस्फुरद्दशनांबरा ॥ ४ ॥ कटाक्षितानंगलेखातयाथशशिलेखया ॥ चित्रलेखापरिक्षिप्तपटांचलमपाकरोत् ॥ ५ ॥ वसुभूतिसुतासाथकन्यारत्नावलीशुभा ॥ शंखचूडान्ववायेतंरत्नचूडमवैक्षत ॥ ६ ॥

॥ ९६ ॥ अतिदूनांगयष्टिकाऽतिव्यथितशरीरयष्टिका ॥ उच्छ्वसिताउल्लसिता ॥९७ ॥ भोगिनोनागान् ॥ ९८ ॥ शेषोऽनंतः ॥ ९९ ॥ पुलीकानंतेति ॥ अनंतनामाकश्चिदपरः ॥ संतानोवंशः ॥ ॥ १०० ॥ बभारधृतवती ॥ अंगप्रत्यंगसंधिषुअंगेषुसर्वांगसंधिषुचेत्यर्थः ॥ १ ॥ वरोभर्ता ॥ २ ॥ चित्रपटांचलंचित्रवस्त्राग्रभागम् ॥ पेशलाकुशला ॥ ३ ॥ ह्रियालज्जया ॥ कुटिलयावक्रया ॥ प्रस्फुरच्चंचद्दशनेनदंतेनांबरंवस्त्रंयस्याःसातथा ॥ प्रस्फुरद्दशनांबरमोष्ठोयस्याःसेतिवा ॥ ४ ॥ कटाक्षिताकटाक्षेणप्रेरिता ॥ अपाकरोद्दूरीचकार ॥ ५ ॥ रत्नारत्नावली ॥ भामासत्यभामाभीमो



१ किमभिप्रेतमनयोपमयेति चिन्त्यम् ।

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भीमसेनइतिवत् ॥ आवनीशुभाआसमंततःअवनौपृथिव्यांशोभतेराजतइतितथा॥अवनीशुभेत्येवमेववा॥रत्नावलीतिवापाठः ॥६॥ तदीक्षणक्षणात्तस्यरत्नचूडस्यईक्षणेनजातोयःक्षणोऽवसरउत्सवो वा ॥ क्षणउद्धवउत्सवइत्यमरः ॥ तस्मादिति॥स्वेदोदकणिकांचिताघर्मांबुकणव्याप्ता ॥७॥ धृतंरोमांचरूपंकंचुकंययासातथा॥तस्तंभास्थितवती॥८॥औत्सुक्यमौत्कंठ्यंमाव्रजमागच्छ ॥ सौत्सुक्यमितिपाठे सात्वमित्यर्थः ॥ कुतइत्यतआह ॥ सिद्धइति ॥ ९ ॥ सिद्धिरेवकुतस्तत्राह ॥ एतस्येति ॥ एतावताकथंसुलभत्वमित्याशंकायामाह ॥ माविषीदेति ॥ एषसुलभोयतोरत्नेश्वरेणार्पितः ॥ ११० ॥ सदृग्वरावाप्त्यासदृशभर्तृप्राप्त्या ॥११॥१२॥ हरिःसिंहः ॥ विकटदंष्ट्रास्यइत्युभयोर्विशेषणम् ॥१३॥ वेपथुभूमयःकंपस्थानानि ॥१४॥ तन्माविधेहिमाकुरु ॥ किंतदाह ॥ यदेतदिति ॥ हाविधेही

तदीक्षणक्षणादृष्टिरानंदाश्रुभिरावृता ॥ कपोलभित्तिरभवत्स्वेदोदकणिकांचिता ॥ ७ ॥ चकंपेगात्रलतिकाधृतरोमांचकंचुका ॥ चित्रन्यस्तेवतस्तंभक्षणंमुकुलितानना ॥ ८ ॥ ततःसाचित्रलेखातामेत्याश्वासयदातुराम् ॥ मौत्सुक्यंव्रजगंधर्वेसिद्धस्तेद्यमनोरथः ॥९॥ एतस्यावगतंसर्वंदेशनामान्वयादिकम् ॥ माविषीदालिसुलभस्त्वेषरत्नेश्वरार्पितः ॥११०॥ अहोसदृग्वरावाप्त्यारत्नेशेनासितोषिता ॥ उत्तिष्ठयामःसदनंरत्नेशःसर्वदोहिनः ॥ ११ ॥ अथदैववशाद्यांत्यस्तादृष्टागगनाध्वगाः ॥ सुबाहुनादानवेनपातालतलवासिना ॥ १२ ॥ गृहीत्वाताश्चतस्रोपिनिरगाद्दानवोगृहम् ॥ हरिर्विकटदंष्ट्रास्यःप्रांतरेहरिणीरिव ॥ १३ ॥ तास्तंविलोक्यगंधर्व्योदंष्ट्राविकटिताननम् ॥ रुधिरारुणनेत्रंचजातावेपथुभूमयः ॥ १४ ॥ हामातर्हापितस्त्राहिहाविधेमाविधेहितत् ॥ यदेतत्कर्तुमारब्धमनाथास्वतिनिष्ठुरम् ॥ १५ ॥ हादैवमंदभाग्याभिःकिमस्माभिरनुष्ठितम् ॥ सुकृतेतरवार्तापिनोचित्तेव्याहृताक्वचित् ॥ १६ ॥ शिशुक्रीडनकंहित्वाहित्वारत्नेश्वरार्चनम् ॥ पित्रोःस्वाधीनसच्चेष्टाइष्टंविघ्नोनकिंचन ॥१७॥ अधोभुवनगादीनाहीनानाथेनकोत्रनः ॥ त्रातित्राणार्थिनीर्बालाःशंभोरत्नेशसर्वग ॥ १८ ॥ इत्थंगंधर्वतनयाविलपंतीःकृपातुरम् ॥ शुश्रावनागराजोसौरत्नचूडोमहामनाः ॥ १९ ॥ कोसौमत्स्वामिनोनामरत्नेशस्यमहेशितुः ॥ लिंगराजस्यगृह्णातिकर्मबंधनभेदिनः ॥ १२० ॥ पुनरप्यार्तरावंसश्रुत्वाबालासुखेरितम् ॥ रत्नेशरक्षरक्षेतिगृहीताश्चोविनिर्ययौ ॥ २१ ॥ तंवसारसपानेनमहामांसनिषेवणात् ॥ अत्यंतोन्मत्तदुश्चेष्टंरत्नचूडोनिरैक्षत ॥ २२ ॥ अध्याक्षिपच्चरेदुष्टशिष्टकन्यापहारक ॥ मद्दृष्टिगोचरंयातःक्वयास्यस्यद्यरेऽधम ॥ २३ ॥ ममबाणहतप्राणःप्रयाणंकुरुदुर्मते ॥ आर्तत्राणोद्यतमतेर्वैवस्वतपुरंप्रति ॥ २४ ॥ रत्नेश्वरस्ययैर्नामप्रलयापद्यपिस्फुटम् ॥ गृहीतंनभवादृग्भ्यस्तेषुभीतिर्भयात्मसु ॥ २५ ॥

तिपाठेऽकारप्रश्लेषेणव्याख्येयम् ॥१५॥ सुकृतेतरवार्तापापवार्ता ॥१६॥ स्वाधीनाःसच्चेष्टाःस्वायत्तोत्तमक्रियाश्चहित्वाकिंचनान्यदिष्टंनविघ्नइत्यर्थः ॥ दुष्टमितिक्वचित्पाठः ॥१७॥१८॥१९॥१२०॥ रत्नेश्वररक्षरक्षेत्यार्तरावंश्रुत्वेत्यन्वयः ॥ २१ ॥ वसाहृन्मेदःसएवरसस्तस्यपानेन ॥ वसासवपानेनेतिपाठेवसैवासवोमद्यंवसाचासवश्चेतिवातस्यपानेनेतिव्याख्यातव्यम् ॥ निरैक्षतदृष्टवान् ॥ २२ ॥ अध्याक्षिपदाक्षिप्तवान् ॥ चःसमुच्चये ॥ २३ ॥ २४ ॥ रत्नेश्वरस्येति ॥ रत्नेश्वरस्यनामयैर्गृहीतंतेषुभवादृशेभ्यःस्फुटंनिश्चितंप्रलयापद्यपिभीतिर्नेत्यन्वयः ॥ भयात्मसुभयंभीतिरात्मस्वंतःकरणेषु

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भययुक्ताआत्मानोवायेपतितथातेषु ॥ २५ ॥ २६ ॥ तन्मुखेत्यत्रतच्छब्दोरत्नचूडविषयः ॥ व्याघ्रघ्राताव्याघ्रेणगृहीताः ॥ २७ ॥ कोदंडंधनुः ॥ २८ ॥ सोपीत्यत्रषष्ठाक्षरस्यलघुत्वंछांदसम् ॥ परिघंमुसलम् ॥ २९ ॥ रत्नचूडंप्रतिशंकमानंसूतंप्रत्याह ॥ हृदीति ॥ भ्रमेणक्रीडार्थंज्वलत्तृणादिनिर्मितोदंडोऽलातदंडः ॥ १३० ॥ अंतर्मध्ये ॥ ३१ ॥ कालानलसमंप्रलयानलसदृशम् ॥ प्रगवेष्यसम्यगन्विष्य ॥ ३२ ॥ अस्यसुबाहोः ॥ विनिर्यात्यनिःसार्यवहिःकृत्वेतियावत् ॥ तूणमिषुधिम् ॥ दूरमितिवापाठः ॥ तच्छरीरंलक्ष्यंभित्त्वादूरमगादित्यर्थः ॥ तत्रोत्प्रेक्षामाह ॥ हृदिस्थमिति ॥ ३३ ॥ नागाशुगोरत्नचूडशरः ॥ ३४ ॥ अथ मोपार्जितवित्तानामनर्थकरत्वंकैमुत्यन्यायेनाह ॥ अन्यायेति ॥ यांत्येवतस्येत्यर्थः ॥ यदितिपाठेयत्सुखंतानितत्सुखसंबंधीनीतियत्त

रत्नेश्वरसहानामकृतत्राणास्तुयेनराः ॥ तेषांजन्मजराव्याधिकलिकालभयंकुतः ॥२६॥ इत्युक्ताताभयत्रस्तास्तन्मुखप्रहितेक्षणाः ॥ व्याघ्रघ्राताइवमृगीर्मैभैषिष्टेत्युवाचसः ॥ २७ ॥ इत्याश्वास्याथगंधर्वीःसर्वैभुजगराजजः ॥ आकर्णपूर्णमाकृष्यकोदंडंप्राहिणोच्छरम् ॥ २८ ॥ सोपिक्रुद्धोदनुजराट्पदास्पृष्टभुजंगवत् ॥ आविद्धयकालदंडाभंपरिघंव्यसृजन्महत् ॥२९॥ हृदिरत्नेश्वरंलिंगंयस्यसम्यग्विजृंभते ॥ अलातदंडवत्तस्मिन्कालदंडोपिजायते ॥ १३० ॥ अंतरेवसचिच्छेदपरिघंस्वमहेषुभिः ॥ दुर्वृत्तस्ययथेहायुर्विच्छिद्यतेतांतरैवहि ॥ ३१ ॥ ततोस्यबाणंचिक्षेपकालानलसमप्रभम् ॥ सबाणस्तस्यहृदयंप्रविश्यप्रगवेष्यच ॥ ३२ ॥ प्राणानस्यविनिर्यात्यस्वयंतूणमगात्पुनः ॥ हृदिस्थंतस्यदौरात्म्यंसर्वंविज्ञायतत्त्वतः ॥ ३३ ॥ दिगंगनापुरःख्यातुमिवनागाशुगोगतः ॥ ३४ ॥ अन्यायोपार्जितैर्द्रव्यैर्यःसुखंभोक्तुमिच्छति ॥ तानिद्रव्याणियांत्येवसप्राणानिकुतःसुखम् ॥ ३५ ॥ इतितंदानवंहत्वानागराजोमहाबली ॥ प्रत्युवाचाथताःकन्याःकायूयंकस्यचात्मजाः ॥ ३६ ॥ दुरात्मनाकुतोनेनसंगतादनुजन्मना ॥ क्ववारत्नेश्वरंलिंगंभवतीभिर्विलोकितम् ॥ ३७ ॥ यस्यनामाक्षरोच्चाराद्व्यपेतपरमापदः ॥ यूयमाशुतदाख्यातयेनजानामितत्त्वतः ॥३८॥ इतिश्रुत्वागिरस्तस्यनितरांप्रेमनिर्भराः॥ परस्परंमुखंवीक्ष्यकोसौस्याद्दृष्टपूर्ववत् ॥ ३९ ॥ अकारणसखाकोसौप्रांतरेसमुपस्थितः ॥ निजप्राणान्पणीकृत्ययेनत्राताःस्मबालिकाः ॥ १४० ॥ अस्यसंदर्शनादेवस्वभावचपलान्यपि ॥ मंथराणींद्रियाणिस्युःपरिपीयसुधामिव ॥ ४१ ॥ यातुमन्यत्रनोनेत्रेप्रोत्सहेतेयथातथा ॥ अन्यद्द्रष्टव्यंतरंप्रेक्ष्यरमणीयतरंत्वपि ॥ ४२ ॥ वचःपीयूषमाधुर्यंनितरांप्राप्यनःश्रुती ॥ शब्दांतरग्रहापेक्षांनकुर्वातेस्वजन्मनः ॥ ४३ ॥

च्छब्दार्थावुन्नेयाविति ॥ ३५ ॥ ३६ ॥ ३७ ॥ आख्यातकथयत ॥ ३८ ॥ इतिश्रुत्वागिरस्तस्येत्यादीनामितिब्रुवंत्यइत्यग्रिमेणान्वयः ॥ प्रेमनिर्भराःस्नेहगर्भाः ॥ दृष्टपूर्ववत्पूर्वंदृष्टइव ॥ ३९ ॥ प्रांतरेमध्यमार्गे ॥ पणीकृत्यग्लहंकृत्वा ॥ स्मेतिविस्मये ॥ १४० ॥ मंथराणिस्तब्धानि ॥ ४१ ॥ इंद्रियाणांस्तब्धतामेवाहुर्यातुमित्यादिना ॥ यथातथायाथातथ्येन ॥ नेत्रेचक्षुषी ॥ ४२ ॥ श्रुतीश्रवणेंद्रिये ॥ स्वजन्मनःआकाशस्य ॥ ४३ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

आप्लुतःप्राप्लुतः ॥ नोस्माकम् ॥ सन्मनएवमणिस्तस्यचोरंतस्करम् ॥ ४४ ॥ अनुल्बणमनुद्भटंसुकुमारांगमित्यर्थः ॥ ४५ ॥ अज्ञानेकारणमाह ॥ अतीवेति ॥ नाज्ञासिषुर्नज्ञातवत्यः ॥४६॥
॥ ४७ ॥ अवधेहिस्थिरीकुरु ॥ ४८ ॥ वयस्याःसख्यः ॥ ४९ ॥ १५० ॥ हरिष्यतीतिशब्दस्यभविष्यतीत्यनेनसम्बन्धः ॥ ५१ ॥ ५२ ॥ कलाकौशल्यतःविद्यानैपुण्यात् ॥ ५३ ॥ ५४ ॥

आप्लुतःपंगुतामेतौपादौनश्चंचलावपि ॥ अमुंयुवानमालोक्यचोरंनःसन्मनोमणेः ॥ ४४ ॥ इतिब्रुवंत्यस्ताबालाःपरस्परमनुल्बणम् ॥ दृष्ट्वापिचित्रमध्यस्थंविविदुस्तत्रबालिकाः ॥ ४५ ॥ अतीवभीषणाकारदनुजस्यातिसाध्वसात् ॥ अंधीभूतेक्षणास्तंनाज्ञासिषुर्हरिणीक्षणाः ॥ ४६ ॥ ऊचुश्चतंयुवानंतानिजजीवितरक्षिणम् ॥ यदंगभवतापृष्टंस्नेहनिर्भरचेतसा ॥ ४७ ॥ तदाचक्षामहेसर्वमवधेहिक्षणंमनः ॥ इयंगंधर्वराजस्यवसुभूतेस्तनूद्भवा ॥ ॥ ४८ ॥ कन्यारत्नावलीनामगुणरत्नमहाखनिः ॥ वयंवयस्याएतस्याश्छायेवानुगताःसदा ॥ ४९ ॥ आरभ्यबाल्यमप्येषालिंगंरत्नेश्वराभिधम् ॥ यातिपित्राप्यनुज्ञाताकाश्यामर्चयितुंसदा ॥ १५० ॥ वरोपिदत्तस्तेनास्यैप्रसन्नेननाथशंभुना ॥ हरिष्यतीतियःस्वप्नेकौमारंतेकुमारिके ॥ ५१ ॥ तवनामसमानाख्यःसतेभर्ताभविष्यति ॥ युवानंस्वप्नभोक्तारंप्राप्याप्येषासुदुःखिता ॥५२॥ पुनस्तद्विरहोत्थेनवह्निनातीवतापिता॥कलाकौशल्यतोऽस्माभिःसोपिचित्रेप्रदर्शितः ॥ ५३ ॥ यस्यनग्रामनामापिनान्वयोप्यवबुध्यते ॥ तंदृष्ट्वाचित्रलिखितमप्येषाजीवितापुनः ॥ ५४ ॥ ततोरत्नेश्वरंनत्वास्वगृहायोत्सुकाभवत् ॥ यांतीस्ततोऽनयासार्धंप्रांतरेगगनाध्वनि ॥ ५५ ॥ अतर्कितागमश्चास्मान्धृत्वापातालमाविशत् ॥ अनंतरंभवानेवतंवेत्तिदनुजाधमम् ॥ ॥५६॥ अंगइत्येववृत्तांतोनिजोऽस्माभिरुदीरितः ॥ प्रसादंकुरुचास्माकंपुरःकोसिकृपानिधे ॥५७॥ यदाप्रभृतिचास्माभिःसदृष्टोदुष्टदानवः ॥ तदाप्रभृतिनोनेत्रेविद्युतेवहतप्रभे ॥ ५८ ॥ कांदिशीकाभयत्रातर्नविद्मःकिंचिदेवहि ॥ क्ववयंकावयंकस्त्वंकिंजातंकिंभविष्यति ॥ ५९ ॥ निशम्येतिसपुण्यात्मानागराजकुमारकः ॥ आश्वास्यताभयत्रस्ताःप्रोवाचेदंचपुण्यधीः ॥ १६० ॥ मयासहसमायातरत्नेशंदर्शयामिवः ॥ इत्याहूयसतानिन्येक्रीडावापींसुखोदकाम् ॥६१॥ विचित्रमणिसोपानांहंसकोककृतारवाम्॥कवीनांवासितव्याजात्स्वागतंकुर्वतीमिव ॥६२॥ तत्रतेनाभ्यनुज्ञाताःक्रीडावाप्यांनिमज्ज्यताः ॥ सचैलपुष्पाभरणाःप्रोन्ममज्जुस्ततःपुनः ॥ ६३ ॥ बहिर्निर्गत्यगंधर्व्यःपश्यंत्यःस्थगिताइव ॥ रत्नेशालयमालोक्यकालराजसमीपतः ॥ ६४॥ परस्परंततःप्रोचुर्गंधर्व्योविस्मिताइव ॥ स्वप्नोयंकिंनुवासत्यंखेलोरत्नेश्वरस्यवा ॥ ६५ ॥

॥ ५५ ॥ ५६ ॥ पुरोग्रतः ॥ ५७ ॥ ५८ ॥ कांदिशीकाभयद्रुताः ॥ किंचिदित्यस्यविवरणंकेति ॥ ५९ ॥ १६० ॥ ६१ ॥ विचित्रमणिसोपानांनानामणिसंबद्धघट्टामित्यर्थः ॥ कवीनांवासितव्याजाज्जलपक्षिणांशब्दच्छलात् ॥ ६२ ॥ निमज्ज्यजलाशयंगत्वाप्रोन्ममज्जुःशिरोभिःसम्यङ्मज्जनंचक्रुः ॥ ६३ ॥ स्थगिताइवजृंभिताइव ॥ ६४ ॥ खेलःक्रीडा ॥ ६५ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

आशापुरीनामनिर्वक्ति ॥

॥ ६६ ॥ ६७ ॥ ६८ ॥ कालरूपःसर्पःकालसर्पस्तस्मात्कालश्वसर्पश्वताभ्यांवाजातंकालसर्पजम् ॥ ६९ ॥ १७० ॥ आशापुरीनाम्ना ॥ ७१ ॥ सिद्धचष्टकंभवेदित्युक्तंतात्किंमूर्तिमदमूर्तिमद्वेतिपृच्छायामाह ॥ मूर्त्योमू याद्यापीति ॥७२॥सपर्यातःपूजातः ॥ सिद्धचष्टकमणिमादिकंपद्मादिकंवा ॥ विरजोदकमित्यत्रसंधिरार्षः ॥ ७३ ॥ ७८ ॥ ७९ ॥ प्रतिदर्शमत्यमावा तिमत्यइत्यर्थः ॥ ७४ ॥ विनायकाविघ्नाः ॥ ७५ ॥ अतःअसौअत्रेतिवापाठः ॥ चःसमुच्चये ॥ ७६ ॥ ७७ ॥ मध्यमविष्टपेभूर्लोके ॥

वयमेवहिवाभ्रांतागंधर्व्योनवयंकिमु ॥ किमेतन्नैवजानीमऐंद्रजालिकखेलवत् ॥ ६६ ॥ एषोत्तरवहागंगास्फुटमेवभवेदिह ॥ शंखचूडस्यवाप्येषाशं खचूडालयस्त्वसौ ॥ ६७ ॥ एतत्पंचनदंतीर्थमेषवागीश्वरालयः ॥ यस्यसंदर्शनादेववाग्विभूतिर्विजृंभते ॥ ६८ ॥ शंखचूडेश्वरश्चैषशंखचूडप्रतिष्ठितः ॥ यस्यसंदर्शनात्पुंसांनभयंकालसर्पजम् ॥ ६९ ॥ एषामंदाकिनीनामदीर्घिकापुण्यतोयभूः ॥ यस्यांकृतोदकामर्त्यामर्त्यलोकेविशंतिन ॥ १७० ॥ मंदाकिन्याः असावाशापुरीदेवीयास्तुतात्रिपुरारिणा ॥ त्रिपुरंजेतुकामेनमंदाकिन्यास्तटेशुभे ॥ ७१ ॥ याद्यापिपूजितामर्त्यैराशांपूरयतेर्थिनाम् ॥ मंदाकिन्याः प्रतीच्यांतुएषसिद्धचष्टकेश्वरः ॥ ७२ ॥ भवेद्यस्यसपर्यातोगृहेसिद्धचष्टकंस्फुटम् ॥ कुंडंसिद्धचष्टकाख्यंचतत्रैवविरजोदकम् ॥ ७३ ॥ यत्रस्नात्वा कृतश्राद्धोविरजस्कोदिवंव्रजेत् ॥ मूर्त्यस्ताःसिद्धयश्चाष्टौयाःकाश्यांसर्वसिद्धिदाः ॥ ७४ ॥ सर्वसिद्धिप्रदश्चासौमहाराजविनायकः ॥ विनायकाःप्रणश्यं तियस्मैप्रणमतांनृणाम् ॥ ७५ ॥ असौसिद्धेश्वरस्योच्चैःप्रासादःकांचनोज्ज्वलः ॥ रत्नध्वजपताकाश्चसिद्धिःस्याद्यद्विलोकनात् ॥ ७६ ॥ क्षेत्रस्यमध्यमे भागेमध्यमेश्वरएषवै ॥ मध्यायोलोकयोर्मध्येनवसेद्यस्यवीक्षणात् ॥ ७७ ॥ मध्यमेशंसमभ्यर्च्यनरोमध्यमविष्टपे ॥ आसमुद्रक्षितींद्रःस्यात्ततोमोक्षं चविंदति ॥ ७८ ॥ ऐरावतेश्वरंलिंगंतत्प्राच्यामिष्टसिद्धिकृत् ॥ दृश्यतेयत्पताकायांरम्यऐरावतोगजः ॥७९ ॥ वृद्धकालेश्वरस्यैषप्रासादोरत्ननिर्मितः ॥ प्रतिदर्शंवसेद्यत्ररात्रौचंद्रःसतारकः ॥ १८० ॥ यस्यसंदर्शनान्नृणांनकालःप्रभवेद्भवे ॥ नकलिःप्रभवेत्सत्यंनचकल्मषराशयः ॥ ८१ ॥ इतियावत्कथां चक्रुःसंभ्रांताइवबालिकाः॥तावद्वसुविभूतिःसगंधर्वस्त्वरयाययौ ॥८२॥ नारदाच्छ्रुतवृत्तांतःसुबाहुदनुजन्मनः॥ रत्नावलीसुताप्रीतासखीकायथाहृता ॥ ८३ ॥ रत्नेश्वरात्समायांतीशून्येगगनवर्त्मनि॥ यथानयच्चपातालंयथायुद्धमभूत्पुनः ॥ ८४ ॥ यथारत्नेशभक्तेनरत्नचूडेनघातितः ॥ससुबाहुर्दनुज नुर्महेष्वासेनचेषुणा ॥ ८५ ॥ यथाचपृष्टवृत्तांतोवापीमार्गेणचानयत् ॥ शंखचूडस्यवापींतांपातालेषुप्रवर्तिनीम् ॥ ८६ ॥ यथाचप्राप्यनिर्याताःकाशीं दृष्ट्वापिबालिकाः ॥ भृशंसंभ्रांतिमापन्नाःपश्यंत्योपिसमुत्सुकाः ॥ ८७ ॥

स्यायाम् ॥ १८० ॥ भवेसंसारे ॥ ८१ ॥ ८२ ॥ सुबाहुदनुजन्मनःदनोर्दक्षदुहितुःकश्यपपत्न्याजन्मयस्यसदनुजन्मा सुबाहुश्चासौदनुजन्माचोतितथातस्य ॥ वृत्तांतमेवसंक्षेपतोदर्शयाति ॥ प्रीतारत्नेशवरदानेनप्रीतास्निग्धेतिवा ॥ ८३ ॥ ८४ ॥ दनुजनुर्दनुजन्मा ॥ महदिष्वासंधनुर्यस्यसतथातेन ॥ ८५ ॥ ८६ ॥ ८७ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांसप्ततितमोऽध्यायः ॥ ७० ॥
॥ ९० ॥ अमूरिमाः ॥ नैःश्रेयसींकैवल्याख्याम् ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥
॥ ॥ छ ॥ ॥ अथैकसप्ततितमेऽध्यायेऽत्यन्तमनोरमे ॥ दुर्गनाम्नोऽसुरेंद्रस्यवर्ण्यतेतिपराक्रमः ॥ १ ॥ पूर्वाध्यायांतेदुर्गादेवीव्यवस्थितेत्युक्तंतत्रपृच्छाति ॥ कथंदुर्गेतीति ॥ १ ॥ २ ॥ यश्चे त्यत्रयतइतिपाठेप्रथमांतात्तसिल ॥ ३ ॥ स्वसात्कृताआत्माधीनाःकृताः ॥ स्वभुजसारतःस्वीयहस्तवलेन ॥ ४ ॥ ५ ॥ स्वयमीशानेत्यत्रतथानिर्ऋतीतिकचित् ॥ तपांस्यतीत्यत्रतपांस्यपीतिक

एतास्तिस्रःप्रयत्नेनपूज्याःक्षेत्रनिवासिभिः ॥ धनधान्यप्रदाश्चैताःपुत्रपौत्रप्रदाइमाः ॥ ९० ॥ उपसर्गानमूर्घ्नंतिदद्युर्नैःश्रेयसींश्रियम् ॥ स्मृतादृष्टानताः स्पृष्टाःपूजिताःश्रद्धयानरैः ॥ ९१ ॥ महारुंडाप्रतीच्यांचदेवीस्वप्नेश्वरीशुभा ॥ भविष्यंकथयेत्स्वप्नेभक्तस्याग्रेशुभाशुभम् ॥ ९२ ॥ तत्रस्वप्नेश्वरंलिंगं देवींस्वप्नेश्वरींतथा ॥ स्नात्वासिसंगमेपुण्येयस्मिन्कस्मिंस्तिथावपि ॥ ९३ ॥ उपोषणपरोधीमान्नारीवापुरुषोपिवा ॥ संपूज्यस्थंडिलशयःस्वप्नेभावि विलोकयेत् ॥९४॥ अद्यापिप्रत्ययस्तत्रकार्यएषविजानता ॥ भूतंभाविभवत्सर्वंवदेत्स्वप्नेश्वरीनिशि ॥९५॥ अष्टम्यांचचतुर्दश्यांनवम्यांनिशिवादिवा॥ प्रयततःसमर्च्यासाकाश्यांज्ञानार्थिभिर्नरैः ॥ ९६ ॥ स्वप्नेश्वर्याश्चवारुण्यांदुर्गादेवीव्यवस्थिता ॥ क्षेत्रस्यदक्षिणंभागंसासदैवाभिरक्षति ॥ ९७ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडउत्तरार्धेदेवताधिष्ठानंनामसप्ततितमोऽध्यायः ॥ ७० ॥ ॥ अगस्त्यउवाच ॥ ॥ कथंदुर्गेतिवैनामदेव्याजातसुमासुत ॥ कथंचकाश्यांसासेव्यासमाचक्ष्वेतिमामिह ॥ १ ॥ ॥ स्कंदउवाच ॥ ॥ कथयामिमहाबुद्धेयथाकलशसंभव ॥ दुर्गनामाभवद्देव्यायथासेव्याचसाधकैः ॥ २ ॥ दुर्गोनाममहादैत्योरुरुदैत्यांगजोभवत् ॥ यश्चतस्वातपस्तीव्रंपुंभ्योजेयत्वमाप्तवान् ॥ ३ ॥ ततस्तेना खिलालोकाभूर्भुवःस्वर्मुखाअपि ॥ स्वसात्कृताविनिर्जित्यरणेस्वभुजसारतः ॥ ४ ॥ स्वयमिंद्रःस्वयंवायुःस्वयंचंद्रःस्वयंयमः ॥ स्वयमग्निःस्वयंपाशी धनदोभूत्स्वयंबली ॥ ५ ॥ स्वयमीशानरुद्रार्कवसूनांपदमाददे ॥ तत्साध्वसाद्विमुक्तानितपांस्यतितपस्विभिः ॥ ६ ॥ नवेदाध्ययनंचक्रुर्ब्राह्मणास्तद्भया र्दिताः ॥ यज्ञवाटाविनिर्ध्वस्तास्तद्भटैरतिदुःसहैः ॥ ७ ॥ विध्वस्ताबहुशःसाध्व्यस्तैरमार्गकृतास्पदैः ॥ प्रसभंचपरस्वानिअपहृत्यदुरासदाः ॥ ८ ॥ अभोक्षिषुर्दुराचाराःक्रूरकर्मपरिग्रहाः ॥ नद्योविमार्गगाआसञ्ज्वलंतिनतथाग्नयः॥९॥ ज्योतींषिनप्रदीप्यंतितद्भयाकुलितान्यहो ॥ दिग्वधूवसनान्यास न्विच्छायानिसमंततः ॥ १० ॥ धर्मक्रियाविलुताश्चप्रवृत्ताःसुकृतेतराः ॥ तएवजलदीभूयववृषुर्निजलीलया ॥ ११ ॥

चित् ॥ ६ ॥ यज्ञवाटायज्ञस्थानानि ॥ ७ ॥ अमार्गकृतास्पदैःपाषंडमार्गकृताश्रयैः ॥ अमार्गकृतादैरीरितिकचित् ॥ प्रसभंबलात्कारेण ॥ दुरासदादुर्गमदाः ॥८॥ अभोक्षिषुर्बुभुजुः ॥ अरक्षिषुरि तिवापाठः ॥ क्रूरकर्माणःपरिग्रहाभृत्याद्याःक्रूरकर्मणांवापरिग्रहोयेषांतेतथा ॥ ९ ॥ वसनानिवस्त्राणि ॥ वदनानीतिकचित् ॥ विच्छायानिविगतकांतीनि ॥ १० ॥ सुकृतेतराअधमाः ॥ ११ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अनुप्ताऽवापितापि ॥ अवकेशिनोवंध्याअफलाअपि ॥ यदाहामरः ॥ वंध्योऽफलोवकेशीचेति ॥ १२ ॥ १३ ॥ विपज्जुषोविपत्सेविनः ॥ १४ ॥ ननुकुलीनत्वात्सदाचारत्वाच्चमहांतस्तावद्देवाअतः किमितितान्गृहागतान्भयपीडिताअपिसूनृतयापिवाचानपूजितवंतस्तत्राह ॥ नकौलीन्यमिति ॥ किंतर्हिमहत्त्वायकल्पतेतदाह ॥ एकमिति ॥ पदंस्थानंस्वीयमैश्वर्यमित्यर्थः ॥ श्रेयःश्रेयोहेतुर्महत्त्वकारणमित्यर्थः ॥ लाघवंलघुत्त्वममहत्त्वकारणमित्यर्थः ॥ १५ ॥ तस्माद्विपद्यपिआपत्कालेपियेदैन्यप्रेरिताधनैर्मलिनचित्तानामंगणंप्रांगणंकंचित्कदाचिदपियेनालभंतेनप्राप्नुवंतितेधन्याइति ॥ १६ ॥ तर्हिमरणमेवप्राप्तंतत्राह ॥ पंचत्वमेवेति ॥ १७ ॥ किंचतएवेति ॥ १८ ॥ किंचसंपद्विपदुद्गमयोःकादाचित्कत्वात्तदुभयंलब्ध्वास्थिरतांनत्यजेदित्याह ॥ कदाचिदिति ॥ १९ ॥ तत्रदृष्टान्तमाह ॥

सस्यानितद्भयात्सूतेत्वनुप्तापिवसुंधरा ॥ सदैवफलिनोजातास्तरवोप्यवकेशिनः ॥१२॥ वंदीकृताःसुरर्षीणांपत्न्यस्तेनातिदर्पिणा ॥ दिवौकसःकृतास्तेनसमस्ताःकाननौकसः ॥ १३ ॥ मर्त्याअमर्त्यान्स्वगृहंप्रातानपिभयार्दिताः ॥ अपिसंभाषमात्रेणनार्चयंतिविपज्जुषः ॥ १४ ॥ ॥ स्कंदउवाच ॥ नकौलीन्यंनसद्वृत्तंमहत्त्वायप्रकल्पते ॥ एकमेवपदंश्रेयःपदभ्रंशोहिलाघवम् ॥ १५ ॥ विपद्यपिहितेधन्यानयेदैन्यप्रणोदिताः ॥ धनैर्मलिनचित्तानामालभंतेंगणंक्वचित् ॥ १६ ॥ पंचत्वमेवहिवरंलोकेलाघववर्जितम् ॥ नामरत्वमपिश्रेयोलाघवेनसमन्वितम् ॥ १७ ॥ तएवलोकेजीवंतिपुण्यभाजस्तएववै ॥ विपद्यपिनगांभीर्यंयच्चेतोब्धिःपरित्यजेत् ॥ १८ ॥ कदाचित्संपदुदयःकदाचिद्विपदुद्गमः ॥ दैवाद्द्वयमपिप्राप्यधीरोधैर्यंनहापयेत् ॥ १९ ॥ उदयानुदयौप्राज्ञैर्द्रष्टव्यौपुष्पवंतयोः ॥ सदैकरूपताऽत्याज्याहर्षाहर्षौततोऽध्रुवौ ॥ २० ॥ यस्त्वापदंसमासाद्यदैन्यग्रस्तोविपद्यते ॥ तस्यलोकद्वयंनष्टंतस्माद्दैन्यंविवर्जयेत् ॥ २१ ॥ आपद्यपिहियेधीराइहलोकेपरत्रच ॥ नतान्पुनःस्पृशेदापत्तद्धैर्येणावधीरिता ॥ २२ ॥ भ्रष्टराज्याश्चविबुधामहेशंशरणंगताः ॥ सर्वज्ञेनततोदेवीप्रेरिताऽसुरमर्दने ॥२३॥ माहेश्वरींसमासाद्यभवान्याज्ञांप्रहृष्टवत् ॥ अमर्त्यायाऽभयंदत्त्वासमरायोपचक्रमे ॥२४॥ कालरात्रींसमाहूयकांत्यात्रैलोक्यसुंदरीम् ॥ प्रेषयामासरुद्राणीतमाह्वातुंसुरद्रुहम् ॥ २५ ॥ कालरात्रीसमासाद्यतंदैत्यंदुष्टचेष्टितम् ॥ उवाचदैत्याधिपतेत्यजत्रैलोक्यसंपदम् ॥ २६ ॥ त्रिलोकींलभतामिंद्रस्त्वंतुयाहिरसातलम् ॥ प्रवर्ततांक्रियाःसर्वावेदोक्तावेदवादिनाम् ॥ २७ ॥ अथचेद्बलवलेशोऽस्तितदायाहिसमाजये ॥ अथवाजीविताकांक्षीतदिंद्रंशरणंव्रज ॥ २८ ॥

उदयानुदयाविति ॥ पुष्पवंतयोश्चन्द्रसूर्ययोः ॥ अतस्तयोरिवएकरूपताऽत्याज्यानत्याज्या ॥ ततोहर्षाहर्षौअध्रुवौनिष्फलावित्यर्थः ॥ २० ॥ आपदिदैन्यान्मरणेदोषमाह ॥ यस्त्विति ॥ उपसंहरति ॥ तस्मादिति ॥ २१ ॥ किंच आपदीति ॥ तद्धैर्येणेत्यत्रतच्छब्दोधीरविषयः ॥ अवधीरितात्यक्तादूरीकृतेत्यर्थः ॥ २२ ॥ प्रासंगिकंपरिसमाप्यप्रकृतमनुवर्णयति ॥ भ्रष्टराज्याइति ॥ सर्वज्ञेनपुरुषेभ्योऽवध्योयमितिजानतेत्यर्थः ॥ २३ ॥ माहेश्वरीमाज्ञामित्यन्वयः ॥ अमर्त्यायदेवाय ॥ जातावेकवचनम् ॥ अमर्त्येभ्यइतिक्वचित्पाठः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ समाजयेसम्य

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ग्युद्धाय ॥ रणायवाइतिकचित् ॥ २८ ॥ रूपयेत्यत्रपूरयेतिकचित् ॥ तदुपेक्षयातस्यावचसउपेक्षया ॥ मृत्युस्तेतत्पदाब्जजेतिपाठेऽहंविशेषणम् ॥ मृत्युर्मृत्युहेतुरित्यर्थः ॥ तुइतिपाठेतेइत्य
र्थात् ॥ २९ ॥ जीवग्राहंजीवनग्रहणंयथाभवतितथाव्रजविश्वेश्वर्याःशरणापन्नोभवेत्यर्थः ॥ हितमित्यस्यविशेषणंवा ॥ ३० ॥ महाकाल्याःकालरात्र्याः ॥३१॥ गौरवैर्महत्त्वैः ॥ वल्लीलता ॥ ३२ ॥
गृहंगृहेग्राहिणीतिवा ॥ शुभोदयात्पुण्योत्कर्षात् ॥ शुभोदयेतिकचित् ॥ ३३ ॥ गौरवात् गौरवंगुरुत्वंतस्मादित्यर्थः ॥ यद्वा गौरवमत्तीतिगौरवात् ॥ प्रथमांतंयदित्यस्यविशेषणम् ॥ भाग्यस्यगौ
स्वाधीनत्वमित्यर्थः ॥ ३४ ॥ सतीअलंकृतिर्यस्यास्तया ॥ ३५ ॥ महामतेरुदारचित्तस्य ॥ ३६ ॥ ३७ ॥ इतिएवंदैत्येंद्रेब्रुवति सौविदल्लकाःकंचुकिनोऽतःपुररक्षकाइत्यर्थः ॥ यदाहामरः ॥ सौवि

इतिवक्तुंमहादेव्यामहामंगलरूपया ॥ त्वदंतिकेप्रेषिताहंमृत्युस्तेतदुपेक्षया ॥२९॥ अतोयदुचितंकर्तुंतद्विधेहिमहासुर ॥ परंहितंचेच्छृणुयाज्जीवग्राहंततो
व्रज ॥ ३० ॥ इत्याकर्ण्यवचोदेव्यामहाकाल्याःसदैत्यराट् ॥ प्रजज्वालतदाक्रोधाद्धूयतांगृह्यतामियम् ॥ ३१ ॥ त्रैलोक्यमोहिनीह्येषाप्राप्तामद्भाग्यगौ
रवैः ॥ त्रैलोक्यराज्यसंपत्तिवल्ल्याःफलमिदंमहत् ॥ ३२ ॥ एतदर्थंहिदेवर्षिर्नृपावंदीकृतामया ॥ अनायासेनमेप्राप्तागृहमेषाशुभोदयात् ॥ ३३ ॥
अवश्यंयस्ययोग्यंयत्तत्तस्येहोपतिष्ठते ॥ अरण्येवागृहेवापियतोभाग्यस्यगौरवात् ॥ ३४ ॥ अंतःपुरचराएतांनयंत्वंतःपुरंमहत् ॥ अनयासदलं
कृत्याममराष्ट्रमलंकृतम् ॥ ३५ ॥ अहोमहोदयश्चाद्यजातोमममहामतेः ॥ केवलंनममैकस्यसर्वदैत्यान्वयस्यच ॥ ३६ ॥ नृत्यंतुपितरश्चाद्यमोदंतांबां
धवाःसुखम् ॥ मृत्युःकालोंऽतकोदेवाःप्राप्नुवंत्वद्यमेभयम् ॥ ३७ ॥ इतियावत्समायातास्तांनेतुंसौविदल्लकाः ॥ तावत्तयाकालरात्र्याप्रत्युक्तोदैत्यपुंगवः ॥
॥ ३८ ॥ ॥ कालरात्र्युवाच ॥ ॥ दैत्यराजमहाप्राज्ञनैतद्युक्तंभवादृशाम् ॥ वयंदूत्यःपरवशाराजनीतिविदुत्तम ॥ ३९ ॥ अल्पोपिदूतसंबाधांनवि
दध्यात्कदाचन ॥ किंपुनर्येभवादृक्षामहांतोबलिनोऽधिपाः ॥ ४० ॥ दूतीषुकोनुरागोयंमहाराजालिपिकास्विह ॥ अनायासेनचवयमायास्यामस्तदाग
मात् ॥ ४१ ॥ विजित्यसमरेतांतुस्वामिनींममदैत्यप ॥ मादृशीनांसहस्राणिपरिभुंक्ष्वयथेच्छया ॥४२॥ अद्यैवतेमहासौख्यंभावितस्याविलोकनात् ॥
बांधवानांसुखंतेद्यभवितासहपूर्वजैः ॥ ४३ ॥ संपत्स्यंतेऽद्यतेकामाःसर्वेयेचिरचिंतिताः ॥ अबलासाचमुग्धाचतस्यास्त्रातानकश्चन ॥ ४४ ॥ सर्व
रूपमयीचैवतांभवान्द्रष्टुमर्हति ॥ अहंहिदर्शयिष्यामियत्रसाऽस्तिजगत्खनिः ॥ ४५ ॥ धृतायामपिचैकस्यांकस्तेकामोभविष्यति ॥ अहंतेसन्निधिंनै
वत्यक्ष्याम्यद्यादिनावधि ॥ ४६ ॥ ततोनिवारयैतान्मामादित्सून्सौविदल्लकान् ॥ इतिश्रुत्वावचस्तस्याःसकामक्रोधमोहितः ॥ ४७ ॥

दलाःकंचुकिनःस्थापत्याःसौविदाश्चतेइति ॥ स्वार्थेकः ॥ पुंगवःश्रेष्ठः ॥३८॥ दूत्यःसंचारिकाः॥यदाहामरः ॥ दूतीसंचारिकेसमेइति ॥ यद्वादूत्या दूत्यकर्मकर्त्र्यः ॥ राजनीतिविदुत्तमराजनीतिविदां
मध्येश्रेष्ठ ॥ ३९ ॥ ४० ॥ अल्पोपिजनः ॥ भवादृक्षाभवत्सदृशाः ॥ तदागमात् महादेव्यागमात् ॥ ४१ ॥ ४२ ॥ ४३ ॥ अबलाबलहीनास्त्रीतिशब्द ॥ वस्तुतस्त्वस्यविष्णोरिवबलंयस्याः ॥
नविद्यतेबलंयस्याःसर्वातिशयबलेत्यर्थइतिवा ॥ मुग्धामूढा वस्तुतस्तुसुंदरी ॥ ४४ ॥ ४५ ॥ ४६ ॥ आदित्सून्ग्रहीतुकामान् ॥ सोदृष्टाकामःत्रिलोकींऽभ्रमतामिंद्रइत्यादिसाक्षेपवचनात्क्रोधस्ताभ्यां

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मोहितः संक्षुब्धः ॥ ४७ ॥ मृत्युमितिवक्तव्येषष्ठीद्वितीयार्थे ॥ बह्वमंस्तवहुयथास्यात्तथाऽमन्यत ॥ शुद्धांतरक्षिणोंऽतःपुरपालिनः ॥ यदाहामरः ॥ स्त्र्यगारंभूभुजामंतःपुरंस्यादवरोधनम् ॥ शुद्धांतश्चावरोधश्चेति ॥ अरमलम् ॥ ४८ ॥ वर्षवराःषंढाःछिन्नवृषणाइतियावत् ॥ यदाहामरः ॥ षंढोवर्षवरइति ॥ ४९ ॥ ५० ॥ त्र्ययुतसंमितान्त्रिंशत्सहस्रसंख्याकान् ॥ हशानेत्रेणकटाक्षेणेतियावत् ॥ तेषांमध्येकेषांचिन्नामानिदर्शयति दुर्धरमितिसपादेन ॥ ५१ ॥ ५२ ॥ एवमापाततोदृशाज्ञाप्यपश्चाद्वचनेनाप्याज्ञापयति बद्ध्वापाशैरितिश्लोकेन ॥ विस्रस्त केशवेशामुन्मुक्तकबराम् ॥ यदाहामरः ॥ कबरीकेशवेशोथेति ॥ केशपाशामितिपाठेऽपिसएवार्थः ॥ ५३ ॥ ५४ ॥ वर्ष्मशरीरम् ॥ शस्त्राणिखड्गादीनिअस्त्राणिक्षेपणीयानिभल्लादीनितैरुद्यता

तामेवबह्वमंस्तैकांदूतींमृत्योरिवासुरः ॥ शुद्धांतरक्षिणश्चैतांशुद्धांतंप्रापयंत्वरम् ॥ ४८ ॥ इतितेनसमादिष्टाःसर्वेवर्षवरामुने ॥ तांधर्तुमुद्यमंचक्रुर्बले नबलवत्तराः ॥ ४९ ॥ सातान्भस्मीचकाराशुहुंकारजनिताग्निना ॥ ततोदैत्यपतिःक्रुद्धोदृष्ट्वातान्भस्मसात्कृतान् ॥ ५० ॥ क्षणेनैवतयादूत्यादैत्यां स्त्र्ययुतसंमितान् ॥ दृशाव्यापारयामासदुर्धरंदुर्मुखंखरम् ॥ ५१ ॥ सीरपाणिंपाशपाणिंसुरेंद्रदमनंहनुम् ॥ यज्ञारिंखड्गलोमानमुग्रास्यंदेवकंपनम् ॥ ॥ ५२ ॥ बद्ध्वापाशैरिमांदुष्टामानयंत्वाशुदानवाः ॥ विध्वस्तकेशवेशांचविस्रस्तांबरभूषणाम् ॥ ५३ ॥ इतिदैत्याधिपादेशाद्दुर्धरप्रमुखास्ततः ॥ पाशा सिमुद्गरधरास्तामादातुंकृतोद्यमाः ॥ ५४ ॥ गिरींद्रगुरुवर्ष्माणःशस्त्रास्त्रोद्यतपाणयः ॥ दिगंतंतेपरिप्राप्तास्तदुच्छ्वासानिलाहताः ॥ ५५ ॥ तेषूड्डीने षुदैत्येषुशतकोटिमितेषुच ॥ निर्जगामततःसातुकालरात्रिर्नभोध्वगा ॥ ५६ ॥ ततस्तांतुविनिर्यांतीमनुजग्मुर्महासुराः ॥ कोटिकोटिसहस्राणिपूर यित्वातुरोदसी ॥ ५७ ॥ दुर्गोनाममहादैत्यःशतकोटिरथावृतः ॥ गजानामर्बुदशतद्वयेनपरिवारितः ॥ ५८ ॥ कोटयर्बुदेनसहितोहयानांवातरंहसाम् ॥ पदातिभिरसंख्यातैःपच्चूर्णितशिलोच्चयैः ॥ ५९ ॥ उदायुधैर्महाभीमैःकृतत्रिजगतीभयैः ॥ समेतःसमहादैत्योदुर्गःक्रुद्धोविनिर्ययौ ॥ ६० ॥ अथदृष्ट्वामहादेवींविंध्याचलकृतालयाम् ॥ आगत्यकालरात्र्याचनिवेदिततदागसम् ॥ ६१ ॥ महाभुजसहस्राढ्यांमहातेजोभिबृंहिताम् ॥ तत्तद्घोरप्रह रणांरणकौतुकसादराम् ॥ ६२ ॥ प्रोद्यच्चंद्रसहस्रांशुनिर्माजितशुभाननाम् ॥ लावण्यवार्धिनिर्गच्छच्चंचच्चंद्रैकचंद्रिकाम् ॥ ६३ ॥

उद्युक्ताःपाणयोयेषांतेतथा ॥ ५५ ॥ ५६ ॥ रोदसीद्यावाभूम्योरंतरम् ॥ ५७ ॥ दुर्गइति ॥ दुर्गोनामयोमहादैत्यःसक्रुद्धःसन्विनिर्ययावितितृतीयेनान्वयः ॥ तंपंचभिर्विशेषणैर्विशिनष्टि शत कोटीत्यादिना ॥ अर्बुदशतद्वयेनदशकोटयएकमर्बुदंतस्यशतद्वयेनखर्वद्वयेनेत्यर्थः ॥ ५८ ॥ कोटयर्बुदेनपरार्धसंख्यामितेन ॥ पच्चूर्णितशिलोच्चयैःपादपिष्टपर्वतैः ॥ ५९ ॥ उदायुधैरुद्यत शस्त्रैः ॥ समहादैत्यः ॥ महादैत्यैस्सहवर्तमानः ॥ ६० ॥ अथेति ॥ अथानंतरंमहादेवींदृष्ट्वादैत्यश्रेष्ठोमहासेनापतीनादिष्टवानितिषष्ठेनान्वयः ॥ द्वादशभिर्विशेषणैस्तांविशिनष्टि विंध्याचले त्यादिना ॥ निवेदितंकथितंतदागःदुर्गापराधोयस्यैताम् ॥ तदागमामितिक्वचित् ॥ ६१ ॥ तत्तदित्यत्रउग्रदिति क्वचित् ॥ ६२ ॥ प्रोद्यदिति ॥ उद्यत्सुवांचपरिमितकिरणनिर्मृष्टोत्तमास्याम् ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

महादेवनयनानलभस्मीभूतमदनजीवनौषध लावण्येति ॥ सौंदर्यसमुद्रनिःसरदुच्छलच्चंद्रमुख्यज्योत्स्नाम् ॥ ६३ ॥ महेति ॥ अनेकमाणिक्यसमूहदीप्तिव्याप्तशरीराम् ॥ ६४ ॥ हरेति ॥ महादेवनयनानलभस्मीभूतमदनजीवनौषध लताम् ॥ यदाहामरः ॥ जीवातुर्जीवनौषधमिति ॥ संभारःसमूहःसामग्रीवा ॥ महौषधींमहौषधरूपाम् ॥ ६५ ॥ विषमेषुःकामः ॥ ६६ ॥ आज्ञाप्रकारमाह अयिजंभेत्यादिनेत्याकर्ण्येत्यतः प्राक्तनेनग्रंथेन ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ धृत्याधैर्येणसाम्नेतियावत् ॥ बुद्ध्यादाक्षिण्येनदानेनवा बलेनदंडेन छलेनभेदेन ॥ सामदानदंडभेदोपायचतुष्टयेने

लसत्सौंदर्यसं महामाणिक्यनिचयरोचिःखचितविग्रहाम् ॥ त्रैलोक्यरम्यनगरीसुप्रकाशप्रदीपिकाम् ॥६४॥ हरनेत्राग्निनिर्दग्धकामजीवातुवीरुधम् ॥ अयिजंभमहाजंभकुजंभ भारजगन्मोहमहौषधिम् ॥ ६५ ॥ विषमेषुशरैर्भिन्नहृदयोदैत्यपुंगवः ॥ आदिष्टवान्महासैन्यनायकानुग्रशासनः ॥ ६६ ॥ जितां विकटानन ॥ लंबोदरमहाकायमहादंष्ट्रमहाहनो ॥ ६७ ॥ पिंगाक्षमहिषग्रीवमहोग्रात्युग्रविग्रह ॥ क्रूराक्षक्रोधनाक्रंदसंक्रंदनमहाभय ॥ ६८ ॥ सिंहास्यसूकरमुखशिवारावमहो तकमहाबाहोमहावक्रमहीधर ॥ दुंदुभेदुंदुभिरवमहादुंदुभिनासिक ॥ ६९ ॥ उग्रास्यदीर्घदशनमेचकेशधूम्रकानन ॥ रक्तबिंदो त्कट ॥ ७० ॥ शुकतुंडप्रचंडास्यभीमाक्षक्षुद्रमानस ॥ उलूकनेत्रकंकास्यकाकतुंडकरालवाक् ॥७१॥ दीर्घग्रीवमहाजंघक्रमेलकशिरोधर ॥ जपानेत्रविद्युज्जिह्वाग्नितापन ॥ ७२ ॥ धूम्राक्षधूमनिःश्वासचंडचंडांशुतापन ॥ महाभीषणमुख्याश्चशृण्वंत्वाज्ञांममादरात् ॥ ७३ ॥ भवत्स्वेतेषुचान्ये पुयएतांविंध्यवासिनीम् ॥ धृत्यानेष्यतिबुद्ध्यावाबलेनापिच्छलेनवा ॥ ७४॥ तस्याहमिंद्रपदवीमग्रदास्याम्यसंशयम्॥ दृष्ट्वैतांसुंदरीमद्यमनोमेऽव्याकुलं भवेत् ॥ ७५ ॥ यांतुक्षिप्रंनयावन्मेपंचेषुशरपीडितम् ॥ मनोविह्वलतांगच्छेदेतत्प्रातेरभावतः ॥७६॥ इत्याकर्ण्यवचस्तस्यदुर्गस्यदनुजेशितुः ॥ प्रोचुः सर्वेतदादैत्याःप्रबद्धकरसंपुटाः ॥ ७७ ॥ अवधेहिमहाराजकिमेतत्कर्मदुष्करम् ॥ अनाथायास्तथैकस्याअबलायाविशेषतः ॥ ७८॥ अस्याआनयने कोयंमहायत्नविधिःप्रभो ॥ कोऽस्मान्प्रलयकालाग्निमहाज्वालावलीसमान् ॥ ७९ ॥ सहेतत्रिषुलोकेषुत्वत्प्रसादात्कृतोद्यमान् ॥ यद्यादेशोभवेदद्यतदेंद्रं समरुद्गणम् ॥ ८० ॥ सांतःपुरंसमानीयक्षिप्रमस्त्वत्पदाग्रतः ॥ भूर्भुवःस्वरिदंसर्वंत्वदाज्ञावशवर्तितम् ॥ ८१ ॥ महर्जनस्तपःसत्यलोकास्त्वदधिका रिणः ॥ तत्राप्यसाध्यंनास्माकंत्वत्त्रिदेशान्महासुर ॥ ८२ ॥ वैकुंठनायकोनित्यंत्वदाज्ञापरिपालकः ॥ यानिरम्याणिरत्नानितानिसंप्रेषयन्मुदा ॥८३॥

त्यर्थः ॥ धृत्वाकेष्यतीतिकाचित् ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ अवधेहिशृणु एतत्कर्मदुष्करंकिंकाकादुष्करमेवेतिवास्तवोर्थः ॥ दुष्करत्वमेवाह ॥ अनाथायाः अःविष्णुर्नाथो यस्यास्तथानविद्यतेनाथोयस्यास्तस्याइतिवास्वतंत्रायाइत्यर्थः ॥ एकस्यामुख्यायाअद्वितीयायावेत्यर्थः ॥ विशेषतःअस्यविष्णोरिवबलंयस्यास्तस्याइति ॥ कृपणायाइतिपाठेकृपणवद्वर्तमानाया इत्यर्थः ॥ ७८ ॥ कोयंमहायत्नविधिः ॥ अकइतिपदच्छेदेअयमत्यंतप्रयत्नप्रकारःअकःनकोपीत्यर्थः ॥ [illegible] ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ वैकुंठनायकःविकुंठाशुभ्रस्य

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पत्नीतस्यामुत्पन्नोवैकुंठस्तेनर्निर्मितोलोकोपिवैकुंठस्तस्यनायकोविष्णुरित्यर्थः ॥ तदुक्तंभागवते ॥ पत्नीविकुंठाशुभ्रस्यवैकुंठैःसुरसत्तमैः ॥ तस्यांसकलयाजज्ञेवैकुंठोभगवान्स्वयम् ॥ वैकुंठःकलिप
तोयेनलोकोलोकनमस्कृतः ॥ रमयाप्रार्थ्यमानेनदेव्यातत्प्रियकाम्ययेति ॥ सःयानिउत्कृष्टानिरत्नानिमुदासंप्रेषयंस्त्वदाज्ञायाअपरिपालकःत्वदाज्ञांनकरोतीत्यर्थः ॥ ८३ ॥ यःकैलासेश्वरःशिवःसोप्य
स्माभिःसंत्यक्तउपेक्षितःकिम् ॥ स्वयमेवसर्वेषामवध्यइत्यर्थः ॥ यश्चलोकानामतिनिःस्वत्वादतिकार्पण्यादतिकरुणयाविषाशीविषभक्षकोभूत् ॥ योलीलार्थंभस्मचर्मसर्पभूषणः ॥ ८४ ॥ अस्मद्वयेन
तेनएकाऽनुपमास्त्रीअर्धांगेननिगूहितासंवृताकिम् ॥ अपितुनसंवृतेत्यर्थः ॥ तस्यसकलेपिग्रामेऽशेषेपिजगतिद्वितीयोऽन्यश्चतुष्पदोवृषोनास्तिकिंत्वेकोऽनुपमोऽजरद्गवस्तरुणोवाहनोगोवृषोऽस्तिसोपि

अस्माभिरेवसंत्यक्तःकैलासाधिपतिःसवै ॥ विषाशीचातिनिःस्वत्वाद्भस्मकृत्त्यहिभूषणः ॥ ८४ ॥ अर्धांगेनास्मद्वयतोयोषिदेकानिगूहिता ॥ तस्यग्रामे
पिसकलेद्वितीयोनचतुष्पदः ॥ ८५ ॥ एकोऽजरद्गवःसोपिनान्यस्मात्परिजीवति ॥ श्मशानवासिनःसर्वेसर्वेकौपीनवाससः ॥८६॥ सर्वेविभूतिधवलाः
सर्वेप्येककपर्दिनः ॥ समस्तेनगरेतस्यवसंत्येवंविधागणाः॥८७॥ तेषांगणानांकिंकुर्मोदरिद्राणांवयंविभो ॥ समुद्रारत्नसंभारंप्रत्यहंप्रेषयंतिच ॥ ८८ ॥
नागावराकाश्चास्माकंसायंसायंस्वयंप्रभो ॥ प्रदीपयंतिसततंफणारत्नप्रदीपकान् ॥ ८९ ॥ कल्पद्रुमःकामगवीचिंतामणिगणाबहु ॥ तवप्रसादाद
स्माकमपितिष्ठंतिवेश्मसु ॥ ९० ॥ वायुर्व्यंजनतांयातस्त्वांसेवेतप्रयत्नतः ॥ स्वच्छान्यंबूनिवरुणःप्रत्यहंपूरयत्यहो ॥ ९१ ॥ वासांसिक्षालयेदग्निश्चं
द्रश्छत्रधरःस्वयम् ॥ सूर्यःप्रकाशयेन्नित्यंक्रीडावाप्यंबुजानिच ॥९२॥ कस्त्वत्प्रसादंनेक्षेतमर्त्यामर्त्योरगेषुच ॥ सर्वेत्वामुपजीवंतिसुराऽसुरखगादयः ॥
॥ ९३ ॥ पश्यनःपौरुषंराजन्नानयामोबलादिमाम् ॥ इत्युक्तायुगपत्सर्वेक्षुब्धास्तोयधयोयथा ॥९४॥ संवर्तकालमासाद्यप्लावितुंजगतीमिमाम् ॥ रणतूर्य
निनादश्चसमुत्तस्थौसमंततः ॥ ९५ ॥ रोमांचितायच्छ्रवणात्कातराअप्यकातराः ॥ ततोदेवाभयत्रस्ताश्चकंपेचवसुंधरा ॥ ९६ ॥ क्षुब्धाअंबुधयःसर्वेपे
तुर्नक्षत्रमालिकाः ॥ रोदसीमंडलंव्याप्तंतेनतूर्यरवेणवै ॥ ९७ ॥ ततोभगवतीदेवीस्वशरीरसमुद्भवाः ॥ शक्तीरुत्पादयामासशतशोऽथसहस्रशः ॥९८॥
ताभिःशक्तिभिरेतेषांबलिनांदितिजन्मनाम् ॥ प्रत्येकंपरितोरुद्धउद्वेलःसैन्यसागरः ॥ ९९ ॥

किमन्यस्मात्परिजीवतिअपितुनेत्यर्थइत्यन्वयः ॥ तस्यगणाअप्यवधीरितभोगाईश्वराएवतेषुवयमकिंचित्कराएवेत्याहुः श्मशानेतिद्वयेन ॥ ८५ ॥ ८६ ॥ अदरिद्राणामीश्वराणाम् ॥ पक्षांतरेयथा
श्रुतएवस्पष्टोर्थः ॥ ८७ ॥ किंतुसमुद्राइति ॥ ८८ ॥ ८९ ॥ कामगवीकामधेनुः ॥ ९० ॥ पूरयतिस्वर्णादिकलशेष्वितिशेषः ॥ ९१ ॥ ९२ ॥ ९३ ॥ क्षुब्धास्तांबलाद्धर्तुंसंचलिताः ॥
प्रलयकालंप्राप्यसमुद्रायथाक्षुब्धाभवंतितद्वदित्यर्थः ॥ ९४ ॥९५॥९६॥ नक्षत्रमालिकाःऋक्षसमूहाः ॥ रोदसीमंडलंद्यावाभूम्योरंतरम् ॥९७॥ शक्तीरंशरूपामूर्तीः ॥९८॥ रुद्धआवृतोनिवारितइति

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अरंशीघ्रम् ॥ १०० ॥ असिःखड्गः भुशुंडीसर्वत्रलोहकंट
यावत् ॥ उद्वेलोलंघितमर्यादः ॥ ९९ ॥ संगरेसंग्रामे ॥ तृणीकृत्यतुच्छीकृत्योज्झितानित्यक्तानिनाशितानीत्यर्थः ॥ शर्वलातोमरो
कव्याप्ताकमात्स्थूलाच ॥ तदुक्तम् ॥ भुशुंडीसर्वतोलोहकंटकानुक्रमोन्नतेति ॥ मुद्गरोद्रुघनः ॥ यदाहामरः ॥ द्रुघनेमुद्गरघनाविति ॥ तोमरःशर्वला शेलइतियावत् ॥ यदाहामरः ॥ परिघःपरिघातनइति ॥
प्रक्षियामिति ॥ १ ॥ भिंदिपालैःसृगैःलोहबद्धदंडैरितियावत् ॥ यदाहामरः ॥ भिंदिपालःसृगस्तुल्याविति ॥ परिघैःपरिघातनैर्हस्तप्रमाणकांडैरितियावत् ॥ यदाहामरः ॥

ताभिःशक्तिभिरुग्राणितृणीकृत्योज्झितान्यरम् ॥ १०० ॥ ततोतिकोपपूर्णास्तेजंभमुख्याःसुरारयः ॥ असि
शस्त्रास्त्राणिमहादैत्यैर्यान्युत्सृष्टानिसंगरे ॥ ताभिःशक्तिभिरुग्राणितृणीकृत्योज्झितान्यरम् ॥ अर्धचंद्रैःक्षुरप्रैश्चनाराचैश्चशिलीमुखैः ॥ २ ॥ महाभल्लैःपरशुभि
चक्रभुशुंडीभिर्गदामुद्गरतोमरैः ॥ १ ॥ भिंदिपालैश्चपरिघैःकुंतैःशल्यैश्चशक्तिभिः ॥ आदायोद्दंडकोदंडंवायव्यास्त्रेणहेलया ॥ ४ ॥
भिदुरैर्मर्मभेदिभिः ॥ वृक्षोपलमहावर्षैर्ववृषुर्जलदाइव ॥ ३ ॥ अथसाविंध्यनिलयामहामायामहेश्वरी ॥ तांतुशक्तिंसमायां
दैत्यास्त्रशस्त्रजालानिपारिचिक्षेपदूरतः ॥ ततोमहासुरोदुर्गोवीक्ष्यसैन्यंनिरायुधम् ॥ ५ ॥ ज्वलंतींशक्तिमादायतांदेवींप्रतिसोऽक्षिपत् ॥ चक्रंचप्रेषयामासदैत्यचक्रातिहर्ष
तींमहावेगवर्तींरणे ॥ ६ ॥ निजचापविनिर्मुक्तैर्बाणैश्चूर्णीचकारसा ॥ भग्नांशक्तिंसमालोक्यततोदुर्गोमहासुरः ॥ ७ ॥ सचबाणस्तया
दम् ॥ तच्चदेव्याशरशतैरंतरैवाणुवत्कृतम् ॥ ८ ॥ ततःशार्ङ्गंसमादायधनुःशक्रधनुर्यथा ॥ हृदिविव्याधबाणेनतांदेवीममरार्दनः ॥ ९ ॥ हत्वानिवारयामासकालदंड
देव्या.निजबाणैर्महाजवैः ॥ निवारितोपिवेगेनतांदेवीमभ्यगान्मुने ॥ ११० ॥ ततःकोदंडदंडेनआशुगेनतमाशुगम् ॥ महावेगेनचिक्षेपतांदेवीमभिदैत्यपः ॥
मिवापरम् ॥ ११ ॥ तस्मिन्विमुखतांयातेमार्गणेदुर्गमासुरः ॥ क्रुद्धःशूलंसमादायसंवर्तानलसुप्रभम् ॥ १२ ॥ तस्मिन्नापमहाशूलेदेवीशूलावहेलिते ॥ १४ ॥
परापतच्चतच्छूलंनिजशूलेनचंडिका ॥ १३ ॥ अंतरैवप्रचिच्छेदसहदैत्यजयाशया ॥

शक्तिर्लोहकंटकव्याप्ताचतुर्हस्तप्रमाणाशतघ्नी ॥ तदुक्तम् ॥ शतघ्नी
कुंतैःप्रासैः ॥ यदाहामरः ॥ प्रासस्तुकुंतइति ॥ शल्यैःशंकुभिःसर्वलीतिख्यातैरित्यर्थः ॥ यदाहामरः ॥ वापुंसिशल्यंशंकुर्नेति ॥ शेषाअस्त्रविशेषाः ॥
तुचतुर्हस्तालोहकंटकसंचितेति ॥ नाराचैःप्रक्ष्वेडनैः ॥ यदाहामरः ॥ प्रक्ष्वेडनास्तुनाराचाइति ॥ २ ॥ परशुभिःकुठारैः ॥ यदाहामरः ॥ द्वयोःकुठारःस्वधितिःपरशुश्चपरश्वधइति ॥
भिदुरैर्भेदनशीलैः उपलःपाषाणः ॥३॥ उद्दंडकोदंडंमहद्धनुः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ शृंगैर्निर्मितंशार्ङ्गंधनुः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ परापतत् आगच्छत् ॥ १३॥ अन्तरामध्ये ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

१ कुलिशंभिदुरंपविः । भिदुरंवज्रम् । मर्मभेदिभिरित्यत्रैवभेदनशीलस्यगतार्थत्वादितिचिंतनीयम् ।

अवहेलितेऽवज्ञातेछिन्नेइतियावत् ॥ १४ ॥ १५ ॥ परिपुस्फोटवभंजेत्यर्थः ॥ १६ ॥ गाढंयथास्यात् ॥ १७ ॥ १८ ॥ संवर्तेप्रलयकाले ॥ ११९ ॥ इतिश्रीरामानन्दकृतायांकाशीखंडटीकायामेकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ छ ॥ ॥ द्व्यधिकेसप्ततितमेऽध्यायेतावद्विवर्ण्यते ॥ दुर्गायाविजयोविश्वजनन्याःपरमाद्भुतः ॥ १ ॥ जगज्जनन्याशक्तयःप्रेरिताइत्युक्तंतत्रपृच्छाति ॥ पार्वतीति ॥ १ ॥ २ ॥ तारेत्यत्रआधारेतिपाठेएकंनाम ॥ ३ ॥ जलेशीत्यत्रजलदेतिक्वचित् ॥ ४ ॥ ५ ॥ हुंकारहेतिःहुंकारास्त्रा ॥ तालेशीतृणराजदंडप्रयोक्त्री ॥ ६ ॥ शराशना

गदामादायदैत्येंद्रःसहसाभिपपातह ॥ आजघानचतांदेवींभुजमूलेमहाबलः ॥ १५ ॥ सापिदेवीभुजंप्राप्यगिरींद्रशिखराकृतिः ॥ गदाशुपरिपुस्फोटशतधाचसहस्रधा ॥ १६ ॥ तदादेव्यासदैत्येंद्रोवामपादतलेनहि ॥ आताडितःपपातोर्व्यांहृदिगाढंप्रपीडितः ॥ १७ ॥ तत्क्षणादेवदैत्येंद्रःपतित्वापुनरुत्थितः ॥ बभूवसहसादृश्योदीपोवातहतोयथा ॥ १८ ॥ तावज्जगज्जनन्याताःप्रेरितानिजशक्तयः ॥ विचेरुर्दैत्यसैन्येषुसंवर्तेमृत्युसैन्यवत् ॥ ११९ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडउत्तरार्धेदुर्गपराक्रमोनामैकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ अगस्त्यउवाच ॥ पार्वतीहृदयानंदस्कंदसर्वज्ञनंदन ॥ काःकास्तुशक्तयस्तावैतासांनामानिमेवद ॥ १ ॥ ॥ स्कंदउवाच ॥ ॥ तासांपरमशक्तीनामुमावयवसंभुवाम् ॥ आख्याम्याख्यांशृणुमुनेकुंभसंभवतत्त्वतः ॥ २ ॥ त्रैलोक्यविजयाताराक्षमात्रैलोक्यसुंदरी ॥ त्रिपुरात्रिजगन्माताभीमात्रिपुरभैरवी ॥ ३ ॥ कामाख्याकमलाक्षीचधृतिस्त्रिपुरतापनी ॥ जयाजयंतीविजयाजलेशीचापराजिता ॥ ४ ॥ शंखिनीगजवक्त्राचमहिषघ्नीरणप्रिया ॥ शुभानंदाकोटराक्षीविद्युज्जिह्वाशिवारवा ॥ ५ ॥ त्रिनेत्राचत्रिवक्त्राचत्रिपदासर्वमंगला ॥ हुंकारहेतिस्तालेशीसर्पास्यासर्वसुंदरी ॥ ६ ॥ सिद्धिर्बुद्धिःस्वधास्वाहामहानिद्राशराशना ॥ पाशपाणिःखरमुखीवज्रताराषडानना ॥ ७ ॥ मयूरवदनाकाकीशुकीभासीगरुत्मती ॥ पद्मावतीपद्मकेशीपद्मास्यापद्मवासिनी ॥ ८ ॥ अक्षरात्र्यक्षरातंतुःप्रणवेशीस्वरात्मिका ॥ त्रिवर्गागर्वरहिताअजपाजपहारिणी ॥ ९ ॥ जपासिद्धिस्तपःसिद्धिर्योगसिद्धिःपरामृता ॥ मैत्रीकृन्मित्रनेत्राचरक्षोघ्नीदैत्यतापनी ॥ १० ॥ स्तंभनीमोहनीमायाबहुमायाबलोत्कटा ॥ उच्चाटनीमहोल्कास्यादनुजेंद्रक्षयंकरी ॥ ११ ॥ क्षेमंकरीसिद्धिकरीछिन्नमस्ताशुभानना ॥ शाकंभरीमोक्षलक्ष्मीस्त्रिवर्गफलदायिनी ॥ १२ ॥ वार्तालीजंभलीक्लिन्नाअश्वारूढासुरेश्वरी ॥ ज्वालामुखीप्रभृतयोनवकोट्योमहाबलाः ॥ १३ ॥ बलानिबलिनांताभिर्दानवानांस्वलीलया ॥ संक्षिप्तानिजगंतीवप्रलयानलहेतिभिः ॥ १४ ॥

वाणभक्षणा ॥ पाठांतरेशरक्षेपणा ॥ वज्रतारावज्रकनीनिका ॥ ७ ॥ ८ ॥ तंतुःतंतुवत्सूक्ष्मा ॥ ९ ॥ परामृताचेतिनामद्वयंवा ॥ १० ॥ ११ ॥ १२ ॥ वार्तालीति ॥ वार्तानामावलिःपंक्तिर्यस्यांसावार्तालीजंभंतन्नामानमसुरंलातियुद्धायादत्तइतिजंभली ॥ ऐंद्रीशक्तिरित्यर्थः ॥ अन्यासामपियथासंभवंव्युत्पत्तिरूहनीया ॥ १३ ॥ संक्षिप्तानिनाशितानि ॥ हेतिभिःशिखाभिः ॥ यदाहा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मरः ॥ वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिःशिखास्त्रियामिति ॥ १४ ॥ करकावृष्टिंवर्षपाषाणवृष्टिम् ॥ यदाहामरः ॥ वर्षोपलस्तुकरकेति ॥ वात्यावातमंडली ॥ १५ ॥ १६ ॥ षंढंवर्षवरंछिन्नांडकोश मितियावत् ॥ १७ ॥ बाहुसंकर्षकोपतःबाहुस्फालनपूर्वककोपात् ॥ राह्वितिपाठेराहुसंकर्षकोपतः स्वर्भानुसदृशकोपात् ॥ बहुधामर्षेतिक्वचित् ॥ १८ ॥ शतकोटिर्वज्रम् ॥ शकलंखंडम् ॥ १९ ॥ ॥२०॥ जवतःशीघ्रम् ॥ करंशुंडादंडम् ॥२१॥ चीत्कृत्यगजजातिशब्दंकृत्वा ॥ अकिंचित्करतांकिंचित्कर्तुमशक्तताम् ॥२२॥२३॥ २४ ॥ २५ ॥ अकांडेनानवसरेण ॥ २६ ॥ वेषमाकारम् ॥

तावत्सदुर्गोदैत्येंद्रःपयोदांतरतोबली ॥ चकारकरकावृष्टिंवात्यावेगवतींबहु ॥१५॥ ततोभगवतीदेवीशोषणास्त्रप्रयोगतः॥वृष्टिंनिवारयामासवर्षोपलमयीं क्षणात् ॥ १६ ॥ योषिन्मनोरथवतीषंढंप्राप्ययथाऽफला ॥ सादैत्यकरकावृष्टिर्देवींप्राप्यतथाभवत् ॥ १७ ॥ अथदैतेयराजेनबाहुसंकर्षकोपतः ॥ उत्पाट्यशैलशिखरंपरिक्षिप्तंनभोंगणात् ॥ १८ ॥ अद्रेःशृंगंसुविस्तीर्णमापतत्परिवीक्ष्यसा ॥ शतकोटिप्रहारेणकोटिशःसकलंव्यधात् ॥ १९ ॥ आंदोल्यमौलिमसकृत्कुंडलाभ्यांविराजितम् ॥ गजीभूयाशुदुद्रावतांदेवींसमरेऽसुरः ॥२०॥ शैलाकारंतमायांतंदृष्ट्वाभगवतीगजम् ॥ बद्धापाशेनजवतः खड्गेनकरमाच्छिनत् ॥ २१ ॥ ततोत्यंतंसचीत्कृत्यदेव्याकृत्तकरःकरी ॥ अकिंचित्करतांप्राप्यमाहिषंवपुराददे ॥ २२ ॥ अचलांसचलांसर्वांसचक्रेखुर घाततः ॥ शिलोच्चयांश्चबहुशःशृंगाभ्यांसोक्षिपद्बली ॥२३॥ निःश्वासवातनिहताःपेतुरुर्व्यांमहाद्रुमाः ॥ उद्वेलिताःसमभवन्सप्तापिजलराशयः ॥२४॥ महामहिषरूपेणतेनत्रैलोक्यमंडपः ॥ आंदोलितोतिबलिनायुगांतेवात्ययायथा ॥ २५ ॥ ब्रह्मांडमप्यकांडेनतद्भयेनसमाकुलम् ॥ दृष्ट्वाभगवतीक्रुद्धा त्रिशूलेनजघानतम् ॥ २६ ॥ त्रिशूलघातविश्रांतःपतित्वापुनरुत्थितः ॥ तंत्यक्त्वामाहिषंवेषमभूद्बाहुसहस्रभृत् ॥ २७ ॥ सदुर्गोनितरांदुर्गोविबभौ समराजिरे ॥ आयुधानांसहस्राणिबिभ्रत्कालांतकोपमः ॥ २८ ॥ अथतूर्णंसदैत्येंद्रस्तांदेवींरणकोविदाम् ॥ महाबलःप्रगृह्याशुनीतवान्गगनांगणम् ॥ ॥ २९ ॥ ततोनभोंगणादूरात्क्षिप्त्वासजगदंबिकाम् ॥ क्षणात्कलंबजालेनच्छादयामासवेगवान् ॥ ३० ॥ अथांतरिक्षगादेवीतस्यमार्गणमध्यगा ॥ विद्युन्मालेवविबभौमहाभ्रपटलीधृता ॥३१॥ तंविधूयशरव्रातंनिजेषुनिकरैरलम् ॥ महेषुणाथविव्याधसातंदैत्यजनेश्वरम् ॥ ३२ ॥ हृदिविद्धस्तयादे व्यासचतेनमहेषुणा ॥ व्याघूर्णमाननयनःक्षितिमापातिविह्वलः ॥३३॥ महारुधिरधाराभिःस्रवंतींचप्रवर्तयन् ॥ तस्मिन्निपतितेदुर्गेमहादुर्गपराक्रमे॥ ॥ ३४ ॥ देवदुंदुभयोनेदुःप्रहृष्टानिजगंतिच ॥ सूर्याचंद्रमसौसाग्नीतेजोनिजमवापतुः ॥ ३५ ॥ पुष्पवृष्टिंप्रकुर्वंतःप्राप्तादेवामहर्षिभिः ॥ तुष्टुवुश्चमहा देवींमहास्तुतिभिरादरात् ॥ ३६ ॥

॥ देवाऊचुः ॥

॥ नमोदेविजगद्धात्रिजगत्त्रयमहारणे ॥ महेश्वरमहाशक्तेदैत्यद्रुमकुठारिके ॥ ३७ ॥

॥ २७ ॥ समराजिरेसंग्रामभूमौ ॥ कालश्चांतकश्चतदुपमः ॥ २८ ॥ २९ ॥ कलंबजालेनशरसमूहेन ॥ कलंबीशाकभेदेस्यात् ॥ कदंबशरयोःपुमानितिमेदिनीकारः ॥ बाणौघजालेनेति क्वचित् ॥ तत्रजालमानायः ॥ ३० ॥ महाभ्रपटलीधृतामहामेघपंक्तौस्थिता ॥ वृतेतिक्वचित् ॥ ३१ ॥ ३२ ॥ ३३ ॥ स्रवंतींनदीम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ एकोनात्रिंशतापद्यैर्दुर्गांदुर्गविम



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

र्दिनीम् ॥ प्रणतास्त्रिदशाःसर्वेतुष्टुवुर्जगदंबिकाम् ॥ १ ॥ तत्रप्रथमतोब्रह्मविष्णुमहेश्वरशक्तिरूपेणप्रणमंति नमइतित्रयेण ॥ हेदेविनमस्तुभ्यमितिशेषः ॥ नमस्कारेहेतुः ॥ जगद्धात्रिहेविश्वपोष्ट्रि ॥ अनेनविष्णोःसत्त्वप्रधानास्थितिशक्तिरुक्ता ॥ जगत्रयमहारणेहेजगत्रितयमहोत्पत्तिस्थानरूपे ॥ अनेनब्रह्मणोरजःप्रधानासृष्टिशक्तिरुक्ता ॥ महेश्वरमहाशक्तेहेविश्वनाथमहाशक्ते ॥ अनेनकालाग्निरुद्रात्मनोविश्वेश्वरस्यसर्वसंहारपटीयसीतमःप्रधानाशक्तिरुक्ता ॥ अतएवदैत्यद्रुमकुठारिकेहेदानवरूपवृक्षपरश्वधेछेत्रीत्यर्थः ॥ ३७ ॥ विष्णुशक्तिंदर्शयंतोनमंति ॥ त्रैलोक्येति ॥ धरीधात्रिधरेइतिकचित् ॥ स्वशार्ङ्गेत्यत्रसुशार्ङ्गेतिकचित् ॥ ३८ ॥ ब्रह्मशक्तिंकथयंतोनमस्यंति ॥ हंसयानइति ॥ प्राचांप्राचीनानामनादिसिद्धानाम् ॥ ३९ ॥ सर्वस्वरूपत्वंदर्शयंतःपरमात्मत्वेनस्तुवंति त्वमैंद्रीत्यादि मातस्त्वयेत्यंतेन ॥ तत्राष्टलोकपालचंद्रसवितृशक्तित्वेनस्तुवंतिसार्धेन ॥ कौबेरीत्यत्रकौमारीतिपाठःसचिंत्यः ॥ अंबुपावारुणीशक्तिः ॥ ४० ॥ सौरीसूर्यप्रभाशक्तिरितिसर्वत्रसंबध्यते ॥ किंचबहुनेत्याहुः ॥ सर्वदेवेति ॥ ४१ ॥ सर्वदेवशक्तित्वमेवसंक्षेपेणदर्शयंति त्वमित्यर्धेन ॥ चतुर्विंशतितत्त्वरूपेणस्तुवंति ॥ प्रकृतिस्त्वमितिसार्धेन ॥ प्रकृतिःप्रधानम् ॥ मतिर्महत्तत्त्वं

त्रैलोक्यव्यापिनिशिवेशंखचक्रगदाधरि ॥ स्वशार्ङ्गव्यग्रहस्ताग्रेनमोविष्णुस्वरूपिणि ॥ ३८ ॥ हंसयानेनमस्तुभ्यंसर्वसृष्टिविधायिनि ॥ प्राचांवाचां जन्मभूमेचतुराननरूपिणि ॥ ३९ ॥ त्वमैंद्रीत्वंचकौबेरीवायवीत्वंत्वमंबुपा ॥ त्वंयामीनैर्ऋतीत्वंचत्वमैशीत्वंचपावकी ॥ ४० ॥ शशांककौमुदीत्वंचसौरीशक्तिस्त्वमेवच ॥ सर्वदेवमयीशक्तिस्त्वमेवपरमेश्वरी ॥ ४१ ॥ त्वंगौरीत्वंचसावित्रीत्वंगायत्रीसरस्वती ॥ प्रकृतिस्त्वंमतिस्त्वंचत्वमहंकृतिरूपिणी ॥ ॥ ४२ ॥ चेतःस्वरूपिणीत्वंवैत्वंसर्वेंद्रियरूपिणी ॥ पंचतन्मात्ररूपात्वंमहाभूतात्मिकेंबिके ॥ ४३ ॥ शब्दादिरूपिणीत्वंवैकरणानुग्रहात्वमु ॥ ब्रह्मांडकर्त्रीत्वंदेविब्रह्मांडांतस्त्वमेवहि ॥ ४४ ॥ त्वंपरासिमहादेवित्वंचदेविपरापरा ॥ परापराणांपरमापरमात्मस्वरूपिणी ॥ ४५ ॥ सर्वरूपात्वमीशानित्वमरूपासिसर्वगे ॥ त्वंचिच्छक्तिर्महामायेत्वंस्वाहात्वंस्वधामृते ॥ ४६ ॥ वषड्वौषट्स्वरूपासित्वमेवप्रणवात्मिका ॥ सर्वमंत्रमयीत्वंवैब्रह्माद्यास्त्वत्समुद्भवाः ॥ ४७ ॥

हैरण्यगर्भीबुद्धिरितियावत् ॥४२॥ चेतोंतरिंद्रियम् ॥ सर्वेंद्रियेत्यत्रसर्वशब्दोज्ञानकर्मविषयः ॥ क्रमोत्रनविवक्षितः ॥ पंचतन्मात्ररूपाअपंचीकृतपंचमहाभूतस्वरूपेत्यर्थः ॥ महाभूतात्मिकेस्थूलपंचमहाभूतस्वरूपेइत्यर्थः ॥४३॥ पंचभूतगुणत्वेनइंद्रियाधिष्ठातृदेवतारूपेणचस्तुवंति शब्दादीत्यर्धेन ॥ आदिशब्देनस्पर्शरूपरसगंधागृह्यंते ॥ करणमिंद्रियमनुगृह्णातीतिकरणानुग्रहाइंद्रियाधिष्ठातृदेवतारूपेत्यर्थः ॥ सर्वकर्तृत्वेनसर्वरूपत्वेनचस्तुवंति ब्रह्मांडेत्यर्धेन ॥ अंतशब्दोऽत्रस्वरूपवचनः ॥ ४४ ॥ ननुहिरण्यगर्भोब्रह्मांडंसृजतिब्रह्मांडंमहदादिकार्यंभौतिकमेवकिमत्राहंतत्राहुः ॥ त्वमिति ॥ त्वंपराईश्वरीअसि ॥ हिरण्यगर्भसृष्टात्तद्द्वारात्वमेवब्रह्मांडंसृजसीत्यर्थः ॥ तथाचश्रुतिः ॥ योवैब्रह्माणंविदधातिपूर्वमिति ॥ परंमहदादिअपरंतत्कार्यंतेपरापरेतद्रूपापराऽपरा ॥ अतस्त्वमेवब्रह्मांडरूपेत्यर्थः ॥ उपसंहरंति ॥ परापराणामिति ॥ ४५ ॥ ननुपरापररूपत्वेकथंपरमात्मस्वरूपत्वंतत्राहुः ॥ माययासर्वरूपात्वमिति ॥ वस्तुतोऽरूपासि ॥ अरूपत्वेहेतुस्त्वंचिच्छक्तिरिति ॥ ज्ञानैकस्वरूपेत्यर्थः ॥ सर्वरूपत्वंसंक्षेपेणदर्शयंति ॥ त्वंस्वाहेति ॥ ४६ ॥ वैदिकमंत्ररूपेणस्तुवंति ॥ वषडिति ॥ किंचकिंबहुनेत्याहुः ॥ सर्वमंत्रेति ॥ सर्वकारणत्वेनस्तुवंति ॥ ब्रह्मेति ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सर्वरूपत्वमुपसंहरंति ॥ ब्रह्मेतीतिवा ॥ ४७ ॥ चतुर्वर्गात्मकत्वेनतद्दातृत्वेनचस्तुवंति ॥ चतुर्वर्गेति ॥ चतुर्वर्गफलस्यपुरुषार्थचतुष्टयफलस्योदयोयस्यास्तत्संबोधनंचतुर्वर्गफलोदये ॥ उपसंहरंति ॥ त्वत्तइति ॥ निमित्तकारणमात्रतांव्यावर्तयंति ॥ त्वयीति ॥ प्रलयकालेसर्वजगन्निधीयतेऽस्यामितितत्संबोधनंतथा ॥ जगन्मयेइतिकचित् ॥ ४८ ॥ यदिति ॥ स्थूलसूक्ष्मस्वरूपतःस्थूलसूक्ष्मस्वरूपंयद्दृश्यंपृथिव्यादियदहृश्यमाकाशादितत्रत्वंशक्तिरूपेणवर्तसे ॥ तत्तच्छक्तिरूपायांत्वयितत्तद्वस्तुग्रथितमित्यर्थः ॥ अतस्त्वांविनाकिंचिन्नात्रास्तीति ॥ ४९ ॥ ननुब्रह्मादीन्विहायकिमितिमांशरणंप्राप्तास्तत्राहुः ॥ मातरिति ॥ निसर्गविबुधाआजानसिद्धादेवाब्रह्माद्याःपुंभ्योऽजेयत्वात्तेषुअर्पितंदैत्यसैन्यंयेनदुर्गेणतंविनिहत्य ॥ ५० ॥ विश्वंव्याप्येतिशेषः ॥ सुदृक्शोभनदृष्टिः ॥ ५१ ॥

चतुर्वर्गात्मिकात्वंवैचतुर्वर्गफलोदये ॥ त्वत्तःसर्वमिदंविश्वंत्वयिसर्वजगन्निधे ॥ ४८ ॥ यद्दृश्यंयददृश्यंचस्थूलसूक्ष्मस्वरूपतः ॥ तत्रत्वंशक्तिरूपेणकिंचिन्नत्वदृतेकचित् ॥ ४९ ॥ मातस्त्वयाद्यविनिहत्यमहासुरेंद्रंदुर्गंनिसर्गविबुधार्पितदैत्यसैन्यम् ॥ त्राताःस्मदेविसततंनमतांशरण्येत्वत्तोऽपरःकइहयंशरणंव्रजामः ॥ ५० ॥ लोकेतएवधनधान्यसमृद्धिभाजस्तेपुत्रपौत्रसुकलत्रसुमित्रवंतः ॥ तेषांयशःप्रसरचंद्रकरावदातंविश्वंभवेद्भवसियेषुसुदृक्कमीशे ॥ ॥ ५१ ॥ त्वद्भक्तिचेतसिजनेनविपत्तिलेशःक्लेशःक्ववानुभवतीनतिकृत्सुपुंसु ॥ त्वन्नामसंस्मृतिजुषांसकलायुषांक्वभूयःपुनर्जननिरिहत्रिपुरारिपत्नि ॥ ५२ ॥ चित्रंयदत्रसमरेसहिदुर्गदैत्यस्त्वद्दृष्टिपातममधिगम्यसुधानिधानम् ॥ मृत्योर्वशंत्वमगमाद्विदितंभवानिदुष्टोपितेदृशिगतःकुगतिंनयाति ॥ ५३ ॥ त्वच्छस्त्रवह्निशलभत्वमिताअपीहदैत्याःपतंगरुचिमाप्यदिवंव्रजंति ॥ संतःखलेष्वपिनदुष्टधियोयतःस्युःसाधुष्विवप्रणयिनःस्वपथंदिशंति ॥ ५४ ॥ प्राच्यांमृडानिपरिपाहिसदानतान्नोयाम्यामवप्रतिपदंविपदोभवानि ॥ प्रत्यग्दिशित्रिपुरतापनपत्निरक्षत्वंपाह्युदीचिनिजभक्तजनान्महेशि ॥ ५५ ॥ ब्रह्माणिरक्षसततंनतमौलिदेशंत्वंवैष्णविप्रतिकुलंपरिपालयाधः ॥ रुद्राग्निनैर्ऋतिसदागतिदिक्षुपांतुमृत्युंजयात्रिनयनात्रिपुरात्रिशक्त्यः ॥ ५६ ॥ पातुत्रिशूलममलेतवमौलिजान्नोभालस्थलंशशिकलामृडुमाभ्रुवौच ॥ नेत्रेत्रिलोचनवधूर्गिरिजाचनासामोष्ठंजयाचविजयात्वधरप्रदेशम् ॥ ५७ ॥ श्रोत्रद्वयंश्रुतिरवादशनावलिंश्रीश्चंडीकपोलयुगलंरसनांचवाणी ॥ पायात्सदैवचिबुकंजयमंगलानःकात्यायनीवदनमंडलमेवसर्वम् ॥ ५८ ॥ कंठप्रदेशमवतादिहनीलकंठीभूदारशक्तिरनिशंचकृकाटिकायाम् ॥ कौर्म्यंसदेशमनिशंभुजदंडमैंद्रीपद्माचपाणिफलकंनतिकारिणांनः ॥ ५९ ॥

ननुनिश्चितम् ॥ भवतीनतिकृत्सुत्वत्प्रणामकर्तृषु ॥ सकलायुषांसंपूर्णायुषाम् ॥ सफलायुषामितिवापाठः ॥ ५२ ॥ ५३ ॥ शलभत्वंपतंगत्वम् ॥ यदाहामरः ॥ समौपतंगशलभाविति ॥ पतंगरुचिंप्राप्यसूर्यमंडलंभित्त्वेत्यर्थः ॥ यदाहामरः ॥ पतंगौपक्षिसूर्यौचेति ॥ ५४ ॥ अवरक्ष ॥ प्रतिपदंप्रतिक्षणम् ॥ विपदोविपत्तेः ॥ प्रतिपदमित्यत्रप्रतिकुलमितिपाठेप्रतिभक्तकुलमित्यर्थः ॥ ॥ ५५ ॥ त्रिषुसृष्टिस्थितिप्रलयेषुशक्तिःसामर्थ्यंयस्याःसात्रिशक्तिः ॥ यथासं[illegible] ॥ ५६ ॥ [illegible] ॥ ५७ ॥ चिबुकमोष्ठाधरयोरधःप्रदेशम् ॥ ५८ ॥ भूदारशक्तिर्वाराही ॥

CC-0. Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कृकाटिकायामवटौ द्वितीयार्थेसप्तमी ॥ ग्रीवाशिरःसंधेःपश्चात्पृष्ठवंशोपरिभागेइत्यर्थः ॥ यदाहामरः ॥ वटुर्घाटाकृकाटिकेति ॥ पाणिफलकंहस्तखंडकंम् ॥ ५९ ॥ ६० ॥ उदरदरींजठर गुहाम् ॥ कटिंश्रोणिम् ॥ स्फिचौप्रोथौ ॥ यदाहामरः ॥ स्त्रियांस्फिचौकटिप्रोथाविति ॥ गुह्यंगुह्येंद्रियंशिश्नमितियावत् ॥ अपानमपानेंद्रियंगुदमित्यर्थः ॥ ६१ ॥ जानूजांनुनीऊरुपर्वणी इत्यर्थः ॥ यदाहामरः ॥ जानूरुपर्वाष्ठीवदस्त्रियामिति ॥ जंघेप्रसृतेजानुनोरधोभागौ ॥ गुल्फौपादग्रंथी ॥ चांद्रीचंद्रशक्तिःरोहिणीवा ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥

हस्तांगुलीःकमलजाविरजानखांश्चकक्षांतरंतरणिमंडलगातमोघ्नी ॥ वक्षःस्थलंस्थलचरीहृदयंधरित्रीकुक्षिद्वयंत्ववतुनःक्षणदाचरघ्नी ॥६०॥ अव्यात्सदो दरदरींजगदीश्वरीनोनाभिंनभोगतिरजात्वथपृष्ठदेशम् ॥ पायात्कटिंचविकटापरमास्फिचौनोगुह्यंगुहारणिरपानमपायहंत्री ॥६१॥ ऊरुद्वयंचविपुलाल लिताचजानूजंघेजवाऽवतुकठोरतरात्रगुल्फौ ॥ पादौरसातलचरांगुलिदेशमुग्राचांद्रीनखान्पदतलंतलवासिनीच ॥६२॥ गृहंरक्षतुनोलक्ष्मीःक्षेत्रंक्षेमकरी सदा ॥ पातुपुत्रान्प्रियकरीपायादायुःसनातनी ॥ ६३ ॥ यशःपातुमहादेवीधर्मंपातुधनुर्धरी ॥ कुलदेवीकुलंपातुसद्गतिंसद्गतिप्रदा ॥ ६४ ॥ रणेरा जकुलेद्यूतेसंग्रामेशत्रुसंकटे ॥ गृहेवनेजलादौचशर्वाणीसर्वतोऽवतु ॥ ६५ ॥ इतिस्तुत्वाजगद्धात्रींप्रणेमुश्चपुनःपुनः ॥ सर्वेसवासवादेवाःसर्षिगंधर्वचा रणाः ॥ ६६ ॥ ततस्तुष्टाजगन्मातातानाहसुरसत्तमान् ॥ स्वाधिकारान्सुराःसर्वेशासतुप्राग्यथायथा ॥ ६७॥ तुष्टाहमनयास्तुत्यानितरांतुयथार्थया ॥ वरमन्यंप्रदास्यामितच्छृणुध्वंसुरोत्तमाः ॥ ६८॥ ॥ दुर्गोवाच ॥ ॥ यःस्तोष्यतितुमांभक्त्यानरःस्तुत्यानयाशुचिः ॥ तस्याहंनाशयिष्यामिविपदं चपदेपदे॥६९॥एतत्स्तोत्रस्यकवचंपरिधास्यतियोनरः ॥ तस्यक्वचिद्भयंनास्तिवज्रपंजरगस्यहि ॥७०॥ अद्यप्रभृतिमेनामदुर्गेतिख्यातिमेष्यति ॥ दुर्गदै त्यस्यसमरेपातनादतिदुर्गमात्॥७१॥येमांदुर्गांशरणगानतेषांदुर्गतिःक्वचित् ॥ दुर्गास्तुतिरियंपुण्यावज्रपंजरसंज्ञिका ॥७२॥ अनयाकवचंकृत्वामाबिभे तुयमादपि ॥ भूतप्रेतपिशाचाश्चशाकिनीडाकिनीगणाः॥७३॥झोटिंगाराक्षसाःक्रूराविषसर्पाग्निदस्यवः ॥ वेतालाश्चापिकंकालग्रहाबालग्रहाअपि॥७४॥

यथार्थयासान्वयया ॥ यथातथेतिपाठेपिसएवार्थः ॥ ६८ ॥ ६९ ॥ ७० ॥ दुर्गेतिदुर्गनामानंदैत्यंहंतीतिदुर्गा ॥ ह्येतयस्याश्रवणमार्षम् ॥ यद्वा दुर्गमतिदुर्गमंदुर्गदैत्यस्यहननंघातनमस्याअस्तीति दुर्गा ॥ अर्शआदिभ्योऽच ॥ तदेतदाह ॥ दुर्गदैत्यस्येति ॥ ७१॥७२॥ माबिभेतुभयंमाकरोतु ॥ शाकिनीडाकिन्यौदुष्टग्रहविशेषौ ॥७३॥ झोटिंगाःपिशाचाः झाटिंगाइतिपाठेपिसएवार्थः ॥ वेताला

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भूतविशेषाः॥कंकालाःपिशाचभेदाः ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ रक्षामिति ॥ परिपरितःसर्वतोभावेनेत्यर्थः ॥ ८० ॥ तयातस्याइत्यर्थः ॥ तस्याइतिवापाठः ॥ ८१ ॥ ८२ ॥
नवरात्रमाश्विनशुक्लपक्षीयम् ॥ सुमतिंज्ञानम् ॥ सद्गतिमितिक्वचित् ॥ ८३ ॥ महाबलिरित्यत्रबलिशब्देनपक्वान्नानिगृह्यंते ॥ ८४ ॥ शारदंतदेव ॥ ८५ ॥ ८६ ॥८७॥ कालरात्रिमुखाःकालरात्रि

वातपित्तादिजनितास्तथाचविषमज्वराः ॥ दूरादेवपलायंतेश्रुत्वास्तुतिमिमांशुभाम् ॥७५॥ वज्रपंजरनामैतत्स्तोत्रंदुर्गाप्रशंसनम् ॥ एतत्स्तोत्रकृतत्राणे
वज्रादपिभयंनहि ॥ ७६ ॥ अष्टजप्तेनचानेनयोभिमंत्र्यजलंपिबेत् ॥ तस्योदरगतापीडाक्वापिनोसंभविष्यति ॥७७॥ गर्भपीडातुनोजातुभविष्यत्यभिमं
त्रणात् ॥ बालानांपरमाशांतिरेतत्स्तोत्रांबुपानतः ॥ ७८ ॥ यत्रसान्निध्यमेतस्यस्तवस्येहभविष्यति ॥ एतास्तुशक्तयःसर्वाःसर्वत्रसाहितामया ॥ ७९ ॥
रक्षांपरिकरिष्यंतिमद्भक्तानांममाज्ञया ॥ इतिदत्त्वावरान्देवीदेवेभ्योंतर्हितातदा ॥ ८० ॥ तेपिस्वर्गौकसःसर्वेस्वंस्वंस्वर्गंययुर्मुदा ॥ ॥ स्कंदउवाच ॥
इत्थंदुर्गाभवन्नामतयादेव्यामहामुने ॥ काश्यांसेव्यायथासाचतच्छृणुष्ववदामिते ॥८१॥ अष्टम्यांचचतुर्दश्यांभौमवारेविशेषतः ॥ संपूज्यासततंकाश्यां
दुर्गादुर्गतिनाशिनी ॥ ८२ ॥ नवरात्रंप्रयत्नेनप्रत्यहंसासमर्चिता ॥ नाशयिष्यतिविघ्नौघान्सुमतिंचप्रदास्यति ॥ ८३ ॥ महापूजोपहारैश्चमहाबलिनि
वेदनैः ॥ दास्यत्यभीष्टदासिद्धिंदुर्गाकाश्यांनसंशयः ॥ ८४ ॥ प्रतिसंवत्सरंतस्याःकार्यायात्राप्रयत्नतः ॥ शारदंनवरात्रंचसकुटुंबैःशुभार्थिभिः ॥८५॥
योनसांवत्सरींयात्रांदुर्गायाःकुरुतेकुधीः ॥ काश्यांविघ्नसहस्राणितस्यस्युश्चपदेपदे ॥ ८६ ॥ दुर्गाकुंडेनरःस्नात्वासर्वदुर्गार्तिहारिणीम् ॥ दुर्गासंपूज्यवि
धिवन्नवजन्माघमुत्सृजेत् ॥ ८७ ॥ सादुर्गाशक्तिभिःसार्धंकाशींरक्षतिसर्वतः ॥ ताःप्रयत्नेनसंपूज्याःकालरात्रिमुखानरैः ॥८८॥ रक्षंतिक्षेत्रमेतद्वैतथान्यान
वशक्तयः ॥ उपसर्गसहस्रेभ्यस्तावैदिग्देवताःक्रमात् ॥ ८९ ॥ शतनेत्रासहस्रास्यातथायुतभुजापरा ॥ अश्वारूढागजास्याचत्वरिताशववाहिनी ॥ ९० ॥
विश्वासौभाग्यगौरीचसृष्टाःप्राच्यादिमध्यतः ॥ एतायत्नेनसंपूज्याःक्षेत्ररक्षणदेवताः ॥९१॥ तथैवभैरवाश्चाष्टौदिक्ष्वष्टासुप्रतिष्ठिताः ॥ रक्षंतिसततंकाशीं
निर्वाणश्रीनिकेतनम् ॥ ९२ ॥ रुरुश्चंडोसितांगश्चकपालीक्रोधनस्तथा ॥ उन्मत्तभैरवस्तद्वत्क्रमात्संहारभीषणौ ॥ ९३ ॥ चतुःषष्टिस्तुवेतालामहाभी
षणमूर्तयः ॥ रुंडमुंडस्रजःसर्वेकर्त्रीखर्परपाणयः ॥ ९४ ॥ श्ववाहनारक्तमुखामहादंष्ट्रामहाभुजाः ॥ नग्नाविमुक्तकेशाश्चप्रमत्तारुधिरासवैः ॥ ९५ ॥

प्रधानाः ॥ ८८ ॥ ८९ ॥ त्वरितावेगवत्तरा ॥ ९० ॥ सृष्टानिसृष्टानियुक्ताइतियावत् ॥ देव्याइतिशेषः ॥ सृष्टेतिपाठेसृष्टिमार्गेणेत्यर्थः ॥ प्राच्यादिमध्यतःप्राच्यादिषुदिक्षुमध्येचेत्यर्थः ॥ ९१ ॥
निर्वाणश्रीनिकेतनंकैवल्यस्यरम्यंस्थानंकैवल्यलक्ष्म्यानिकेतनमितिवा ॥९२॥ क्रमात्प्राच्यादिक्रमात् ॥९३॥ रुंडमुंडस्रजःकबंधशिरोमालाः॥९४॥ रुधिरासवैःरुधिराण्येवआसवामद्यानितैः ॥९५॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कोटिशोरुधिराशनाइतिकश्चित् ॥ कोटिशोऽपरिमिताः ॥ ९६ ॥ तेषुचतुःषष्ट्यांकांश्चिद्वेतालान्दर्शयति विद्युज्जिह्वइतित्रयेण ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥
भूतावलीभूतपंक्तिर्भूतसमूहइत्यर्थः ॥ अवतिरक्षति ॥ ५ ॥ पदेपदेक्षणेक्षणे ॥ ६ ॥ दुर्गसंकटम् ॥ ७ ॥ ८ ॥ सहेति श्रोतारमपिरक्षिष्यंतीत्यर्थः ॥ ९ ॥ ११० ॥ अहंबुद्धिगृहीतानांरक्षणंप्रार्थ

नानारूपधराःसर्वेनानाशस्त्रास्त्रपाणयः ॥ तदाकारैश्चतद्भृत्यैःकोटिशःपरिवारिताः ॥ ९६ ॥ विद्युज्जिह्वोललज्जिह्वःक्रूरास्यःक्रूरलोचनः॥ उग्रोविकटदंष्ट्रश्चवक्रास्योवक्रनासिकः ॥ ९७ ॥ जंभकोजृंभणमुखोज्वालानेत्रोवृकोदरः ॥ गर्तनेत्रोमहानेत्रस्तुच्छनेत्रोंऽत्रमण्डनः ॥ ९८ ॥ ज्वलत्केशःकंबुशिराःखर्वग्रीवोमहाहनुः ॥ महानासोलंबकर्णःकर्णप्रावरणोनसः ॥९९॥ इत्यादयोमुनेक्षेत्रंदुर्वृत्तरुधिरप्रियाः ॥ त्रासयंतोदुराचारान्रक्षंतिपरितःसदा ॥१००॥ त्रैलोक्यविजयाद्याश्चज्वालामुख्यंतगाश्चयाः ॥ शक्तयोऽत्रमयाख्यातामुनेकलशसंभव ॥ १ ॥ ताःकाशींपरिरक्षंतिचतुर्दिक्षूद्यतायुधाः ॥ ताःसमर्च्याःप्रयत्नेनमहाविघ्नप्रशांतये ॥२॥ भैरवारुरुमुख्याश्चमहाभयनिवारकाः ॥ संपूज्याःसर्वदाकाश्यांसर्वसंपत्तिहेतवः ॥३॥ विद्युज्जिह्वप्रभृतयोवेतालाउग्ररूपिणः ॥ अत्युग्रानपिविघ्नौघान्हरिष्यंत्यर्चिताइह ॥ ४ ॥ तथाभूतावलीचात्रनानाभीषणरूपिणी ॥ उदायुधाऽवतिपुरींशतकोटिमितामुने ॥ ५ ॥ निर्वाणलक्ष्मीक्षेत्रस्यपालयित्रीपदेपदे ॥ एतावैदेवताःपूज्याःकाश्यांनिर्वाणकांक्षिभिः ॥ ६ ॥ श्रुत्वाध्यायमिमंपुण्यंनरोदुर्गजयाभिधम् ॥ नानाशक्तिसमायुक्तंदुर्गमाशुतरिष्यति ॥ ७ ॥ यएतेभैरवाःप्रोक्तायेवेतालाउदाहृताः ॥ तेषांनामानिचाकर्ण्यनरोविघ्नैर्नदूयते ॥ ८ ॥ अदृष्टाअपितेभूताएतदाख्यानपाठकम् ॥ रक्षिष्यंतिप्रयत्नेनसहश्रोतृजनेनच ॥ ९ ॥ तस्मात्सर्वप्रयत्नेनकाशीभक्तिपरैर्नरैः ॥ श्रोतव्यमिदमाख्यानंमहाविघ्ननिवारणम् ॥ ॥ ११० ॥ गृहेपियस्यलिखितमेतत्स्थास्यतिपूजितम् ॥ तस्यापदांसहस्राणिनाशयिष्यंतिदेवताः ॥ ११ ॥ काश्यांयस्यास्तिवैप्रेमतेनकृत्वाऽऽदरंगुरुम् ॥ श्रोतव्यमिदमाख्यानंवज्रपंजरसन्निभम् ॥११२॥ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडउत्तरार्धेदुर्गाविजयोनामद्विसप्ततितमोऽध्यायः ॥ ७२ ॥ अगस्त्यउवाच ॥ त्रिलोचनंसमासाद्यदेवदेवःषडाननः ॥ जगदंबिकयायुक्तःकिंचकाराशुतद्वद ॥ १ ॥ ॥ स्कन्दउवाच ॥ ॥ मुनेकलशजाख्यामियत्पृष्टंतन्निशामय ॥ विरजःसंज्ञकंपीठंयत्प्रोक्तंसर्वसिद्धिदम् ॥ २ ॥ तत्पीठदर्शनादेवविरजाजायतेनरः ॥ यत्रास्तितन्महालिंगंवाराणस्यांत्रिलोचनम् ॥ ३ ॥

यित्वाममबुद्धिगृहीतानामपितत्प्रार्थयति ॥ गृहेपीति ॥ ११ ॥ गुरुंमहांतम् ॥ ११२ ॥ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांद्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ त्रिसप्ततितमेध्याये
श्रीमदोंकारवर्णनम् ॥ क्रियतेतीवपापघ्नंमहाश्चर्यप्रदंनृणाम् ॥१॥ नंदिनंसन्निदेश्येतिमृडान्यासहितोमृडः ॥ ययौत्रैविष्टपंक्षेत्रंमुक्तिबीजप्ररोहणमित्युक्तमतःपृच्छति ॥ त्रिलोचनामिति ॥१॥२॥३॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पिलिपिलेतिलक्ष्म्याएवनामांतरम् ॥ ४ ॥ तीर्थलिंगयोस्त्रिविष्टपंनाम ॥ त्रिविष्टपनामनिरुक्त्यादर्शयति ॥ विष्टपेति ॥ विष्टपत्रितयेभुवनत्रयमध्ये ॥ तत्रेतितीर्थलिंगयोर्निरुक्तिः ॥ यद्यतः ॥ ॥ ५ ॥ महत्तरंश्रेष्ठतमंच ॥ पाठांतरंस्पष्टम् ॥ ६ ॥ ७ ॥ सर्वोपकारार्थमज्ञेवपृच्छति ॥ देवदेवेति नवभिः देवदेवेतिसंबोधनानिभक्त्युद्रेकख्यापकानि ॥ सर्वदसर्वगेत्यत्रसर्वसमर्चितेति कचित् ॥८॥९॥ विष्वक्सर्वव्यापीत्यर्थः ॥ केनब्रह्मणायेनकेनापिवाऽवगम्यतेकाकानावगम्यतएवेत्यर्थः ॥१०॥ स्वयंभून्यपीत्यत्रस्वभूमिष्ठानीतिपाठेस्वस्थानस्थितानि ॥ स्वयंभुस्थापितानीतिपाठे

तीर्थंपिलिपिलाख्यंतद्द्युनद्यंभसिविश्रुतम् ॥ सर्वतीर्थमयंतीर्थंतत्काश्यांपरिगीयते ॥ ४ ॥ विष्टपत्रितयांतर्येदेवार्षिमनुजोरगाः ॥ ससरित्पर्वतारण्याःसंतितेतत्रयन्मुने ॥ ५ ॥ तदारभ्यचतत्तीर्थंतच्चलिंगंत्रिलोचनम् ॥ त्रिविष्टपमितिख्यातमतोहेतोर्महत्तरम् ॥ ६ ॥ त्रिविष्टपस्यलिंगस्यमहिमोक्तःपिनाकिना ॥ जगज्जनन्याःपुरतोयथावच्मितथामुने ॥७॥ ॥ देव्युवाच ॥ ॥ देवदेवजगन्नाथशर्वसर्वदसर्वग ॥ सर्वदृक्सर्वजनककिंचित्पृच्छामितद्वद ॥ ॥८॥ इदंतवप्रियंक्षेत्रंकर्मबीजमहौषधम् ॥ नैःश्रेयस्याःश्रियोगेहंममापिप्रीतिदंमहत् ॥९॥ यत्क्षेत्ररजसोप्यग्रेत्रिलोक्यपितृणायते ॥ तस्याखिलस्यमहिमाविष्वक्केनावगम्यते ॥ १० ॥ यानीहसंतिलिंगानितानिसर्वाण्यसंशयम् ॥ निर्वाणकारणान्येवस्वयंभून्यपितान्यपि ॥ ११ ॥ यद्यप्येवंतथापीशविशेषंवक्तुमर्हसि ॥ काश्यामनादिसिद्धानिकानिलिंगानिशंकर ॥१२॥ यत्रदेवःसदातिष्ठेत्संवर्तेऽपिसवल्लभः ॥ यैरियंप्रथितिंप्राप्ताकाशीमुक्तिपुरीतिच ॥ ॥ १३ ॥ येषांस्मरणतोप्यत्रभवेत्पापस्यसंक्षयः ॥ दर्शनस्पर्शनाभ्यांचस्यातांस्वर्गापवर्गकौ ॥ १४ ॥ येषांसमर्चनादेवमध्येजन्मसकृद्विभो ॥ लिंगानिपूजितानिस्युःकाश्यांसर्वाणिनिश्चितम् ॥१५॥ विधायमय्यनुक्रोशंकारुण्यामृतसागर ॥ एतदाचक्ष्वमेशंभोपादयोःप्रणतास्म्यहम् ॥१६॥ इत्याकर्ण्यमहेशानस्तस्यादेव्याःसुभाषितम् ॥ कथयामासविंध्यारेमहालिंगानिसत्तम ॥१७॥ यन्नामाकर्णनादेवक्षीयंतेपापराशयः ॥ प्राप्यतेपुण्यसंभारःकाश्यांनिर्वाणकारणम् ॥ १८ ॥ ॥ देवदेवउवाच ॥ ॥ शृणुदेविपरंगुह्यंक्षेत्रेऽस्मिन्मुक्तिकारणम् ॥ इदंविदंतिनैवापिब्रह्मनारायणादयः ॥ १९ ॥ असंख्यातानिलिंगानिपार्वत्यानंदकानने ॥ स्थूलान्यपिचसूक्ष्माणिनानारत्नमयानिच ॥ २० ॥ नानाधातुमयानीशेदार्षदान्यप्यनेकशः ॥ स्वयंभून्यप्यनेकानिदेवर्षिस्थापितान्यहो ॥२१॥ सिद्धचारणगंधर्वयक्षरक्षोर्चितान्यपि ॥ असुरोरगमर्त्यैश्चदानवैरप्सरोगणैः ॥२२॥ दिग्गजैर्गिरिभिस्तीर्थैर्ऋक्षवानरकिन्नरैः ॥ पतत्रिप्रमुखैर्देवैस्स्वस्वनामांकितानिवै ॥२३॥ प्रतिष्ठितानियानीहमुक्तिहेतूनितान्यपि ॥ अदृश्यान्यपिदृश्यानिदुरवस्थान्यपिप्रिये ॥२४॥

स्वयंभूनिस्थापितानिचेत्यर्थः ॥ ११ ॥ १२ ॥ यत्रकाश्याम् ॥ सवल्लभःसशक्तिकः ॥ १३ ॥ १४ ॥ जन्मनोमध्येमध्येजन्मसकृत्समर्चनादित्यन्वयः ॥ १५ ॥ १६ ॥ अगस्त्यस्यविंध्यारित्वंतद्वृद्धिविघातकत्वाज्ज्ञेयम् ॥ १७ ॥ १८ ॥ १९ ॥ असंख्यातानिलिंगानीत्यादीनांपूज्यानीतिषष्ठेनान्वयः ॥२० ॥ २१ ॥ २२ ॥ २३ ॥ दुरवस्थानीति ॥ यवनादिभिरतिशयेनदुर्दुष्टाअवस्थायेषां



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तानितथा ॥ २४ ॥ परार्द्धशतसंख्यानिपरार्धंब्रह्मणःपंचाशद्वर्षंतन्मानेनमानुषदिनसंख्यासंख्याविशेषोवातच्छतसंख्यानिपरार्धशतसंख्यानि ॥ २५ ॥ तिष्येकलौ ॥ २६ ॥ गणनेति ॥ हेगौरिममभक्तजनैरिहकाश्यांयानिलिंगानिप्रतिष्ठितानितेषांगणनाअंतोनास्ति ॥ उपसंहरति ॥ अतस्तेषांसंख्यानाविद्यतेइति ॥ गणनादिवसादर्वागिति ॥ ःयस्मिन्दिवसेमयागणनाकृतातस्मादिव

भग्नान्यपिचकालेनतानिपूज्यानिसुंदरि ॥ परार्धशतसंख्यानिगणितान्येकदामया ॥ २५ ॥ गंगांभस्यपितिष्ठंतिषष्टिकोटिमितानिहि ॥ सिद्धलिंगानितानीशोतिष्येऽदृश्यत्वमाययुः ॥ २६ ॥ गणनादिवसादर्वाङ्ममभक्तजनैःप्रिये ॥ प्रतिष्ठितानियानीहतेषांसंख्यानविद्यते ॥२७॥ त्वयातुयानिपृष्टानियैरिदंक्षेत्रमुत्तमम् ॥ तानिलिंगानिवक्ष्यामिमुक्तिहेतूनिसुंदरि ॥ २८ ॥ कलावतीवगोप्यानिभविष्यंतिगिरींद्रजे ॥ परंतेषांप्रभावोयःस्वंस्वंस्थानंनहास्यति ॥ २९ ॥ कलिकल्मषपुष्टाययेदुष्टानास्तिकाःशठाः ॥ एतेषांसिद्धलिंगानांज्ञास्यंत्याख्यामपीहन ॥ ३० ॥ नामश्रवणतोपीहयल्लिंगानांशुभानने ॥ वृजिनानिक्षयंयांतिवर्धंतेपुण्यराशयः ॥ ३१ ॥ ओंकारःप्रथमंलिंगंद्वितीयंचत्रिलोचनम् ॥ तृतीयश्चमहादेवःकृत्तिवासाश्चतुर्थकम् ॥ ॥ ३२ ॥ रत्नेशःपंचमंलिंगंषष्ठंचंद्रेश्वराभिधम् ॥ केदारःसप्तमंलिंगंधर्मेशश्चाष्टमंप्रिये ॥ ३३ ॥ वीरेश्वरंचनवमंकामेशंदशमंविदुः ॥ विश्वकर्मेश्वरंलिंगंशुभमेकादशंपरम् ॥ ३४ ॥ द्वादशंमणिकर्णीशमविमुक्तंत्रयोदशम् ॥ चतुर्दशंमहालिंगंममविश्वेश्वराभिधम् ॥ ३५ ॥ प्रियेचतुर्दशैतानिश्रियोहेतूनिसुंदरि ॥ एतेषांसमवायोयंमुक्तिक्षेत्रमिहेरितम् ॥ ३६ ॥ देवताःसमधिष्ठात्र्यःक्षेत्रस्यास्यपराइमाः ॥ आराधिताःप्रयच्छंतिनृभ्योनैःश्रेयसींश्रियम् ॥३७॥ आनंदकाननेमुक्त्यैप्रोक्तान्येतानिसुंदरि ॥ प्रियेचतुर्दशेज्यानिमहालिंगानिदेहिनाम् ॥ ३८ ॥ प्रतिमासंसमारभ्यतिथिंप्रतिपदंशुभाम् ॥ एतेषांलिंगमुख्यानांकार्यायात्राप्रयत्नतः ॥३९॥ अनाराध्यमहादेवमेषुलिंगेषुकुंभज ॥ कःकाश्यांमोक्षमाप्नोतिसत्यंसत्यंपुनःपुनः ॥४०॥ तस्मात्सर्वप्रयत्नेनकाशीफलमभीप्सुभिः ॥ पूज्यान्येतानिलिंगानिभक्त्यापरमयामुने ॥४१॥ ॥ अगस्त्यउवाच ॥ ॥ एतान्येवकिमन्यानिमहालिंगानिषण्मुख ॥ निर्वाणकारणानीहयदिसंतितदावद ॥ ४२ ॥ ॥ स्कंदउवाच ॥ ॥ अन्यान्यपिचसंतीहमहालिंगानिसुव्रत ॥ कलिप्रभावाद्गुप्तानिभविष्यंत्येवतानिवै ॥ ॥ ४३ ॥ यस्येश्वरेसदाभक्तिर्यःकाशीतत्त्ववित्तमः ॥ सएवैतानिलिंगानिवेत्स्यत्यन्योनकश्चन ॥ ४४ ॥ येषांनामग्रहेणापिकलिकल्मषसंक्षयः ॥ अमृतेशस्तारकेशोज्ञानेशःकरुणेश्वरः ॥ ४५ ॥

सादर्वागूर्ध्वमित्यतिरोहितएवार्थः ॥ २७ ॥ २८ ॥ नंहास्यतिनत्यक्ष्यति ॥ २९ ॥ पुष्टाःस्थूलाव्यामावा ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ समवायःसमाहारोमेलनमितियावत् ॥ ॥ ३६ ॥ नैःश्रेयसींकैवल्याख्याम् ॥ ३७ ॥ देहिनांमुक्तयेइत्यन्वयः ॥ ३८ ॥ प्रतिमासमितिस्कंदोक्तिः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ पार्वत्याईश्वरोक्तान्येवान्यानिचतुर्दश

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

लिंगान्याह ॥ अमृतेशइति ॥ ४५ ॥ लांगलःलांगलीश्वरः ॥ ब्रह्मेशलांगलीशौचेतिक्वचित् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ काशीकोशोऽविमुक्तशरीरम् ॥ सारइतिक्वचित् ॥ ५० ॥ ५१ ॥ ॥ ५२ ॥ महतीभक्तिर्येषांतेमहाभक्तयस्तेषांकृपावशात् ॥ महाभक्तेतिपाठेस्पष्टएवार्थः ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ निरेनसानिष्पापेन ॥ ५७ ॥ ५८ ॥ अग्रजईश्वरस्यमुखद्वारात्प्रथमतो



मोक्षद्वारेश्वरश्चैवस्वर्गद्वारेश्वरस्तथा ॥ ब्रह्मेशोलांगलश्चैववृद्धकालेश्वरस्तथा ॥ ४६ ॥ वृषेशश्चैवचंडीशोनंदिकेशोमहेश्वरः ॥ ज्योतीरूपेश्वरंलिंगंख्यात मत्रचतुर्दशम् ॥ ४७ ॥ काश्यांचतुर्दशैतानिमहालिंगानिसुंदरि ॥ इमानिमुक्तिहेतूनिलिंगान्यानंदकानने ॥ ४८ ॥ कलिकल्मषबुद्धीनांनाख्येया निकदाचन ॥ एतान्याराधयेद्यस्तुलिंगानीहचतुर्दश ॥ ४९ ॥ नतस्यपुनरावृत्तिःसंसाराध्वनिकर्हिचित् ॥ काशीकोशोऽयमतुलोनप्रकाश्योयतस्ततः ॥ ॥ ५० ॥ एतल्लिंगाभिधादेविमहापद्यपिदुःखहृत् ॥ रहस्यंपरमंचैतत्क्षेत्रस्यास्यवरानने ॥ ५१ ॥ चतुर्दशापिलिंगानिमत्सान्निध्यकराणिहि ॥ अवि मुक्तस्यहृदयमेतदेवगिरींद्रजे ॥ ५२ ॥ इमानियानिलिंगानिसर्वेषांमुक्तिदानिहि ॥ एकैकभुवनस्येहसारमादायसर्वतः ॥ मयैतानिकृतान्येवमहाभ क्तिकृपावशात् ॥ ५३ ॥ अस्मिन्क्षेत्रेध्रुवंमुक्तिरितियाप्रथितिःप्रिये ॥ कारणंतत्रलिंगानिममैतानिचतुर्दश ॥५४॥ तएवव्रतिनःकांततएवचतपस्विनः॥ ध्यातान्येतानियैर्भक्तैर्लिंगान्यानंदकानने ॥५५॥ तएवाभ्यस्तसद्योगादत्तदानास्तएवहि ॥ काश्यामिमानिलिंगानियैर्दृष्टान्यपिदूरतः ॥ ५६॥ इष्टापूर्ता श्रयेधर्माःप्रणीतामुनिसत्तमैः ॥ तेसर्वेतेनविहितायावज्जीवंनिरेनसा ॥ ५७ ॥ येनाविमुक्तमासाद्यमहालिंगानिपार्वति ॥ सकृदभ्यर्चितानीहसमुक्तो नात्रसंशयः ॥ ५८ ॥ ॥ स्कंदउवाच ॥ ॥ अन्यान्यपिचविंध्यारेदेव्यैप्रोक्तानिशंभुना ॥ स्वभक्तानांहितार्थायतान्यथाकर्णयाग्रज ॥ ५९ ॥ शैलेशःसंगमेशश्चस्वर्लीनोमध्यमेश्वरः ॥ हिरण्यगर्भईशानोगोप्रेक्षोवृषभध्वजः ॥ ६० ॥ उपशांतशिवोज्येष्ठोनिवासेश्वरएवच ॥ शुक्रेशोव्याघ्रलिंगं चजंबुकेशंचतुर्दशम् ॥ ६१ ॥ मुनेचतुर्दशैतानिमहांत्यायतनानिवै ॥ एतेषामपिसेवातोनरोमोक्षमवाप्नुयात् ॥ ६२ ॥ चैत्रकृष्णप्रतिपदंसमारभ्यप्रय ततः ॥ आचतुर्दशिपूज्यानिलिंगान्येतानिसत्तमैः ॥ ६३ ॥ एतेषांवार्षिकीयात्रासुमहोत्सवपूर्वकम् ॥ कार्यामुमुक्षुभिःसम्यक्क्षेत्रसंसिद्धिदायिनी ॥ ॥ ६४ ॥ मुनेचतुर्दशैतानिमहालिंगानियत्नतः ॥ दृष्ट्वानजायतेजंतुःसंसारेदुःखसागरे ॥६५॥ क्षेत्रस्यपरमंतत्त्वमेतदेवप्रियेध्रुवम् ॥ संसाररोगग्रस्ताना मिदमेवमहौषधम् ॥ ६६ ॥ क्षेत्रस्योपनिषच्चैषामुक्तिबीजमिदंपरम् ॥ कर्मकाननदावाग्निरेषालिंगावलिःप्रिये ॥ ६७ ॥



जातः ॥ द्विजेतिवापाठः ॥ ५९ ॥ महायतनानितृतीयचतुर्दशलिंगान्याह ॥ शैलेशइति ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ उपनिषद्रहस्यम् ॥ लिंगावलिर्लिंगपंक्तिः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

समूहइत्यर्थः ॥ ६७ ॥ ६८ ॥ ६९ ॥ उक्तानुवादपूर्वकंप्रत्येकंसर्वलिंगानांमहिमानंपृच्छति ॥ रहस्यमिति ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ आराधिआराधितःपूजितः ॥७४ ॥ विधायकृत्वा ॥ ॥ ७५ ॥ तपःकरणसमयेपर्णमपिनभक्षितमित्यपर्णा ॥ तदुक्तम् ॥ स्वयंविशीर्णद्रुमपर्णवृत्तितापराहिकाष्ठातपसस्तयापुनः ॥ तदप्यपाकीर्णमतःप्रियंवदांवदंत्यपर्णामितितांपुराविदइति ॥ तस्याः संबोधनमपर्णेइति ॥ अनेनतवैतत्कथाश्रवणेधिकारोस्तीतिसूचयति ॥ ७६ ॥ परंतपइत्यन्वयः ॥ परंसमाधिमितिवा ॥ ७७ ॥ पुरोऽग्रतः ॥ विद्योतितहरिन्मुखंप्रकाशितादिक्समूहम् ॥ यदाहामरः ॥ दिशस्तुककुभःकाष्ठाआशाश्चहरितश्चताइति ॥ ७८ ॥ किंतज्ज्योतिरित्यतआह ॥ यदंतरिति ॥ अंतरंतःकरणे ॥ आविःप्रकटम् ॥ निर्व्याजेनफलाभिसंधिरहितेनसजातीयविजातीय प्रत्ययशून्येनेतिवा ॥ ७९ ॥ नन्वसंप्रज्ञातसमाधिस्थस्यब्रह्मणोज्योतिषोबहिःप्राकटचंदुर्घटमित्याशंक्याह ॥ योभूदिति ॥ स्फुटतोविदारंप्राप्नुवतोभूमिभागाद्यश्चटचटाशब्दोऽभूत्तच्छब्दाद्ब्रह्माक्रमतः

एकैकस्यास्यलिंगस्यमहिमाद्यंतवर्जितः ॥ मयैवज्ञायतेदेविसम्यङ्नान्येनकेनचित् ॥६८॥ इतिश्रुत्वामुनेप्राहदेवीहृष्टतनूरुहा ॥ प्रणम्यदेवमीशानंसर्व ज्ञंसर्वदंशिवम् ॥ ६९ ॥ ॥ देव्युवाच ॥ ॥ रहस्यंपरमंकाश्यांयदेतत्समुदीरितम् ॥ तच्छ्रुत्वोत्सुकतांप्राप्तंमनोमेतीववल्लभ ॥ ७० ॥ यदुक्तंलिंगमे कैकंमहासारतरंपरम् ॥ काश्यांपरमनिर्वाणकारणंकारणेश्वर ॥ ७१ ॥ प्रत्येकंमहिमानंमेब्रूह्येषांभुवनेश्वर ॥ चतुर्दशानांलिंगानांश्रवणादघहारिणाम् ॥ ॥ ७२ ॥ ओंकारेशस्यलिंगस्यकथमत्रसमागमः ॥ अतिपुण्यतमात्तस्मात्क्षेत्रादमरकंटकात् ॥ ७३ ॥ किमात्मकोऽयमोंकारोमहिमास्यचकोहर ॥ केनाराधिपुराचैषददावाराधितश्चाकिम् ॥ ७४ ॥ मृडानीवाक्सुधामेतांविधायश्रुतिगोचराम् ॥ कथामकथयद्देवओंकारस्यमहाद्भुताम् ॥ ७५ ॥ ॥ देवदेवउवाच ॥ ॥ कथामाकर्णयापर्णेवर्णयामितवाग्रतः ॥ यथोंकारस्यलिंगस्यप्रादुर्भावइहाभवत् ॥७६॥ पुरानंदवनेचात्रब्रह्मणाविश्वयोनिना ॥ तपस्ततंमहादेविसमाधिंदधतापरम् ॥ ७७ ॥ पूर्णेयुगसहस्रेऽथभित्त्वापातालसप्तकम् ॥ उदतिष्ठत्पुरोज्योतिर्विद्योतितहरिन्मुखम् ॥ ७८ ॥ यदंतरावि रभवन्निर्व्याजेनसमाधिना॥तदेवपरमंधामबहिराविरभूद्विधेः ॥७९॥ योभूच्चटचटाशब्दःस्फुटतोभूमिभागतः ॥ तच्छब्दाद्व्यसृजद्वेधाःसमाधिंक्रमतोवशी ॥ ॥ ८० ॥ स्रष्टाविसृष्टतद्ध्यानोयावदुन्मील्यलोचने ॥ पुरःपश्येद्ददर्शाग्रेतावदक्षरमादिमम् ॥ ८१ ॥ अकारंसत्त्वसंपन्नमृक्क्षेत्रंसृष्टिपालकम् ॥ नाराय णात्मकंसाक्षात्तमःपारेप्रतिष्ठितम् ॥ ८२ ॥ उकारमथतस्याग्रेरजोरूपंयजुर्जनिम् ॥ विधातारंसमस्तस्यस्वाकारमिवबिंबितम् ॥ ८३ ॥

शनैःशनैःसमाधिंत्यक्तवानित्यर्थः ॥ स्फुटितइतिपाठेशब्दविशेषणम् ॥ अत्युत्कटइत्यर्थः ॥ ८०॥ स्रष्टेति ॥ ब्रह्मात्यक्तनिर्गुणब्रह्मध्यानोनेत्रेविकचय्ययावत्पुरःपश्येत्पश्यतितावदादिममादौभवंप्रण वमक्षरंददर्शेत्यर्थः ॥ तथाचश्रीभागवते ॥ ततोभूत्त्रिवृदोंकारइति ॥८१॥ प्रणवस्वरूपंकथयंस्तंविशिनष्टि ॥ अकारमितिसार्धत्रयेण ॥ अकारोकारमकारनादविंद्वात्मकोहिप्रणवस्तत्राकारार्थमाह ॥ अकारमिति ॥ सत्त्वसंपन्नंसत्त्वगुणोपेतम् ॥ ऋक्क्षेत्रमृग्वेदाविष्ठानंतत्कारणमित्यर्थः ॥ तमःपारेऽज्ञानपारेसब्रह्माददर्शेतितृतीयेनान्वयः ॥ ८२ ॥ उकारार्थमाह ॥ उकारमिति ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथानंतरंतस्याग्रेऽकाराग्रेरजोरूपंरजोगुणव्याप्तंयजुर्जनियजुर्वेदोत्पत्तिहेतुंस्वाकारंब्रह्मशरीरंविंबितंप्रतिबिंबितम् ॥ चिंतितमितिपाठेभावितमित्यर्थः ॥ ८३ ॥ नीरवंनिःशब्दंयद्ध्वांतमंधतमसंतस्य यत्संकेतसदनंसंकेतस्थानंतदाभंतत्तुल्यम् ॥ नीरवदितिपाठेलवणोदधिजलवदित्यर्थः ॥ तथाचहरिवंशे ॥ महतस्तमसःपारइति ॥ तमसस्तमःप्रायक्षारसमुद्रस्येत्यर्थः ॥ मकारार्थमाह ॥ तदग्रतः उकारस्याग्रेतमोगुणेनरूप्यतइतितमोरूपम् ॥ ८४ ॥ नादार्थमाह ॥ अथेति ॥ तत्पुरतोमकाराग्रतः ॥ ध्याताध्यानकर्ता ॥ धातेतिक्वचित् ॥ व्यधादकरोत् ॥ स्वनयनातिथिंस्वनेत्रगोचरम् ॥ ॥ ८५ ॥ विश्वरूपमयाकारंप्रपंचस्वरूपाकृतिः ॥ विश्वरूपमथोंकारमितिपाठेऽथेत्यर्थांतरे ॥ ओंकारमित्यवयवावयविनोरभेदाभिप्रायेण ॥ अनाख्यनादःपरातस्यसदनमाश्रयंकारणमित्यर्थः ॥ तदुक्तम् ॥ वैखरीशब्दनिष्पत्तिर्मध्यमाश्रुतिगोचरा ॥ उद्यतार्थाचपश्यंतीसूक्ष्मावागनपायिनीति ॥ सूक्ष्मापरा ॥ अनपायिन्यनाख्येत्यर्थः ॥ ८६ ॥ शब्दब्रह्मवेदः ॥ विंद्वर्थमाह ॥ अथोपरिष्टा दिति ॥ उपरिष्टादुपरि ॥ परात्प्रधानादेःपरमुत्कृष्टम् ॥ ८७ ॥ तत्कुतइत्यतआह ॥ कारणमिति ॥ कारणानांप्रधानादीनाम् ॥ अतएवजगद्योनिंतंपरम् ॥ विधिर्ब्रह्मा ॥ विलोकयांचक्रेददर्श ॥

नीरवध्वांतसंकेतसदनाभंतदग्रतः ॥ मकारंसददर्शाथतमोरूपंविशेषतः ॥ ८४ ॥ साम्नोयोनिंलयेहेतुंसाक्षाद्रुद्रस्वरूपिणम् ॥ अथतत्पुरतोध्याताव्यधा त्स्वनयनातिथिम् ॥ ८५ ॥ विश्वरूपमयाकारंसगुणंवापिनिर्गुणम् ॥ अनाख्यनादसदनंपरमानंदविग्रहम् ॥८६॥ शब्दब्रह्मेतियत्ख्यातंसर्ववाङ्मयका रणम् ॥ अथोपरिष्टान्नादस्यबिंदुरूपंपरात्परम् ॥ ८७ ॥ कारणंकारणानांचजगद्योनिंचतंपरम् ॥ विधिर्विलोकयांचक्रेतपसागोचरीकृतम् ॥ ८८ ॥ अवनादोमितिख्यातंसर्वस्यास्यप्रभावतः ॥ भक्तमुन्नयतेयस्मात्तदोमितियईरितः ॥ ८९ ॥ अरूपोपिसरूपाव्यःसधात्रानेत्रगीकृतः ॥ तारयेद्यद्भवांभो धेःस्वजपासक्तमानसम् ॥ ततस्तारइतिख्यातोयस्तंब्रह्माव्यलोकयत् ॥ ९० ॥ प्रणूयतेयतःसर्वैःपरनिर्वाणकामुकैः ॥ सर्वेभ्योभ्यधिकस्तस्मात्प्रणवो यैःप्रकीर्तितः ॥ ९१ ॥ स्वसेवितारंपुरुषंप्रणयेद्यःपरंपदम् ॥ अतस्तंप्रणवंशांतंप्रत्यक्षीकृतवान्विधिः ॥ ९२ ॥ त्रयीमयस्तुरीयोयस्तुर्यातीतोखिला त्मकः ॥ नादबिंदुस्वरूपोयःसप्रैक्षिद्विजगामिना ॥ ९३ ॥ प्रावर्तंतयतोवेदाःसांगाःसर्वस्ययोनयः ॥ सवेदादिःपद्मभुवापुरस्तादवलोकितः ॥ ९४ ॥ वृषभोयास्त्रिधाबद्धोरोरवीतिमहोमयः ॥ सनेत्रविषयीचक्रेपरमःपरमेष्ठिना ॥ ९५ ॥

जगदासिंचकमितिपाठेजगदासिंचतिपालयतीतितथातम् ॥ ८८ ॥ एवमवयवार्थनिरूपणेनैवावयविनमोंकारंनिरूप्यओंनामद्विधानिर्वक्ति ॥ अवनादितिसार्धेन ॥ ८९ ॥ नेत्रगीकृतश्चक्षुर्विषयीकृतः ॥ तारनामनिर्वक्ति॥तारयेदिति ॥ ९० ॥ प्रणवनामद्विधानिर्वक्तिप्रणूयतइतिद्वाभ्याम् ॥ प्रणूयतेप्रकर्षेणस्तूयते ॥ प्रणयेत्प्रापयेत् ॥ ९१ ॥ ९२ ॥ त्रयीमयोवेदत्रयात्मकोब्रह्मविष्णुरुद्रात्मकोवा ॥ असंगोनिर्विकारः ॥ परात्मातुरीयः ॥ तदुक्तम् ॥ अहंभावानहंभावौत्यक्त्वासदसतीतथा ॥ यदसक्तंसमंस्वच्छंस्थितंतत्तुर्यमुच्यतेइति ॥ वस्तुतस्तुरीयातीतः ॥ अविद्योपहितविश्वाद्यपेक्षयातुरीय त्वस्यकल्पितत्वात् ॥ माययाऽखिलात्मकः ॥ प्रैक्षिप्रेक्षितोदृष्टइतियावत् ॥ द्विजोऽत्रहंसस्तद्गामिनाब्रह्मणेत्यर्थः ॥ ९३ ॥ सांगाःषड्भिःशिक्षाकल्पव्याकरणनिरुक्तच्छंदोज्योतिर्भिरंगैःसहिताः ॥ ॥ ९४ ॥ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहादेवोमर्त्याआविवेशेतिश्रुत्युक्तोमहेशोब्रह्मणादृष्टइत्याह वृषभोयइतिद्वयेन ॥ योवृषभोमंत्रोक्तोयज्ञरूपो



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विष्णुरितियावत् ॥ त्रिधाबद्धोमंत्रब्राह्मणकल्पैःसंबद्धइत्यर्थः ॥ रोरवीतिपुनःपुनरत्यर्थंवारौतीत्यर्थः ॥ रोरवणंनामसवनक्रमेणऋग्भिर्यजुर्भिःसामभिः ॥ यदेनमृग्भिःशंसंतियजुर्भिर्यजंतिसामभिः
स्तुवंतीति॥महोमयस्तेजोरूपः ॥ ९५ ॥ शृंगाःशृंगाणिचत्वारिऋग्यजुःसामाथर्वरूपाणि ॥ हस्तासोहस्ताः ॥ सप्तहस्ताःसप्तछंदांसि ॥ द्वेशीर्षेप्रायणीयोदयनीये ॥ त्रयःपादास्त्रीणिसवनानि ॥ एवं
भूतोदेवःसब्रह्मणाऐक्षतेतिद्वयोरन्वयः ॥ ९६ ॥ जगदभिन्नोपादानंब्रह्मब्रह्मणादृष्टमित्याह ॥ यदंतरिति ॥ पुनर्भूयोपिलयादिप्रवाहस्यानादित्वात् ॥ तद्बीजंतस्याऽखिलस्यभूतादेःकारणम् ॥
स्वयंतुबीजरहितम् ॥ ९७ ॥ लिंगनामनिर्वचनपूर्वकंलिंगशब्दाभिधेयंब्रह्मब्रह्मणादृष्टमित्याह ॥ लीनमिति ॥ ९८ ॥ पंचार्थाःअस्तिभातिप्रियंरूपंनामचेत्येवंरूपाः ॥ अस्तिभातिप्रियंरूपंनामचे
त्यर्थपंचकमित्युक्तेः ॥ चत्वारोवेदाइतिहासपुराणानिचेतिपंचब्रह्माणि ॥ इतिहासपुराणानिपंचमोवेदउच्यतइत्युक्तेः ॥ रामलक्ष्मणभरतशत्रुघ्नाजानकीचेत्येवंरूपाणिवासुदेवसंकर्षणप्रद्युम्नानिरुद्धा
रुक्मिणीचेत्येवंरूपाणिवातन्मयंतत्स्वरूपम् ॥ अःआदिर्येषांपंचानामितितद्गुणसंविज्ञानोबहुव्रीहिः ॥ अकारोकारमकारार्धमात्राबिंदुनादाइतिसमासार्थः ॥ तन्मयंतत्स्वरूपम् ॥ तथाचश्रुतिः ॥
अकारःप्रथमाक्षरोभवत्युकारोहिद्वितीयाक्षरोभवतिमकारस्तृतीयाक्षरोभवत्यर्धमात्रश्चतुर्थाक्षरोभवतिबिंदुःपंचमाक्षरोभवतिनादःषष्ठाक्षरोभवतीति ॥ निरैक्षिनितरांदृष्टमित्यर्थः ॥ ९९ ॥ पंचाक्षरंपंचा

शृंगाश्चत्वारियस्यासन्हस्तासःसप्तएवच ॥ द्वेशीर्षेचत्रयःपादाःसदेवोविधिनैक्षत ॥ ९६ ॥ यदंतर्लीनमखिलंभूतंभाविभवत्पुनः ॥ तद्बीजंबीजरहितंद्रु
हिणेनविलोकितम् ॥ ९७ ॥ लीनंमृग्येतयत्रैतदाब्रह्मस्तंबभाजनम् ॥ अतःसभाज्यतेसद्भिर्यल्लिंगंतद्विलोकितम् ॥९८॥ पंचार्थायत्रभासंतेपंचब्रह्ममयं
हियत् ॥ आदिपंचस्वरूपंयन्निरैक्षिब्रह्मणाहितत् ॥ ९९ ॥ तमालोक्यततोवेधालिंगरूपिणमीश्वरम् ॥ पंचाक्षरंप्रपंचाच्चभिन्नंतुष्टावशंकरम् ॥ १०० ॥
ब्रह्मोवाच ॥ ॥ नमओंकाररूपायनमोऽक्षरवपुर्धृते ॥ नमोऽकारादिवर्णानांप्रभवायसदाशिव ॥ १ ॥ अकारस्त्वमुकारस्त्वंमकारस्त्वमनाकृते ॥
ऋग्यजुःसामरूपायरूपातीतायतेनमः ॥ २ ॥ नमोनादात्मनेतुभ्यंनमोबिंदुकलात्मने ॥ अलिंगलिंगरूपायसर्वरूपस्वरूपिणे ॥ ३ ॥ नमस्तेधाम
निधयेनिधनादिविवर्जित ॥ नमोभवायरुद्रायशर्वायचनमोस्तुते ॥ ४ ॥

क्षरात्मकम् ॥ तदुक्तमत्रैव ॥ अश्चउश्चमकारश्चनादोबिंदुश्चपंचमः ॥ पंचात्मकंपरंब्रह्मनित्यंयत्रप्रकाशतइति ॥ १०० ॥ चत्वारिंशत्पद्यवृंदैरोंकारंजगदीश्वरम् ॥ तुष्टावात्याहृतःसम्यग्वेदगर्भोविदां
वरः ॥१॥ समाधित्यागानंतरंयादृग्रूपंदृष्टंप्रथमंतदेवनमति॥नमओंकाररूपायेति ॥ प्रणवरूपत्वेनैवतत्प्रभवाकाराद्यक्षरधारकत्वमाह ॥ नमोऽक्षरेति ॥ अकारादिस्वरूपंकारणत्वेनस्वस्मिन्धारयतीतितथा
तस्मैओंकारप्रभवावेदाओंकारप्रभवाःस्वराइतिस्मृतेः ॥ कूटस्थवपुर्धृतइतिवा एतच्चाक्षरस्याप्युपलक्षणम् ॥ क्षरःसर्वाणिभूतानिकूटस्थोक्षरउच्यतइतिस्मृतेः ॥ अकारादिवपुर्धृक्त्वमेवस्पष्टयन्नमति ॥
नमोऽकारादीति ॥ १ ॥ ओंकाररूपत्वंस्पष्टयन्स्तौति ॥ अकारस्त्वमिति ॥ वस्तुतोऽनाकृतेआकाररहित ॥ ऋग्यजुःसाम्नांरूपंस्वरूपंयस्मात्तस्मै ॥ पाठांतरेतत्समुदायात्मकायेत्यर्थः ॥ निःश्वसितमे
तदृग्वेदोयजुर्वेदःसामवेदइतिश्रुतेः ॥ वस्तुतोरूपातीताय ॥ २ ॥ नादात्मनेपरापश्यंतीमध्यमावैखर्याख्यायेत्यर्थः ॥ बिंदुकलात्मनेबिंद्वंशरूपायेत्यर्थः ॥ अखिलात्मकत्वेनस्तौति अलिंगे
त्यादिना ॥ अलिंगलिंगरूपायादृश्यदृश्यरूपाय ॥ अतएवसर्वरूपस्वरूपिणे ॥ पाठांतरेलिंगंशिवलिंगम् ॥ ३ ॥ धामतेजःसत्त्वंवातस्यनिधयेआश्रयाय ॥ निधनादीत्यत्रादिपदेनजायतेऽस्तिवर्धते

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विपरिणमतेऽपक्षीयतइतिपंचविकाराग्रृह्यंते ॥ ४ ॥ पशूनांजीवानाम् ॥ तारःप्रणवः ॥ उत्कटइतिवा ॥ तदासर्वेभ्यउत्कृष्टायेत्यर्थः ॥ सम्यक्संभवत्यस्मादितिसंभवस्तस्मैसर्वकारणायेत्यर्थः ॥ शंभवायेतिपाठेशंभवइत्यर्थः ॥ तथाचश्रुतिः ॥ नमःशंभवायचमयोभवायचनमःशंकरायचमयस्करायचेति ॥ ५ ॥ अमायायशुद्धाय ॥ शिवतरायपरममंगलाय ॥ मंगलानांचमंगलमितिस्मृतेः ॥ कपर्दिनेजटाजूटधारिणे ॥ शितिकंठनीलग्रीव ॥ ६ ॥ मीढुष्टमायफलसेक्तृणांमध्येश्रेष्ठाय ॥ शिपिःपशुःतेषुप्रविशतितिष्ठतियज्ञरूपेणेतिशिपिविष्टस्तस्मै ॥ तथाचश्रुतिः ॥ यज्ञोवैविष्णुः पशवःशिपिः यज्ञएवपशुषुप्रतितिष्ठतीति ॥ शिपयोरश्मयस्तेषुनिविष्टायेतिवा ॥ शैत्याच्छयनयोगाच्चशीतिवारिप्रचक्षते ॥ तत्पानाद्रक्षणाच्चैवशिपयोरश्मयोमताः ॥ तेषुप्रवेशाद्विश्वेशःशिपिविष्टइहोच्यतइतिवचनात् ॥ अह्रस्वायदीर्घाय ॥ खर्वायह्रस्वाय ॥ बृहतेस्थूलाय ॥ ७ ॥ कुमारगुरवेस्कंदजनयित्रे ॥ श्वेतायशुक्लाय ॥ कृष्णायनीलाय ॥ पीतायहरिद्राय ॥ अरुणमूर्तयेईषल्लोहितरूपायेत्यर्थः ॥ अव्यक्तरागवर्णायेतिवा ॥ ८ ॥ धूम्रवर्णायकृष्णलोहितरूपाय ॥ पिंगायकपिलवर्णाय ॥ किर्मीरवर्चसेकर्बुरवर्णाय ॥ पाटलवर्णायश्वेतरक्तवर्णाय ॥ शुक्लपीतामिश्रितवर्णायेत्यर्थः ॥ हरिततेजसेपालाशवर्णाय ॥ ९ ॥ नानावर्णस्वरूपायउक्तशुक्लादिवर्णरूपायेत्यर्थः ॥ ब्राह्मणादिवर्णस्वरूपायेतिवा ॥ वर्णानांपतयेतेषामेवनियंत्रे ॥ स्वराअकारादिचतुर्दश ॥ व्यंजनानिकादीनिहकारपर्यंतानि ॥ ११० ॥ ऊर्ध्वमादत्तइत्युदात्तस्तद्विपरीतमादत्तइत्यनुदात्तस्तयोःसमाहारःस्वरितस्तद्रूपाय ॥ ह्रस्वाःअइउऋऌइतिपंच ॥ दीर्घाआईऊॠॡइतिपंच ॥ प्लुतादूराह्वानेगानेलोकप्रसिद्धास्तत्रित्रयेशायह्रस्वादिनियंत्रे ॥ विसर्गेणसहवर्ततइतिसविसर्गोवर्णविशेषस्तद्रूपाय ॥ ११ ॥ अनुस्वारस्वरूपायबिंद्वात्मकाय ॥ सानुनासिकअनुनासिकैर्ञमङणनमैःसहवर्तमानहेतुरूपेत्यर्थः ॥ निरनुनासायतद्रूपायेत्यर्थः ॥ ऌवर्णतवर्गलसादंत्याः ॥ इवर्णचवर्गयशास्तालव्यास्तद्रूपिणे ॥ १२ ॥ ओष्ठेभवाओष्ठ्याउवर्णपवर्गोपध्मानीयाःउरसिभवाउरस्यास्तत्तद्वर्णरूपायेत्यर्थः ॥ ऊष्माणःशषसहास्तत्स्वरूपिणे ॥ अंतस्थायरलवास्तस्मैतद्रूपायेत्यर्थः ॥ परपुरुषब्रह्मविष्णुचतुष्टयापेक्षयापंचमायश्रीरुद्रायपंचमाख्यस्वररूपायेतिवा ॥ पिनाकिनेआजगवापरपर्यायधनुर्धारिणे ॥ १३ ॥ निषादायनिषादाख्यस्वररूपाय ॥ यदाहामरः ॥ निषादर्षभेति ॥ यद्वा निषादायश्वपचाय ॥ तेषांपतयेस्वामिने ॥ श्रृंगवेरपुरनिवासिनेश्रीराममित्रायगुहायेतिवा ॥

नमउग्रायभीमायपशूनांपतयेनमः ॥ नमस्तारस्वरूपायसंभवायनमोस्तुते ॥ ५ ॥ अमायायनमस्तुभ्यंनमःशिवतरायते ॥ कपर्दिनेनमस्तुभ्यंशितिकंठनमोस्तुते ॥ ६ ॥ मीढुष्टमायगिरिशशिपिविष्टायतेनमः ॥ नमोऽह्रस्वायखर्वायबृहतेवृद्धरूपिणे ॥ ७ ॥ कुमारगुरवेतुभ्यंकुमारवपुषेनमः ॥ नमःश्वेतायकृष्णायपीतायारुणमूर्तये ॥ ८ ॥ धूम्रवर्णायपिंगायनमःकिर्मीरवर्चसे ॥ नमःपाटलवर्णायनमोहरिततेजसे ॥ ९ ॥ नानावर्णस्वरूपायवर्णानांपतयेनमः ॥ नमस्तेस्वररूपायनमोव्यंजनरूपिणे ॥ ११० ॥ उदात्तायानुदात्तायस्वरितायनमोनमः ॥ ह्रस्वदीर्घप्लुतेशायसविसर्गायतेनमः ॥ ॥ ११ ॥ अनुस्वारस्वरूपायनमस्तेसानुनासिक ॥ नमोनिरनुनासायदंत्यतालव्यरूपिणे ॥ १२ ॥ ओष्ठ्योरस्यस्वरूपायनमऊष्मस्वरूपिणे ॥ अंतस्थायनमस्तुभ्यंपंचमायपिनाकिने ॥ १३ ॥ निषादायनमस्तुभ्यंनिषादपतयेनमः ॥ वीणावेणुमृदंगादिवाद्यरूपायतेनमः ॥ १४ ॥

१ नैषाव्याख्यामनोरमा, अर्जुनयुद्धेकिरातेश्वरायेतिसमीचीनाचिन्तनीयाचेति ।



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मृदंगादीत्यादिशब्देनडमरुप्रभृतयोगृह्यंते ॥ १४ ॥ तारायात्युच्चध्वनिरूपाय ॥ यदाहामरस्तारोत्युच्चइति ॥ मंद्रायगंभीरशब्दरूपाय ॥ पापिनांघोरायभयंकराय ॥ तद्विपरीतानामघोरायअथवा राख्यमंत्ररूपायेतिवा ॥ तानायअतिलंबस्वरूपाय ॥ तदुक्तम् ॥ तानाएकोनपंचाशदिति ॥ मूर्च्छनापतयेतदालापप्रवर्तयित्रे ॥ तदुक्तम् ॥ मूर्च्छनास्त्वेकविंशतिरिति ॥ १९ ॥ स्थायिसंचारि भेदेनस्थावरजंगमभेदेन ॥ यद्वा स्थायिसंचारिभेदोसंगीतशास्त्रेप्रसिद्धोतयोर्भेदेनभावस्वरूपिणे पदार्थरूपिणे ॥ तालप्रियायकालक्रियामानप्रियाय ॥ यदाहामरः ॥ तालःकालक्रियामानमिति ॥ करपुटादिक्रियमाणवाद्यप्रियायेतिवा ॥ तालायतत्स्वरूपाय ॥ लास्यतांडवजन्मनेलास्यतांडवयोर्नर्तनविशेषयोःकारणाय ॥१६॥ तौर्यत्रिकंनृत्यगीतवाद्यंतत्स्वरूपाय ॥ तदेवतौर्यत्रिकंमहत्प्रियंयस्य

नमस्तारायमंद्रायघोरायाघोरमूर्तये ॥ नमस्तानस्वरूपायमूर्च्छनापतयेनमः ॥ १९ ॥ स्थायिसंचारिभेदेननमोभावस्वरूपिणे ॥ तालप्रियायतालाय लास्यतांडवजन्मने ॥ १६ ॥ तौर्यत्रिकस्वरूपायतौर्यत्रिकमहाप्रिय ॥ तौर्यत्रिककृतांभक्त्यानिर्वाणश्रीप्रदायक ॥१७॥ स्थूलसूक्ष्मस्वरूपायदृश्यादृश्यस्वरूपिणे ॥ अर्वाचीनायचनमःपराचीनायतेनमः ॥ १८ ॥ वाक्प्रपंचस्वरूपायवाक्प्रपंचपरायच ॥ एकायानेकभेदायसदसत्पतयेनमः ॥१९॥ शब्दब्रह्मनमस्तुभ्यंपरब्रह्मनमोस्तुते ॥ नमोवेदांतवेद्यायवेदानांपतयेनमः ॥ १२० ॥ नमोवेदस्वरूपायवेदगोचरमूर्तये ॥ पार्वतीशनमस्तुभ्यंजगदीशनमोस्तुते ॥ २१ ॥ नमस्तेदेवदेवेशदेवदिव्यपदप्रद ॥ शंकरायनमस्तुभ्यंनमस्तुभ्यंमहेश्वर ॥ २२ ॥ नमस्तेजगदानंदनमस्तेशशिशेखर ॥ मृत्युंजयनमस्तुभ्यंनमस्तेत्र्यंबकायच ॥ २३ ॥ नमःपिनाकहस्तायत्रिशूलायुधधारिणे ॥ नमस्त्रिपुरहंत्रेचनमोंधकनिषूदन ॥ २४ ॥ कंदर्पदर्पदलननमोजालंधरारये ॥ कालायकालकालायकालकूटविषादिने ॥ २५ ॥ विषादहंत्रेभक्तानामभक्तैकविषादद ॥ ज्ञानायज्ञानरूपायसर्वज्ञायनमोऽस्तुते ॥ ॥ २६ ॥ योगसिद्धिप्रदोसित्वंयोगिनांयोगसत्तम ॥ तपसांफलदोसित्वंतपस्विभ्यस्तपोधन ॥ २७ ॥

सतथातत्संबोधनंतौर्यत्रिकमहाप्रिय ॥ यदाहामरएतदेवेति ॥ निर्वाणश्रीःकैवल्यलक्ष्मीः ॥१७॥ स्थूलसूक्ष्मेकार्यकारणे ॥ दृश्यंपृथिव्यप्तेजःअदृश्यंवाय्वाकाशंतत्स्वरूपिणेभावाभावरूपिणेइतिवा ॥ अर्वाचीनायइदानींतनाय ॥ पराचीनायप्राक्कालीनाय ॥१८॥ वाक्प्रपंचःशब्दविस्तरः ॥ परायकारणाय ॥ वस्तुतएकाय ॥ माययाऽनेकप्रकाराय ॥ सदसत्पतयेकार्यकारणनियंत्रे ॥१९॥ शब्दब्रह्म वेदः ॥ वेदांतवेद्यायवेदैकगोचराय ॥ तंत्वौपनिषदंपुरुषंपृच्छामीतिश्रुतेः ॥ पतयेनियंत्रे ॥ १२० ॥ वेदगोचरमूर्तयेवेदनंवेदःस्वप्रकाशश्चिद्धातुस्तद्विषयरूपाय ॥ २१ ॥ २२॥२३॥२४॥ कालंकालयतीतिकालकालः ॥ सकालकालःकालाग्निकालमूषिकभक्षकः॥कालोपिकाल्यतेऽनेनेत्यादिश्रुतिस्मृतिभ्यः॥कालकूटाख्यंयद्विषंतद्भक्षिणे ॥२५॥ ज्ञायतेनेनेतिज्ञानंतस्मैसाधनायेत्यर्थः ॥२६॥२७॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ २८ ॥ २९ ॥ १३० ॥ ३१ ॥ नीरजस्कंपदंकैवल्यम् ॥ ३२ ॥ पितृवनंश्मशानम् ॥ ३३ ॥ कृतांतकृतांतकोयमस्यापियमइत्यर्थः ॥ कालाग्निरुद्रःसंकर्षणमुखाग्निः ॥ संवर्तःप्रलयः ॥ ३४ ॥ पुंप्रकृतिरूपाभ्यांपुरुषप्रधानरूपाभ्याम् ॥ अक्षिपक्ष्मणोनेत्रावरकस्यसमुत्क्षेपादुन्मेषात् ॥ ३५ ॥ ननुकपालस्रग्विणोमेकिमियमतिस्तुतिःक्रियतेतत्राह ॥ कपालेति ॥ खेलः

त्वमेवमंत्ररूपोसिमंत्राणांफलदोभवान् ॥ महादानफलंत्वंवैमहादानप्रदोभवान् ॥ २८ ॥ महायज्ञस्त्वमेवेशमहायज्ञफलप्रद ॥ त्वंसर्वःसर्वगस्त्वंवैसर्वदः सर्वदृग्भवान् ॥ २९ ॥ सर्वभुक्सर्वकर्तात्वंसर्वसंहारकारक ॥ योगिनांहृदयाकाशकृतालयनमोस्तुते ॥ १३० ॥ त्वमेवविष्णुरूपेणशंखचक्रगदाधर ॥ त्रिलोकींत्रायसेत्रातःसत्त्वमूर्तेनमोस्तुते ॥ ३१ ॥ त्वमेवविद्धास्येतद्विधिर्भूत्वाविधानवित् ॥ रजोरूपंसमालंब्यनीरजस्कपदप्रद ॥ ३२ ॥ त्वमेवहि महारुद्रस्त्वंमहोग्रोभुजंगभृत् ॥ त्वमेवहिमहाभीमोमहापितृवनेचर ॥ ३३ ॥ तामसींतनुमाश्रित्यत्वंकृतांतकृतांतक ॥ कालाग्निरुद्रोभूत्वांतेत्वंसंवर्त प्रवर्तकः ॥ ३४ ॥ त्वंपुंप्रकृतिरूपाभ्यांमहदाद्यखिलंजगत् ॥ अक्षिपक्ष्मसमुत्क्षेपात्पुनराविःकरोष्यज ॥३५॥ उन्मेषविनिमेषौतेसर्गासर्गैककारणम् ॥ कपालमालाखेलोयंभवतःस्वैरचारिणः ॥ ३६ ॥ त्वत्कंठेनृकरोटीयंधूर्जटेयाविभासते ॥ सर्वेषामंतदग्धानांसास्फुटंबीजमालिका ॥ ३७ ॥ त्वत्तःसर्व मिदंशंभोत्वयिसर्वंचराचरम् ॥ कस्त्वांस्तोतुंविजानातिपुरावाचामगोचरम् ॥ ३८ ॥ स्तोतात्वंहिस्तुतिस्त्वंहिनित्यंस्तुत्यस्त्वमेवच ॥ वेद्म्योंनमः शिवायेतिनान्यद्वेद्म्येवकिंचन ॥ ३९ ॥ त्वमेवहिशरण्यंमेत्वमेवहिगतिःपरा ॥ त्वामेवप्रणमामीशनमस्तुभ्यंनमोनमः ॥ १४० ॥ इत्युदीर्यासकृद्वेधाः प्रणनाममहेश्वरम् ॥ प्रणवाख्यंमहालिंगरूपिणंदंडवत्क्षितौ ॥ ४१ ॥ ॥ ईश्वरउवाच ॥ ॥ ततोगिरींद्रतनयेश्रुत्वाब्रह्मस्तुतिंपराम् ॥ परमैश्वर्यसंप त्तिहेतुंतुष्टोहमद्भुतम् ॥ ४२ ॥ अमूर्तोऽहंततोलिंगान्मूर्तिमास्थायशांकरीम् ॥ प्रसन्नोस्मिवरंब्रूहीत्युवाचचतुराननम् ॥ ४३ ॥ चतुर्वक्त्रःसमुत्थायप्रत्यक्षं वीक्ष्यमामथ ॥ पुनर्जयजयेत्युक्त्वाप्रणनामकृतांजलिः ॥ ४४ ॥ आनंदबाष्पसलिलनेत्रोहृष्टतनूरुहः ॥ गद्गदेनस्वरेणाथप्रोवाचजलजासनः ॥ ४५ ॥ ब्रह्मोवाच ॥ ॥ यदिप्रसन्नोदेवेशयदिदेयोवरोमम ॥ तदेतास्मिन्महालिंगेसान्निध्यंतेऽस्तुशंकर ॥ ४६ ॥

क्रीडा ॥ ३६ ॥ नृकरोटीनरशिरोऽस्थि ॥ यदाहामरः ॥ शिरोस्थनिकरोटिःस्त्रीति ॥ अंतःप्रलयः ॥ बीजमज्ञानम् ॥ ३७ ॥ अभिन्ननिमित्तोपादानतामाह ॥ त्वत्तःसर्वमिति ॥ पुरावाचां प्राचांमूर्तिमतांवेदादीनामनादीनां वाचांवेदानामितिसामानाधिकरण्यंवा ॥ ३८ ॥ हिशब्दावेवकारार्थौ ॥ ३९ ॥ १४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ जलजासनःपद्मासनः ॥ ४५ ॥ ४६ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भक्तैकमुक्तिदंभक्तानामेकांमुख्यांसायुज्यलक्षणांमुक्तिंददातीतितथा ॥ ४७ ॥ विध्युक्तंब्रह्मोक्तम् ॥ ४८ ॥ ४९ ॥ सर्वाम्नायनिधिरखिलवेदाश्रयः ॥१५०॥ ५१ ॥ ५२ ॥ ५३ ॥ पंचायतनंपंचानामकारादीनांतद्वाच्यानांवाब्रह्मविष्णुरुद्रेश्वरसदाशिवानामायतनमाश्रयभूतमीशानंलिंगमित्यर्थः ॥ ५४ ॥ ५५ ॥ ५६ ॥ कपिलोविष्णुः ॥ सिद्धानांकपिलश्चास्मीतिभगवदुक्तेः ॥

अयमेववरोदेयोनान्यंवरमहंवृणे ॥ ओंकारेश्वरनामैतदस्तुभक्तैकमुक्तिदम् ॥ ४७ ॥ ॥ स्कंदउवाच ॥ ॥ विध्युक्तमितिविप्रर्षेसमाकर्ण्यतदेशिता ॥ उवाचवचनंचैतत्तथास्तुचतुराननम् ॥४८॥ वरानन्यानपिविभुःप्रसन्नस्तत्क्षणाद्ददौ॥विधयेदीर्घतपसेतयास्तुत्यातितोषितः ॥४९॥ ॥ ईश्वरउवाच ॥ सुरश्रेष्ठतपःश्रेष्ठसर्वाम्नायनिधिर्भव ॥ सृष्टेःकरणसामर्थ्यंतवास्तुमदनुग्रहात् ॥१५०॥ पितामहस्त्वंसर्वेषांसर्वेषांमान्यभूर्भवान् ॥ त्वत्तपःफलदानार्थंयदेतल्लिंगमुत्थितम् ॥ ५१ ॥ परमोंकाररूपंचशब्दब्रह्ममयंविधे ॥ अस्याराधनतःपुंसांनदूरंब्रह्मणःपदम् ॥५२॥ अकाराख्यमिदंलिंगमुकाराख्यमिदंपरम् ॥ मकाराह्वयमेतच्चनादाख्यंबिंदुसंज्ञकम् ॥ ५३ ॥ पंचायतनमीशानमित्थमेतदुदीरितम् ॥ मोक्षायसर्वजंतूनामस्मिन्नानंदकानने ॥ ५४ ॥ स्नात्वामत्स्योदरीतीर्थेविलोक्योंकारमीश्वरम् ॥ नजातुजायतेजंतुर्जननीजठरेक्वचित् ॥ ५५ ॥ एतन्नादेश्वरंलिंगमेतल्लिंगंसुदुर्लभम् ॥ रम्येमत्स्योदरीतीरेदृष्टंस्पृष्टंविमुक्तिदम् ॥ ५६ ॥ यदेतत्कापिलंज्योतिरेतल्लिंगेविलोक्यते ॥ अतस्तुकपिलेशाख्यमेतल्लिंगंसुदुर्लभम् ॥५७॥ मत्स्योदरीयदागंगाकपिलेश्वरसन्निधौ ॥ तदातत्रनरःस्नात्वाब्रह्महत्यांव्यपोहति ॥ ५८ ॥ वरणोत्सिक्तपानीयेद्युनदीतोयमिश्रिते ॥ स्नात्वानादेश्वरंदृष्ट्वानरःकिमनुशोचति ॥ ५९ ॥ अष्टम्यांचचतुर्दश्यांतीर्थानिसहसागरैः ॥ षष्टिकोटिसहस्राणिमत्स्योदर्यांविशंतिहि ॥१६०॥ प्रणवेशसमीपेतुयदागंगासमेष्यति ॥ तदापुण्यतमःकालोदेवर्षिपितृवल्लभः ॥ ६१ ॥ तत्रस्नानंजपोदानंहवनंदेवतार्चनम् ॥ मत्स्योदर्यामक्षयंस्यादोंकारेश्वरसन्निधौ ॥ ६२ ॥ ओंकारदर्शनादेववाजिमेधफलंलभेत् ॥ तस्मात्काश्यांप्रयत्नेनदृश्यओंकारईश्वरः ॥ ६३ ॥ दुर्लभंमानवंजन्मचतुर्वर्गैकसाधनम् ॥ जलबुद्बुदवत्तत्स्यान्नादेशोयेननेक्षितः ॥ ६४ ॥ निरीक्ष्यकपिलेशानंस्नात्वामत्स्योदरीजले ॥ कृत्वापिंडप्रदानानिपितॄणामनृणोभवेत् ॥ ६५ ॥ कृत्वापिमोहात्पापानिभूरीण्येवमहांत्यपि ॥ काश्यामोंकारमालोक्यकुतस्त्रस्यतिवैयमात् ॥ ६६ ॥ ओंकारयात्राभिमुखंनरंवीक्ष्यपितामहाः ॥ परिनृत्यंतिमुदिताःस्वसंतानसमुद्भवम् ॥ ६७ ॥ यस्ययस्यचवैनामस्मृत्वास्मृत्वानमस्यति ॥ तंतमुन्नयतेप्राज्ञःपितरंब्रह्मणःपदम् ॥ ६८ ॥ रुद्राणांनियुतंजप्त्वायत्फलंसम्यगाप्यते ॥ तत्फलंलभतेनूनंभक्त्योंकारविलोकनात् ॥ ६९ ॥

तत्संबंधिज्योतिःकापिलंज्योतिः ॥५७॥५८॥५९॥१६०॥६१॥६२॥६३॥ जलबुद्बुदंयथाउत्तिष्ठतितद्वत्तस्यजन्मवृथेत्यर्थः ॥६४॥६५॥६६॥ संतानोवंशः ॥ ६७ ॥६८॥ नियुतंलक्षम् ॥६९॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ ७० ॥ ७१ ॥ विपद्यतेम्रियते ॥ ७२ ॥ ७३ ॥ ७४ ॥ तारतीर्थमोंकारतीर्थम् ॥ ७५ ॥ ७६ ॥ नान्यैरत्रावगम्यतेकिंतुत्वयैवज्ञायतेइत्यर्थः ॥ तत्रहेतुस्त्वत्पुण्येति ॥ त्वत्पुण्योदयत स्तवशुभादृष्टस्योदयात् ॥ ७७ ॥ विधेविधेहीति ॥ अत्रवाराणस्यांस्थित्वाचराचरंविधेहीत्युक्तवान् ॥ सृष्टेःपूर्वमपिकाशीस्थितैवातःप्रलयेपिकाश्यानोनाशइतिपूर्वमुक्तंनविस्मर्तव्यमिति ॥ ७८ ॥ सम्यग्भवत्यस्मात्प्रजेतिसंभूस्तस्मैसंभुवे ॥ ७९ ॥ ब्रह्मस्तवेनब्रह्मप्रतिपादकेनस्वकृतेनवा ॥ १८० ॥ ८१ ॥ १८२ ॥ ॥ इतिश्रीरामानंदकृतायांकाशीखंडटीकायांत्रिसप्ततितमो

केवलंभूमिभारायजन्मिनोजन्मतस्यवै ॥ येनानंदवनेदृष्टोनोंकारःसर्वकामदः ॥ १७० ॥ एकमोंकारमालोक्यसमस्तेक्षोणिमंडले ॥ लिंगजातानिसर्वाणिदृष्टानिस्युर्नसंशयः ॥ ७१ ॥ प्रणवेशंप्रणम्याथयद्यन्यत्रविपद्यते ॥ स्वर्गलोकमवाप्याथकाश्यांमुक्तिमवाप्नुयात् ॥ ७२ ॥ अस्मिँल्लिंगेसदाब्रह्मन्स्थास्यामीतिविनिश्चितम् ॥ दास्यामिचसदामोक्षमेतल्लिंगार्चकायवै ॥ ७३ ॥ ओंकारंसकृदप्यत्रनरोनत्वाप्रयत्नतः ॥ कृतकृत्योभवेन्नूनंपरमान्मदनुग्रहात् ॥ ७४ ॥ ओंकारपश्चिमेभागेतारतीर्थमनुत्तमम् ॥ कृतोदकक्रियस्तत्रनरस्तरतिदुर्गतिम् ॥ ७५ ॥ ओंकारेशस्ययेभक्ताज्ञेयास्तेनैवमानवाः ॥ मनुष्यचर्मणानद्धास्तेरुद्रामोक्षगामिनः ॥ ७६ ॥ अस्यलिंगस्यमहिमानान्यैरत्रावगम्यते ॥ त्वत्पुण्योदयतोयस्माद्विधेत्राविरभूदिदम् ॥ ७७ ॥ एतल्लिंगप्रभावाच्चसर्वज्ञास्यासितत्त्वतः ॥ विधेविधेहितस्मात्त्वंसर्वमेतच्चराचरम् ॥७८॥ इतिदत्त्वावरंतस्मैब्रह्मणेपद्मसंभुवे॥ तस्मिन्नेवमहालिंगेशंभुर्लीनोबभूवह ॥७९॥ ॥ स्कंदउवाच ॥ ॥ ब्रह्मापिभजतेद्यापितल्लिंगंकलशोद्भव ॥ स्तुवन्ब्रह्मस्तवेनैवस्वात्मनाविहितेनहि ॥१८०॥ ब्रह्मस्तवंजपन्मर्त्यः सर्वैःपापैःप्रमुच्यते ॥ पूर्यंतेचमहापुण्यैर्ज्ञानंप्राप्नोतिसत्तमम् ॥ ८१ ॥ ब्रह्मस्तवमिमंजप्त्वात्रिकालंपरिवत्सरम् ॥ अंतकालेभवेज्ज्ञानंयेनबंधात्प्रमुच्यते ॥ ॥ १८२ ॥ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडउत्तरार्धेओंकारमहिमवर्णनंनामत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

॥ स्कंदउवाच ॥ ॥शृणुवातापिसंहर्तःकाश्यांपातकतंकिनी ॥ पद्मकल्पेतुयावृत्तादमनस्यद्विजन्मनः ॥१॥ भारद्वाजस्यतनयोदमनोनामनामतः ॥ कृतमौंजीविधिःसोथविद्याजातंप्रगृह्यच ॥ २ ॥ संसारंदुःखबहुलंजीवितंचापिचंचलम् ॥ विज्ञायदमनोविद्वान्निर्जगामगृहान्निजात् ॥ ३ ॥ कांचिद्दिशंसमालंब्यनिर्वेदंपरमंगतः ॥ प्रत्याश्रमंप्रतिनगंप्रत्यब्धिप्रतिकाननम् ॥ ४ ॥ प्रतितीर्थंप्रतिनदिसबभ्रामतपोयुतः ॥ यावंत्यायतनानीहातिष्ठंतिपरितोभुवम् ॥५॥ अध्युवाससतावंतिसंयतेंद्रियमानसः ॥ परंनमनसःस्थैर्यंक्वापिप्रापिचतेनवै ॥ ६ ॥ मनोरथोपदेष्टाचकुत्रचित्क्वापिनेक्षितः ॥ कदाचिद्दैवयोगात्सदमनोनामतापसः ॥७॥ रेवातटेनिरैक्षिष्टतीर्थंचामरकंटकम् ॥ महदायतनंपुण्यमोंकारस्यापितत्रवै ॥८॥ दृष्ट्वाहृष्टमनाआसीच्चेतःस्थैर्यमवापह ॥ अथपाशुपतांस्तत्रसनिरीक्ष्यतपोधनान् ॥ ९ ॥

ऽध्यायः ॥७३॥ ॥छ॥ ॥ अध्यायेसप्ततितमेचतुर्भिरधिकेतथा ॥ पुनरोंकारमाहात्म्यंवर्ण्यतेथसविस्तरम् ॥ १ ॥ विस्तरेणोंकारमाहात्म्यंप्रवक्तुमितिहासंप्रस्तावयति ॥ शृण्विति ॥ दमनस्य यावृत्ताकथेतिशेषः ॥ तांशृण्वित्यर्थः ॥ कीदृशीकथेत्यत्राह ॥ महापातकस्यतंकिनीनाशिनी ॥ १ ॥ २ ॥ ३ ॥ प्रत्यब्धिप्रतिसमुद्रम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ रेवानर्मदा ॥ ८ ॥ ९ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विहितप्राणयात्रान्प्राणसंधारणार्थंकृतभैक्षान्भुक्तभैक्षान्नानितियावत् ॥ तथाचमैत्रायणीयश्रुतिः ॥ चतुर्षुवर्णेषुभैक्षंचरेत्पाणिपात्रेणाशनंकुर्यात् ॥ ओषधवत्प्राश्नीयात् ॥ प्राणसंधारणार्थंयथामे दोवृद्धिर्नजायतइत्यादिः ॥ १० ॥ अचलमानसान्स्थिरचित्तान् ॥ आचार्यस्यगर्गनाम्नः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ भगोःहेपूज्य ॥ १५ ॥ दायादःपुत्रः ॥ १६ ॥ अशिश्रिय श्रितवानस्मि ॥ १७ ॥ हवनंहोमः ॥ १८ ॥ बह्वनेहसंबहुकालम् ॥ अतिवाहितानीताः ॥ १९ ॥ अध्युषितानिआश्रितानि ॥ २० ॥ रसायनानिधातुप्रयोगाः ॥ सिद्धाध्युषितकंदराः

विभूतिभूषिततनून्कृतलिंगसमर्चनान् ॥ विहितप्राणयात्रांश्चकृतागमविचारणान् ॥ १० ॥ स्वस्थोपविष्टान्स्वगुरोरग्रतोऽचलमानसान् ॥ प्रणम्योपा विशत्तत्रतदाचार्यस्यसन्निधौ ॥ ११ ॥ प्रबद्धहस्तयुगलःप्रणमत्तरकंधरः ॥ अथपाशुपताचार्योगर्गोनाममहामुनिः ॥ १२ ॥ वार्धकेनसमाक्रांतस्तप साकृशविग्रहः ॥ शंभोराराधनेनिष्ठःश्रेष्ठःसर्वतपस्विषु ॥१३॥ पप्रच्छदमनंचेतिकस्त्वंकस्मादिहागतः ॥ तरुणोपिविरक्तोसिकुतस्तद्वदसत्तम ॥१४॥ इतिप्रणयपूर्वंसनिशम्यदमनोऽब्रवीत् ॥ भगोःपाशुपताचार्यसर्वज्ञाराधनप्रिय ॥ १५ ॥ कथयामियथार्थंतेनिजचेतोविचेष्टितम् ॥ अहंब्राह्मणदायादो वेदशास्त्रकृतश्रमः ॥ १६ ॥ संसारासारतांज्ञात्वावानप्रस्थमशिश्रियम् ॥ अनेनैवशरीरेणमहासिद्धिमभीप्सता ॥१७॥ स्नातंबहुषुतीर्थेषुमंत्राजप्तास्तुको टिशः ॥ देवताःसेविताबह्व्योहवनंचकृतंबहु ॥ १८ ॥ शुश्रूषिताश्चगुरवोबहवोबह्वनेहसम् ॥ महाश्मशानेषुनिशाभूयस्योप्यतिवाहिताः ॥ १९ ॥ शिखराणिगिरींद्राणांमयाचाध्युषितान्यहो ॥ दिव्यौषधिसहस्राणिमयासंसाधितान्यपि ॥२०॥ रसायनानिबहुशःसेवितानिमयापुनः ॥ महासाहसमालं ब्यसिद्धाध्युषितकंदराः ॥ २१ ॥ मयाप्रविष्टाबहुशःकृतांतवदनोपमाः ॥ तपश्चापिमहत्तप्तंबहुभिर्नियमैर्यमैः ॥ २२ ॥ परंकिंचित्क्वचिन्नैक्षिसिद्धचं कुरमपिप्रभो ॥ इदानींत्वामनुप्राप्यमहींपर्यटतामया ॥ २३ ॥ मनसःस्थैर्यमापन्नमिवसंप्राप्तसिद्धिना ॥ अवश्यंत्वन्मुखांभोजाद्यद्वचोनिःसरिष्यति ॥ ॥ २४ ॥ तेनैवमहतीसिद्धिर्भवित्रीममनान्यथा ॥ तद्ब्रूहिसूपदेशंचकथंसिद्धिर्भवेन्मम ॥ २५ ॥ अनेनैवशरीरेणपार्थिवेनप्रथीयसी ॥ दमनस्यनि शम्येतिगर्गाचार्योवचस्तदा ॥ २६ ॥ प्रत्यक्षदृष्टंप्रोवाचमहदाश्चर्यमुत्तमम् ॥ सर्वेषांशृण्वतांतत्रशिष्याणांस्थिरचेतसाम् ॥ मुमुक्षूणांधृतवतांमहापाशुपतं व्रतम् ॥२७॥ ॥ गर्गउवाच ॥ ॥ अनेनैवहदेहेनयदित्वंसिद्धिकामुकः ॥ शृणुष्वावहितोभूत्वातदातेकथयाम्यहम् ॥२८॥ अविमुक्तेमहाक्षेत्रेसर्वसि द्धिप्रदेसताम् ॥ धर्मार्थकाममोक्षाख्यरत्नानांपरमाकरे ॥ २९ ॥

सिद्धसेवितदर्यः ॥ २१ ॥ २२ ॥ सिद्धचंकुरंसिद्धिकारणम् ॥ अपिरेवार्थेनैक्षीत्यनंतरंद्रष्टव्यः ॥२३॥ संप्राप्तासिद्धिर्येनतेन ॥ शुद्धिनेतिकचित् ॥२४॥ यथामनसःस्थैर्यमाप्यतेतथामहतीसिद्धिः कथंमेभविष्यतितदेतत्सूपदेशंसोपपत्तिकमुपदेशंशोभनंवचनंवाब्रूहिकथयेत्यर्थः ॥२५॥ प्रथीयसीमहत्तरा ॥२६॥२७॥२८॥ अविमुक्तइति ॥ अविमुक्तेसाक्षान्नमयद्वृत्तंतत्कथयामीत्यष्टमेनान्वयः ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अविमुक्तंविशिनष्टि महाक्षेत्रइत्यक्षरचतुष्टयन्यूनैःसार्धसप्तभिः ॥ सतांसमष्टिव्यष्टिप्राणिमात्राणामाकरेजन्मभूमिरूपसागरे ॥ २९ ॥ सर्वंकर्माण्येवशलभाःपतंगास्तेषांप्रदीपाभेप्रदीप्ताग्निसदृशे ॥ अतिप्रसंगंवारयन्केषामित्यपेक्षायामाह ॥ समाश्रितानांसर्वेषांजंतूनामिति ॥ तमस्तोममहाद्विषिअज्ञाननिकरमहाशत्रौ ॥ तपस्तोममहात्विषीतिकचित् ॥ ३० ॥ कर्माण्येवभूरुहावृक्षास्तेषांदावाग्नौवन वह्नौ ॥ और्वोवडवानलस्तस्यशोचिषिरोचीरूपे ॥३१॥ दीर्घनिद्राआत्माज्ञानम् ॥ तदुक्तमद्वैतमकरंदे ॥ आत्माज्ञानंमहानिद्राजृंभितेऽस्मिञ्जगन्मये ॥ दीर्घस्वप्नेस्फुरंत्येतेस्वर्गमोक्षादिविभ्रमाइति ॥

समाश्रितानांजंतूनांसर्वेषांसर्वकर्मणाम् ॥ शलभानांप्रदीपाभेतमःस्तोममहाद्विषि ॥ ३० ॥ कर्मभूरुहदावाग्नौसंसाराब्ध्यौर्वशोचिषि ॥ निर्वाणलक्ष्मीक्षीराब्धौसुखसंकेतसद्मनि ॥ ३१ ॥ दीर्घनिद्राप्रसुप्तानांपरमोद्बोधदायिनि ॥ यातायातश्रमापन्नप्राणिमार्गमहीरुहि ॥ ३२ ॥ अनेकजन्मजनितमहापापाद्रिवज्रिणि ॥ नामोच्चारकृतांपुंसांमहाश्रेयोविधायिनि ॥ ३३ ॥ विश्वेशितुःपरेधाम्निसीम्निस्वर्गापवर्गयोः ॥ स्वर्धुनीलोलकल्लोलनित्यक्षालितभूतले ॥ ३४ ॥ एवंविधेमहाक्षेत्रेसर्वदुःखौघहारिणि ॥ प्रत्यक्षंममयद्वृत्तंतद्ब्रवीमिमहामते ॥ ३५ ॥ यत्रकालभयंनास्तियत्रनास्त्येनसोभयम् ॥ तत्क्षेत्रमहिमानंकःसम्यग्वर्णयितुंक्षमः ॥ ३६ ॥ तीर्थानियानिलोकेस्मिञ्जंतूनामघहान्यहो ॥ तानिसर्वाणिशुद्ध्यर्थंकाशीमायांतिनित्यशः ॥ ३७ ॥ अपिकाश्यांवसेद्यस्तुसर्वाशीसर्वविक्रयी ॥ सयांगतिंलभेन्मर्त्योयज्ञैर्दानैर्नसान्यतः ॥ ३८ ॥ रागबीजसमुद्भूतःसंसारविटपोमहान् ॥ दीर्घस्वापकुठारेणच्छिन्नःकाश्यांनवर्धते ॥ ३९ ॥ सर्वेषामूषराणांतुकाशीपरमऊषरः ॥ वप्तुर्बीजमिदंतस्मिन्नुप्तंनैवप्ररोहति ॥ ४० ॥ स्मरिष्यंतीहयेकाशीमवश्यंतेपिसाधवः ॥ तेप्यघौघविनिर्मुक्तायास्यंतिगतिमुत्तमाम् ॥ ४१ ॥ विभूतिःसर्वलोकानांसत्यादीनांसुभंगुरा ॥ अभंगुराविमुक्तस्यसातुलभ्याशिवाज्ञया ॥ ४२ ॥ कृमिकीटपतंगानामविमुक्तेतनुत्यजाम् ॥ विभूतिर्दृश्यतेयासाक्वास्तिब्रह्मांडमंडले ॥ ४३ ॥ वाराणसींयदाप्राप्ताकदाचित्कालपर्ययात् ॥ सउपायोविधातव्योयेननोनिष्क्रमोबहिः ॥ ४४ ॥ पूर्वतोमणिकर्णीशोब्रह्मेशोदक्षिणेस्थितः ॥ पश्चिमेचैवगोकर्णोभारभूतस्तथोत्तरे ॥४५॥

महीरुहिमहीरुहे ॥ अयमेववापाठः ॥३२॥३३॥३४॥ एवंविधेमहाक्षेत्रेइत्यनुवादः ॥३५॥ एनसःपापस्य ॥३६॥३७॥ अन्यतःअन्यत्र ॥ आप्यतइतिवापाठः ॥३८॥ दीर्घस्वापोमरणम् ॥ यद्वा वहिर्वृत्त्यभावसाम्येनदीर्घस्वापोविश्वेशानुशीलनमसंप्रज्ञातसमाधिरितियावत् ॥ काश्यांदेहपातनिमित्तोमोक्षोवा ॥ ३९ ॥ वप्तुःकर्मरूपस्यबीजस्यवपनकर्तुः ॥ वपुरितिकचित् ॥ बीजंकर्मरूपम् ॥ उप्तंनिक्षिप्तंकृतमित्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ विभूतिःसंपत्तिरैश्वर्यंमुक्तिर्वा ॥ ४३ ॥ येनउपायेननिष्क्रमोनिर्गमनम् ॥ काशीतइतिशेषः ॥ ४४ ॥ तत्रावांतरविशेषमाह ॥ पूर्वतोमणिकर्णी



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शइतिसार्धेन ॥ ४५ ॥ क्षेत्रमविमुक्तमंतर्गृहंवा ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ रक्षःकाष्ठांनैर्ऋतींदिशम् ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ आनंदगोपकइतिकाचित् ॥
॥ ५७ ॥ ५८ ॥ ५९ ॥ सहुडुत्कारंहुडुत्कारसहितंयथाभवतितथा ॥ ६०॥६१ ॥ भेकीदर्दुरी ॥ ६२ ॥ निर्माल्यभक्षणादिति ॥ यद्यपिबाणलिंगेस्वयंभूतेप्राणलिंगेहृदिस्थिते ॥ अत्रकोटिगुणं

इत्येतदुक्तमंक्षेत्रमविमुक्तेमहाफलम् ॥ मणिकर्णीह्रदेस्नात्वादृष्ट्वाविश्वेश्वरंविभुम् ॥४६॥ क्षेत्रंप्रदक्षिणीकृत्यराजसूयफलंलभेत् ॥ तत्रश्राद्धप्रदातुश्चमुच्यंतेप्रपितामहाः ॥ ४७ ॥ अविमुक्तसमंक्षेत्रमपिब्रह्मांडगोलके ॥ नविद्यतेक्वचित्सत्यंसत्यंसाधकसिद्धिदम् ॥४८॥ रक्षंतिसततंक्षेत्रंयत्रपाशासिपाणयः ॥ महापारिषदाउग्राःक्रूरेभ्योऽक्रूरबुद्धयः ॥ ४९ ॥ प्राग्द्वारमट्टहासश्चगणकोटिपरीवृतः ॥ रक्षेदहर्निशंक्षेत्रंदुर्वृत्तेभ्योविभीषणः ॥ ५० ॥ तथैवभूतधात्रीशःक्षेत्रदक्षिणरक्षकः ॥ गोकर्णःपश्चिमद्वारंपातिकोटिगणावृतः ॥ ५१ ॥ उदग्द्वारंतथारक्षेद्घंटाकर्णोमहागणः ॥ ऐशंकोणंछागवक्त्रोभीषणोवह्निदिग्दलम् ॥ ५२ ॥ रक्षःकाष्ठांशंकुकर्णोद्रमिचंडोमरुद्दिशम् ॥ इत्थंक्षेत्रंसदापांतिगणाएतेऽतिभास्वराः ॥५३॥ कालाक्षोरणभद्रस्तुकौलेयःकालकंपनः ॥ एतेपूर्वेणरक्षंतिगंगापारेस्थितागणाः ॥ ५४ ॥ वीरभद्रोनभश्चैवकर्दमालितविग्रहः ॥ स्थूलकर्णोमहाबाहुरसिपारेव्यवस्थिताः ॥ ५५ ॥ विशालाक्षोमहाभीमःकुंडोदरमहोदरौ ॥ रक्षंतिपश्चिमद्वारंदेहलीदेशसंस्थिताः ॥५६॥ नंदिसेनश्चपंचालःखरपादःकरंटकः ॥ आनंदोगोपकोबभ्रूरक्षंतिवरणातटे ॥ ॥ ५७ ॥ तस्मिन्क्षेत्रेमहापुण्येलिंगमोंकारसंज्ञकम् ॥ तत्रसिद्धिंपरांप्राप्तादेहेनानेनसाधकाः ॥ ५८ ॥ कपिलश्चैवसावर्णिःश्रीकंठःपिंगलोंऽशुमान् ॥ एतेपाशुपताःसिद्धास्तल्लिंगाराधनेनहि ॥ ५९ ॥ एकदातस्यलिंगस्यकृत्वापंचापिपूजनम् ॥ नृत्यंतःसहुडुत्कारंतस्मिँल्लिंगेलयंययुः ॥ ६० ॥ अन्यच्चतेप्रवक्ष्यामितत्रयद्वृत्तमद्भुतम् ॥ निशामयमहाबुद्धेदमनद्विजसत्तम ॥ ६१ ॥ एकाभेकीमुनेतत्रचरंतीलिंगसन्निधौ ॥ प्रदक्षिणंसदाकुर्यान्निर्माल्याक्षतभक्षिणी ॥ ६२ ॥ सातत्रमृत्युंनप्रापशिवनिर्माल्यभक्षणात् ॥ क्षेत्रादन्यत्रमरणंजातंतस्यास्तदेनसः ॥ ६३ ॥ वरंविषमपिप्राश्यंशिवस्वंनैवभक्षयेत् ॥ विषमेकाकिनंहंतिशिवस्वंपुत्रपौत्रकम् ॥ ६४॥ शिवस्वपरिपुष्टांगाःस्पर्शनीयानसाधुभिः ॥ तेनकर्मविपाकेनततस्तेरौरवौकसः ॥६५॥ कश्चित्काकःसमालोक्यमंडकींतामितस्ततः ॥ पोप्लूयमानामादायचंच्वाक्षेत्राद्बहिर्गतः ॥ ६६ ॥

पुण्यंशंभोर्नैवेद्यभक्षणमित्यादिवचनात्स्वयंभूलिंगस्यओंकारस्यनैवेद्यभक्षणादनंतमेवपुण्यंतथाप्यस्यालोभाद्भक्षितत्वान्मनाक्पापमेवसंवृत्तमितिज्ञातव्यम्॥तदेनसस्तत्पापात् ॥ ६३ ॥ प्रसंगाद्बाणलिंगादिव्यतिरिक्तशिवनिर्माल्यभक्षणदोषमाह वरमितिद्वाभ्याम् ॥ ६४ ॥ ततस्तदनंतरम् ॥ यतइतिकचित् ॥ विपाकेनफलेन ॥ रौरवोनरकविशेषःसओकोयेषांतेतथा ॥ ६५ ॥ क्षेत्रादन्यत्रमरणे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कारणमाह ॥ कश्चिदिति ॥ पोप्लूयमानामतिशयेनगच्छंतीम् ॥ चंचातुंडेन ॥ ६६ ॥ वर्षाभ्वीभेकी ॥ ६७ ॥ ६८ ॥ गृध्रोदाक्षाय्यापरपर्यायोमांसाशीपक्षिविशेषस्तन्मुखी ॥ ६९ ॥ सम्यग्गीतरहस्यज्ञत्वमेवाह ॥ सप्तस्वराइति ॥ इतिगीतोपनिषदाएवंप्रकारेणसंगीतरहस्येनगांधर्ववेदेनवासामाधवीनाम्नीसदोंकारमर्चयेदितिचतुर्थेनान्वयः ॥ इतिशब्दोक्तमेवंप्रकारत्वमेवाह ॥ सप्तस्वराः षड्जऋषभगांधारमध्यमपंचमधैवतनिषादाः ॥ यद्यप्यमरेण निषादर्षभगांधारषड्जमध्यमधैवताः ॥ पंचमश्चेत्यमीसप्ततंत्रीकंठोत्थिताःस्वराइत्युक्तंतथापिशार्ङ्गदेवविरचितसङ्गीतरत्नाकरानुसारेणैवंविलिखितमिति ॥ तदुक्तम् ॥ श्रुतिभ्यःस्युःस्वराःषड्जर्षभगांधारमध्यमाः ॥ पंचमोधैवतश्चाथनिषादइतिसप्तते ॥ तेषांसंज्ञासरिगमपधनीत्यपरामताइति ॥ तेषांस्वरूपंनिर्वचनचतत्रैव टीकायांमल्लिनाथविरचितसङ्गीतरत्नाकरकलानिधौद्रष्टव्यम् ॥ एवमग्रेऽपि ॥ त्रयोग्रामाःषड्जग्राममध्यमग्रामगांधारग्रामाः ॥ तदुक्तम् ॥ तौद्वौधरातलेतत्रस्यात्षड्जग्रामआदिमः ॥ द्वितीयोमध्यमग्रामस्तयोर्लक्षणमुच्यते ॥ गांधारग्राममाचष्टतदायंनारदोमुनिरिति ॥ मूर्च्छनास्त्वेकविंशतिरिति ॥ तत्रषड्जग्रामेउत्तरमंद्रारजनीउत्तरायताशुद्धषड्जामत्सरिताअश्वक्रांताअभिरुद्गतेतिसप्त ॥ मध्यमग्रामेसौवीरीहारीणाअश्वाकालोपनताशुद्धमध्यमागीपौरवीतिसप्त ॥ गांधारग्रामेनंदाविशालासुमुखीचित्राचित्रवतीसुखाआलापेतिसप्त ॥ तदुक्तम् ॥ षड्जेतूत्तरमंद्रादौरजनीचोत्तरायता ॥ शुद्धषड्जामत्सारिताअश्वक्रांताभिरुद्गता ॥ मध्यमेस्यात्तुसौवीरीहारिणाश्वाततःपरम् ॥ स्यात्कालोपनताशुद्धमध्यमागीश्चपौरवी ॥ नंदाविशालासुमुखीचित्राचित्रवतीसुखा ॥ आलापाचेतिगांधारग्रामेस्युःसप्तमूर्च्छनाइतिनारदोक्ताश्च ॥ तदुक्तम् ॥ तासामन्यानिनामानिनारदोमुनिरब्रवीत् ॥ अश्वक्रांताचसौवीरीहृष्यकाचोत्तरायता ॥ रजनीतिसमाख्याताऋ

वर्षाभ्वीतेनसाक्षिताकाकेनक्षेत्रबाह्यतः ॥ अथसाकालतोभेकीतत्रैवक्षेत्रसत्तमे ॥ ६७ ॥ प्रदक्षिणीकरणतोलिंगस्यस्पर्शनादपि ॥ पुण्यापुण्यवतीजाता कन्यापुष्पबटोर्गृहे ॥ ६८ ॥ शुभावयवसंस्थानाशुभलक्षणलक्षिता ॥ परंगृध्रमुखीजातानिर्माल्याक्षतभक्षणात् ॥ ६९ ॥ सम्यग्गीतरहस्यज्ञानितरां मधुरस्वरा ॥ सप्तस्वरास्त्रयोग्रामामूर्च्छनास्त्वेकविंशतिः ॥ ७० ॥ तानाएकोनपंचाशत्तालाएकोत्तरंशतम् ॥ रागाःषडेवतेषांतुपंचपंचापिचांगनाः ॥ ७१ ॥

षिणासप्तमूर्च्छनाः ॥ आप्यायनीविश्वकृताचंद्राहैमाकपर्दिनी ॥ मैत्रीचांद्रमसीमित्र्यामध्यमेमूर्च्छनाइमाः ॥ गांधारेपूर्वोक्ताएव ॥ शार्ङ्गदेवेनचतुर्दशैवोक्ताः ॥ ७० ॥ तानाएकोनपंचाशदिति ॥ अग्निष्टोमात्यग्निष्टोमवाजपेयषोडशीपुंडरीकाऽश्वमेधराजसूयाः ( सर्वस्वदक्षिणदीक्षासोमे ) स्विष्टकृद्बहुसुवर्णगोसवमहाव्रतविश्वजिद्ब्रह्मयज्ञप्राजापत्याश्वक्रांतरथक्रांतविष्णुक्रांतसूर्यक्रांतगजक्रांतबलभिन्नागपक्षचातुर्मास्यसंस्थाशस्त्रउक्थसौत्रामणीचित्राउद्भित्सावित्रीअर्धसावित्रीसर्वतोभद्रआदित्यानामयनगवामयनसर्पाणामयनकौंडपायिनामयनअग्निचिद्द्वादशाहउपांशुसोमअश्वप्रतिग्रहबर्हिरथअभ्युदयइत्येकोनपंचाशत् ॥ तदुक्तम् ॥ अग्निष्टोमोऽत्यग्निष्टोमोवाजपेयश्चषोडशी ॥ पुंडरीकोऽश्वमेधश्चराजसूयस्ततःपरम् ॥ इतिस्युःषड्जहीनानांसप्तनामान्यनुक्रमात् ॥ क्रमादृषभहीनानांतानानामभिधाइमाः ॥ स्विष्टकृद्बहुसुवर्णोगोसवश्चमहाव्रतः ॥ विश्वजिद्ब्रह्मयज्ञश्चप्राजापत्यस्तुसप्तमः ॥ क्रमादृषभहीनानांतानानामभिधाःस्मृताः ॥ अश्वक्रांतोरथक्रांतोविष्णुक्रांतस्ततःपरम् ॥ सूर्यक्रांतोगजक्रांतोबलभिन्नागपक्षकः ॥ इतिमध्यमहीनानांसंज्ञाःसप्तक्रमान्मताः ॥ चातुर्मास्योऽथसंस्थाख्यःशस्त्रश्चोक्थश्चतुर्थकः ॥ सौत्रामणीतथाचित्रासप्तमस्तूद्भिदाह्वयः ॥ संज्ञाःपंचमहीनानांवाडवानामिमाःक्रमात् ॥ सावित्रीचार्धसावित्रीसर्वतोभद्रसंज्ञकः ॥ आदित्यानामयनंचगवामयनमेवच ॥ सर्पाणामयनःषष्ठःसप्तमःकौंडपायनः ॥ धैवतेनविहीनानांसप्तनामानिमेनिरे ॥ अग्निचिद्द्वादशाहश्चोपांशुःसोमाभिधस्ततः ॥ अश्वप्रतिग्रहोबर्हिरथोभ्युदयसंज्ञकः ॥ संज्ञानिषादहीनानांतानानामितिमन्वते ॥ तानाःस्युर्मूर्च्छनाःशुद्धाइत्युपक्रम्यएतेचैकोनपंचाशदिति ॥ तालाएकोत्तरंशतमिति ॥ तेचध्रुवशाम्यसन्निपातादयः ॥ तदुक्तम् ॥ ध्रुवंशाम्यस्तथातालःसन्निपातइतीरिताइत्यादि ॥ रागाःश्रीरागादयः ॥ तदुक्तंग्रंथांतरे ॥ श्रीरागोथवसंतश्चपंचमोभैरवस्तथा ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मेघरागश्चविज्ञेयःषष्ठोजटुलरायणइति ॥ तेषांतुतेषामेवषण्णांरागाणांपंचपंचचैवंत्रिंशदंगनाः ॥ अपिःसमुच्चये ॥ तेषांरागाणांप्रत्येकंपंचपंचअंगनाःस्त्रियोपीत्यर्थः ॥ ७१ ॥ एवंमिलित्वाषड्रागा स्त्रिंशद्रागिण्यइतिषट्त्रिंशद्रागरागिण्यः ॥ इतिरागिमुदावहाः॥इतिशब्देनपूर्वोक्ताःसप्तस्वरादयोगृह्यंते ॥ रागिमुदावहाःकामिनांहर्षजनकाः ॥ मतांतरमाह॥ देशकालविभेदेनेति ॥ कालेत्यत्रकाकुरि तिचपाठोदृश्यते ॥ अपरारागाः ॥ तेचमालवश्रीस्तोडीवसंतोधन्याशीदेशीवंगालोभैरवोवराडीगुर्जरीत्यादिकाः ॥ ७२ ॥ पक्षांतरमाह ॥ यावंतइति ॥ एकोत्तरशतमित्यर्थः ॥ ७३ ॥ ७४ ॥ अमंस्तामन्यत ॥ ७५ ॥ हेदमन ॥ महतिब्रह्मणिआत्मायस्यसमहात्मातस्य ॥ ७६ ॥ अतंद्रितमनाअनालस्यचित्ता ॥ ७७ ॥ विघ्नानुमेयप्रकारमाह ॥ निमेषांतरितइति ॥ ७८ ॥ ततः साप्रायश्चित्तंकृतवतीत्याह ॥ इतीति ॥ नतत्याजनत्यक्तवती ॥ तत्प्राप्यचोंकृतेरितिपाठेतत्तदाओंकारेश्वरस्यसेवांप्राप्यसामाधवीओंकारेश्वरलिंगनामामृतंपिबेदित्यन्वयः ॥ ७९ ॥ द्रष्टुमिच्छा

षड्विंशद्रागरागिण्यइतिरागिमुदावहाः ॥ देशकालविभेदेनपंचषष्टिस्तथापराः ॥ ७२ ॥ यावंतएवतालाःस्यूरागास्तावंतएवहि ॥ इतिगीतोपनिषदाप्रत्य हंसाशुभव्रता ॥ ७३ ॥ माधवीमधुरालापासदोंकारंसमर्चयेत् ॥ प्राप्याप्यनर्घ्यतारुण्यंसातुपुष्पबटोःसुता ॥ ७४ ॥ प्राग्जन्मवासनायोगादोंकारंबह्वमं स्तवै ॥ स्वभावचंचलंचेतस्तस्यास्तल्लिंगसेवनात् ॥ ७५ ॥ दमनस्थैर्यमगमद्योगेनेवमहात्मनः ॥ नदिवाबाधयांचक्रेक्षुत्तृण्निद्राक्षपासुताम् ॥ ७६ ॥ अतंद्रितमनाआसीत्सातल्लिंगनिरीक्षणे ॥ अक्ष्णोर्निमेषायावंतस्तस्याआसन्दिवानिशम् ॥ ७७ ॥ तावत्कालस्तयासाध्व्यामहान्विघ्नोऽनुमीयते ॥ निमेषांतरितःकालोयोयोव्यर्थोगतोमम ॥ लिंगानवेक्षणात्तत्रप्रायश्चित्तंकथंभवेत् ॥ ७८ ॥ इतिसंचिंतयंत्येवसेवांतत्याजनोंकृतेः ॥ जलाभिला षिणीसातुलिंगनामामृतंपिबेत् ॥ ७९ ॥ नान्यद्दिदृक्षिणीतस्याअक्षिणीश्रुतिगेअपि ॥ विहायलिंगमोंकारंहृद्विहायःस्थितंसताम् ॥ ८० ॥ तस्याः शब्दग्रहौनान्यशब्दग्रहणतत्परौ ॥ अतीवनिपुणौजातौतत्सन्माल्यकरौकरौ ॥ ८१ ॥ नान्यत्रचरणौतस्याश्चरतःसुखवांछया ॥ त्यक्त्वोंकाराजिरक्षो णींक्षुण्णांनिर्वाणपद्मया ॥ ८२ ॥ ओंकारंप्रणवंसारंपरंब्रह्मप्रकाशकम् ॥ शब्दब्रह्मत्रयीरूपंनादबिंदुकलालयम् ॥ ८३ ॥ सदक्षरंचादिरूपंविश्वरूपं परावरम् ॥ वरंवरेण्यंवरदंशाश्वतंशांतमीश्वरम् ॥ ८४ ॥

दिदृक्षासावर्ततेययोस्तेतथा ॥ श्रुतिगेकर्णगेअतिविशालेइतियावत् ॥ नान्यदित्यनेनाक्षिप्तंदिदृक्षाविषयमाह ॥ विहायेति ॥ हृद्विहायःस्थितंहृदयाकाशस्थितम् ॥ ८० ॥ शब्दग्रहौकर्णौ ॥ ८१ ॥ अजिरक्षोणींप्रांगणभूमिम् ॥ क्षुण्णामधिष्ठितामित्यर्थः ॥ ८२ ॥ ओंकारमोंकारेश्वरंप्रोच्चरत्तस्यामाधव्यावागिंद्रियंनामांतरंनगृह्णातीतिसप्तमेनान्वयः ॥ तंविशिनष्टि मध्येन ॥ सर्वैः प्रणूयतेस्तूयतेस्वसेवितारंपदंप्रणयेदितिवाप्रणवस्तम् ॥ तथाचोक्तमत्रैवं प्रणूयतइत्यादि ॥ स्वसेवितारमित्यादिचेति ॥ सारंस्थिरंप्रलयेप्यवशिष्यमाणम् ॥ परंसर्वाधिकम् ॥ तदुक्तमत्रैव ॥ सर्वेभ्योप्यधिकइति ॥ ब्रह्मप्रकाशकंपरमात्मप्रकाशकम् ॥ शब्दब्रह्मरूपायात्रयीवेदस्तस्यरूपंयस्मात्तंतद्रूपंवा ॥ नादबिंद्वात्मकयोःकलयोःआलयमाश्रयम् ॥ ८३ ॥ सदक्षरंसर्वभूतमक्षरकूटस्थ मव्याकृतमितियावत्तद्रूपम् ॥ पृथक्पदंवा ॥ तदुक्तंभगवता ॥ क्षरःसर्वाणिभूतानिकूटस्थोक्षरउच्यतइति ॥ आदिरूपमादिकारणमीश्वरमितियावत् ॥ अतएवविश्वंरूप्यतेऽभिव्यज्यतेयेनतद्विश्वरूपम् ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सर्वप्रपंचरूपंवा ॥ परावरंकार्यकारणात्मकम् ॥ परेब्रह्मादयोऽवरेयस्मात् उत्कृष्टापकृष्टरूपंवा ॥ वरंसर्वश्रेष्ठम् ॥ वरेण्यंवरणाययोग्यम् ॥ वरदंवरदातारम् ॥ ईश्वरंसर्वनियंतारम् ॥ ८४ ॥ ॥ ८५ ॥ स्वांतमंतःकरणम् ॥ ८६ ॥ निरुपाधिकार्योपाधिरहितम् ॥ ऐकपद्यपाठेकर्मधारयः ॥ अज्यतेऽनेनेत्यंजनमुपाधिः ॥ निरंजनंकारणोपाधिरहितमितियावत् ॥ निर्मलंरागादिशून्यम् ॥ निजोऽसाधारणउदयोयस्यतम् ॥ ८७ ॥ सर्वंश्रीरुद्ररूपम् ॥ ८८ ॥ ८९ ॥ ९० ॥ रंगमालाश्चित्रसमूहान् ॥ प्रासादंपारितःप्रासादस्यसर्वतइत्यर्थः ॥ ९१ ॥ ९२ ॥ चतुर्दश्यांशुक्लायामि

सर्वलोकैकजनकंसर्वलोकैकरक्षकम् ॥ सर्वलोकैकसंहर्तृसर्वलोकैकवंदितम् ॥ ८५ ॥ आद्यंतरहितंनित्यंशिवंशंकरमव्ययम् ॥ एकंगुणत्रयातीतं भक्तस्वांतकृतास्पदम् ॥ ८६ ॥ निरुपाधिंनिराकारंनिर्विकारंनिरंजनम् ॥ निर्मलंनिरहंकारंनिष्प्रपंचंनिजोदयम् ॥ ८७ ॥ स्वात्माराममनंतंचसर्वगंसर्वदर्शिनम् ॥ सर्वदंसर्वभोक्तारंसर्वंसर्वसुखास्पदम् ॥८८॥ वागिंद्रियंतदीयंचप्रोच्चरत्तदहर्निशम् ॥ नामांतरंनगृह्णातिकचिदन्यस्यकस्यचित्॥८९॥ एतन्नामाक्षररसंरसयंतीदिवानिशम् ॥ रसनानैवजानातितस्याअन्यद्रसांतरम् ॥ ९० ॥ संमार्जनंरंगमालाःप्रासादंपरितःसदा ॥ विदध्यान्माधवीतत्रथार्चापात्रशोधनम् ॥ ९१ ॥ तत्रपाशुपतायैवैप्रणवेशार्चनेरताः ॥ तांश्चशुश्रूषयेन्नित्यंपितृबुद्ध्यातिभक्तितः ॥ ९२ ॥ वैशाखस्यचतुर्दश्यामेकदासातु माधवी ॥ रात्रौजागरणंकृत्वादिवोपवसनान्विता ॥ ९३ ॥ यात्रामिलितभक्तेषुप्रातर्यातेषुसर्वतः ॥ संमार्जनादिकंकृत्वालिंगमभ्यर्च्यहर्षतः ॥ ९४ ॥ गायंतीमधुरंगीतंनृत्यंतीनिजलीलया॥ध्यायंतीलिंगमोंकारंतत्रलिंगेलयंययौ ॥ ९५ ॥ अनेनैवशरीरेणपार्थिवेनमहामतिः ॥ अस्मदाचार्यमुख्यानां पश्यतांचतपस्विनाम् ॥ ९६ ॥ प्रादुर्बभूवयल्लिंगाज्ज्योतिर्जटिलितांबरम् ॥ तत्रज्योतिषिसाबालाज्योतिर्मय्यपिसाप्यभूत् ॥ ९७ ॥ राधशुक्लचतुर्दश्यामद्यापिक्षेत्रवासिनः ॥ तत्रयात्रांप्रकुर्वंतिमहोत्सवपुरःसराः ॥ ९८ ॥ तत्रजागरणंकृत्वाचतुर्दश्यामुपोषिताः ॥ प्राप्नुवंतिपरंज्ञानंयत्रकुत्रापिवैमृताः ॥ ९९ ॥ ब्रह्मांडोदरमध्येतुयानितीर्थानिसर्वतः ॥ तानिवैशाखभूतायामायांत्योंकृतिदर्शने ॥१००॥ लिंगाग्रेश्रीमुखीनाम्नीगुहास्तिपरमोत्तमा ॥ पातालस्यचतद्द्वारंतत्रसिद्धावसंतिहि ॥ १ ॥ तिष्ठेयुःपंचरात्रंयेगुहायांतत्रसुव्रताः ॥ तेनागकन्याःपश्यंतिब्रूयुस्ताश्चशुभाशुभम् ॥ २ ॥ कंदरोत्तरदिग्भागेतत्रकूपोरसोदकः ॥ आषण्मासंचतत्पीत्वापिबेद्ब्रह्मरसायनम् ॥ ३ ॥ तत्रनादेश्वरंलिंगंदृष्ट्वानादनिदानभूः ॥ सर्वनादात्मकंविश्वंतच्छ्रवोगोचरीभवेत् ॥ ४ ॥ तत्रमत्स्योदरींस्नात्वास्वर्धुनींवरुणाप्लुताम् ॥ कृतकृत्योभवेज्जंतुर्नैवशोचतिकुत्रचित् ॥ ५ ॥

तिशेषः ॥ अग्रेतथोक्तेः ॥ उपवसनान्विताउपोषणयुतेत्यर्थः ॥ ९३ ॥ ९४ ॥ ९५ ॥ अस्माकमाचार्यागुरवोमुख्याःश्रेष्ठायेषांतेतथातेषाम् ॥ ९६ ॥ लयप्रकारमाह ॥ प्रादुरिति ॥ जटिलितां बरंव्याप्ताकाशम् ॥ ९७ ॥ राधोवैशाखः ॥ यदाहामरः ॥ वैशाखेमाधवोराधइति ॥ ९८ ॥ ९९ ॥ भूतायांचतुर्दश्यांशुक्लायामित्येव ॥ १०० ॥ १ ॥ २ ॥ कंदरागुहा ॥ ब्रह्मरसायनं ब्रह्मामृतम् ॥ ३ ॥ नादनिदानभूःनादोत्पत्तिस्थानम् ॥ पाठांतरेनिनादउद्रेकःप्रकटतेतियावत् ॥ सर्वनादात्मकंतच्छ्रवोगोचरीभवेत् ॥ तल्लिंगम् ॥ द्रष्टुःश्रवणेंद्रियस्यविषयःस्यादित्यर्थः ॥४॥५॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पृथिवीभागस्याधिक्यात्पार्थिवेनेत्युक्तम् ॥ वस्तुतःपांचभौतिकेनेत्यर्थः ॥ तथाचव्याससूत्रम् ॥ तेपुवैशेष्यात्तद्वादस्तद्वादइति ॥ ६ ॥ ७ ॥ ८ ॥ गहनेवने ॥ ९ ॥ आयतनानिदेवतास्थानानि ॥ ततस्तदा ॥ ११० ॥ ११ ॥ १२ ॥ शीलिताश्रिता ॥ १३ ॥ १४ ॥ शिश्रियुःसेवितवंतः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ १२० ॥ २१ ॥ १२२ ॥ ॥

असंख्यातागताःसिद्धिमोंकारेश्वरसेवकाः ॥ पार्थिवेनैवदेहेनादिव्यभूतेनतत्क्षणात् ॥ ६ ॥ अविमुक्तंपरंक्षेत्रंब्रह्मांडादपिसर्वतः ॥ ततोपिपरओंकारउक्तोमत्स्योदरीतटे ॥ ७ ॥ प्रणवेशोंऽग्रयैःकार्श्यांननतोनापिचार्चितः ॥ किमर्थंतेसमुत्पन्नामातृतारुण्यहारिणः ॥ ८ ॥ यदाप्रभृतिविश्वेशोमंदरादागतोऽभवत् ॥ तस्मिन्नानंदगहनेतदाप्रभृतिसत्तम ॥ ९ ॥ सर्वाण्यायतनान्याशुसाब्धीनिसगिरीण्यपि ॥ सनदीनिसतीर्थानिसद्वीपानियगुस्ततः ॥ ॥ ११० ॥ इदानींममभाग्येनस्मारितोहंत्वयामुने ॥ अहमप्यागमिष्यामियामःकाशींशनैःशनैः ॥ ११ ॥ एतेपिममशिष्यायेमहापाशुपतव्रताः ॥ काशींयियासवस्तेपितःसर्वेमुमुक्षवः ॥ १२ ॥ अपिवार्धकमासाद्ययैःकाशीनैवशीलिता ॥ मानुषेदुर्लभेनष्टेकुतस्तेषांमहासुखम् ॥ १३ ॥ यावन्नेंद्रियवैकल्यंयावन्नैवायुषःक्षयः ॥ तावत्सेव्यंप्रयत्नेनशंभोरानंदकाननम् ॥ १४ ॥ यआनंदवनंशंभोःशिश्रियुःश्रीनिकेतनम् ॥ अचलाश्रीर्नमुंचेत्तान्महासौख्यैकशेवधीन् ॥ १५ ॥ इत्याख्यायकथांरम्यांगर्गःपाशुपतोत्तमः ॥ भारद्वाजेनसहितःप्रापवाराणसींपुरीम् ॥ १६ ॥ दमनोपिहिधर्मात्मागर्गाचार्येणसंयुतः ॥ आराध्यश्रीमदोंकारंतस्मिँल्लिंगेलयंगतः ॥ १७ ॥ ॥ स्कंदउवाच ॥ ॥ इल्वलारेपरंस्थानमोंकारमविमुक्तके ॥ तत्रसिद्धिपरांजग्मुःसाधकाबहुशोमुने ॥ १८ ॥ कलौकलुषचित्तानांपुरोनाख्येयमेवहि ॥ प्रणवेश्वरमाहात्म्यंनास्तिकानांविशेषतः ॥ १९ ॥ येनिंदंतिमहादेवंक्षेत्रंनिंदंतियेऽधियः ॥ पुराणंयेचनिंदंतितेसंभाष्यानकुत्रचित् ॥ १२० ॥ ओंकारसदृशंलिंगंनक्वचिज्जगतीतले ॥ इतिगौर्येसमाख्यातंदेवदेवेननिश्चितम् ॥ १२१ ॥ इममध्यायमाकर्ण्यनरस्तद्गतमानसः ॥ विमुक्तःसर्वपापेभ्यःशिवलोकमवाप्नुयात् ॥ १२२ ॥ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यांसंहितायांचतुर्थेकाशीखंडउत्तरार्धेओंकारमाहात्म्यंनामचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥ छ ॥ ॥ अगस्त्यउवाच ॥ ॥ श्रुत्वोंकारकथामेतांमहापातकनाशिनीम् ॥ नतृप्तोस्मिविशाखाथब्रूहित्रैविष्टपंकिंथाम् ॥ १ ॥

इतिश्रीरामानन्दकृतायांकाशीखण्डटीकायांचतुःसप्ततितमोऽध्यायः ॥७४॥ ॥छ॥ ॥ अध्यायेसप्ततितमेपंचोर्ध्वेपरमाद्भुते ॥ त्रिलोचनस्यदेवस्यह्याविर्भावोऽनुवर्ण्यते ॥१॥ त्रिलोचनतीर्थसंबंधिनींत्रैविष्टपींत्रिलोचनसंबंधिनींवा ॥ तदुक्तमत्रैव ॥ विष्टपत्रितयांतर्येदेवर्षिमनुजोरगाः ॥ ससरित्पर्वतारण्याःसंतितेतत्रयन्मुने ॥ तदारभ्यचतत्तीर्थंतच्चलिंगंत्रिलोचनम् ॥ त्रिविष्टपमितिख्यातामिति॥१॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

॥ २ ॥ ३ ॥ विरजाख्यमित्यत्रसंधिरार्षः ॥ सर्वेसांताअकारांताइतिवा ॥ ४ ॥ अन्वयभेदात्तिस्रइतिपदयोरपौनरुक्त्यम् ॥ ५ ॥ ६ ॥ महाधाममहातेजोमहाधारंवा ॥ ७ ॥ ८ ॥ ९ ॥ प्रतीच्यांपश्चिमायांदिशि ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ स्रष्टारोब्रह्माणः ॥ १४ ॥ शुद्धबुद्धिभिरिति ॥ नेदमधिकारिविशेषणंकिंत्वन्येषामश्रद्धयातत्राप्रवृत्तेरर्थात्तेष्वेवपर्यवसानादनुवादमात्रम् ॥

कथंचकथितादेव्यैदेवदेवेनषण्मुख ॥ आविर्भूतिर्महाबुद्धेपुण्यात्रैलोचनीपरा ॥ २ ॥ स्कंदउवाच ॥ ॥ आकर्णयमुनेवच्मिकथांश्रमनिवारिणीम् ॥ यथादेवेनकथितांत्रिविष्टपसमुद्भवाम् ॥ ३ ॥ विरजाख्यंहितत्पीठंतत्रलिंगंत्रिविष्टपम् ॥ तत्पीठदर्शनादेवविरजाजायतेनरः ॥ ४ ॥ तिस्रस्तुसंगतास्तत्रस्रोतस्विन्योघटोद्भव ॥ तिस्रःकल्मषहारिण्योदक्षिणेहित्रिलोचनात् ॥ ५ ॥ स्रोतोमूर्तिधराःसाक्षाल्लिंगस्नपनहेतवे ॥ सरस्वत्यथकालिंदीनर्मदाचातिशर्मदा ॥ ६ ॥ तिस्रोपिहित्रिसंध्यंताःसरितःकुंभपाणयः ॥ स्नपयतिमहाधामलिंगंत्रैविष्टपंमहत् ॥ ७ ॥ लिंगानिपरितस्ताभिःस्वनाम्नास्थापितान्यपि ॥ तेषांसंदर्शनात्पुंसांतासांस्नानफलंभवेत् ॥ ८ ॥ सरस्वतीश्वरंलिंगंदक्षिणेनत्रिविष्टपात् ॥ सारस्वतंपदंदद्याद्दृष्टंस्पृष्टंचजाड्यहृत् ॥ ९ ॥ यमुनेशंप्रतीच्यांचनरैर्भक्त्यासमर्चितम् ॥ अपिकिल्बिषवद्भिश्चयमलोकनिवारणम् ॥ १० ॥ दृष्टंत्रिलोचनात्प्राच्यांनर्मदेशंसुशर्मदम् ॥ तल्लिंगार्चनतोनृणांगर्भवासोनिषिध्यते ॥ ११ ॥ स्नात्वापिलिपिलातीर्थेत्रिविष्टपसमीपतः ॥ दृष्ट्वात्रिलोचनंलिंगंकिंभूयःपरिशोचति ॥ १२ ॥ त्रिविष्टपस्यलिंगस्यस्मरणादपिमानवः ॥ त्रिविष्टपपतिर्भूयान्नात्रकार्याविचारणा ॥ १३ ॥ त्रिविष्टपस्यद्रष्टारःस्रष्टारःस्युर्नसंशयः ॥ कृतकृत्यास्तएवात्रतएवात्रमहाधियः ॥ १४ ॥ आनंदकाननेलिंगंप्रणतंयैस्त्रिविष्टपम् ॥ त्रिलोचनस्यनामापियैःश्रुतंशुद्धबुद्धिभिः ॥ १५ ॥ सप्तजन्मार्जितात्पापात्तेपूतानात्रसंशयः ॥ पृथिव्यांयानिलिंगानितेषुदृष्टेषुयत्फलम् ॥ १६ ॥ तत्स्यात्त्रिविष्टपेदृष्टेकाश्यांमन्येततोधिकम् ॥ काश्यांत्रिविष्टपेदृष्टेदृष्टंसर्वंत्रिविष्टपम् ॥ १७ ॥ क्षणान्निर्धूतपापोसौनपुनर्गर्भभाग्भवेत् ॥ सस्नातःसर्वतीर्थेषुसर्वावभृथवान्सच ॥ १८ ॥ योवैपिलिपिलातीर्थेस्नात्वोत्तरवहांभसि ॥ सरित्त्रयंमहापुण्यंयत्रसाक्षाद्वसेत्सदा ॥ १९ ॥ तत्रश्राद्धादिकंकृत्वागयायांकिंकरिष्यति ॥ स्नात्वापिलिपिलातीर्थेकृत्वावैपिंडपातनम् ॥ २० ॥ दृष्ट्वात्रिविष्टपंलिंगंकोटितीर्थफलंलभेत् ॥ यदन्यत्रार्जितंपापंतत्काशीदर्शनाद्व्रजेत् ॥ २१ ॥ काश्यांतुयत्कृतंपापंतत्पैशाचपदप्रदम् ॥ प्रमादात्पातकंकृत्वाशंभोरानंदकानने ॥ २२ ॥ दृष्ट्वात्रिविष्टपंलिंगंतत्पापमपिहास्यति ॥ सर्वस्मिन्नपिभूपृष्ठेश्रेष्ठमानंदकाननम् ॥ २३ ॥ तत्रापिसर्वतीर्थानिततोप्योंकारभूमिका ॥ ओंकारादपिसल्लिंगान्मोक्षवर्त्मप्रकाशकात् ॥ २४ ॥ अतिश्रेष्ठतरंलिंगंश्रेयोरूपंत्रिलोचनम् ॥ २५ ॥ तेजस्विषुयथाभानुर्दृश्येषुचयथाशशी ॥ तथालिंगेषुसर्वेषुपरंलिंगंत्रिलोचनम् ॥ २६ ॥ त्रिलोचनार्चकानांसापदवीनदवीयसी ॥ परंनिर्वाणपद्मायामहासौख्यैकशेवधेः ॥ २७ ॥

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ दृश्येषुदर्शनीयेषु ॥ २६ ॥ महासौख्यैकशेवधेःपरमानंदैकनिधेः ॥ निर्वाणपद्मायाःमोक्षलक्ष्म्याः ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सकृत्त्रिलोचनार्चातोयच्छ्रेयःसमुपार्ज्यते ॥ नतदाजन्मसंपूज्यलिंगान्यन्यानिलभ्यते ॥२८॥ काश्यांत्रिलोचनंलिंगंयेर्चयंतिमहाधियः ॥ तेचर्यास्त्रिभुवनौकोभिर्मम्प्रीतिमभीप्सुभिः ॥ २९ ॥ कृत्वापिसर्वसंन्यासंकृत्वापाशुपतव्रतम् ॥ नियमेभ्यःस्खलित्वापिकुतोबिभ्यतिमानवाः ॥ ३० ॥ विद्यमाने महालिंगेमहापापौघहारिणि॥त्रिविष्टपेपुण्यराशौमोक्षनिक्षेपसद्मनि ॥३१॥ समभ्यर्च्यमहालिंगंसकृद्देवत्रिलोचनम् ॥ मुच्यतेकलुषैःसर्वैरपिजन्मशतार्जितैः ॥ ३२ ॥ ब्रह्महापिसुरापोवास्तेयीवागुरुतल्पगः ॥ तत्संयोग्यपिवावर्षंमहापापीप्रकीर्तितः ॥ ३३ ॥ परदाररतश्चापिपरहिंसारतोपिवा ॥ परापवादशीलोपितथाविस्रंभघातकः ॥ ३४ ॥ कृतघ्नोपिभ्रूणहापिवृषलीपतिरेववा ॥ मातापितृगुरुत्यागीवह्निदोगरदोपिवा ॥ ३५ ॥ गोघ्नःस्त्रीघ्नोपिशूद्रघ्नःकन्यादूषयितापिच ॥ क्रूरोवापिशुनोवापिनिजधर्मपराङ्मुखः ॥ ३६ ॥ निंदकोनास्तिकोवापिकूटसाक्ष्यप्रवादकः ॥ अभक्ष्यभक्षकोवापितथाऽविक्रेयविक्रयी ॥ ३७ ॥ इत्यादिपापशीलोपिमुक्त्वैकंशिवनिंदकम्॥ पापान्निष्कृतिमाप्नोतिनत्वालिंगंत्रिलोचनम् ॥ ३८ ॥ शिवनिंदारतोमूढःशिवशास्त्रविनिंदकः ॥ तस्यनोनिष्कृतिर्दृष्टाक्वापिशास्त्रेपिकेनचित् ॥ ३९ ॥ आत्मघातीसविज्ञेयःसदात्रैलोक्यघातकः ॥ शिवानिंदांविधत्तेयःसनाभाष्योऽधमाधमः ॥ ४० ॥ शिवनिंदारतायेचशिवभक्तजनेष्वपि ॥ तेयांतिनरकेघोरेयावच्चंद्रदिवाकरौ ॥ ४१ ॥ शैवाःपूज्याःप्रयत्नेनकाश्यांमोक्षमभीप्सुभिः ॥ तेष्वर्चितेष्वपिशिवःप्रीतोभवत्यसंशयः ॥ ४२ ॥ सर्वेषामिहपापानांप्रायश्चित्तचिकीर्षया ॥ निःशंकैरेववक्तव्यंप्रमाणज्ञैरिदंवचः ॥ ४३ ॥ पुरश्चरणकामश्चेद्भीतोसियदिपापतः ॥ मन्यसेयदिनःसत्यंवाक्यंशास्त्रप्रमाणतः ॥ ४४ ॥ ततःसर्वंपरित्यज्यकृत्वामनसिनिश्चयम् ॥ आनंदकाननंयाहियत्रविश्वेश्वरःस्वयम् ॥ ४५ ॥ यत्रक्षेत्रप्रविष्टानांनराणांनिश्चितात्मनाम् ॥ नबाधतेऽघनिचयःप्राप्येतचपरोवृषः ॥ ४६ ॥ तत्राद्यापिमहातीर्थेत्रिस्रोतस्यतिनिर्मले ॥ पुण्येपिलिपिलानाम्नित्रिसरित्परिसेविते ॥ ४७ ॥ त्रिलोचनाक्षिविक्षेपपरिक्षिप्तमहैनसि ॥ स्नात्वागृह्योक्तविधिनातर्पणीयान्प्रतर्प्यच ॥ ४८ ॥ दत्त्वादेयंयथाशक्तिवित्तशाठ्यविवर्जितः ॥ दृष्ट्वात्रिविष्टपंलिंगंसमभ्यर्च्यातिभक्तितः ॥ ४९ ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

गंधाद्यैरित्यादिद्वितीयांतानांपदानांसमभ्यर्च्येत्यनेनान्वयः ॥ माल्यैर्मालाभिःपुष्पैर्वा ॥ ५० ॥ ५१ ॥ ५२ ॥ निरेनानिष्पापः ॥ ५३ ॥ एवंपापक्षयमुक्त्वापुण्यप्राप्तिमाह ॥ ततइत्येकेन ॥५४॥ ५५ ॥ ५६ ॥ प्रदक्षिणातइतिशेषः ॥ ५७ ॥ भुजगोऽनंतोमेखलाकांचीयस्यतम् ॥ ५८ ॥ रात्रिंदिवंरात्रौदिवसेच ॥ तत्रापिसर्वदेत्यर्थः ॥ ५९ ॥ प्रकृंतिप्रकर्षेणच्छे

गंधाद्यैर्विविधैर्माल्यैःपंचामृतपुरःसरैः ॥ धूपैर्दीपैःसनैवेद्यैर्वासोभिर्बहुभूषणैः ॥ ५० ॥ पूजोपकरणैर्द्रव्यैर्घंटादर्पणचामरैः ॥ चित्रध्वजपताकाभिर्नृत्यवाद्यसुगायनैः ॥ ५१ ॥ जपैःप्रदक्षिणाभिश्चनमस्कारैर्मुदायुतैः ॥ परिचारकसंतोषैःकृत्वेतिपरिपूजनम् ॥ ५२ ॥ ब्राह्मणान्वाचयेत्पश्चान्निष्पापोहमितिब्रुवन् ॥ एवंकुर्वन्नरःप्राज्ञोनिरेनाजायतेक्षणात् ॥ ५३ ॥ ततःपंचनदेस्नात्वामणिकर्णीह्रदेततः ॥ ततोविश्वेशमभ्यर्च्यप्राप्नोतिसुकृतंमहत् ॥ ५४ ॥ प्रायश्चित्तमिदंप्रोक्तंमहापापविशोधनम् ॥ नास्तिकेनप्रवक्तव्यंकाशीमाहात्म्यनिंदके ॥ ५५ ॥ दद्याद्द्रव्यलोभेनप्रायश्चित्तमिदंशुभम् ॥ दातानरकमाप्नोतिसत्यंसत्यंवटोद्भव ॥ ५६ ॥ क्षमांप्रदक्षिणीकृत्ययत्फलंसम्यगाप्यते ॥ प्रदोषेतत्फलंकाश्यांसतकृत्वस्त्रिलोचने ॥ ५७ ॥ भुजंगमेखलंलिंगंकाश्यांदृष्ट्वात्रिविष्टपम् ॥ जन्मांतरेपिमुक्तःस्यादन्यत्रमरणेसति ॥ ५८ ॥ अन्यत्रसर्वलिंगेषुपुण्यकालोविशिष्यते ॥ त्रिविष्टपेपुण्यकालःसदारात्रिंदिवंनृणाम् ॥ ५९ ॥ लिंगान्योंकारमुख्यानिसर्वपापप्रकृंत्यलम् ॥ परंत्रैलोचनीशक्तिःकाचिदन्यैवपार्वति ॥ ६० ॥ यतःसर्वेषुलिंगेषुलिंगमेतदनुत्तमम् ॥ तत्कारणंशृणुवपर्णेकर्णेकुरुवदाम्यहम् ॥ ६१ ॥ पुरामेयोगयुक्तस्यलिंगमेतद्भुवस्तलात् ॥ उद्भिद्यसप्तपातालंनिरगात्पुरतोमहत् ॥ ६२ ॥ अस्मिँल्लिंगेपुरागौरिसुगुप्तंतिष्ठतामया ॥ तुभ्यंनेत्रत्रयंदत्तंनिरैक्षिष्ठास्तथोत्तमम् ॥ ६३ ॥ तदाप्रभृतिदेवेशिलिंगमेतात्रिलोचनम् ॥ विष्टपत्रितयांतःस्थैर्गीयतेज्ञानदृष्टिदम् ॥ ६४ ॥ त्रिलोचनस्ययेभक्तास्तेपिसर्वेत्रिलोचनाः ॥ ममपारिषदास्तेतुजीवन्मुक्तास्तएवहि ॥ ६५ ॥ त्रिलोचनस्यलिंगस्यमहिमानंनकश्चन ॥ सम्यग्वेत्तिमहेशानिमयैवपरिगोपितम् ॥६६॥ शुक्लराधतृतीयायांस्नात्वापैलिपिलेह्रदे ॥ उपोषणपराभक्त्यारात्रौजागरणान्विताः ॥६७॥ त्रिलोचनंपूजयित्वाप्रातःस्नात्वापितत्रवै ॥ पुनर्लिंगंसमभ्यर्च्यदत्त्वाधर्मघटानपि ॥ ६८ ॥ सान्नान्सदक्षिणान्देविपितॄनुद्दिश्यहर्षिताः ॥ विधायपारणंपश्चाच्छिवभक्तजनैःसह ॥ ६९ ॥ विसृज्यपार्थिवंदेहंतेनपुण्येननोदिताः ॥ भवंतिदेविनियतंगणाममपुरोगमाः ॥ ७० ॥ तावद्भ्रमंतिसंसारेदेवामर्त्यामहोरगाः ॥ गौरियावन्नपश्यंतिकाश्यांलिंगंत्रिलोचनम् ॥७१॥ सकृत्त्रिविष्टपंदृष्ट्वास्नात्वापैलिपिलेह्रदे ॥ नजातुःमातुस्तनपोजायतेजंतुरत्रहि ॥७२॥

दकानि ॥ प्रहंतीतिपाठेपिसएवार्थः ॥६०॥६१॥ भुवस्तलाद्भूमेरधोभागात् ॥ तत्रावधिमाह ॥ उद्भिद्येति ॥ ६२ ॥ त्रिलोचननामनिर्वक्ति अस्मिन्नितिद्वयेन ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ॥ ६७ ॥ धर्मघटान्धर्ममुद्दिश्यदीयमानान्कुंभान् ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ सकृत्त्रिविष्टपमिति ॥ अग्निहोत्रंजुहोतियवागूंपचतीतिवदर्थक्रमोऽत्रद्रष्टव्योनात्विडोयजतीत्यादिवत्पाठक्रमः ॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मातश्चतुर्थ्यांस्नात्वायस्तीर्थेपैलिपिलेशुभे ॥ त्रिलोचनंसमभ्यर्च्येत्यादिबहुवचनविरोधात् ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ शांतनवंशंतनुनास्थापितम् ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥
॥ ८१ ॥ ८२ ॥ आख्यायिकांप्रस्तावयति ॥ अन्यच्चेति ॥ ८३ ॥ ॥ इतिश्रीरामानन्दकृतायांकाशीखण्डटीकायांपंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ छ ॥ ॥ षट्सप्ततितमेऽध्याये
प्रभावोतिमहत्तरः ॥ त्रिलोचनस्यदेवस्यवर्ण्यतेतिसुखप्रदः ॥ १ ॥ अन्यच्चात्रैवयद्वृत्तंतद्ब्रवीमीत्युक्तंतमेवेतिहासंश्रोतृमनःसमाधानप्रार्थनापूर्वकंप्रस्तावयति ॥ शृणुष्वेति ॥ इतिहासःपुरावृत्तः

प्रतिमासंसदाष्टम्यांचतुर्दश्यांचभामिनि ॥ आयांतिसर्वतीर्थानिद्रष्टुंदेवंत्रिविष्टपम् ॥७३॥ त्रिविष्टपाद्दक्षिणतःस्नातःपैलिपिलेंऽभसि॥तत्रसंध्यामुपास्यै
कांराजसूयफलंलभेत् ॥ ७४ ॥ पादोदकाख्यस्तत्रैवकूपःपापविनाशकः ॥ प्राश्यतस्योदकंमर्त्योनमर्त्योजायतेपुनः ॥ ७५ ॥ तस्यलिंगस्यपार्श्वेतुसंति
लिंगान्यनेकशः ॥ कैवल्यदानितान्यत्रदर्शनात्स्पर्शनादपि ॥७६॥ तत्रशांतनवंलिंगंगंगातीरेप्रतिष्ठितम् ॥ तद्दृष्ट्वाशांतिमाप्नोतिनरःसंसारतापितः ॥७७॥
तद्दक्षिणेमहालिंगंमुनेभीष्मेशसंज्ञितम् ॥ कलिःकालश्चकामश्चबाधतेनतदीक्षणात् ॥ ७८ ॥ तत्प्रतीच्यांमहालिंगंद्रोणेशइतिकीर्तितम् ॥ यल्लिंगपूज
नाद्द्रोणोज्योतीरूपंपुनर्दधौ ॥ ७९ ॥ अश्वत्थामेश्वरंलिंगंतदग्रेचातिपुण्यदम् ॥ यदर्चनवशाद्द्रौणिर्नबिभेत्यपिकालतः ॥ ८० ॥ द्रोणेशाद्वायुदिग्भागे
वालखिल्येश्वरंपरम् ॥ तल्लिंगंश्रद्धयादृष्ट्वासर्वक्रतुफलंलभेत् ॥ ८१ ॥ तद्वामेलिंगमालोक्यवाल्मीकेश्वरसंज्ञितम् ॥ तस्यसंदर्शनादेवविशोकोजायते
नरः ॥ ८२ ॥ अन्यच्चात्रैवयद्वृत्तंतद्ब्रवीमिघटोद्भव ॥ त्रिविष्टपस्यमाहात्म्यंदेव्यैदेवेनभाषितम् ॥ ८३ ॥ ॥ इतिश्रीस्कांदेमहापुराणएकाशीतिसाहस्र्यां
संहितायांचतुर्थेकाशीखंडउत्तरार्धे पंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ स्कंदउवाच ॥ ॥ शृणुष्वमैत्रावरुणेपुराकल्पेरथंतरे ॥ इतिहासइहासीद्यः
पीठेविरजसंज्ञिते ॥ १ ॥ त्रिलोचनस्यप्रासादेमणिमाणिक्यनिर्मिते ॥ नानाभंगिगवाक्षाढ्येरत्नसानाविवायते ॥ २ ॥ कदाचिदपिकल्पांतेद्योलोकेभ्रंश
तिक्षये ॥ प्रोत्तंभनस्तंभइवदत्तोविश्वकृतास्वयम् ॥ ३ ॥ मरुत्तरंगितााभिःपताकाभिरितस्ततः ॥ सन्निवारयतीवेत्थमघौघान्विशतोमुने ॥ ४ ॥ देदी
प्यमानसौवर्णकलशेनविराजिते ॥ पार्वणेनशशांकेनखेदादिवसमाश्रिते ॥ ५ ॥

संवादः ॥ १ ॥ त्रिलोचनस्यप्रासादइत्येतस्यपारावतद्वंद्वंकलरवयुगलंवसेद्वसतिस्मावसदितिवेतिपंचमेनान्वयः ॥ प्रासादंविशिनष्टि मणीत्यादिपादोनचतुर्भिः ॥ नानाभंगिगवाक्षाढ्येनानापरिपाटि
भित्तिच्छिद्राढ्ये ॥ रत्नसानौमेरौ ॥ २ ॥ कल्पांतेस्थित्यवसाने ॥ द्योलोकेस्वर्गलोकेभ्रंशतिभ्रश्यतिसति ॥ क्षयेप्रलये ॥ यातिसंक्षयमितिपाठांतरम् ॥ प्रोत्तंभनस्तंभोधारणस्तंभः॥विश्वकृताविश्वेश्वरे
णब्रह्मणावादत्तइवयस्तास्मिन्नित्यर्थः ॥३॥ इत्थमनेनप्रकारेण॥तमेवप्रकारमाह॥मरुत्तरंगितााभिःपवनचंचलााभिःसर्वतःपताकाभिरघौघान्सन्निवारयतीवयस्तस्मिन्नित्यर्थः॥४॥उभयत्राप्युत्प्रेक्षा ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

